श्लोकः

कोशं शब्दार्थ चिन्तामणि मथ रहितं पूर्णभावेन ।
कृत्वा श्रीसज्जनेश स्त्रिदिवपथ गत स्तत्प्रचाराय लोके
तत्सूनु स्तातभक्तो नरपति फतह : सिंह भूपैकवीर
विद्वत्कंठैकशोभा भरण विधिरुचिः प्रेषयत्येक कोशम् ॥ १

श्रीमत्फतह सिंहस्य नृपतेः परमाज्ञया ॥
कविराजः श्यामलाख्यः कोशं प्रेषयति ध्रुवम् ॥ २ ॥

By order of H.H. Maha Rana Fateh
Presented to the Library As...
Oodeypore
July 2/96

# NOTICE

## THE SHABDARTH CHINTAMAN

### A NEW SANSKRIT LEXICON.

—*‡**‡*—

This new and valuable work, in the compilation of which Brahmâvadhûta Shri Sukhânand Nâtha of Delhi, spent more than thirty years of his life, contains (as its name implies) the meanings of all words in general and colloquial use.

The following is a resumè—of the plân on which this most useful work has been arranged:—

1st. The word-forms have been tested by the process suggested in the Grammatical Sutras of Panini:—

2nd. The meanings of the words are derived from their roots, by which means not only correctness, but clearness of conception are secured. The Primary meaning is given first, and others are described according to their logical order.

The utmost care has been taken to express the meanings of the words in the best and simplest language – a feature in the construction of this work, which cannot fail to recommend it above all others for practical use.

3rd. Another point is well worthy of notice in the work, viz; that words which have special reference to Aryan Literature whether the Smritis, Purâns or Vedas, are clearly and briefly explained.

4th. Special attention has been paid to the full definition of Scientific and Technical terms, whether these occur in the Vedas, Vedangas, Shastras, Chemistry, Mechanics or Music.

5th. The descriptions of weapons of warfare, metals, precious stones; and the directions for preparing the different kinds of soil for planting garden – and forest-trees are fully given.

6th. The officinal and non-official properties of drugs and the immediate causes of those diseases for which they may be given, have been fully described according to the best Medical Treatises on the subject.

7th. The author has specially adapted his work for Educational purposes in explaining ... Figures ... of ... excite, and by describing the di... Metres.

8th. In the arrangement ... words the Alphabetical order is ... preserved.

From these points it will be ... seen that this excellent work will ... unerring guide to those who seek ... mation on Political as well as Pr... matters.

Fully convinced of the usef... of such a Lexicon, Adi Gaur, Pt. ... -Râm ( late Gumasta of Govt. C... Agra ) resolved to undertake the ... -cation of the first 2Vols. as far ... letter [ म ] but on account of the wa... pecuniary assistance, he could not ... the remaining portion of the Dicti...

About 16 years ago, the firs... volumes were published, and are n... the libraries of many of the ... Nobles and Pandits of India, who ... regret that the remaining 2vols ... not in their possession.

However, no one seemed willin... undertake this arduous and impor... task until H. H. the late Mahâ... Sajjan Singh. G. C. S. I. of Mey... who during his life-time was the Pat... of Art and Literature, on hear... through Kuvi Râja Shyâmal Dâs of... unfinished Dictionary, issued or... that the remaining 2vols [ 3rd &. ... should be printed in the Râj Press ... all possible rapidity. So minute ... H. H. the late Mahâ Rânâ's direc... that he expressed the desire tha... same kind of paper be used and t... equal clearness and legibility em... as in the first two volumes.

In fulfilment of His Hi... wishes, the work has been compl...

It is therefore requested that ... who are desirous of obtainir... Lexicon send their names an... address to the undersigned.

Oodeypore, } Pundit B...

June 1...

श्रीः ... देवादी ।

# शब्दार्थचिन्तामणिः

(*——॥*॥——*)

श्रीमत्सज्जनसिंहवीरपतिभिः संमुद्रितः पूर्तिं भाक् श्रीमत्स्व

बाथ ... श्रीसच्चिदेशादयं कीर्तिं गायति गापयत्यखिलसत्कार्येषु

कर ... राणां निधिरिव योविजयतेशब्दार्थचिन्तामणिः

तु सुखार्थं सततं संस्कृत विद्यैक रसिकानाम् ।

काशी गीर्वाण गिरश्चिंता मणि रिवसमस्तशब्दार्थः ॥

श्री सुखानन्द नाथेन रचितो मुद्रितः पुरं ॥

उदये कविराज श्री श्यामल प्रेरणावशात् ॥१॥

*—|*|—*

चतुर्थभाग. यवर्गादिः

श्रीमन्महाराजाधिराज रविकुलावतंस महामहेन्द्र यावदार्य कुलकमल
दिवाकरमेदपाटदेशेश श्री १०८ श्रीमत्सज्जनभूपशिरोमण्याज्ञया कविराजि
राजप्रेरणयो मुद्रणारब्ध, श्रीमत्सज्जनसिंहासनाधिरूढतदधि
कारसम्पन्न श्री १०८ श्री फतहसिंह महीप मुकुटेन
वं संवत्यधिकचत्वारिंशत्तमे १९४२ वैक्रमेऽब्दे राजधान्युदयपुरे
श्रीसज्जनयन्त्रालये ब्राह्मणप्रियवंशीधरप्रबन्धतः श्रीमे
दपाटेश्वरकोशधनव्ययतः पूर्णतांनीतः

—|*|—

सि । सरलद्रवे । तरपन
गौ॰ दे॰ भाषा॰ ॥
पुं॰ मद्यासवे । पुष्पमद्ये
रस: ॥
। पुं॰ गुह्यकेश्वरे । कुबेरे ॥
गुराजते । राज्॰ । सत्पूजिपेति
टीप् ॥ यक्षाणांराज्ञश्चत्वरे ॥
यक्षराज: । पुं॰ कुबेरे ॥ यक्षाणां
राजा । राजाह: सखिभ्यष्टच् ॥
यक्षराट्पुरी । स्त्री॰ अलकायाम् ॥
यक्षरात्रि: । स्त्री॰ दीपान्वितायाम् ।
यक्षाणांरात्रि: ॥
यक्षाधिप: । पुं॰ कुबेरे ॥
यक्षसाधनम् न॰ यक्षोपासनायाम्
यक्षामलकम् । न॰ पिण्डखर्जूरफले ।
यक्षवास: । पुं॰ वटवृक्षे ॥
यक्षिणी । स्त्री॰ अलकायाम् ॥ यक्षा:
सन्त्यस्याम् । इनि: । ङीप् ॥
कुबेरपत्न्याम् ॥ यक्षभार्यायाम् ।
यक्षी । स्त्री॰ कुबेरपत्न्याम् ॥
यक्षोदुम्बरकम् । न॰ अश्वत्थफले ।
यक्ष्म: । पुं॰ रोगराजे ॥ यक्षते
यक्ष॰ । यांत्सुखितिमन् ॥
स्त्री॰ द्राक्षायाम् ॥
राजयक्ष्म-

तांयस्माद्व्याधेर्यक्ष्मेनयक्ष्यते । यक्ष्मा प्राच्यतेलोकेयक्ष्माक्षविशारदै: ॥ यक्षते॰ यक्ष्यतेवा । यक्ष॰ मनिन् ॥
यक्ष्मी । त्रि॰ क्षयरोगिणि ॥
यक्ष्य: । त्रि॰ पूज्ये ॥
यजन् । न॰ यागकर्तरि । यजति ।
यज॰ । शतृ॰ ॥
यजत: । पुं॰ ऋत्विजि ॥ यजति ।
यज॰ । भृमृदृशियजीत्यादिनाऽतच्
॥ यजत: ॰॰ यष्टव्यइतिवेदभाष्यम् ॥
यजति: । पुं॰ यागे ॥
यजत्र: । पुं॰ अग्निहोत्रे । यज्यन्तेऽ
त्रदेवा: । यज॰ । अमिनक्षियजि
वधिपतिभ्योऽत्रन् ॥ यज्ञीये ॥
यजनम् । न॰ सङ्कल्पपूर्वक: हविः प्रक्षेप
णादिक्रियायाम् । यागे ॥ अस्यलक्ष
णंयथा । पशुसोमाज्यपुरोडाशस्नेह
मौषधिचरुप्रभृतिभिर्हविर्भि: ख
दिरपलाशाश्वत्थन्यग्रोधोदुम्बरप्रभृ
तिभि: समिद्भि: स्रुक्स्रुवौदूख
लमुसलकुठारखनित्रयूपदारुदर्भ
चर्मग्रावपवित्रभाजनादिभिर्द्रव्यो
पकरणैरुद्गातृहोत्रध्वर्युब्रह्मादि
भिर्ऋत्विग्भि: काम्यनैमि
...पर्वकालेयथोक्त...

विषयग्रहणं स्पृहाशून्यत्वे नानन्य-
साधारणं कुर्वन्ति • स एव तेषां होमः
॥ सर्ववैदिकश्रेयः साधनरूपे ॥
यज्ञः सात्त्विकादिभेदेन त्रिविधः।
यथा। अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते। यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥
अभिसन्धाय तु फलं दम्भार्थमपि चैव यत्। इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम्। श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ स च नैकविधो यथा। द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे। स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥
यज्ञानां जपयज्ञोऽस्मीति भगवतो विभूतिस्वरूपे जपयज्ञे ॥ जप्येनैव तु संसिद्ध्येद् ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते।
इज्यते • अनेन वा • अत्र वा। यज याचेति नङ् ॥ वर्णानां स्वधर्मयज्ञा यथा। आरम्भयज्ञाः क्षत्राः स्युर्हविर्यज्ञा विशः स्मृताः। परिचारयज्ञाः शूद्रास्तु जपयज्ञास्तु ब्राह्मणा इति ॥ यजनीये। पूज्ये।

यज्ञकृत्। पुं• यागकर्त्तरि ॥ यज्ञं करोति। क्विप् तुक् ॥

यज्ञपशुः। पुं• घोटके छागे ॥

यज्ञपुरुषः। पुं• विष्णौ ॥ यज्ञावतारे ॥

यज्ञभाजनम्। न• यागपात्रे ॥

यज्ञभूषणः। पुं• श्वेतदर्भे

यज्ञयोग्यः। पुं• उदुम्बरवृक्षे ॥ त्रि• यागार्हे ॥

यज्ञवल्ली। स्त्री• सोमलतायाम् ॥

यज्ञवाटः। पुं• यागस्थाने ॥

यज्ञवित्। पुं• यज्ञानां ज्ञातरि ॥ यज्ञानां कर्त्तरि ॥ ते च बोधायनादयः। ते हि ज्योतिष्टोमादयो यज्ञा वस्तुभूता भवन्तीति मन्यन्ते • तच्च तेषां भ्रान्तिमात्रम्। यज्ञं व्याख्यास्यामो द्रव्यं देवता त्याग इति। अन्ये केचित् • य[illegible]नाभावात् • समुदायस्यावस्तुत्वात् ॥ यज्ञान् वेत्ति • जानाति • विन्दति लभते वा। विद• । विद्[illegible] क्विप् ॥

यज्ञ[illegible]ः। पुं• [illegible]ते। सुगन्ध-[illegible] ॥ [illegible] ॥

यज्ञ[illegible]। स्त्री• [illegible] ॥

यज्ञशिष्टाशी। पुं• वैश्वदेवादियज्ञावशिष्टान्नभोजिनि

यज्ञशेषः। पुं• होमावशिष्टाज्यपुरोडाशादौ ॥

यज्ञश्रेष्ठा। स्त्री• सोमवल्ल्याम् ॥

यज्ञसारः। पुं• यज्ञोडुम्बरे ॥

यज्ञसूत्रम्। न• उपवीते। यज्ञोपवीते ॥ तत्प्रमाणं यथा ॥ ऊर्ध्वं तु त्रिवृतं सूत्रं सधवानिर्मितं शनैः।

अन्तु च यमधीहत्य यज्ञसूत्रं विदुर्बुधाः
। त्रिगुणं तद्ग्रन्थियुक्तं वेदप्रवरस-
म्मितम् ॥ शिरोधरान्नाभिमध्यात्
पृष्ठार्द्धपरिमाणकम् ॥ यजुर्विदां
नाभिमितं सामगानामयं विधिः ।
वामस्कन्धेन विधृतं यज्ञसूत्रं बलप्रदम्
॥ इति कल्किपुराणे ४ अध्यायः य
ज्ञसूत्रम् । यज्ञार्थं धृतं सूत्रं वा ।
शाकपार्थिवादिः ॥
यज्ञसेनः । पुं॰ द्रुपदे ॥
यज्ञस्थानम् । न॰ यज्ञवाटे ॥
यज्ञाङ्गः । पुं॰ हेमदुग्धके । उदुम्बरे
। यज्ञमङ्गति । अगिगतौ । अमं-
ध्यक्ष । खदिरवृक्षे । ब्राह्मणयष्टि-
कायाम् ॥ वराहमूर्त्तौ । यज्ञाङ्ग
ज्ञान्यस्य ॥ यज्ञवराहस्याङ्गान्युक्ता
निहरिवंशे । वेदपादो यूपदंष्ट्रः क्र
तुहस्तश्चितीमुखः । अग्निजिह्वो
दर्भरोमा॰ ब्रह्मशीर्षो महातपाः ॥
अहोरात्रेक्षणो दिव्यो वेदाङ्गश्रुतिभू-
षणः । आज्यनासः स्रुवतुण्डः
सामघोषस्वनो महान् ॥ धर्मसत्य
मयः श्रीमान् क्रमविक्रमसत्क्रियः
प्रायश्चित्तनखो घोरः पशुजानुम-
हाभुजः उद्गात्रान्त्रो होमलिङ्गः फ
लबीजमहौषधिः । वाय्वन्तरात्मा
मन्त्रस्फिग्विकृतः सोमशोणितः ॥
वेदिस्कन्धो हविर्गन्धो हव्यकव्याति
वेगवान् । प्राग्वंशकायो द्युतिमा

न्नानादीक्षाभिरर्चितः दक्षिणा
हृदयो योगी महासत्रमयो महान् ।
उपाकर्मोष्ठरुचकः प्रवर्ग्यावर्त्तभू
षणः ॥ नानाछन्दोगतिपथो गु-
ह्योपनिषदासनः । छायापत्नीस-
हायो वै मेरुशृङ्गमिवोच्छ्रितः इति ॥
न॰ प्रयाजादौ ॥ यज्ञे हि द्विविधम
ङ्गं जातं भवति । सिद्धरूपं॰ साध्यरू
पञ्च । तत्र सिद्धरूपं जातिद्रव्यसङ्
ख्यादि॰ साध्यरूपन्तु क्रियैव । तच्च
द्विविधम् । सन्निपत्योपकारकमारा
दुपकारकञ्च । तत्र द्रव्यादिसंस्कार
कत्वेन विधीयमानं यागस्वरूपान्तर्भू
तं कर्म सन्निपत्योपकारकम्॰ व्रीहीन
वहन्यात्॰ व्रीहीन् प्रोक्षतीत्येवं विहि
तावघातप्रोक्षणादि । तद्विपरीतञ्च
फलजननसामर्थ्यजनकत्वादिना या
गेन्वितं कर्म आरादुपकारकम् ॥
यज्ञाङ्गा । स्त्री॰ सोमवल्ल्याम् ॥
यज्ञान्तः । पुं॰ अवभृथे । यागशेषे ॥
यज्ञायज्ञीयम् । न॰ सामविशेषे ॥ यज्ञा
यज्ञापदयुक्तं साम॰ यज्ञायज्ञीयम्॰
इति व्याख्यातारः । यज्ञायज्ञाशब्दो
ऽस्मिन्नस्ति । मतौच्छः सूक्तसाम्नो
रिति छः ॥
यज्ञायुधम् । न॰ स्फ्यकपालादिद्रव्ये-
षु । तानि यथा । स्फ्यश्च कपाला
नि चाग्निहोत्रहवणी च शूर्पञ्च कृष्णा
जिनञ्च शम्या चोलूखलञ्च मुसलञ्च दृ

यज्ञोपलाचेतानिवेदथयज्ञायुधानी तिदर्शपूर्णमासयोः श्रुतानि ॥

यज्ञायुधी । पुं॰ यजमाने ॥

यज्ञारिः । पुं॰ शिवे ॥ राक्षसे ॥

यज्ञियः । पुं॰ किंशुकद्रुमे । पलाशवृक्षे द्वापरयुगे ॥ त्रि॰ यज्ञकर्मार्हे । यज्ञानांपात्रे । क्रतुक्रियासम्पादनयोग्ये द्विजद्रव्यादौ ॥ यज्ञमर्हति यज्ञर्त्विग्भ्यामित्यत्र॰ तत्कर्मार्हत्युपसङ्ख्यानात्॰ घः ॥ यजनीये ॥

यज्ञियदेशः । पुं॰ यागकरणोपयुक्तकुरुपञ्चालादौ ॥ कृष्णस्तुचरतिमृगोयत्रस्वभावतः सज्ञेयोयज्ञियोदेशोम्लेच्छदेशस्ततः परः ॥ यज्ञियश्चासौदेशश्च ॥

यज्ञियशाला । स्त्री॰ यज्ञार्थशालायाम् । यागमण्डपे ॥

यज्ञीयः । पुं॰ उदुम्बरवृक्षे ॥ त्रि॰ यागसम्बन्धिनि ॥

यज्ञीयब्रह्मपादपः । पुं॰ विकङ्कतवृक्षे ।

यज्ञेश्वरः । पुं॰ शिवे ॥ विष्णौ ॥

यज्ञेष्टम् । न॰ दीर्घरोहिषकतृणे ।

यज्ञोदुम्बरः । पुं॰ उदुम्बरे । जन्तुफले ॥

यज्ञोपवीतम् । न॰ यज्ञसूत्रे । यज्ञार्थंधृतमुपवीतम् । शाकपार्थिवादिः । यज्ञस्योपवीतम्वा । यज्ञश्रौतस्मार्तरूपविविधसद्द्रव्यतपोयोगस्वाध्यायज्ञानादिरूपसामीप्येनविशिष्टेषानित्यसंयोगेन॰ वृतं प्राप्तंवेष्टयर्थः ॥ श्राज्ञयोनयदादेवाच्छिन्नंयज्ञोपवीतकम् । मनसापेनशुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिः ॥

यज्युः । पुं॰ यजुर्वेदविदि । अध्वर्यौ ॥ यजति । यज । यजिमनीतियुच् ।

यज्वा । पुं॰ विधिविधानतः कृतयागे । इष्टवान्॰ यजतेस्तवा । यज देवपूजासङ्गतिकरणदानेषु । सुयजोङ्वनिप् ।

यज्वनाम्पतिः पुं॰ चन्द्रे ॥

यत् । अ॰ हेतौ । पश्चात्तयद्॰ अव्ययम् ॥

यत् । त्रि॰ यद्र्थे । गच्छति । एति । इण् गतौ । शतृप्रत्ययः ॥ यच्छब्देनोच्यतेयोर्थस्तच्छब्दस्तस्यवाचकः ॥

यतम् । न॰ हस्तिप्रेरणाय॰ पादाघाते ॥ पादकर्मयतंप्रोक्तं यातमङ्कुशवारणम् । त्रि॰ संयते ॥ नियते ॥

यतचेताः । त्रि॰ संयतचित्ते ॥ यतं चेतोयस्य ॥

यतन् । त्रि॰ प्रयत्नवति ॥ यथा । नाहंनमामिदेवान्देवानतोत्यनसेवतेदेवः । मतदनुकरोतिविधानंतस्मैयततेनमो नमोमह्यम् । इतिपूर्व

पादाभामार्य्या । अहंदेवान्नमामि॰ ननमस्करामि॰योदेवानतीत्य॰ अतिक्रम्यस्थित : सदेवोदेवान्नसेवते॰तदनुतदनन्तरं विधानंविध्युक्तं कर्मनकरोति॰ तस्मैसर्वात्मभूताय यततेप्रयत्नवतेमह्यं नमोनमइत्याद रार्थेद्विरुक्ति : ॥

यतम : । त्रि॰ बहूनांमध्येनिर्धारिते॰ एकस्मिन् ॥ वाबहूनांजातिपरिप्रश्नेडतमच् ॥

यतमान : । त्रि॰ व्याप्रियमाणे । प्रयतमाने ॥ यतीप्रयत्ने । शानच् । मुक् ॥ प्रार्थयमाने ॥

यतमानसंज्ञा । स्त्री॰ वैराग्यविशेषे ॥ यथा । रागादय : कषायाश्चित्तवर्त्तिन : तैरिन्द्रियाणियथास्वविषयेषु प्रवर्त्यन्ते॰तन्माप्रवर्त्तिषतविषयेष्विन्द्रियाणीति॰तत्परिपाचना यथारम्भ: प्रयत्नोयतमानसंज्ञावैराग्यम् । अत्रजगतिकिंसारंकिमसारमितिगुरुशास्त्राभ्यांज्ञास्यामीत्युद्योगे ॥

यतर : । त्रि॰ द्वयोर्मध्येनिर्धारिते॰एकस्मिन् ॥

यत : । अ॰ यदर्थे ॥ हेतौ ॥ यस्मात् । पञ्चम्यास्तसिल् । अव्ययम् ।

यतात्मा । त्रि॰ संयतचित्ते । संयतशरीरेन्द्रियादिसङ्घाते ॥ निदिध्यासनपरिपाकेणपरमात्मन्येवैकाग्रचित्ते ॥

यति : । पुं॰ यमिनि । निर्जितेन्द्रियव्यूहे ॥ कुटीचरबहूदकहंसपरमहंसेषु सन्यासिषु ॥ विदितात्मनि॰अवधूते ॥ यत्नशीले । मुनौ । यतते । यतीप्रयत्ने । सर्वधातुभ्यइन् ॥ नहुषस्यराज्ञोज्येष्ठापत्ये ॥ निकारे ॥

यति : । स्त्री॰ विरतौ । पाठविच्छेदे । इतमध्यविलम्बितद्रुतायांपरिपाट्याम् ॥ विधवायाम् ॥ यमे : स्त्रियांक्तिन् । मलोप : ॥ रागे ॥ सन्धौ । वाद्याङ्गप्रबंधविशेषे ॥

यतिचान्द्रायणम् । न॰ व्रतविशेषे । यथा । अष्टावष्टौसमश्नीयात्पिण्डान्मध्यन्दिनेस्थिते । नियतात्माहविष्यशीयतिचान्द्रायणंचरन् ॥ इतिमनु : । यतिचान्द्रायणेपादोनधेनुचतुष्टयंतदशक्तौसपादैकादशकार्षापणाइतिप्रायश्चित्तविवेक : ।

यती । पुं॰ यती । निर्जितेन्द्रियग्रामे ॥ यमनम् । यमउपरमे । भावेक्त : । मलोप : । यतमुपरमणमस्तिनित्यंवायस्य । अतइनिठनाविती-नि : । ब्रीह्यादौ ॥

यतिनी । स्त्री॰ विधवायां ॥

यतिपात्रम् । न॰ अलाब्वादिपात्रे ॥ अलाबुंदारुपात्रञ्चमृन्मयंवैदलंतथा

। एतानियतिपाचाचिमनुः स्वाय म्भुवोऽब्रवीत् ।

यतिमैथुनम् न० स्त्रसनरते यतिगोचरतौ ॥

यती । स्त्री० गच्छन्त्याम् ॥ वृण : यतरि०ङीप् । विधवायाम् ॥

यतुका । स्त्री० }
यतूका । स्त्री० } वृचविशेषे ।

यत्तः । त्रि० यत्नवति ॥

यत्नः । पुं० प्रयत्ने ॥ उत्साहे । उद्योगे । यतनम्०यत्यतेऽनेनाचवा । यती० । यजयाचयतेतिनङ् ॥ रूपादिचतुर्विंशतिगुणान्तर्गतगुणविशेषे ॥ सचत्रिविधः । प्रवृत्तिः निवृत्तिः जीवनयोनिश्चेति ॥

यत्नवान् । त्रि० प्रयत्नविशिष्टे । यत्नमन्तरेणनकिञ्चिल्लभ्यते०एवंज्ञात्वायत्नतत्परे ॥ यत्नोऽस्यास्ति मतुप् ॥

यत्र । अ० अनवक्लृप्तौ । अमर्षे । गर्हायाम् ॥ आश्चर्ये यस्मिन् सप्तम्यास्त्रल् ।

यथा । अ० तुल्यार्थे मात्रे । प्रशंसायाम् ॥ निदर्शने । दृष्टान्ते ॥ निर्देशे ॥ हेतूपपत्तौ । योग्यतायाम् ॥ वीप्सायाम् ॥ पदार्थानतिवृत्तौ ॥ येनप्रकारेण । प्रकारवचनेथाल् ॥ विभक्तित्वात्०अदाद्यत्वम् ।

यथाकथञ्चित् । अ० येनकेनप्रकारेणेत्यर्थे ॥ यथाच०कथञ्चिच्च ॥

यथाकथाच । अ० अनादरे ॥

यथाकामी । त्रि० स्वेच्छाचारिणि । स्वतन्त्रे । स्वरुचौ । स्वच्छन्दे । स्वैरिणि । निर्यन्त्रणे ॥

यथाकालम् । अ० विहितकाले ॥

यथाक्रमम् । अ० क्रमानुरूपे परिपाट्याम् । मूलावधिक्रमे ॥ क्रममनतिक्रम्यवर्ततइत्यर्थे पदार्थानतिवृत्ताव्ययीभावेव्ययम् ।

यथाजातः । त्रि० मूर्खे ॥ जातंजन्मकालविशेषमनतिक्रम्यवर्तते । पदार्थानतिवृत्ताव्ययीभावः । तदस्यास्ति । अर्शआद्यच् ॥ नीचे ॥

यथाजातरूपधरः । त्रि० दिगम्बरे ॥ परमहंसे ॥ यथा । यादृग्जातमात्रस्वरूपंधारयतीतितथा ॥

यथातथम् । अ० न० यथावर्त्ततितथेत्यर्थे ॥ यथार्थे । सत्यार्थे । सत्यमनतिक्रम्य । पदार्थानतिवृत्ताव्ययीभावः यथाशब्दस्तथाशब्दोवासत्यार्थः । यथार्थेव्ययीभावोवा । सनपुंसकमितिनपुंसकत्वम् । ह्रस्वोनपुंसकइतिह्रस्वत्वम् ॥

यथापूर्वम् । अ० पूर्वदिग्देशकालानुरूपे ॥ यथा । प्रकृतायांप्रतिष्ठायांप्राणानांप्रतिमासुच यथापूर्वंतथाभावः सर्वादीनामविष्णुता ।

यथामुखम् । अ॰ प्रतिबिम्बे ॥ मुखस्य सदृशम्॰ यथामुखम् । निपातनादव्ययीभावः । पदार्थानतिवृत्तौ यथा शब्दो वा ॥

यथामुखीन: । त्रि॰ मुखप्रतिबिम्बाश्रये । दर्पणे ॥ यथामुखंदर्शनः यथामुखस्य मुखस्य दर्शनः खत्रुतिच : ॥

यथायथम् । अ॰ यथार्थे ॥ अनतिलङ्घनेनेत्यर्थे ॥

यथायथम् । न॰ यथास्वमित्यर्थे ॥ यथास्वार्थे॰ यथाशब्दस्य द्वित्वं नपुंसकत्वञ्च निपात्यते॰ यथास्वे यथायथमितिसूत्रे च ॥ योयमात्मा॰ यद्यदात्मीयं॰ तद्यथास्वम् । आत्मनि स्थाता: सर्वपदार्थाः यथायथम्॰ यथास्वभावमित्यर्थ: ॥ आत्मीये । सर्वेषान्तुयथायथम् । यद्यदात्मीयमित्यर्थ: ॥

यथायोग्यम् । अ॰ यथोचिते ॥

यथार्थम् । अ॰ सत्यार्थे ॥ अर्थमनतिक्रम्य । पदार्थानतिवृत्तावव्ययीभाव: ॥

यथार्थ: । त्रि॰ युक्ते ॥

यथार्थानुभाव: । पुं॰ तद्वतितत्प्रकाराऽनुभवे ॥ सएवप्रमेत्युच्यते । यथार्थानुभवश्चतुर्विध: । प्रत्यक्षानुमित्युपमितिशाब्दभेदात् । तत्करणमपिचतुर्विधम् । प्रत्यक्षानुमानोपमानशब्दभेदात् ॥

यथार्हम् । अ॰ यथायोग्ये ॥

यथार्हवर्ण: । पुं॰ चरे । प्रणिधौ ॥ अर्हति । अर्ह॰ । अच् योग्योर्हो यथार्हवर्णोरूपमस्य ॥

यथाविधि । अ॰ यै: सदृशयोचितमित्यर्थे ॥ यथाविधानमित्यर्थे ॥

यथावृत्त: । त्रि॰ यथाचारे ॥

यथाशक्ति । अ॰ साध्यानुसारे ॥ शक्तिमनतिक्रम्य । यथार्थेपदार्थानतिवृत्तावव्ययीभाव: । अव्ययीभावश्चेत्यव्ययत्वम् ॥

यथाशास्त्रम् । अ॰ शास्त्रसम्मते ॥ शास्त्रमनतिक्रम्य । यथार्थेऽव्ययीभाव: ॥

यथास्थित: । त्रि॰ सत्ये ॥

यथास्वम् । अ॰ यथार्थे ॥ यथायथमित्यर्थे । स्वात्मीये ॥ यथास्वमिति वीप्सायामव्ययीभाव: । योयमात्मा यद्यच्चात्मीयंतद्यथास्वमित्युच्यते ॥

यथेप्सितम् । अ॰ कामम् । प्रकाममित्यर्थे ॥ इष्टानतिक्रमे । निकामे ॥ आप्तुमिष्टम् । आप्लृव्याप्तौ । सन् । क्त: । आप्तुमपृथामीत् । अव्ययंविभक्तीत्यव्ययीभाव: ॥

यथेष्टम् । न॰ इष्टमनतिक्रम्यस्थिते ॥

यथेष्टचारी । पुं॰ पक्षिणि ॥

यथेष्टाचरण: । त्रि॰ यथेष्टाचारिणि ॥ यथा । क्रियाहीनस्यमूर्खस्यमहारोगिणएवच । यथेष्टाचरणस्याहु-

मंरयात्ममग्रीवकम् ॥

यथेष्टाचारी । त्रि॰ स्वेच्छाचारिणि ॥ यथेष्टमाचरितुंशीलमस्य । णिनिः॥

यथोक्तकारी । त्रि॰ काम्यनिषिद्धवर्जमपुरस्कारंनित्याद्यनुष्ठानलब्धेश्वरप्रीतौ ॥ यथाज्ञाकारिणि ।

यथोचितः । त्रि॰ यथायोग्ये । यथाप्राप्ते ॥

यथोत्तरम् । अ॰ उत्तरमुत्तरंप्रतीत्यर्थे ॥

यथोदितम् । न॰ यथोक्ते ॥

यथोपजोषम् । अ॰ यथासुखमित्यर्थे ॥

यद् । अ॰ हेतौ ॥ यच्छति । यम॰ । क्विप् । अनुदात्तोपदेश इत्यनुनासिकलोपः ॥ यद्यर्थे ॥

यत्ंद् । त्रि॰ यदर्थे ॥ बुद्धिस्थस्योपलक्षितधर्मावच्छिन्ने । शौ॰ द्रुतिभाषा ॥ यत्तदोर्नित्यसम्बन्धः । यच्छब्देनोच्यतेयोऽर्थस्तच्छब्दस्तस्यवाचकः ॥ अपिच । तच्छब्देनतु यच्छब्दोबोद्धव्यः सततंबुधैः । उदाहृतेतुयच्छब्देतच्छब्दः स्यादुदाहृतः॥ ग्रंजेस्त्यजितनियजिभ्योडिदित्यदिः ॥

यदा । अ॰ यस्मिन्काले ॥ यथा । यदायदासतांहानिर्वेदमार्गानुसारिणाम् । तदातदाकलिर्वृद्धिरनुमेयाविचक्षणैः ॥ सर्वेकान्त्यव्यादि-मा॰ दा ॥

यदि । अ॰ पक्षान्तरे ॥ सम्भावनायाम् । चेदर्थे । असन्देहेसन्देहवचने ॥ यदिवेदाः प्रमाणंस्युः । वेदाः प्रमाणंहिचेतृइत्यादियथा- ॥ यतनम् । यती॰ । डुन् । पृषोदरादित्वात्तस्यदः ॥

यदीयः । त्रि॰ यत्सम्बन्धिनि ॥

यदु । पुं॰ देवयान्यांययातेर्जातेज्येष्ठपुत्रे ॥ दशार्हदेशे ॥ तद्देशवासिनि॰ यदव॰ः ॥

यदुतुङ्गम् । न॰ तीर्थविशेषे ॥

यदुदेवः । पुं॰ वसुदेवे ॥

यदुनाथः । पुं॰ श्रीकृष्णे ॥

यदुपतिः । पुं॰ श्रीकृष्णे ॥ यदूनांपतिः ॥

यदुवंशः । पुं॰ यदोःसन्ताने ।

यदृच्छा । स्त्री॰ स्वातन्त्र्ये । स्वैरितायाम् ॥ स्वारसिक्यामिच्छायाम् । शास्त्रानुमतप्रयत्नव्यतिरेके । अच्छमनृच्छा । ऋच्छगत्यादौ । गुरोश्च । याऋच्छा । विशेषणमिति समासः ॥ सहसार्थे । निर्निमित्ते ॥ यथायदृच्छाशब्दः । अथमतंप्रवृत्ति निमित्तमनपेक्ष्यथः शब्दः प्रयोक्त्रभिप्रायेणैवप्रवर्ततेसयदृच्छायशब्दोडित्थादिरिति ॥ देवमतौ ॥

यदृच्छालाभः । पुं॰ अप्रार्थितोपस्थितेलाभे ॥

यदृच्छालाभसन्तुष्टः । पुं॰ तत्त्वज्ञे ॥ शास्त्रानुमतप्रयत्नव्यतिरेकात्॰ यदृच्छा॰ तयैवयोलाभोऽन्नाच्छादनादेः शास्त्रानुमतस्य॰ सयदृच्छालाभः तेनसन्तुष्टः॰ तदधिकतृष्णारहितः ॥ यतयोभिक्षार्थंग्रामंप्रविशन्तीतिशास्त्रानुमतस्तु प्रयत्नः कर्त्तव्य एव ॥.

यद्भविष्यः । त्रि॰ मूर्खे ॥ दैष्टिके ॥ यद्भविष्योविनश्यति ॥

यद्यपि । अ॰ अवधारणे ॥ अप्यर्थे ॥

यद्वा । अ॰ यदि ॥

यद्वत् । अ॰ प्रश्ने ॥ वितर्के ॥

यत्र । अ॰ पक्षान्तरे ॥

यन्ता । पुं॰ मेठे । हस्तिपके ॥ सूते ॥ सारथौ ॥ यच्छति । यम॰ । तृच् ॥

यन्त्रम् । न॰ देवाद्यधिष्ठाने ॥ पात्रभेदे ॥ नियन्त्रणे । चन्द्रा॰ ताला इ॰ भा॰ ॥ बन्धने ॥ मृगबन्धनविशेषे ॥ यच्छति । यम॰ । गुधृवीपच्छियमीतिच॰ । यन्त्यतेनिवधस्यते॰ निगृह्णाति॰ असाधून॰त्रायते॰ असाधून्॰ अनुगृह्णाति सम्भून् इतिचयन्त्रमितिचतुर्धरनीलकण्ठः ॥ तोप॰ . अगनइत्यादिभाषाप्रसिद्धेसहत्स्यग्नियन्त्रे ॥ बन्दूकइतिप्रथितेसीसगुलिकोत्क्षेपणार्थेलघ्वग्नियन्त्रे ॥ इतिमहाभारतटीकायांनीलकण्ठः ॥ वाद्ये ॥ यथा । यन्त्रस्यगुणदोषौनविचार्यौमधुसूदन । अहंयन्त्रंभवान्यन्त्रीनमेदोषानमेगुणाः ॥ दारुयन्त्रादौ ॥ काल॰ इ॰ भा॰ ॥ यथा । ईश्वरः सर्वभूतानांहृद्देशेर्जुनतिष्ठति । भ्रामयन्सर्वभूतानियन्त्रारूढानिमायया ॥ औषधस्यचपाकार्थंयानियन्त्राणिसन्तिहि । तानिभावप्रकाशादौद्रष्टव्यानिमनीषिभिः ॥ तत्रकेषाञ्चिन्नामानि लिख्यन्ते । जलकच्छपपाताल दोलाभूधरवालुकाः । वकाद्यायन्त्रभेदाः स्युर्वञ्चाम्नायाद्यमूषिका इतिशब्दचन्द्रिका॥

यन्त्रकम् । न॰ यन्त्रकाष्ठे । कुंद॰ इ॰ गौ॰ दे॰ भा॰ प्रसिद्धे ॥ यन्त्र्यतेकाष्ठमनेन । यम॰पूर्वंवत्च॰ । स्वार्थेकः ॥

यन्त्रगृहम् । न॰ तैलशालायाम् ॥ यन्त्राणांस्थाने ॥

यन्त्रगोलः । पुं॰ मटरइतिप्रसिद्धकलाये ॥ .

यन्त्रणम् । न॰ रक्षणे ॥ बन्धने ॥ नियमने ॥

यंत्रणा । स्त्री॰ पीडायाम् ॥

यंत्रपेषणी । स्त्री॰ पेषणार्थयंत्रे । जांता॰ चाकी॰ इतिभाषाप्रसिद्धे ॥

यन्त्रिका । स्त्री॰ पत्न्याः कनिष्ठभ

गिन्याम् ॥ यथा । कनिष्ठाग्र्यालिकाङ्गालीयन्विकाकीलिकुल्विकेतिहेमचन्द्र : ॥

यन्त्रित : । त्रि० यमिते । बद्धे । नियमिते । वशीकृते ।

यन्त्री । त्रि० यन्त्रवति ॥ अस्यार्थे० इनि : ।

यन्मूल : । त्रि० यदाश्रयभूते । यत्सत्तातिरिक्तसत्ताशून्ये ।

यम : । पुं० दक्षिणाशापतौ । शमने । काले । धर्मराजे । पितृपतौ । समवर्त्तिनि । यम: संयमतामहम् । संयमतांधर्माधर्मफलदातॄणां० नियहानुयहंकुर्वतांमध्ये० यमोवैवस्वतोभगवद्विभूति : । अस्यानुशासनंयथा । केवलंयेजगद्धाममनन्तंसमुपाश्रिता: । भवद्भि: परिहार्यास्तेतेषांनास्तीहसंस्थिति : ॥ नम: कृष्णाऽच्युतानन्तवासुदेवेत्युदीरितम् । यैर्भावभाविते दूरतास्तेत्याज्या: सुदूरतइतिवह्निपुराणम् ॥ सर्वेषांसंयमनात्यम: यच्छति० उपरमयतिप्रारब्धक्षीणे प्राणैर्वियोजयतिइतियम : । आदित्ये । शनौ । काके । ध्वाङ्क्षे ॥ संयमे ॥ शरीरसाधनापेक्षनित्यकर्मणि । उपायान्तरनिरपेक्षशरीरमात्रेणसाध्यंनित्यंयावज्जीवमवश्यकार्यंयत्कर्म० अहिंसादि० तद्यमइत्यर्थ : । अहिंसासत्यवचनंब्रह्मचर्यमकल्कता । अस्तेयमितिपञ्चैतेयमावैपरिकीर्त्तिता : ॥ निषिद्धानाचरणे । इन्द्रियाणांविषयेभ्योनिवारणे ॥ यमान्सेवेतसततंननित्यंनियमान्बुध : । यमान्पतत्यकुर्वाणोनियमान्केवलान्भजन् । अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहायमाइतिपातञ्जलसूत्रम् । सर्वेब्रह्मेतिविज्ञानादिन्द्रियग्रामसंयम : । यमोयमितिसम्प्रोक्तोभ्यसनीयोमुहुर्मुहु: ॥ यम : यति । यमउपरमे । विंशत्यादच्यच्छति० अमेनवा० यमनंवा । यम० । पचाद्यच् ० यम : समुपनिविषु चेत्यप्० वा ॥ उपरमे । उपरतिमात्रे ॥ ब्रह्मचर्यादिदशसु ॥ यथा । ब्रह्मचर्यंदयाक्षान्तिर्ध्यानंसत्यमकल्कता । अहिंसास्तेयमाधुर्येयमश्चेतियमा : स्मृता : ॥

यमौ । पुं० द्विवचनान्त : ०० एकयोश्चानकुलसहदेवयो : ॥

यमौ । त्रि० यमजे ॥ भौतिकस्तत्रयुगाभिन्नौदौजीवौकुक्षिमागतौ । यमावित्यभिधीयेतेधर्मेतरपुर : सरौ ; धर्मस्तदितरोऽधर्म : ० तौपुर : सरौययो : । तेनयमौधर्मादधर्माच्चभवत: इत्यर्थ : ॥ तयोर्ज्येष्ठत्वनिरूपणंयथा । वह्निर्वंशेपुचारिल्याद्यमयो : पूर्वकल्पत : । यस्यजातस्य

यमयोः पश्यन्निप्रथमंमुखम् ॥ सन्ता न : पितरश्चैवतस्मिन्नृण्ंप्रतिष्ठितम् । जन्मप्राथम्यात् । ज्येष्ठंयमयोः । नतुनिषेकप्राथम्यात् । जन्मप्राथम्यसन्देहेमुखदर्शनप्राथम्यात् । ज्येष्ठत्वम् ॥

यमक : । पुं० संयमे । व्रते ॥ न० शब्दालङ्कारे । तल्लक्षणंयथा । सत्यर्थेसत्यर्थभिन्नानांवर्णानांसापुनः श्रुतिः । यमकंपादतद्भागवृत्तितद्यात्यनेकताम् ॥ वर्णवृत्तविशेषे । यथा । सगणमनुहिलघुकुरु । फणिभणित यमकमिति । यथा । विषमतरविषमशर । प्रहरमपिनचिरमपि ॥ त्रि० यमजे ।

यमकालिन्दी । स्त्री० संज्ञायाम् । सूर्यपत्न्याम् ॥

यमकीटः । पुं० कीटविशेषे । घुर्घुरे ॥

यमकोटि : । स्त्री० पुरीविशेषे । सा चभद्राश्ववर्षस्यनिरक्षदेशेलङ्कायाः पूर्वंपृथिव्याश्चतुर्थभागेवर्त्तते ॥ यथा । लङ्काकुमध्येयमकोटिरस्याः प्राक्पश्चिमेरोमकपत्तनञ्च । अधस्ततः सिद्धपुरंसुमेरुः सौम्येऽथयाम्येवडवानलश्च ॥ कुवृत्तपादान्तरितानितानिस्थानानिषड्गोलविदोवदन्ति । इति ॥

यमघण्ट : । पुं० अशुभयोगविशेषे ॥ यथा । रवौमघाचन्द्रदिनेविशाखा चार्द्राकुजेचन्द्रसुतेचमूला । जीवेऽनलर्क्षंभृगुजेविधिश्चहस्ताशनौस्याद्यमघण्टयोगः ॥

यमज : । त्रि० समकालीनैकगर्भजातसन्तानद्वये ॥

यमदग्नि: पुं० ऋचीकमुनिपुत्रे । परशुरामपितरिमुनिविशेषे ॥

यमदूतक : । पुं० कृतान्तचरे ॥ काके ॥

यमदूतक : । पुं० वायसे ॥ यमस्यचरे ॥

यमदूतिका । स्त्री० अम्लिकायाम् । तिन्तिडीवृक्षे ॥ विशेषत : क्षारभूमौप्राणदायमदूतिका ॥

यमदेवता । स्त्री० भरणीनक्षत्रे ॥

यमद्रुम : । पुं० शाल्मलिवृक्षे ॥

यमद्वितीया । स्त्री० कार्त्तिकशुक्लद्वितीयायाम् ।

यमधार : । पुं० पार्श्वद्वयधारयुक्तास्त्रविशेषेद्विधाराखाण्डा० इ० भा० ॥

यमन : । पुं० यमे ॥ न० बंधने ॥ उपरतौ ॥

यमनिका । स्त्री० जवनिकायाम् । व्यवधायकवाससि । तिरस्करिण्याम् ॥ यमयति । यम० । ल्युट् । स्वार्थेकन् ॥

यमपत्नी । स्त्री० धूमोर्णायाम् विजयायाम् ।

यमप्रिय : । पुं॰ वटवृक्षे ।
यमभगिनी । स्त्री॰ यमुनायाम् ॥
यमभट : । पुं॰ यमदूते ॥ चरेयमभटा: शठा: । कपटविग्रहैश्चटानिवे इवतवावचलयनचाधिकारोमयि । चचतुश्रियसुन्दरीवरयचारुपक्षेरुह सुखलग्नमधुसुधासवंसमपिबन्मनानोतरे ।
यमराट् । पुं॰ शमने । यमे ॥ यमेनसंयमेनराजते । राज॰ । क्विप् ।
यमराज : । पुं॰ यमे ।
यमलम् । न॰ युग्मे । युगले ॥ द्वितिवे ।
यमलपत्त्रक : । पुं॰ अश्मन्तकवृक्षे ॥ कोविदारवृक्षे ॥
यमलार्जुनहा । पुं॰ श्रीकृष्णे ॥
यमली । स्त्री॰ चोटीद्वये । शाटीद्वये ।
यमलेखक : । पुं॰ चित्रगुप्ते ॥ यमस्य लेखक : ।
यमवान् । त्रि॰ संयमिनि ।
यमशासन : । पुं॰ मच्चिवे ॥
यमव्रतम् । न॰ पृथ्वीपतेर्धर्मविशेषे ॥ यथा । यथायम: प्रियद्वेष्यौप्राप्ते कालेनियच्छति । तथाराज्ञानियन्तव्या : प्रजास्तद्धियमव्रतम् ।
यमस्वसा । स्त्री॰ यमुनायाम् । कालिन्द्याम् ॥ दुर्गायाम् । यमस्य स्वसा ॥
यमानिका । स्त्री॰ यवानीदायाम् ॥
अजादर्भायाम् ॥ यमेनयमितिति । यम॰ । ण्वुल् ।
यमानी । स्त्री॰ यमानिकायाम् ।
यमान्तक : । पुं॰ शिवे ॥ यमस्य अन्तक : ।
यमी । त्रि॰ संयमविशिष्टे ॥ यमवति ।
यमी । स्त्री॰ यमुनायाम् ॥
यमुना । स्त्री॰ कालिन्द्याम् । सूर्यतनयायाम् । शमनस्वसरि ॥ यच्छति । यमउपरमे । अजियमिशीभ्यश्च उनम् ॥ दुर्गायाम् । ययोक्तं देवीपुराणे । सङ्गमाद्गमनाद्वापि देवीविभाव्यते । यमस्य भगिनीयातायमुनातेनसामतेति ।
यमुनाजनक : । पुं॰ सूर्ये ।
यमुनाप्रभव : । पुं॰ तीर्थविशेषे ।
यमुनाभित् । हृ॰ । पुं॰ बलभद्रे ।
यमुनाभ्राता । पुं॰ कृतान्ते । शमने । यमे । यमुनाया : भ्राता ॥
यमेरुका । स्त्री॰ दण्डढक्कायाम् ॥
ययाति : । पुं॰ नहुषात्मजे पुराणप्रसिद्धेनृपतेनाहुषे ॥ यस्यायंश्लोक : । यत्पृथिव्यांत्रीहियवंहिरण्यंपशव : स्त्रिय : । नदुष्यन्तिमन : प्रीतिं पुंस : कामहतस्यमे ।
ययातिपतनम् । न॰ भीमतीर्थविशेषे ।
ययी : । पुं॰ महादेवे । मोक्षमार्गे ॥ याधातेनयया॰ । या॰ । किद्द्वे च

यवओद्भवम् । न० तवक्षीरे ।

यवतिक्ता । स्त्री० लताप्रभेदे । महातिक्तायाम् । दृढपादविसर्पिण्याम् । सूक्ष्मपुष्पायाम् ॥

यवतैलम् । न० यवचूर्णादियुक्तपक्वतैलविशेषे ॥ यथा । यवचूर्णार्द्धकुडवं मञ्जिष्ठार्द्धपलेनतु । तैलप्रस्थशतगुणिकाञ्जिकेसाधितोजयेत् ॥ ज्वरदाहंमहारोगमङ्गानाञ्चाप्रहर्षणम् ॥

यवद्वीपः । पुं० सप्तखण्डात्मकोपद्वीपविशेषे ॥

यवनः । पुं० देशविशेषे ॥ वेगाधिकाश्वे ॥ गोधूमे ॥ गर्जरदर्णे ॥ तुरुष्के ॥ सुदाम्नः पितरिनृपान्तरे ॥ जातिविशेषे । ययातेःपुत्रस्य तुर्वसोर्वंशे ॥ यथोक्तं मात्स्ये । यदोस्तुजातायदवस्तुर्वसोर्यवनाः सुताः । द्रुह्योस्तुतनयाभोजाअनोस्तुम्लेच्छजातयः । पुरोस्तुपौरवोवंशोयत्रजातोसिपार्थिवइति ॥ मुनिविशेषे । यथा । आतंदिनंदूषयतेवसिष्ठश्चापीचगर्गोयवनोदशाहम् । जन्माख्यमामंकिलभागुरिश्च द्वौरैविवाहेपिचकर्णवेधे ॥ त्रि० वेगिनि ॥

यवनद्विष्टः । पुं० गुग्गुलौ ॥

यवनप्रियम् । न० मरिचे ॥

यवनाचार्य्यः । पुं० ज्योतिःशास्त्रकर्त्तरिमुनिविशेषे ॥

यवनानी । स्त्री० यवनानांलिप्याम् ॥ इन्द्रवरुणेत्यादिना० नुगागमोङीष् च ॥

यवनारिः । पुं० श्रीकृष्णे ॥

यवनालः । पुं० देवधान्ये । जूर्णाह्वये । बीजपुष्पिकायाम् । जुवार० बाजरा० इ०भा० ।

यवनालजः । पुं० यवक्षारे ।

यवनिका । स्त्री० जवनिकायाम् ।

यवनी । स्त्री० यवनस्त्रियाम् ॥ यवनस्यस्त्रीजातेरितिङीष् ।

यवनेष्टः । पुं० लशुने ॥ राजपलाण्डौ ॥ निम्बे ॥ पलाण्डौ ॥ न० सीसके ॥ मरीचे ॥ गृञ्जने । सलगम० इ०भा०प्र० ।

यवनेष्टा । स्त्री० खर्ज्जूर्याम् ॥

यवफलः । पुं० वेणौत्वक्सारे ॥ यवइवफलान्यस्याः ॥ मांस्याम् ॥ कुटजे । प्लक्षवृक्षे ॥

यवमध्यम् । न० चान्द्रायणप्रभेदे ॥

यवमयः । त्रि० यवस्वविकारे ॥ यवसंज्ञायामितिमयट् ॥

यवलासः । पुं० यवक्षारे ॥

यवशाकम् । न० वास्तूकशाके । बथुआ० इ०भा०प्र० ॥ प्रायशोयवमध्येस्याद्यवशाकमितस्ततः ॥

यवशूकः । पुं० )

यवशूकजः । पुं० )यवक्षारे ॥

यवसम् । न० घासे गवाद्यदनीयतृणे ॥

॥ यौति॰ यूयतेवा । युमिश्र णेऽऽ मिश्रणेच । अशियुभ्यांक्विदित्यसच् । संज्ञापूर्वकत्वान्नवृद्धिः ॥

यवसुरम् । न॰ यवजातसुरायाम् ॥

यवागूः । स्त्री॰ यवद्रव्यविशेषे ॥ षड्गुणजलपक्वघनद्रवद्रव्यविशेषे । श्राणायाम् ॥ यथा । यवागूः षड्गुणे तोयेसंसिद्धाघनसिक्थिका । पृथग्द्रव्यैस्सुविरजैः संयुक्ताज्वरिणेहिता ॥ यवागूर्दीपनीलघ्वीट ग्राहिणीबस्तिशोधनी ॥ श्रमग्लानिहरीपथ्याज्वरेचैवातिसारके ॥ यौति॰ यूयतेवा । यु॰ । सृयुवचिभ्योऽन्युजागूजक्नुचश्चागूच् ॥

यवाग्रजः । पुं॰ यवक्षारे । यवाग्राज्जायतेस्म । जनी॰ । पञ्चम्यामितिडः ॥

यवान: । त्रि॰ वेगिनि ॥

यवानिका । स्त्री॰ ब्रह्मदर्भायाम् । अजवांयन॰ इ॰भा॰ । यवान्याम् ॥ दुष्टोयवः । इन्द्रवरुणेति॰ ङीषानुकौ । ह्रस्वार्थे॰ स्वार्थेवाकन् ॥

यवानी । स्त्री॰ यमान्यामोषधौ । यवानिकायाम् ॥ अस्यानामानिगुणाश्च । यवानिकोग्रगन्धाचब्रह्मदर्भाजमोदिका । सैवोक्तादीप्यकोदीप्यं तथास्याद्यवसाह्वया ॥ यवानीपाचनीरुच्यातीक्ष्णोष्णाकटुकालघुः । दीपनीचतथातिक्तापित्तलाशुक्रशूलहृत् ॥ वातश्लेष्मोदरानाहगुल्मप्लीहक्रिमिप्रणुत् ॥ दुष्टोयवइत्यर्थे॰ इन्द्रवरुणेतिसूत्रस्ययवाद्दोषइतिवार्त्तिकात्॰ यवशब्दस्यानुगागमस्ततोङीप्च । अयमेवास्यदोषोयदुतयत्स्वजातेरभावेपितदाकारानुकृतिरिति ॥

यवानीशाकम् । न॰ यवान्याः शाके ॥ यवानीशाकमाग्नेयंरुच्यंवातकफप्रणुत् । उष्णंकटुचतिक्तञ्चपित्तलंलघुशूलहृत् ॥

यवापत्यम् । न॰ यवक्षारे ॥

यवाम्लजम् । न॰ सौवीरके ॥

यवास: । पुं॰ यासे । दुस्पर्शायाम् । रोदन्याम् । दुरालभायाम् । जवासा॰ इ॰ भा॰ ॥ खदिरे ॥ यौति । यु॰ कृतन्यञ्जीति॰ आसः ॥

यवासक: । पुं॰ यवासे ॥ स्वार्थेकः ॥

यवासशर्करा । स्त्री॰ यवासरसघटितशर्करायाम् । सुधामोदके । तवराजे ॥

यवासा । स्त्री॰ गुण्डासनीतृणे ॥

यवाह्व: । पुं॰ यवक्षारे ॥

यविष्ठ: । त्रि॰ कनिष्ठे ॥ अयमेषामतिशयेनयुवा । अतिशायनइतीष्ठन् । स्थूलदूरेति॰ यणादिलोपगुणौ ॥

यवीयान् । त्रि॰ अतितरुणे ॥ कनिष्ठे ॥ अयमनयोरतिशयेनयुवा ।

द्विवचनविभज्योपपदेतरबीयसुना-
वितीयसुन् । स्थूलदूरयुवेत्यादि
नायणादिलोपगुणौ ॥

यवोत्थम् । न॰ सौवीरके ॥

यव्यम् । त्रि॰ यवक्ये ॥ यवानांभव
नंक्षेत्रम् । यवयवकषष्टिकाद्यत् ॥
यवेभ्योहितंवा । खलयवेतियत् ॥
पुं॰ मासे ॥ वैशाखे ॥

यश:पटहः । पुं॰ ढक्कायाम् । महा-
राजप्रयाणसमयेवाद्यस्य॰ शत्रो :
सकाशात्प्राप्तराज्यस्यस्वकीयस्वसू-
चनायताडामानवाद्यस्यपटोल॰इ
तिख्यातस्यैकतेवात्मीयस्यमाभि
॥ यश : ख्यापक : पटह : । शाक
पार्थिवादि : ॥

यश : शेष : । पुं॰ मरणे ॥ त्रि॰
मृते ॥

यशटम् । न॰ यसदे ॥

यश : । न॰ सुख्यातौ । कीर्त्तौ । सम
ज्ञायाम् ॥ दानादिप्रभवाकीर्त्ति:
शौर्यादिप्रभवंयश : । इतिमाधवी-
। अतएवयश: कीर्त्त्योर्भेदोदृश्यते ।
यश : कीर्त्तिपरिभ्रष्टोजीवन्नपिन-
जीवतीतिकस्यचित्प्रयोग: धर्मनि
मित्ताजीवतोलोकश्लाघारूपाप्रसि-
द्धियंश : ॰ मृतस्यख्याति: कीर्त्ति
रितिकेचित् । तन्नसाधु । कीर्त्ति
रस्यपदूतिकेतिप्रयोगदर्शनात् ॥
अशू ते॰ व्याप्नोति । अशूव्याप्तौस

र्वधातेच । अशेर्देवनेयुट्चेत्यसुन्॰
प्रकृतेर्युडागमश्च ॥ विश्रुतत्वे ॥

यशस्कर : । त्रि॰ कीर्त्तिकारके । सु
ख्यातिजनके ॥ यश : करोति ।
डुकृञ्॰ । कृञोहेत्विति टोट: ॥

यशस्करी । स्त्री॰ विद्यायाम् । टित्वा
न्ङीप् ॥

यशस्य : । त्रि॰ यशस्करे ॥ यशसेहि
ते ॥ यशसोनिमित्ते ॥ यशसोनि
मित्तसंयोगउत्पातोवा । गोद्व्यच-
इत्यादिनायत् ॥

यशस्या । स्त्री॰ जीवन्त्याम् ॥ ऋद्धि
नामौषधौ ॥

यशस्वान् । त्रि॰ यशस्विनि ॥

यशस्वी । त्रि॰ यशोविशिष्टे । कीर्त्ति
मति । यशोऽस्त्यस्य । अस्मायामेधा
स्रजोविनिरितिविनि : ॥

यशस्विनी । स्त्री॰ वनकार्पास्याम् ॥
यवतिक्तायाम् ॥ महाज्योतिष्मत्या
म् ॥ कीर्त्तिमत्याम् ॥ पलङ्गापु-
र : स्थायांनाडाम् ॥ यथा । यश
स्विनीशङ्खवर्णापिङ्गलापूर्वदेश-
गा । याम्यभागश्चमूर्द्धादिपादाङ्गुष्ठा
न्तमाश्रिता ॥

यशोद : । पुं॰ पारदे ॥ त्रि॰यशोदा
तरि ॥

यशोदा । स्त्री॰ नन्दपत्न्याम् ॥ यशो
ददाति । देङ्पालने । आतइतिक:
। यशोददातिवा । डुदाञ्॰ ।

यातदृतिक : ॥

यशोधन : । त्रि० स्वयशोरूपकीर्तिय शोधनानांहियशोगरीय : ॥

यशोधरेय : । पुं० बाहुले । याक्यमु-नेः : पुत्रे ॥

यशोवती । स्त्री० मेरोरुत्तरतटाग्योपमेखलायाईशानदिशि०ईशानपुर्याम् ॥ यथोक्तं श्रीमृगेन्द्रसंहितायाम् । ज्वलल्ललाटदृग्दग्धस्मरमाक्ष्य यशोभृत : । पुरीयशोवतीसर्वरत्नमादृद्रसेविता ॥ ज्वलल्लाटतीयेनाक्ष्णादग्धोकामकालौयेन० अतएवतयाविधसकलजगद्वैरिविनाशात् ०-यशोभृतईशानमनायस्वसर्वरत्नमिभिर्मादद्रैः सेविताच०यशोवतीनाम पुरोऽस्य : ॥ ( * )

यष्टव्य : । त्रि० यज्ञेषु यजनीये ॥

यष्टि : । पुं० ध्वजदण्डे । पुं०स्त्री० हारलतायाम् ॥ भार्ग्याम् ॥ मधुयष्ट्याम् ॥ शस्त्रभेदे । दण्डे । लगुडे ॥ तन्तौ ॥ यजेः : क्तिन् ०-क्त्वा ॥

यष्टिक : । पुं० जलकुक्कुटे । दण्डे ॥

यष्टिका । स्त्री० मौनगोधिकायाम् । याष्ट्याम् । लगुडे । यष्ट्याम् । लट्ठी०इ०भा० ॥ हारभेदे मधुयष्ट्याम् ॥ स्वार्थे क : । ह्रस्व : ।

यष्टियष्ट : । पुं० लगुडयोधिनि । यष्टिधारके । छडीबरदार०इ०भा०

। लठैत०इति च ॥

यष्टिमधु । न० यष्टिमधुकायाम् ॥

यष्टिमधुका । स्त्री० क्लीतके । मधुयष्टिकायाम् । मुलहठी०इतिख्यातौषधौ ॥ यष्टि : मध्विशाखा : । कप् ।

यष्टिहेतिक : । त्रि० याष्टीके । लठैत०इ०भा० । यष्टिर्हेतिरस्य : ॥

यष्टी । स्त्री० यष्टिमधुनि ॥ यष्टीहिमागुरु : स्वादीचक्षुष्यावलवर्णकृत् । सुस्निग्धाशुक्रलाकेश्यास्वर्यापित्तानिलास्रजित् ॥ व्रणशोथविषच्छर्दितृष्णाग्लानिक्षयापहा ॥ बह्वादित्वात्पक्षे ङीष् ॥

यष्टीकम् । न० यष्टिमधुनि ॥

यष्टीपुष्प : । पुं० पुत्रजीववृक्षे ॥

यष्टीमधु । न० }
यष्टीमधुकम् । न० } यष्ट्याम् । मधु-
यष्टीमधूकम् । न० } यष्टिकायाम् ॥

यष्टा । पुं० यजमाने । यागकर्त्तरि ॥ यजति । यजदेवपूजासङ्गतिकरणदानेषु । तृच् ॥

यष्ट्याह्वयम् । न० मधुयष्ट्याम् ।

यसदम् । न० रङ्गसदृशे । रौतिहेतौ जस्तइतिभाषा ॥ यसदंतुवरंतिक्तं शीतलंकफपित्तहृत् । चक्षुष्यंपरमं मेहान्पाण्डुंश्वासञ्चनाशयेत् ।

यस्क : । पुं० मुनिविशेषे ।

यह्व : । त्रि० महति । याम्यमेन ।

याग :

या०। शेवयज्ञजिघ्रेति० वन्०धा तोर्ड्खोडुगागमश्च॥ अन्येतु०यज तेर्जकारस्यडकारोनिपात्यतइत्याहुः॥ यजमाने॥

या। स्त्री० याचायाम्॥ प्राप्तौ॥ भूमिते॥ त्यागे॥ वारणे॥ योगे॥ समज्ञायाम्॥ याने॥यानम्। या० सम्पदादित्वात्क्विप्॥

याघ :। पुं० देशसर्गविशेषे॥

यागः।पुं०देवतोद्देशेनद्रव्यत्यागे।यज्ञे॥ तत्रश्रौताग्निकृत्यहविर्यज्ञा : सप्त यथा। अन्याधानम्० तदेवाग्निहोत्रम्।१। दर्शपौर्णमासौ।२। पिण्डपितृयज्ञः।३। आग्रयणम्।४।चातुर्मास्य :।५। निरूढपशुबन्धः।६। सौत्रामणिः।७। स्मार्ताग्निकृत्यपाकयज्ञा : सप्त यथा। औपासनम्।१। वैश्वदेवः।२। स्थालीपाक :। ३ आग्रयणम्।४। सर्पबलि :।५। ईशानबलि :।६। अष्टकान्वष्टका।७ श्रौताग्निसप्तसंस्थायथा। सोमयाग :० सएवाग्निष्टोम :।१। अत्यग्निष्टोम :।२। उक्थ्य :।३। षोडशी।४। वाजपेय :।५। सद्विविधः० संस्था० कुत्र स। अतिरात्र :।६। अप्तूर्यामः।७। उत्तरक्रमतोवक्ष्येयथा। महाव्रतम्।१। सर्वतोमुखम्।२।राजसूयः

याचनक :

।३। पौण्डरीकम्।४। अभिजत्।५।विश्वजित्६। अश्वमेध :।७। बृहस्पतिसव :।८। आङ्गिरस :।९। अमनान्यष्टादश।२०। इत्यादिश्रौतसूत्रम्॥ गन्धादिनादेवपूजायाम्॥ गन्धपुष्पादिनादेवपूजायागोभिधीयते। इज्यतेऽनेनात्रवा। यजदेवपूजासङ्गतिकरणदानेषु। घञ्॥ यजनंवा। भाववचनाश्चेतिभावेघञ्॥

यागमण्डपः। पुं० न०यजनगृहे॥ यागयमण्डप :॥

याचक :। त्रि० वनीयके। याचनके। मार्गणे। अर्थिनि। याञ्चाकर्तरि॥ याचति। टुयाचृयाञ्चायाम्। ण्वुल्तृचाविति ण्वुल्। तृणादपिलघुस्तूलस्तूलादपियाचक :। वायुनाकिन्ननीतोऽसौकिञ्चित्प्रार्थनशङ्कया॥ जगत्पतिर्हियाचित्वाविष्णुर्वामनतांगत :। कोन्योऽधिकतरस्तस्येयोर्थीयातिमलाघवम्॥

याचन्। त्रि० याचके॥ याचति। टुयाचृ०।लटःशतृ॥सुखभङ्गःस्वरोदीनोगात्रस्वेदोमहद्भयम्।मरणेयानिचिह्नानितानिचिह्नानियाचतः॥

याचनम्। न० याञ्चायाम्॥ याचेर्भावेल्युट्॥

याचनक :। त्रि० याचके॥ याचति टुयाचृ०। ल्युः। स्वार्थेकन्॥

याचना । स्त्री॰ याञ्जायाम् ॥ याचे युरादित्वन्नाम्॰ ण्यासश्रन्थोयुच् । टाप् ॥

याचमान : । त्रि॰ याचके ॥ यथा । नवीनदीनभावस्य याचमानस्यमानिन : । वचोजीवितयोरासीत्पुरो निः सरणेरण : ॥ इतिवररुचि : ॥

याचित : । त्रि॰ प्रार्थिते । टुयाचृ॰ । क्त : न॰ याचनवृत्तौ । मृते मृतन्तुयाचितं प्रोक्तमितिमनु : ॥

याचितकम् । न॰ याञ्चालब्धे ॥ याचितेनानिर्वृत्तम् । अपमित्ययाचिताभ्यांकक्कनाविति कन् ॥ प्रत्यर्पणीयत्वेनयाञ्चयायत्प्राप्तमलङ्कारादिवस्तुतत्याचितकम् । कार्यानन्तरं वस्तुस्वामीयत्पुनर्गृह्णाति॰ तदित्यर्थ : । मंगभीकी॰ इ॰ भा॰ ॥

याचिष्णु : । त्रि॰ याचके ॥

याच्यम् । त्रि॰ याचितुंयोग्ये ॥ टुयाचृ॰ । ऋहलोर्ण्यत् । यजयाचेति कुत्वनिषेध : ॥

याञ्चा । स्त्री॰ याचने , अभिशस्तौ । याचनायाम् । अर्थनायाम् । भिक्षायाम् । अर्दनायाम् । मांगना इ॰ भा॰ ॥ याचनम् । टुयाचृ॰ । यजयाचेतिनङ् ॥

याज : । पुं॰ याजी । प्रसादने । अन्ने । भक्ते ॥

याजक : । पुं॰ याज्ञिके ॥ राजकुञ्जरे ॥ ऋत्विजि ॥ यथा । चान्नोभ्रायाधनैर्वयार्ऋत्विजोयाजकाश्चते इत्यमर : । यजमानेनधनैर्वार्या : धनानिदत्त्वा॰ इष्टसम्पादनायवियन्तेप्राप्यन्ते ये ऋत्विजस्तेषामयस्ते ऋत्विजोयाजकाइत्यन्ये ॥ बहुयाजकयाम ... याचथ । च ब्राह्मणान्... कर्मभिस्तत्कृष्णैर्भि : । च योराजन्यस्तस्य द्वितीय : क्रयविक्रयी ॥ तृतीयो बहुयाज्य : स्याद्दुर्योग्रामयाजक : । पञ्चमस्तुभृतस्तेषांग्रामस्यनगरस्यच ॥ अनादित्यास्तय: पूर्वासादिन्यास्त्ववरास्त्रिमाम् । नोपासीतद्विज: सन्ध्यांसषष्ठोऽब्राह्मण: स्मृत : ॥ यजति । यज॰ । ण्वुल् ॥ पुरोहिते ॥

याजनम् न॰ ब्राह्मणस्यकर्मविशेषे । यागक्रियाकारणायाम् । यागकराणाइ॰ भा॰ ॥ अविदित्वातुय : कुर्याद्याजनाध्यापनंजपम् । हीममन्त्रफलादीनितस्यचाल्पंफलंभवेदितियाज्ञवल्क्य : ॥

याजमानम् । न॰ यजमानस्यभावकर्मणो : ॥ युवादित्वादण् ॥

याजि : । पुं॰ यष्टरि ॥ यागकर्तरि ॥ यागी । यजति । यज॰ ब-

सिवपियजिराओत्यादिना॰इञ्। प्रार्थनायाम्।

याजुष : । त्रि॰ यजुर्वेदसम्बन्धिनि॥

याज्ञवल्क्य : । पुं॰ यजुःशाखाविशेषप्रवर्त्तके॰मुनिविशेषे। अस्याख्याः। योगिनि। योगीश्वरे॥ यज्ञस्यवल्क : वक्ता॰यज्ञवल्क : । यज्ञवल्कस्यगोत्रापत्यम्। गर्गादिभ्योयञ्॥

याज्ञसेनी । स्त्री॰ द्रौपद्याम्॥ याज्ञसेनस्यापत्यंस्त्री। अण्। ङीप्॥

याज्ञिक : । पुं॰ याजके। आध्वर्यवादियज्ञकर्मकुशले॥ यज्ञकाण्डद्रष्टरिक्ताणौयज्ञमधीतेवेत्तिवा। क्रतूक्थादीतिठक्॥ कुशे। रक्तखदिरे। पलाशे अश्वत्थे॥

याज्ञिक्यम्। न॰ याज्ञिकानां॰धर्मे॰आम्नायेच। छन्दोगौक्थिकेति॰ञ्यः॥

याज्य : । त्रि॰ याजनीये। यजमाने। यष्टुंयोग्य : । यज॰। ऋहलोर्ण्यत्। यजयाचेतिकुत्वनिषेध : । याजयितुंयोग्योवा॥ न॰ यागलब्धधनादौ।

याज्या। स्त्री॰ यज्ञाङ्गसाधने। होतृपाठ्यायामृचि॥ इज्यतेऽनया। यज॰। ऋहलोर्ण्यत्। यजयाचरुचप्रवचर्चश्चेतिकुत्वाभाव : ॥

यात : । त्रि॰ गते॥ याप्रापणे।

ण : ॥ न॰ अङ्कुशवारणे॥ प्रादक्रमंयत्प्रोक्तंयातमङ्कुशवारणमितिहलायुध : ॥

यातना। स्त्री॰ प्रगाढायांवेदनायाम्। कारणायाम्। तीव्रवेदनायाम्॥ यतनिकारोपस्कारयो : । च ॥ ण्यन्तात्॰ण्यासश्रन्थेतियुच्॥

यातयाम : । त्रि॰ जीर्णे। पक्वसतिप्रहरादिव्यवहिते॰ओदनादौ॰भोग्यंप्राप्ते॥ यथा। यातयामंगतरसंपूतिपर्युषितञ्चयदिति॥ यातोगतोयामउपभोगकालोयस्य॥ परिभुक्तोज्झिते। भुक्तसमुज्झिते॥ यथा। दर्भा : कृष्णाजिनंमन्त्राब्राह्मणाहविरग्नय : । अयातयामान्येतानिनियोज्यानिपुन : पुन : ॥

यातायातम्। न॰ गमनागमने॥

यातु। न॰ राक्षसे॥ पुं॰ काले। ॰याति। या॰। कमिमनिजनिगाभायाहिभ्यश्चेतितु :। अर्द्धर्चादि :। त्रि॰गन्तरि। पथिके॥

यातुघ्न : । पुं॰ गुग्गुलौ॥

यातुधान : । पुं॰ राक्षसे॥ यातूनिरक्षांसिदधाति॰पुष्णाति॰सृजाति पोषकत्वात्। डुधाञ्॰। बहुलमन्यत्रापीतियुच्। कृत्यल्युटिति ल्युट्वा॥

याता। पुं॰ सारथ्यादौ॥ स्त्री॰ भ॰

तिभार्तृपत्न्याम् ॥ भार्यासुभार्
वर्गश्यातर: स्त्रु: परस्परम् ॥
त्रि० शमनकर्त्तरि ॥ यतते । यती
प्रयमे । यतत्र्विश्वे तिष्ठन् ॥
यत्नवः । पुं० पाणै ॥
यातव्यः । त्रि० यतितव्ये । यतनीये ॥
यात्रा । स्त्री० यापने । भोजनादि
भिर्वर्त्तने । वृत्तौ ॥ यथा० शरी-
रयात्रापिचतेनप्रसिध्येदकर्मणइ-
तिगीता । अपिच येनोपायेनम-
र्त्यानांलोकयात्राप्रसिध्यति । तदे
वकार्यंब्रह्मणेरिदंधर्म्मःसनातनमि
तिश्रीमहाभारतेशान्तिपर्व्वम् ॥ उत्सवे
। उपाये ॥ अभ्यायाम् । अभिनि
र्याणे ॥ प्रस्थाने । गमने । गमे ॥
यात्रालक्षणंयथा । यत्किञ्चित्कार्य
मुद्दिश्यदेशान्तरगमनंयात्रे तिज्यो-
तिर्विद: । साद्विधा । सङ्ग्राम
विजयाख्या० सामान्याचेतिभेदा
त् । तत्रविशिष्ट: । परविषयेविज
यार्थंगन्तुर्याचातुसमरविजयाख्या ।
निखिलापरयात्रायासामान्यासाच
द्विविधास्यात् ॥ अन्यच्च । कथित
तिथिवासरर्क्षेष्वभिमतफलदाभवे-
त्सामान्या । समरविजयाख्यायात्रा
शीघ्रविलग्नधितीशयोगेषु ॥ सायात्रा
त्रा०लग्नग्रहबलवशेन० नवधा य
था । उत्तमा० मध्यमा० अधमा०
उत्तमोत्तमा० उत्तममध्यमा० म
ध्यममध्यमा० मध्यमाधमा० अध
माधमाचेति । आसांलक्षणान्याह
० वशिष्ठ: । सवीर्य्येलग्नपेयस्यां
भास्करस्यसुहृद्यदि । सायात्रोत्त
मार्णया० यातुरिष्टफलप्रदा ॥ १ ॥
लग्नेशेमध्यमबलीयस्यांसूर्यस्यमध्य
म: । सायात्रामध्यमार्णयायातुशुभं
प्रफलप्रदा ॥ २ ॥ हीरेशीदुर्बलीय
स्यांप्रतिकूलोरवेर्यदि । सातुयात्रा
ऽधमार्णयासर्वदाफलवर्जिता ॥ ३ ॥
वर्गोत्तमेलग्नं बालग्ने श: सूर्यबा
न्धव: । उत्तमोत्तमयात्रायाश्रेष्ठाधि
कफलप्रदा ॥ ४ ॥ उदयेशोबलीयस्या
मनुकूलोरवे: सुहृत् । कष्टेनफ
लदायातुर्यात्रासोत्तममध्यमा ५ ॥
हीरेशोबलवान्यस्यांशत्रु: सूर्य
बांधव: । उत्तमाधमयात्रासाशत्रु
पुष्टफलप्रदा ॥ ६ ॥ उक्तलक्षणएवा
सावनुकूलस्थानगोयदि । यातु: सा
मध्यमायात्रादु: खाधिकफलप्रदा
॥ ७ ॥ उक्तलग्नाधिपोयस्यामनुक्त-
स्थानगोयदि । प्रात्रार्थहानिदानि
स्यंसयात्राऽधममध्यमा ॥ ८ ॥
उक्तलग्नाधिपोयस्यांशत्रुस्थानगतो
यदि । अधमाधमयात्रासामृत्यु
दाऽनर्थकारिणी ॥ ९ ॥ यानम् ०-
अनयात्रा । या० । द्वयामाश्रुभसि
ध्यम्बन् ॥ प्राच्यांशक्रशचीसौरि-
शशिनौत्याज्योनवात्यातिथि: ॥

याम्यावरुणकदासभं गुरुदिमं पंचच
शीदश्यपि। पुष्यारोहिणिकारवि-
र्भगुकुजौषष्ठीमनुः पश्चिमे॰सौम्ये
विस्कुजभानवीयमकरीदिग्वैदिती
यातिथि॰रितिकश्चित्॥

याथातथ्यम्। न॰ यथातथभावे॥ ब्रा
ह्मणादित्वात्ष्यञ्। यथातथा॥
स्वार्थे ष्यञ्॥

याथार्थ्यम्। न॰ सत्यार्थतायाम्।
वास्तवार्थे॥ यथा अजुरुत्तद्य-
तोजन्मनिरीहस्यहतद्विषः। स्वप-
तोजागरूकस्ययाथार्थ्यं वेदकस्तवे-
तिसुरैः कृतार्थिष्णोः स्तुतिः।
कोवेदकोवेत्ति। विदोलटोवेतिणा-
लादेशः

यादःपतिः। पुं॰ समुद्रे। वरु
णे॥ यादसांपतिः॥

यादईशः। पुं॰ समुद्रे।

यादवः। पुं॰ केशवे। श्रीकृष्णे सु-
र्णो॥ न॰ गोमहिष्यादौ। पाद
बन्धने॥ यदोरपत्यम्। अण्॥
यदूनामिदम्। तस्येदमित्यण्।

यादवी। स्त्री॰ दुर्गायाम्॥ यदूना
मियम्। अण्॥

यादः। न॰ जलजन्तौ यातिवेगेन
। या॰। असुन् बाहुलकात्॰
दुक्॥ यद्वा। याति। क्विप्। या
मत्तिपद॰। असुन्। यांदस्यतिवा
। इमुक्पयवे। क्विप्

यादसांनाथः। पुं॰ वरुणे॥

यादसांपतिः। पुं॰ समुद्रे॥ वरुणे
॥ तत्पुरुषेकृतीत्यलुक्॥

यादृक्षः। त्रि॰ यादृशि। जैसा॰ पु॰
भा॰॥ यद्वदृश्यते॰ यमिवपश्य
[illegible] त्यदादिष्वित्यत्र
क्सोपिवाच्यइतिक्सः। आसर्वनाम्नः
[illegible] दीर्घः॥

यादृच्छिक। त्रि॰ यदृच्छयाप्राप्ते।
स्वप्रयोजनसङ्कल्पशून्ये॥

यादृक्। त्रि॰ यथाविधे। यादृशे॥
यमिवपश्यति॰ यद्वायंदृश्यते।
दृशिर्॰। त्यदादिषुदृशइतिक्विन्
। आसर्वनाम्नइत्यात्वम्।

यादृशः। त्रि॰ यादृशि॥ त्यदादिषु
दृशोनालोचनेकञ्चेतिकञ्। पू
र्ववद्विग्रहादिकम्।

यादोनाथः। पुं॰ समुद्रे॥

यादोनिवासः। न॰ जले॥

यानम्। न॰ युग्ये। पत्रे। रथादिवाह
ने॥ गतौ॥ यथोरास्कन्दने। वि-
जिगीषोररिंप्रति यात्रायाम्॥
यथा। परस्यचत्रयंचात्वात्स्वस्यवृद्धिं
निरीक्ष्यच। राज्ञायामनुकर्तव्य
मित्याहुर्नयकोविदाः। याधातु
। या॰ ल्युट्॥ यान्त्यनेनवा।
करणेतिल्युट्।

यानपात्रम्। न॰ सिन्धुयानविशे-
षे। वहित्रके। बोहित्थे। [illegible]

पोते । जहाज इतिभाषाख्यजनभा
षाप्रसिद्धे । समुद्रयाने ॥
यानपात्रकम् । न० यानपात्रे ॥
यानमुखम् । न० रथादेः पुरोभागे ।
धुरि । बोढृबन्धनस्थाने ॥ यानस्य
मुखम्० पुरोभाग : ॥
यापकम् । त्रि० प्रापके ॥
यापनम् । न० वर्त्तने ॥ कालक्षेपे ॥
निरसने । निरासे ॥ यातेर्ण्यन्ता
ल्ल्युट् । अर्त्तिह्रीत्यादिनापुगाग
म : ॥
यापित :। त्रि० अपसारिते ॥ प्रस्था
पिते ॥
यामा । स्त्री० जटायाम् ॥
याप्य :। त्रि० यापनीये । क्षेपणीय
कालादौ ॥ निन्दिते । गर्हिते ॥
याप्यतेऽस्मा । या० । ण्यन्तात् ।
अचोयत् ॥ क्षाचित्के ॥ व्याधिविशे
षे ॥ यथा । साध्यायाप्याअसाध्या
श्च व्याधयस्त्रिविधा : स्मृता : ।
सुखसाध्य : कष्टसाध्यो द्विविध :
साध्यउच्यते ॥ यापनीयन्तुतंविद्यात्
क्रियांधारयतेहिताम् । क्रियायान्तु
निवृत्तायांसद्यएवविनश्यति ।
प्राप्ताक्रियाधारयतिसुखिनंयाप्यमा
तुरम् । प्रपतिष्यदिवागारंस्तम्भोय
द्वनयोजित : ॥ साध्यायाप्यत्वमा
यान्तियाप्याश्चासाध्यतांतथा । घ्नन्ति
प्राणानसाध्यास्तु नराणामक्रियावताम् ॥ अक्रियावतांचिकित्सारहि
तानाम् ॥
याप्ययानम् । न० शिबिकायाम् । पाल
की० इ० भा० । महापाया० इ०
गौ० दे० भा० ॥ याप्यैरधमैर्यान
म् । याप्यमानंमन्दगत्यायानम् ॥
याभ :। पुं० न० मैथुने ॥
याम :। पुं० दिवसस्य० रात्रेश्च०
चतुर्थभागैकभागे । प्रहरे । याति ।
या० । अर्त्तिस्तुसुहुस्त्रितिमन् ॥ संय
मे ॥ उपरतिमात्रे । यमे ॥ यमनम्
। यम : समुपनिविषुचेतिपक्षेघञ् ॥
यामकौ । पुं० २ पुनर्वसौ : ॥
यामघोषा । पुं० कुक्कुटे । यामेघोषो
ऽस्य ॥
यामघोषा । स्त्री० यन्त्रविशेषे । याम
नाल्याम् । घट्याम् । घडी० इ०
भा० ॥
यामतूर्य्य : । प्रहरावसानसूचकेवाद
नीययन्त्रे ॥ यामस्यतूर्य : ॥
यामदग्न्य :। पुं० परशुरामे ॥
यामनादी । पुं० कुक्कुटे ॥
यामनाली । स्त्री० नाल्याम् । यामघो
षायाम् ॥
यामनेमि :। पुं० शचीपतौ । इन्द्रे ॥
यामलम् । न० युगले ॥ तन्त्रशास्त्रवि
शेषे ॥ तल्लक्षणंयथा । सृष्टिश्चज्यो
तिषाख्यानंनित्यकृत्य प्रदीपनम् ।
क्रमसूत्रं वर्णभेदोजातिभेदस्तथैवच ।

ध्यमपदलोपीसमास: । यावताच यदिहनिर्वाहोयेन•दत्तवा ॥

यावन: । सिल्हकी । नागौरीगंद्दूति प्रसिद्धेधूपे ॥ यवनदेशेभव: । तत्र भवइत्यण् ॥ याव्यतेवा । यौतेर्बा बाहुलकात्युः । तुवार•यो•न्हरीद्दूति ख्यातेधान्यप्रभेदे ॥ यावनोलोहित: स्वादुर्लोहित: श्लेष्मपित्तजित् । चक्षुष्यस्तुवरोरुच्य: कटुरूतक्षिलोलघु: ॥

यावनाल: । पुं• धान्यभेदे । इक्षतगडुलि । दीर्घनाले । दीर्घशरे । क्षेत्रे । कुसुमपत्रिकी । यावने । तुवार• कु•भा• ॥

यावनालशर: । पुं• शरविशेषे । नदीजे । दृढत्वचि । वारिसम्भवे । खरपत्रे । जोहुरली•द्दूतिभाषा ॥

यावनाली । स्त्री• यावनाखशर्करायाम् । हिमोत्पन्नायाम् । हिमशर्करायाम् ॥

यावशूक: । पुं• यवक्षारे ॥ इतिरत्नमाला ॥

यावस: । पुं• न•घ•सि ॥ तृणसङ्घाते ॥ युयते । युं• । वहियुभ्याणिदित्यासच् ॥

याव्य: । त्रि• मिश्रणीये ॥

याशोधरेय: । शाक्यमुनिपुत्रे ॥

याष्टीक: । त्रि• यष्ट्यायोधिनि । यष्टिहेतिकी ॥ यष्टि: प्रहरणमस्य ।

शक्तियष्ट्योरीकक् । स्त्रियांङीप्• याष्टीकी ॥

यास: । पुं• दुरालभायाम् । यवासे । यास: स्वादु: सरस्तिक्तस्तुवर: शीतलोलघु: । कफमेदोमदभ्रान्तिपित्तासृक्कुष्ठकासनुत् ॥ तृष्णाविसर्पवातास्रवमिज्वरहर: स्मृत: । यवासस्यगुणैस्तुल्या बुधैरुक्तादुरालभा ॥ यसनम् । यसुप्रयत्ने । भावे घञ् ॥ यासोऽस्त्यस्य । अर्शआद्यच् ॥ याति । बाहुलकादसच् ॥

यासा । स्त्री• मदनशलाकापक्षिणि ॥

यासापद्मम् । न• विकसितोत्पले । सद्योविकसितंपद्मं यासापद्मं प्रचक्षते ॥

यास्क: । पुं• मुनिविशेषे ॥ यस्कस्यापत्यम् । शिवादिभ्योण् । बहुत्वे• यस्का: ॥

यियक्षमाण: । त्रि• यष्टुमिच्छति । यजते: सन्नन्ताल्लट: शानच् ॥

यियक्षु: । त्रि• यष्टुमिच्छौ ॥ यजे: सन्नन्तादुप्रत्यय: ॥

यियासन् । त्रि• यातुमिच्छति । यातेसन्नन्ताल्लट: शत्रादेश: ॥

यियासित: । त्रि• जिगमिषिते । यातुमिष्टे ॥ याते: सन्नन्तात्कर्मणिक्त: ॥

यियासु: । त्रि• यातुमिच्छौ ॥ याते: सन्नन्तादुप्रत्यय: ॥

युक्तम् । न० हस्तचतुष्टये ॥ त्रि० युते । अपृथग्भूते । मिलिते । औपयिके । न्यायगतद्रव्ये ॥ युक्तिसिद्धे । यथार्थे ॥ स्थिते ॥ नियुक्ते । अवहिते । अप्रमत्ते । निगृहीतमनसि । समाहितचित्ते । ईश्वरायेवेतानिकर्माणिनममफलायेत्येवमभिप्रायवति ॥ परिमिते ॥ पुं० अभ्यस्तयोगे ॥ यथा । योगीतुद्विविधः प्रोक्तोयुक्तयुञ्जानभेदतः । युक्तस्यसर्वदाभानंचिन्तासहकृतोपरः ॥ युज्यतेस्म । युजिर् योगे-क्तः ॥

युक्तदण्डः । पुं० यथापराधदण्डे० न्पे । उद्वेजयतितीक्ष्णेनमृदुनापरिभूयते । दण्डेनन्नृपतिस्तस्माद्युक्तदण्डः प्रशस्यते ॥

युक्तरसा । स्त्री० रास्नायाम् । काटाथाम् इत्यौ० इ० गौ० दे० भा० । एला पर्णीम् ॥ युक्तोरसोयस्याः ॥

युक्ता । स्त्री० एलानी० इ० गौ० दे० भा० ॥ प्र० वृत्तविशेषे ॥

युक्तिः । स्त्री० न्याये । कार्यकारणयोरभेदसाधने० न्यायोयथा । मृदिमृदात्मनाघटं प्रागस्ति० मृद्वियुक्तोभस्मात्० तस्मात्० कार्यकारणयोरभेदएव । कार्यकारणयोरन्यत्वे -- एककारणज्ञानात्० सर्वकार्यज्ञानंन स्यादित्यादिः । योगे । योजना-याम् ॥ लोकव्यवहारे ॥ धर्मशास्त्रविरोधेतुयुक्तियुक्तोविधिः स्मृतः । अनुमाने ॥ अपूर्वार्थप्राप्तौ । सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्येषु षड्गुणेषु ॥ शास्त्रदीपिकायांयुक्तिशब्दस्य० प्रमाणपरतयाव्याख्यानात्० प्रत्यक्षादिषट्सुप्रमाणेषु ॥ योजनम् । युजेः स्त्रियांक्तिन् ॥ नाट्यालङ्कारविशेषे ॥ तल्लक्षणंयथा । युक्तिरर्थावधारणमिति ॥ उदाहरणंयथा । यदिसमरमपास्यनास्तिमृत्योर्भयमितियुक्तमितोन्यतः प्रयातुम् । अथमरणमवश्यमेवजन्तोः किमितिमुधामलिनंयशः कुरुध्वमिति ॥

युगः । पुं० रथइत्यादौ । गुणा० इतिभाषा ॥

युगम् । न० युग्मे ॥ हस्तचतुष्के । वृद्धिनामौषधे ॥ कृतादिषुचतुर्षु ॥ देवानांद्वादशसहस्रवत्सरेण० चतुर्युगंभवति । मनुष्यमानेनचतुर्युगपरिमाणंविंशतिसहस्राधिकाचिचत्वारिंशल्लक्षम् । ४३२०००० ॥ तत्रसत्ययुगस्यमानम् १७२८००० वर्षाः । त्रेतायुगस्यमानम् । १२९६००० वर्षाः । द्वापरयुगस्यमानम् । ८६४००० वर्षाः । कलियुगस्यमानम् । ४३२००० वर्षाः । तेषांभारतवर्षेस्थितिर्यथा । चत्वारि

भारतेवर्षेयुगानिमुनयोऽब्रुवन् । कृतंच तादृापरञ्चकलिश्चेतिचतुर्युगम् । चत्वार्याहु : सहस्राणिवर्षाणान्तुकृतंयुगम् । तस्यतावतच्छतीसन्ध्यासन्ध्यांशश्चतथाविध : । इतरेषुससन्ध्येषुससन्ध्यांशेषुचत्रिषु । एकापायेनवर्त्तन्तेसहस्राणिशतानिच । यदेतत्परिसङ्ख्यातमादावेवचतुर्युगम् । एतद्द्वादशसहस्रंदेवानांयुगमुच्यते ॥ इतिमनु : । तथाविष्णुपुराणे । चत्वारित्रीणिद्वे चैकंकृतादिषुयथाक्रमम् । दिव्याब्दानांसहस्राणियुगमाहु : पुराविद : ॥ तत्प्रमाणै : शतै : सन्ध्यापूर्वांतत्राभिधीयते । सन्ध्यांशकस्ततस्तुल्योयुगस्यानन्तरोहिस : ॥ सन्ध्यासन्ध्यांशयोरन्तर्य : कालोमुनिसत्तम । युगाख्य : सतुविज्ञेय: कृतत्रेतादिसंज्ञित : ॥ इति ॥ योजनम् । युज्यतेवा । युजिर्योगे । घञ् । कुत्वम् । संज्ञापूर्वकत्वान्नगुण : । रथयुगेतिनिपातनाद्वा ॥

युगकील : । पुं० युगकीलके ।

युगकीलक : । पुं० युगकाष्ठस्यकीलके । शम्यायाम् । जुएकीकील० इ० भाषा । स्वार्थेकन् ॥

युगक्षय : । पुं० महाप्रलये । युगानांक्षयोयस्मिन् ।

युगन्धर : । पुं० यत्ररथयुगकाष्ठमासज्यतेतस्मिन्काष्ठे । कूबरे । युगंवोढृबन्धनकाष्ठम्धारयति । संज्ञायांभृतृवृजिधारीतिखच् । अरुर्द्विषदजन्तस्येतिमुम् ॥ पर्वतविशेषे ॥

युगपत् । अ० एकदा । एकस्मिन्नेवकाले । युवन्त्यस्मिन्काले । यु० । गपतक्प्रत्यय: ॥ यद्वा । युगंपयतेस्मिन् । पयगतौ । डत्प्रत्यय: ॥

युगपत्र : । पुं० कोविदारे । रक्तकाञ्चनारवृक्षे ॥ युगंपत्रमस्य ॥ युग्मपर्णवृक्षमात्रे ॥

युगपत्रक : । पुं० कोविदारे । रक्तकाञ्चनद्रुमे । युगंयुग्मंपत्रमस्य ॥

युगपत्रिका । स्त्री० शिंशपावृक्षे ॥

युगपार्श्वग : । पुं० दमनकालेकण्ठारोपितकाष्ठवाहे । प्रष्ठौहि ॥ युगस्यस्कन्धकाष्ठस्यपार्श्वंगच्छति । अन्येष्वपीतिड : ॥

युगलम् । न० युगे । युग्मे ॥ युज्यते । युजिर्योगे । वृषादिभ्य: कलच् । न्यङ्क्वादित्वात्कुत्वम् ॥ युगंलातिवा । आतइतिक : ॥ युगंयुग्ममस्त्यस्यवा । सिध्मादित्वालच् ।

युगलाख्य : । पुं० वर्वुरवृक्षे । त्रि० युग्मनामके ॥

युगांशक : । पुं० वत्सरे ॥ युगविभागके ॥

युगादिः । स्त्री॰ तिथिविशेषेषु ॥ यथा । वैशाखमासस्यसिताहतीया॰ नवम्यसौकार्त्तिकशुक्लपचे । नभस्यमासस्यचकृष्णपचे चयोदशीपञ्चदशीचमाघे ॥ एतायुगादयः प्रोक्ताः स्वाध्यायंवर्ज्जयेद्बुधः । महापुण्यप्रदाश्चेतादत्तस्याचयकारिका ॥ विशेषमाहमारदः । कार्त्तिकेशुक्लनवमीचादिः क्लतयुगस्यच । चेतादिर्माधवेशुक्लहतीयापुण्यसम्मिता- ॥ कृष्णापञ्चदशीमाघेद्वापरादिरुदीरिता । कल्यादिः स्यात्कृष्णापचे नभस्येचचयोदशीति ॥ कालविशेषे ॥ युगस्यमादिः ॥

युगान्तः । पुं॰ प्रलये ॥ युगशेषे ॥

युग्मम् । न॰ इन्द्वे । युगले । युगे । जोडा॰ जोडी॰ इ॰ भा॰ ॥ युज्यते । युजिर्योगे । युजिरुजितिसांकुर्घ्नितिमक् ॥ इयोः श्लोकयोरन्वये ॥

युग्मपत्रः । पुं॰ रक्तकाञ्चने कोविदारे ॥ न॰ युगलपर्णे ॥ युग्मंपत्रमस्य ।

युग्मपत्रिका । स्त्री॰ शिंशपावृक्षे ॥

युग्मपर्णः । पुं॰ कोविदारे ॥ सप्तपर्णवृक्षे ॥

युग्मफला स्त्री॰ इन्द्रवर्भिण्याम् ॥ वृश्चिकाल्याम् ॥ गम्भिकायाम् ॥

युग्मादरणम् । न॰ युग्मतिविपूज्यताम् ॥ इयोर्मान्यत्वे ॥

युग्य : । पुं॰ प्रासङ्ग्ये । शाकटे । युगादीनांबोढरि ॥ युगंरथाद्यङ्गंवहतितद्वहतिरथयुगप्रासङ्गमितियत् ॥ न॰ याने ॥ हस्त्यश्वादिवाहने ॥ युज्यते । युजिर् । युग्यञ्चपत्रइतिक्यबन्तोनिपातितः ॥ युगायहितोवा । उगवादिभ्योयत् युगमर्हतिवा । दण्डादित्वाद्यत् ॥

युङ्गी । पुं॰ वर्णसङ्करजातिविशेषे । यथा । गङ्गापुत्रस्यकन्यायांवीर्येणवेशधारिणः । बभूवेशधारोचपुत्रोयुङ्गीप्रकीर्त्तितः ॥ इ॰ ब्र॰ वै॰पु॰ ॥

युक्॰ग॰ । चि॰ समाधिमति । युग्मे ॥ युज्यतेसमाधत्ते । युजसमाधौदेवादिकः । क्किप्चेतिक्किप् ॥

युङ् । पुं॰ योगकर्तरि । मेलनकर्त्तरि ॥ युनक्ति । युजिर्योगे । ऋत्विगादिनाक्विन् । युजेरसमासे॰ इ॰ नुम् । क्विन्प्रत्ययस्यकुः । इतिनस्यकुत्वेन॰ सानुनासिकोङ्कारः ॥

युजौ । पुं॰ नित्यद्विवचनान्तः॰ अश्विनीकुमारयोः ॥

युजानः । पुं॰ सारथौ ॥

युञ्जानः । पुं॰ सारथौ ॥ विप्रे ॥ भावनासहकारेणसर्वंज्ञेयोगिविशेषे ॥ यथा । योगीतुद्विविधः प्रोक्तोयुक्तयुञ्जानभेदतः । युक्तस्यसर्वदाभानंचिन्तासहकृतोऽपरः ॥ इ॰

भा॰ प॰ ॥ युक्तश्चेति॰ योगभ्यासा वगत्याववशीकृत समाधिसमासादितोविविधसिद्धियुक्तइत्युच्यते ॰ च यमेवविशिष्टयोगवत्वात्युक्तइत्युच्यते । सर्वदेतिचिन्तासहकारंविनेत्यर्थः । भानंसर्वविषयाणांप्रत्यक्षम् अपरोयुञ्जान : । विषयव्यावृत्त्यामानससमाधिस्थ : । अयञ्च । युञ्जान उच्यते । चिन्ताध्यानम्॰ तदेवकारणम्॰ तत्सहकारात्सूक्ष्मसूक्ष्म- व्यवहितविप्रकृष्टानर्थान्मन : प्रत्यक्षीकरोतीत्यर्थः । इतिसिद्धान्तमुक्तावली ॥

युत् । च॰ कुत्सायाम् ।

युतम् । न॰ हस्तचतुष्टये ॥ त्रि॰ युक्ते । अपृथग्भूते ॥ पृथग्योगे ॥

युतकम् । न॰ संशये ॥ युगे । युग्मे ॥ नारीवस्त्राञ्चले । पटाञ्चले ॥ चलनार्थे । दाढ्यार्थे ॥ युक्ते ॥ यौतके ॥ स्त्रीवस्त्रप्रभेदे ॥ सूर्पाग्रे ॥ मैत्रीकरणे ॥ योनिसम्बन्धे ॥

युतयामित्रवेध : । पुं॰ वेधविशेषे ॥ सयथा । पापात्सप्तमग: शशीयदि भवेत्पापेनयुक्तोथवायत्रं नाशुविवर्जयेन्मुनिभिस्तद्दोषोप्ययंकथ्यते । यात्रायांविपदोऽस्मिन्सुतवध: स्त्रीरेचरोनागमोवैधव्यंविवहेव्रतेचमरणं शूलंत्वसृक्सम्पि ॥ अस्यापवादोयथा । तुङ्गस्थिताखनिजमन्दिरगोथपूर्णो मित्रर्क्षसौम्यगृहगोथतदीक्षितोवा॰ यामित्रवेधविहितानपहन्तिदोषान् दोषाकर : सुखमनेकविधंविधत्ते ॥ वृषककर्कटसिंहकन्यामिथुनधनुर्मीनतुलाख्ये चन्द्रे शुभयहवीक्षितोवा ॰ युतयामित्रदोषोनास्ति ॥

युतवेध : । पुं॰ वेधविशेषे ॥ सयथा । चन्द्र : करोतिरविणासहितोयमानंभौमान्वित : पतिविनाशकर : सचन्द्र : । स्वर्भानुकेतुशनिभिस्तिमाद्धातिनानासुखानिबुधविना- गुरुणाबुधेन ।

युद्धम् । न॰ आयोधने । जन्ये प्रधने मृधे । रणे युद्ध॰ लड़ाई॰ इ॰ भा॰ ॥ योधनम् । युधसम्प्रहारे । भावेक्त : ॥

युद्धरङ्ग : । पुं॰ कार्त्तिकेये ॥

युद्धसार : । पुं॰ घोटके ॥

युद्धाचार्य : । पुं॰ युद्धार्थमायुधविद्यापदेशके ॥

युत् । स्त्री॰ समिति । आजौ । सङ्ग्रामे । युद्धे ॥ योधनम् युध॰ । सम्पदादित्वात्क्विप् ॥

युधाजित : । पुं॰ कैकेय्याभ्रातरि । भरतमातुले ॥

युधान : । पुं॰ क्षत्रिये ॥ युध्यते । युध॰ । युधिवुधिदृश : किच्चेत्यानच् ।

युधामन्यु : । पुं॰ नृपतिविशेषे ।

युधिष्ठिर : । धर्मात्मजे । कुन्त्यागर्भे धर्मादुत्पन्ने अर्जुनाग्रजे प्रथमपाण्डवे । अजातशत्रौ । शल्यारौ । अजमीढे ॥ युधिरणे जयभागित्वेन स्थिर : । हलदन्तादित्यलुक् । गवियुधिभ्यांस्थिरइतिषत्वम् ॥

युध्म : । पुं॰ धनुषि । संयुगे ॥ युध्यते । युध॰ । इषियुधीत्यादिनामक् ॥ बाणे ॥

युयुक्खुर : । पुं॰ क्षुद्रव्याघ्रे ॥

युयुत्सु : । त्रि॰ युद्धेच्छौ ॥ युध : सन्नन्तादुप्रत्यय : ॥ धृतराष्ट्राद्वैश्यायांजाते ॥

युयुधान : । पुं॰ सात्यकौ । शिनेर्नप्तरि ॥ इन्द्रे ॥ क्षत्रिये ॥ योद्धरि ॥

युवगण्ड : । पुं॰ यूनोगण्डस्थव्रणविशेषे । यवगण्डे । वयस्फोटे ॥

युवति : । स्त्री॰ प्राप्तयौवनायांस्त्रियाम् । तरुण्याम् ॥ यौति॰ नित्यमैमित्तकाश्येषु सर्वेषुकर्मसुमिश्रीभवतिपाणिग्रहणेनसहाधिकारात् । युमिश्रणे । कनिन्युवृषितक्षीतिकनिन् । यूनस्ति : ॥ हरिद्रायाम् ॥ स्त्रीसामान्ये ॥

युवती । स्त्री॰ तरुण्याम् । द्विकर्याम् । वयोयाम् । युवती । तस्या लक्षणादियथा । षाषोडशाद्भवेद्बालात्रिंशतामता । पञ्चपञ्चाशत : प्रौढाहृद्धाभवतितत्परम् ॥ बालातुप्राणदाप्रोक्तायुवतीप्राणहारिणी । प्रौढाकरोतिवृद्धत्वंवृद्धामरणमादिशेत् । निदाघशरदोर्बालाप्रौढावर्षावसन्तयो : । हेमन्तशिशिरेयोग्यामहद्धाकापिशस्यते ॥ यौग्या॰ युवती ॥ हरिद्रायाम् ॥ यौति॰ शास्त्रविहितसर्वकर्मसुमिश्रीभवति॰ दम्पत्यो : सहाधिकारात् । युमिश्रणे । लट : शतृ । उगितश्चेतिङीप् ॥ यद्वा । युवतिशब्दात्॰ सर्वतोक्तिन्नर्थादितिङीष् ॥ स्त्रीसामान्ये ॥

युवतीष्टा । स्त्री॰ स्वर्णयूथिकायाम् ॥

युवा । पुं॰ वयस्थे । तरुणे । षोडशवर्षमारभ्यत्रिंशद्वर्षपर्यन्तावस्थावति । मतान्तरेणषोडशवर्षादारभ्यसप्ततिवर्षपर्यन्तवयस्के ॥ यथा । षाषोडशाद्भवेद्बालस्तरुणस्ततउच्यते । वृद्धस्यात्सप्ततेरूर्ध्वंवर्षीयान्नवते:परमितिस्मृते : यौति । यु॰ । कनिन्युवृषीतिकनिन् ॥ त्रि॰ अल्पवयसि ॥ श्रेष्ठे ॥ निसर्गबलशालिनि । षष्टिवत्सरान्तर्गतनवमवत्सरे ॥ तत्फलं यथा । महार्घंजायतेसर्वंघृततैलरसादिकम् । प्रजानाशभवेद्युवियन्निसंवत्सरेशुभे ॥

युवनाश्व : । पुं॰ सूर्यवंशीयराजविशेषे ॥ मान्धातृपितरि ॥

णये ॥ प्रभावे ॥ निरतिशयज्ञाने श्वर्य्यादिशक्तौ ॥ चित्तैकाग्रतः आत्मतत्त्वस्य स्वानुभावरूढत्वे ॥ मनोनाशवासनाक्षयानुकूले पुरुषप्रयत्ने ॥ चित्तस्यात्माकारप्रत्ययेननिवृत्तिजनतापादने ॥ सिद्ध्यसिद्ध्योः समत्वे ॥ ध्यानार्थं वीरासनादिनामनिशरीरबन्धे ॥ जीवात्मपरमात्मैक्ये ॥ संयोगोयोगइत्युक्तो जीवात्मपरमात्मनोरित्युक्तेः ॥ जीवात्मपरमात्मैक्यलक्षणे॰ तत्त्वमस्यादिवाक्यजनिते॰ अखण्डसाक्षात्कारे॰ सर्वयोगफलभूते ॥ योजनम् । युजसमाधौ॰ युजिर्योगेवा । घञ् ॥ अवयवार्थे ॥ परमात्मचिन्तने ॥ योगिनि ॥ भगवदर्पणबुद्ध्याफलाभिसन्धिराहित्येन॰ कृतानि शास्त्रीयाणि कर्माणि योगाः॰ तैर्विद्यन्ते यस्य स योगः । अर्शआदित्वान्मत्वर्थीयोऽच् ईश्वरसङ्कल्पे ॥ योगोजीवात्मनोरैक्यंपूजनंशिवकेशयोः । सर्वंब्रह्मेतिविदुषोनयोगोनचपूजनमितिमहानिर्वाणतन्त्रम् ॥ ग्रहाणायोगविशेषे । यथा । बुधगुरुशुक्राणांमध्ये॰ एकोयदः केन्द्रे॰ अथवापञ्चमे॰ नवमेवास्थितस्तदायोगः स्यात् तत्रयातालभंलभते ॥ युज्यतेजीवो [illegible] । युक्तिर्योगे । करणेघ

ञ् ॥

योगचरः । पुं॰ अञ्जनानन्दने । महावीरे । हनुमति ॥

योगजः । अलौकिकसन्निकर्षविशेषे ॥ न॰ अगुरुणि । योगोत्पन्ने ॥

योगतारा । स्त्री॰ दीप्तिमत्तरायांताराायाम् ॥ यथा । स्वतारागणमध्येतु यातारादीप्तिमत्तरा । योगतारेतिसाप्रोक्तामहर्षिभिःपुरातनैः ॥

योगदानम् । न॰ छलेनदानम् ॥

योगनाविकः । पुं॰ मत्स्यविशेषे । गर्गटे ॥

योगनिद्रा । स्त्री॰ हरेः परमानन्दमय्यांशक्तौ ॥ योगः स्वात्मनिष्ठैव॰ निद्रेवनिद्रा ॥ योगः समाधिः॰ तद्रूपानिद्रावा ॥ दुर्गायाम् ॥ यथा । यानिद्रान्तः स्थलाधस्थाजगद्भण्डपालकः । विभज्यपुरुषंयातियोगनिद्रेतिसोच्यते ॥

योगपट्टकम् । न॰ पूजादौधार्य्ये॰ उत्तरीयविशेषे । योगपटा॰ इ॰ गौ॰ दे॰ भा॰ ॥ यथा । त्रिविधंयोगपट्टकमाद्यंव्याघ्राजिनोद्भवम् । द्वितीयंमृगचर्माढ्यं तृतीयंतन्तुनिर्मितम् ॥ चतुर्मानप्रविस्तारंदैर्घ्येचयत्प्रसूचयत् । चतुर्मानम्॰ चतुरङ्गुलमानम्

योगपीठम् । न॰ देवानांयोगासने ॥

योगप्रतिपक्षः । पुं॰ योगभङ्गे ॥ योगस्यप्रतिपक्षः ॥

योगमल : । पुं० अन्तरायशब्दवाच्येषुव्याधिस्त्यानादिषु । चित्तविक्षेपे ॥

योगमाया । स्त्री० सर्वसङ्कल्पाधिष्ठानभूतायांभगवत्यांचिच्छक्तौ । ईश्वरसङ्कल्पवशवर्त्तिन्यांमायायाम् । सत्त्वरजस्तमसांत्रयाणांगुणानांयोगेयुक्तिघटनंमाया । योगस्यमाया ॥

योगयज्ञ : । यमनियमादियोगाङ्गानुष्ठाने । योगएवयज्ञ : ॥ त्रि० तत्परे ॥

योगरूढ: । पुं० योगार्थसहभावेनरूढ्यर्थबोधकशब्दे ॥ यथा । योगरूढाश्चरूढाश्चयौगिकाश्चेतित्रिधा । शब्दास्त्रिधाभवन्ति । योगरूढा : पङ्कजादय : । पङ्कजनिडप्रत्यये : पङ्कजनिकर्त्रभिधायकेनयोगेनापिपद्मार्थएवप्रतिपाद्यतेनकुसुमाद्यर्थ : इति । योगार्थपुरस्कारेणापिरूढ्यर्थएवेति० योगरूढ : । एवमीश्वरसङ्केतमहिम्नाझटितिपद्मस्यैवस्मृते : ॥

योगवाही । त्रि० मध्वादौ । संसर्गगुणग्राहके ।

योगवाही । स्त्री० क्षारविशेषे । सर्जिकायाम् ॥

योगविद् त्रि० प्राप्तयोगेयोगंविन्दतिलभते । विद्लृ० । सम्पूर्णविषया

दिनाक्विप् ॥

योग : । न० समाधौ ॥ युनक्ति । युजिर्० । अञ्च्युत्त्रियुजिभृजिभ्य : कुश्चेत्यसुन्० कवर्गस्यान्तादेश : । योगसी० योगांसि ॥

योगसार : । पुं० तन्त्रविशेषे ॥ सर्वरोगहरोपाये ॥

योगाङ्गम् । न० यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिषु ॥

योगात्मा । पुं० निरस्तसमस्तप्रपञ्चे परमात्मनि । यंविनिद्राजितश्वासा : संतुष्टा : संयतेन्द्रिया : । ज्योति : पश्यन्तियुञ्जानास्तस्मैयोगात्मनेनम : ॥

योगाधमनम् । न० छलेनबन्धके ॥

योगाधियोग : । पुं० यात्रायोगान्तरे ॥ यथा । एकोऽपिज्यसितेषुपञ्चमतप : केन्द्रेषुयोगस्तथा० द्वौचेत्तेष्वधियोगएषुसकलायोगाधियोग : स्मृत : ॥ योगेक्षेममथाधियोगगमनेक्षेमंरिपूणांवधस्त्वायोक्षश्रीरवनीश्चलभतेयोगाधियोगेव्रजन् ॥

योगान्तराय : । पुं० योगमले । योगस्य० योगेवाअन्तराय : ॥

योगारङ्ग : । पुं० नारङ्गे ॥

योगारूढ : । त्रि० इन्द्रियार्थतत्साधनकर्मानासक्ते ॥ यथा । यदाहिने

न्द्रियार्थेषु न कर्मस्वनुषज्जते । सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते ॥

योगासनम् । न० ब्रह्मासने । ध्यानासने ॥

योगिदण्डः । पुं० वेत्रे ॥

योगी । त्रि० वसुरुद्रादित्यादिदेवताभक्ते ॥ दरिद्रब्राह्मणे । ध्याननिष्ठे । निरतिशयज्ञानैश्वर्यादिशालिनि ॥ समाधिनिष्ठेऽन्तर्दृष्टौ ॥ परमहंसपरिव्राजके ॥ परवैराग्ययुक्ते ॥ योगयुक्ते ॥ योगेननित्यसम्बन्धिनि ॥ योगारूढे ॥ सद्विविधोऽपरमः परमश्च । तत्रोत्पन्नतत्त्वज्ञानोऽनुत्पन्नजीवन्मुक्तिरपरमः । उत्पन्नतत्त्वज्ञानउत्पन्नजीवन्मुक्तिस्तुपरमो योगीति ॥ लोष्टे अश्मनि काञ्चने सुस्निग्धे चन्दने तथा । समताभावनायस्य स योगी परिकीर्त्तितः ॥ आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन । सुखंवायदिवा दुःखं स योगी परमो मतः ॥ योगोऽस्त्यस्य । यतन्निठनावित्तीनिः कर्मयोगिणि ॥ यथा । योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये इति ॥

योगिनी । स्त्री० योगयुक्तायां नार्याम् ॥ भगवत्याः सखीरूपास्तावरणदेवतासु ॥ ताः कोटिविधा । तासां च तु षष्टिः प्रधानाः । तासु अष्टयोगिन्यो यथा । ततोऽष्टपत्रे च ब्रह्माद्या पूजयेदष्टयोगिनीः । ब्राह्मीपूर्वी च माहेश्वर्यष्टाः स्कन्दमातरमेव च । कालरात्रिपूर्वादि चतुर्दिक्षु प्रपूजयेत् ॥ चण्डिकामयकूष्माण्डी तथा कात्यायनी शुभाम् । महागौरी स्वाग्निकोणे नैरृत्यादिषु पूजयेत् ॥ ब्रह्माद्यो गिनः स्त्रीत्वविवक्षायाम् ब्रह्मयो... वितिना... ॥ पञ्चात्र योगिनीचक्रम् । मङ्गलादिषु । यथा मङ्गला पिङ्गला धन्या भ्रामरी भद्रिका तथा । उल्का सिद्धिः सङ्कटा च योगिन्यो ह्यौ प्रकीर्तिताः ॥

योगिनीचक्रम् । न० तिथिविशेषे दिग्विशेषावस्थिति योगिनीषु ॥ यथा । ब्रह्माणी संस्थिता पूर्वे प्रतिपन्नवमी तिथौ । माहेश्वरी चोत्तरे च द्वितीया दशमी तिथौ । स्थिताग्नेये च कौमारी तृतीयैकादशी तिथौ । नारायणी च नैरृत्ये च चतुर्थी द्वादशी तिथौ ॥ पञ्चम्यां च त्रयोदश्यां वाराही दक्षिणे तथा । षष्ठ्यां वै चतुर्दश्यामिन्द्राणी पश्चिमे स्थिता ॥ सप्तम्यां पौर्णिमास्यां च चामुण्डा वायुगोचरे । अष्टम्यमावास्ययो स्त्र महालक्ष्मी शगोचरे ॥ योगिनी सम्मुखे नैव गमनादि प्रकारयेत् ॥ अपि च । नवमी प्रतिपत्पूर्वे० वह्निरुद्रे निकोणके ।

अयोदशशरेयास्य• वेदादित्यं चर्मेस्ते। चतुर्दशशरसेऽश्वात्•पूर्णिमासुनिमाहृते। दशपञ्चोत्तरे दर्शाष्टमीशामेचयोगिनी ॥ वामेशुभप्रदापृष्ठे वाञ्छितार्थप्रदायियिनी ॥ दक्षिणे भमश्मचीचसम्मुखेमृत्युदायिनी ॥

योगीन्द्र:। पुं• शिवे ॥ योग: परमात्मचिन्तनम्• तद्वत्सुश्रेष्ठ: ॥

योगीश:। पुं• शिवे ॥ विष्णौ ॥ अन्ये योगिनोयोगान्तरायैर्हन्यन्ते• स्वस्वरूपात्प्रमाद्यन्ति• अयन्तुतद्रहितत्वात्तेषामीश: ॥ याज्ञवल्क्यमुनौ ॥

योगीश्वर:। पुं• शिवे ॥ योगिनामीश्वर:॥ याज्ञवल्क्यमुनौ ॥

योगीश्वरी। स्त्री• दुर्गायाम्। यथा। योगिशक्रादयोदेवा: सनकान्तास्तपोधना:। तेषांस्वामीतथायोगीईश्वरीप्रभुपालना ॥ आत्मेन्द्रियमनादीनांसंधेयोगगउच्यते। तेषां वायेजनाद्योगी योगेश्वर्यविबोधमेतिदेवीपुराणम्

योगेश:। पुं• याज्ञवल्क्ये ॥

योगेश्वर:। पुं• सदाशिवे ॥ सर्वज्ञसर्वशक्तौभगवति। श्रीकृष्णे ॥ सर्वेषामणिमादिसिद्धिशालिनां योगिनामीश्वर: सर्वयोगसिद्धीनामीश्वर: ॥



योगेश्वरी। स्त्री• वराटदेशस्थितायामदुर्गायाम् ॥ वन्ध्याकर्कोटक्याम् ॥

योगेष्टम्। न• सीसके। तागे। सीसाङ्कितप्रसिद्धे धातौ ॥ योगेधातुसम्बन्धे इष्टम्। सप्तमीतिसमास: ॥

योग्यम्। न• ऋद्धिनामौषधौ ॥ वृद्धिनामौषधौ ॥ पुं• पुष्यनक्षत्रे ॥ त्रि• प्रवीणे ॥ योगार्हे ॥ उपाये योग्ये नाथ: कस्यमस्याञ्जनस्य ॥ शक्ते ॥ युज्यते। युजिर्•। ऋहलोर्ण्यत् ॥ यद्वा। योगायप्रभवति। योगाद्यच्च ॥ अभ्यासे ॥ यथा। अपर: प्रणिधानयोग्ययामरुत: पञ्चशरीरगोचरानितिरघु:। प्रणिधानयोग्ययासमाध्यभ्यासेनवशमनयदितिसम्बन्ध: ॥

योग्यता। स्त्री• वाक्यार्थज्ञानहेतौ। अर्थाबाधे ॥ अग्निनासिञ्चेदितिनप्रमाणम्• योग्यताविरहात् ॥ भावेतल् ॥ शाब्दबोधकारणविशेषे ॥. सतुपदार्थानांपरस्परसम्बंधेबाधाभाव:। इतिसाहित्यदर्पण: ॥ न्यायमते• तत्पदार्थेतत्पदार्थवत्ता। यथा। पदार्थे तत्रतद्वत्ता योग्यतापरिकीर्तिता। एकपदार्थेऽपरपदार्थसंबंधोयोग्यतेत्यर्थ:। तज्ज्ञानाभावाद्वह्निनासिञ्चतीत्यादौनशब्दबोध: ॥ क्षमतायामितिलोकप्रसिद्धि:।

योग्यरथ : । पुं॰ वैनयिके ॥

योग्या । स्त्री॰ अभ्यासे ॥ अर्कयोषिति ॥ शस्त्राभ्यासे । खुरल्याम् । श्रमे ॥ टाप् ॥

योजक : । त्रि॰ नियोगकर्त्तरि ॥ योजयति । यु॰ । ण्वुल् ॥

योजनम् । न॰ परमात्मनि ॥ योगे ॥ चतुष्क्रोश्याम् । क्रोशचतुष्टये ॥ यथा । द्वादशाङ्गुलिक : शङ्कुस्तद्द्वयन्तु शय : स्मृत : । तच्चतुष्कं धनु : प्रोक्तं क्रोशो धनु :सहस्रक: ॥ तच्चतुष्कं योजनं स्यादित्यादिमानमशोक्तम् ॥ एतन्मतेऽष्टचत्वारिंशत्सहस्रहस्तैर्योजनं भवति ॥ द्वात्रिंशत्सहस्रहस्तैर्योजनमुक्तं लीलावत्यां यथा । यवोदरैरङ्गुलमष्टसङ्ख्यैर्हस्तोऽङ्गुलै : षड्गुणितैश्चतुर्भि : । हस्तैश्चतुर्भिर्भवतीह दण्ड : क्रोश : सहस्रद्वितयेन तेषाम् ॥ स्याद्योजनं क्रोशचतुष्टयेन॰ तथाकराणां दशकेन वंश: ॥ इति ॥ युजे ल्युट् ॥

योजनगन्धा । स्त्री॰ कस्तूर्याम् ॥ सीतायाम् । व्यासमातरि । सत्यवत्याम् ॥ योजनाद्गन्धोऽस्या : ॥

योजनगन्धिका । स्त्री॰ योजनगन्धार्थे ॥ स्वार्थे क: । प्रत्ययस्थादितीत्वम् ॥

योजनपर्णी । स्त्री॰)

योजनवल्लिका । स्त्री॰) मञ्जिष्ठायाम् ॥

योजनवल्ली । स्त्री॰ मञ्जिष्ठायाम् ॥ योजनगामिनी वल्ली ॥

योजना । स्त्री॰ युक्तौ । योगकारणायाम् ॥

योजित : । त्रि॰ नियुक्ते ॥ प्रवर्त्तिते ॥ सम्पादिते ॥ युज्यते स्म । युजे : कर्म्मणि क्त : ॥

योटक : । पुं॰ विवाहोपयोगिविचारविशेषे ॥ स च॰ वर्णवश्यादिकूटभेदादष्टधा । तदुक्तम् । वर्णो वश्यं तथा तारा योनिश्च ग्रहमैत्रकम् । गणमैत्रं भकूटञ्च नाडी चैते गुणाधिका : ॥ एते वर्णादिमैत्र्यांसत्यां गुणाधिका : स्यु : । यथा वर्णमैत्र्यामेको गुण: ॰ वश्ये द्वावित्यादि ॥

योतु : । पुं॰ परिमाणे ॥

योत्रम् न॰ योक्त्रे । वृषादेर्गलयुगबन्धने ॥ यूयतेऽनेन । यु॰ । दाम्नीतिष्ट्रन् ॥

योद्धा । पुं॰ योधे । भटे । युद्धकर्त्तरि ॥ युध्यते । युधसम्प्रहारे । तृच् ॥

योध : । पुं॰ योद्धरि । युध्यते । युध॰ । पचाद्यच् ॥ सात्यकौ ॥

योधनम् । न॰ यत्ने ॥ युद्धे ॥

योधसंराव : । पुं॰ क्रन्दने । अन्योन्यंस्पर्द्धया योधानामाह्वाने ॥ योधानां संरवणम् । समवे । उपसर्गे दत्वादित्यप् ॥

योनाल : । पुं० यवनाले । जूर्णाह्वये । देवधान्ये । जुन्हरी० जुवार० इ० प्र० धान्ये ॥

योनि : । पुं० स्त्री० आकारे ॥ कारणे ॥ तोये ॥ स्मरमन्दिरे । भगे । वराङ्गे । उपस्थे । रतिगृहे । जन्मवर्त्मनि । गर्भाधानस्थाने : तस्यलक्षणंयथा । शुभ : कमठपृष्ठाभोगजस्कन्धोपमोभग : । वामोन्नतश्चेत्कन्याज : पुत्रजोदक्षिणोन्नत : ॥ आखुरोमागूढमणि : सुश्लिष्ट : संहत : पृथु : । तुङ्ग : कमलवर्णाभ : शुभो श्वत्थदलाकृति : ॥ कुरङ्गखुररूपोयस्तु चुल्लिकोदरसन्निभ : । रोमशोविवृतास्यश्च दृश्यनाशोतिदुर्भग : ॥ शङ्खावर्त्तो भगोयस्या : सागर्भ मिच्छनेच्छति । चिपिट : कर्पराकार : किङ्करीपददोभग : ॥ वंशवेतसपत्राभोगजरोमोच्चनासिक : । विकट : कुटिलाकारोलम्बगल्लस्तथाशुभ : ॥ चपिच । शङ्खनाभ्याकृतिर्योनि सत्याँवर्त्तासाप्रकीर्तिता । तस्यास्तु तोयेत्वावर्तेगर्भशय्या प्रतिष्ठिता ॥ यौति । युमिश्रणे । वह्निश्रोतिनि : ॥ प्रकृतौ ॥

योनिकन्द : । पुं० योनिरोगविशेषे ॥

योनिकूट : । पुं० वैवाहिकविचारो पयोगिनि० योटकविशेषे । तथथा । तोयेशाश्विभयोस्तुरङ्गउदितोवा तार्क्ययो : कासर : पूर्वाभाद्रधनिष्ठयोर्मृगपतिर्यामानलयो : कुक्कुर : । मेषोग्नीज्यभयोर्जलश्रवणयो : कोशोऽभिजिद्वैश्वयोर्विभ्रब्राह्मशशाङ्कयोरहिर्सर्पज्येष्ठानुराधर्क्षयो : ॥ वानायु : शिवमूलयोस्तुसरमागौरर्क्ष मोयानलयोर्व्याघ्रस्त्विचविशाखयो : फणिपुनर्वस्वोस्तुमार्जारक : । आखु : पितृभगर्क्षयोस्तु कथितायोनिस्तुभानामियंवैरञ्चापितयोर्द्वयोरपि महत्पाणिग्रहंवर्जयेत् ॥ गोव्याघ्रं गजसिंहमश्वमहिषं श्वैणश्चबभ्रूरगं वैरंवानरमेषकस्वसुमहत्तद्दहिडालोन्दुरम् । लोकानां व्यवहारतोन्यदपिचज्ञात्वाप्रयत्नादिदंदम्पत्योर्नृपभृत्ययोरपिसदावर्ज्यंशुभस्यार्थिभि : ॥ एकयोनिषुसम्पत्तिर्दम्पत्यो सङ्गम : सदा । भिन्नयोनिषुमध्या स्यादरिभावोनचेत्तयो : ॥ अपवादश्च । योनेरभावेनोद्वाह : कार्यःसतु विधेगद : । राशिवश्यमुखथयाविकारयेन्नतुदोषभाग् इति ॥

योनिज : । त्रि० योनिनि : सतंशरीरे ॥

योनिदेवता । स्त्री० पूर्वफल्गुनीनक्षत्रे ॥

योनिमुद्रा । स्त्री० देवतापूजायांप्रदर्शनीयाङ्गुलीरचितयोन्याकारमुद्रा

कारविशेषे ॥

योनिरोगः । पुं॰ भगन्दरे ॥

योन्यर्शः । न॰ भगजातरोगविशेषे । कन्दसंज्ञे ॥

योषा । स्त्री॰ अबलायाम् । नार्याम् ॥ योषति॰ योषयतिवा । युषसौत्रः सेवायाम् । पचाद्यच् ॥ युष्यते॰ योष्यतेवा । घञ् ॥

योषित् । स्त्री॰ स्त्रीमात्रे । योषायाम् ॥ साचत्रिविधा । यथा । योषितस्त्रिविधाब्रह्मन्पृथिव्यां मूढचेतसाम् । साध्वीभोग्याच कुलटाताः सर्वाः स्वार्थतत्पराः ॥ परलोकभयात्साध्वीतथैवयशसात्मनः । कामतश्च ऋतौ स्वकुरुतेभर्तुः स्नेहस्तसन्ततम् १ ॥ भोग्याभोग्यार्थिनीशश्वत्कामतश्च दृऽयकेवलम् । कुरुतेरतिसेवाञ्चनच भोग्यादृढव्रतम् ॥ वस्त्रालङ्कारसम्भोगंपुष्टिगन्धारमुत्तमम् । यावत्प्राप्नोतिसाभोग्यातावच्चवशगाप्रिया ॥ २ ॥ कुलाङ्गारसमानारीकुलटा कुलनाशिनी । कपटात्कुरुतेसेवां स्वामिनोनचभक्तितः ॥ सदापुंयोगमांशंसुमन्नसामदनातुरा । आहारादधिकंजारंप्रार्थयन्तीनवंनवम् ॥ नारार्थेस्वपतिंनातहन्तुमिच्छतिपुंश्चली । तस्याये विश्वसेन्मूढोजीवनं तस्यनिष्फलम् ॥ कथितायोषितः सर्वाउत्तमाधममध्यमाः । स्वात्मारामाविज्ञाग्निमनसात्मानपरिहृता ॥ योषते युष्यतेवा । युष॰ । हृसृरुहियुषिभ्यइति ः ॥ अवध्याः सर्वभूतानांयोषितः अन्यतामिति ॥

योषिता । स्त्री॰ योषिति ॥ युषेर्णिजन्तात्कर्मणिक्तः ॥

योषित्प्रिया । स्त्री॰ हरिद्रायाम् ॥

यौक्तिक । पुं॰ नर्मसचिवे । त्रि॰ युक्तियोग्ये ॥

यौगपद्यम् । न॰ एककालतायाम् ॥

यौगिकः । त्रि॰ योग्ये ॥ योगंनित्यमर्हति छेदादित्वाट्ठञ् ॥ प्रकृतिप्रत्यययोगलभ्यार्थवाचके ॥ योगायप्रभवति । योगाद्यच्चेति॰ ठञ् ॥ योगरूढाश्चरूढाश्चयौगिकाश्चेतितेत्रिधा पाचकादयोयौगिकाः । अद्रित्यादिशब्दायौगिकाः । अदित्याअपत्यमिति॰ कृदिकारादक्तिनइतिङीषन्तात्स्त्रीभ्योढगितिढक् प्रत्ययेनकेवलंयोगार्थएव ॥

यौजनशतिकः । त्रि॰ शतयोजनयायिनि ॥ योजनानांशतम्॰ योजनशतम् । योजनशतंगच्छति । ठञ् । पुं॰ आचार्ये । योजनशतादभिगमनमर्हति । ततोभिगमनमर्हतीति अवक्तव्यमितिठञ् ॥

यौजनिकः । त्रि॰ योजनमात्रयायिनि ॥ योजनंगच्छति । योजनंगच्छतीतिठञ् ॥

यौतकम् । न॰ यौतुके । परिणयनका-

स्त्री योधनी । युवतयोनिसम्बन्ध: । तत्रभवम् । तत्रभवइत्यण् ॥ युवतयोर्वधूवरयोर्वा० इदम् । तस्येदमित्यण् ॥

यौतवम् । न० द्रव्ये । परिमाणे । यौतेर्बाहुलकाद्भावे० कर्त्तरिवातुन् । येतु: योतवम्० योतवीवा । तस्येदम् । अण् ॥

यौतुकम् । न० यौतके ॥

यौध: । पुं० योधे । योधएव । स्वार्थिक: प्रज्ञाद्यण् ॥

यौधिष्ठिर: । त्रि० युधिष्ठिरसम्बन्धिनि ॥ सा च यौधिष्ठिरी सेनागाङ्गेयशरैताडिता । प्रतिपत्पाठशीलानां विद्येवतनुतांगता ॥ युधिष्ठिरस्यायम् । तस्येदमित्यण् ॥

यौधिष्ठिरि: । पुं० युधिष्ठिरात्मजे ॥ कुर्वादिगण्यंबाधित्वा० बाह्वादित्वादिञ् । बहुत्वे० युधिष्ठिरा: । बह्वचइतिलुक् ॥

यौन: । पुं० कन्यादानादिसम्बन्धे ॥ न० योनिसंबन्धाधीनपापे ॥

यौवतम् । न० युवतीनांवृन्दे ॥ परिमाणे० । युवतीनांसमूह: । यौते: शवन्तादुगितश्चेतिङीपि० चनुदात्तादेरञित्यञ् ॥ लास्यप्रभेदे ॥

यौवनम् । न० अवस्थाविशेषे । तारुण्ये ॥ यूनोभाव: । हायनान्तेत्यण् अन्निति प्रकृतिभाव: ॥ कौमारंपञ्चमाब्दान्तंपौगण्डंदशमावधि । कैशोरमापञ्चदशाद्यौवनन्तुतत: परम् ॥ नवयौवनलक्षणंयथा । दृशोर्ह्णिञ्चतनंकिंचिच्चलाङ्गे दरस्मितम् । मनागभिस्फुरद्भावंनव्यंयौवनमुच्यते ॥ नव्ययौवनकारकमौषधं यथा अश्वगन्धानागबलागुडमांसविशेविणाम् । रूपंभवेद्यथातद्वन्नवयौवनधारिणाम् ॥ इति ॥ युवतिवृन्दे ॥ युवतीनांसमूह: । अवश्यमस्तिरिति० यस्तोयुवतिशब्द: । तस्माद्भिक्षादित्वादणिविवक्षिते० पुंवद्भावेऽन्निति प्रकृतिभाव: ॥

यौवनकण्टक: । पुं० न० युवगण्डे । वयस्फोटे ॥

यौवनलक्षणम् । न० लावण्ये । कुच ॥

यौवनाश्व: । पुं० मांधातरिनृपे ॥ यौवनाश्वोथमांधाताचक्रवर्त्यवनीप्रभु: । सप्तद्वीपवतीमेक: शशासाच्युततेजसा ॥ यावत्सूर्यउदेतिस्म यावच्चप्रतितिष्ठति । सर्वंतद्यौवनाश्वस्यमांधातु: क्षेत्रमुच्यते ॥ इति वह्निपुराणम् ॥

यौवनाश्वक: । पुं० मांधातृनृपे ॥

यौष्माक: । त्रि० युष्मदीये ॥ युवयोर्युष्माकंवाऽयम् । युष्मदस्मदोरन्यतरस्यांखञ्चेत्यणि : पक्षेऽण् । प्रत्ययेयुष्माकादेश: ॥

भवेत् ॥ इति ॥ रक्तदोषनाशक मौषधं यथा । ब्रह्मयष्टिफलं पिष्ट-वारिणातनुलेपनः । तेनघृष्टं रक्त दोषः प्रशमतिनसंशयः ॥ रक्त-तिस्म॰ रज्यतेवा । रञ्जरागे । मत्य र्थेतिक्तः । कर्मणिक्तोवा ॥ त्रि॰ अनुरक्ते ॥ नील्यादिरञ्जिते ॥ लो-हिते ॥ क्रीडारते ॥

रक्तकः । पुं॰ अम्लाने ॥ बन्धूके ॥ रक्तवस्त्रे ॥ रक्तशिग्रौ ॥ रक्तैर-ण्डे ॥ न॰ हिङ्गुले ॥ त्रि॰ अनुरा-गिणि ॥ विनोदिनि ॥ रक्तपुष्पत्वा त्॰ रक्तः । स्वार्थे कन् ॥

रक्तकन्दः । पुं॰ विद्रुमे ॥ राजपला ण्डौ ॥ रक्तालौ ॥

रक्तकन्दलः । पुं॰ प्रवाले ॥

रक्तकमलम् । न॰ रक्तोत्पले ॥ कोक-नदे ॥

रक्तकम्बलम् । न॰ रक्तोत्पले ॥ यथा पाद्मे । रक्तकमलैः कुमुदैः पुष्पैः कल्हारैरक्तकंबलैरिति ॥

रक्तकरवीरकः । पुं॰ रक्तप्रसवे । ग-णेशकुसुमे । चण्डीकुसुमे । भूत द्राविणि । रविप्रिये । लालकनेर॰ इतिभाषाप्रसिद्धे ॥

रक्तकाञ्चनः । पुं॰ रक्तकोविदारद्रु-मे । अमरिके ॥

रक्तकाण्डा । स्त्री॰ रक्तपुनर्नवाया-म् ॥

रक्तकाष्ठम् । न॰ पतङ्गे ॥

रक्तकुमुदम् । न॰ रक्तकैरवे ॥

रक्तकुसुमः । पुं॰ पारिभद्रे ॥ धन्वन-वृक्षे ॥

रक्तकेशरः । पुं॰ पारिभद्रे ॥ पुन्ना-गवृक्षे ॥

रक्तकैरवम् । न॰ रक्तकुमुदे ॥

रक्तकोकनदम् । न॰ रक्तोत्पले ॥

रक्तखदिरः । पुं॰ रक्तसारे । बहुश-ल्ये । याज्ञिके ॥

रक्तगन्धकम् । न॰ बोले ॥

रक्तगुल्मः । स्त्रीणांरक्तजगुल्मरोगे ॥ तस्यौषधं यथा । हिमयष्टीत्रिकटुकं चूर्णं पीतं हरेच्छिवं । तिलक्वाथेन-संयुक्तं रक्तगुल्मं स्त्रियाहरं ॥

रक्तघ्नः । पुं॰ रोहितकवृक्षे ॥

रक्तघ्नी । स्त्री॰ दूर्वाविशेषे । मांठिया-दूर्वा इ॰गौ॰दे॰भा॰प्र॰ ॥

रक्तचन्दनम् । न॰ स्वनामाप्रसिद्धेच न्दने । पत्राङ्गे । कुचन्दने । ताम्र सारे ॥ रक्तंशीतं गुरुस्वादुच्छर्दितृ-ष्णास्रपित्तहृत् । पित्तनेत्रहितंवृष्यं ज्वरव्रणविषापहम् ॥ रक्तस्ततच न्दनञ्च ॥ रक्तसारे ॥ रक्तचन्दनमि व । रक्तसारत्वात् ॥

रक्तचित्रकः । पुं॰ क्षुपविशेषे । कालौ । कालमूले । दारुके । चि-त्राङ्गे । रांङ्गचिता॰इ॰गौ॰दे॰भा षाप्र॰ ॥

रक्तचूर्णम् । न० सिन्दूरे ॥ रक्तवर्णचूर्णमात्रे ॥

रक्तजम्बुकः । पुं० भूनागे ॥ रक्तवर्णजम्बुमात्रे ॥

रक्तजिह्वः । पुं० सिंहे ॥ त्रि० रक्तवर्णजिह्वायुक्ते ॥

रक्तझिण्टी । स्त्री० कुरबके ॥

रक्ततुण्डः । पुं० शुकपक्षिणि ॥ त्रि० लोहितमुखयुक्ते ॥

रक्ततुण्डकः । पुं० भूनागे ॥

रक्ततृणा । स्त्री० गोमूत्रिकायाम् ॥

रक्तत्रिवृत् । स्त्री० रक्तवर्णत्रिवृतायाम् त्रिपुटायाम् । ताम्रपुष्पिकायाम् ॥

रक्तदन्तिका । स्त्री० चण्डिकायाम् ॥ तत्स्थाने ॥

रक्तदला । स्त्री० नलिकायाम् ॥ चिविल्लिकायाम् ॥

रक्तधातुः । पुं० गैरिके ॥ ताम्रे ॥

रक्तनालः । पुं० जीवशाके ॥

रक्तनासिकः । पुं० पेचके ॥ त्रि० लोहितनासिकाविशिष्टे ॥

रक्तपः । पुं० यातुधाने । राक्षसे ॥ रक्तंपिबति । पा० । धातोरनुपतिकः त्रि० रक्तपानकर्त्तरि ।

रक्तपटः । पुं० वैनाशिकविशेषे ॥ साङ्ख्यभिक्षौ ॥

रक्तपत्रिका । स्त्री० नाकुल्याम् ॥ रक्तपुनर्नवायाम् ॥

रक्तपद्मी । स्त्री० समङ्गायाम् । क्षुद्रक्षुपविशेषे ॥

रक्तपद्मः । पुं० न० रक्तोत्पले । कोकनदे ॥

रक्तपल्लवः । पुं० अशोकवृक्षे । लोहितपत्रे ।

रक्तपा । स्त्री० जलौकायाम् ॥ डाकिन्याम् ॥ रक्तंपिबति । पा० धातोरनुपसर्गकः ॥

रक्तपाकी । स्त्री० बृहत्याम् ॥

रक्तपाता । स्त्री० जलौकायाम् ॥

रक्तपादः । पुं० शुकपक्षिणि ॥

रक्तपादी । स्त्री० लज्जालौ ॥ हंसपद्याम् ॥

रक्तपायी स्त्री० रक्तपानशीले ॥

रक्तपायिनी । स्त्री० जलौकायाम् ॥

रक्तपारदः । पुं० न० हिङ्गुले ॥

रक्तपिण्डम् । न० जवापुष्पे ॥ इ० शब्दरत्नावली ॥

रक्तपिण्डकः । पुं० रक्तालौ । रतालू० इ० भा० ॥

रक्तपित्तम् । न० रोगविशेषे ॥

रक्तपित्तहा पुं० रक्तबन्ध्याम् ॥

रक्तपुच्छिका । स्त्री० ब्राह्मण्याम् । ब्राह्मनीतिप्रसिद्धजन्तुविशेषे ॥

रक्तपुनर्नवा । स्त्री० रक्तपुनर्नवाशाके । मण्डलपत्रिकायाम् । रक्तकाण्डायाम् । रक्तपुष्पिकायां

म् शोणपत्रे ॥

रक्तपुष्प: । रक्तकरवीरे ॥ रक्ताम्रे ॥ बन्धूकवृक्षे ॥ पुन्नागवृक्षे ॥ बकवृक्षे ॥ दाडिमे ॥ रोहितकवृक्षे ॥ रक्तकाञ्चनवृक्षे ॥

रक्तपुष्पक: । पुं० रोहितकद्रुमे ॥ पलाशवृक्षे ॥ पर्पटे ॥ शाल्मलिवृक्षे ॥

रक्तपुष्पा । स्त्री० शाल्मलिवृक्षे ॥ रक्तपुनर्नवायाम् सिन्दूर्याम् रक्तानिलोहितानिपुष्पाण्यस्या: ॥

रक्तपुष्पिका । स्त्री० लज्जालौ ॥ रक्तपुनर्नवायाम् ॥ भूपाटल्यां ॥

रक्तपुष्पी । स्त्री० पाटलिवृक्षे ॥ जवायाम् ॥ आवर्तकीलतायाम् ॥ नागदमन्याम् ॥ करुणीवृक्षे ॥ उष्ट्रकाण्डाम् ॥

रक्तपूरकम् । न० वृक्षाम्ले ॥

रक्तप्रसव: । पुं० रक्तकरवीरे ॥ रक्ताम्लाने ॥

रक्तफल: पुं० वटवृक्षे ॥

रक्तफला । स्त्री० पीलुपर्ण्याम् । बिम्बिकायाम् । कुंदरु० कुंदूरी० इतिख्यातौषधौ ॥ रक्तानिफलान्यस्या: । अजादित्वाट्टाप् ॥

रक्तफेनज: । पुं० वामपार्श्वस्थक्लोम्नि । पुप्फुसे ॥

रक्तबालुकम् न० सिन्दूरे ॥

रक्तमञ्जर: । पुं० निचुलवृक्षे ॥

रक्तमत्स्य: । पुं० रक्तवर्णमत्स्यविशेषे ॥ यथा । योरक्ताङ्गोनातिदीर्घोमिताल्योनातिस्थूलोरक्तमत्स्य: सतूक्त: । शीतोरुच्य: पुष्टिकृद्दीपनो वातनाशं धत्ते किञ्चदोषत्रयस्य ॥

रक्तमाल: । पुं० चिरबिल्वे । करञ्जके ॥

रक्तमूलक: । पुं० देवसर्षपवृक्षे ॥

रक्तमेह: । पुं० प्रमेहरोगविशेषे ॥

रक्तमोक्षणम् न० शोणितस्रावे ॥ वेदनोपशमार्थायतथापाकशमायच । अचिरोत्पतितेशोथेशोणितस्रवणं चरेत् ॥ चरेत्० कुर्यात् । एकतस्तुक्रिया: सर्वारक्तमोक्षणमेकत: । रक्तं हिवेदनामूलं तच्चेन्नास्तिनचापिरुक् ॥ विवर्णेकठिनेश्यावेव्रणे चात्यन्तवेदने । सविशेषेविशेषेणजलौकाभि: पदैरपि ॥ शोणितस्रावणं चरेदित्यनेनान्वय: ॥

रक्तयष्टि: । स्त्री० )
रक्तयष्टिका स्त्री० ) मञ्जिष्ठायाम् ॥

रक्तयावनाल: । पुं० तुवरयावनाले ॥

रक्तरजतम् । न० शोणमुक्ताफले ॥

रक्तरेणु: । पुं० सिन्दूरे ॥ पलाशकोरके ॥ पुन्नागे ॥ रक्तारेणवोऽस्य ॥

रक्तरेणुका । स्त्री० पलाशकलिकायाम् ॥

रक्तरैवतकम् । न० महापार[illegible] ॥

रक्तलशुन: । पुं० महाकन्दे । गृञ्जने । दीर्घपत्रके । पृथुपत्रे । स्थूल

[illegible] । यवनेष्टे ॥ गृञ्जनस्यमधुरं कटुकन्दं नालमप्युपदिशन्तिकषायम् । पत्रसञ्चयमुशन्तिसतिक्तंसूरयोलवणमस्थिवदन्तीतिराजनिर्घण्टः ॥

रक्तला । स्त्री० काकतुण्ड्याम् ॥

रक्तलोचनः । पुं० कपोते ॥ त्रि० लोहितलोचनयुक्ते ॥ रक्तेलोचने यस्य सः ॥

रक्तवटी । स्त्री० मसूरिकायाम् ॥

रक्तवर्गः । पुं० किंशुके ॥ दाडिमे बन्धूके ॥ लाक्षायाम् ॥ निशाद्वये कुसुम्भपुष्पे ॥ मञ्जिष्ठायाम् ॥

रक्तवर्णः । पुं० इन्द्रगोपे ॥

रक्तवृन्तः । पुं० वार्त्ताकौ ॥

रक्तवर्षाभूः । स्त्री० रक्तपुनर्नवायाम् ॥

रक्तवसनः । पुं० सन्न्यासिनि ॥ त्रि० लोहितवस्त्रवति ॥ न० रक्तवर्णवस्त्रे ॥

रक्तवातः । पुं० रोगविशेषे ॥ नारिकेलस्यैवमूलं क्षीरेणसंयुतम् । पिवेद्व्रिविधस्त्रस्यरक्तवातोविनश्यति ॥

रक्तवालुका । स्त्री० सिन्दूरे ॥

रक्तविन्दुः । पुं० रुधिरकणे ॥

रक्तवीजः । पुं० दाडिमे ॥ शुम्भनिशुम्भयोः सेनापतावसुरविशेषे ॥

रक्तवीजका । स्त्री० तरदीवृक्षे ॥

रक्तवृन्ता । स्त्री० शेफालिकायाम् ॥

रक्तवृष्टिः । स्त्री० रुधिरवर्षणरूपे उत्पातविशेषे ॥ तत्फलंयथा ज्योतिषे रक्तैश्शस्त्रोद्योगोमांसास्थिवसादिभिर्मरकः । धान्यहिरण्यत्वक्फलकुसुमाद्यं वर्षितैर्भयंविद्यात् ॥

रक्तशालिः । पुं० रक्तवर्णधान्यविशेषे ॥ ताम्रशालौ । शोणशालौ ॥

रक्तशासनम् । न० सिन्दूरे ॥

रक्तशिग्रुः । पुं० रक्तशोभाञ्जनवृक्षे । रक्तके । मधुरे ॥ रक्तोमधुरः । रक्तकण्ठानामितिदर्शनात् । सचासौशिग्रुः । रक्तोवर्णोमपुष्पे यस्य ॥

रक्तशीर्षकः । पुं० सरलद्रवे ॥

रक्तशृङ्गिकम् । न० विषे ॥

रक्तसंज्ञः । पुं० कुङ्कुमे ॥

रक्तसन्दंशिका । स्त्री० जलौकायाम् ॥

रक्तसन्ध्यकम् । न० रक्तकह्लारे । हल्लके ॥ रक्तंसन्ध्येव । इवार्थे कन् । कोणः ॥ रक्तान्सन्धीन-करोति । वक्रकुटिलायांगतौ । मूलविभुजादित्वात्कोवा ॥

रक्तसरोरुहम् । न० रक्तपद्मे ॥ रक्तञ्चतत्सरोरुहञ्च ॥

रक्तसर्षपः । पुं० राजिकायाम् ॥

रक्तसन्ध्यका। स्त्री॰ रक्ताम्लाने॥

रक्तसारः। पुं॰ रक्तखदिरे॥ अम्लवेतसे॥ न॰ रक्तचन्दने॥ पतङ्गे। बकम॰ इति ख्याते॥

रक्तसौगन्धिकम्। न॰ रक्तकह्लारे। रक्तसन्धी॰ इ॰ भा॰ प्र॰॥ रक्तवर्णविकालविकाशिपुष्पवृक्षे॥ रक्तञ्चतत्सौगन्धिकञ्च॥

रक्तस्रावः। पुं॰ रक्तपतने॥

रक्तहंसा। स्त्री॰ रागिणीविशेषे॥

रक्ता। स्त्री॰ गुञ्जायाम्॥ लाक्षायाम्॥ मञ्जिष्ठायाम्॥ उष्ट्रकाण्डायाम्॥

रक्ताकारः। पुं॰ प्रवाले॥

रक्ताक्तम्। न॰ रक्तचन्दने॥ त्रि॰ शोणितमिश्रिते॥

रक्ताक्षः। पुं॰ कासरे। महिषे॥ क्रूरे॥ पारावते॥ चकोरे॥ सारसे॥ षष्टिवत्सरान्तर्गतवत्सरविशेषे॥ दुर्भिक्षं मरणं रोगो धान्यौषधिप्रपीडनम्। पापरोगा भवेद्दे वि- रक्ताक्षेऽमरवन्दिते॥ ५८॥ त्रि॰ रक्तनेत्रवति॥ रक्ते अक्षिणी यस्य सः। अक्षोदर्शनादित्यच्॥

रक्ताङ्गः। पुं॰ भौमग्रहे॥ कम्पिल्ले॥ प्रवाले॥ मत्कुणे॥ मण्डले॥ ककलासे॥ न॰ विद्रुमे॥ धीरे। रक्तचन्दने॥ कुङ्कुमे॥

रक्ताङ्गा। स्त्री॰ जीवन्तिकायाम्॥

रक्ताङ्गी। स्त्री॰ मञ्जिष्ठायाम्॥

रक्तातिसारः। पुं॰ रोगविशेषे॥ पित्तकृन्ति यदा त्वर्थं द्रव्यमश्नाति पैत्तिके। तद्दोषाज्जायते शीघ्रं रक्तातीसार उल्वणः॥ वत्सकतरुत्वगार्द्रादाडिमफलसम्भवास्वक् च। त्वग्युगलं पलमानं विपचेदष्टाङ्गसम्मिते तोये॥ अष्टमभागं शेषं क्वाथं मधुनापिबेत् पुरुषः। रक्तातिसारमुल्वणमतिशयितं नाशयेन्नियतम्॥ कुटजदाडिमक्वाथः॥ गोदुग्धनवनीतन्तु मधुना सितया सह। लीढं रक्तातिसारे तु ग्राहकं परमं महत्॥ नवनीतावलेहः॥ पीतं मधुसितायुक्तं चन्दनं तण्डुलाम्बुना। रक्तातिसारजिद्रक्तपित्ततृड्दाहमेहनुत्॥ चन्दनमवश्वेतम्। चन्दनकल्कः।

रक्ताधारः। पुं॰ चर्मणि॥

रक्तापहम्। न॰ बोले॥

रक्तापामार्गः। पुं॰ क्षुद्रापामार्गे। आघट्टके॥

रक्ताम्बरम्। न॰ वह्निशिखाख्यकुसुम्भरञ्जितवस्त्रे॥ काषायवस्त्रे॥ त्रि॰ तद्वति॥

रक्ताम्रः। पुं॰ कोशाम्रे॥

रक्ताम्लानः। पुं॰ कुरुवके॥

रक्तार्कः। पुं॰ अर्कपर्णे। विकीरणे॥ रक्तार्कपुष्पं मधुरं सतिक्तं कु

कान्दे । यवभेदे ॥ गन्धेनस्यमधुरं कटुकन्दं नालमप्यपदिशन्तिकषायम् । पत्रसद्ग्रमशन्तिसतिक्तंसर येलवणमस्थिवदन्तीतिराजनिर्घण्टः ॥

रक्तता । स्त्री० काकतुण्डाम् ॥

रक्तलोचनः । पुं० कपोते ॥ त्रि० लोहितलोचनयुक्ते ॥ रक्तेलोचने यस्य सः ॥

रक्तवटी । स्त्री० मसूरिकायाम् ॥

रक्तवर्गः । पुं० किंशुके ॥ दाडिमे बन्धूके ॥ लाक्षायाम् ॥ निशाद्वये कुसुम्भपुष्पे ॥ मञ्जिष्ठायाम् ॥

रक्तवर्णः । पुं० इन्द्रगोपे ॥

रक्तवर्ते नः । पुं० वार्त्ताकौ ॥

रक्तवर्षाभूः । स्त्री० रक्तपुनर्नवायाम् ॥

रक्तवसनः । पुं० सन्न्यासिनि ॥ त्रि० लोहितवस्त्रवति ॥ न० रक्तवस्त्रे ॥

रक्तवातः । पुं० रोगविशेषे ॥ नारिकेलस्यैव मूलञ्च गोक्षीरेणसंयुतम् । पिबेन्नित्यविधस्तस्य रक्तवातोविनश्यति ॥

रक्तवालुका । स्त्री० सिन्दूरे ॥

रक्तविन्दुः । पुं० रुधिरकणे ॥

रक्तबीजः । पुं० दाडिमे ॥ शुम्भनिशुम्भयोः सेनापतावसुरविशेषे ॥

रक्तबीजका । स्त्री० तरदीवृक्षे ॥

रक्तवृन्ता । स्त्री० शेफालिकायाम् ॥

रक्तवृष्टिः । स्त्री० रुधिरवर्षणरूपे उत्पातविशेषे ॥ तत्फलंयथा । यथा रक्तशस्त्राद्या गोमांसास्थिवसादिभिर्वर्षणे रक्तः । धान्यहिरण्यत्वकफलकुसुमाद्यैर्वर्षितैर्भयंविद्यात् ॥

रक्तशालिः । पुं० रक्तवर्णधान्यविशेषे ॥ ताम्रशालौ । शोणशालौ ॥

रक्तशासनम् । न० सिन्दूरे ॥

रक्तशिरः । पुं० रक्तशोभाञ्जनवृक्षे । रक्ते । मधुरे ॥ रक्तोमधुरः रक्तशोभाञ्जनोमितिरुर्णनात् । मचासौशिग्रुः । रक्तशोभनपुष्पकत्वात् ॥

रक्तशीर्षकः । पुं० सरलद्रवे ॥

रक्तशृङ्गिकम् । न० विषे ॥

रक्तसंज्ञः । पुं० कुङ्कुमे ॥

रक्तसन्दंशिका । स्त्री० जलौकायाम् ॥

रक्तसन्ध्यकम् । न० रक्तपद्मोत्पले ॥ रक्तांसन्ध्यां व बुबोधयन् । कोणः ॥ रक्तान्सन्धीन् कति । चक्रकुटिलायांगतौ । मूलविभुजादित्वात्कोवा ॥

रक्तसरोरुहम् । न० रक्तपद्मे ॥ रक्तञ्चतत्सरोरुहञ्च ॥

रक्तसर्षपः । पुं० राजिकायाम् ॥

रक्तसहा । स्त्री० रक्तम्लाने ॥

रक्तसारः । पुं० रक्तखदिरे ॥ अम्लवेतसे ॥ न० रक्तचंदने ॥ पतङ्गे । बकम०इतिख्याते ॥

रक्तसौगन्धिकम् । न० रक्तकह्लारे । रक्तसोंधी०इ०भा०प्र० ॥ रक्तवर्णविकालविकाशिपुष्पवृक्षे ॥ रक्तश्चतत्सौगन्धिकञ्च ॥

रक्तस्रावः । पुं० रक्तपतने ॥

रक्तहंसा । स्त्री० रागिणीविशेषे ॥

रक्ता । स्त्री० गुञ्जायाम् ॥ लाक्षायाम् ॥ मञ्जिष्ठायाम् ॥ उष्ट्रकाण्डाम् ॥

रक्ताकारः । पुं० प्रवाले ॥

रक्ताक्तम् । न० रक्तचन्दने ॥ त्रि० शोणितमिश्रिते ॥

रक्ताक्षः । पुं० कासरे । महिषे ॥ क्रूरे ॥ पारावते ॥ चकोरे ॥ सारसे ॥ षष्टिवत्सरान्तर्गतवत्सरविशेषे ॥ दुर्भिक्षं मरणं रोगो धान्यौषधिप्रपीडनम् । पादरोगो भवेद्देवि रक्ताक्षेऽमरवन्दिते ॥ ५८ ॥ त्रि० रक्तनेत्रवति ॥ रक्ते अक्षिणी यस्य सः । अक्ष्णोदर्शनादित्यच् ॥

रक्ताङ्गः । पुं० भौमग्रहे ॥ काम्पिल्ले ॥ प्रवाले । मत्कुणे ॥ मण्डले ॥ कृकलासे ॥ न० विद्रुमे । धीरे । रक्तचन्दने ॥ कुङ्कुमे ॥

रक्ताङ्गा । स्त्री० जीवन्तिकायाम् ॥

रक्ताङ्गी । स्त्री० मञ्जिष्ठायाम् ॥

रक्तातिसारः । पुं० रोगविशेषे ॥ पित्तकृन्ति यदा त्वर्थं द्रव्यमश्नाति पैत्तिके । तद्दोषाज्जायते शीघ्रं रक्तातीसार उल्वणः ॥ वत्सकतरुत्वगार्द्रादाडिमफलसम्भवात्वक् च । त्वग्युगलं पलमानं विपचेदष्टाङ्गसम्मितेतोये ॥ अष्टमभागं शेषं क्वाथं मधुनापिबेत्पुरुषः । रक्तातिसारमुल्वणमतिशयितं नाशयेन्नियतम् ॥ कुटजदाडिमक्वाथः ॥ गोदुग्धनवनीतन्तु मधुना सितया सह । लीढं रक्तातिसारे तु ग्राहकं परमं महत् ॥ नवनीतावलेहः ॥ पीतं मधुसितायुक्तं चन्दनं तण्डुलाम्बुना । रक्तातिसारजिद्रक्तपित्ततृड्दाहमेहनुत् ॥ चन्दनमत्र श्वेतम् । चन्दनकल्कः ।

रक्ताधारः । पुं० चर्म्मणि ॥

रक्तादहम् । न० बोले ॥

रक्तापामार्गः । पुं० क्षुद्रापामार्गे । आघट्टके ॥

रक्ताम्बरम् । न० वह्निशिखाख्यकुसुम्भरञ्जितवस्त्रे ॥ काषायवस्त्रे ॥ त्रि० तद्वति ॥

रक्ताम्रः । पुं० कोशाम्रे ॥

रक्ताम्लानः । पुं० कुरुवके ॥

रक्तार्कः । पुं० अर्कपर्णे । विकीरणे ॥ रक्तार्कपुष्पं मधुरं सतिक्तं कु

उष्णमिष्टं कफनाशनञ्च । वाय्वोर्वि
षं वह्निचरक्तपित्तं संग्राहिगुल्म-
श्वयथौ हितं तत् ॥

रक्ताभिष्यन्दम् । न० नेत्ररोगविशेषे ॥ तल्ल
क्षणं यथा । पद्माभं मृदुरक्ताभिष्य-
न्मांसं चीयते सिते ॥

रक्तार्बुदः । पुं० उपपापोत्थरोगविशेषे ॥

रक्तार्शः । न० अर्शोरोगविशेषे ॥

रक्तालुः । पुं० रक्तपिण्डालौ । रक्त-
कन्दे । लोहितालौ । रतालु० रत
गुडा० इ० भा० प्र० कन्दे ॥

रक्ताशोकः । पुं० वृक्षविशेषे ॥

रक्तिका । स्त्री० गुञ्जायाम् । रत्ती० घुं
घची० चिरमिठी० इ० भा० प्र० भिल्ल
भूषणायाम् ॥ राजिकायाम् ॥ र-
क्तिकापरिमाणे ॥

रक्तिमा ॥ पुं० लोहितत्वे ॥

रक्तेक्षुः । पुं० रक्तवर्णेक्षौ । सूक्ष्मपत्रे ॥

रक्तैरण्डः । पुं० व्याघ्रे । हस्तिक-
र्णे । रुवौ ॥

रक्तैर्वारुः । पुं० इन्द्रवारुण्याम् ॥

रक्तोत्पलः । पुं० शाल्मलिवृक्षे ॥
न० कोकनदे । रक्तसरोरुहे ॥

रक्तोत्पलाभः । पुं० शोणवर्णे । त्रि०
तद्वति ॥

रक्तोत्पलम् । न० गैरिके ॥

रक्षः । पुं० मंत्रगुप्तसमर्थे ॥ रक्षति
। रक्षपालने । पचाद्यच् ॥

रक्षःसभम् । न० रक्षःसमूहे ॥

रक्षकः । त्रि० रक्षितरि ॥ अनाथबा
लवृद्धानां रक्षकाः सर्वदेवताः ॥
रक्षति । रक्ष० । ण्वुल् ॥

रक्षणम् । न० पालने ॥ रक्ष ल्युट् ॥
आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैर
पि । आत्मानं सततं रक्षेद्दारैर
पि धनैरपि ॥ त्रि० रक्षके । पाल
के ॥ रक्षति० पालयति । रक्ष०
। नन्द्यादित्वाल्ल्युः ॥

रक्षणिः । स्त्री० त्रायमाणायां लता
याम् ॥

रक्षणीयः । त्रि० रक्ष्ये । रक्ष० । अ
नीयर् ॥

रक्षन् । त्रि० रक्षितरि ॥ रक्षति । र
क्ष० । शतृ ॥

रक्षः । न० राक्षसे । निरृतिप्रभृतौ
। रावणादौ । रक्षन्त्यस्मात् । रक्ष०
। सर्वधातुभ्योऽसुन् ॥ निर्दये ॥
यथा । दृष्ट्वातु विकलान्व्यङ्गानना
थान्रोगिणस्तथा । दयानजायतेय
स्य सरक्ष इति मे मतिः ॥

रक्षा । स्त्री० जतुनि । रक्षणे । बा
धानिवृत्तौ ॥ योगयुक्तो जनार्दनं
चिन्तयेदिति यत् सास्य चिन्तकस्य प
रा रक्षेत्यहं मन्ये । यथोक्तं सहस्र
नामभाष्ये । नित्यं संचिन्तयेदेष
योगयुक्तो जनार्दनम् । सास्य रक्षा
परा मन्ये को हि नस्यच्युताश्रयमि
ति ॥ रक्षणम् । रक्ष० । गुरोश्च हल

इत्य : । टाप् ॥ भस्मनि ॥ श्रावण्यां पौर्णमास्यान्तु रक्षाबन्धनमिष्यते । यथा । पौर्णमास्यां हरेरक्षाबन्धनं विधिपूर्वकम् । अजराजकुमारस्तात्केचिदिच्छन्ति साधव : ॥ तत्र भद्रासङ्गवेलामतिक्रम्य च कुर्य्यात् । तथा च स्मृति : । भद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गुनी तथा । श्रावणी नृपतिं हन्ति ग्रामान् दहति फाल्गुनीति ॥ विधिश्च भविष्योत्तरे । उपाकर्मदिने प्रोक्तमृषीणाञ्चैव तर्पणम् । ततोऽपराह्णसमये रक्षापोटलिकां शुभाम् ॥ कारयेदक्षतै : शस्तै : सिद्धार्थैर्हेमभूषिताम् । वस्त्रैर्विचित्रै : कार्पासै : क्षौमैर्वा मलवर्ज्जितै : ॥ विचित्रं ग्रथितं सूत्रं स्थापयेद्भाजनोपरि । उपलशिलागृहमध्ये दण्डचतुष्कं न्यसेच्छुभं पीठम् । तत्रोपविष्टो राजा सामात्य : सपुरोहित : समुहृत् ॥ तदनु पुरोधा नृपतेरक्षां बध्नीत मन्त्रेण । येन बद्धो बली राजा दानवेन्द्रो महाबल : । तेन त्वां प्रतिबध्नामि रक्षे मा चल मा चल ॥ यदाबध्नं दाक्षायणा इत्यादि वैदिकोऽप्यत्र मन्त्र : पठनीय : ॥ ब्राह्मणै : क्षत्रियैर्वैश्यै : शूद्रैश्चान्यैश्च मानवै : । कर्त्तव्यो रक्षणाचारो विप्रान् सम्पूज्य शक्तित : । अनेन विधिना यस्तु रक्षिकाबन्धमाचरेत् । स सर्वदोषरहित : सुखं सम्वत्सरं वसेत् । इति ॥

रक्षापत्र : । पुं० भूर्जवृक्षे ॥ न० भूर्जत्वचि ॥

रक्षिका । स्त्री० रक्षायाम् । रखडी० इ० भा० ॥

रक्षित : । त्रि० त्राते । गोपायिते । गुप्ते ॥ रक्ष्यतेस्म । रक्ष० । क्त० ॥

रक्षिता । त्रि० रक्षाकर्त्तरि । रक्षके ॥ यथा । आयव्ययज्ञो लोकज्ञो देशोत्पत्तिविशारद : । कृताकृतज्ञो भृत्यानां ज्ञेय : स्यादेष रक्षिता ॥

रक्षी । त्रि० रक्षके ॥ अवश्यं रक्षति । रक्ष० । णिनि : ॥

रक्षिवर्ग : । पुं० अनीकस्थे । राजरक्षकगणे ॥ अवश्यं रक्षन्ति । रक्ष पालने । आवश्यके तिणिनि : । रक्षिणां वर्ग : ॥

रक्षोघ्न : । पुं० सिद्धार्थे । सितसर्षपे ॥ भल्लातकवृक्षे ॥ न० काञ्जिके ॥ हिङ्गुनि ॥

रक्षोघ्नधूप : । पुं० गुग्गुल्वगुरुसर्जरसवचागौरसर्षपचूर्णलवणनिम्बपत्रव्यामिश्रघृतसंयुक्ते ॥

रक्षोघ्नी । स्त्री० वचायाम् ॥ दुर्गायाम् ॥

रक्षोजननी । स्त्री० रात्र्याम् ॥ राक्षसमातरि ॥

रक्षोहा । त्रि० रक्षसां हन्तरि ॥ पुं०

गुग्गुलौ ।

रघ्नग : । पुं० कार्ये ॥ रघ० । यज यार्थे तिनङ् ॥

रघु : । पुं० सूर्यवंशीयदिलीपराजपुत्रे । श्रीरामचन्द्रस्यप्रपितामहे । लङ्घते । लघिगतौ । लघिवंह्योर्नलोपश्चेतिकुर्नलोपश्च । बालमूललघ्वसुरीणांवालोरत्वमापद्यते० इतिरत्वम् ॥ रङ्क्तेनाशं गच्छतीतिव्युत्पत्त्या० व्यष्टिसमष्टिरूपेऽन्नमयकोषे ॥

रघुकार : । पुं० कालिदासकवौ ॥ रघुंकाव्यविशेषंकरोति । डुकृञ्० । कर्मण्यण् ॥

रघुनन्दन : ।
रघुनाथ : ।  } रामचन्द्रे ॥

रघुपति : । पुं० श्रीरामे ॥ यथा । यदुक्तं : क्वगतामधुरापुरीरघुपते : क्वगतोत्तरकोशला । इतिविचिन्त्य कुरुष्वमन: स्थिरंनसदिदंजगदित्यवधारयेतिरूपगोस्वामी ।

रघुवंश : । पुं० रघो : सन्तती ॥ रघोर्वंश : ॥ कालिदासकृते काव्यविशेषे ॥

रघुवंशवितु : ।
रघुवंशतिलक: । पुं० } श्रीरामे ॥
रघुवर : ।

रघूद्वह : । पुं० श्रीरामे ॥ उद्वहति । वह० । पचाद्यच् । रघूनामुद्वहोनायक : ॥

रङ्क : । त्रि० कृपणे ॥ मंदे ॥ रमते । रमेर्बाहुलकात्क : ॥

रङ्कु : । पुं० शबलपृष्ठे । मृगविशेषे । रमते० रज्यतेवा । मृगय्वादित्वात्साधु : ॥ जनपदविशेषे ॥

रङ्ग : । पुं० रागे ॥ नृत्ये ॥ नृत्यस्थाने ॥ रणक्षितौ ॥ टङ्कणे ॥ खादिरसारे । पुं० न० त्रपुणि । त्रापुषे । वङ्गे । कुरूप्ये । पिच्चटे । पूतिगन्धे । रांग० इ० भा० ॥ तद्विशेषो यथा । श्वेतंमृदुलघुस्वच्छंस्निग्धमुष्णासहंहिमम् । सूत्रपत्रकरंकान्तं च पुष्पंचमुदाहृतम् ॥ खुरकंमिश्रकञ्चापिद्विविधंरङ्गमुच्यते । उत्तमंखुरकंतत्र मिश्रकंत्वहितंमतम् ॥ तस्याशुद्धस्य दोषोयथा । रङ्गोविधत्ते खलुशुद्धिहीनस्तथाह्यपक्वश्चकिलासगुल्मौ । कुष्ठानिशूलं किलवातशोथं पाण्डुप्रमेहस्त्वभगन्दरञ्च ॥ विषोपमं रक्तविकाररवृन्दं घयद्यक्ष्मापित्तफज्वरञ्च । मेहाश्मरीविद्रधिरुग्व्यरोगान्नाशोपिदूर्यात् कथितान्विकारान् ॥ तस्यशोधनंयथा । वङ्गनागौप्रतप्तौचगालितौतौनिषेचयेत् । त्रिधात्रिधाविशुद्धि : स्याद्रविदुग्धे पिच त्रिधा ॥ तैलतक्रकाञ्जिकगोमूत्रकुलत्थक्वाथे दुग्धे चंत्रिधात्रिधा । ततोऽर्कदुग्धेत्रिधा ॥ अथमारणविधि : । मृत्पात्रे द्राविते रङ्गे

चिञ्चाश्वत्थत्वचोरज : । क्षिप्त्वाव
ङ्ग चतुर्थांशमयोदर्व्याप्रचालयेत् ॥
चिञ्चाश्वमिली । रज : चूर्णम् । अ-
योदर्वीलौहदर्वी० करच्छुली ॥ ततो
द्वियाममात्रेणवङ्गभस्मप्रजायते । अ-
थभस्मसमंतालं क्षिप्त्वाम्लेनविमर्द
येत् ॥ ततोगजपुटेपक्त्वापुनरम्लेन
मर्दयेत् । तालेनदशमांशेनयाममे
कंततः पुटेत् ॥ एवंदशपुटैःपक्वं
वङ्गंभवतिमारितम् ॥ अस्यगुणायथा
। वङ्गं लघुसरंरूक्षंकुष्ठमेहकफक्रमी
न् । निहन्तिपाण्डुंसश्वासंचक्षुष्यं पि
त्तलंमनाक ॥ सिंहोगजौघन्तुयथा
निहन्तितथैवरङ्गोऽखिलमेहवर्गम् ।
देहस्यसौख्यंप्रबलेन्द्रियत्वंनरस्यपु,
ष्टिंविदधातिनूनम् ॥ रङ्गति । रगि
गतौ । पचाद्यच् ॥ रज्यत्यस्मिन्०
रज्यतेऽनेनवा । रञ्जरागे । अकर्त्त
रिचेतिघञ् । कुत्वम् ॥

रङ्गकार : । त्रि० वस्त्रादीनांरङ्गकर्त्तरि । रंगरेज०इ०भा० ॥

रङ्गकाष्ठम् । न० पतङ्गे ॥

रङ्गजम् । न० सिन्दूरे ॥

रङ्गजीवक : । पुं० चित्रकरे ॥

रङ्गद : । पुं० टङ्कणे ॥ खादिरसारे ॥

रङ्गदा । स्त्री० स्फटिकायाम् ॥

रङ्गदायकम् । न० कङ्कुष्ठे ॥

रङ्गदृढा । स्त्री० स्फटिकायाम् ॥

रङ्गपत्री । स्त्री० )

रङ्गपुष्पी । स्त्री० ) नीलीवृक्षे ॥

रङ्गभूति : । स्त्री० कोजागरपूर्णिमायाम् ॥

रङ्गभूमि : । स्त्री० मल्लभूमौ ॥ नाट्यभूमौ ॥

रङ्गमल्ली । स्त्री० वीणायां ॥

रङ्गमाणिक्यम् । न० माणिक्यरत्ने ॥

रङ्गमाता । स्त्री० कुट्टन्याम् ॥ जतुनि । लाक्षायाम् ॥ चुक्याम् ॥

रङ्गमातृका । स्त्री० लाक्षायाम् ॥

रङ्गलासिनी । स्त्री० शेफालिकायाम् ॥

रङ्गवीजम् । न० रूप्ये ॥

रङ्गशाला । स्त्री० नाट्यगृहे । नाचघर० इतिभाषाप्र० ॥

रङ्गसंदृशम् । न० यसदे । जस्त० इ० भा० ॥

रङ्गाङ्गा । स्त्री० स्फटिकायाम् ॥

रङ्गाजीव : । पुं० चित्रकारे ॥ रङ्गेणजीवति । जीव० । इगुपधेतिक: ॥ रङ्ग: आजीवोऽस्यतिवा ॥

रङ्गारि : । पुं० करवीरे ॥

रङ्गावतारक : । पुं० रङ्गावतारिणि । शैलूषे । भरते: नटे ॥ नृत्यगीतस्थःमेगीतवाद्यादिनातदनुगुणतयाप्रसङ्गिनि ॥ इ० प्रायश्चित्तविवेक : । नटगायनव्यतिरिक्तेरङ्गावतरणजीविनिद्रुतकञ्चुक-

भट्ट : ॥
रङ्गावतारी । पुं० नटे ॥
रङ्गिणी । स्त्री० कैवर्त्तिकायाम् ॥ शतमूल्यां ॥
रङ्गोपजीवी । पुं० नटमल्लादिहस्ते ॥ रङ्गोपजीविप्रभृतीनामन्नादानां नरकप्राप्तिरुक्ता विष्णुपुराणे २ अंशे ॥ यथा । रङ्गोपजीवी कैवर्त्तः कुण्डाशी गरदस्तथा । सूचीमाहिषिकश्चैवपर्वकारोचयोद्विजः ॥ आगारदाहीमित्रघ्नः शाकुनिर्ग्रामयाजकः । रुधिरान्धेपतन्त्येतेसोमंविक्रीणतेचये इति ॥
रङ्घ : न० रंहसि ॥ इतिभरतद्विरूपकोष : ॥
रचनम् । न० ग्रन्थने । निर्माणे ॥
रचना । स्त्री० कुसुमप्रकारादेः पत्रावल्यादेश्चरचने । परिस्पन्दे ॥ रचप्रतियत्ने । चुरादिरदन्तः । ण्यासश्रन्थोयुच् । रच्यते० इतिवा ॥ यथाक्रमेणस्थापने । निवेशे । स्थितौ ॥ निर्मितौ ॥ यथा । असाधारणचमत्कारकारिणीरचनाहि निर्मितिः तत्पर्यायाः सन्दर्भः । गुम्फः । सन्थनम् ॥ ग्रन्थनम् ॥
रचितः । त्रि० कल्पिते । कृते ॥ स्थापिते ॥ रच० । कर्मणिक्तः ॥
रजः । पुं० रेणौ । धूलौ ॥ परागे ॥ आर्त्तवे ॥ गुणान्तरे । रञ्जयति । रञ्जरागे । घञर्थकप्रत्ययः ॥ न० स्त्रीकुसुमे ॥
रजःशयः । पुं० शुनि । रजसिशेते । शीङ्० । अधिकरणेशेतेरित्यच् ॥
रजःसारथिः । पुं० वायौ ॥
रजकः । पुं० निर्णेजके । वस्त्रधावके ॥ अयश्चतीवरपत्न्यांधीवराज्जातः सङ्करजातिः वासांसिफलके : शुचोनिर्णिज्याद्रजकः शनैः । अतोन्यथाहिकुर्वीतदण्ड्यः स्यादुक्तमाषकान् ॥ रज्यति । रञ्ज० । नृतिखनिरञ्जिभ्यइति० ष्वुन् । असि० अके० अनेचरञ्जेर्नलोपः । विल्वान्नूञोपि० रजकी । भाष्यमते० क्वुन् । टाप् रजिका ॥ शुके ॥ रजकोधातकशुकाविति हैमः ॥
रजतम् । न० दुर्वर्णे । रूप्ये ॥ अस्योत्पत्तिर्यथा । त्रिपुरस्यवधार्थायनिर्निमेषैर्विलोचनैः । निरीक्षयामासशिवः क्रोधेनपरिपूरितः ॥ ततस्तूल्कासमपतत्तस्य कस्माद्विलोचनात् । ततोरुद्रःसमभवद्वैश्वानरमिवज्वलन् ॥ द्वितीयादपतन्नेत्रादश्रुबिन्दुस्तुवामकात् ॥ तस्माद्रजतमुत्पन्नमुक्तकर्मसुयोजयेत् । किञ्चिमञ्चभवेत्तद्धिरङ्गादिरसयोगतः । पश्चास्तगुणान्रूप्ये ॥ हारे दन्तिदन्तयोः ॥ शोणिते ॥ हृदे

शैले ॥ स्वर्णे । रजतिरज्यतेऽने नवा । रञ्ज० । पृषिरञ्जिभ्यांकिदिस्यतच् ॥ त्रि० शुक्ले ॥

रजतद्युति : । पुं० हनुमति ॥

रजतप्रस्थ : । पुं० कैलासाचले ॥

रजताचल : । पुं० रौप्यपर्वते ॥

रजताद्रि : । पुं० कैलासपर्वते ॥

रजनम् । न० स्वर्णे । सुवर्णे ॥ कुसुमादिरागे ॥ रज्यतेनेन । रञ्ज : क्युन् ।

रजनि : । स्त्री० निशि । रात्रौ ॥ रजन्ति० अनुरक्ताभवन्ति० रागिणोस्याम् बाहुलकाद्रञ्जेरनिनलोपश्च ।

रजनिकर : । पुं० चंद्रे ॥

रजनी । स्त्री० नीलिन्याम् ॥ रात्रौ ॥ हरिद्रायाम् ॥ जतुकायाम् । लाक्षायाम् रंजन्त्यनुरक्ताभवन्त्यस्यां रागिण : । रञ्ज० । छिपे : कित्त्वेतिचकारादनि : । कित्त्वान्नलोप : । बाहुलकाद्वा० रजनि : । गौरादित्वान् ङीष् ॥

रजनीकर : । पुं० हिमांशौ ॥

रजनीगन्धा । स्त्री० पुष्पविशेषे ॥

रजनीचर : । पुं० राक्षसे । रात्रिचरे ॥ रजन्यांचरति । चरेष्ट : ॥ चौरे ॥ यामिकभटे ॥

रजनीजलम् न० नीहारे । ओस० इ०भा० । रजन्याजलम् ॥

रजनीपुष्प : । पुं० पूतिकरञ्जे ॥

रजनीमुखम् । न० प्रदोषे ॥ रजन्यामुखमिव ॥

रजनीहासा । स्त्री० शेफालिकापुष्पे हारशृङ्गार०पारिजात० इ० लोक प्रसिद्धे ॥ रजन्यांहासोयस्या : ॥

रज : । न० गुणान्तरे । प्रकृतिगुणविशेषे । रागद्वेषात्मकेदु : खहेतौ ॥ रजोरागात्मकंविद्धितृष्णासङ्गसमुद्भवम् । तन्निबध्नातिकौन्तेयकर्मसङ्गेनदेहिनम् । आर्त्तवे । स्त्रीपुष्पे ॥ परागे । सुमनोरजसि ॥ रेणुमात्रे । धूलिमात्रे ॥ निषिद्धाऽनिषिद्धरजोयथा । आयुष्कामोनसेवेततथासम्मार्जनीरज : । तथाश्वरथधान्यानांगवाञ्चैवरज : शुभम् ॥ अशुभञ्चविजानीयात्खरोष्ट्राजाविकेषुच । गवांरजोधान्यरज : पुत्रस्याङ्गभवंरज : ॥ एतद्रजो महाशस्तं महापातकनाशनम् ॥ अजारज : खररजस्तथासम्मार्जनीरज : । स्त्रिय : पादरजोराजन्शक्रादपिहरेच्छ्रियम् इ०ल०चं० ॥ रञ्जयति० रजनम्० रज्यतेऽनेनवा । रञ्जरागे । भूरंजिभ्यांकिदित्यसुन् । नलोप : ॥ असृजि ॥ दिवसे ॥ अहरहनीरजसीउच्येते० इतिनिरुक्तोक्ते : ॥ स्त्रियोनीरजौहीनंश

रोनामविवर्जितम् । मुद्राहीनंहस्त
दत्तंपत्रंसिद्धिकरंनहीतिलच्यम् ॥
रजसानु : । पुं० मेघे ॥ चित्ते ॥
रजस्वल : । पुं० महिषे । सैरिभे ॥ त्रि०
सरजस्के ॥ रजोऽस्यस्य । रज :
क्षषीतिवलच् ॥
रजस्वला । स्त्री० स्त्रीधर्मिण्याम् । अ
व्याम् । आत्रेय्याम् । पुष्पवत्यां-
स्त्रियाम् । उदक्यायाम् । द्वादशा
द्वत्सरादूर्ध्वमापञ्चाशत्समा : स्त्रि
य : । मासिमासिभगद्वाराप्रकृत्यै
वार्त्तवंस्रवेत् ॥ तत्र । प्रथमेऽहनि
चण्डालीद्वितीयेब्रह्मघातिनी । तृ-
तीयेरजकोप्रोक्तासावथावर्ष्यातथाङ्ग-
ना ॥ शुद्धाभर्त्तुश्चतुर्थेन्हिस्नाशुद्धादै
वपैत्रयो : । दैवेकर्मणिपैत्रेचप-
ञ्चमेहनिशुद्ध्यति ॥ रजोस्त्यस्या : ।
रज : कृष्यासुतिपरिषदोवलच् ।
तसोमत्वर्थइतिभत्वम् ॥ सिंहक-
र्कटस्थेर्कनद्याम् ॥ यथा । सिंहक-
र्कटयोर्मध्येसर्वानद्योरजस्वला : ।
तासुस्नानंनकुर्वीतवर्जयित्वासमु-
द्रगा : ॥ उपाकर्मणिचोत्सर्गेप्रेत-
स्नानेतथैवच । चन्द्रसूर्योपरागेचर
जोदोषोनविद्यते ॥ दशवर्षाधिका
यांनार्याम् ॥
रजि : । पुं० चन्द्रवंशीयराजविशे-
षे
रञ्जः । पत्रि० आकृष्टे ॥ रञ्जेण्यं-
: । वार्त्त-

न्तात्कर्मणिक्त : । रञ्जेर्णौमृगरम-
णइत्यपधानकारलोप : ॥
रजोगुण : । पुं० अप्रीत्यात्मकेप्रकृते-
र्गुणे ॥ अप्रीतिरात्मभावोयस्य । उ
पष्टम्भकंचलञ्चरज : । सत्त्वतमसी
स्वयमक्रियत्वात्स्वकार्यप्रवृत्तिंप्रत्य
वसीदन्तीरजसोपष्टभ्येते० उत्साहंप्र
यत्नंकार्येते । तदिदमुक्तमुपष्टम्भकं
रजइति । कस्मादित्यतउक्तं० चलमि
ति । तदनेन० रजस : प्रवृत्त्यर्थत्वं
दर्शितम् । यद : स्वहेतुस्तद : स्वा
त्मकंरज: ॥ रज:कार्येहास्यहर्षादौ ॥
रजोनिमीलित : । त्रि० रजोगुणाहृ
त्ते ॥ अपथेपदमर्पयन्तिहिश्रुतव-
न्तोपिरजोनिमीलिता : ॥
रजोबलम् । )
रजोरसम् । ) न० अन्धकारे ॥
रजोविशाल : । पुं० भूर्लोके ॥ मध्ये
रजोविशाल : सत्त्वधर्माधर्मानुष्ठा-
नपरत्वात् ० द : स्वबहुलत्वाच्च० रजो
विशालइतिसाङ्ख्याचार्या : ॥
रजोहर : पुं० रजके ॥
रज्जु : । स्त्री० वेण्याम् । बन्धनसाध
नवस्तुनि । शुल्वे । वराटके । गुणे
। डोरी० रस्सी० इ० भा० । सृज्यते ।
सृजविसर्गे । सृजेरसुमच । चात्
सलोपउप्रत्ययश्च । सस्य स्त्वेनश : ०
जश्त्वेनज: ॥ मध्यगुरौ० ।ऽ। ० ॥
रज्यमान : त्रि० लोहितायमाने ॥

रञ्जे दैंवादिकात्कर्त्तरिशानच् । अनिदितामितिनलोप : ॥

रञ्जक : । पुं॰ कुसुम्भादिना वस्त्रादिरागकर्त्तरि ॥ कम्पिल्लके ॥ प्रीतिजनके ॥ न॰ हिङ्गुलि ॥

रञ्जन : । पुं॰ रागजनके ॥ मुञ्जतृणे ॥ न॰ रक्तचन्दने ॥ हिङ्गुलि ॥ पतङ्गे । वक्कम् ॰ इ॰ भा॰ ॥ वर्णान्तरापादने ॥ रञ्जयति । रञ्ज रागे । ण्यन्त : । युच् ॰ ल्युड्वा ॥

रञ्जनक : । पुं॰ कट्फले ॥

रञ्जनी । स्त्री॰ गुण्डारोचनिकायाम् ॥ नील्याम् ॥ मञ्जिष्ठायाम् ॥ शेफालिकायाम् ॥ हरिद्रायाम् ॥ पर्प्याम् । रञ्जयति । रञ्ज॰ । ल्युट् । णिलोपस्यस्थानिवद्भावादशनयोश्चेतिवानलोपोन ॥ रज्यतेऽनयेतिविग्रहेतु॰ करणे तिल्युटि भवत्येव । रञ्जे : क्युन्नितिवा ॥

रञ्जनीयं : । त्रि॰ रागोत्पादनयोग्ये ॥

रटित : । त्रि॰ कथिते ॥ रटे : कर्मणिक्त : ॥ न॰ कथनमात्रे ॥

रण : । पु॰ क्वाणे । वीणादिवादने ॥ क्वणे । पुं॰ न॰ युधि । समरे । युद्धे ॥ रणनम् ॰ रणन्ति॰ शब्दायन्तेऽस्मिन्निति वा । रणशब्दे । वाशिरणोरित्यप् ॥ रणति । रण : पचाद्यच्वा ॥

रणत् । पुं॰ ध्वनति ॥

रणतूर्य्यम् । न॰ सङ्ग्रामपटहे । अभयडिण्डिमे । युद्धवाद्ये ॥

रणप्रिय : । पुं॰ श्येनविहगे ॥ न॰ उशीरे । वीरणमूले ॥

रणमत्त : । पुं॰ हस्तिनि । द्विपे ॥

रणमुष्टि : । पुं॰ विषमुष्टिक्षुपे ॥

रणरङ्ग : । पुं॰ रणकातरहस्तिनि । प्रतिमे ॥

रणरण : । पुं॰ मशके ॥ न॰ उद्दीपने

रणरणक : । पुं॰ उत्कण्ठायाम् ॥ कामे ॥

रणसङ्कुलम् न॰ तुमुले । व्याकुले रणे ॥ रणस्यसङ्कुलम् ॥

रणसमुद्यम : । पुं॰ युद्धोद्योगे ॥

रणाङ्गनम् । न॰ युद्धस्थले ॥

रणालङ्कार : । पुं॰ कङ्कपक्षिणि ॥

रण्ड : । त्रि॰ अहं चर्मावच्छिन्नावयवे ॥ धूर्त्ते ॥

रण्डक : । पुं॰ अफलद्रुमे ॥

रण्डा । स्त्री॰ मूषिकपर्ण्याम् ॥ विधवायाम् ॥ रमन्तेऽत्र । रमक्रीडायाम् । अमन्ताड्ड : । टाप् ॥

रण्डाश्रमी । पुं॰ अष्टचत्वारिंशद्वत्सरोपरिभार्याविहीने ॥ यथा । चत्वारिंशद्वत्सराणांसाष्टानांचपरेयदि । स्त्रियावियुज्यतेकश्चित्सतुरण्डाश्रमीमत : ॥

रतम् । न॰ मैथुने । सुरते ॥ तद्द्विविधम् । यथाह वात्स्यायन : । बाह्यमाभ्यन्तरञ्चेतिद्विविधं रतम्

च्यते । तत्राद्यं चुम्बनालिङ्गनखद
न्तक्षतादिकम् । द्वितीयं सुरतं
साक्षान्नानाकारैर्विकल्पितमिति ॥
त्रि० गुह्ये ॥ अभिरते । अनुरक्ते
रमणम् । रम० । नपुंसके भावे क्तः
। अनुदात्तोपदेशेतिनलोप : ॥

रतकील : । पुं० कुक्कुरे ॥

रतकूजितम् । न० रतिकालकथाया
म् । मणिते ॥

रतगुरु : । पुं० भर्त्तरि हृदयेशे ॥

रतज्वर : । पुं० काके ॥

रतताली । पुं० विड्गे ॥

रतताली । स्त्री० कुट्टन्याम् ॥

रतनाराच : । पुं० नारीणांसीत्कारे
॥ स्मरे ॥ शुनि ॥ विड्गे ॥

रतनिधि : । पुं० खञ्जने ॥

रतराग : । पुं० सुरताभिलाषे ॥

रतर्द्धिकम् । न० दिवसे ॥ सुखस्ना-
ने ॥ अष्टमङ्गले ॥

रतव्रण : । )
रतशायी । ) पुं० कुक्कुरे । शुनि ॥

रतहिण्डक : । पुं० स्त्रीचौरे ॥ लम्प-
टे ॥

रतान्दुक : । पुं० कुक्कुरे ॥

रताम्बी । स्त्री० कुम्भकर्ण्यां ॥

रतामर्द : । पुं० कुक्कुरे ॥

रतायनी । स्त्री० वेश्यायाम् ॥

रतार्थिनी । स्त्री० मैथुनाभिलाषिण्या
म् ॥ कामुक्याम् ॥

रति : । स्त्री० स्मरदारेषु । कामदेव-
पत्न्याम् ॥ आषाढिस्थानस्था-
यांदेव्याम् ॥ सुरते ॥ गुह्ये ॥ रा-
गे ॥ अनुरागे ॥ यथा । भगवान्०
ब्रह्म०कात्स्न्येनत्रिरन्वीक्ष्यमनीष
या । तदध्यवस्यत्कूटस्थोरतिरात्म
न्यतोभवेदिति ॥ रम्यतेऽनया
रम० । क्तिन् । अनुदात्तोपदेशवन
तितनोत्यादीनामनुनासिकलोपो-
झलिक्ङितिइतिमलोप: ॥ चेत:
परितोषे ॥ इष्टार्थसंयोगजनितायां
क्रीडायाम् ॥ इच्छाविशेषे ॥ य-
था । यूनोरन्योन्यविषयस्थायिनी-
च्छारति : स्मृतेतिरसार्णवसुधा-
कर : ॥

रतिकुहरम् । न० भगे । योनौ ॥

रतिकूजितम् । न० मणिते । मैथुनश
ब्दे ॥ रते : कूजितम् ॥

रतिक्रिया । स्त्री० संवेशने । मैथुने ॥

रतिगृहम् । न० योनौ ॥ रमणम-
न्दिरे ॥

रतिचक्रम् । न० कामिन्यामङ्क्रीड-
ने ॥ यथा । शास्त्रस्य विषयस्तावद्या
वन्मन्दरसोनर : । रतिचक्रेप्रवृत्ते
तुनशास्त्रंनापिचक्रम : ॥

रतिनाग : । पुं० षोडशबन्धान्तर्गतप
ञ्चदशबन्धे ॥ तल्लक्षणं यथा ॥ पीड
येदूरुयुग्मेनकामुकंकामिनीयदि ।
रतिनाग : समाख्यात : कामिनी

नामनोरम : ॥

रतिपति : । पुं॰ कामदेवे ॥ रते : पति : ॥ देशविशेषस्थस्त्रीणांस्वा-भविशेषितस्याविर्भावोयथा । वाचि श्रीमायुरीणांजनकजनगदस्यायिनी नांकटाचे ॰दन्तेगौडाङ्गनानां॰मु ललितजघनेचोत्कलप्रेयसीनाम् । तैलङ्गीनांनितम्बे॰सजलघनरुचौके रलीकेशपाशे॰कार्णाटीनांकटीच-स्फुरतिरतिपतिर्गुर्ज्जरीणांस्तनेषु ॥

रतिपाशक: । पुं॰ रतिबन्धविशेषे ॥ यथा । पीडयेदूरुयुग्मेनकामुकोयदिसुन्द रीम् । रतिपाशस्तथाख्यात : का मिनीनांसुखावह : ॥

रतिप्रिय : । पुं॰ कामदेवे ॥ रति : प्रियायस्य । सुरतप्रिये ॥

रतिबन्ध : । पुं॰ पद्मासनादिषोडश सु ॥ तेयथा । पद्मासनोनागपाशो लतावेष्टोऽर्द्धसम्पुटम् । कुलिशंसु न्दरञ्चैवतथाकेशरएवच ॥ हिल्लो लोनरसिंहोपिविपरीतस्तथापर : । चुम्बोवैधेनुकश्चैवमुत्कंठस्तुतत: परम् । सिंहासनोरतिनागोवि द्याधरस्तुषोडश : ॥

रतिमदा । स्त्री॰ अप्सरसि । स्वर्वे श्यायाम् ॥

रतिमन्दिरम् । न॰ योनौ ॥ मैथुन गृहे ॥

रतिमित्र : । पुं॰ रतिबन्धविशेषे ॥ यथा । पातयेदूरुयुग्मेचकामुकंय दिकामुकी । रतिमित्रस्तथाख्यात: कामिनीनांसुखावह : ॥

रतिरमण : । पुं॰ कामदेवे ॥

रतिलक्षम् । न॰ निधुवने ॥

रतिलाभ : । पुं॰ सुरतसुखप्राप्तौ ॥ यथोक्तंरतिरहस्ये । स्रस्ततावपुषि मीलनंदृशोर्मूर्च्छनाचरतिलाभल क्षणम् । श्लेषयेत्स्वजघनंमुहुर्मुहु: सीत्करोतिगलगद्गदाकुलेति ॥

रतिसत्वरा । स्त्री॰ चिरञ्जीवायाम् । पिडिङ्गशाक॰इ॰गौ॰दे॰ भा॰ ॥

रतिसुन्दर : । पुं॰ रतिबन्धविशेषे ॥ यथा । नारीपदद्वयंकामीधारयेद्व् दयेयदि । धृतकंठोरमेत्कामीबन्ध: स्याद्रतिसुन्दर : ॥

रतु : । स्त्री॰ देवनद्याम् सत्यवाचि ॥ ऋदिरितिमौवाधातु: । तत : ऋ तेरम्चेतिकु : अमागमश्च ॥

रतोद्वह : । पुं॰ कोकिले ॥

रत्यङ्गम् । न॰ भगे । योनौ ॥ रते : सुरतस्यअङ्गम् ॥

रत्नम् । नं॰ स्वजातिश्रेष्ठे । जातौ जातौयदुत्कृष्टंतद्रत्नमभिधीयते ॥ मणौ ॥ धनार्थिनोजना : सर्वेरम न्तेस्मिन्नतीवयत् । ततोरत्नमिति प्रोक्तंशब्दशास्त्रविशारदै : ॥ तत्त् पाषाणभेदोस्मिमुक्तादिचतदुच्यते तानिनवधानिरूपितानियथा । व

ञ्च गारुत्मतं पुष्परागो माणिक्यमेव च । इन्द्रनीलश्च गोमेदस्तथा वैदूर्यमित्यपि ॥ मौक्तिकं विद्रुमश्चेति रत्नान्युक्तानि वै नव । रत्नानि भर्त्सितानि स्युर्मधुराणि सराणि च । चक्षुष्याणि च शीतानि विषघ्नानि धृतानि तु ॥ मङ्गल्यानि मनोज्ञानि ग्रहदोषहराणि च । माणिक्यं तरणेः सुजातममलं मुक्ताफलं शीतगोर्माहेयस्य तु विद्रुमो निगदितः सौम्यस्य गारुत्मतम् । देवेज्यस्य च पुष्परागमसुराचार्यस्य वज्रं शनेर्नीलं निर्मलमन्ययोर्निगदिते गोमेदवैदूर्यके ॥ रत्नानां शोधनमारणविधिर्वज्रशब्दे बोध्या । रमयति । रम क्रीडायाम् । रमतेऽस्मिन्वा । रमेस्तच्चेति नः । नेट् । माणिक्ये ॥ वज्रे ॥ सगणे ॥ ५० ॥

रत्नकन्दलः । पुं० प्रवाले ॥

रत्नकूटः । पुं० पर्वतविशेषे ॥

रत्नगर्भः । पुं० समुद्रे ॥ रत्नानि गर्भेऽस्य ॥ कुबेरे ॥

रत्नगर्भा । स्त्री० भूमौ ॥ रत्नानि गर्भेऽस्याः ॥ उपचाराद्गुणवत्पुत्रायाम् ॥

रत्नचषकः । पुं० न० स्फटिकादिमणिपात्रे ॥

रत्नद्वीपः । पुं० न० रत्नप्रचुरे द्वीपविशेषे ॥

रत्नधेनुः । स्त्री० महादानविशेषे ॥

रत्ननिधिः । पुं० खञ्जनपक्षिणि ॥

रत्नपञ्चकम् । न० सुवर्णादिपञ्चसु ॥ यथा । सुवर्णं रजतं मुक्ता लाजावर्त्तं प्रवालकम् । रत्नपञ्चकमाख्यातं मुनिभिः कर्मवेदिभिः ॥

रत्नपरीक्षा । स्त्री० मणिविचारे । तत्र मणीनां तावद्गुणप्रधानार्थमाह । रत्नेन शुभेन शुभं भवति नृपाणामनिष्टमशुभेन । यस्मादतः परीक्ष्यं दैवं रत्नाश्रितं तज्ज्ञैः ॥ द्विपहयवनितादीनां स्वगुणविशेषेण रत्नशब्दोऽस्ति । इह तूपलरत्नानामधिकारो वज्रपूर्वाणाम् ॥ रत्नानामुत्पत्तिप्रदर्शनार्थम्मतभेदमाचार्याणामाह । रत्नानि बलाद्दैत्याद्दधीचितोऽन्ये वदन्ति जातानि । केचिद्भुवः स्वभावाद्वैचित्र्यं प्राहुरुपलानाम् ॥ वज्रेन्द्रनीलमरकतकर्केतनपद्मरागरुधिराख्याः । वैदूर्यपुलकविमलकराजमणिस्फटिकशशिकान्ताः ॥ सौगन्धिकगोमेदकशङ्खमहानीलपुष्परागाख्याः । ब्रह्ममणिज्योतीरससस्यकमुक्ताप्रवालानि ॥ वेणातटे विशुद्धं शिरीषकुसुमोपमञ्च कौशलकम् । सौराष्ट्रकमाताम्रं कृष्णं शूर्पारकम्भूतम् ॥ ईषत्ताम्रं हिमवति मतङ्गजं वल्लपुष्पसङ्काशम् । आपीतं कालिङ्गं श्यामं पौण्ड्रेषु सम्भूतम् ॥ ऐन्द्रं षडश्रियुक्तं याम्यं सर्पास्यरूपमसितञ्च । कदलीकाण्डनिकाशं वैष्णवमिति सर्वसंस्थानम् ॥ वारुणमव-

लाक्षोपमं भवेत्कर्णिकारपुष्पनि-
भम् । शृङ्गाटकाम्बुस्थानं व्याघ्राक्षि
निभं स्वहीतभुजम् ॥ वायव्यस्य यवो
पममशोककुसुमप्रभं समुद्दिष्टम् ।
स्रोतः खनिप्रकीर्णकमित्याकरस
म्भवस्त्रिविधः ॥ १० ॥ रक्तं पीतं
शुभं राजन्यानां सितं द्विजातीनाम्
। शैरीषं वैश्यानां शूद्राणां शस्त्रतेऽ
सिनिभम् ॥ ११ ॥ वज्रमणेर्मू
ल्यपरिज्ञानार्थमाह । सितसर्ष
पाष्टकं तण्डुलो भवेत् तण्डुलैस्तु विं
शत्या । तुलितस्य द्वे लक्षे द्व्यूनं द्वि
द्व्यूनिते चैतत् ॥ पादत्र्यंशार्द्धोनं
त्रिभागपञ्चांशषोडशांशश्च । भाग
श्च पञ्चविंशतिकः स्यात्साहस्रिक
श्चैव ॥ १२ ॥ शुभवज्रलक्षणान्या
ह । सर्वद्रव्याभेद्यं लघ्वम्भसितरति
रश्मिवत्स्निग्धम् । तडिदनलश
क्रचापोपमञ्च वज्रं हितायोक्तम् ॥
अथाशुभलक्षणम् । काकपदमक्षि
काकेशं धातुयुक्ताश्रितं शार्करं विद्धम् ।
द्विगुणाश्रिदग्धकलुषत्रस्तविशीर्णा
नि न शुभानि ॥ यानि च बुद्बुददलि
ताग्रचिपिटवाशीफलप्रदीपानि ।
सर्वेषाञ्चैतेषां मूल्याद्भागोऽष्टमो हा
निः ॥ १६ ॥ वज्रं न किञ्चिदपि
धारयितव्यमेके पुत्रार्थिनीभिरबला
भिरहशं तितज्ज्ञाः । शृङ्गाटकत्रि
पुटधान्यकवत्स्थितं यच्छ्रोणीनिभ



स्वशुभदं तनयार्थिनीनाम् ॥ स्वज
नविभवजीवितक्षयं जनयति वज्रम
निष्टलक्षणम् । अशनिभयविषारि
नाशनं शुभमुपभोगकरञ्च भूभृताम्
॥ इति गारुडाध्यायः सप्तसप्ततितमः ॥

रत्नपारायणम् । न० सर्वरत्नस्थाने
॥ यथा । समुद्रोपत्यका हैमी पर्वता
धित्यका पुरी । रत्नपारायणं नाम्ना
लङ्केति मममैथिली ॥

रत्नप्रभा । स्त्री० जिनानां नरकविशे
षे ॥

रत्नभूः । स्त्री० मणिप्रधानभूमौ ॥

रत्नमुख्यम् । न० हीरके ।

रत्नमुट् । त्रि० मणिचौरे ॥ रत्नं
मुष्णाति । मुषस्तेये । क्विप् ॥

रत्नराट् । पुं० माणिक्ये ॥ रत्न
श्रेष्ठे ॥

रत्नवती । स्त्री० भूमौ ॥ रत्नानि
विद्यन्ते यस्याम् । मतुप् । उगि
त्वात् ङीप् ।

रत्नवर्षुकम् । न० पुष्पकरथे ॥ त्रि०
रत्नवर्षणशीले ॥

रत्नसानुः । पुं० सुरालये । सुमेरु
पर्वते ॥ रत्नानि सानौ शिखरे
ऽस्य ॥

रत्नसूः । स्त्री० भूमौ ॥

रत्नाकरः । पुं० जलनिधौ ॥ रत्ना
नां माणिक्यमुक्तादीनामाकरः ॥

रत्नाङ्गः । पुं० विष्णुरथे ॥ रत्नचि

म्ने ॥
रत्नाचल: । पुं॰ दानार्थमणिमय पर्वते ॥
रत्नाभरणम् । न॰ मणिमयालङ्करणे । जडाजगहना॰ इ॰भा॰ ॥ तस्य धारणगुणा: । धन्यं यशस्यमायुष्यं श्रीमद्व्यसनसूदनम् । हर्षणंकाम्यमोजस्यं रत्नाभरणधारणम् ॥
रत्नि: । पुं॰ बद्धमुष्टिकरे ॥ ऋच्छति॰ पर्यन्तेऽनेनवा । ऋगतौ । ऋतन्यञ्जीत्यर्त्तेः कत्निच् । य ण् ॥
रथ: । पुं॰ शताङ्गे । स्यंदने ॥ पादे । चरणे ॥ वेतसे ॥ देहे । शरीरे ॥ रथवच्छयस्थानीयैरिन्द्रियैराक्रम्यमाणत्वाच्छरीरस्य ॥ रम्यतेऽ॰रमन्तेऽ नेनवा । रम॰ । हनिकुषीतिक्थन् । अनुनासिकलोप: ॥ एकोनसप्तयोहरि ॥ सगणे॰ ॥ ऽ॰ ॥ पौरुषे ॥
रथकट्या । स्त्री॰ रथवृन्दे ॥ रथानांसमूह: । इनित्रकट्यचश्चेतिकट्यच् ॥
रथकार: । पुं॰ रथकारे ॥ रथस्यकार: ॥
रथकार: । पुं॰ तक्षणि , वर्द्धकौ । रथनिर्माणकर्त्तरि । माहिष्यात् करण्यामुत्पन्ने जातिविशेषे । रढ ई॰ तखाण॰ इतिभाषाप्रसिद्धे ॥ माहिष्येणकरण्यान्तुरथकार: प्रजायते॰ इ॰ याज्ञवल्क्य: ॥ रथं करोति । डुकृञ्॰ । कर्मण्यण् ॥
रथकुटुंबी । पुं॰ सारथौ ॥ रथंकुटुम्बयितुंशीलमस्य । कुटुम्बधारणे । सुप्यजातौणिनि: ॥ यद्वा , रथएवकुटुम्बम् । रथकुटुम्बमस्यास्ति । इनि: ॥
रथगर्भक: । पुं॰ स्कन्धवाह्ययाने । नररथे । कर्णीरथे । प्रवहणे । डयने ॥
रथगुप्ति: । स्त्री॰ वरूथे । परप्रहरणाभिघातरक्षार्थं रथस्यसन्नाहवदावरणे ॥ रथस्यगुप्तिरावरणम् ॥
रथगोपनम् । न॰ रथगुप्तौ ॥
रथचरण: । पुं॰ कोकपक्षिणि । चक्रवाके ॥ रथचक्रे । पैय्या॰इ॰भाषा ॥
रथद्रु: । पुं॰ तिनिशवृक्षे ॥ रथस्यद्रु: । तत्रोपयुक्तत्वात् ॥
रथद्वितीया । स्त्री॰ आषाढशुक्लद्वितीयायाम् ॥ यथा । आषाढस्यसितेपक्षेद्वितीयापुष्यसंयुता । तस्यांरथेसमारोप्यरामंमांभद्रयासह ॥ यात्रोत्सवंप्रकृत्याथप्रीणयेच्चद्विजान्बहून् । ऋक्षाभावेतिथौकार्यासदासाप्रीतयेममेतिस्कन्दपुराणम् । साथाचमांजगन्नाथम् ॥
रथन्तरम् । न॰ सामविशेषे ॥ रथेनतरति । तृन्नवमसक्तरथयो: ।

संज्ञायांभृतवृजीतिखच् । व्युत्पत्ति मात्रं नस्ववयवार्थानुगम : ॥
रथपर्य्याय : । पुं॰ वेतसवृक्षे ॥ रथ : पर्यायोऽस्य ॥
रथपाद : । पुं॰ चक्रे ॥
रथव्रज: । पुं॰ रथकच्यायाम् ॥ रथानांव्रज : ॥
रथपुष्प । स्त्री॰ नदीविशेषे ॥ रथंपिबति । पा॰ । क : । पारस्करादित्वात्सुट्षत्वेनिपातसिद्धे ॥
रथसाधक : । पुं॰ तिनिशे ॥ रथस्यसाधक : ॥
रथाङ्ग : । पुं॰ कोकपक्षिणि ॥ अपस्करे । चक्रभिन्नरथारम्भके ॥ न॰- चक्रे ॥ रथस्याङ्गम् ॥
रथाङ्गपाणि : । पुं॰ विष्णौ ॥ रथाङ्गं पाणौयस्यस : । प्रहरणार्थेभ्य: परे निष्ठासप्तम्यौभवत : ॥
रथाङ्गाह्वय : । पुं॰ चक्रवाके ॥ रथाङ्गस्याह्वयोनामयस्य ॥
रथाङ्गी । पुं॰ श्रीहरौ ॥ रथाङ्गंचक्रमस्यास्ति । इनि : ॥
रथाङ्गी । स्त्री॰ ऋद्धिनामौषधौ ॥
रथान्तर : । पुं॰ कल्पभेदे ॥
रथाभ्र : । पुं॰ वेतसवृक्षे ॥
रथारोही । पुं॰ रथस्थयुद्धकर्त्तरि । रथिनि ॥
रथावर्त्त : । पुं॰ धूमावतीदक्षिणार्द्धे तीर्थविशेषे ॥

रथिक : । त्रि॰ रथिनि । रथस्वामिनि । रथोऽस्यास्ति । अतइनिठनाविति ठन् ॥ रथेनचरतिवा पर्पादिभ्यष्ठन् ॥ षिद्गौरादिभ्यश्चेतिङीषि॰ रथिकी ॥
रथिका । स्त्री॰ क्षुद्ररथे । स्वार्थकन् ॥
रथी । पुं॰ स्यन्दनारोहे । रथारोहिणि । रथस्वामिनि । रथिके ॥ रथोऽस्यास्ति । इनि : ॥
रथिन : । पुं॰ रथिनि । रथस्यइन : । शकन्ध्वादि : ॥
रथिनी । स्त्री॰ रथकच्यायाम् ॥ रथानांसमूह : । खलादिभ्यइनिरिति वक्तव्य : ॥
रथिर : । पुं॰ रथिके रथोस्यास्ति । मेधारथाभ्यामिरन्निरचौवक्तव्याविती रच् ॥
रथ्री । स्त्री॰ शकट्याम् । मजर्झोङी ० इ॰ भा॰ । वह्वादिभ्यश्चेति ङीष् ।
रथोद्धता । स्त्री॰ त्रिष्टुप् ११ प्रभेदे ॥ रात्परैर्नरलगैरथोद्धता । यथा । राधिकादधिविलोडनस्थिताकृष्णवेणुनिनदैरथोद्धता । यामुनंतटनिकुञ्जमञ्जसासाजगामसलिलाहृतिच्छलात् ॥ रथउद्धता ॥
रथ्य : । पुं॰ रथवाहकाश्वे । रथवोढरि ॥ रथंवहति । तद्वहतिरथयुगप्रासङ्गमितियत् ॥ रथांसे । चक्रे

॥ रथस्याङ्गम् । रथाद्यत् ॥

रथ्या । स्त्री० रथौघे । रथानांसमूह : । खलगोरथादितियत् ॥ प्रतोल्याम् । विशिखायाम् । राजमार्गेतरमार्गे । जनसञ्चारिणिमार्गे । वर्त्तन्याम् । पथि ॥ चत्वरे ॥ रथाय हिता । यत्प्रकरणे : रथाच्चे तियत् ॥ रथंवहतिवा । तद्वहतीतियत् ॥

रद : । पुं० विलेखने ॥ दंते ॥ पुरुषदन्तलक्षणंयथा । विवर्णैर्धनहीना स्युर्दन्ता : स्निग्धघना : शुभा : । तीक्ष्णादंष्ट्रा : समा : श्रेष्ठाजिह्वारक्तासमाशुभा ॥ अपिच । कुन्दकुड्मलसङ्काशै : प्रकारैर्दशनैर्नृप: । स्वचवानरदन्ता: स्युर्नित्यंचुपरिपीडिता : । हस्तिदन्ता : खररदा : स्निग्धदन्तागुणान्विता : । करालैर्विषमैर्दीर्घैर्दशनैर्दु : खजीविन : ॥ द्वात्रिंशद्दन्ताराजानएकोनोत्तमभोगवान् । त्रिंशद्दन्तानरायेतेसुखदु : खस्यभागिन : ॥ एकोनत्रिंशद्दशना : पुरुषादु : खजीविन : । अष्टाविंशद्रदायेषांतेतिदु: खस्यभाजना : ॥ स्त्रीदन्तलक्षणंयथा । कुन्दपुष्पसमादन्ताभाषितंकोकिलासमम् । दाक्षिण्ययुक्तमशठं हंसशब्दसुखावहम् ॥ नासासमासमपुटाक्षोणात्युदचिराशुभा । करालविषमादन्ता : क्लेशायचभयायच ॥ चौर्यपक्ष्मष्टमांसाश्चदीर्घाभर्तुश्चमृत्यवे । इति ॥ दन्तस्थलमनशुचित्वं यथा । दन्तवद्दन्तलग्नेषुजिह्वास्पर्शेशुचिर्भवेत् ॥ अपिच । दन्तलग्नसमंहार्यैलेपंमन्येतदन्तवत् । नतत्तच्छ्रु : कुर्याद्यत्नमुद्धरणेपुन : ॥ भवेदशौचमत्यर्थंतृणवेधाद्द्रणेकृते ॥ रदति । रदविलेखने । पचाद्यच् ॥

रदच्छद : । पुं० ओष्ठे ॥

रदन : । पुं० रदे । दन्ते ॥ रद्यतेनेन । रद० । करणेतिल्युट् ॥ न० उत्खनने ॥

रदनच्छद : । पुं० ओष्ठे ॥ अधरे ॥ रदनाश्छाद्यन्तेऽनेन । छदसंवरणे० चुरादि : । पुंसीतिघ : । छादेर्घेद्व्युपसर्गस्य इतिह्रस्व : ॥ अस्यशुभाशुभलक्षणंयथा । मांसलैश्चघनोपेताश्चवक्रैरधरैर्नृपा: । बिम्बोपमैश्चस्फुटितैरोष्ठैरुक्षैश्चखण्डितै: । विवर्णैर्धनहीना स्युर्दन्ता : स्निग्धाघना : शुभा : ॥

रदनी । ) पुं० हस्तिनि ॥
रदी । )

रन्तव्य : । त्रि० रन्तुंयोग्ये ॥ रम० । तव्य : ॥

रन्तिदेव : । पुं० साङ्कृतिपुत्रेभरतान्वयोत्पन्ने चन्द्रवंशीयनृपतिश्रेष्ठे ॥ यस्ययश : पुराणेप्रसिद्धम् । यस्यकरुणावतोयंश्लोक : । नकामयेहंग

तिमीश्वरात्परामर्द्धियुक्तामपुनर्भवम्‌ । आशिंप्रपद्ये खिलदेहभाजामन्तः स्थितोयेनभवन्त्यदुःखाः ॥ गरुडध्वजे । विष्णौ ॥ कुक्कुरे ॥

रन्ध्रुः । पुं० वर्त्मनि ॥ स्त्री० नद्याम्‌ ॥

रंधनम्‌ । न० पाके । छेदने ॥

रन्ध्रम्‌ । न० दूषणे ॥ छिद्रे ॥ रमणम्‌ । सम्पदादित्वात्क्विप्‌ । संज्ञापूर्वकत्वान्नदीर्घः । रमंक्रीडांधरति । मूलविभुजादित्वात्कः । यद्वा । रंधयति । रधिर्हिंसासंराध्योः । बाहुलकात्रक्‌ ॥ अष्टमभवने ॥ अश्वस्यकुक्षिनाभिमध्यभागे ॥ यथोक्तम्‌ । कुक्षिनाभ्यन्तरेरन्ध्रमुपरन्ध्रं तथोपरीति ॥

रन्ध्रकण्टः । पुं० जालबर्बुरके ॥

रन्ध्रकरः । त्रि० छिद्रस्यकारके । रन्ध्रहितौविधेरा० इ० भाषा० प्र० ॥ रन्ध्रंकरोति । कृञोहेतुताच्छील्यानुलोम्ये ष्विति कृञः टप्रत्ययः ॥

रन्ध्रबभ्रुः । पुं० उंदुरौ ॥

रन्ध्रवंशः । पुं० सच्छिद्रवंशे । कीचकाख्ये । मस्करे । सुषिरासे ॥ अस्यगुणायथा । वंशोत्वम्लोकषायो चकिञ्चित्तिक्तोचशीतलो । मूत्रकृच्छ्रप्रमेहार्शः पित्तदाहास्रनाशनो ॥ विशेषोरन्ध्रवंशस्तुदीपनोजीर्णनाशकः । रुचिकृत्पाचनोहृद्यः शूलघ्नोगुल्मनाशनः ॥

ररः । न० पापे ॥

रभसः । पुं० हर्षे ॥ यथा । शुचांपात्रंपात्रीपरिणतिरमीष्वप्रत्ययभुवंभूतावासोविमृशकियतीयातिनदशाम्‌ । तदस्मिन्धीराणांचक्षमपिकिमास्थातुमुचितंफलीकारः कोयंयदहमहमेवेतिरभसइतिशिल्हणमिश्राः ॥ पुं० अभिधानविशेषे ॥ पौर्वापर्यविचारे ॥ त्रि० तद्वति ॥ रभते । रभ राभस्ये । अत्यविचमीत्यादिनाऽसच्‌ ॥ तद्वत्यर्शआद्यच्‌ ॥

रम । पुं० कान्ते ॥ रक्ताशोकद्रुमे ॥ स्मरे ॥ रमते । रम० । पचाद्यच्‌ ॥ रमणे ॥

रमकः । पुं० विलासिनि । कान्ते ॥ रमते । रम० । रमेरश्चलोवेतिक्वुन्‌ ॥ केनापिकर्मणापररञ्जके ॥ रमयति । क्वुन्‌ ॥

रमठम्‌ । न० ) हिङ्गुनि ॥
रमठध्वनिः । पुं० )

रमणः । पुं० धवे । प्रिये । पत्यौ ॥ स्मरे । कामदेवे ॥ रमयति । रम० । नन्द्यादित्वाल्ल्युः ॥ वर्णवृत्तान्तरे ॥ सगणोरमणः । कविनाकथितः ॥ यथा । धनदोधनदः । भवतांभवतात्‌ ॥ रासभे ॥ वृषणे ॥ महारिष्टे ॥ न० पटोलमूले ॥ जघने ॥ जम्भने । ग्राम्यधर्मे । सुरते । मैथुने । क्रीडारते ॥ महा

सुखे ॥ क्रीडने ॥

रमणकम् । न॰ जम्बुद्वीपस्योपद्वीप विशेषे । रम्यकवर्षे ॥ यथा । एवमेवो त्तरेणैवशिखर्णिचतपोधन । कुरु वर्षं सिन्धुकूलाच्छृङ्गवानवधिः स्मृत : ॥ हिरण्मयंततोवर्षंश्वेताव धिनिगद्यते । रम्यकश्चततोवर्षंनी लस्तस्यावधि : स्मृत : ॥ अपिच । दक्षिणेनतुश्वेतस्यनिषधस्योत्तरेण तु । वर्षंरमणकंनामजायन्ते तत्र मानवा : ॥ शुक्लाभिजनसम्पन्ना : सर्वेसुप्रियदर्शना: । दशवर्षसहस्राणिगतानिदशपञ्चच ॥ जीवन्ति तेमहाभागनित्यंमुदितमानसा :॥ इतिपाद्मेभूखण्ड : ॥

रमणा । स्त्री॰ रमण्याम् ॥

रमणी । स्त्री॰ विशेषाङ्गनायाम् । नार्याम् ॥ रमयति॰रम्यतेवास्याम् । रम॰ । ल्युट् ॥ वालाख्यवृक्षे ॥ वेदिकायाम् ॥ • ( * ) •

रमणीय : । त्रि॰ सुन्दरे । शोभने । रम॰ । अनीयर् ॥

रमणीयकम् । न॰ छन्दोविशेषे । रा न्नभहितयरैरुदितंरमणीयकम् । इतिलक्षिते ॥

रमणीयचरण : । त्रि॰ सुकृतिनि । पुण्यकर्म्मणि ॥ रमणीयंशोभनंचरणंशीलंयस्य ॥

रमण्य : । त्रि॰ रमणीये ॥ रमतेऽस्मि न् । रम॰ । औरम्योर्थे यन्य : ॥

रमति : । पुं॰ नायके ॥ नाके ॥ कामदेवे ॥ काले ॥ रमतेऽस्मिन् । रम॰ । रमे र्निदिश्यति : ॥

रमा । स्त्री॰ लक्ष्म्याम् । पद्मालयायाम् । सर्वेचरमसे यस्माद्रमातस्माद्ध विष्यसीतिविष्णुशापोक्तेरितुरुक्त : श्रीदेवीभागवते ॥ हालाहलोनैव विषं विषंरमापरं जनाव्यक्तयमेवम न्वते । योगेनजागर्त्तिनिपीयतं शिव : स्मरन्रमांमुह्यतिनिद्रयाह रि :॥ रमयति । रम क्रीडा याम् । पचाद्यचि॰टाप् ॥ शशिधृजरालक न्यायाम् । कल्किदेवपत्न्याम् ॥ शोभायाम् ॥॰

रमाधव : । पुं॰ )

रमानाथ: । पुं॰ )

रमापति : । पुं॰ ) विष्णौ ॥ रमाया धव: ॥ नाथ : पतिर्वा ॥ *

रमाप्रियम् । न॰ पद्मे ॥

रमावेष्ट : । पुं॰ श्रीवासे ॥

रमित : । त्रि॰ रतिप्रापिते ॥

रमेश्वर : । पुं॰ विष्णौ ॥

रम्भ : । पुं॰ वेणौ ॥ वैणवदण्डे ॥ वानरविशेषे ॥ महिषासुरस्यपित रि रभते । रभराभस्ये । पचाद्य च् । रभेरशबलिटोरितिनुम् ॥

रम्भा । स्त्री॰ कदल्याम् ॥ अपसरो भेदे ॥ दुर्गायाम् ॥ गोध्वनौ ॥ वे

श्यायाम् ॥ रभते । रभ० अच् । टाप् ॥ रभ्यतेवा । घञ् ॥

रम्भातृतीया । स्त्री० व्रतविशेषकाले॥

रम्भोरू : । स्त्री० स्त्रीविशेषे ॥ रम्भे० कदलीस्तम्भाविवऊरूयस्या : सा । ऊरूत्तरपदादौपम्ये इत्यूङ् ॥

रम्य : । पुं० चम्पके ॥ बम्पकवृक्षे ॥ न० पटोलमूले ॥ प्रधानधातौ ॥ त्रि० मनोज्ञे । हृद्ये । स्वभावसुन्दरे ॥ रम्याणांविकृतिरपिश्रियंतनोति ॥ रम्यतेक्रीडतेयत्र । रम० । पोरदुपधादितियत् ॥ बलकरे ॥

रम्यकम् । न० पटोलमूले । नीलगिरेरुदग्दग्भिवर्त्तमाने० वर्षविशेषे ॥ नीलनीरजरम्यस्यरम्यकेहादृशस्थिति : । जनस्त्वाव्दसहस्राणि न्यग्रोधफलमश्नत : ॥

रम्यपदपाठ : पुं० देवतापदस्तोभे : कालेपूरणे ॥

रम्यपुष्प : । पुं० शाल्मलिपादपे ॥

रम्यफल : । पुं० कारस्करवृक्षे ॥

रम्या । स्त्री० रात्रौ ॥ स्थलपद्मिन्याम् ॥

रम्र : । पुं० अरुणवर्णे ॥ शोभायाम् ॥

रय : । पुं० वेगे । वेगाख्यगुणे ॥ सवेगगति वचनेस्यप्रयोग : ॥ प्रवाहे ॥ रयत्यनेन । रयणंवा । रयगतौ । पुंसीतिघ : । रीणात्यनेना । रीगतिरेषणयो : । पुंसीतिघ : ॥ हलश्चेतिघञितु० संज्ञापूर्वकत्वा

. द्वृद्ध्यभाव : ।

रवि : । पुं० अग्नौ । जले ॥

रराटी । स्त्री० ललाटे ॥

रल्लक : । पुं० कम्बले ॥ कम्बलमृगे ॥ पक्ष्मणि ॥ रमते । रम० । क्विप् । गमादीनांक्वाविति मलोप : । तुक् । लाति । ला० । क्विप् । रच्चासौलाश्च । स्वार्थेकन् । केऽणइतिह्रस्व : ॥ यद्वा । रमणम् । रमे : सम्पदादिक्विप् । रत्क्रीडा लक्ष्यतेऽनेन । लक आस्वादने । घ : ॥ रतंलातिवाक्वुन् ॥ स्त्रीणांसिंदूरमरणम् ॥

रल्लकभल्लकम् । न० सिन्दूरमरणे । मांगड्० भा० ॥ गिर : सिन्दूरमरणि : स्त्रीणांरल्लकभल्लकमित्यूची: ॥ सीतारल्लकभल्लभग्नहृदय: स्वस्थानलङ्कं श्वरदृतिलच्यम् ॥ रल्लकोभल्लकमिव ॥

रव : । पुं० ध्वानै । स्वने । शब्दे ॥ रवणम् । रुशब्दे । ऋदोरप् ॥ लघुवर्णे० ॥

रवण : । पुं० उष्ट्रे ॥ कोकिले ॥ खरे ॥ न० कांस्ये ॥ रवे । त्रि० शब्दने ॥ तीक्ष्णे ॥ भगलके ॥ चञ्चले ॥ रौति० तच्छील : । रु० । चलनशब्दार्थादकर्मकाद्युच् । युयुरुतत्रो युजितियुज्वा ॥

रव्थ : । पुं० कोकिले ॥ रौति ।

रु० श्रीङ्‌श्पिङ्गमीत्यादिनाऽयप्रत्यय : ॥

रवि : पुं० सूर्य्ये । आदित्ये । दिवाकरे ॥ रसान् आदत्ते० इति रवि : । अत्ररसशब्दस्यलोपः वीत्यत्यादानमर्थ : । वीगत्यादावितिधातोर्व्वीतिरूपम्० पृषोदरादित्वात्साधुत्वम् । पृषोदरादित्वकल्पनामूलन्तुविष्णुधर्मोत्तरवचनम् । तद्यथा । रसानाञ्चतथादानाद्रविरित्यभिधीयतेइति ॥ प्रकाशानांमध्येरविर्विष्णोर्विभूति : ॥ रूयते० स्तूयते । रुशब्दे । अचइ : ॥

रविकान्त : । पुं० सूर्यकान्तमणौ ॥

रविचक्रम् । न० नराकारसूर्यचक्रविशेषे ॥

रविज : । पुं० शनैश्चरे ।

रवितनय : । पुं० सावर्णिकेमनौ ॥ शनौ ॥ यमे ॥

रविनन्दन : । पुं० सुग्रीवाख्यवानरे ॥ वैवस्वतमनौ ॥ सावर्णिमनौ ॥ शनौ ॥ यमे ॥

रविनाथम् । न० बन्धुजीवके ॥ पद्मे ॥

रविपत्र : । पुं० आदित्यपत्रक्षुपे ॥

रविपार्श्वग : । पुं० चण्डांशो : पार्श्वकेषु ॥ तेयथा । माठर : पिङ्गलोदण्डश्चण्डांशो : पारिपार्श्विका : ॥ अपिच । वाहु : शोष : खर : पक्षीद्वारकोजानुकारक : । पिंगीयजस्वपुरुष : प्रामयातप्रतापकौ ॥ आश्विनेयौतथादण्डीकुल्माषः पार्श्वगारवे : ॥

रविप्रिय : । पुं० आदित्यपत्रे ॥ रक्तकरवीरे ॥ लकुचे ॥ न० ताम्रे ॥ रक्तकमले ।

रविप्रीता । स्त्री० सुवर्चलायाम् ॥

रविरत्नकम् । न० माणिक्ये ॥

रविलोचन : । पुं० विष्णौ ॥ रविर्लोचनमस्यविराडात्मनइतिरविलोचन : ॥

रविलोहम् । न० ताम्रे ॥

रविसंज्ञकम् । न० ताम्रे ॥

रविसुत : । पुं० सुग्रीवे ॥

रविसूनु : । पुं० शनौ ।

रवीन्दम् । न० पद्मे ॥

रवीषु : । पुं० कामे ॥

रशना । स्त्री० काञ्च्याम् । कटिभूषणे ॥ अश्नुते । अशूङ्‌व्याप्तौसङ्घातेच । अश्नोतेर्लनेवा । अशेरशचेति युच्० धातोरशादेश : । यद्वा । रशति । रशशब्देसौत्र: । बहुलमन्यत्रापीतियुच् ॥ जिह्वायाम् ।

रश्मि : । पुं । दीधितौ ॥ पक्ष्मणि । नेत्रपत्रे ॥ अश्वरज्जौ । प्रग्रहे । रथादियुक्ताश्वादीनांसंयमनरज्जौ । अश्नुतेनेनवा । अशू० । अश्नोते रशचेतिमि : ॥ सूर्यस्यरश्मिना

रस :

जलादानादानेयथा । तेजोभिःसर्वलोकेभ्योह्यादत्तेरश्मिभिर्जलम् । समुद्राद्वायुसंयोगाद्वहन्त्यापोगभस्तयः ॥ ततस्तुपयसांकालेपरिवर्त्तनृदिवाकरः । नियच्छत्यपोमेघभ्यः शुक्लाशुक्लैस्तुरश्मिभिरिति ॥ अत्रयादवः । तासांशतानिचत्वारिरश्मीनांवृष्टिसर्ज्जने । शतत्रयंहिमोत्सर्गेतावद्गर्भस्यसर्जने ॥ आनन्दाश्चहिमेध्याश्चनूतनाः पूतनाइति । चतुःशतंवृष्टिवाहास्ताः सर्वाअमृतास्त्रय इति ॥

रश्मिपतिः । पुं॰ आदित्यपत्नुपे ॥

रसः । पुं॰ गन्धरसे ॥ जले ॥ विषे ॥ वीर्ये ॥ द्रवे ॥ रागे ॥ स्वादे ॥ रसनायाह्येगुणे ॥ सचकालस्वभावभूमिविपद्दनिलानलसंसर्गेणपरिणामान्तरंगतः षड्विधोभवति । तत्र पृथिव्यम्बुगुणबाहुल्यान्मधुरः १ । तोयाग्निगुणबाहुल्यादम्लः २ । पृथिव्यग्निगुणबाहुल्याल्लवणः ३ । वाय्वग्निगुणबाहुल्यात्कटुकः ४ । वाय्वाकाशगुणबाहुल्यात्तिक्तः ५ । पृथिव्यनिलगुणबाहुल्यात्कषायः ६ । आपोरसानामाधारकारणम् ० अतआप्योनाम । अपांपृथिव्यामनुप्रवेशात्पृथिव्यप्याधारकारणमेव । तेनजलक्षितीअपितदाधारतयारसानामभिव्यक्तौकारणं । अभिव्यक्तौचमधुरादिरूपसन्तरेणासत्त्वात्०मधुरादिविशेषेपिजलक्षितीकारणं । अग्न्यादयस्तुत्रयोगीरसतयामधुरादिविशेषप्राधान्येननिमित्तकारणम् । तद्व्यतिरेकेणाम्लादिरसाभावात् । रसाभिव्यक्तौच०अग्न्यादिभूतत्रयसन्निधानंविनानुपलब्धेरभिव्यक्तावपि०अग्न्यादीनांकारणत्वम् । अत्राहमाधवाचार्य्यः । कफवातौवातकफौवातः पित्तञ्चवृद्धिगमौ । त्रिभिराद्यैस्त्रिभिरन्त्यैस्त्रिभिराद्यपरैस्तदन्यैश्च १ ॥ अन्त्याद्याद्यमाद्यान्त्यावन्त्यंकोपशमंमलम् । मध्यमध्येतरौमध्यंप्रयोगान्नयतस्त्रिकौ ॥ २ ॥ आद्यमध्यंनयन्त्यन्त्यंमधुराद्याः शमेतरौ । आद्यंमध्यान्त्यमाद्यञ्चमध्यमान्तिममन्तिमम् ॥ ३ ॥ आद्यंमध्यञ्चमध्यान्त्यमाद्यमध्यान्तिमंक्रमात् । आद्यंदोषंरसाः प्रायः प्रयोगपरिशीलिता इति ॥ ४ ॥ मधुराम्ललवणकटुतिक्तकषायाः षड्रसाः । तत्रत्रिभिराद्यैर्मधुराम्ललवणैः कफवातौ यथाक्रमम्वृद्धिगमौवातः । यातइत्यर्थः । कफोवृद्धिंयातिवातःशमंयातीत्यर्थः । वातइतिवागतिगन्धनयोरित्यस्यधातोरूपम् । वातइतिसर्वत्रसम्बध्यते ॥ अन्त्यैस्त्रिभिः कटुतिक्तकषायैः वातकफौवृद्धिगमौ

स्वादयस्य ॥ एतेचरसाः परस्य
रसंयोगात्सप्तपञ्चाशद्भवन्तीतिचक्र
पाणिदत्तः ॥ अपिच । स्वादम्ल
लवणास्तिक्ताः कटुकश्चकषायकः ।
अमीतुषड्रसाः ख्याताः निर्वलो
अपरः परः ॥ न्यायमतेतु । रस
स्तुरसनाग्राह्योमधुरादिरनेकधा ।
सहकारीरसज्ञायानित्यत्वादिचपू
र्ववत् ॥ सहकारीति॰रासनज्ञानेर
सकारणमित्यर्थः । पूर्ववदिति ।
जलपरमाणोरसोनित्यः अन्यः
सर्वोपिरसोऽनित्यइत्यर्थः ॥ शृङ्गा
रादौ ॥ तेयथा । शृङ्गारहास्यकरु-
णारौद्रवीरभयानकाः । वीभत्सा
द्भुतसंज्ञौचेत्यष्टौनाट्ये रसाः स्मृ
ताः ॥ चशब्दात्॰शान्तोपिनवमः [illegible]
तोवात्सल्यं दशमः स्मृतः । अष्टावि
हप्रसिद्धत्वादित्यस्यान्यत्रविस्तरः ॥
देहस्थधातुप्रभेदे । रसिकायाम् ।
स्वेदमातरि । वर्मसारे । रक्तसारे
॥ भुक्तस्यपक्वस्यसारभूतोयोद्रवः
सरसः सोपिपच्यते । इतिभिष
जः ॥ अस्यस्वरूपमाह । यथा
। सम्यक्पक्वस्यभुक्तस्यसारोनिगदि
तोरसः । सतुद्रवः सितः शीतः
स्वादुः स्निग्धश्चलोभवेत् ॥ तस्य
स्थानमाह । सर्वदेहचरस्यापिरस
स्यहृदयंस्थलम् । समानमरुता
पूर्वंयदयंहृदयेधृतः ॥ तस्यकर्मा
ण्याह । आस्यस्थधमनीर्गत्वाधातून्
सर्वानयंरसः । पुष्णातितदनुस्त्री
ग्रैव्यंप्रीणातिचतनुंगुणैः ॥ गुणैः
शीतस्निग्धपोषकत्वैः ॥ मन्दवह्नि
विदग्धस्तुकटुर्वाम्लोभवेद्रसः ।
सकुर्याद्बहुलान्रोगान्विषवच्चक
रोत्यपि ॥ पारदे ॥ रसायनार्थिभि
र्लोकैः पारदोरस्यतेयतः । ततो
रसइतिप्रोक्तः सचधातुरपिस्मृतः
॥ रागे ॥ तृष्णायाम् ॥ क्षुद्रसुख
रागे ॥ सविकल्पकानन्दे । रसय
ति॰आस्वादयति । रसआस्वादने ।
चुरादिरदन्तः । एरच् ॥ रस्यते॰
आस्वाद्यतेऽनेनवा । कर्मणिघञ्
। अल्लोपस्यस्थानिवत्त्वान्नवृद्धिः ॥
अपांसारोरसइत्यन्यत्र ॥ षष्ठाङ्के ॥
लघ्वादित्रिकले॰ । ऽ ॥ मात्रामा
षे । न॰ बोले ॥

रसकः । पुं॰ पिष्टकायमांसे । न॰
खर्परीतुत्थे ॥ येगुणास्तुत्थकेप्रोक्ता
स्तेगुणारसकेस्मृताः ॥

रसकर्पूरः । पुं॰ न॰ कर्पूररसे ।
रसकपूर इतिख्याते ॥

रसकेशरम् । न॰ कर्पूरे । सिता
भे ॥

रसगन्धः । पुं॰ गन्धरसे । बोले ॥
गन्धवान् रसोऽस्य । राजदन्ता
दिः ॥

रसगन्धकः । पुं॰ गन्धरसे । बोले

॥ स्वार्थे कन्नृतिक : ॥ गन्धके ॥

रसगर्भम् । न० रसाञ्जने ॥ रसोग र्भोऽस्य ॥ हिङ्गुले ॥

रसघ्न : । पुं० टङ्कणे ॥

रसजम् । न० रक्ते ॥ रसाञ्जने ॥ मद्यकीटे ॥ गुडे ॥

रसज्ञ : । त्रि० रसिके ॥ रसं जानाति । ज्ञा० । श्रातोनुपेतिक : ॥

रसज्ञा । स्त्री० जिह्वायाम् ॥ टाप् ॥

रसज्ञेष्ट : । पुं० मधुररसे ॥ रसज्ञानामिष्ट : ॥

रसज्येष्ठ : । पुं० मधुररसे ॥ शृङ्गाररसे ॥

रसत् । त्रि० गर्जति ॥ रसति । रसशब्दे । लट : शतृ ॥

रसतेज : । न० रक्ते ॥

रसशब्द : । पुं० सशब्दमेघे ॥

रसदालिका । स्त्री० पुंड्रकेक्षौ ॥

रसद्रावी । पुं० मधुरजम्बीरे ॥

रसधातु : । पुं० पारदे ॥

रसधेनु : । स्त्री० दानार्थेक्षुरसनिर्मितधेनौ ॥

रसनम् । न० स्वदने । स्वादे ॥ ध्वनौ ॥ रसग्रहणलिङ्गेन्द्रिये । जिह्वायाम् ॥

रसना । स्त्री० रास्नायाम् ॥ काञ्च्याम् ॥ रश्मौ ॥ गन्धालिकायाम् ॥ जिह्वायाम् ॥ श्रस्या : शुभाशुभलक्षणं यथा । कृष्णाजिह्वाभवेद्य-

स्यसमलाश्चदिवाभवेत् । नघापवान् भवेन्मर्त्यउग्रांस्थूलांयथाभवेत् ॥ श्वेतजिह्वानरा : सुरा : शौचाचारविवर्जिता : । पद्मपत्रसमाजिह्वासूक्ष्मादीर्घासुशोभना ॥ नस्थूलानातिविस्तीर्णायेषांतेमनुजाधिपा : । निम्नदीर्घाचकृष्णाचरक्ताग्ररसनायदि ॥ सर्वविद्याप्रवक्तासौभवेन्नास्त्यत्रसंशय : ॥ रसयति । रसश्रास्वादने । नन्द्यादित्वाल्ल्यु : ॥ रसयन्त्यनया । ण्यासश्रन्थेतियुज्वा ॥ रसति । रसशब्दे । बहुलमन्यत्रापीतिवायुच् ॥

रसनाथ : । पुं० पारदे ॥

रसनायक : । पुं० शिवे ॥

रसनालिट् । पुं० कुक्कुरे ॥

रसनेत्रिका । स्त्री० मन : शिलायाम् ॥

रसपाकज : । पुं० गुडे ॥

रसफल : । पुं० नारिकेलवृक्षे ॥

रसभवम् । न० रक्ते ॥

रसमर्दनम् । न० पारदचूर्णीकरणे ॥

रसमान : । त्रि० कूजनशीले ॥ रसते : परस्मैपदित्वात् । ताच्छील्यवयोवचनशक्तिषुचानश्प्रत्ययेनशानच् ॥

रसमारणम् । न० पारदस्यमारणे ॥

रसमूर्छनम् । न० पारदस्यमूर्छाकरणे ॥

रसराजः । पुं॰ पारदे ॥ रसाञ्जने ॥

रसवान् । त्रि॰ सरसे ॥

रसवती । स्त्री॰ पाकस्थाने । महान-से ॥ रसाः सन्त्यस्याम् । रसादिभ्यश्चेतिमतुप् । उगितश्चेतिङीप् ॥

रसशेखरः । पुं॰ पारदे ॥

रसविक्रयी । त्रि॰ इक्ष्वादिरसविक्रेतरि ॥

रसवित्‌द् । त्रि॰ रसज्ञे ॥

रसशेषः । पुं॰ अपक्वरसे ॥ भुक्तस्यपक्वस्यसारभूतोयोद्रवः सरसः । सचापक्वः सरसशेषइत्युच्यते ॥

रसशोधनम् । न॰ टङ्कणे ॥ पारदशुद्धौ ॥

रससिन्दूरम् । न॰ सिन्दूररसाख्यौषधे ॥

रसस्थानम् । न॰ हिङ्गुले ॥ हृदये ॥

रसा । स्त्री॰ रसनायाम् । रास्नायाम् ॥ पाठायाम् ॥ शल्लक्यामोषधौ ॥ कङ्ग्वाम् ॥ भूमौ ॥ द्राक्षायाम् ॥ काकोल्याम् ॥ रसोस्यामस्ति । अर्शआद्यच् ॥ रस्यतेवारसयत्यास्वादनेचुरादावदन्तः । घञ्॰अज्वा ॥

रसाखनः । पुं॰ कुक्कुटे ॥

रसाग्रजम् । न॰ रसाञ्जने ॥

रसाञ्जनम् । न॰ रसजाताञ्जनविशेषे । रसगर्भे । तार्क्ष्यशैले । रसवत्॰रसौत इतिभाषा ॥ दीत्याम्नुध्मायमानायांतत्किट्टन्तुरसाञ्जनम् । तदभावेतुकर्त्तव्यंदार्वीक्वाथसमुद्भवम् ॥ इतिराजनिघण्टः । अपिच । दार्वीक्वाथसमंक्षीरंपाकंनीत्वायथाघनम् । तदारसाञ्जनाख्यंतन्नेत्रयोः परमंहितम् ॥ रसाञ्जनंतार्क्ष्यशैलंरसगर्भञ्चताक्ष्यजम् । रसाञ्जनंकटुश्लेष्मविषनेत्रविकारनुत् ॥ उष्णंरसाञ्जनंतिक्तंछेदनंव्रणदोषहृत् । इति ॥ रसयुक्तमञ्जनम् । शाकपार्थिवादि ॥

रसाढ्यः । पुं॰ आम्रातके ॥ त्रि॰ सरसे ॥

रसातलम् । न॰ पाताले ॥ रसायाभुवस्तलमधः ॥

रसात्मकः । त्रि॰ रसस्वभावे ॥ रस आत्मायस्य ॥

रसादानम् । न॰ शोषणे ॥ रसानामादानम् ॥ भूमिदाने ॥

रसाधारः । पुं॰ सूर्ये ॥ रसस्याधारे ॥

रसाधिकः । पुं॰ टङ्कणे ॥ अधिकरसे ॥

रसाधिका । स्त्री॰ काकोलीद्राक्षायाम् ।

रसाभासः । पुं॰ अनौचित्यविशिष्टरसे ॥

रसाम्लः । पुं॰ अम्लवेतसे ॥ न॰ वृक्षाम्ले ॥ चुक्रे ॥

रसायकः । पुं॰ तृणविशेषे ॥

रसायनम् । न॰ जराव्याधिजिदौषधे

॥ नसूतेनविनाकान्तंनकान्तेनविनारसः । सूतकान्तसमायोगाद्रसायनमुदीरितमितिराजनिर्घण्टः ॥ भावप्रकाशेतल्लक्षणादिर्यथा । यज्जराव्याधिविध्वंसिवयसस्तम्भकंतथा । चक्षुष्यंबृंहणंवृष्यंभेषजंतद्रसायनम् ॥ दीर्घमायुः स्मृतिंमेधामारोग्यंतरुणंवयः । देहेन्द्रियबलंकान्तिंनरोविन्देद्रसायनात् ॥ विशेषोऽस्यभावप्रकाशादिषुद्रष्टव्यः ॥ विषे ॥ काटौ ॥ तक्रे ॥ पुं॰ पक्षिराजे । गरुडे ॥ विडङ्गे ॥

रसायनफला । स्त्री॰ हरीतक्याम् ॥ रसायनानिफलान्यस्याः ॥

रसायनश्रेष्ठः । पुं॰ पारदे ॥

रसायनी । स्त्री मञ्जिष्ठायाम् ॥ गुडूच्याम् काकमाच्याम् ॥ महाकरञ्जे ॥ गोरक्षदुग्धायाम् ॥ मांसच्छदायाम् ॥

रसालः । पुं॰ आम्रे ॥ इक्षौ ॥ रसमलति । अल॰ । कर्म्मण्यण् ॥ यद्वा । रसेनअजति॰ अल्यतेवा॰ पूर्य्यते॰ पूरयतिवा । अलेरच॰घञ्वा ॥ पनसे ॥ कुन्दरुकणे ॥ गोधूमे ॥ पुण्ड्रकनामेक्षौ । न॰वोले ॥ सिह्लके ।

रसालवटः । पुं॰ यमपुर्य्यांवटयक्षिणीस्थाने ॥

रसालसा । स्त्री॰ नाड्यां ।

रसाला । स्त्री॰ रसनायाम् । जिह्वायाम् ॥ दूर्वायाम् ॥ विदार्याम् द्राक्षायाम् ॥ शिखरिणीतिप्रसिद्धायाम् । मार्जितायाम् ॥ अस्याः करणप्रकारोयथा । आदौमाहिषमम्लमम्बुरहितंदध्याढकंशर्करांशुभ्रांप्रस्थयुगोन्मितांशुचिपटेकिञ्चित्क्षिपेत् । दुग्धेनार्द्धघनेनमृन्मयनवस्थाल्यांदृढंस्रावयेदेलाबीज-लवङ्गचन्द्रमरिचैर्योग्यैस्तद्योजयेत् ॥ भीमेनप्रियभोजनेनरचितानाम्नारसालास्वयंश्रीकृष्णेनपुरापुनः पुनरियंप्रीत्यासमास्वादिता । एषायेनरसज्ञवर्जितदिनेसंसेव्यतेनित्यशस्तस्यस्यादतिवीर्यवृद्धिरनिशंसर्वेन्द्रियाणांबलम् ॥ ग्रीष्मेतथाशरदियेरविशोषिताङ्गायेचप्रमत्तवनितासुरतातिखिन्नाः । येचापिमार्गपरिसर्पणशीर्णगात्रास्तेषामियंवपुषिपोषणमाशुकुर्यात् ॥ रसालाशुक्रलाबल्यारोचनीवातपित्तजित् । दीपनीबृंहणीस्निग्धामधुराशिशिरासरा ॥ रक्तपित्तंतृषांदाहंप्रतिश्यायंविनाशयेदिति ॥ अपिच । अर्द्धाढकंसुचिरपर्युषितस्यदध्नः खण्डस्यषोडशपलानिशशिप्रभस्य । सर्पिष्पलंमधुपलंमरिचंद्विकर्षंशुण्ठ्याः पलार्द्धमपिचार्द्धपलंचतुर्णाम् ॥ सूक्ष्मपटेललनयामृदुपाणिघृ

छाकपूरधूलिसुरभीकृतपाचसंस्था एषाहकोटरकृतासरसारसालाया स्वादिताभगवतामधुसूदनेनेति ॥

रसान् आलाति । ला० । मूलविभुजादित्वात्कः । टाप् ॥

रसालिहा । स्त्री० शीर्णमालायाम् । पृथक्पर्ण्याम् । चाकुलिया० इ० गौ० दे० भाषा ॥

रसाली । स्त्री० पुंड्रकेचौ ॥

रसाश्वासा । स्त्री० पलाशीलतायाम् ॥

रसास्वादः । पुं० अखण्डस्वस्वावलम्बनेनानिर्विकल्पतः सविकल्पकानन्दास्वादने । धन्योऽहमित्याद्यानंदाकारवृत्तौ ॥

रसास्वादी । पुं० भ्रमरे ॥ त्रि० रसास्वादविशिष्टे ॥ रसानामास्वादी ॥

रसाढ्यः । पुं० सरलद्रुमरसे ॥

रसिकः । पुं० सारसखगे । तुरंगे ॥ हस्तिनि ॥ त्रि० सरसे । रसज्ञे । रसिया० इ० भा० रसोऽस्यास्मिन्वाठन् ॥

रसिका । स्त्री० रसालायाम् ॥ इक्षुरसे ॥ कटिसूत्रे । काञ्च्याम् ॥ रसनायाम् ॥ रागवत्याम् । रसीलो० इ० भा० ॥ टाप् ॥

रसिकेश्वरः । पुं० श्रीकृष्णे ॥ वृन्दावनान्तरेरम्यरासोत्सवसमुत्सुकम् । रासमण्डलमध्यस्थं नमामि रसिकेश्वरम् ॥

रसिकेश्वरी । स्त्री० श्रीराधिकायाम् ॥

रसितम् । न० रुते ॥ स्तनिते । मेघनिर्घोषे ॥ त्रि० स्वर्णादिखचिते । स्वर्णादिलिप्ते ॥ रसशब्दे । भावे क्तः ॥

रसितवान् । त्रि० आस्वादितवति ॥ रसआस्वादने । क्तवतुप्रत्ययः ॥ उगितश्चेतिङीपि० रसितवती ॥

रसुनः । पुं० कन्दविशेषे । लशुने ॥

रसेन्द्रः पुं० पारदे । रसानामिन्द्रः ॥

रसोत्तमः । पुं० मुद्गे । श्रेष्ठरसे ॥ त्रि० तद्वति ॥

रसोद्भवम् न० हिङ्गुले ॥ त्रि० रसजाते ॥

रसोनः । पुं० लशुने । रसोनके ॥ रसआस्वादने० चुरादिरदन्तः । ऊनः । पातकहेतुत्वात् । ऊन परिहाणे । चुरादिरदन्तः । एरच् । घञ् वा ॥ लशुनस्तु रसोनः स्यादुग्रगन्धो महौषधम् । अरिष्टो म्लेच्छकन्दश्च यवनेष्टो रसोनकः ॥ अस्योत्पत्तिर्यथा । यदामृतं वैनतेयो जहार सुरसत्तमात् । तदा ततोऽपतद्बिन्दुः स रसोनोऽभवद्भुवि ॥ पञ्चभिश्च रसैर्युक्तो रसेनाम्लेन वर्जितः । तस्माद्रसोन इत्युक्तो द्रव्याणां गुणवेदिभिः ॥ कटुकश्चापि मूलेषु तिक्तः पत्रेषु संस्थितः ।

नालिकषायउद्दिष्टोनालाग्रेलवण : स्मृत : ॥ बीजेतुमधुर : प्रोक्तोर ससद्गुणवेदिभि : ॥ तस्यभक्षणगुणा: । रसोनोवृंहणोवृष्य: स्निग्धोष्ण : पाचन : सर : । रसेपाकेचकटुकस्तीक्ष्णोमधुरकोमत : ॥ भग्नसन्धानकृतकण्ठ्योगुरु : पित्तास्रवृद्धिद: । वलवर्णकरोमेधाहितोनेत्योरसायन : ॥ हृद्रोगजीर्णज्वरकुक्षिशूलविबन्धगुल्मारुचिकासशोफान् । दुर्नामकुष्ठानलसादजन्तुसमीरणश्वासकफांश्चहन्ति ॥ मद्यंमांसंतथाम्लञ्चहितंलशुनसेविनम् । व्यायाममातपंरोषमतिनीरपयोगुडम् । रसोनमश्नन्पुरुषस्त्यजेदेतन्निरन्तरं ॥

रसोनक : । पुं० रसोने । स्वार्थेकन् ॥

रसोपलम् । न० मौक्तिके ॥

रसौदनम् । न० पुं० मांसरसेनसिक्तओदने । रसोदनोगुरुर्वृष्योवल्योवातज्वरापह : ॥

रस्नम् । न० द्रव्ये ॥ रस्यते॰आस्वाद्यते । रस० । दृषिशुषिरसिभ्य: कित्दितिन : ॥

रस्यम् । न० रक्ते । त्रि० आस्वाद्ये । मधुररसप्रधाने ॥

रस्या । स्त्री० पाठायाम् । रास्नायाम् ॥

रह : । अ० विजने । विविक्ते ॥ रहति । रहेरसुन् ॥ रमन्तेऽत्रवा । रमेर्देशेहश्चेत्यसुन्॰हान्तादेशश्च ॥

रह : । न० तत्त्वे ॥ रते । गुह्ये ॥ रहति । रहत्यागे । असुन् ॥ यद्वा । रमन्तेऽत्र । रमेर्देशेहश्चेत्यसुन्हान्तादेशश्च ॥

रहस्यम् । त्रि० अभिप्राये । उपनिषदि ॥ उपासने ॥ अतिगोप्ये ॥ गोपनीयत्वंसर्वत्रसमानम् ॥ रहस्यरोमस्पर्शनिषेधोयथा : नसर्पशस्त्रै: क्रीडेतमूत्रानिखानिचनस्पृशेत् । रोमाणिचरहस्यानिनाशिष्टेनसहव्रजेत् ॥ द्र० रहोभवम् दिगादित्वाद्यत् ॥

रहस्या । स्त्री० सरिद्विशेषे ॥ पाठायाम् ॥ रास्नायाम् । टाप् ॥

रहित : । त्रि० वर्ज्जिते ॥

रहूगण : । पुं० पुराणप्रसिद्धेसिन्धुसौवीरदेशयो०र्नृपतिविशेषे ॥

रा । स्त्री० दाने ॥ कान्तौ ॥ विभवे ॥

राका । स्त्री० पूर्णेन्दुपूर्णिमायाम् ॥ नदीविशेषे ॥ कच्छूरोगे ॥ नवजातरज : स्त्रियाम् ॥ रातिशुभम् । रादाने । कृदाधारार्चिकलिभ्य : कप्रत्यय : । वाहुलकाद्गुणोनेतिऔणादिक : कप्रत्यय : । संज्ञापूर्वकविधेरनित्यत्वात्कैण्डुतिकौनोन ॥

राकिनी । स्त्री० दुर्गायाअनुचरीविशेषे ॥

राक्षसः। पुं॰ कौणपे। क्रव्यादे। आशरे। रात्रिचरे। यातुधाने॥ रक्षन्त्यस्मात्। रक्षपालने। असुन्। प्रज्ञाद्यण्॰ राक्षसः। स्वार्थिकाः प्रकृतितोलिङ्गवचनान्यतिवर्तन्तइतिपुंस्त्वम्॥ विवाहविशेषे। यथा। हत्वाच्छित्वाचभित्वाचक्रोशन्तींरुदतींगृहात्। प्रसह्यकन्याहरणंराक्षसोविधिरुच्यते॥ रक्षसइवायम्। अण्। षष्टिवत्सरान्तर्गतवत्सरविशेषे॥ यथा। कोद्रवाः शालिमुद्गाश्चपीड्यन्तेबरवर्षिणि। सर्वौषधानिधान्यानिराक्षसेनिष्ठुराः प्रजाः॥

राक्षसिका। स्त्री॰ राक्षसीसङ्क्रान्तौ॥

राक्षसी। स्त्री॰ चण्डायाम्। धनहर्यामौषधौ॥ कौणप्याम्। राक्षसस्त्रियाम्। दंष्ट्रायाम्। डाढ दाढ॰ इ॰ भा॰॥ सायाह्नवेलायाम्॥ सूर्यसंक्रान्तिविशेषे॥ यथा। शनौ तीक्ष्णासंज्ञे भवेद्राक्षसीसासुखायान्त्यजानांतदामासमेकम्॥ तामस्यांप्रकृतौ॥ अविहितहिंसाहेतुद्वेषप्रधानाराक्षसीप्रकृतिः। वैदिकनिषेधातिक्रमेणस्वभावसिद्धरागद्वेषानुसारिसर्वानर्थहेतुप्रवृत्तिहेतुभूतातामसी हिंसाप्राधान्येनद्वेषप्राबल्याद्राक्षसीत्वमस्याः॥ रक्षसइयम्। तस्येदमित्यण्। ङीप्॥

राक्षसेन्द्रः। पुं॰ रावणे॥

राक्षा। स्त्री॰ लाक्षायाम्॥ रज्यतेऽनया। रक्ष॰। गुरोश्चहलइत्यः। प्रज्ञाद्यण्। अजादित्वाट्टाप्॥

रागः। पुं॰ मात्सर्ये॥ लोहितादिषु॥ जपाकुसुमादिद्रव्ये॥ क्लेशादौ॥ अनुरागे। परस्परप्रीतौ। स्नेहे॥ तल्लक्षणंयथा। सुखमप्यधिकंचित्तेसुखत्वेनैवरज्यते। यतस्तुप्रणयोत्कर्षात् सरागइतिकीर्त्यते॥ इति॥ सुखानुशयिनि। साधनरहितस्यापि॰ सर्वंसुखजातीयंमेभूयादितिविपर्यविशेषे। महामोहे॥ मोहादनुभूयमानंसुखमनुशेतेकश्चिद्वृत्तिविशेषोराजसः सर्वंसुखजातीयंमेभूयादिति। तच्चदृष्टादृष्टसामग्र्याभावात्सम्पादयितुमशक्यम्॰ अतः सचित्तंकलुषीकरोति। यदातु॰ सुखिषुप्राणिष्वयंमैत्रींभावयेत्॰ सर्वेप्येतेसुखिनोमदीयाइति॰ तदातत्सुखंस्वकीयमेवसम्पन्नमितिभावयतस्तस्यरागोनिवर्त्तते। यथास्वस्याराज्यनिवृत्तावपिपुत्रादिराज्यमेवसुकीयंराज्यंतद्वत्। निवृत्तेचरागे॰ वर्षाव्यपायेजलमिवचित्तंप्रसीदति॥ रज्यतेविषयेषुपुरुषोऽनेनेति व्युत्पत्त्या॰ कामे। गर्वे। तत्तत्फलदृष्णायाम्॥ प्राप्तोविषयः क्षयकारणेसत्यपिनक्षीयतामित्येवमा

कारश्चित्तवृत्तिविशेषोरञ्जनात्माराग: ॥ सदाकामाभिनिविष्टस्वरूपोभिष्वङ्गोराग : ॥ शोभनाध्यासनिबन्धनोविषयेषुरञ्जनात्मकश्चित्तवृत्तिविशेषोऽस्यन्ताभिनिवेशरूपोराग : ॥ रागोलिङ्गमबोधस्यचित्तव्यायामभूमिषु । कुत : शाद्वलतातस्ययस्याग्नि : कोटरेतरो : ॥ रागादय : सन्तुकामंनतद्भावोपराध्यति । उत्खातदंष्ट्रोरगवद्विद्याकिंकरिष्यतीतिचाचार्य : ॥ सितादीनांविकारविशेषे ॥ यथा । सितामध्वादिमधुरोद्राक्षादाडिमजोरस : । विरलश्चेत्कृतोरागइति ॥ गान्धारादौ ॥ नृपे ॥ चन्द्रे ॥ सूर्ये ॥ लाक्षादौ ॥ रक्तिमन्त्विषि ॥ रञ्जने ॥ गानशास्त्रीयरागेषु ॥ यथा । भरतमते॰हनुमन्मतेचराग : षड्विध : । तेषांनामानियथा । भैरव : १ कौशिक : २ हिन्दोल : ३ दीपक : ४ श्रीराग : ५ मेघ : । हनुमद्भरतयोर्मतेप्रत्येकमेषांपञ्चरागिण्य : सोमेश्वरकलानाथयोर्मतेप्रत्येकमेतेषांषड्रागिण्य : । एतेषांप्रत्येकमष्टौपुत्रा : एकैकापुत्रभार्याच ॥ कलानाथसोमेश्वरमतेषड्रागा यथा । श्रीराग : १ वसन्त : २ पंचम : ३ भैरव : ४ मेघ : ५ नटनारायण : ६ । इतिनानासङ्गीत

राग :

शास्त्रम् ॥ अथरागस्यव्युत्पत्तिसङ्ख्यास्थानानि । येस्तुचेतांसिरज्यन्ते जगत्त्रितयवर्त्तिनाम् । तेरागइतिकथ्यन्ते मुनिभिर्भरतादिभि : ॥ गोपीभिर्गीतमारब्धमेकैकंकृष्णसन्निधौ । तेनजातानिरागाणांसहस्राणितुषोडश ॥ रागेषुतेषुषड्त्रिंशद्रागाजगतिविश्रुता: ॥ कालक्रमेणतत्रापिकिञ्चासएवतुदृश्यते ॥ केचिद्वदन्तितेरागा : सर्वेसन्तीतिनिश्चितम् । मेरोरुत्तरत : पूर्वेपश्चिमेदक्षिणे तथा ॥ समुद्रकण्ठेयेदेशास्तत्रामीषांप्रचारणा । तथाच । अङ्गवङ्गकलिङ्गतैलिङ्गभूलिङ्गहावङ्गसुरङ्गपूपलङ्खलङ्गसौवीरकौरकाश्मीरनाभीरनाहोरसिन्धुजालन्धरमगमगधनिषधमलयहोहयगजाह्वयमालवजालवमरुमरुचोलोत्कलकुन्तलसिंहलहरिकेलकेरलकोशलमल्लिवालमल्लभल्लसौविदक्षवातकिञ्जातगुजरातगुञ्जरकांजरगौडद्रविडोड्राम्बर्वेदिकाद्वीपाञ्चालसौराष्ट्रशबरलोहावरखशकौकशवरूपकामरूपहरिगर्भविदर्भदुर्मटवाटकोकटदेवेङ्गमटङ्कननाटभोटकवाटकरहाटकर्णाटकुन्तिकावन्तिकृकनकाञ्चकान्यकुब्जभोजकाम्बोजतोजतुखारविहारबलिहारराजगेहविदेहवाह्लीकचञ्चरीकचो

. गन्धर्वाद्दिदेशेषु रागा: प्रचरन्तीति ॥ यस्य श्रवणमात्रेणरज्यन्ते सकला : प्रजा : । सर्वानुरञ्जनाद्धेतोस्तेनरागइतिस्मृत : ॥ अथरागा : । भाद्दींमालवरागेन्द्रस्ततोमल्लारसंज्ञित : । श्रीरामश्चतत : पश्चाद्वसन्तस्तदनन्तरम् ॥ हिन्दोलश्चाथकर्णाटएतेरागा : षडेवतु । षड्त्रिंशद्रागिणीतश्चक्रमश: कथितामया ॥ धानसीमामसीचैवरामकीरीचसिन्धुडा । आशावरीभैरवीचमालवस्यप्रिया इमा : ६ ॥ वेलावलीपूरवीचकानडामाधवीतथा । कोडाकेदारिकाचापिमल्लारदयिता इमा: ६ ॥ गान्धारीशुभगाचैवगौरीकौमारिकातथा । वेलोयारीचवैरागीश्रीरागस्यप्रियाइमा : ॥ ६ ॥ तुडीचपञ्चमीचैवललितापठमञ्जरी । गुर्ज्जरीचविभाषाचवसंतस्यप्रियाइमा : ६ ॥ मायूरीदीपिकाचैवदेशकारीचपाहिडा । वराडीमोरहाटीचहिन्दोलस्यप्रियाइमा : ६ ॥ नाटिकाचाथभूपालीरामकेलीगडातथा । कामोदाचापिकल्याणीकर्णाटस्यप्रियाइमा : ६ ॥ ३६ ॥ अथकालनियम: । विभाषाललिताचैवकामोदीपठमंजरी । रामकीरीरामकेलीवेलोयारीचगुर्ज्जरी देशकारीचशुभगापञ्चमीचगडातुडी । भैरवीचाथकौ



मारीरागिण्योदशपञ्चच ॥ एता : पूर्वाह्णकालेतुगीयन्तेगायनोत्तमै: । वराडीमायूरीकोडावैरागीचाथधानुषी ॥ वेलावलीमोरहाटीसप्तैतारागयोषित : । गेयामध्याह्नकालेतुयथाभरतभाषितम् ॥ गान्धारीदीपिकाचैवकल्याणीपूरवीतथा । कानडाशावरीचैवगौरीकेदारपाहिडा ॥ मायूरीमालसीनाटीभूपालीसिन्धुडातथा । सायाह्नेताश्चरागिण्य : प्रगायन्तिचतुर्द्दश ॥ पुरुषावस्तुभूषाढ्यारागास्तेमालवादय: । प्रदोषेचापराह्णेचरजन्यांगानगोचरा : ॥ दशदण्डात्परंरात्रौसर्वेषांगानमीरितम् । मेघमल्लाररागस्यगानंवर्षासुसर्वदा ॥ श्रीपञ्चमींसमारभ्ययावज्जन्मोत्सवंहरे : । तावद्वसन्तरागस्यगानमुक्तंमनीषिभि : ॥ शक्रोत्थानंसमारभ्ययावद्दुर्गामहोत्सवम् । गीयतेतद्बुधैर्नित्यंमालसीसाममनोहरा ॥ सर्वेषामिहरागाणांरागिणीनाञ्चसर्वश : । रङ्गभूमौनृपाज्ञायांकालदोषोनविद्यते ॥ रागस्यालापायेदादौतत्पश्चात्तदनन्तरम् । नान्यपश्चात्प्रगातव्यानृपाज्ञायांनदूषणम् ॥ रागा : षडथरागिण्य : षट्त्रिंशच्चाङ्कविग्रहा: आगताब्रह्मसदनात्ब्रह्माणंसमुपासते ॥ अथध्यानम् । नितम्बिनीचु ।

म्बितवक्त्रपद्म : शुकद्युति कुण्डलवान्प्रमत्त : । सङ्गीतशालीप्रविशन्प्रदेशिमालाधरोमालवरागराज : ॥ १ ॥ नीलोत्पलं कर्णयुगेवहन्ती-श्यामासुकेशीचसुमध्यभागा । वृष-त्सहासाम्बुजरम्यवक्त्रासाधानसीप-समुत्थारूमैत्रा ॥ १ ॥ करेयुताथाम्बुजयुग्मरम्याद्रुतस्ततस्थारूविलोकयन्ती । कण्ठस्फुरन्मौक्तिकरत्नहारामामालसीसङ्घपितविचित्रा ॥२॥ प्रतप्तचामीकरचारुवक्त्राकर्णावतंसं कमलंवहन्ती । पौष्पंधनु : पुष्पशरैर्दधानाचन्द्राननारामकिरीप्रदि-ष्टा ॥ ३ ॥ महेन्द्रनीलद्युतिरम्बुजाक्षीप्रवादयन्तीकपिलाशयन्त-म् । विचित्ररत्नाभरणासुकेशी-सासिन्धुडाकान्तसमीपसंस्था ॥ ४ ॥ जवाप्रसूनद्युतिविम्बवक्त्रासकञ्जपद्मं करयोर्दधाना । चौमांशुकाच्छादितगात्रयष्टिराशावरीरङ्गकलाविदग्धा ॥ ५ ॥ सरोवरस्था स्फटिकस्यमन्दिरेसरोरुहै : शङ्करमर्चयन्ती । तालप्रयोगप्रतिरङ्गगीतैगौरीतनुर्भैरविकासतीयम् ॥ ६ ॥ अथमल्लार : । विहारशीलोतिसुकान्तिदेह: कान्ताप्रियोधार्मिकशीलयुक्त : । कामातुर : पिङ्गलनेत्रयुग्मोमल्लारराग : प्रियकृत्सुवेश : ॥ २ ॥ सङ्केतितोत्फुल्लल



तानिकुञ्जे कृतस्थिति : कान्तसमागमाय । वेलावलीचम्पकमौलिनी सावालाविचित्राभरणानिरूक्ता ॥ १ ॥ रह : सुकान्तैह्रियमाणपत्रं रम्यंवहन्तीकुचकुम्भयुग्मे । दूर्वादिलश्यामतनु : सकामापुरातनै : सापुरवीनिरूक्ता ॥ २ ॥ अशोकवृक्षस्यतलेविषण्णावियोगिनीवाष्पकणाञ्चिताङ्गी । विभूषिताङ्गीनटिलेश्वबालासाकानडाहिमलसैवतन्वी ॥ ३ ॥ सङ्घ्यसङ्घ्यगलेदधानाप्रसूनमालादयितेनबाला । गौरीस्वकान्ता ननचुम्बितास्यासासुन्दरी माधविकानिकुञ्जे ॥ ४ ॥ सुकण्ठपीवादयतिस्वभर्तुर्गानार्थमभ्यस्यतिसम्मुखेन । सदैवतालाविहितावमाला कोडाकलातानवतीमतासा ॥ ५ ॥ स्नात्वासमुत्तीर्णवतीसुदेहाकेशप्रणिस्यन्दितवारिविन्दु : । निष्पीडयन्तीतिमिरांशुकान्तकेदारिकारक्तपयोधरश्री : ॥ ६ ॥ अथश्रीराग : । लीलाविहारेण वनान्तराणिचिन्वन्प्रसूनानिवधूसहाय : । विलासवेशोद्युतिदिव्यमूर्त्ति : श्रीरागएषप्रथित : पृथिव्याम् ॥ ३ ॥ संध्यासुकालेगहमध्यदेशेप्रवादयन्तीहपिनाकयन्त्रम् । धाराधराधातुविचित्रिताङ्गीगान्धारिकागम्भसूत्रंनिधत्ते ॥ १ ॥ रस

राग :

नयासुविचारितकौतुकं विदधतीक
विकोविदकौतुकम् । सुकविताम्‍ट
तभावनतत्परा भगवतीसुभगासमु
दाहृता ॥ २ ॥ पुष्पोद्यानेसार्द्धमा
लीकलापैः क्रीडन्त्येवं कोकिला
काकलीषु । रामाश्यामासङ्गत्या
नाप्तसीमागौरीगौरीगौरवालोक
दिष्टा ॥ ३ ॥ अट्टालिकायांस्फुट
कौमुदीभिः प्रकाशितायांरजनीवि
हारम् । अङ्कायकान्तेन समं वसन्ती
कौमारिकाकामकलांवहन्ती ॥ ४ ॥
गौरीपादाम्भोजमभ्यर्चयन्तीगन्धोद्
तं गन्धमाल्यं दधाना । नानारत्नो
पायनैर्भक्तिभावैर्वेलोयारीकथ्य
तेवालिकेयम् ॥ ५ ॥ उल्लासयन्ती
धम्मिल्लरङ्गः स्थानप्राणबन्धुना ।
मालतीकुसुमस्रग्भिर्वैरागौरागि
णीस्मृता ॥ ६ ॥ अथवसन्तः ।
चूताङ्कुरेण वल्लतावतंसोविघूर्ण
मानारुणनेत्रपद्मः । पीताम्बरः
काञ्चनचारुदेहोवसन्तरागोयुवती
प्रियश्च ॥ ४ ॥ सुनृत्यमानातिसुशी
लयुक्तामुक्तालताकल्पितहारयष्टिः
। चूताङ्कुरं पाणियुगेवहन्तीनवा
रुणाङ्गीतुडिकेरितीयम् ॥ १ ॥ स
ङ्गीतगोष्ठीषु गरिष्ठभावं समाश्रिता
गायनसम्प्रदायैः । खर्व्वङ्घ्रिनीनू
पुरपादपद्मासापञ्चमीपञ्चमवेदवेत्री
॥ २ ॥ उरसिकेशवयस्यसुसारं विद

राग :

धतीशयनोत्थितचारुवेशम् । विलु
लितालकवल्लिकशाङ्गीभासुराललि
ताकथितावुधैः ॥ ३ ॥ सखीक
लापैः परिहास्यमानावियोगिनी
कान्तवियोगदेहा । पीनस्तनीचैव
धराप्रसुप्ताश्यामासुकेशीपठमञ्ज
रीयम् ॥ ४ कर्णोत्पलालम्बिमध
व्रतालीशृणोतिसामञ्जुलकूजिता
नि । कान्तान्तिकंगन्तुमनाः प्रदो
षे सागुर्जरीवेशकलोचिताङ्गी ॥
५ ॥ अध्यापयन्तीनिजशिष्यवृन्दं
संगीतशास्त्राणिविवेचनाभिः ॥ म
नोहराहारलताभिरामासमस्तभा
पाकुशलाविशेषा ॥ ६ ॥ अथहिन्दो
लः । हासाभिलासेनपतन्पृथि
व्यामुत्थापितस्तत्चरणमालिवृन्दैः
। उल्लोलसंगीतरसैर्विदग्धोहिन्दो
लरागः कथितोरसज्ञैः ॥ ५ मयूरकि
काश्रवणोल्लसन्तीमयूरिकानृत्यततं
किरन्ती । मयूरकांतीवसितिं दधा
नामायूरिकासङ्कथितागुणज्ञैः ॥ १ ॥
प्रदोषकालेग्टहसम्प्रविष्टाप्रदीपह-
स्तारुणगात्रवस्त्रा । सीमन्तसिन्दू-
रविराजमानासुरक्तमालाकिलदी-
पिकेयम् ॥ २ ॥ सार्द्धं सखीभिर्वि
जनेवसन्तीविचित्रवर्णाजनितम्बस
ङ्गा । निरीक्ष्यमाणाननदर्पणाया
सादेशकारीकथितागुणज्ञैः ॥ ३ ॥
भर्त्तुर्दधानाचरणारविन्दं निषेधय

रागः

न्तीपरदेशयानम् । प्रकामदाम्पत्य
सुखेनिमग्नासापाहिडासङ्कथिता-
कवीन्द्रैः ॥ ४ ॥ कर्णे दधानासुर-
पुष्पयुग्मं स्फुरत्सुवर्णोजमनोहरा-
ङ्गी । स्मेराननाचारुविलोलनेत्रा
वराङ्गनेयंकथितावडारी ॥ ५ ॥ उ
त्पन्नमात्रे प्रथमापराधेमानंपुनः क
र्त्तुमनास्थिरेण । ऋजुस्वभावान्नि-
यतंरुदन्तीसामोरहाटीहठकेलिरु-
ष्टा ॥ ६ ॥ अथकर्णाट : । कृपाण-
पाणिस्तुरगाधिरूढोमयूरकण्ठाति-
सुकण्ठकान्ति: । स्फुरत्सितस्नि-
ग्धरसः प्रशान्तः कर्णाटरागोह-
रितालवर्णः ॥ ६ ॥ चिरंनटन्ती-
शुभरङ्गमध्ये संप्रार्थयन्तीनटिनंवस
न्तम् । सुगीततालेषुकृतावधाना-
नटीषुनाटीपरिधानदेहा ॥ १ ॥
स्वनायकंपुष्पलतादिरूढाहसन्मुखी
सर्वमुदंवहन्ती । स्वनानिशश्वद्धित
नोतिमुग्धाभूपालिकासास्खलदु-
त्तरीया ॥ २ ॥ अध्यापयंतीशुक
सारसारीः श्रीरामरामेतिसुवेशल
क्ष्मीः । वामस्तनार्द्धस्खलितांशुक
श्रीः श्रीरामकेलीकथिताकवीन्द्रैः
॥ ३ ॥ विशेषवैदग्ध्यवतीसमस्ता
न्कलाविलासेनविमोहयन्ती । वृ
हन्नितम्बापरिपुष्टदेहावडाप्रलम्बस्त
नभारभव्या ॥ ४ ॥ भर्त्तुः सम
पार्श्वस्थितमारन्तीपयोविहारेषसरो

रागः

रुहाणि । विचिन्वतीसौरभमोद
मानाकामोदरागिण्युदिता गुणज्ञैः
॥ ५ व्याधूतानटनृत्यपरिश्रमेण
बालालीलाभिः मुदलीकृतादरा
। नटीनांकल्याणीकलयतिमतङ्ग
स्तीएणप्रस्थानंमुखरिताकिङ्किणीक
लापम् ॥ ६ ॥ अथरागरागिणीनां
भावनिरूपणम् । मालवः श्रीव
हिन्दोलिमल्लारस्तदनन्तरम् । गाय
न्तिगायकाधीरसानन्देनचतुष्टय-
म् । वसन्तरागः कर्णाटोदेवीरीभव
तः क्रमात् ॥ धानसीमालसीचै
वभैरवीमाधवीतथा ॥ सुभगापञ्चमी
नाटीवेलोयारीचगुर्ज्जरी । कामो
दाचापिकल्याणीकेडाकेदारिका
तुडी ॥ कौमारीमायुरीचैवदेशका
रीचसिन्धुडा । रामकेलीचभूपाली
रागिण्यस्त्वेतिविंशतिः ॥ आनन्दां-
शाङ्कितिप्रोक्तागीयन्तेगानकोविदैः
। पूरवीकानडागौरीरामकौरी-
चदीपिका ॥ आशावरीविभाषाच
वडारीचगडातथा । एताश्चनवरा
गिण्योवीरांशेगानमुत्तमम् ॥ वेला
वलीचगान्धारीललितापठमञ्जरी ।
वैरागिरागिणीचापिमोरहाटीच-
पाहिडा ॥ करुणांशाविज्ञानीया
नृत्यप्रैतारागयोषित: ॥ रागेण
रसभागेनषट्त्रिंशत्रागिणीषु च
। करुणानन्दवीरेषु प्रापराधैमत

थयम् ॥ इतिसंगीतदामोदरेशिव नारदसंवादे १।३ अध्यायौ। रञ्जनम्। रञ्ज० भावेघञ्॥ रज्यतेऽनेनेतिवा। अकर्त्तरिचकारकेसंज्ञायामितिघञ्। घञिचभावकरणयोरितिरञ्जेर्नलोपः॥
रागचूर्णः। पुं० दन्तधावने। खदिरे॥ मकरध्वजे। कन्दर्पे॥ लाक्षारसे॥ फल्गुचूर्णे. गुलाल॰इ॰भा॰॥ सिन्दूरे॥
रागच्छन्नः। पुं० कामदेवे॥ त्रि०रागेणच्छन्ने॥
रागदः। पुं० तेरणीक्षुपे॥ त्रि०रागदातरि॥
रागदालिः। पुं० मसूरे॥
रागपत्रः। पुं० कामादिषु॥ कामश्चमत्सरश्चैवस्पृहातृष्णातथैवच। लोभोमायाचदम्भश्चरागपत्रइतीरित॥
रागपुष्पः। पुं० बन्धूके रक्ताम्लाने॥
रागपुष्पी।स्त्री० जबायाम्॥
रागप्रसवः। पुं० बन्धूके॥ रक्ताम्लाने॥
रागवर्द्धी। त्रि० रागप्रवर्त्तके॥
रागयुक्। पुं० माणिक्ये॥
रागरज्जुः। पुं० कामदेवे॥
रागलता। स्त्री० रत्याम्। कामप्रियायाम्॥
रागवृन्तः। पुं० कामदेवे॥

रागषाडवः। पुं० दाडिमद्राक्षायुक्तमुद्गयूषे॥
रागसूत्रम् न० तुलासूत्रे॥ पट्टसूत्रे॥
रागाङ्गी। स्त्री० )
रागाढ्या। स्त्री० ) मञ्जिष्ठायाम्॥
रागान्धः। त्रि० आशांदत्त्वादानहीने॥
रागाशनिः। पुं० बुद्धे॥
रागिणी। स्त्री० विदग्धायांनार्याम्॥ मेनकायाज्येष्ठकन्यायाम्॥ जयश्रीनाम्न्यांलक्ष्म्याम्॥ षड्रागाणांस्त्रिषु॥ तास्तुहनुमन्मतेभरतमतेचत्रिंशत्प्रकाराः॥ सोमेश्वरमतेकल्लानाथमतेचषट्त्रिंशत्प्रकाराः। आसांविवरणंरागशब्देद्रष्टव्यम्॥
रागी। त्रि०कामाद्याकुलचित्ते। कामुके। रञ्जके। अनुरक्ते॥ रागिणोदेहिन्तोहिसदेवासुरमानुषाः॥ यथोक्तभागवतेव्यासेन। रागीविष्णुः शिवोरागी ब्रह्मापिरागसंयुतः। रागञ्जनयिचातुर्याहिदेहहरलच्यत इति॥ रञ्जेः सम्पृचानुरुधेतित घ्नौलादिषुघिनुण्॥ तृणधान्यविशेषे। लाङ्कने। बहुलरक्तिणि। गुच्छकणिशे॥
राघ्॰ग्॰। त्रि० समर्थे॥ राघति। राघ्रसामर्थ्येक्विप्॥
राघवः। पुं० रघुवंशजे। श्रीरामे।

चतुष्पाकेट्नौर्म्म प्रतद्याबस्याख्य रोगहृत् ॥
लताजिह्वः । पुं॰ सर्पे ॥ लतेवजिह्वाऽस्य ॥
लतातरु : पुं॰ तालवृक्षे ॥ नारङ्गवृक्षे ॥ शालवृक्षे ॥
लताद्रुम : । पुं॰ लताशाले । अश्वकर्णाह्वये । तार्क्ष्ये ॥
लतापनस : । पुं॰ चंलाले । चित्रफले । सुखाशे । नाटाम्रे । तरमुम्रे ति॰तरबुजड्॰चख्याते ॥
लतापृक्का । स्त्री॰ समुद्रान्तायाम् । पिड्किङ्गशाक॰इ॰गौ॰दे॰भा॰प्र॰॥
लताफलम् । न॰ पटोले । लतायाः फले ॥
लताभद्रा । स्त्री॰ भद्रालीवृक्षे ॥
लतामणि : । पुं॰ विद्रुमे । प्रवाले ॥
लतामरुत् । स्त्री॰ पृक्कायाम् ॥
लतायष्टि : स्त्री॰ भण्डीर्याम् । मञ्जिष्ठायाम् ॥
लतायावकम् । न॰ प्रवाले ॥
लतारसन : । पुं॰ सर्पे ॥
लतार्क : । पुं॰ दुद्रुमे । हरिद्वर्णपलाण्डौ ॥ लतासुचक्षुःतेश्चर्च्यतेवाविकृष्लसद्यायानिन्द्यते । चर्कस्तवने॰अर्चपूजायांवाघञ् ॥
लतार्कक : । पुं॰ दुद्रुमे ॥ स्वार्थेकन् ॥
लतालकः । पुं॰ गजे । हस्तिनि ॥

लतावेष्ट : । पुं॰ देशविशेषे ॥ रतिबन्धप्रभेदे ॥ यथा ॥ बाहुभ्यांपादयुग्माभ्यांवेष्टयित्वास्त्रियंभवेत् । लघुलिङ्गताडनंयोनौलतावेष्टोयमुच्यते ॥
लतावेष्टितकम् । पुं॰ आलिङ्गनभेदे॥
लताशङ्कु : । पुं॰ शालवृक्षे ॥
लताश्रम : । पुं॰ लतामण्डपे ॥ लताविशिष्ट : आश्रम : ॥
लतिका । स्त्री॰ लतायाम् । स्वार्थेकन् । प्रत्ययस्थादितीत्वम् ॥
लत्ता । स्त्री॰ योगविशेषे ॥ यथा । चन्द्राहुपूर्णेन्दुसिताः स्वपृष्ठे॰भंसप्तगोजातिशरे ७।८।२२।५ मितंहि । संलत्तयन्त्यर्कशनीज्यभौमाः सूर्याष्टतर्कागिमितं १२८।६३ पुरस्तात् ॥ अस्याः फलंयथा । रवेर्लत्ताविच्चहरौनित्यंकौजौविनिर्दिशेन्मरणम् । चान्द्रीनाशं कुर्याद्बौधीनाशंवदन्त्यबुधम् ॥ सौरीमरणंकरोतिवधूविनाशंबृहस्पतेर्लत्ता । मरणंलत्ताराहोः कार्यविनाशंभृगोर्वदति ॥
लत्तिका । स्त्री॰ गोधायाम् । लति : सौत्र : । कृदिभिदिलतिभ्य : कित्दितितिकन् ॥ लत्तायाम् ॥
लपनम् । न॰ आनने । मुखे ॥ लप्यतेनेन । लपव्यक्तायांवाचि । करणेल्युट् ॥ भाषणे ॥

लपितम् । न० वचने ॥ लप० । भावेक्तः । त्रि० उक्ते । कथिते ॥ लप्यतेस्म । लप० । क्तः ॥

लप्सिका । स्त्री० सर्पिः पयोभ्यां पक्वखाद्यवस्तुनि । लपसी० इतिख्यातायाम् ॥ सायथा । समितांसर्पिषाभृष्टांशर्करांपयसिक्षिपेत् । तस्मिन्घनीकृतेन्यस्येल्लवङ्गमरिचादिकम् ॥ सिद्धैषालप्सिकाख्यातागुणानस्यावदाम्यहम् ॥ लप्सिकाबृंहणीवृष्याबल्यापित्तानिलापहा । स्निग्धाश्लेष्मकरीगुर्वीरोचनीतर्पणीपरम् ॥

लब्धः । त्रि० प्राप्ते ॥ सातेभवतुसुप्रीतादेवीशिखरवासिनी । उग्रेणतपसालब्धोययापशुपतिः पतिरिति लभ्यतेस्म । डुलभष्प्राप्तौ ॥ क्तः ॥

लब्धप्रशमनम् । न० न्यायलब्धधनस्य सत्पात्रेप्रतिपादने ॥ राज्यस्यचिरलब्धस्यप्रशमनंपरिपन्थिनाम् । रक्षनप्रतिकाराभ्यांलब्धप्रशमनंविदुः ॥

लब्धलक्ष्यः । त्रि० आयुधविदि । लक्ष्यात्प्रच्युतशरे ॥ लब्धंलक्ष्यंयेन ॥

लब्धवर्णः । पुं० विचक्षणे ॥ विदुषि । पण्डिते ॥ लब्धोवर्णः स्तुतिर्येन ॥

लब्धव्यः । त्रि० प्राप्तव्ये । लभ्ये ॥

लब्धप्रवेशः । त्रि० प्राप्तप्रवेशे ॥

लब्धा । स्त्री० नायिकाभेदे ॥

लब्धिः । स्त्री० प्राप्तौ ॥ डुलभष्० । स्त्रियांक्तिन्नाबादिभ्यः ॥

लभसः । पुं० धने ॥ याचके ॥ वाजिबन्धनरज्जौ ॥ लभते । डुलभष्० । अत्यविचमितमौल्यादिना० असच् ।

लभ्यः । त्रि० युक्ते ॥ लब्धव्ये ॥ लभ्यते । डुलभष्० । पोरदुपधादितियत् ॥ लाभे ॥

लमकः । पुं० ऋषिविशेषे ॥ रमते । रम० । रमेरश्चलो० वेतिक्वुन् ॥

लम्पटः । पुं० षिड्गे ॥ मूर्खे ॥ यथा श्रीभागवते । यथैहिकामुष्मिककामलम्पटः सुतेषुदारेषुधनेषुचिन्तयन् । शङ्कत० विद्वान्कुकलेवरात्ययात्० यस्तस्ययत्नः श्रमएवकेवलमिति ॥ ऐहिकामुष्मिककामेषु० लम्पटोमूर्खः सुतादिषुयोगच्छेमं चिन्तयन्० कुत्सितस्यकलेवरस्य० अत्ययात् मृत्योः शङ्कते । तथाविद्वानपि सन्यः शङ्कते० तस्ययत्नः श्रमएवेत्यर्थः ॥ लोलुपे ॥

लम्पाकः । पुं० लम्पटे ॥ देशविशेषे ॥

लम्पापटहः । पुं० वाद्यप्रभेदे । पटहे ॥

लंफः । पुं० प्लुतगतौ । लांफ० इ० भा० ॥

लम्बः । पुं० नर्त्तके ॥ अङ्गे । कान्ते उत्कोचे ॥ अङ्गभेदे ॥ ज्योतिषोक्ते लम्बमानरेखासूत्रे ॥ त्रि० दीर्घे ॥ लम्बते । लबिअवस्रंसने । अच् ॥

लम्बकर्णः । पुं० अङ्कोठपादपे ॥

छगले । राक्षसे । हस्तिनि ।। श्ये नपक्षिणि ।। दीर्घश्रोत्रे ।। त्रि० दीर्घश्रोत्रवति ।।

लम्बकर्णी । स्त्री० गोविशेषे ।।

लम्बकेश: । पुं० विष्टरे ।। सतुविवाह कालेवरोपवेशनार्थं सार्द्धहितयवा-मात्रवर्त्तवलिताधोमुखाक्षसङ्ख्यातादर्भा: । यथा । ऊर्द्धकेशोभवेद्ब्रह्मा लम्बकेशस्तुविष्टर: । दक्षिणावर्त्त कोब्रम्हावामावर्त्तस्तुविष्टर: ।। केशो ऽस्यागम । त्रि० दीर्घकेशयुक्ते ।।

लम्बदन्ता । स्त्री० सैंहलीपिप्पल्याम । त्रि० बृहद्दशनविशिष्टे ।।

लम्बन: । पुं० कफे ।। लम्बते । लबि० । मन्द्यादित्वाल्ल्यु: ।। न० नाभिलम्बितकण्ठिकादौ । लल न्तिकायाम् ।।

लम्बमान: । त्रि० लम्बायमानेवस्तुनि ।।

लम्बबीजा । स्त्री० सैंहल्यांपिप्पल्याम् ।।

लम्बा । स्त्री० पद्मालयायाम । गौर्याम् ।। तिक्ततुम्ब्याम् ।। दक्षदुहितृविशेषे ।। हिमालयकन्याविशेषे ।

लम्बिका । स्त्री० घण्टिकायाम् । उपजिह्वायाम् । तालूर्द्धसूक्ष्मजिह्वायाम ।।

लम्बित: । त्रि० लम्बमानेमाल्यादौ ।। शब्दिते ।। स्रंसिते ।। लम्बते । लबि० । क्त: । इट् ।।

लम्बोदर: । पुं० श्रीगणेशे । गजानने ।। उदरामे ।। त्रि० वाद्यूने । औदरिके ।। लम्बमुदरंयस्यस: ।।

लम्बोष्ठ: । पुं० )

लम्बौष्ठ: । पुं० )उष्ट्रे त्रि० लम्बितौष्ठे ।। लम्बावोष्ठौयस्यस: । ओत्वोष्ठयो: समासे वा ।।

लम्भनम । न० प्रतिलम्भे । लाभे ।। ध्वनौ ।।

लम्भनीय: । त्रि० प्रापणीये ।।

लम्भा । स्त्री० वाटशृङ्खलायाम ।।

लम्भित: । त्रि० प्रयुक्ते ।। प्रापिते याचिते ।। लभेर्ण्यन्तात्कर्मणि क्त: । रभेरशब्लिटोरितिनुमागम: ।।

लम्भुक: । त्रि० लम्भनशीले । लब्धरि ।।

लय: । पुं० विनाशे ।। संश्लेषे ।। तौर्यत्रिकस्यसाम्ये । गीतवाद्यपादादिन्यासानांक्रियाकालयो: साम्ये ।। लयनम । लीङ्श्लेषणे । एरच ।। लीयन्तेस्मिन्यंतेषनेन वा । प्रलये ।। मोक्षे ।। लीयतेस्यानश्वयमस्मिन्निति० सुषुप्तौ ।। अखण्डवस्त्वनवलम्बनेनचित्तवृत्तेर्निद्रायाम ।। न० उशीरे । लीयते ।। लीङ् । पचाद्यच

लयनम् । न० गृहे । वेश्मनि ॥ लीयतेऽस्मिन् । लीङ् ल्युट् ॥

लयपुत्री । स्त्री० नर्त्तक्याम्

लयारम्भ : । ) पुं० सर्वे शिनिनटे ॥
लयालम्ब : । )

लल : । पुं० विलासे ॥ लडति । लडविलासे । ललतेवा । ललईप्सायाम् । पचाद्यच् । पूर्व्ववडलयोरैक्यम् ॥ ईप्सायाम् ॥

ललज्जिह्व : । पुं० क्रमेलके । उष्ट्रे ॥ शुनि ॥ त्रि० हिंस्रे ॥

ललत् । त्रि० विलासयुक्ते ॥ उन्मन्यनविशिष्टे ॥ जिह्वाक्रियाविशिष्टे ॥ सर्पे ॥ ललतेः कर्त्तरिशतृ ॥ ईप्साविशिष्टे ॥ उपसेवायुक्ते ॥ भाषणविशिष्टे ॥

ललदम्बु : । पुं० लिम्पाके ॥

ललन : । पुं० वाले ॥ साले ॥ प्रियाले ॥ न० केलौ ॥ चालने ॥ अति विस्तारवदनाजिह्वाललनभीषणा ॥

ललना । स्त्री० विशेषाङ्गनायाम् । कामिन्याम् । नारीभेदे ॥ जिह्वायाम् ॥ ललते । लल० चुरादीनां वाणिजितिपक्षे ल्युर्युज्वा ॥ लडति । लडविलासे । बहुलमन्यत्रापीतियुच् । डलयोरैक्यम् । टाप् ॥

ललनाप्रिय : । पुं० कदम्बे । कामिनीवल्लभे ॥ न० ह्रीवेरे ॥

ललन्तिका । स्त्री० लम्बने । नाभिलम्बिकण्ठिकायाम् ॥ किञ्चिदवलम्बमानकण्ठभूषणे ॥ लडति । लड० । लट : शतृ । उगितश्चेति ङीप् । डलयोरैक्यम् । ललन्त्येव । स्वार्थेकन् ॥ गोधायाम् ॥

ललाक : । पुं० मेहने ॥

ललाटम् । न० अलिके । गोधौ ॥ भाले ॥ ललंभ्रुवोरूपरिस्थाने । विलासमीप्सांवा० अटति० । अटगतौ । कर्मण्यण् ॥ लडतिललतेवा । लडललधातुभ्यांबाहुलकाट्टाटच् ॥ अस्यशुभाशुभलक्षणमुक्तंगारुडे यथा । उन्नतैर्विपुलैः शङ्खैर्ललाटैर्विषमैस्तथा । निर्द्धनाधनवन्तस्स्युरर्द्धेन्दुसदृशैर्नराः ॥ आचार्याः शुक्तिविशालैः शिरालैः पापकारिणः । उन्नताभिश्शिराभिस्तु स्वस्तिकाभिर्ज्जनेश्वराः ॥ निम्नैर्ललाटैर्व्वधार्हाःक्रूरकर्म्मरतास्तथा । संवृत्तैश्चललाटैश्चकृपणाउन्नतैर्नृपाः ललाटोपसृतास्तिस्रोरेखास्युः शतवर्षिणाम् । नृपत्वंस्याच्चतसृभिरयुः पञ्चनवत्यथ ॥ अरेखेणायुर्नवतिर्विच्छिन्नाभिश्चपुंश्चलाः । केशान्तोपगताभिश्चाशीत्यायुर्न्नरोभवेत् ॥ पञ्चभिः सप्तभिः षड्भिः पञ्चाशद्बहुभिस्तथा । चत्वारिंशच्चवक्राभिस्त्रिंशद्भ्रूलग्न

गामिभि : ॥ विंशतिर्वामबक्राभि रायु : चन्द्राभिरल्पकम् । नपृथू वालेन्दुनिभं भ्रुवौचाथललाटकम् ॥ शुभमर्द्धेन्दुसंस्थानमतुङ्गंस्याद शोमशम् । इति ६५ अध्याय : ॥

ललाटकम् । न० प्रशस्तललाटे ॥ ललाटमात्रे ॥

ललाटन्तप : । पुं० सूर्ये ॥ ललाटं तपति । तपसन्तापे । असूर्यंलला टयोरितिखश् । मुम् ॥

ललाटिका । स्त्री० स्वर्णादिकृतैभाल भूषणे । पत्रपाश्यायाम् । पानेपा टी० विन्दीवेना० टीकाटीकी०इ तिख्याते ॥ ललाटस्यालङ्कार: । ललाटेभवोऽलङ्कारोवा । कर्णल लाटात्कनलङ्कारे ।

ललामम् । न० पुं० लाञ्छने । ध्वजे ॥ शृङ्गे ॥ प्रधाने ॥ भूषाया म् ॥ रम्ये ॥ बालधौ ॥ पुण्ड्रे । अश्वादीनांभालेऽन्यवर्णचिह्ने ॥ तुरङ्गे ॥ प्रभावे । अश्वस्यभूषाया म् ॥ लडनम् । लडकान्त्यै० ल डविलासेवा । सम्पदादित्वात्किप् । डलयोरेकता । ललममतिअमग त्यादौ । कर्मण्यण् ॥

ललामकम् । न० पुरोभागेन्यस्ते ललाटपर्यन्तमागतेशिखालंबिमा- ल्ये ॥ ललाममिव । इवार्थेकन् ॥ मुण्डमालायाम् ।

ललाम । न० अश्वे ॥ चिह्ने ॥ शृ- ङ्गे ॥ पताकायाम् ॥ रम्ये ॥ प्रधा ने ॥ भूषायाम् ॥ पुण्ड्रे ॥ पुच्छे ॥ प्रभावे लडनम्० लल् । लल मात्रमति । अम० । बाहुलकात् कनिन् ॥

ललामी । स्त्री० उत्तंसिकायाम् । कर्णाभरणविशेषे ॥

ललित : । पुं० प्रातर्गेयेरागविशेषे ॥ यथा । प्रातर्गेयास्तुदेशागौललि त : पठमञ्जरी । विभाषाभैरवीचै वकामोदीगौडकौर्यपि ॥ अस्यस्व रूपंयथा । प्रफुल्लसप्तच्छदमाल्यधा रीयुवातिगौरोऽलसलोचनश्री : । त्रिनि : सरन्वासगृहात्प्रभातेवि लासिवेशोललित: प्रदिष्ट: ॥ न० स्त्रीणांशृङ्गारभावजक्रियाविशेषरू- पेहावविशेषे ॥ सुकुमारविधानेनभ्रू नेत्रादिक्रियासचिवकरचरणाङ्गवि न्यासोललितम् । तथाच । सुकु माराङ्गविन्यासेमसृणाललितंभवेत् । यथा । सभ्रूभङ्गंकरकिशलयाव- र्त्तनैरापतन्तीसालिम्पन्तीललित- ललितालोचनस्याञ्चलेन । विन्य स्यन्तीचरणकमलेलीलयास्वैरयाते- नि : शङ्काचप्रथमवयसानर्त्तिताप ङ्कजाक्षी ॥ भ्रूनेत्रादिक्रियाशालि सुकुमारविधानत : । हस्तपादाङ्ग विन्यासस्तत्कथ्याललितंविदुरित्यन्ये

पि ॥ अनाचार्योपदिष्टं स्याल्ललितं रतिचेष्टितमित्यन्ये । अपिच । विन्यासभङ्गिरङ्गानांभ्रूविलासमनोहरा । सुकुमाराभवेद्यत्रललितंतदुदीरितम् ॥ विषमवृत्तप्रभेदे । यथा । नयुगसकारयुगलश्चभवतियदिचेत्तृतीयके । तदुदितमुरुमतिभिर्ललितंयदिशेषमस्यसकलंयथोक्तता ॥ यथा । व्रजसुन्दरीसमुदयेनमुदितमनसास्मपीयते । हिमकरगलितमिवामृतकंललितंमुरारिमुखचन्द्रबिम्बजम् ॥ वि॰ ईप्सिते ॥ कोमले ॥ ललिते । मधुरे ॥ लडेर्ललिर्वाभावेक्तः । डलयोरभेदः ॥ सुन्दरे ॥

ललितकान्ता । स्त्री॰ मङ्गलचण्डिकायाम् ॥

ललिता । स्त्री॰ देवीविशेषे ॥ गोपीविशेषे ॥ नदीविशेषे ॥ सागराद्दक्षिणात्पूर्वंमहादेवावतारिता । वैशाखशुक्लपक्षस्यतृतीयायांनरस्तुयः । कुर्य्याद्वैललितास्नानंसशम्भुसदनंव्रजेत् ॥ कस्तूर्याम् ॥ लपसिकाभेदे ॥ मेघरागस्यरागिण्याम् ॥

ललितासप्तमी । स्त्री॰ भाद्रशुक्लसप्तम्याम् ॥

ललितिका । स्त्री॰ शार्म्मनुतीर्थे ॥

लल्ल: । पुं॰ आचार्य्यविशेषे । वराहमिहिरसुते ॥

लव: । पुं॰ लेशे ॥ विनाशे । छेदने कालभेदे । अष्टादशनिमेषास्तुकाष्ठाद्वयंलवइतिहेमचन्द्रोक्तं ॥ पक्षिविशेषे । लवा॰ इ॰ भा॰ प्र॰ गोपुच्छलोमसु ॥ रामनन्दने ॥ लवो मृष्टोलव: । वाल्मीकिना॰ लवैर्गोपुच्छलोमभिरुन्मृष्टोगर्भक्लेदो-यस्य ॥ नाशे ॥ लवनम् ॰ लूयते वा । लूञ् छेदने । अप् ॥ विलासे । इतिविनाशस्थानेपाठोविश्वहेमचन्द्रयो: सम्मत: ॥ न॰ लामज्जके ॥ जातीफले ॥ लवङ्गे ।

लवङ्गम् । न॰ देवकुसुमे । श्रीसंज्ञे । श्रीपुष्पे । वारिसम्भवे । भृङ्गारे । लौंग॰ इ॰ भा॰ प्र॰ ॥ गुणास्तु । लवङ्गंकटुकंतिक्तंलघुनेत्रहितंमतम् । दीपनंपाचनंरुच्यंकफपित्तास्त्रनाशकृत्॥ तृष्णांछर्दिंतथाध्मानंशूलमाशुविनाशयेत् । कासंश्वासञ्चहिक्काञ्चक्षयंक्षपयति ध्रुवम् ॥ लुनाति॰ लूयतेवा । लूञ्॰ । तरत्यादिभ्यश्चत्यङ्गच् ॥

लवङ्गकम् । न॰ ) लवंगे
लवंगकलिका । स्त्री॰ )

लवंगलता । स्त्री॰ पुष्पविशेषे । गन्धराजइतिकथित ॥

लवण: । पुं॰ समुद्रविशेषे ॥ राक्षसभेदे । लवणासुरे ॥ रसविशेषे । पटौ ॥ पृथ्व्यग्निगुणबाहुल्याल्लव

वाष्पघसम्भव:। अस्य गुणा यथा। लवण: शोधनो रुच्य: पाचन: कफपित्तद:। पुंस्त्ववातहर: कायशैथिल्यमृदुताकर:॥ सोऽतियुक्तोऽक्षिपाकास्रपित्तकोष्ठक्षयापकृत्॥ अपिच। लवणो रुचिकृद्द्रसोऽग्निदायी पचन: स्वादुकरश्च। रसितो नितरां जरास्रपित्तं शितिमानश्च ददाति कुष्ठकारी॥ पुनश्च। लवण: क्लेदनस्तीक्ष्ण: पाचनो दीपन: सर: स्निग्धो रुचिकर: स्यन्दी दृष्टिशुक्रहरो लघुरिति॥ पुनश्च। अस्थिभेदे॥ न० सैन्धवादौ॥ तथाहि। सामुद्रं यत्तु लवणमक्षीवं वशिरश्च तत्। सैन्धवोऽस्त्री शीतशिवं माणिमन्थश्च सिन्धुजे॥ रौमकं वसुकं पाक्यं विडञ्च कृतके द्वयम्। सौवर्चलेऽक्षरुचके तिलकं तत्र मेचके इत्यमर:। लवणं नेत्रयोर्हितं प्रायश: सैन्धवं विमेति विशेष: पूर्वाह्णकाले चाश्वानां प्रायशो लवणं हितम्। शूलानाहविबन्धघ्नं लवणं सैन्धवं वरमिति सिद्धयोगीश्वरसङ्ग्रह:। त्रि० लवणरसयुक्ते। सलवणे। सलूणा० इ० भा०॥ लुनाति जाड्यम्। लूञ्०। नन्द्यादित्वाल्ल्यु:। लवणाल्लुगिति लिङ्गात्सत्त्वम्॥ लवणेन संसृष्ट:। लवण: सूप:० लवणा यवागू:०

लवणं शाकम्। संसृष्टेर्थे जातश्च ठक्। लवणाल्लुगिति लुक्॥ लवणो ऽस्त्यस्मिन् वा। अर्श आद्यच्॥

लवणकिंशुका। स्त्री० महाज्योतिष्मत्याम्॥

लवणक्षार:। पुं० क्षारविशेषे। लोणारे॥

लवणखानि:। स्त्री० रुमायाम्। सांभरलवणोत्पत्तिस्थाने॥ लवणाकरमात्रे॥

लवणतृणम्। न० लोणतृणे। तृणाम्ले। पटुतृणके। अम्लकाण्डे॥

लवणत्रयम्। न० बिड्रुचकसैन्धवेषु॥

लवणधेनु:। स्त्री० दानार्थं लवणादिनिर्मितधेनौ॥

लवणपञ्चकम्। न० सैन्धवादिषु॥ सैन्धवं रुचकञ्चैव विडं सामुद्रकं गडम्॥

लवणमद:। पुं० लोणारे। लवणक्षारे॥

लवणा। स्त्री० नदीविशेषे। त्विषि महाज्योतिष्मत्याम्॥ लोनाख्यद्रव्ये० इति कश्चित्॥

लवणाकर:। पुं० लवणोत्पत्तिस्थले॥ रुमायाम्॥

लवणाकरजम्। न० लोणारे॥

लवणाचल:। पुं० दानार्थं लवणादिकृतपर्वते॥

लवणाब्धि: । पुं॰ लवणोदे । क्षारा ब्धौ ॥

लवणाब्धिजम् । न॰ सामुद्रलवणे ॥

लवणाम्भाः । पुं॰ लवणाब्धौ॥ लवणं क्षारमम्भोयस्य ॥

लवणारजम् । न॰ लोणारक्षारे ॥

लवणाष्टकम् । न॰ सैन्धवादिषु ॥ तेयथा ।लवणाष्टकमेतत्तु सैन्धवञ्च सुवर्चलम् । विड' समुद्रसञ्जातमुद्भि द'रोमकं गडम् ॥

लवणोत्तमम् । न॰ सैंधवे ॥

लवणोत्थम् । न॰ लोणारक्षारे ॥

लवणोद: । पुं॰ लवणार्णवे ॥ लव णमुदकं यस्य । उत्तरपदस्यचेत्युद कस्योदादेश: ॥

लवनम् । न॰ छेदने । अभिलावे । लूणनाइति भाषाप्रसिद्धे ॥ लूञ्॰ ल्युट् ॥

लवनी । स्त्री॰ फलवृक्षविशेषे । यो षिज्जायाम् । अयिमायाम् । लोना॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

लवपति: । पुं॰ नवांशेशे ॥

लवली । स्त्री॰ सुगन्धमूलायाम् । कोमलवल्कलायाम् । नोयाडि॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ फलवृक्षे ॥ अस्यफलगुणायथा । लवलीफल मस्तार्श: कफपित्तहरं गुरु । विश द'रोचनं रूक्ष' स्वाद्वम्लं तुवरं रसे ॥

लवाक: । पुं॰ छेदनद्रव्ये ॥

लवाणक: । पुं॰ दात्राटौ ॥ लूयतेऽनेन । लूञ्॰ । आणकोलूधूशि ङ्घिधाञ्भ्यइत्याणक: ॥

लवि: । त्रि॰ छिदुरे ॥

लवित्रम् । न॰ दात्रे ॥ लूयतेऽनेन । अर्त्तिलूधूत्यादिना॰ इत्र: ॥

लशुन: । पुं॰ न॰ रसोने ॥ अस्यप र्यायादयोयथा । रसोनोलशुनोरि ष्टोम्लेच्छकन्दोमहौषधम् । महाक न्दोरसोनोन्योगृञ्जनोदीर्घपत्रक: ॥ गन्धाकृतिरसैस्तुल्योगृञ्जनस्तुप लाण्डुना । दीर्घनालाग्रपत्रत्वाद् भिद्यतेसौपलाण्डुत: ॥ अश्नाति ॰ अश्नुतेवा । अशभोजने॰ अशू व्याप्तौवा । अशेर्लश्चेत्युनन् ॥

लष्व: । पुं॰ नर्त्तके ॥ लष्यते । लष कान्तौ । सर्वनिघृष्वेतिसाधु: ॥

लसत् । त्रि॰ उल्लसति ॥ प्रकाशमा ने ॥

लसमान: । त्रि॰ दीप्यमाने ॥

लसा । स्त्री॰ हरिद्रायाम् ॥

लसिका । स्त्री॰ लालायाम् ॥

लसितम् । न॰ चेष्टिते ॥

लसीका । स्त्री॰ इक्षुरसे ॥ त्वङ्मांस मध्यगेरसे ॥

लस्त: । त्रि॰ श्लिष्टे ॥ क्रीडिते ॥ शि ल्पयुक्ते ॥ लस्यतेस्म । लसश्लेष णक्रीडनयो: । क्त: ॥

लस्तक: । पुं॰ धनुर्षोमध्यभागे ॥

स्वार्थे कन् ॥

लस्तकी । पुं० कार्मुके । धनुषि ॥

लहरिः । स्त्री० )
लहरी । स्त्री० ) तरङ्गे ॥ महातरङ्गे । उल्लोले ॥ कल्लोले ॥

ला । स्त्री० दाने । ग्रहणे ॥ लातिः क्विप् ॥

लाक्षकी । स्त्री० सीतायाम् ॥

लाक्षणिकः । त्रि० लक्षणाभिज्ञे ॥ लक्षणमधीते० वेदवा । क्रतूक्थादिसूत्रान्ताट्ठक् ॥ लक्षणयाप्रतिपादके । लक्षणागम्यार्थे ॥

लाक्षा स्त्री० राक्षायाम् । जतुनि । यावे । अलक्ते । द्रुमामये ॥ लाक्षा वर्ण्या हिमा बल्या स्निग्धा च तुवरा लघुः । अनुष्णा कफपित्तास्रहिक्काकासज्वरप्रणुत् । व्रणोरःक्षतवीसर्पक्रिमिकुष्ठगदापहा । अलक्तको गुणैस्तद्वद्विशेषाद्व्यङ्गनाशनः ॥ लाक्ष्यते । लक्ष शिल्पयोगे चुरादिः । बाहुलकात्सः । यद्वा लक्ष्यते । लक्ष आलोचने । घञ् । पृषोदरादित्वात् । लाक्षारोचनेतिनिर्देशाद्दीर्घः । लक्ष्यतेऽनयाऽश्वा । गुरोश्च हलः । प्रत्ययाण् । अजादित्वाट्टाप् ॥

लाक्षातरुः । पुं० पलाशवृक्षे ॥

लाक्षातैलम् । न० लाक्षादितैलमिति प्रसिद्धे पक्वतैलविशेषे ॥ तद्द्विविधं स्वल्पं बृहच्चेति ॥

लाक्षापुष्पा । स्त्री० गुलाबाख्यशतपत्र्याम् ॥

लाक्षाप्रसादः । पुं० पट्टिकालोध्रे ॥

लाक्षाप्रसादनः । पुं० रक्तलोध्रे । क्रमुके । पट्टिकायाम् ॥ लाक्षाप्रसीदत्यनेन । षद्लृ० । करणेति ल्युट् ॥

लाक्षावृक्षः । पुं० कोशाम्रे ॥ पलाशवृक्षे ॥

लाक्षिकः । पुं० लक्षाभिज्ञे ॥

लाक्ष्यिकः । पुं० लक्ष्याभिज्ञे । अध्येतरि वेदितरि च० क्रतूक्थादिसूत्रलक्ष्यानुसूलं लक्षणं ० इति वार्त्तिकात् ठक् ॥

लाघवम् । न० आरोग्ये ॥ अप्रभुत्वे अनादरविषये । लघिमनि ॥ कार्यक्षमत्वे हेतुर्भौतिलाघवम् ० गौरवप्रतिद्वन्द्वि यतोऽग्नेरूर्ध्वज्वलनम् भवति । तदेव लाघवं क्वचित् तिर्यग्गमनहेतुः यथा वायोः । यथा कारणानां भूमिपटत्वहेतुर्लाघवम् ० गुरुत्वे मन्दाग्निरिति ॥ सत्वगुणे । लघोर्भावः । इगन्ताच्चलघुपूर्वादित्यण् ॥

लाङ्गजम् । न० कुसुमविशेषे । भूमिकर्षणयन्त्रविशेषे । गोदारणे

। सीरे । हले ॥ तृणराजे । ताले ॥ गृहदारुविशेषे ॥ लिङ्गे ॥ लङ्गति । लगिगतौ । बाहुलकात्कलच्॰ दीर्घश्च ॥

लाङ्गलग्रहः । पुं॰ कृषके ॥

लाङ्गलचक्रम् । न॰ कृषिकर्मणि हलाकारे चक्रविशेषे ॥

लाङ्गलदण्डः पुं॰ ईषायाम् । हलयुगयोर्मध्यकाष्ठ ॥ लाङ्गलस्य दण्डः ॥

लाङ्गलपद्धतिः । स्त्री॰ सीतायाम् । हलरेखायाम् ॥ लाङ्गलस्य पद्धतिः ॥

लाङ्गलिकः पुं॰ स्थावरविषभेदे ॥

लाङ्गलिका । स्त्री॰ लाङ्गलीवृक्षे ॥

लाङ्गलिकी । स्त्री॰ अग्निशिखौषधौ ॥ लाङ्गलं पुष्पविशेषोऽस्त्यस्याः । अतइनिठनाविति ठन् । जातेरिति गौरादित्वाड्ङीष् ॥

लाङ्गली । पुं॰ बलदेवे ॥ हलिनि ॥ नारिकेले ॥ सर्पे ॥ लाङ्गलमस्त्यस्य । इनिः ॥

लाङ्गली । स्त्री॰ लाङ्गलाकारपुष्पजलशाकविशेषे । शारद्याम् । तोयपिप्पल्याम् ॥ कांचडा॰ इ॰ गौ॰ दे॰ भा॰ लाङ्गलाकारोऽस्त्यस्याः । अच् । गौरादिः ।

लाङ्गुलम् । न॰ पुच्छे ॥

लाङ्गुली । पुं॰ कपिकच्छ्वाम् ॥

लाङ्गूलम् । न॰ पुच्छे । लूने । बालहस्ते । बालधौ ॥ लङ्गति । लगि॰ । खर्जपिञ्जादिभ्य ऊरोलचाविति ऊलच्॰ लङ्गेर्वृद्धिश्च ॥ शेफसि । शिश्ने ॥ कुसूले ॥

लाङ्गूलिका । स्त्री॰ पृश्निपर्ण्याम् ॥

लाङ्गूली । पुं॰ वानरे ॥ ऋषभनामौषधौ ॥

लाजः । पुं॰ आर्द्रतण्डुले ॥

लाजाः । पुं॰ भूम्निअक्षते । भृष्टधान्ये ॥ एते चव्रीहयो भृष्टास्ते लाजा इति संज्ञिताः । यवाद्यस्तथा भृष्टास्ते धानाः परिकीर्त्तिताः ॥ लाजाश्च यवधानाश्च तर्पणाः पित्तनाशनाः । गोधूमयावनालीत्थाः किंचिदुष्णाश्च रोपनाः । तृष्णातीसारशमनो धातुसाम्यकरः परः मन्दाग्निविषमाग्नीनां बालस्थविरयोः पिताम ॥ देयश्च सुकुमाराणां लाजमण्डः सुसंस्कृतः ॥ अपिच । येषांस्युस्तण्डुलास्तानिधान्यानि सतुषाणि च । भृष्टानि स्फुटितान्याहुर्लाजा इति मनीषिणः लाजाः स्युर्मधुराः शीतालघवो दीपनाश्च ते स्वल्पमूत्रमलारूक्षा बल्याः पित्तकफच्छिदः ॥ छर्द्यतीसारदाहास्रमेहमेदस्तृषापहाः ॥ न॰ उशीरे ॥ लज्यंते । लज भर्जने ॥ घञ् ॥

लाजा । स्त्री॰ अक्षते ॥

लाञ्छनः । पुं॰ रागौधान्ये ॥ न॰

नामनि ॥ चिह्ने ॥ लाञ्छयति । लाञ्छितश्वर्णे ल्युट् ॥

लाट: । पुं॰ देशविशेषे । सय था । अवन्तीत: पश्चिमेतुवैदर्भा हृतिखोत्तरे । लाटदेश: समाख्या तस्तंत्र शोभक्तिसङ्गमे ॥ अंशुके । वस्त्रे ॥ जीर्णभूषणादिषु ॥

लाटानुप्रास: । पुं॰ शब्दालङ्कारेषुवृत्तिप्रभेदे ॥ यथा शब्दस्तु लाटानुप्रासोभेदेतात्पर्यमात्रत: ॥ शब्दगतोनुप्रास: । शब्दार्थयोरभेदेप्यन्वयमात्रभेदाल्लाटजनवल्लभत्वाच्च॰लाटानुप्रास: ॥ एषपदानुप्रासइत्यन्ये । पदानांस: । सङ्गति लाटानुप्रास: उदाहरणम् । यस्य नसविधे दयितादवदहनस्तुहिनदीधितिस्तस्य । यस्यचसविधेदयितादवदहनस्तुहिनदीधितिस्तस्य ॥ पदस्यापि ॥ अपिशब्देनसङ्गतिसमुच्चीयते । उदाहरणम् । वदनंवरवर्णिन्यास्तस्या: सत्यंसुधाकर: । सुधाकर: क्वनुपुन: कलङ्कविकलोभवेत् ॥

लाप: । पुं॰ कथने । लपनम् । लप॰ । घञ् ॥

लाभ: । पुं॰ मूलधनादधिकार्जिते । विक्रेयपटादीनांमूल्यादधिकया प्तद्रव्ये । फले । इष्टप्राप्तौ ॥ आत्मलाभात्परोलाभो नास्तीति विदुषांमतम् ॥ प्राप्तौ ॥ लभ्नादेकादशस्थाने ॥ लभ्यते । डुलभष प्राप्तौ । भावेकर्तरीतिघञ् । संज्ञायामित्यस्यप्रायिकत्वात् ॥ उत्कृष्टपुरुषार्थलाभे सम्भवत्यधमंकामयमानोमूर्ख: ॥

लामज्जकम् । न॰ वीरणमूले । नलदे । उशीरवत्पीतच्छविलघुविशेषे ॥ लामज्जकंहिमंतिक्तंलघुदोषत्रयास्रजित् । त्वगामयस्वेदकृच्छ्रदाहपित्तास्ररोगनुत् ॥

लालनम् । न॰ अत्यन्तस्नेहकरणे । प्रेमपूर्वकबालकादरणे ॥ यथा । लालनेबहवोदोषास्ताडनेबहवोगुणा: । तस्मात्पुत्रश्चशिष्यश्चताडयेन्नतुलालयेत् ॥ चतुर्वर्षावधि सुतान्लालयेत्पालयेत्पिता । तत: षोडशपर्यन्तंगुणान्विद्याश्च शिक्षयेत् ॥ विंशत्यब्दाधिकान्पुत्रान्प्रेरयेद्गृहकर्मसु । ततस्तांस्तुल्यभावेनमत्वास्नेहंप्रदर्शयेत् ॥

लालस: । पुं॰ लालसायामर्थेषु । त्रि॰ उत्सुके । भृशंलसनमित्यर्थेयङन्तादच: ॥

लालसा । स्त्री॰ औत्सुक्ये । तृष्णातिरेके ॥ महाभिलाषे ॥ याञ्चायाम् । लोले ॥ दोहदे ॥ लस ईप्सायाम् । औणादिकोऽसच् ॥ यद्वा । लसकान्तौ । भृशंलसन

मित्यर्थे यङ्लुकाट् : । टाप् ॥ यद्वा । ललसनम् । ललसदीप्तौ । यगन्तः । अप्रत्ययात् । टाप् ॥

लालसीकम् । न० पिच्छिले ॥ विजिले ॥

लाला । स्त्री० सृणिकायाम् । स्यन्दिन्याम् । मुखस्रावे । लाल० इ० भा० ॥ लालयति । लल० । चुरादिः । पचाद्यच् ॥

लालाटिकः । पुं० आज्ञाषयविशेषे ॥ मौहूर्त्तिकानांयोगविशेषे ॥ यथा । लग्ने १ र्के व्ययलाभयो १२ । ११ र्भृगुसुतेकर्मस्थिते १० भूमिजे० राहौधर्मविनाशयो ९ । ८ रविसुते । द्यूने ७ ऽ रिसून्वो ६ । ५ विधौ । बन्धौ ४ ज्ञे० सहजार्थयोः ३ । २ सुरगुरावेवंललाटोद्भवयोगेनाशमुपैतिमानवपतिः पूर्वादिकाष्ठांगतः ॥ यथालग्ने सूर्यस्थितेसतिपूर्वस्यांलालाटिकोयोगः स्यात् । एवंद्वादशेकादशस्थानस्थितेशुक्रे० आग्नेय्याम् । दशमस्थिते कुजेदक्षिणस्याम् । नवमाष्टमस्थानस्थे राहौनैरृत्याम् । सप्तमस्थे शनौपश्चिमायाम् । षष्ठपञ्चमस्थानस्थितेविधौवायव्याम् । चतुर्थस्थानस्थितेबुधे उत्तरस्याम् । तृतीयद्वितीयस्थानस्थितेगुरावैशान्यांलालाटिकोयोगः ॥ इति । एवंललाटोद्भवयोगेपूर्वादिदिशाङ्गतोनाशमुपैतीत्यर्थः ॥ प्रकारान्तरञ्च यथा । दिनेशाधिष्ठितोराशिर्यदालग्नगतस्तदा । यातुर्मृत्युप्रदः प्राच्यांदिशिसूर्योललाटगः ॥ सूर्यस्थराशितस्तस्माद्द्वादशेलग्नगेगृहे । एकादशेवाग्नेय्यांदिशिशुक्रोललाटगः ॥ ललाटगः कुजोयाम्येदशमेलग्नगेगृहे ॥ लग्नगेनवमे राशावष्टमेवापिनैरृते । ललाटगः सैंहिकेयोयातुर्द्राक्निधनप्रदः ॥ लग्नगेसप्तमेराशौशनिः प्रत्यग्ललाटगः । षष्ठराशौलग्नगतेपञ्चमेवापिचन्द्रमाः । ललाटगोवायुदिशियातुर्मृत्युप्रदस्तदा ॥ चतुर्थराशौलग्नस्थेबुधः सौम्येललाटगः । राशौतृतीयेलग्नस्थेद्वितीयेचन्द्रपूजितः । ललाटगश्चन्द्रमौलिर्दिशियातुर्विनाशदः । लालाटिनिर्दिगधीशेदिग्बलिविहगेललाटगेवापि । प्रतिभृगुजेप्रतिशशिजेकालाशुद्धौचसन्त्यजेद्यात्राम् ॥ स्पष्टमाहमात्तण्डे । लग्नऽर्केन्दुजशुक्रसौरिगुरवः प्राग्दिव्ययेविद्भृगूखेशुक्रार्ककुजेन्दुजा अशुतपो मृत्योः सितज्ञासुराः । द्यूनेशुक्रकुजार्कजारिपुसुतेचन्द्रज्ञशुक्राः सुखे चैतेस्वविकयोः सितज्ञगुरवः प्राच्यादिलालाटिनः ॥ चि० प्रभेभार्

लद्दर्शिभिसेवके । प्रभुभावनिदर्शिनि ॥ ललाटंकोपप्रसादचिह्नं ललाटमेववापश्यति । संज्ञायांललाटकुक्क्योपश्यतीतिठक् ॥ कार्याक्षमेसेवके ॥ दूरेस्थित्वाप्रभोर्ललाटंपश्यतिनतुकार्येषूपतिष्ठत इत्यर्थः ॥ त्रि॰ ललाटसम्बन्धिनि ॥

लालाभक्ष :। पुं॰ नरकविशेषे ॥

लालामिक :। त्रि॰ ललामग्राहिणि ॥ ललामंगृह्णाति । प्रतिकण्ठार्थललाम्बेतिठक् ॥

लालामेह :। पुं॰ प्रमेहविशेषे ॥ यथा । लालातन्तुयुतंमूत्रंलालामेहेनपिच्छिलम् । प्रमेहतीतिशेष : औषधन्तु । गुडूच्या : स्वरस : पेयोमधुनासर्वमेहजित् । हरिद्राचूर्णयुक्तोवारसोधात्र्या : समाक्षिक : ॥

लालाविष :। पुं॰ लूतादौ ॥

लालास्राव :। पुं॰ ऊर्णनाभे ॥

लालिक :। पुं॰ महिषे ॥

लालित : त्रि॰ पालिते ॥ उपस्कृते ॥

लालित्यम् । न॰ ललितस्यभावे ॥ ष्यञ् ॥

लाव :। पुं॰ पक्षिविशेषे । लवा॰ इ॰ भा॰ प्र॰ ॥ अस्यप्रभेदामांसगुणाश्चयथा । लावाविष्किरवर्गस्यास्तेचतुर्धामताबुधै : । पांशुलोगौरकोन्योस्तिपौण्ड्रकोदर्भकस्तथा ॥ लवाविष्किका : स्निग्धाज्वरघ्नायाहिणोहिमा : । पांशुल : श्लेष्मलस्तेषुवीर्योष्णो निलनाशन : ॥ गौरोलघुतरोरूक्षोवह्निकारीत्रिदोषजित् । पौण्ड्रक : पित्तकृत्किञ्चिल्लघुर्शीतकफापह : ॥ दर्भकोरक्तपित्तघ्नोहृद्रामयहरोहिम : पौण्ड्रक : किञ्चिद्रक्त : ॥ लावयति । लूञ् ॰ । स्वार्थेण्यन्त : । अच् । छेदे ॥

लावक :। पुं॰ लावपक्षिणि । लघुजङ्घले ॥

लावणम् । न॰ लवणे ॥ नस्ये ॥ इतिरत्नमाला ॥ त्रि॰ लवणेनसंस्कृते ॥ इतिहेमचन्द्र : ॥ लवणसम्बन्धिनि ॥

लावणिक :। पुं॰ लवणवणिजि ॥ लवणंपण्यमस्य । लवणाट्ठञ् ॥ त्रि॰ लावण्यवति ॥ लावण्यंकान्तिविशेषोस्यास्ति । अतइनिठनाविति ठन् । ठस्येक : । यस्येतिचेत्यकोपेहलस्तद्धितस्येतियलोप : ॥ लवणेनसंस्कृते ॥

लावण्यम् । न॰ कान्तिविशेषे ॥ तस्यलक्षणंयथा । मुक्ताफलेषुच्छायायास्तरलत्वमिवान्तरा । प्रतिभातियदङ्गेषुलावण्यंतदिहोच्यते ॥ लवणात्विट्विदातेयस्यतल्लवणम्

। वर्णादिभ्योऽच् । लवणस्य भावः । दृढादित्वात् ष्यञ् ॥ यद्वा । लवणात् ठिट् । सैव । चतुर्वर्णादित्वात् स्वार्थे ष्यञ् ॥ रूपे ॥

लावण्यार्जितम् । न० विवाहकाले श्वशुराभ्यां दत्तधने ॥ यथा । प्रीत्या दत्तञ्च यत् किञ्चित् श्वश्र्वा वा श्वशुरेण वा । पादवन्दनिकं यत् तत् लावण्यार्जितमुच्यते ॥ लावण्यं शीलनं पुण्यादि० तथाच पादप्रणतायै शीलादिमत्यै वा स्त्रियै श्वशुरादिना दत्तं तृतीयं स्त्रीधनमित्यर्थः ॥

लावा । स्त्री० लावपक्षिणि ।

लाबुः । ) स्त्री०
लाबुकम् । ) न० तुम्ब्याम् ।

लाबुका । स्त्री० तुम्बिकाभेदे ॥

लाबुकी० सूचवीणायाम् ॥ इ० हा० ली० ॥

लाबू । स्त्री० तुम्ब्याम् ॥

लाषुकः । त्रि० लषनशीले ॥ लष्यति० लषति वा तच्छीलः । लषकान्तौ ॥ लषपतपदेत्युकञ् ॥

लासः । पुं० नृत्यमात्रे ॥ स्त्रीणां नृत्ये । यूषे ॥ लसनम् । लस श्लेषक्रीडनयोः । घञ् ॥

लासकः । पुं० लास्यकारिणि । नर्त्तके ॥ केकिनि । मयूरे ॥ वेष्टके ॥ लसति । लस० ण्वुल् ॥

लासिका । स्त्री० नृत्यकारिण्याम् ॥ नर्त्तक्याम् । लसति । लस० ण्वुल् । प्रत्ययस्थादितीत्वम् ॥

लास्फोटनी । स्त्री० आस्फोटन्याम् । वेधनिकायाम् ॥

लास्यम् । न० नृत्ये । सुकुमारनृत्ये । ताललयाश्रये ॥ पुंनृत्यं ताण्डवं प्राहुः स्त्रीनृत्यं लास्यमुच्यते ॥ अपिच । छुरितं यौवतञ्चेति लास्यं द्विविधमुच्यते । यत्राभिनयाद्यैर्भावै रसैराश्लेषचुम्बनैः ॥ नायिकानायकौ रङ्गे नृत्यतश्छुरितं हि तत् । मधुरं बहुलीलाभिर्नटीभिर्यत्र नृत्यते ॥ वशीकरणविद्याभं तल्लास्यं यौवतं मतमिति ॥ लस० । ऋहलोर्ण्यत् ॥ तौर्यत्रिके ॥ पुं० नर्त्तके ॥

लास्यकम् । न० नृत्ये ॥

लास्या । स्त्री० नर्त्तक्याम् ॥

लिकुचः । पुं० लकुचे । डहौ । बड़हलइ० भा० प्र० ॥ लक्यते । लक आस्वादने । बाहुलकादुचप्रत्ययः । पृषोदरादिः ॥ न० चुक्रे ॥

लिक्का । स्त्री० लिक्षायाम् ॥

लिक्षा । स्त्री० यूकाण्डे । लिक्षिकायाम् । लीक० लीख० इ० भा० प्र० केशकीटे । यूकाभेदे ॥ लक्ष्यते । लक्ष आलोचने । घञ् । पृषोदरादित्वादस्य त्वम् ॥ परि

मानविशेषे । कचायाष्टके ॥ यथा । त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः । इति मनुः ॥ अपि च । जालान्तरगते भानौ यच्चाणु दृश्यते रजः । तैश्चतुर्भिर्भवेल्लिक्षा लिक्षाषड्भिस्तु सर्षप इति ॥

लिक्षिका । स्त्री॰ लिक्षायाम् ॥

लिखनम् । न॰ लेखने ॥ अखण्डनीयायां विधिलिपौ ॥ यथा । यद्यस्य लिखनं पूर्वं यत्र काले निरूपितम् । तद्देवखण्डितुं राधे क्षम्यो नाहञ्च को विधिः ॥ विधातुश्च विधाताहं येषां यल्लिखनं कृतम् । ब्रह्मादीनाञ्च क्षुद्राणां न तत् खण्ड्यं कदाचन ॥ इ॰ ब्र॰ वै॰ पु॰ ॥

लिखितः । पुं॰ धर्मशास्त्रप्रवर्त्तकमुनिविशेषे ॥ न॰ वर्णसंस्थाने । लिपौ ॥ लिख्यते स्म । लिख अक्षरविन्यासे । क्तः ॥ त्रि॰ लिखितपत्रादौ ॥ यथा । प्रमाणं लितं भुक्तिः साक्षिणश्चेति कीर्त्तितम् ॥ इति मिताक्षरायां याज्ञवल्क्यः ॥

लिखिताक्षरविन्यासः । पुं॰ लिपौ ॥

लिगुः । पुं॰ मूर्खे ॥ भूप्रदेशे ॥ मृगे ॥ न॰ चित्ते ॥ लिगति । लगि सङ्गे । खरुशङ्क्विति कुप्रत्ययान्तः साधुः ॥

लिङ्गम् । न॰ चिह्ने ॥ शिवमूर्त्तिविशेषे ॥ यथा । नेह लिङ्गार्च्चनात् किञ्चित् पुण्यमभ्यधिकं क्वचित् । इति विज्ञाय यत्नेन पूजनीयः सदाशिवः ॥ तथा । दुर्गार्च्चनरतो नित्यं महापातकसम्भवैः । दोषैर्न लिप्यते वीर पद्मपत्रमिवाम्भसेत्याचारादर्शे भविष्यपुराणम् ॥ साङ्ख्योक्तप्रकृतौ ॥ हेतौ ॥ धर्म्मे ॥ व्याप्ये । व्यापकस्य स्मारके ॥ व्यक्ते ॥ तच्च लिङ्गं प्रधानस्य । महदादि सूक्ष्मपर्य्यन्ते ॥ लिङ्गनाज्ज्ञापनात् बुद्ध्यादिषु । लयङ्गच्छतीति॰ सूक्ष्मशरीरे । पञ्चज्ञानेन्द्रियाणि॰ पञ्चकर्म्मेन्द्रियाणि॰ पञ्चप्राणाः मनोबुद्धिश्चेति सप्तदशात्मके ॥ यथा । बुद्धिकर्म्मेन्द्रियप्राणपञ्चकैर्मनसा धिया । शरीरं सप्तदशभिः सूक्ष्मं तल्लिङ्गमुच्यते ॥ लिङ्ग्यते गम्यते येनेति॰ बुद्ध्यादौ ॥ अनुमाने ॥ तत् त्रिविधम् । अन्वयव्यतिरेकि केवलान्वयि केवलव्यतिरेकि चेति ॥ उपक्रमादिषट्सु ॥ यथा । उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ प्रमाणविशेषे ॥ शब्दसामर्थ्यं लिङ्गम् । यथाहुः । सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते॰ इति॰ । सामर्थ्यं रूढिरेव॰ समाख्या तौ भेदः । तेन बर्हिर्देवसदनन्दा

मीतिमन्त्रस्य कुशलवनाङ्गत्वं नतु॰ उलपादिलवनाङ्गत्वम् । तत्र बर्हिर्दामीति लिङ्गात् तस्य वनं प्रकाशयितुं समर्थं स्यात् । एवमन्यत्रापि लिङ्गाद्विनियोगो द्रष्टव्यः । तदिदं लिङ्गं वाक्यादिभ्यो बलवत् । अतएव स्योनं ते सदनं कृणोमीति मन्त्रस्य पुरोडाशसदनकरणाङ्गत्वं सदनं कृणोमीति लिङ्गात् ॰ नतु वाक्यात् ॥ मनसि ॥ अवगम्यते ज्ञायतेऽवगच्छति येन तल्लिङ्गमिति पूज्यपादाः ॥ पुंस्त्वादौ ॥ शिफसि । मेहने ॥ अस्य शुभाशुभलक्षणं यथा । दीर्घलिङ्गेन दारिद्र्यं स्थूललिङ्गेन निर्धनः । कृशलिङ्गेन सौभाग्यं ह्रस्वलिङ्गेन भूपतिः ॥ कर्कशैः कठिनैर्लिङ्गैः परदाररतः सदा । रमते च सदा दासीम् निर्द्धनो भवति ध्रुवम् ॥ कृशलिङ्गेन सूक्ष्मेण रक्तलिङ्गेन भूपतिः परस्त्रीं रमते नित्यं नारीणां वल्लभो भवेत् ॥ कृशलिङ्गेन रक्तेन लभते चोत्तमाङ्गनाम् । राज्यं सुखं च दिव्याङ्ग्याः कन्यकायाः पतिर्भवेत् ॥ इति सामुद्रकम् ॥ अपिच । दक्षिणावर्त्तलिङ्गीयः स भवेत् पुत्रवान्नरः वामावर्त्ते तथा कन्याः सुशक्ताश्च भवन्ति च ॥ स्थूलैः शिरालैः कठिनैर्नरा दारिद्र्यभाजनाः । ऋजुभिर्वर्त्तुलैर्लिङ्गैः पुरुषाः सुखभागिनः ॥ यस्य पादोपविष्टस्य भूमिं स्पृशति मेहनम् । भोगवान् स तु विज्ञेयो नरो दारिद्र्यभाजनः ॥ भूमौ पादोपविष्टस्य यस्य स्पृशति मेहनम् । भोगवान् स तु विज्ञेयस्तथा तुरगमेहनः ॥ स्थूलग्रन्थियुते लिङ्गे नरोऽति सुखभाग्भवेत् । लिङ्गेन मृदुना मर्त्यो म्रियते कृच्छ्रपीडित इति ॥ लिङ्ग्यतेऽनेन । लिगि गतौ । हलश्चेति घञ् । वेधि ॥

लिङ्गकः । पुं॰ दन्तशठे । कपित्थे ॥

लिङ्गधारिणी । स्त्री॰ देवीविशेषे । नैमिषे तु महास्थाने देवी सा लिङ्गधारिणीति देवीगीता ॥

लिङ्गपुराणम् । न॰ लैङ्गे महापुराणे । तच्छ्लोकसंख्या यथा । एकादश सहस्राणि लिङ्गाख्यं चातिविस्तृतमिति ॥

लिङ्गवर्द्धनः । पुं॰ कपित्थवृक्षे ।

लिङ्गवर्द्धिनी । स्त्री॰ अपामार्गे ॥

लिङ्गवृत्तिः । पुं॰ धर्मध्वजिनि । जीविकार्थं जटादिचिह्नधारिणि ॥ जीविकादिनिमित्तन्तु यो विभर्त्ति जटादिकम् । धर्मध्वजी लिङ्गवृत्तिश्चायं तत्र निगद्यते ॥ लिंगमाश्रमादिचिह्नधारणं वृत्तिर्जीविका इति तु यस्य सः ॥

लिङ्गशरीरम् । न॰ सप्तदशावयवे

सूक्ष्मशरीरे ॥ सप्तदशावयवास्तु । ज्ञानेन्द्रियपंचकम् कर्मेन्द्रियपंच कं प्राणादिवायुपंचकं बुद्धिमन सीचेति ॥ लिङ्‌ग्यतेज्ञायतेप्रत्य गात्मसद्भावोयेन॰तल्लिङ्‌गम् । लिगि॰ इत्यस्मादिति घञ् । लिङ्गस्य ततशरीरस्येतिविग्रह : ॥

लिङ्गस्थ : । पुं॰ ब्रह्मचारिणि । वर्णिनि ॥

लिङ्गानुशासनम् । न॰ वररुच्यादि-कृतेनाम्नांलिङ्गबोधकेग्रन्थे ॥ तत्र शासनानर्हम् । लिङ्गमशिष्यंलोका श्रयत्वाल्लिङ्‌गस्येतिसमासान्ताइति सूत्रभाष्योक्तेर्लिङ्‌गानुवदनंलोका देवसिद्धमितिनिर्णयात् ॥

लिङ्‌गालिका । स्त्री॰ दीनायाम् । क्षुद्रमूषिके ॥

लिङ्‌गी । पुं॰ प्रव्रजितादिषु । ब्रह्म चार्यादिषु ॥ धर्मध्वजिनि ॥ वेश-धरे ॥ गजे ॥ आत्मनि ॥ लिङ्‌ग मस्यास्ति । इनि : ॥ न॰व्यापके॥

लिङ्‌गिनी । स्त्री॰ लताविशेषे । बहुपत्र्याम् । शिवमल्लिकायाम् । चित्रफलायाम् । चाकडाल्याम् । आपस्तम्भिन्याम् । पंचगुरिया॰ इ॰भाषाप्रसिद्धे ॥

लिन्द : । त्रि॰पिच्छिले अशुद्धे ॥ वै दिकोयम् ॥

लिपि : । स्त्री॰ लिखिताक्षरे । लि-बी ॥ सापञ्चविधायथा । मुद्रालि-पि : शिल्पलिपिर्लिपिर्लेखनिसम्भ वा । गुण्डिकागुणसम्भूतालिपय : पञ्चधास्मृता : ॥ एताभिर्लिपिभि र्व्याप्ताधरित्रीशुभदाहरेतिवाराही-तन्त्रोक्ते : ॥ लेखन्यालिखितंविप्रे-मुद्राभिरङ्कितञ्चयत् । शिल्पादिनि र्मितंयच्चपाठ्यंप्रायश्चसर्वदेतिमुण्ड मालातन्त्रोक्तेश्च ॥ लिप्यते । लिप-उपलेपे । इगुपधात्किदितीन् ॥ लिपि : प्रमाणंसर्वेषांसर्वत्रैवप्रश-स्यते । लिपेर्व्यवहारेषुनविनश्ये-च्चिरंयतइतिश्रीमहानिर्वाणतन्त्र-म् ॥

लिपिकर : । पुं॰ लेखके ॥ लिपिंक-रोति । डुकृञ्॰ । दिवाविभा-लिट : ॥

लिपिका । स्त्री॰ लिपी ॥

लिपिकार : । पुं॰ लेखके ॥ लिपिंक-रोति । कर्मण्यण् ॥

लिपी । स्त्री॰ लिपी ॥ लिप्यतेलिपेरि न्मस्तात्कृदिकारादितिङीष् ॥

लिप्त : । त्रि॰ कृतलेपने । विलि-प्ते ॥ विषदिग्धे विषाक्ते । भु-क्ते । भक्षिते ॥ दिग्धे ॥ लिप्यते-स्म : लिप॰ । क्त : ॥ यद्वा , लि-नाति । लीश्लेषणे । लीयतेवा । लङ्‌गश्लेषणे । लीरीङोर्ह्रस्व : पु-ट्चतरौश्लेषणकुत्सनयोरितितप्र-

स्ययोधातीर्क्ष:प्रत्ययप्पुट् । मिलिते ॥

लिप्तक : । त्रि॰ विषाक्तबाणे । दिग्धे ॥ स्वार्थे कन् ॥

लिप्ता । स्त्री॰ घटिकायाम् । दण्डे ॥

लिप्तिका । स्त्री॰ दण्ड ॥ लिप्तैव । स्वार्थेकन् ॥

लिप्सा । स्त्री॰ इच्छायाम् । वाञ्छायाम् ॥ लभे : सन्नन्तादप्रत्ययादिति॰ अ : ॥ लाभेच्छायाम् ॥ यथा । अर्थिनिविलसतिलिप्सादात रिदित्सातुटूरतोपास्ता । आस्तांकृपणकथेयंरमापतेनोचिताभवतीति ॥

लिप्सु : । त्रि॰ लब्धुमिच्छौ । गृध्नौ ॥ लुब्ध । अभिलाषुके ॥ लभे : सन्नन्तादु : ॥

लिवि : । स्त्री॰ लिपौ । लिखितवर्णे ॥ लिप्यते । लिप॰ । इगुपधात्लिदितीन् । बाहुलकात्पस्यबत्त्वम् ॥ लिबि : सौत्रोधातुर्वा ॥

लिविकर : । पुं॰ लिपिकरे । लिविं करोति । डुकृञ्॰ । दिवाविभेति : ॥

लिम्प : । पुं॰ लेपनकर्त्तरि ॥

लिम्पट : । पुं॰ षिड्गे ॥ इतिहारावली ।

लिम्पाक : । पुं॰ जम्बीरे ॥ खर ॥ न॰ निम्बूके । पातनीवू॰ इ॰ भा॰ ॥

लिष्व : । पुं॰ नर्त्तके ॥ लष्यते । लषकान्तौ । सर्वनिघृष्वेतिसाधु : उपधेत्त्वम् ॥

ली : । पुं॰ श्लेषणे ॥ चपले ॥ लीङ् : क्विप् ॥

लीका । लीचा । स्त्री॰ लिक्षायाम् । इतिशब्दरत्नावली ॥

लीढ : । त्रि॰ आस्वादिते । भक्षिते ॥ लिह्यतेस्म । लिहआस्वादने । क्त : ढस्वधत्वष्टुत्वलोपदीर्घा: ॥

लीन : । त्रि॰ प्राप्तलये । विलीने ॥ छन्ने ॥ लीयतेस्म । लीङ्श्लेषणे । क्त : । स्वादयऋदितइतिनत्त्वम् ॥

लीला । स्त्री॰ केलौ ॥ विलासे ॥ शृङ्गारभावचेष्टायाम् । गतिहास्येक्षणादिभि : शृङ्गारभावतोजातक्रियानुकरणे ॥ प्रियस्यानुकृतिर्लीलाश्लिष्टावाग्वेषचेष्टितै: । अलब्धप्रियसमागमयास्वचित्तविनोदार्थंप्रियस्यावेशगतिहृष्टिहसितभणितैरनुकृति क्रियतेसालीलेत्यर्थ: तथाहि । अप्राप्तवल्लभसमागमनायिकाया : सख्या : पुरोचनिजचित्तविनोदबुद्ध्या । आलापवेशगतिहास्यविलोकनाद्यै : प्राणेश्वरानुकृतिमाकलयन्तिलीलामितिभरत : ॥ शोभायाम् ॥ लयनंली :

लीङ्• । सम्पदादित्वात्क्विप् । लियंलाति । ला० । आतोनुपेति क: ॥ यद्वा । लिलायनम् । लिला दीप्तौ० कण्ड्वादि: । भिदाद्यङ् । अप्रत्ययादितिवा । पृषोदरादि: ॥ यद्वा । लयनम् । लीङोवाहुल काद्गोगुणाभावश्च ॥

लीलाखेल: । पुं० अतिशर्करीछन्द: १५ प्रभेदे ॥ तल्लक्षणोदाहरणे यथा एकन्यूनौविद्युन्मालापादौचेल्लीलाखेल: । यथा । पायाद्वोगोविन्द: कालिन्दीकूलक्षोणीचक्रे० रासोल्लास: क्रीडद्गोपीभि: सार्द्धं लीलाखेल: । मन्दाकिन्यास्तीरोपान्ते स्वैरक्रीडाभिर्लीलो० यद्वदेवानामीश: स्वर्वेश्याभि: खेलन्तीभि: ॥ त्रि० विलाससुभगे ॥

लीलावती । स्त्री० केलियुक्तायाम् ॥ विलासवत्याम् ॥ शृङ्गारभावचेष्टाऽन्वितायाम् । खेलाविशिष्टायाम् ॥ भास्कराचार्यस्यपत्न्याम् ॥ भास्कराचार्यकृतेपाटीगणितग्रन्थे ॥ न्यायग्रन्थविशेषे ॥ वेश्याविशेषे ॥ मात्रावृत्तविशेषे ॥ तल्लक्षणोदाहरणे यथा । लघुगुरुवर्णनियमविरहितमिहहिमुकलयचतुष्कलमष्टगणम् । द्वात्रिंशत्कलविरचितमिदमतिशयसहृदयहृदयदु:खहरणम् । लीलावतिकाभवतिचकरकर्ण हिजगणजगणभगणकलिता० फणिनायकपिङ्गलविरचितमङ्गलवृत्तममलगुम्फनललिता ॥ यथा । गोकोटिंप्रतिदिनमिहवितरन्द्विजवरनिवहेमुदमातनुषेरिपुतिमिरदलनकरहस्तकुशेशयमपिलक्ष्मीवसतिंतनुषे । । दुरितविलयमिलितसज्जनोदयनृपराजवलयमवलयसिरणेत्वयिचलतिचलतिवसुधांवसुधाधिपकीर्त्तिसिंहधरणीरमणे ॥ लीला शोभाऽस्त्यस्याम् । मतुप् । ङीप् ॥

लीलोद्यानम् । न० देववने ॥

लुक्कायित: । त्रि० अन्तर्हिते ॥

लुङ्ग: । पुं० मातुलुङ्गे । वीजपूरे ॥ लुञ्च्यते । लुजिभाषार्थ: । घञ् । चजोरितिकुत्वम् । न्यङ्क्वादित्वाद्वा ॥

लुङ्गुष: । पुं० छोलङ्गे ॥

लुठनम् । न० वेल्लने । अश्वस्यभूमौ पुन: पुन: श्रमोपहनने । लोट न० ह्र० भा० प्र० ॥

लुठित: । त्रि० श्रमशान्त्यर्थंमुहुर्मुहु: परावर्त्तश्वे । उपावृत्ते ॥ वेल्लते । अपावृत्ते । परावृत्ते ॥ लुठति स्म । लुठप्रतिघाते । अकर्मकत्वात्क्त: ॥

लुण्टक: । पुं० शाकविशेषे । नट्या० ह्र० गौ० भा० प्रसिद्धे ॥

लुण्टाक: । पुं० चौरे ॥

लुण्टाकी । स्त्री॰ चौरायांस्त्रियाम् ॥

लुण्ठक : । त्रि॰ स्तेयकारकै ॥

लुण्ठनम् । न॰ हृयलुण्ठिते ॥ लूटइति प्रसिद्धे साहसे ॥ लुण्ठिस्तेये । ल्युट् ॥

लुण्ठाक : । पुं॰ परभृत्ये । द्विके । काके ॥

लुण्डिका । स्त्री॰ ) न्यायसारिण्याम् ।
लुण्डी । स्त्री॰ )

लौंडी॰ इ॰ भा॰ प्र॰ ॥

लुप्तम् । न॰ चौर्यधने ॥ त्रि॰ विलुप्ते । लोपवति ॥

लुप्तवर्णपदम् । न॰ ग्रस्ते ॥ लुप्तोवर्ण : पदं वायत्रवाक्ये पदेवातत् ॥

लुप्तसंवत्सर : । पुं॰ विलुप्ताब्दे ॥ यथा । अतिचारगतोजीवस्तंराशिंनैतिचेत्पुन : । लुप्तसंवत्सरोज्ञेयोगर्हित : सर्वकर्मसु ॥ अस्यापवादश्च ॥ प्रथमेविभद्विकुम्भे यद्यतीचारगोगुरु : । नतत्रकाललोप : स्यादित्याहभगवान्यम : ॥ अन्यच्च । मासानृदशकादशवाप्रभुज्यराशियंद्वाराशिमुपैतिजीव : भुङ्क्तेनपूर्वंचपुनस्तथापिन लुप्तसंवत्सरमाहुरार्या : । लुप्ताब्ददोषोऽथमितेनमध्येसिंहेगवाया : सुरनिम्नगाया : ॥

लुप्ताब्द : । पुं॰ लुप्तसम्वत्सरे ॥

लुब्ध : । पुं॰ व्याधे ॥ लम्पटे ॥ त्रि॰ आकाङ्क्षिणि । गृध्नौ । परधनाभिलाषुके ॥ धर्मार्थेस्वद्रव्यत्यागासमर्थे ॥ मातरंपितरंभ्रातॄन्सर्वांश्चसुहृदस्तथा । घ्नन्तिद्यसुतृपेलुब्धाराजान : प्रायशोभुवि ॥ लुभ्यति स्म । लुभगार्ध्ये । गत्यर्थेतिक्त : ॥

लुब्धक : । पुं॰ व्याधे ॥ स्वार्थे॰ सं ज्ञायांवाकन् ॥ आर्द्रायाम् ॥

लुलाय: ।पुं॰ महिषे॥ लुडति। लुडसंश्लेषणे । इगुपधेतिक : । डलयोरेकत्वम् । अप्रोति । आप्लृ॰ । अच् । लुलश्चासावायश्च । यद्वा । लुड्यते । लुडलोडने । भिदाद्यङ् । लुला विलोडिताचापोयेन । लुल विमर्दनेसौत्रोधातुर्वा ॥

लुलायकन्द : । पुं॰ महिषकन्दे ॥

लुलायकान्ता । स्त्री॰ महिष्याम् ॥

लुलाय : । पुं॰ महिषे ॥ लुडति । लुड॰ । क : । डलयोरभेद : ॥ यद्वा । लुड्यते । लुडविलोडने । भिदाद्यङ् । लुलविमर्दनेसौत्रोधातुर्वा । बाहुलकादायप्रत्यय : ॥ यद्वा । अयते । अय॰ । अच् । लुलश्चासौअयश्च ॥

लुलित : । त्रि॰ आन्दोलिते । तरलिते ॥ उत्सृष्टे ॥ लिप्ते यथा । बालेन्दु : स्वातिरेकोमललुलितवपुरिति ॥

लुषभ:। पुं॰ मत्तमातङ्गे। मत्तग जे॥ रोषति। रुषहिंसायाम्। रुषेर्निल्लुष् चेत्यभच्॰ इतिरुषि रभच् मितृक्किवातोलुषादेशश्च॥
लू:। स्त्री॰ लवने। लवनम्। लूञ् भावेक्विप्॥ लुनातिवा। अथवा स्त्र्यलिङ्गः॥
लूता। स्त्री॰ ऊर्णनाभे। मर्कटके॥ पिपीलिकायाम्॥ रोगविशेषे। म र्कटस्य॥ लुनाति। लूञ्॰। हसिमृग्रिण्वामीतितन्। संज्ञापूर्वकत्वाद्गुणाभावः॥
लूतातन्तुः। पुं॰ मर्कटकजाले। मकडीकाजाला॰ इ॰ भा॰ लूतायास्तु:॥
लूतामर्कटक:। पुं॰ लूतामर्कटक: पु॰स्त्री॰नवमालिकयो: कपाविति-हेमचन्द्र:॥
लूतारि:। पुं॰ दुग्धफेनीक्षुपे॥
लूतिका। स्त्री॰ ऊर्णनाभौ। मर्कटके। मकडी॰इ॰भा॰॥ लूतैव। स्वार्थेक:॥
लून:। त्रि॰ छिन्ने॥ लूयतेस्म। लूञ्॰। क्त:। ल्वादिभ्यश्चेतिनत्वम्॥
लूनक:। पुं॰ भिन्ने। भेदिते॥ पशौ॥ यावादिषु॰पशौलूनवियात-इतिस्वार्थेकन्॥
लूनि:। स्त्री॰ छेदे॥
लूमम्। न॰ पुच्छे। लाङ्गूले॥ लूय-ते। लूञ्॰। बाहुलकान्मक्॥
लेख:। पुं॰ अदितिनन्दने। देवे सुरे॥ ध्यानार्थंचित्रादौलिख्यते। लिखअक्षरविन्यासे। अकर्त्तरिच कारकेसंज्ञायामितिकर्म्मणिघञ्। ग्रीवाहस्तपादेषुतिस्रोलेखा: सन्ति यस्येतिवा। अर्शआद्यच्॥ लेख्ये॥
लेखक:। पुं॰ लिपिकरे। अक्षरचुञ्चौ। लेखनकर्त्तरि। लिखारी॰ इ॰भा॰॥ लिखति। लिख॰। शिल्पिनिष्वुन्। एवुलवा॥ अस्यलक्षणानियथा। सर्वदेशाक्षराभिज्ञ: सर्वशास्त्रविशारद:। लेखक: कथितोराज्ञ: सर्वाधिकरणेषुवै॥ शीर्षोपेतान्सुसम्पूर्णान्समश्रेणिगतान्समान्। अक्षरान्वैलिखेद्यस्तुलेखक: सवर: स्मृत:॥ उपायवाक्यकुशल: सर्वशास्त्रविशारद:। बह्वर्थवक्ताचाल्पेनलेखक: स्यान्नृपोत्तम॥ वाक्याभिप्रायतत्त्वज्ञोदेशकालविभागवित्। अनाहार्योनृपेभक्तोलेखक: स्यान्नृपोत्तम॥ इति मात्स्ये १८९ अध्याय:॥ अपिच। सकृदुक्तगृहीतार्थोलघुहस्तोजिताक्षर:। सर्वशास्त्रसमालोकीप्रकृष्टोनामलेखक:॥ राजलेखकलक्षणंयथा। ब्राह्मणोमन्त्रणाभिज्ञोराजनीतिविशारद:। नानालिपि

ञोमेधावीनानाभाषासमन्वित: ॥ मन्त्रणाचतुरोधीमान्नीतिशास्त्रार्थकोविद: । सन्धिविग्रहभेदज्ञोराजकार्यविचक्षण: ॥ सदाराजहिताऽन्वेषीराजसन्निधिसंस्थित: । कार्याकार्यविचारज्ञ: सत्यवादीजितेन्द्रिय: ॥ स्वरूपवादीशुद्धात्माधर्मज्ञोराजधर्मवित् । एवमादिगुणैर्युक्त: सएवराजलेखक: ॥ नृपानुवर्त्तीसततंनृपविश्वासरक्षक: । नृपतेर्हितकान्वेषीसएवराजलेखक: ॥ इतिपत्रकौमुदी ॥

लेखन: । पुं० काशे । न० छर्दने ॥ भूर्जे । लिपिन्यासे ॥ लिख० । ल्युट् ॥

लेखनाञ्जनं । न० अञ्जनविशेषे । यथा । दृषागडत्वक्शिलाकाचशङ्खचन्दनसैन्धवै: । चूर्णितैरञ्जनंप्रोक्तंपुष्पामार्गादिनिकृन्तनम् ॥ कुकुटागडस्यत्वक् । शिलामन: शिला ॥

लेखनिक: । पुं० लेखहारे ॥ लिखिपुपरहस्तेनस्वहस्तस्यचलेखके । य: स्वहस्तंपरहस्तेनलिखितेपुविलेखयेत्०तत्र ॥

लेखनी । स्त्री० कलमे । वर्णतूलिकायाम् ॥

लेखनीय: । त्रि० लेख्ये ॥

लेखर्षभ: । पुं० जिष्णौ । शक्रे । इन्द्रे ॥ लेखेषुऋषभ: । सप्तमीतियोगविभागात्समास: । लेखं ऋषभइवेतिवा । उपमितसमास: ॥

लेखहार: ) पुं० पत्रवाहके ॥ लेख
लेखहारक: ) हरति । हञ्० । कर्म्मण्यण् ॥

लेखा । स्त्री० लिपौ ॥ राजिकायाम् । रेखायाम् ॥ लिख्यते । लिख० । भिदादिपाठादङ् गुणौ ॥ ऋयायाम् ॥

लेखार्ह: । पुं० श्रीतालवृक्षे । मृदुच्छदे ॥

लेख्यम् । न० भागदानादिव्यवहारकरणे । पत्रे ॥ त्रि० लेखितव्ये । लेखनीये ॥ व्यवहाराङ्गक्रियापादाङ्गे । यथा । यन्मासिकेपि समयेभ्रान्ति: सञ्जायतेयत: । धात्राक्षराणिसृष्टानिपत्रारूढन्यत: पुरा ॥ लेख्यन्तुद्विविधंप्रोक्तंस्वहस्तान्यकृतंतथाअसाक्षिकंसाक्षिमच्चसिद्धिर्देशस्थितेस्तयो: ॥ मृतास्तुसाक्षिणोयत्रधनिकर्णिकलेखका: तदप्यपार्थेकरणमृतेत्वाधे: स्थिराश्रयात् ॥ दर्शितंप्रतिकालञ्चपठितं श्रावितञ्चयत् । लेख्यसिद्धयतिसर्वत्रमृतेष्वपिचसाक्षिषु ॥

लेख्यचूर्णिका । स्त्री तूलिकायाम् ॥

लेख्यपत्र: । पुं० तालद्रुमे ॥ न० लेखनीयपत्रे ॥

लेख्यस्थानम् । न० मन्यकुल्याम् ।

दफ्तरदूतीतरजनभा० प्र०

लेखडम् । न० गूथे । शकृति । लेण्ड इ० भा० प्र० ॥

लेण्डुज: । पुं० डुण्ढ़ीजे ॥ डुण्ढ़ी जानवषट्पञ्चलेण्डुजाश्चापिभाविनइत्यागमात् ॥

लेप: । पुं० लेपने ॥ अशने । अशने ॥ अनुशये । अनुबन्धे ॥ सच० इदमहमकार्षमेतत्फलंभोक्ष्ये० इत्यनुसन्धानकर्तृत्ववासनानिमित्त: । सचपुण्ये कर्मणिपुण्यरूप: । पापेचपश्चात्तापरूपोभवति ॥ लेपनम् । लिप० घञ् ॥ सुधायाम् । चूना० इ० भा० प्र० ॥

लेपक: । पुं० पलगण्डे । राज इ० प्र० जातौ ॥ त्रि० लेपकर्त्तरि ॥ लिंपति । लिप० ण्वुल् ॥

लेपनम् । न० लेपे । चन्दनागुर्वादिनाङ्गविलेपने ॥ देवगृहादिलेपने । लीपना० इ० भा० लिपेर्ल्युट् ॥ पुं० तुरुष्कनामगन्धद्रव्ये ॥

लेपभुक् । पुं० पितामहपित्रादिषु ॥

लेपी । पुं० लेपकि । पलगण्डे । थैकर० इ० गौ० दे० भा० । राज० इ० दे० भा० ॥

लेप्य: । त्रि० लेपनीये ॥

लेप्यकृत् । पुं० लेपके ॥

लेप्यमयी । स्त्री० काष्ठादिघटितपुत्तलिकायाम् । अङ्गुलिकारिकायाम् ॥

लेभिरम् । न० उलूखले ॥

लेय: । पुं० सिंहराशौ ॥

लेलायनम् । न० चलने ॥

लेलायमान: । त्रि० अतिशयचलनविशिष्टे ॥ यथाग्निर्ईवर्ईर्ष्यायलेलायमानोभवति ॥

लेलिह: । पुं० सर्पे ॥

लेलिहा । स्त्री० जीवन्यासमुद्रायाम् ॥ यथा । तर्जनीमध्यमानामा:समा: कुर्यादधोमुखा: । अनामायांक्षिपेद्वामृजूँकृत्वाकनिष्ठिकाम् । लेलिहानाममुद्रेयंजीवन्यासेप्रकीर्त्तिता ॥

लेलिहान: । पुं० शिवे ॥ सर्पे ॥ त्रि० ललज्जिह्वे ॥ लेहातिशयकारके । पुन:पुनर्लेहनकर्त्तरि ॥ लिहेर्यङ्लुगन्तात्ताच्छील्येचानश्प्रत्यये० गुणोयङ्लुकोरित्यभ्यासङ्गुण: ॥

लेलिहाना । स्त्री० लेलिहायांमुद्रायाम् ॥

लेश: । पुं० अल्पे कणे ॥ लिशति । लिशगतौ । पचाद्यच् ॥ लिश्यतेवा । घञ् ॥

लेशज: । त्रि० अतिकम्पने ॥ लेशेनाल्पेनापिएजति । एजृ० । पचाद्यच् ॥

लेष्टु: । पुं० दृढमृत्पिण्डे । लोष्टे । ढीम्० ढेला० डला इ० भा० प्र० ॥

लिख्यते•लिशतिवा। लिश•। बा हुलकात्तुन् ॥

लेष्टुघ्नः। पुं• लोष्टभेदने ।

लेष्टुभेदनः। पुं• कोटिशे। लोष्टभेदनमुद्गरे ॥

लेसिकः। पुं• काटिरोहके। हस्त्यारोहके ॥

लेहः। पुं• आहारे। भोजने, स्वादने ॥ लेहने ॥ लेहनम् लिहआस्वादने। घञ्॥ लेढि। आशधेतिवोवा ॥

लेहनम्। न• जिह्वास्वादे। जिह्वया रसग्रहणे। चाटना•इ•भा• ॥ लिहेर्ल्युट् ॥

लेह्यम्। न• अमृते। सुधायाम् ॥ त्रि•लेहयोग्ये। आस्वाद्ये। यज्जिह्वार्यानि:क्षिप्यरसास्वादेननिगीर्यतेकिञ्चिद्द्रवीभूतगुडरसालादितत् ॥

लैङ्गः। पुं• वैयाकरणे ॥ वैयाकरणाहिस्त्रीपुंनपुंसकंशब्दजातंतत्त्वमितिवर्णयंतितदयुक्तम्। स्वादेः शब्दस्वभावत्वे सर्वादीनांत्रिलिङ्गत्वायोगादेकस्यानेकभावत्वायोगात्, औपाधिकधर्मत्वे चतस्यावस्तुत्वात् ॥ न•लिङ्गपुराणे ॥ त्रि•लिङ्गसम्बन्धिनि ॥ लिङ्गस्येदम्। तस्येदमित्यण् ॥

लैङ्गी। स्त्री• लिङ्गिन्यामोषधौ ॥

लोकः। पुं• जने आत्मनि ॥ लोक्यतेअनुभूयतेशास्त्रोपदेशशीलितबुद्ध्यायमितिव्युत्पादनात् ॥ दर्शने ॥ लोक्यमानेविषये ॥ प्राणिनिकाये। भुवने ॥ त्रयोलोकाः स्वर्गमर्त्यपातालानि ॥ अत्रसप्तलोकनामानियथा। भूर्भुवःस्वर्महश्चैवजनश्चतपएवच। सत्यलोकश्चसप्तैतेलोकास्तुपरिकीर्त्तिताः ॥ इत्यमरः ॥ यास्ययास्कविषयेस्मिन्शरीरे ॥ लोकोद्विविधः प्रोक्तआत्मानात्मविभेदतः। मनुष्यपितृदेवाख्योऽनात्मलोकस्त्रिधामतः ॥ आत्मलोकस्तुस्वरूपमित्याहुः शास्त्रदर्शिनः ॥ मनुष्यलोकः पुत्रेणपितृलोकस्तुकर्मणा। विद्ययादेवलोकश्चेत्यब्रवीत्सङ्गतःश्रुतिः ॥ लोक्यतेऽनुभूयते•दृश्यते•भुज्यते-वा। लोकृदर्शने। घञ् ॥ कर्मफले ॥ प्रसिद्धिमागमःप्राप्तोलोकइत्यभिधीयते ॥ चतुर्दशविद्यास्थानानिलोकाइतिव्याख्यातारः। लोक्यतेज्ञायतेधर्मब्रह्मादिरूपोऽर्थएभिरितिनिरुक्तः ॥ चिदानन्दस्वरूपब्रह्मातिरिक्तस्यसर्वस्यलोकपदार्थत्वाद्देहस्यापिलोकान्तर्गतत्वम् ॥

लोककान्ता। स्त्री• ऋद्धिनामौषधे ॥

लोकचक्षुः। पुं• सूर्ये ॥ जनलोचने ॥

लोकजित् । पुं॰ जिने । लोकंजयति । जि॰ । सत्सूद्विषेत्यादिनाक्किप् । तुक् । लोकान् जयत्युपरमयतीति वा । त्रि॰ लोकजेतरि ।

लोकतुषार : । पुं॰ कर्पूरे ॥

लोकत्रयम् । न॰ सर्वस्मिन्जगति ॥ लोकानांत्रयम् ।

लोकदम्भक : । पुं॰ नि : चेपापहारादिनाजनवञ्चके ॥

लोकधातु : । जम्बुद्वीपे ॥

लोकनाथ : । पुं॰ शिवे । ब्रह्मणि ॥ विष्णौ ॥ बुद्धे ॥ लोकानांनाथ : ॥ लोकैर्नाथ्यतेयाच्यतेवाकर्मणिघञ् ॥

लोकपाल : । इन्द्रादिषु ॥ तेयथा । इन्द्रोवह्नि : पितृपतिर्नैरृतिर्वरुणोऽनिल : । धनद : शङ्करश्चैवलोकपाला : पुरातना : ॥ राजनि ॥

लोकबान्धव : । पुं॰ रवौ । सूर्य्ये ।

लोकभावन : । पुं॰ लोककर्त्तरि ॥

लोकमाता । स्त्री॰ लक्ष्म्याम् ॥ लोकानांमाता ॥

लोकयात्रा । स्त्री॰ लोकनिर्वाहे ॥ लोकाचारे । येनोपायेनमर्त्यानांलोकयात्राप्रसिध्यति । तदेवकार्यंब्रह्मज्ञैरिदंधर्मंसनातनम् ॥ लोकानांयात्रा ॥

लोकलोचन : । पं॰ सूर्य्ये ॥

लोकवाह्य : । त्रि॰ सर्वाचारविवर्ज्जिते ॥ लोकाद्वाह्य : ॥

लोकवित् । पुं॰ पौराणिके भूर्भुव : स्वरितित्रयोलोका : वस्तुभूता : सन्तीतिसङ्कल्पयति ॥

लोकविनायक : । पुं॰ ग्रहविशेषे ॥

लोकविश्रुति : । स्त्री॰ जनश्रुतौ ।

लोकवृत्तम् । न॰ विचित्रपरिहासकथादिके॰ असत्प्रियाख्याने ॥ न लोकवृत्तंवर्त्तेतवृत्तिहेतो : कथञ्चन । अजिह्मामशठांशुद्धांजीवेद्ब्राह्मणजीविकाम् ॥ लोकानाम्वृत्तम् ॥

लोकसङ्ग्रह : । पुं॰ लोकानांस्वस्वधर्मेप्रवर्त्तने ॥ उन्मार्गान्निवर्त्तनेच ॥ सङ्ग्रहणंसङ्ग्रह : । लोकानांसङ्ग्रहोग्रहणम् ॥

लोकसार : । पुं॰ प्रणवे ॥

लोकाकाशास्तिकाय : । पुं॰ लोकानामन्तराकाशे ॥

लोकात्मा । पुं॰ परमेश्वरे ॥ यथा । यस्याग्निरास्यंद्यौर्मूर्द्धाखंनाभिश्चरणौक्षिति : । सूर्यश्चक्षुर्दिश : श्रोत्रेतस्मैलोकात्मनेनम : ॥

लोकादि : । पुं॰ ब्रह्मणि लोकानामादि : प्रथमशरीरत्वात् ॥

लोकाध्यक्ष : । पुं॰ परमेश्वरे ॥ लोकंदृश्यवर्गंस्वाभाविकेनबोधेनसाक्षात्पश्यतीति॰लोकाध्यक्ष: । लोका

नामध्यच : । लोकाध्यक्षायस्य
तिवा । लोकान्ध्यक्षयतीतिकर्म्म
ण्यणित्रपपदसमासोवा ॥
लोकापवाद : । पुं॰ लोककर्तृकार्या
निन्दायाम् ॥ लोकापवादाद्भय
म् ॥
लोकायतम् । न॰ तर्कभेदे । चार्वा
कदर्शने ॥ लोकेआयतम् ॥
लोकायतिक : । पुं॰ चार्वाके ॥
लोकालोक : । पुं॰ परमेश्वरे ॥ लो
कयाब्रह्मस्तम्बपर्यन्त : आलोक्यते
प्रकाश्यतेयेनस : ॥ चक्रवालेऽद्रि
विशेषे ॥ लोकालोकोवह्निस्तस्या
लोकालोकनियामक : । योजना
युतविष्कम्भस्तुङ्गशृङ्गपरिच्छद :
॥ अन्त : स्थितलोकंवहि : स्थि
तञ्चालोकंनियमयतीति॰ लोका
लोकनियामक : । तदाह्लोका
भावाद्दित्यर्थ : ॥ लोकदर्शने ।
भावेवञ् । नलोक : अलोक : ।
लोकश्चालोकश्च॰लोकालोकौ॰ प्र
काशान्धकारावचस्त : अन्तर्वहि :
सूर्यकिरणानांस्पर्शास्पर्शाभ्याम् ॥
लोकालोकी । त्रि॰ सर्वलोकदर्शिनि
॥ लोकानालोकते॰तच्छील : ।
णिनि : ॥
लोकेश : । पुं॰ हिरण्यगर्भे । ब्रह्म
णि ॥ लोकानामीश : ॥ बुद्धभेदे
॥ पारदे ॥
लोकेशाधिष्ठित : । पुं॰ राजनि ॥
लोकेश्वर : । पुं॰ शिवे ॥ लोकानांज
नानाम्ईश्वर : प्रभु: ॥ बुद्धभेदे
लोकेश्वरात्मजा । स्त्री॰ बुद्धशक्तिवि
शेषे । तारायाम् । श्रियि । मनो
रमायाम् ॥
लोकैषणा । स्त्री॰ स्वर्गलोकादिकाम
नायाम् ॥ लोकैषणेतिदेवादिलो
कार्थोपासनार्थिता ॥
लोकोत्तर : । त्रि॰ लोकातीते ॥
लोकोद्धार : । पुं॰ तीर्थविशेषे ॥
लोक्य : । त्रि॰ परलोकादिसाधने ।
लोकार्यहिते ॥
लोचनम् । न॰ अशुचि । वास्थि ॥
लोचक : । पुं॰ मांसपिण्डे ॥ अचि
तारकायाम् ॥ कज्जले ॥ स्त्रीभा
लभूषणे ॥ कदल्याम् ॥ नीलव
स्त्रे ॥ कर्णपूरे । कर्णिकायाम्
। कर्णाभरणे ॥ ज्यायाम् । मौ
र्व्याम् ॥ भ्रूमध्यचर्म्मणि ॥ निर्मो
के ॥ त्रि॰ निर्बुद्धौ ॥
लोचनम् । न॰ चक्षुषिचक्षुषि ॥ अ
स्यशुभाशुभलक्षणंयथा । कर्णान्तै:
पद्मपत्राभैर्लोचनै : सुखभागिन: ।
मार्जारलोचनै : पापीमहात्मामधु
पिङ्गलै : ॥ क्रूरा : केकरनेत्राश्च
रिणाक्षा : सकल्मषा : । जिह्मैश्च
लोचनै : क्रूरा : सेनान्योगजलोच
ना : ॥ गम्भीराक्षाईश्वरा: स्युर्म

स्निग्धः स्थूलचक्षुषः । नीलोत्पलाभाविद्वांसः सौभाग्यं श्यावचक्षुषाम् ॥ स्यात्क्रूरतारकाक्षाणामक्ष्णामुत्पाटनं किल । मण्डलाक्षा ह्यपापाः स्युर्निःस्वाः स्युर्दीर्घलोचनाः ॥ हृक्स्निग्धा विपुलाभोगेऽल्पायुर्यातिचोन्नता । विशालोन्नता सुखिनिर्दरिद्रा विषमभ्रुवः ॥ इति गारुडे ६६ ॥ लोच्यतेऽनेन । लोचृ दर्शने । ल्युट् ॥ आलोचने ॥

लोचनहिता । स्त्री॰ तुत्थाञ्जने ॥

लोचना । स्त्री॰ बुद्धशक्तिविशेषे ॥

लोचनामयः । पुं॰ चक्षूरोगविशेषे । अभिमन्थे ॥

लोचनी । स्त्री॰ महाश्रावणिकायाम् ॥

लोचमर्कटः । पुं॰ लोचमस्तके ॥

लोचमस्तकः । पुं॰ खराश्वायाम् । कारव्याम् । दीप्ये । मयूरे । मयूरशिखौषधे । रुद्रजटायां॰ गौ॰ दे॰ प्र॰ ॥ लोच्यते । लोचृ दर्शने घञ् ॥ यद्वा । लोचयति । लोचृ भासार्थः । पचाद्यच् । लोचो दर्शनीयो भासमानो वा॰ मस्तकोऽस्य ॥

लोठनम् । न॰ लुठस्तत्क्षालने ॥

लोडनम् । न॰ प्रतिघाते ॥

लोटणम् । न॰ लवणात्टणे ॥

लोणा । स्त्री॰ क्षुद्राम्लिकायाम् । चाङ्गेर्याम् ॥ लोणीशाके । लोनिआ॰ लोणी॰ इ॰ भा॰ स्मृते ॥ अस्य गुणाः । लोणाम्लाऽगुरुः कटुर्वातश्लेष्महरी पटुः । अर्शोघ्नी दीपनी चाश्मा मन्दाग्निविषनाशिनी ॥

लोणाम्ला । स्त्री॰ क्षुद्राम्लिकायाम् । चाङ्गेर्याम् ॥

लोणारम् । न॰ क्षारविशेषे । लवणोत्थे । लवणाकारजे । लवणक्षारे । लवणमदे ॥

लोणितम् । न॰ लोनियाख्यशाके ॥ शाकं लोणितसंज्ञकं सुदलितं तप्ते घृते तापितं हिङ्ग्वार्द्रेणविमिश्रितं सलवणं तक्रेण संपाचितम् । नोवास्वेदमिदं सुहिङ्गुसहितं तैलेन वा वासितं छिन्नं तण्डुलसंयुतं सलवणं तक्रं विना पाचितम् ॥ लोणितं शुभशोतोष्णांरुच्यं विष्टम्भकारकम् । दोषघ्नं मधुरं पाकेवातघ्नं चामलपित्तकृत् ॥

लोणी । स्त्री॰ लोणायाम् ॥

लोतः । पुं॰ न॰ वाष्पे । अश्रुणि । नेत्राम्बुनि ॥ न॰ लोप्त्रे ॥ लुनाति । लूञ्॰ । हसिमृग्रिण्वित्यादिना तन् । लोतो मेघ इति क्तवत्तूनि ष्ठ इति सूत्रे कैयटः ॥

लोत्रम् । न॰ लोप्त्रे ॥ नेत्रजले ॥ लूञः सर्वधातुभ्य इति ष्ट्रन् ॥

लोध्रः । पुं॰ गालवे । शाबरे । तिरीटे । तिल्वे । मार्जने । लोध॰ इ॰ भा॰ प्र॰ ॥ लोध्रो ग्राही लघुः

शीतस्वच्छुष्य : कफपित्तनुत् । कषायोरक्तपित्तासृग्ज्वरातीसारशोथहृत् ॥ रुणद्धि । रुधिरं० । वाहुलकात् ष्ट्रन् । कपिलकादि : ॥

लोध्रवृक्षः । पुं० गालवे ॥

लोध्रपुष्पकः । पुं० शालिप्रभेदे ॥

लोपः । पुं० अदर्शने ॥ गम्यमानार्थस्याप्रयोगएवलोपः । यथाविभक्तधनेषु० विभक्ताभ्रातरः अत्रोत्तरपदस्यधनस्यलोपः ॥ लुप्यते । लुप्लृच्छेदने । कर्म्मणिघञ् ॥ छेदे ॥

लोपा । स्त्री० लोपामुद्रायां ॥

लोपाकः ) पुं० शृगाले । फेरौ ॥
लोपापकः )

लोपायिका । स्त्री० शृगाल्याम् ॥

लोपामुद्रा । स्त्री० अगस्त्यमुनेः पत्न्याम् ॥ नमुदंरातिअमुद्राआतोनुपेतिकः । लोपेधर्मलोपाअमुद्रा हर्षंनलभतइत्यर्थः ॥

लोपामुद्रापतिः । पुं० अगस्त्यमुनौ ॥

लोपाशकः । पुं० शृगाले ॥

लोपाशिका । स्त्री० शृगाल्याम् ॥

लोप्त्रम् । न० चोरिते । चौरधने ॥ लुप् तृ० । ष्ट्रन् ॥

लोप्त्री । स्त्री० हस्तलालनयाकृते० वारिमिश्रितगे धूमादिचूर्णपिण्डे । लोयी० पेडी० इतिचलोकभाषायांप्रसिद्धे ॥ षित्त्वान्ङीष् ॥ लोप्त्रं ॥

लोभः । पुं० धनतृष्णायाम् । मयिधनागमेजायमाने प्यनुक्षणंवर्द्धमानेतदभिलाषे । स्वविषयप्राप्तनिवर्त्त्य० इच्छाविशेषे ॥ आत्मनोऽनुकूले षुसुखहेतुषुद्दश्यमानेषुश्रूयमाणे षुस्मर्य्यमाणे षुवातद्गुणानुसन्धानाभ्यासेनयोरत्यात्मकोगर्द्धाभिलाषस्तृष्णा० लोभः ॥ धर्मविरोधेनपरद्रव्येच्छायाम् ॥ यथा । परवित्तादिकंदृष्ट्वानेतुंयोहृदिजायते । अभिलाषोद्विजश्रेष्ठसलोभः परिकीर्त्तितइति ॥ सतुनाशकारणम् । यथा । लोभप्रमादविश्वासैः पुरुषोनश्यतेत्रिभिः । तस्माल्लोभोनकर्त्तव्यः प्रमादोननविश्वसेत् ॥ अपिच । त्रिविधंनरकस्येदंद्वारंनाशनमात्मनः । कामः क्रोधस्तथालोभस्तस्मादेतत्त्रयंत्यजेदिति ॥ अस्यस्वरूपंयथा । सन्त्येतेमददन्तिनोमदजलप्लानगण्डस्थलावातव्यायतपातिनश्चतुरगाभूयोऽपिलप्स्येपरान् । एतल्लब्धमिदंलभे पुनरिदंलब्ध्वाधिकंध्यायतांचिन्ताजर्ज्जरचेतसामहतनृणांकानामशान्तिः कथा ॥ अपिच । क्षेत्रग्रामवनाद्रिपत्तनपुरोद्वीपत्वमामण्डलप्रत्याशानसूत्रबद्धमनसांलब्ध्वाधिकंध्यायताम् । तृष्णे देवियदिप्रसीदसितनोष्यङ्गानितुङ्गा

निर्वेत् तस्मो : प्राणभृतांकुत : श्रमकथाब्रह्माण्डलक्षं रपीति ॥ लोभएवमनुष्याणांदेहसंस्थोमहारिपु: । सर्वंदु: खाकर: प्रोक्तोदु: खद : प्राणनाशक: ॥ सर्वपापस्यमूलं हि सर्वदाहृष्णयान्वित : । विरोधक्रृन्निवर्णानांसर्वार्त्ते : कारणंतथा ॥ लोभात्त्यजन्निधर्मंवै कुलधर्मंतथैवहि । मातरंभ्रातरं हन्तिपितरंबान्धवंतथा ॥ गुरुंमित्रंतथाभामं पुत्रञ्चभगिनींतथा । लोभाविष्टो नकिंकुर्यादकृत्यंपापमोहित : ॥ क्रोधात्कामादहङ्कारात्लोभएव महारिपु : । प्राणांस्त्यजतिलोभे नकिंपुन : स्याद्‌नाहतम् ॥ तस्माल्लोभाभिभूतस्तुकिंनकुर्यान्नर : किलेतिदेवीभागवतम् ॥

लोभनी । स्त्री॰ महाश्रावणिकायाम् ॥

लोभनीय : । त्रि॰ हृष्णोत्पादके ॥

लोभी । त्रि॰ गृध्नौ । लुब्धे । लोभयुक्ते ॥ लोभोस्त्यस्य । इनि : ॥

लोभ्य : । पुं॰ मुद्गे ॥ त्रि॰ लोभनीये ॥

लोमम् । न॰ पुच्छे । लाङ्गूले ॥

लोमकरणी । स्त्री॰ मांसच्छदायाम् ॥

लोमकर्ण : । पुं॰ शशके । त्रि॰ लोमयुक्तकर्णविशिष्टे ॥

लोमघ्न : । पुं॰ इन्द्रलुप्तकरोगे ॥ त्रि॰ लोमघातके ॥ लोमानिहन्ति । हन॰ । अमनुष्यकर्तृकेचेतिटक् ॥

लोम । न॰ तनूरुहे । रोमणि ॥ रौतीति । रु॰ । नामन्सीमन्व्योमन्रोमन्लोमन्निति साधु ॥ यद्वा । लूयते । लुञ् छेदे॰ रुक्तीभावश्च वा । मनिन् । कपिलकादित्वाल्लत्वम् लूयतेवा ॥

लोमपाद : । पुं॰ ऋष्यशृङ्गमुने : पुत्रे । अङ्गदेशीयराजविशेषे ॥

लोमपादपू : । स्त्री॰ चम्पापुर्याम् । मालिन्याम् । कर्णपुरि ॥

लोमफलम् । न॰ भव्ये ॥

लोमवान् । त्रि॰ लोमशे ॥ लोमानि सन्त्यस्य । मतुप् ॥

लोमविष : । पुं॰ व्याघ्रादौ ॥

लोमश : । पुं॰ मुनिविशेषे ॥ मेषे ॥ त्रि॰ अतिशयलोमान्विते ॥ यथा । कदाचिद्दन्तुरोमूर्ख : कदाचिल्लोमश: सुखी । कदाचित्तुन्दिलोदु : खीकदाचित्स्थूलामती ॥ लोमानिसन्त्यस्य । लोमादिभ्य : श : ॥

लोमशकान्ता । स्त्री॰ कर्कट्याम् ॥

लोमशपर्णिनी । स्त्री॰ माषपर्ण्याम् ॥

लोमशपुष्पक : । पुं॰ शिरीषवृक्षे ॥

लोमशमार्जार : । पुं॰ पूतिके । मार्जारके । सुगन्धिनि । मूषघातके । गन्धमार्जारकेगन्धगोकुला॰ ष॰ गौ॰ दे॰ भा॰ प्र॰ ॥ गन्धमार्जार

वीर्यं नुवीर्यं क्लत्कफवातहृत् । क गडूकोठहरं मेल्यं सुगन्धंस्तिरगन्धनुत् ॥

लोमशा । स्त्री० काकजङ्घायाम् ॥ मांस्याम् ॥ वचायाम् ॥ शूकशिम्ब्याम् ॥ महामेदायाम् ॥ काशीशे ॥ शाकिनीभेदे ॥ शृगाल्याम् ॥ अतिबलायाम् ॥ घण्टारवायाम् । शणपुष्प्याम् ॥ एर्वारौ ॥ गन्धमांस्याम् ॥ लोमानिसन्त्यस्या : । लोमादिस्त्वाच्छ : । टाप् ॥

लोमशातनम् । न० लोमपातने ॥

लोमहर्ष : । पुं० रोमहर्षे रोमाञ्चे ॥

लोमहर्षण : । पुं० सूते । व्यासशिष्ये ॥ न० रोमाञ्चे ॥

लोमहृत् । पुं० हरिताले ॥

लोमालिका । स्त्री० शृगालिकायाम् । दीप्तजिह्वायाम् । उल्कामुख्यां ॥

लोमावली । स्त्री० रोमावल्याम् ॥

लोल : । त्रि० सतृष्णे ॥ चञ्चले ॥ लोडति । लुडविलोडने । क्वचिदपवादविषयेप्युत्सर्गं प्रवृत्तेरच् । डलयोरेकत्वम् ॥ यद्वा । लोडति । लोडृउन्मादे । पचाद्यच् ॥ देशविशेषे ॥

लोलमान : । त्रि० चलनशीले ॥ ताच्छील्ये तिचानश् ॥ लुण्ठमाने ॥

लोला । स्त्री० जिह्वायाम् ॥ कमलायाम् । श्रियि ॥ चञ्चलायांनार्याम् ॥ कामनायाम् ॥ शक्वरीछन्द: १४ प्रभेदे ॥ तल्लक्षणं यथा । हि: सप्तच्छिद्लोलाम सौम्भौगौ चरणं चेत् ॥ यथा , मुग्धे यौवनलक्ष्मी विद्युद्विभ्रमलोला० त्रैलोक्याद्भुतरूपोगोविन्दोतिदुराप : तद्वृन्दावनकुञ्जे गुञ्जद्भृङ्गसनाथे श्रीनाथेनसमेतास्वच्छन्दं कुरुकेलिम् । लोलात्टाप् ॥

लोलार्क : । पुं० सूर्ये । काशिस्थे रवौ ॥ लोलार्ककेशवौ कोटीगङ्गाज्यानगरं धनु : । कलिलं च :शरोधर्म : शिवोधन्वोपुनातुमाम् ॥

लोलिका । स्त्री० चाङ्गेर्याम् ॥

लोलित : । त्रि० वर्त्तुलीकृते ॥ चालिते ॥ श्लथे ॥ लोल : सञ्जातोऽस्य । इतच् ॥

लोलुप : । त्रि० अतिलुब्धे ॥ गर्हितं लुम्पति । लुप् लृच्छेदने । लुपसदेतियङ्न्ताद्च् ॥

लोलुभ : । त्रि० लोलुपे ॥ भृशं लुभ्यति । लुभगार्द्धे । धातोरेकाचद्वतियङन्ताद्च् ॥

लोष्ट : । पुं० न० मृत्खण्डे । पांशुपिण्डे । लोष्टो । ढीम० ढेला० इ० भा० ॥ लोष्टति । लोष्टसङ्घाते । पचाद्यच् ॥ यद्वा । लुनाति । लूञ् । लोष्टपलितावितिक्त : तस्यसुट् । धातोर्गुणश्चनिपातनात्

॥ न० लोहमलि ॥
लोष्टघ्नः। पुं० लोष्टभेदने ॥
लोष्टभेदनः। पुं० कोटिशे। लोष्ट
भङ्गसाधनकाष्ठे ॥
लोष्टमर्द्दी। त्रि० लोष्टमर्द्दनशीले ॥
लोष्टुः। पुं० लोष्टे। दृढमृत्पि
ण्डे ॥
लोहः। पुं० सर्वलोहितच्छागे ॥
पुं० न० लोहे। लोहविकारे ॥
जोङ्गके। अगुरुणि ॥ सर्वतैजसे
रुधिरे ॥ कृष्णायसे। दृषत्सारे।
शस्त्रके। कालायसे। लोहा० इ०
भा० प्र० अथलोहस्योत्पत्त्यादयो
यथा। पुरालोमिनदैत्यानांनिह
तानांसुरैर्युधि। उत्पन्नानिशरीरे
भ्यो लोहानिविविधानिच ॥ लोहोऽ
स्त्रीशस्त्रकंतीक्ष्णं पिण्डंकालायसा
यसी। गुरुतादृढतोत्क्लेदकश्मल
दाहकारिता ॥ अश्मदोषः सुदु
र्गन्धो दोषाः सप्तायसस्यतु। लोहं
तिक्तंसरंशीतंमधुरंतुवरंगुरु ॥
रूक्षंवयस्यंचक्षुष्यंलेखनंचानिलं
जयेत्। कफंपित्तंगरंशूलंशोथा
र्शःप्लीहपाण्डुताः ॥ मेदोमेहकृ
मीन्कुष्ठंतत्किट्टंतद्वदेवहि। यत्कट
त्वकुष्ठामयमृत्युद भवेद्धृद्रोगशूलौ
कुरुतेश्मरीञ्च। नानारुजानाञ्चत
थाप्रकोपंकरोतिहृल्लासमशुद्धलोह
म् ॥ जीवहारिमदकारिचायसं



चेदशुद्धिमदसंस्कृतंध्रुवम् ॥ पा
टवंनतनुतेशरीरकेदारुणांहृदिरु
जाञ्चयच्छति ॥ अथलोहदोषप्रशा
न्तयेशोधनमभिधीयते। पत्तलीकृ
तपत्राणिलोहस्याग्नौप्रतापयेत्।
निषिञ्चेत्तप्ततप्तानि तैलेतक्रे च
काञ्जिके ॥ गोमूत्रे चकुलत्थानां
कषायेचत्रिधात्रिधा। एवंलोहस्य
पत्राणांविशुद्धिः सम्प्रजायते ॥
अथास्यमारणविधिः। शुद्धलोह
भवंचूर्णंपातालगरुडीरसैः म
र्दयित्वापुटेद्वह्नौदद्यादेवंपुटत्रय
म् ॥ पुटत्रयंकुमार्याश्चकुठारच्छि
न्निकारसैः। पुटषट्कंततोदद्या
देवंतीक्ष्णमृतिर्भवेत् ॥ अन्यच्च।
त्रिपेद्द्वादशमांशेनदरदंतीक्ष्णचूर्ण
तः। मर्दयेत्कन्यकाद्रावैर्यामयु
ग्मंततः पुटेत् ॥ एवंसप्तपुटैर्मृ
त्युंलोहचूर्णमवाप्नुयात्। सत्यानु
भूतोयोगीन्द्रैः क्रमोऽयंलोहमार
णे ॥ कथ्यतेरामराजेनकौतूहल
धियाधुना सूतकाद्द्विगुणंगन्धं
दत्त्वाकुर्याच्चकज्जलीम्। द्वयोः स
मंलोहचूर्णंमर्दयेत्कन्यकाद्रवैः
॥ यामयुग्मंततः पिण्डंकृत्वाता
म्रस्यपात्रके। घर्मेधृत्वारुवूकस्यप
त्रैराच्छादयेद्बुधः ॥ यामद्वयाद्भवे
दुष्णंधान्यराशौन्यसेत्ततः। दत्त्वा
परिशरावञ्चदिनान्तेसमुद्धरेत् ॥

पिष्ट्वाचगालयेद्दस्त्रादेवंवारितरं भवेत् । दाडिमच्छदलंपिष्ट्वातच्चतुर्गुणवारिणा ॥ तद्रसेनायसच्चूर्णं सन्नीयात्प्लावयेदपि आतपेशोषयेत्तत्वपुटेदेवंपुनः पुनः ॥ एकविंशतिरात्रैस्तन्म्रियतेनात्रसंशयः एवंसर्वाणिलोहानिस्वर्णादीन्यपिमारयेत् ॥ एवंमारितस्यलोहस्यमात्रा । गुञ्जामेकांसमारभ्ययावत्स्युर्नवरक्तिकाः । तावल्लोहंसमश्नीयाद्यथादोषामलंनरः ॥ कूष्माण्डंतिलतैलञ्चमाषान्नंराजिकांतथा । मद्यमम्लरसञ्चैवत्यजेल्लोहसेवकः ॥ लुह्यते । लुहगार्द्धे । घञ् ॥ लोहितवा । अच् ॥ यद्वा । रोहति । रुह० । अच् । रलयोरैक्यम् ॥ रुह्यतेवा । घञ् । कपिलकादिः ॥ लूयतेऽनेनवा । लूञ० । बाहुलकात्० हेवा ॥ यदातुआयसेपात्रेपक्वमश्नातिवैद्विजः । सपापिष्ठोपिभुङ्क्तेऽन्नंरौरवेपरिपच्यते इतिमत्स्यसूक्ततन्त्रेलोहपात्रेभक्षणनिषेधः ॥ ब्रह्मवैवर्तेपि । यथा । अयःपात्रेपयःपानंगव्यंसिद्धान्नमेवच । भृष्टादिकंमधुगुडंनारिकेलोदकंतथा । फलंमूलंचयत्किञ्चिदभक्ष्यंमुनिरब्रवीदिति ॥

लोहकण्टकः । पुं० मदनद्रुमे ॥ लोहमयकण्टके ॥

लोहकान्तः । पुं० अयस्कान्ते ॥ लोहः कान्तोऽस्य ॥

लोहकारः । पुं० लोहकारके । व्योकारे ॥ लोहंकरोति । डुकृञ्० । कर्मण्यण् ॥

लोहकारकः । पुं० लोहकृति । व्योकारे । लोहार० इ० भा० । कर्मकारे ॥ सङ्करजातिरयंयथा । गोपालात्तन्तुवाय्यांवैकर्मकारोप्यभूत्सुतः । इ० प० पु० ॥

लोहकिट्टम् । न० लोहमले । किट्टे ॥ यल्लोहंयद्गुणंप्रोक्तंतत्किट्टमपि तद्गुणम् ॥ लोहस्यकिट्टम् ॥

लोहचूर्णम् । न० लोहकिट्टे ॥

लोहजम् । न० कांस्ये ॥ लोहकिट्टे ॥

लोहद्रावी । पुं० टङ्कणे ॥

लोहधमनी । स्त्री० भस्त्रायाम् ॥

लोहनालः । पुं० नाराचे ॥

लोहपृष्ठः । पुं० कङ्कपक्षिणि ॥ लोहमिवपृष्ठमस्य ॥

लोहप्रतिमा । स्त्री० लोहमय्यांप्रतिमायाम् । सूर्म्याम् ॥

लोहमयः । त्रि० लोहात्मके ॥

लोहमारकः । पुं० शाल्मिंचशाके ॥

लोहराजकम् । न० कालधौते । रूप्ये ॥

लोहलः । पुं० शृङ्खलाधार्ये ॥ त्रि०

अव्यक्तशाखिनि ॥ लोहनं लोहः
लुहकाल्पनादाविति स्वामी । लुह
चौर्य्यार्थे इति वोपदेवः । भावे घञ्
। लोहं लाति । आतोऽनुपेति कः ॥
यद्वा । रोहयते र्बाहुलकादलच् ।
कपिलकादित्वाल्लत्वं ॥

लोहवरम् । न० स्वर्णे ॥

लोहशिङ्घाणिका । स्त्री० लोहमले ।
मण्डूरे ॥

लोहश्लेषणः । पुं० टङ्कणे ॥

लोहसङ्करम् । न० वर्त्तलोहे ॥

लोहसारः । पुं० साराख्यलोहे ॥ यथा
भृङ्गिखराकारान्यङ्गान्यस्मिन्नलेपि
ते । लोहस्य यत्र सूक्ष्माणि तत्सारम
भिधीयते ॥ लोहसारश्चयं हन्यात्
ग्रहणीमतिसारकम् । अर्शःसर्वाङ्ग
जं वातं शूलञ्च परिणामजम् । छर्दि
ञ्च पीनसं पित्तं श्वासमाशु व्यपोहति॥

लोहाख्यम् । न० अगुरुणि ॥

लोहाभिसारः । पुं० भूपानां नीराज
नाविधौ । महानवम्यां प्राक् प्रस्था
नाच्छस्त्रवाहनादिपूजनविधौ । लो
हाभिहारे । लोहस्य शस्त्रस्य अभितः
सरणम् । सृगतौ । भावे घञ् ॥
लोहाभिसारोऽस्त्रभृतां राज्ञां नीरा-
जनाविधिः ॥

लोहाभिहारः । पुं० लोहाभिसारे ।
लोहस्य शस्त्रस्य अभितोहरणम् । हृ
ञ । भावे घञ् । लोहाभिहारस्त्व
स्त्रो विधिर्नीराजनोत्तरः ॥

लोहार्गलः । पुं० तीर्थविशेषे ॥ न०
स्त्री० लोहकीलके ॥

लोहि । न० श्वेतटङ्कणे ॥

लोहिका । स्त्री० खरसीन्टे । खर
पात्रे । लौहपात्रे ॥

लोहितः । पुं० नदविशेषे ॥ भौमे
। मङ्गले ॥ रक्तवर्णे ॥ रोहितम
त्स्ये ॥ मृगविशेषे ॥ सर्पे ॥ सुरा
न्तरे ॥ मसूरे ॥ रक्तशालौ ॥ रक्त-
शालौ ॥ बलभेदे ॥ न० रक्तगोशीर्षे
कुङ्कुमे ॥ रक्तचन्दने ॥ पद्मरागे पतंगे
॥ हरिचन्दने ॥ कृष्णकुङ्कुमे ॥ रु
धिरे ॥ युद्धे ॥ त्रि० रक्तवर्णान्वि
ते ॥ रोहति० रुह्यते वा । रुह० ।
रुहेरश्च लो वेतीतन् ॥

लोहितकः । पुं० पद्मरागमणौ ॥
भौमग्रहे ॥ लोहितएवमणिः लो
हितान्मणाविति कन् ॥ न० रीतौ ॥

लोहितचन्दनम् । न० कुङ्कुमे ॥ लो
हितञ्चतच्चन्दनं च ॥ रक्तचन्दने ॥

लोहितपुष्पः )
लोहितपुष्पकः ) पुं० दाडिमवृक्षे ॥

लोहितमृत्तिका । स्त्री० गैरिके रक्तवर्ण
मृत्तिकायाम् ॥ लोहिता चासौ
मृत्तिका च ॥

लोहिता । स्त्री० रागादिरक्तायाम् ॥
वराहक्रान्तायाम् ॥ रक्तपुनर्नव
याम् ॥ वर्णादनुदात्तादिति पाक्षि

स्त्रीङीबभावस्तकारस्यनकारादेश-श्च न ।

लोहिताक्षः । पुं॰ विष्णौ ॥ प्रतिष्ठायामग्निभेदे ॥ कोकिले ॥ त्रि॰ रक्तवर्णचक्षुर्युक्ते ॥ लोहितेअक्षिणीयस्यसः । बहुव्रीहौसक्थ्यक्ष्णोः स्वाङ्गात्षच् ॥

लोहिताङ्गः । पुं॰ कुजे ॥ कम्पिल्लके ॥ लोहितान्यङ्गान्यस्य ॥

लोहिताननः । पुं॰ नकुले ॥ त्रि॰ रक्तवर्णमुखे ॥

लोहितायः । न॰ ताम्रे ॥

लोहितायसम् । न॰ रक्तवर्णलोहजातौ ॥

लोहितिका । स्त्री॰ लोहितायाम् ॥ लोहितैव । लोहितान्मणाविच्च ॰लोहितालिङ्गबाधनंवेतिकन् ॥

लोहित्यः । पुं॰ अब्धौ ॥ नदे ॥ व्रीहौ ।

लोहिनिका । स्त्री॰ लोहिन्याम् ॥ लोहिन्येव । लोहितालिङ्गबाधनंवेतिकन् ॥

लोहिनी । स्त्री॰ लोहितायाम् ॥ वर्णादनुदात्तादितिङीप्॰ तकारस्यचनकारादेशः ॥ गुञ्जायाम् ॥

लोहोत्तमम् । न॰ स्वर्णे काञ्चने ॥ लोहेषुसर्वतैजसेषुउत्तमम् ॥

लौकायतिकः । पुं॰ चार्वाकदर्शनाभिज्ञे ॥ लोकायतमधीतेवेदवा । उक्थादित्वात्॰ क्रतूक्थादिसूत्रान्ताट्ठक् ॥ नास्तिकभेदे ॥

लौकिकः । त्रि॰ अप्रामाणिकशास्त्रपरिशीलनजन्यबुद्धिप्रकर्षे । प्रतिपाद्ये ॥ लोकप्रसिद्धे ॥ लोकव्यवहारमात्रपरे ॥ लोकानुरञ्जनमेवतत्त्वमिति लौकिकानांभ्रान्तिमात्रमेव । लोकस्यभिन्नरुचित्वात्॰ तदनुरञ्जनस्येश्वरेणापिकर्त्तुमशक्यत्वात् ॥ यथाहुः । विद्यतेनखलुकश्चिदुपायः सर्वलोकपरितोषकरोयः । सर्वथास्वहितमाचरणीयंकिंकरिष्यति जनोबहुजल्पइति ॥ लोकेविदितः । अर्थशास्त्रादिज्ञाने ॥ लोकसर्वलोकाट्ठञ् ॥ भवार्थेत्वध्यात्मादित्वाट्ठञ् ॥ स्मृत्युपनिबद्धे धर्मादौ । न॰ जागरिते ॥

लौकिकाग्निः । पुं॰ असंस्कृताग्नौ ॥

लौल्यम् । न॰ चापल्ये ॥ लोलस्यभावः ष्यञ् ॥

लौहः । पुं॰ न॰ लोहे ॥ लोहएव । प्रज्ञाद्यण् ॥ लोहस्यविकारः । रजतादित्वादञ् ॥

लौहकारकः । पुं॰ नरकभेदे ॥

लौहजम् । न॰ मण्डूरे ॥

लौहभाण्डः । पुं॰ अश्मभालि । हामामदिस्ता, इति साधारणभाषाप्रसिद्धे ॥ न॰ लोहनिर्मितभाण्डे ॥

वंश :

लोहभू : । स्त्री० कठिन्याम् ॥

लोहशङ्कु : । पुं० नरकविशेषे ॥ लोहनिर्मितकीलके ॥

लोहा । ) स्त्री० कठिन्याम् ॥
लोहात्मा । ) स्त्री०

लोहित : । पुं० लोहिते ॥ त्रि० लोहितसम्बन्धिनि ॥

लोहितीक : । पुं० स्फटिके ॥ त्रि० लोहितवर्णतुल्ये ॥ लोहितवृत । कर्कलोहिताट्टीकक् ॥

लौहित्य : । पुं० नदविशेषे । ब्रह्मपुत्रइतिप्रसिद्धे । अब्धौ । सागरे ॥ व्रीहौ ॥ न० लोहितत्वे । रक्तिमनि ॥ तीर्थविशेषे ॥ †*†

लकारस्समाप्त :

०†—†०

वकारस्य प्रारंभ :

व० । अ० इवार्थे । औपम्ये ॥ पादपूरणे ॥

व : । पुं० वकारे ॥ सान्त्वने ॥ वाते ॥ वरुणे ॥ वातिवानंवा ॥ वागतिगन्धनयो : । ड : ॥ वाणी ॥ मन्त्रणे ॥ कल्याणे ॥ वलवति ॥ शार्दूले ॥ वस्त्रे ॥ शालूके ॥ वन्दने ॥ न० प्रचेतसि ॥ वरुणबीजे ॥

वंश : पुं० पितृपितामहाद्युत्पादकप्रबन्धे । सन्ततौ । गोत्रे । जनने । कुले । जन्मनैकलक्षणे । सन्ताने ॥ शिष्याचार्यसन्तानाविच्छेदे ॥ त्वकसारे । कर्मारे । त्वचिसारे । तृणध्वजे । वांस० इ० भा० प्र० ॥ अस्य गुणा यथा । वंश : सरोहिम : स्वादु : कषायोवस्तिशोधन : । छेदन : कफपित्तघ्न : कुष्ठास्रव्रणशोथजित् ॥ तत्करीर : कटु : पाकेरसेरूक्षोगुरु : सर : । कषाय : कफकृत्स्वादुर्विदाहीवातपित्तल : ॥ तद्यवास्तुसरारूक्षा : कषाया : कटुपाकिन: । वातपित्तकराउष्णाबद्धमूत्रा : कफापहा : ॥ पृष्ठावयवे ॥ वर्गे । सङ्घे ॥ वाद्यविशेषे। वंसी० वांसी० इ० भा० ॥ इक्षुविशेषे । वंशके ॥ सालवृक्षे ॥ वशति० वश्यतेवा । टूवमउद्गिरणे । वृभृवशिभ्य : शक्० इतितुन । उणासूत्रस्योज्ज्वलदत्तादिसूत्रवृत्तिष्वदर्शनात्० अनुनासिकस्य क्युपधादीर्घप्रसङ्गाच्च ॥ वनति० वन्यतेवा । वनशब्दे० वनसम्भक्तौवा । बाहुलकात्० श : ॥ उच्यते० वष्टिवा ॥ वशकान्तौ । घञ् । कञ्वा । सङ्ख्यावंशेनेतिनिर्देशान्नुम् । पाणिनीयेप्यनुमितियोगविभागाद्वा ॥

वंशक : पुं० इक्षुविशेषे । वडोखा० इ० देशभा० प्र० । वांशा० सोमसाडा० इ० प० गौ० दे० भा० प्र० ॥ दीर्घ

पोरः सुकठिनः सचारोवंशकः स्मृतः ॥ वंशकस्तुनभिष्यन्दीलघुर्दोषचयापहः ॥ वंशद्रुप । इक्षुभेदे तिक्तताविसिकन ॥ वांशपातामाच०इ०गौ०दे०भा०प्र०मत्स्ये ॥ न० अगुरुणि ॥

वंशकठिनः । पुं० देशविशेषे ॥ वंशाः वेणवः कठिनायस्मिन्सः ॥

वंशकफम् । न० इन्द्रतूले । वृद्धसूत्रके । ग्रीष्मकासे । बुढियाकासूत० इ०भा०प्र० ॥

वंशकर्पूररोचना । स्त्री० वंशरोचनायाम् ॥

वंशक्षीरी । स्त्री० वंशरोचनायाम् ॥ वंशात्क्षीरमस्याः । गौरादिः ॥

वंशगुल्मः । पुं० तीर्थविशेषे ॥

वंशजः । पुं० वेणुयवे । वंशबीजे ॥ त्रि०वंश्ये । सद्वंशजाते ॥ वीज्ये ॥

वंशजातः । जनौ० । डः ॥

वंशजा । स्त्री० वंशरोचनायाम् ॥ वंशात्०जायते । जनौ० । पञ्चम्यामितिडः ॥

वंशतण्डुलः । ) पुं०
वंशधान्यम् । ) न० वेणुयवे । वंशयवे ॥

वंशनालिका । स्त्री० वंशीवाद्ये ॥

वंशनेत्रम् । न० इक्षुमूले ॥

वंशपत्रः । पुं० नले ॥ न०वंशस्यदले ॥

वंशपत्रकः । पुं० श्वेतेक्षौ ॥ वांशपातामाच०इ०गौ०दे०भा०प्र०क्षुद्रमत्स्ये ॥ नन्ने ॥ न०हरिताले ॥

वंशपत्रपतितम् । न० अत्यष्टिच्छदः १७ प्रभेदे ॥ यथा । दिङ्मुनिवंशपत्रपतितंभरनभनलगैः ॥ यथा । नूतनवंशपत्रपतितंरजनिजलजलवं०पश्यमुकुन्दमौक्तिकमिवोत्तममरकतगम् । एषचतंचकोरनिकरः प्रपिबतिमुदितो०बान्तमवेत्यचन्द्रकिरणैरमृतकणमिव ॥

वंशपत्री । स्त्री० वेणुपत्र्याम् । हिङ्गुपर्य्याये ॥ हिङ्गुपत्रीगुणाविज्ञैर्वंशपत्रीचकीर्त्तिताः ॥ नाडीहिङ्गुनि ॥ तृणविशेषे । वंशदलायाम् ॥ अस्यागुणाः । सुमधुरत्वशिशिरत्वपित्तरक्तदोषनाशित्वरुच्यत्वानि०पशुमांद्यक्षटायित्वञ्चेतिराजनिर्घण्टः ॥

वंशपीतः । पुं० कणगुग्गुलौ ॥

वंशपुष्पा । स्त्री० सहदेवीलतायाम् ॥

वंशपूरकम् । न० इक्षुमूले ॥

वंशमूलकम् । न० तीर्थविशेषे ॥

वंशयवः । पुं० वंशधान्ये ॥ यवावंशभवारूक्षाः कषायाः कटुपाकिनः । बद्धमूत्राः कफघ्नाश्चवातपित्तकराः सराः ॥

वंशरोचना । स्त्री० त्वक्क्षीर्याम् वे

यव्याम् । श्वेतायाम् ॥ गुणाय-
था । वंशजाङ्कुरश्चीवष्याबल्यास्रा
दोषशीतला । तृष्णाकासज्वरस्रा
सचयपित्तास्रकामला : । हरेत्कु
ष्ठंव्रणं पाण्डुंकषायावातकृच्छ्रजि-
त् ॥ रोचते । रुच० । नन्द्यादि : ।
वंशस्यरोचना ॥

वंशरोचनिका । स्त्री० वंशरोचनाया
म् ॥

वंशलोचना । स्त्री० ) वंशरोचना
वंशशर्करा । स्त्री० ) याम् ॥

वंशशलाका । स्त्री० वीणामूले ॥

वंशस्तनितम् । न० वंशस्यबिले ॥

वंशस्थम् । न० जगती १२ प्रभेदे ॥
यथा । पुरोजकार : परतस्तसंज्ञ-
कौगणोजकारोरगणस्तत : परम् ।
निवेशितश्चेद्यशवन्तभूपतेश्रोतिवं
शस्थमद्दत्तदाफणी ॥ जतौतुवंश-
स्थमुदीरितंजराविति चास्यलक्षण-
म् ॥ त्रि०वंशेस्थिते ॥

वंशस्थविलम् । न० जगति १२ प्रभे
दे । वंशस्थेवृत्ते ॥ यथा । वदन्ति
वंशस्थबिलंजतौजरौ । यथा । वि
लासवंशस्थबिलंमुखानिलै : प्रपू-
र्य्य : पञ्चमरागमुद्गिरम् । व्रजाङ्ग
नानामपिगानशालिनांजहारमानं
सहरि : पुनातुन : ॥

वंशाग्रम् । न० वंशाङ्कुरे ॥

वंशाङ्कुर : । पुं० करीरे । वंशाग्रे ।
यवफलाङ्कुरे ॥

वंशानुचरितम् । न० वंशचरितवर्ण-
र्णने ॥

वंशिकम् । न० अगुरुणि ॥ वंशोस्त्य-
स्य । अतइनिठनाविति ठन् ॥

वंशिका । स्त्री० वंश्याम : वेणौ ॥ अ
गुरुणि ॥

वंशी । स्त्री० मुरलीवाद्ये । वंसरी०
इ०भा० ॥ कर्ष चतुष्टये ॥

वंशीधर : । पुं० श्रीकृष्णे ॥ धरतीति
धर : । वंश्याधर : ॥ त्रि०वंश्याधा-
रके ॥

वंश्य : । त्रि० सद्वंशजाते । कुल्ये ।
बीज्ये ॥ वंशेभव : । दिगादित्वा
द्यत् ॥

वंहिष्ठ : । त्रि० अत्यन्तबहुले ॥ अय-
मेषामतिशयेनबहुल : । अतिशाय
नेतमविष्ठनाविति ष्ठन् ॥ प्रियस्थि-
रस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृ-
न्दारकाणांप्रस्थस्फवर्बंहिगर्वर्षित्र
प्द्राघिवृन्दाइतिबंह्यादेशेनसाधु : ।

वंहीयान् । त्रि० बहुलतरे ॥ अयमन
योरतिशयेनबहुल : । द्विवचनवि
भज्योपपदेतरबीयसुनाविती यसुनि
प्रियस्थिरेत्यादिनाबंह्यादेश : ॥

वक : । पुं० बकार्थेषु ॥ यनृत्यविशेषे ॥
यथा । जलकक्षपपातालदोलाभूध
रबालुका : । बकाद्यायन्त्रभेदास्युर्वे
काम्भाद्याश्चमूषिका : ॥ दीर्घक-

शठश्चापकुप्यागिलयेत्स्वल्पभाण्डकम् । तिर्यक्कृत्त्वा पचेच्च स्थाव-कयन्त्रमिदंस्मृतम् ॥ असुरविशेषे ॥

वकवृत्ति : । पुं० वकवृत्तौ ॥ तल्लक्षणं यथा । अधोदृष्टिर्नैकृतिकः स्वार्थसाधनतत्पर : । शठोमिथ्याविनीतश्चवकवृत्तिरुदाहृत : ॥

वकुल : । पुं० वकुले ॥ न० अस्यफले ॥ अस्यगुणा : । वकुलंमधुरं ग्राहिदन्तस्थैर्यकरंपरम् ॥ पुष्पगुणास्तु । पक्कंकषायंमधुरंशीतं पित्तकफास्त्रनुत् । तद्वद्वकुलपुन्नागकह्लारोत्पलपाटलम् ॥

वक्तव्य : । त्रि० कुत्सिते । विहितकर्मत्यागाल्लोकविगर्हिते ॥ हीने वचनार्हे । अधीने ॥ वचनार्ह : । वचपरिभाषणे० ब्रूञ् आदेशोवातव्य : ॥ न० वचने ॥

वक्ता । त्रि० पण्डिते ॥ वदे । वदावदे । योहिवक्तुंजानातितस्मिन् औचित्याद्बहुविशिष्टंयोवदतितत्रेत्यर्थ : ॥ सुष्ठुवक्तरि ॥ बहुभाषिणि । वाचोयुक्तिपटौ । वाग्मिनि । वावदूके ॥ वक्ति । वचपरिभाषणे । तृन् ॥

वक्त्रम् । न० आस्ये । मुखे ॥ यथा । सौम्यस्वसंवृतंवक्त्रममलंयस्यदेहिन : । महाराजाभवेन्नित्यंविपरोते तुनिरंनट्ठति ॥ उच्यतेऽनेन । वच० । ब्रूञोवचिर्वा । गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्र : ॥ वस्त्रभेदे तगरमूले । विषमवृत्तान्तरे ॥ तस्य लक्षणादियथा । भवत्यत्रसमंवक्त्रं विषमस्वक्षराष्टाचन । तयोश्चैवोरूपान्तेचच्छन्दस्तदुधैरुच्यते ॥ वक्त्रंयुग्भ्यामगौस्यातामब्धेर्योऽनुष्टुभिख्यातम् ॥ अचहिराद्यत्याश्लोक : पूरयितव्य : ॥ वक्त्राम्भोजंसदास्मेरंचचक्षुर्नीलोत्पलंफुल्लम् । अत्रमीनां मुरारातेरेतोभृङ्गंजहारोर्वै : ॥

वक्त्रखुर : । पुं० दन्ते ॥

वक्त्रज : । पुं० ब्राह्मणे ॥ त्रि० मुखजाते ॥

वक्त्रतालम् । न० मुखवाद्ये ॥

वक्त्रपट्ट : । पुं० अश्वान्नभोजनपात्रे । तोबड़ा० हं० भा० प्र० ॥

वक्त्रभेदी । पुं० तिक्तरसे ॥ त्रि० मुखभेदके ॥

वक्त्रवास : । पुं० नागरङ्गे ॥ मुखगन्धे ॥

वक्त्रशोधनम् । न० भव्ये ॥ मुखशुद्धिकरणे ॥

वक्त्रशोधी । पुं० जम्बीरे । त्रि० आस्यशोधके ॥

वक्त्रासव : । पुं० अधरमधुनि ॥

वक्र : । पुं० शनैश्चरे ॥ मङ्गलग्रहे ॥ रुद्रे ॥ त्रिपुरासुरे ॥ पर्पटे ॥ वक्र

गतिविशिष्टेग्रहे ॥ न० सरिद्वङ्के पुट भेदे ॥ त्रि० वक्रगौ । अराले । कुटिले । क्रूरे ॥ वक्रतिस्म । वक्रगतौ । स्फायितञ्चीतिरक् । न्यङ्क्वादित्वात्कुत्वम् ।

वक्रकण्ट : । पुं० बदरवृक्षे ॥

वक्रकण्टक : । पुं० खदिरवृक्षे ॥

वक्रखड्ग : । पुं० करवाले ॥

वक्रग्रीव : । पुं० उष्ट्रे ॥

वक्रचञ्चु : । पुं० शुके । कीरे ॥

वक्रतालम् । न० ) मुखवाद्ये ॥
वक्रताली । स्त्री० )

वक्रतुण्ड : । पुं० गणेशे ॥ शुकखगे ॥

वक्रदंष्ट्र : । पुं० शूकरे ॥

वक्रनक्र : । त्रि० खले । पिशुने ॥ पुं० शुकखगे ॥

वक्रनालम् । न० मुखवाद्ये ॥

वक्रनासिक : । पुं० पेचके ॥ त्रि० कुटिलनासायुक्ते ॥

वक्रपट्ट : । पुं० तलसारके । तङ्ग० इ० भा० प्र० ॥

वक्रपुच्छ : । पुं० कुक्कुरे ॥

वक्रपुष्प : । पुं० पलाशद्रुमे ॥ वकवृक्षे ॥

वक्रबालधि : । पुं० शुनि ॥

वक्रभणितम् । न० क्रोकोक्तौ । कुटिलवाक्ये ॥

वक्रम : । पुं० पलायने

वक्रलाङ्गूल : । पुं० कुक्कुरे ॥

वक्रवक्त्र : । पुं० शूकरे ॥

वक्रशल्या । स्त्री० कुटुम्बिनीक्षुपे ।

वक्रशृङ्गी । स्त्री० गोविशेषे ॥

वक्रा । स्त्री० शृङ्गग्राम् । अजशृङ्ग्याम् ॥

वक्राग्रम् । न० कपाटवक्रवृक्षे ॥

वक्राङ्ग : । पुं० हंसे । न० कुटिलावयवे ॥

वक्री । पुं० बुधे ॥ त्रि० वक्रगतिविशिष्टे ॥

वक्रोक्ति : । स्त्री० काकूक्तौ ॥ शब्दालङ्कारप्रभेदे । यथा । यदुक्तमन्यथावाक्यमन्यथार्थं नयोज्यते । श्लेषेणकाक्वावाज्ञेया सावक्रोक्तिस्तथाद्विधा ॥ तथेतिश्लेषवक्रोक्ति : काकुवक्रोक्तिश्च ॥ पदभङ्गश्लेषेणयथा । नारीणामनुकूलमाचरसिचेज्जानासिकश्चेतनोवामानांप्रियमादधासि हित कृन्नैवाबलानांभवान् । युक्ताकिंहितकर्त्तनंननुबलाभावप्रसिद्धात्मन : सामर्थ्यंभवत : पुरन्दरमतच्छेदंविधातुंकुत : ॥ अभङ्गश्लेषेणयथा । वहोकेनेदृशीबुद्धिर्दारुणातवनिर्मिता । त्रिगुणाश्रूयतेबुद्धिर्न तुदारुमयीक्वचित् ॥ काक्वायथा । गुरुजनपरतन्त्रतया दूरतरंदेशमुद्यतोगन्तुम् । अलिकुलकोकिलललितेनैष्यतिसखिसुरभि

समयेषी ॥ कुटिलोक्तौ ॥ यथा । वादीव्याकरणं विनैवविदुषांधृष्टः प्रविष्टः सभांजल्पन्नल्पमतिः स्मयात्पटुवटुभ्रूभङ्गवक्रोक्तिभिः । ह्रीतः सन्नुपहासमेतिगणकोगोलानभिज्ञस्तथाज्योतिर्वित्सदसिप्रगल्भगणकप्रश्नप्रपञ्चोक्तिभिः ॥

वक्रोष्ठिका । स्त्री० स्मिते । यद्दृष्टिरदृश्ये । ईषद्धास्ये ॥

वक्षणम् । पुं० वक्षसि ॥

वक्षाः । पुं० अनडुहि ॥ वहति । वह० । वहिहाधाञ्भ्यश्छन्दसीत्यसुन्प्रत्ययस्यचसुट्इतिहस्तिकृत् ॥

वक्षः । न० अवयवविशेषे । हृदयादुपरिकंठादधोभागे । क्रोडे । भुजान्तरे । उरसि । वत्से ॥ अस्यशुभाशुभलक्षणंयथा । अन्नवान्समवक्षाःस्यात्पीनैर्वक्षोभिरूर्जितः । वक्षोभिर्विषमैर्निःस्वः शस्त्रेण निधनस्तथेतिगारुडे ६६ ॥ अर्थवान्समवक्षाःस्यात्पीनैःशूरा धनान्विताः । अल्पैश्चविकलादीनाविषमैःशस्त्रमृत्यवइतिसमुद्रः ॥ वक्षति । वक्षसङ्घाते । असुन् ॥ उच्यतेऽनेनवा । वच० । पचिवचिभ्यांसुडुत्यसुन् ॥

वक्षोजः । पुं० ) कुचे । स्तने ॥
वक्षोरुहम् । न० )

वगला । स्त्री० देवीविशेषे ॥ यथा । वैद्यनाथेतुवगलास्थानंसर्वोत्तमंमतमिति ॥

वगलामुखी । स्त्री० महाविद्याविशेषे । पीताम्बरायाम् । वगलायाम् ॥

वगाहः । पुं० अवगाहे ॥ भागुरीत्युपाल्लोपः ॥

वग्नुः । पुं० वक्तरि ॥ वक्ति । वच० । वचेर्गश्चेतिनुः ॥

वङ्कः । पुं० पर्याणभागे । पर्याणकोटौ ॥ नदीपार्श्वे ॥ भङ्गुरे । वक्रे । इतिमेदिनिकरः ॥

वङ्कसेनः । पुं० अगस्तिद्रुमे ॥

वङ्का । स्त्री० वल्गाग्रभागे ॥

वङ्किलः । पुं० कण्टके । द्रुमनखे० इ० शि० शेषः ॥

वङ्क्यः । त्रि० वक्रे ॥

वङ्क्रिः । पुं० न० वाद्यप्रभेदे ॥ वङ्कते । वकिकौटिल्ये । वङ्क्यादयश्चेतिक्रिन्नन्तः साधुः ॥ गृहदारुणि ॥ पार्श्वास्थिनि । पर्शुके ॥

वङ्क्रिमः । त्रि० कुटिले ॥

वङ्क्षणः । पुं० वस्त्यधजङ्घमेढ्रायामन्तरालसन्धौ ॥ वाङ्क्षति० वाङ्क्ष्यतेवा । वाक्षिकाङ्क्षायाम् । ल्युट्वाहुलकान्नातोऽङ्ख्स्वः ॥ वङ्क्षतेवङ्क्षणइतिस्वामी ॥ यद्वा । वक्षति । वक्षरोषसंहत्योः । ल्युट् । आच्छीनद्योर्नुमित्यत्र०

नुमितियोगविभागान्नुम् ॥

वङ्क्षु :। स्त्री० गङ्गास्रोतोविशेषे ॥ यथा। तस्या : स्रोतसिसीतावङ्क्षु भद्रावकीर्त्तितेतिशब्दमाला ॥ सातवर्णतताद्दिक्षु चतुर्द्धाप्रतिपद्यते । सीतावालकनन्दावङ्क्षु भद्रावेक्रमात् ॥ सागङ्गा ॥ वंक्षुश्चपश्चिमगिरीनतीत्यसकलंतत :। पश्चिमंकेतुमालाख्यंवर्षमन्वेतिसार्णवम् ॥

वङ्ग :। पुं० कार्पासे । वृन्ताके । चन्द्रवंशीयवलिराजपुत्रे ॥ वङ्गा : पुं० भूम्नि० । जनपदविशेषे ॥ रत्नाकरंसमारभ्यव्रह्मपुत्रान्तगंशिवे । वङ्गदेशोमयाप्रोक्त : सर्वसिद्धिप्रदर्शक :॥ वङ्गानांनिवासोजनपद : वङ्गा :। निवासिणोजनपदेलुप्। लुपियुक्तवद्भाव :॥ न० रङ्गे । त्रपुणि। स्वर्णजे। नागजीवने । मृदङ्गे । रङ्गे । सिंहले । रांगइ० भा० प्र० धातुविशेषे ॥ खुरकंमिश्रकंचापिद्विविधंवङ्गमुच्यते। उत्तमंखुरकंतत्र० मिश्रकम्त्वहितंमतम् ॥ पश्चात्त्रङ्गम् ॥ सीसके ॥ वङ्गति वगिगतौ । पचाद्यच् ॥

वङ्गजम् । न० सिन्दूरे ॥ त्रि० वङ्गदेशजाते ॥

वङ्गन :। पुं० वार्त्ताकौ ॥

वङ्गशुल्वजम् । न० कांस्ये ॥

वङ्गसेन :
वङ्गसेनक :। ) पुं० वकद्रुमे । अगस्तिवृक्षे । मुनिद्रुमे ॥ अस्यपुष्पगुणा :। वासकस्यचपुष्पाणिवङ्गसेनस्यचैवहि । कटुपाकानितिक्तानिकासक्षयकराणिच ॥

वङ्गला । स्त्री० रागिणीविशेषे ॥

वङ्गारि :। पुं० हरिताले ॥

वङ्गाल :। पुं० भैरवरागपुत्रे ॥

वङ्गाली । स्त्री० भैरवरागस्यरागिण्याम् ॥

वच :। पुं० कीरे । शुकपक्षिणि ॥ वक्ति । वचपरिभाषणे । पचाद्यच् ॥

वचक्नु :। पुं० विप्रे । व्राह्मणे ॥ ऋषिविशेषे ॥ त्रि० वावदूके ॥ वक्ति । वच० । स्युवचिभ्योन्युआगू जकनुचक्नुस्यकनुच् ॥

वचण्डा । स्त्री० वरिण्डायाम् ॥

वचण्डी । स्त्री० शारिकायाम् ॥ वर्त्तौ ॥ शस्त्रप्रभेदे । क्षुरिकायाम् ॥

वचनम् । न० दूरायाम् । उक्तौ । वाचि । भाषणे ॥ श्रुतिमाचात्सुधातुल्यंसर्वकालसुखावहम् । सत्यंसारंहितकरंवचनंश्रेष्ठमीप्सितम् ॥ वचेर्भावेल्युट् उच्यतेऽनेनवा ॥ शुण्ठ्याम् ॥ वाचोहस्तौ ॥

वचनग्राही । त्रि० अचनेस्थिते ॥

वचनीय :। त्रि० वक्तव्ये ॥ वचेरनीयर् ॥

वचनीयता । स्त्री० निंदायाम् । लोकापवादे ॥ भावेतल् ॥

वचनेस्थित : । त्रि० विधेये । विनयग्राहिणि । आश्रवे । प्रवृत्तिनिवृत्त्योर्विधानुशक्ये ॥ वचनेतिष्ठतिस्म । ष्ठा० । गत्यर्थेतिक्त : । तत्पुरुषेकृतीत्यलुक् ॥

वचनोपक्रम : । पुं० वाक्यारम्भे । उपन्यासे ॥

वचर : । पुं० कुक्कुटे ॥ शठे ॥

वचलु : । पुं० वैरिणि ॥ शत्रौ ॥

वच : । न० वाक्ये । वाचि । वचने ॥ वच० । सर्वधातुभ्योऽसुन्नित्यसुन् ॥

वचसाम्पति : । पुं० सुरगुरौ । बृहस्पतौ ॥

वचा । स्त्री० शारिकायाम् ॥ उग्रगन्धौषधौ । षड्ग्रन्थायाम् । गोलोम्याम् । शतपर्विकायाम् । अस्या गुणायथा । वचोग्रगन्धाकटुकातिक्तोष्णावान्तिवह्निकृत् । विबन्धाध्मानशूलघ्नीशकृन्मूत्रविशोधनी ॥ अपस्मारकफोन्मादभूतजन्त्वनिलान्हरेत् ॥ अपिच । अह्निर्वापयसाश्येनमासमेकंतुसेविता । वचाकुर्यान्नरंप्राज्ञंश्रुतिधारणसंयुतम् ॥ चन्द्रसूर्यग्रहेपीतंपलमेकंपयोन्वितम् । वचायास्तत्क्षणंकुर्यान्महाप्रज्ञान्वितंनरम् ॥ अथवचाभेदा : । पारसीकवचाशुक्लाप्रोक्ताहैमवतीतिसाहैमवत्युदितातद्वच्छुक्लान्तिविशेष - त : ॥ अथमहाभरीवचा० यस्या : कुलञ्जन० इतिभाषायांनामान्तरम् । सुगन्धाप्युग्रगन्धाचविशेषात्कफकासनुत् । सुस्वरत्वकरीरुच्याहृत्कण्ठमुखशोधनी ॥ अपरासुगन्धा स्थूलग्रन्थिर्यस्यालोकेमहाभरीइतिनाम । स्थूलग्रन्थि : सुगन्धान्याततोहीनगुणास्मृता ॥ द्वीपांतरवचा ० याचोपचीनीतिनाम्नालोकेविख्याता । द्वीपान्तरवचाकट्वीतिक्तोष्णावह्निदीप्तिकृत् । विबन्धाध्मानशूलघ्नीशकृन्मूत्रविशोधनी ॥ वातव्याधिमपस्मारमुन्मादंतनुवेदनाम् व्यपोहतिविशेषणफिरङ्गामयमुद्धतम् ॥ वक्ति । वचेरन्तर्भावितण्यर्थात्पचाद्यच् । टाप् ।

वचोग्रह : । पुं० कर्णे ॥

वचोहर : । त्रि० दूते ॥ वचोहरति । हरतेरनुद्यमनेऽच् ॥

वज्र : । पुं० श्रीकृष्णस्यप्रपौत्रे ॥ अनिरुद्धात्सुभद्रायांवज्रोनामाभवत् इतिगारुडे १४४ ऽध्याय : । विष्कम्भादिषुपञ्चदशेयोगे ॥ अत्रजातस्यफलंयथा । गुणीगुणज्ञोवलवान्महौजा : सद्रत्नवस्त्रादिपरीक्षक : स्यात् । वज्राभिधानेयदि

चेत्प्रसूतोवज्रोपमः स्याद्रिपुक्षामिनीनाम् ॥ कोकिलावल्ल्यां ॥ श्वेतकुशे ॥ सेहुण्डवृक्षे ॥ न० बालके ॥ धात्र्याम् ॥ काञ्जिके ॥ वज्रपुष्पे ॥ लौहविशेषे ॥ सच बहुविधोयथा । नीलपिण्डम् ० अरुणाभम् ० सारकम् ० नागकेशरम् ० तित्तिराङ्गम् ० स्वर्णवज्रम् ० शैवालवज्रम् ० शोणवज्रम् ० रोहिणीकाङ्कोलम् ० ग्रन्थिवज्रकम् ० मदनाख्यमित्यादि एतेषांनामानुरूपं चिह्नमितिपुराणम् ॥ अभ्रविशेषे ॥ अस्योत्पत्त्यादिर्यथा । पुरावधायवृत्रस्यवज्रिणावज्रमुद्धृतम् । विस्फुलिङ्गास्ततस्तस्यगगनेपरिसर्पिताः ॥ तेनिपेतुर्घनध्वानाच्छिखरेषुमहीभृताम् । तेभ्यएवसमुत्पन्नं तत्तद्गिरिषुचाभ्रकम् । तद्वज्रंवज्रजातत्वादभ्रमभ्ररवोद्भवात् । गगनात्स्खलितंयस्माद्गगनञ्चततोमतम् ॥ पिनाकं दर्दुरं नागं वज्रंचेति चतुर्विधम् । वज्रन्तुवज्रवत्तिष्ठेत् तन्नाग्नौविकृतिंव्रजेत् ॥ सर्वाभ्रेषुवरंवज्रंव्याधिवार्द्धक्यमृत्युहृत् ॥ पुं० न० इन्द्रास्त्रविशेषे । अमरादिन्याम् । कुलिशे । भिदुरे । पवौ । शतकोटौ । स्वरौ । शम्बे । दम्भोलौ । अशनौ । दधीचेरस्थिसम्भवेऽस्त्रे । आयुधानांमध्येभगवतोविभूतौ । वज्रधारकविधिर्यथामुनेः कल्याणमित्रस्यजैमिनेस्वापिकीर्त्तनात् ॥ विद्युदग्निभयंनास्तिपठितंचगृहोदरे । लिखितेचगृहेद्वारे० इतिवापाठः ॥ जैमिनिश्चसुमन्तुश्चवैशम्पायनएवच । पुलस्त्यःपुलहश्चैवपञ्चैतेवज्रवारकाः ॥ रत्नविशेषे । अभेद्ये । हीरके । हीरा० इ० भा० प्र० अस्यविशेषोयथा । स्वच्छं विद्युत्प्रभं स्निग्धं सौन्दर्यं लघु लेखनम् । षडारं तीक्ष्णधारञ्च सुशाम्यारं श्रियं दिशेत् ॥ भस्माभं काकपादञ्चरेखाक्रान्तञ्चवर्त्तुलम् । आधारमलिनं विन्दुसन्त्रासे स्फुटितं तथा ॥ नीलाभं चिपिटं रूक्षं तद्वज्रं दोषलं त्यजेत् ॥ वज्रस्य चतुर्वर्णलक्षणं यथा । श्वेतलोहितपीतमेचकतयाछायाश्चतस्रः क्रमाद्विप्रादिष्वमिहास्यतत्सुमनसः शंसंतिसत्यंतत : । स्फीतांकीर्त्तिमनुत्तमांश्रियमिदं दत्तं यथासन्धृतं मर्त्यानामयथायथंतुकुलिशं पथ्यं हितं जायते : ॥ तस्यपरीक्षायथा । यत्पाषाणतलेनिकाशनिकरैर्नोद्घृष्यतेनिष्ठुरैयच्चान्योपललोहमुद्गरमुखैर्लेखान्नयात्याहतम् । यच्चान्यंनिजलीलयैवदलयेद्वज्रेणवाभिद्यतेतज्जात्यंकुलिशंवदन्तिकुशलाः श्लाघ्यंमहार्घ्यंस्वतत् ॥ तस्य

वर्णगुणोयथा । विप्र : सोपिरसाय
नेषुबलवानष्टाङ्गसिद्धिप्रदोराजन्य
स्तुनृणांवलीपलितजिन्मृत्युंजयेद्
ध्रुवम् । द्रव्याकर्षणसिद्धिदस्तुसुत
रांवैश्योऽथशूद्रोभवेत्सर्वव्याधिहर
स्तदेषकथितोवज्रस्यवर्णोगुणः ॥ अ
पिच । वज्रस्यनामलक्षणगुणायथा
। हीरकः पुंसिवज्रोस्त्रीचन्द्रोम
णिवरश्चसः । सतुश्वेतः स्मृतो
विप्रोलोहितः क्षत्रियोमतः ॥
पीतोवैश्योऽसितः शूद्रश्चतुर्वर्णा
त्मकश्चसः । रसायनेमतोविप्रः
सर्वसिद्धिप्रदायकः । क्षत्रियोव्या
धिविध्वंसीजरामृत्युहरः परः ।
वैश्योधनप्रदः प्रोक्तस्तथादेहस्यदा
र्ढ्यकृत् ॥ शूद्रोनाशयतिव्याधीन्
वयस्तम्भंकरोतिच । पुंस्त्रीनपुंस
काश्चैतेलक्षणीयास्वलक्षणैः ॥ सु
वृत्ताः फलसम्पूर्णास्तेजोयुक्ताबृह
त्तराः । पुरुषास्तेसमाख्यातारेखा
बिन्दुविवर्जिताः ॥ रेखाबिन्दु
समायुक्ताः षडस्रास्तेस्त्रियः स्मृ
ताः । षडस्राः षट्कोणाः ॥
त्रिकोणाश्चसुदीर्घास्तेविज्ञेयान
पुंसकाः ॥ तेषिस्युः पुरुषाः
श्रेष्ठारसबन्धनकारिणः । स्त्रियः
कुर्वन्तिकायस्यकान्तिंस्त्रीणांसुख
प्रदाः ॥ नपुंसकास्त्ववीर्याः स्यु
रकामाः सत्त्ववर्जिताः । स्त्रियः



स्त्रीभ्यः प्रदातव्याः क्लीबाः क्लीबे
षुयोजयेत् ॥ सर्वेभ्यः सर्वदादेयाः
पुरुषावीर्यवर्द्धनाः ॥ अशुद्धंकुरु-
तेवज्रंकुष्ठंपार्श्वव्यथांतथा । पा
ण्डुतापंगुरुत्वञ्चतस्मात्संशोध्य
मारयेत् ॥ शोधनविधिस्तु । कुलत्थ
कोद्रवक्वाथेदोलायन्त्रेविपाचयेत्
। व्याघ्रीकन्दगतंवज्रंत्रिदिनंतद्वि
शुध्यति ॥ व्याघ्रीकण्टकारिका ।
अन्यः शोधनविधिर्यथा गृहीत्वा
क्षिशुभंवज्रं व्याघ्रीकन्दोदरेक्षिपे
त् । महिषीविष्ठयालिप्त्वाकरी
षाग्नौविपाचयेत् ॥ त्रियामायांचतु
र्यामंयामिन्यन्तेश्वमूत्रके । सेचये
त्पाचयेदेवंसप्तरात्रेणशुद्ध्यति ॥
अथास्यमारणविधिः ॥ हिङ्गुसैन्ध
वसंयुक्तेक्षिपेत् क्वाथेकुलत्थजे ।
तप्तंतप्तंपुनर्वज्रंभवेत्भस्मत्रिसप्त
धा ॥ अन्योमारणप्रकारोयथा ।
मेषशृङ्गंभुजङ्गास्थिकूर्मपृष्ठाम्लवेत
सम् । शशदन्तंसमंपिष्ट्वावज्रीक्षीरे
णगोलकम् ॥ कृत्वातन्मध्यगंवज्रं
म्रियतेध्मातमेवहि ॥ मारितस्य
वज्रस्यगुणायथा । आयुः पुष्टिंब
लंवीर्यंवर्णंसौख्यंकरोतिच । से
वितंसर्वरोगघ्नं मृतंवज्रंनसंशयः
॥ शेषरत्नानांशोधनमारणविधिः
॥ वज्रवत्सर्वरत्नानिशोधयेन्मारये
त्तथा । शुद्धानांमारितानाञ्च

तेषांशृणु गुणानपि ॥ मणयोवीर्यतः शीतामधुरास्तुवरारसात् । चच्युष्याःलेखनाश्चापि सारकाविषहारकाः ॥ धारणात्तेतुमङ्गल्याग्रहदुष्टिहराश्चपि ॥ वज्रगणनांलस्योत्पत्तिपरीचामूल्यानिचपद्यान्यत्र युक्तिकल्पतरुप्रभृतिषु ॥ मणिवेधकेरत्नविशेषे । मणिवेधकसूच्याम् ॥ वजतिगच्छतिपर्वतादौ । वजगतौ । ऋज्रेन्द्रेतिरन्॥सगणे॰।८०॥

वज्रकम् । न॰ वज्रचारे ॥ दुग्धपाचणे ॥ वज्रकंदुग्धपाचनमिति हारावली ॥

वज्रकङ्कट : । पुं॰ हनुमति ॥

वज्रकण्टक : । पुं॰ कोकिलाचवृक्षे ॥ स्नुहीवृक्षे ॥

वज्रकण्टकशाल्मली । स्त्री॰ नरकविशेषे ॥

वज्रकन्द : । पुं॰ वज्रकर्णे । सकरकन्द इ॰ भा॰ प्र॰ ॥

वज्रकन्दा । स्त्री॰ स्नुह्यां ॥

वज्रकपाली । पुं॰ बुद्धविशेषे । हेरुके ॥

वज्रकालिका । स्त्री॰ मायादेव्याम् ॥

वज्रकूट: । पुं॰ प्लचद्वीपस्याद्रिप्रभेदे॥

वज्रकेतु : । पुं॰ नरकराजे ॥

वज्रचारम् । न॰ चारभेदे । वज्रकेधूमोत्थे । चारश्रेष्ठे ॥

वज्रचर्म्मा । पुं॰ खड्गिनि । गण्डके

वज्रजित् । पुं॰ गरुडे ॥

वज्रज्वाला । स्त्री॰ वज्राग्नौ ॥

वज्रटीक : । पुं॰ बुद्धविशेषे । चक्रसंवरे । वज्रकपालिनि ।

वज्रतुण्ड : पुं॰ गणेशे ॥ गरुडे गृध्रे । मशके ॥

वज्रदन्त : । पुं॰ शूकरे ॥ मूषिके ॥

वज्रदशन : । पुं॰ मूषिके ॥

वज्रद्रु : । पुं॰ स्नुहीवृक्षे ॥ वज्रनामाद्रु : ॥

वज्रद्रुम : । पुं॰ स्नुहीवृक्षे ॥

वज्रधर : । पुं॰ इन्द्रे ॥ जिनविशेषे ॥

वज्रध्वनि : । पुं॰ वज्रनिर्घोषे ॥

वज्रनिर्घोष : । पुं॰ अशनिशब्दे ॥ वज्रस्यनिर्घोष : ॥

वज्रनिष्पेष : । पुं॰ स्फूर्जथौ । वज्रनिर्घोषे ॥ निष्पेषणम् । पिषॢसञ्चूर्णने । घञ् । इदुदुपधस्येतिष : ॥ निष्पेषशब्दस्तदुत्थशब्दपर: । सङ्घट्टमात्रपरइत्यन्ये । वज्रस्यनिष्पेष : ॥

वज्रपञ्जर : । पुं॰ याचायेगात्मरे ॥ यथा । उन्नमूलविकीर्णपुभवनेषु शनैश्चर । वज्रपञ्जरयोगोयंहन्ति क्रूरानरीन्प्रति ॥

वज्रपाणि : । पुं॰ पुरन्दरे । इन्द्रे ॥ वज्रंपाणौयस्यस : ॥

वज्रपुष्पम् । न॰ तिलपुष्पे ॥ वज्र

भिवपुष्पं ॥
वज्रपुष्पा । स्त्री० शतपुष्पायाम् ॥
वज्रबाहुः । पुं० इन्द्रे ॥
वज्रमूली । स्त्री० माषपर्ण्याम् ॥
वज्ररथः । पुं० क्षत्रिये ॥
वज्ररदः । पुं० शूकरे ॥
वज्रलेपः । पुं० कल्कविशेषे ॥ स चोक्तो वाराह्यां यथा । आमं तिन्दुकमामं कपित्थकं पुष्पमपि च शाल्मल्याः । बीजानि मल्लकीनां धन्वनकल्कस्त्वचा चेति ॥ एतैः सलिलद्रोणः क्वाथयितव्योऽष्टभागशेषश्च । अवतार्योऽस्य च कल्को द्रव्यैरेतैः समनुयोज्यः ॥ श्रीवासकरसगुग्गुलुभल्लातककुन्दुरूकसर्जरसैः । अतसीबिल्वैश्च युतः कल्कोऽयं वज्रलेपाख्यः ॥ ३ ॥ अस्य गुणानाह । प्रासादहर्म्यवलभीलिङ्गप्रतिमासु कुड्यकूपेषु । सन्तप्तो दातव्यो वर्षसहस्रायुतस्थायी ॥ ४ ॥ अन्यमप्याह । लाक्षाकुन्दकगुग्गुलुगृहधूमकपित्थबिल्वमध्यानि । नागफलनिम्बतिन्दुकमदनफलमधुकमञ्जिष्ठाः ॥ सर्जरससालकानि चेति कल्कः कृतो द्वितीयोऽयम् । वज्राख्यः प्रथमगुणैरयमपि तेष्वेव कार्येषु ॥ ६ अपि च । गोमहिषाजविषाणैः खररोम्णा महिषचर्मगव्यैश्च । निम्बकपित्थरसैः सह वज्रतलो नामकल्कोन्यः ॥ ७ ॥ अपि च । अष्टौ सीसकभागाः कांस्यस्य द्वौ तु रीतिकाभागः । मयकथितो योगोऽयं विज्ञेयो वज्रसङ्घातः ॥ ८ ॥ इति ॥
वज्रवल्ली । स्त्री० अस्थिसंहारलतायाम् ॥
वज्रवारकः । पुं० जैमिन्यादौ ॥ यथा । जैमिनिश्च सुमन्तुश्च वैशम्पायन एव च । पुलस्त्यः पुलहश्चैव पञ्चैते वज्रवारकाः ॥
वज्रवाराही । स्त्री० मायादेव्याम् । मारीच्याम् । त्रिमुखायाम् ॥
वज्रबीजकः । पुं० लताकरञ्जे ॥
वज्रवृक्षः । पुं० सेहुण्डवृक्षे ॥
वज्रव्यूहः । पुं० वज्राकाररचनयाविधाव्यवस्थितबले ॥
वज्रशल्यः । पुं० शल्यकनामजन्तौ ॥
वज्रशृङ्खला । स्त्री० विद्यादेव्याम् ॥
वज्रसारः । त्रि० वज्रवत्कठिने ॥
वज्रसूर्य्यः । पुं० बुद्धविशेषे ॥
वज्रा । स्त्री० स्नुह्याम् । गुडूच्याम् । दुर्गायाम् ॥ वज्राङ्कुशकरी देवी वज्रा तेनोपगीयते इति देवीपुराणम्
वज्राङ्गः । पुं० भुजङ्गमे ॥ त्रि० वज्रतुल्याङ्गयुक्ते ॥
वज्राङ्गी । स्त्री० अस्थिसंहारिणि । हाडजोडा इति भा० प्र० ॥ गवेधुकायाम् ॥
वज्राभः । पुं० दुग्धपाषाणे ॥ त्रि०

वञ्ज्समानदीप्तिमति ॥
वज्रायुधः । पुं॰ इन्द्रे ॥
वज्राशनिः । पुं॰ स्त्री॰ वज्रे ॥
वज्रासनम् । न॰ अष्टाङ्गयोगस्यतृतीयाङ्गविशेषे ॥ यथा । ऊर्वोः पादौक्रमाद्न्यस्यकृत्वाप्रत्यङ्मुखाङ्गुली । करौनिदध्यादाख्यातंवज्रासनमनुत्तममिति ॥
वज्रास्थिशृङ्खला । स्त्री॰ कोकिलावृक्षे ॥
वज्री । पुं॰ देवाधिपे । शक्रे ॥ वज्रोऽस्यास्ति अतइनिठनावितीनिः । बुद्धे ॥
वज्री । स्त्री॰ स्नुहीप्रभेदे ॥
वञ्चकः । पुं॰ जम्बुके । शृगाले । गृहवभ्रौ ॥ त्रि॰ खले । धूर्त्ते । परप्रतारणस्वभावे । सुवर्णादिद्रव्यंगृहीत्वाऽपद्रव्यप्रदर्शयिवञ्चनशीले ॥ वञ्चयति । वञ्चुगतौ । स्वार्थे । ण्वुल् । वञ्चयतेर्वा । वञ्चुप्रलम्भने । आकुस्मीयः । ण्वुल् ॥
वञ्चथः । पुं॰ धूर्त्ते ॥ वञ्चति । वञ्चु॰ । शीङ्शपीरुग्यादिनाऽथप्रत्ययः ॥ कोकिले । वञ्चनायाम् ॥
वञ्चनम् । न॰ प्रतारणे ॥ शाठ्ये ॥ वञ्चुप्रलम्भने । ल्युट् ॥
वञ्चना । स्त्री॰ प्रतारणायाम् । प्रमादे ॥ यथा । मन्यतेस्मपिबतांविलोचनैः पक्ष्मपातमपिवञ्चनांमनः ॥ ११ सर्गेरघुः ॥ ३६ ॥
वञ्चनीयः । त्रि॰ प्रतारणीये ॥ वञ्चितुमर्हः । अर्हेकृत्यतृचश्चेतिवञ्चेरनीयर् ॥
वञ्चितः । त्रि॰ प्रतारिते । विप्रलब्धे । वञ्चनाविशिष्टे ॥ वञ्च्यतेस्म । वञ्चु॰ । स्वार्थे । क्तः ॥
वञ्जुलः । पुं॰ तिनिशे ॥ अशोकवृक्षे ॥ वानीरे । वेतसे ॥ वञ्च्यते । बाहुलकादुलोजश्चान्तादेशश्च ॥ वञ्चतिवा । वञ्चुगतौ । बाहुलकादुलच् नुम्च ॥ दीर्घपत्रे वेतसे ॥ स्थलपद्मे ॥ पक्षिविशेषे ॥
वञ्जुलकः । पुं॰ कर्णशालखगे ॥
वञ्जुलद्रुमः । पुं॰ अशोकवृक्षे ॥
वञ्जुलप्रियः । पुं॰ वानीरे । वेतसे ॥
वञ्जुला । स्त्री॰ बहुक्षीरायांगवि ॥
वटः । पुं॰ वृक्षविशेषे । न्यग्रोधे । बहुपदि । पादरोहणे । यथावासे । अस्यगुणाः । वटः शीतोगुरुर्ग्राहीकफपित्तव्रणापहः । वर्ण्योविसर्पदाहघ्नः कषायोयोनिदोषहृदिति ॥ कपर्द्दे । वराटके । मौले । गुणे । रज्जौ ॥ भक्ष्ये । बड़ा॰ इ॰ भा॰ प्र॰ ॥ साम्ये ॥ पिशाचविशेषे ॥ पश्यत्रकम् ॥ वटति । वटवेष्टने । अच् ॥

बटक : । पुं॰ तोलके । पिष्टकप्रभेदे । बडा॰ भल्ला॰ इ॰ भा॰ प्र॰ भच्ये ॥ तस्यनिर्माणादिर्यथा । माषाणां पिष्टिकांयुक्तांलवणाद्रककहिङ्गुभि : । कृत्वाविद्ध्याद्वटकांस्तांस्तैलेषुपचेत्क्षनै : ॥ विशुष्कावटकावल्या हंहणावीर्यवर्द्धना : । वातामयहरारुच्याविशेषादर्द्दितापहा : ॥ विबन्धभेदिन · श्ले ष्मकारिणोत्यग्निपूजिता । सम्पूर्णं निष् चिपेत्तक्रे भृष्टंजीरकहिङ्गुच ॥ लवणंतचवटकान्सकलानपिमज्जयेत् । शुक्रलस्तवटकोबलकृद्रोचनोगुरु : ॥ विबन्धहृद्दिदाहीचश्लेष्मल : पवनापह : । राज्यक्ताद्यातिरोचन्यापाचन्यातांस्तुभचयेत् ॥ बटति । बट॰ । कुन् ॥

बटपत्र : । पुं॰ वर्बराप्रभेदे । सिताऽर्के । न॰ न्यग्रोधपर्णे ॥

बटपत्रा । स्त्री॰ त्रिपुरमालीपुष्पवृक्षे ।

बटपत्री । स्त्री॰ मोहिन्याख्यलतायाम् । ऐरावत्याम् ॥ बटपत्रीकषायोष्णायोनिमूत्रगदापहा ॥

बटवासी । पुं॰ यक्षे ॥ त्रि॰ बटवृक्षवासकर्त्तरि ॥

बटाकर : । पुं॰ शुल्वे । रज्जौ । बाकरोति । पचाद्यच् ॥ बटस्याकार : ॥

बटारका । स्त्री॰ रज्जौ ।

बटाबीक : । पुं॰ नामचौरे ॥

बटि : । स्त्री॰ उपजिह्विकायाम् ॥ बटिकायाम् ॥ बटति । बट॰ । सर्वधातुभ्यइन् ॥

बटिका । स्त्री॰ बव्याम् । मोदके गुटिकायाम् । पिण्डाम् ॥ व्यञ्जनोपयोगिमाषादिद्रव्ये । बडी॰ इत्युभयोर्भाषायांप्रसिद्धि : अस्यानिर्माणविधिर्यथा । माषाणांपिष्टिकाहिङ्गुलवणाद्रकसंयुता । तयाविरचितावस्त्रे बटिका : साधुशोषिता : ॥ तलितास्तप्ततैलेताअथवासुप्रलेहिता : । बटकस्यगुणैर्युक्तास्ताज्ञव्यारुचिदाभृशम् ॥ कूष्माण्डकबटीज्ञेया पूर्वोक्तबटिकागुणा । विशेषात्पित्तरक्तघ्नीलघ्वीचकथिताबुधै : ॥ मुद्गानांबटिकातद्वद्रचितासाधितातथा । पथ्यारुच्यातत्तोलघ्वीमुद्गसूपगुणास्मृतेति ॥

बटितम् । न॰ शिलापिष्टमांसे ॥ त्रि॰ शिलापिष्टद्रव्ये ॥

बटी । स्त्री॰ बटिकायाम् ॥ वृक्षविशेषे । नदीबट । यज्ञवृक्ष ॥ त्रि॰ रज्जौ । गुणे ॥ बटति । बट॰ । अच् ॥ बव्यतेवा ॥ खनोघच् तिघ : । गौरादि : । यथा । सिताचतुर्गुणादेयाबटीषुद्विगुणोगुड्इति ॥

बटु : । पुं॰ ब्रह्मचारिणि ॥ ब्राह्मणमाणवके ॥ बालके ॥ कुटन्नटवृक्षे ।

श्यानाके ॥ वटति । वट० । अच संतिसूत्रेणादुः ॥

वटुक : । पुं० बालके । माणवके ।
भैरवविशेषे ॥

वटुकरणम् । न० उपनयने ॥

वटेश्वरपुरम् । न० तीर्थविशेषे ॥

वठर : । पुं० मूर्खे । अम्बष्ठे । शब्दकारे ॥ वक्रे ॥ त्रि० शठे ॥ मन्दबुद्धि । वच० । वचिमचिभ्यांकिच्चेत्यरष्टोन्तादेशश्च ॥

वडभी । स्त्री० मुदनी० गृहचूडा० इ० गौ० दे० भा० प्र० । कुड्यपुच्छादनार्थं दत्त वक्रकाष्ठे । गोपानस्याम् ॥ बलते । बलसंवरणे । बाहुलकादभच् । गौरादित्त्वान् ङीष् । चन्द्रशालायाम् ॥ चन्द्रशालाच्च वडभीस्यातांप्रासादमूर्द्धनीतिश्रीधर : ॥

वडवा । स्त्री० द्विजयोषिति । ब्राह्मण्याम् ॥ अश्वायाम् । घोटक्याम् । कुम्भदास्याम् ॥ नारीजात्यन्तरे ॥ बलंसामर्थ्यमतिशयितमस्या : । अन्येभ्योपीतिव : । डलयोरैकता । बलंवातिवा । आतोनुपेतिक : ॥ बलिनवजतिवा । अन्येभ्योपीतिड : ॥

वडवाकृत : । पुं० पञ्चदशदासान्तर्गतदासविशेषे ॥ यथा । भक्तदासश्च विज्ञेयस्तथैववडवाकृत : ॥ वडवादासीतल्लोभादङ्गीकृतदासइत्यर्थ : ॥

वाडवाग्नि : । पुं० समुद्राग्नौ सलिलेन्धने । वडवाग्नौ ॥

वडवादुग्धम् । न० अश्वाक्षीरे ॥ अस्य गुणा : ॥ रूक्षोष्णं वडवाक्षीरंबल्यंशाखानिलापहम् । अम्लंपटुलघुस्वादुसर्वमैकाशफंतथा ॥

वडवानल : । पुं० और्वे । वाडवे । वडवाग्नौ ॥ वडवायाअनल : । आराधाधेयभावएवसम्बन्धस्वेनषष्ठ्यर्थ : । पुराकिलऔर्वेणमुनिना । अयोनिजंपुत्रमिच्छतावक्षोमथितं तत्रज्वालामय: पुरुषोजात : । सचसमुद्रेवडवामुखेऽवस्थापितइतिपौराणिका : ॥

वडवामुख : । पुं० और्वे । अब्ध्यग्नौ वडवानले ॥ न० पाताले ॥

वडवासुतौ । पुं० २ अश्विनीकुमारयो : स्वर्वैद्ययो : ।

वडवाहृत : । पुं० वडवाकृते । दासविशेषे ॥ वडवागृहदासीतयाहृतस्तल्लोभेनतामुद्वाह्यदासत्त्वं नप्रविष्ट : ॥

वडा । स्त्री० वटके ॥

वडिशम् । न० मत्स्यधरणार्थंवक्रलौहकण्टकविशेषे । मत्स्यवेधने ॥ वलिनोमत्स्यान्श्यति । शोतनूकरणे । आतोनुपेतिक : । डलयोरैकता ॥

वण्डिशी । स्त्री० वण्डिशे ॥

वण्ड: । त्रि० हस्वति । वडा० वडौ० ह्र० भा० ॥ वलते । वलसंवरणे सञ्चरणे च । बहुलमन्यत्रापीतिर-क् । डलयोरेकत्वस्मरणाद्रस्य ड: ॥

वण: । पुं० शब्दे ॥

वणिक्पथ: । पुं० हट्टे । आपणे ॥ स्थलवणिज्यायाम् ॥ स्थलजलादिनावाणिज्यमितिकुल्लूकभट्ट: ॥

वणिक् । पुं० क्रयविक्रयकर्त्तरि । वाणिज्यकारके । वैदेहके । सार्थवाहे । नैगमे । पण्याजीवे । क्रयविक्रयिके ॥ करणान्तरे ॥ स्त्री० वणिज्यायाम् ॥ पणते । पण० । पणेरिज्यादेश्चव: ॥

वणिज्या । स्त्री० विपणे ॥ न० वणिज: कर्मभावयो: ॥ दूतवणिग्भ्यां चेति य: । माधवस्तु० वणिज्याशब्द: स्वभावात्स्त्रीलिङ्गोभावपरोयप्रत्ययोमतुकर्मणीत्याह ॥ भाष्ये तु० वार्त्तिकमेवनास्ति ॥

वण्ट: । पुं० अंशे । भागे । वाण्टा० ह्र० भा० ॥ दात्रमुष्टौ । वैण्टा० ह्र० भा० ॥ अनूढपुरुषे ॥

वण्टक: । पुं० अंशे । भागे ॥ वण्टते । वटिविभाजने । कर्मणिघञ् । स्वार्थेक:

वण्टाल: । पुं० युद्धभेदे । शूरयुद्धे ॥ नौकायाम् ॥ खनित्रे ॥

वण्ठ: । पुं० अकृतोद्वाहे ॥ खर्वे ॥ कुन्तायुधे ॥ भृत्ये । वांठ० ह्र० प० भा० प्र० वण्ठते । वठिएकचर्यायाम् । अच् ॥

वण्ठर: । पुं० स्थगिकायाम् ॥ रज्जौ कुक्कुरस्यलाङ्गूले ॥ करीरकोषे । तालस्यपल्लवे ॥ पयोधरे ॥ वण्ठरश्च ॥

वण्ड: । पुं० अनावृतमेढ्रे । दुश्चर्मणि ॥ त्रि० हस्तादिवर्ज्जिते ॥ छिन्नलाङ्गूले । वांडा० ह्र० भा० प्र० ॥ छिन्नहस्त ॥ वनुते । वनुयाचने । वनतिवा । वनसम्भक्तौ । अमन्ताड्ड: ॥

वण्डा । स्त्री० पांशुलायाम् ॥ अजादित्वाट्टाप् ॥

वत् । अ० सादृश्ये ॥ तेनतुल्यमित्यादिभिर्विहितोवतिप्रत्यय: । यस्तूपसर्गाद्वास्त्वर्थइतिविहित: सनगृह्यते ॥

वत । अ० आमन्त्रणे । सन्तोषे ॥ खेदे । अनुक्रोशे ॥ विस्मये ॥ वय तेस्म । वयगतौ । गत्यर्थेतिक्त: । नेट् यलोप: ॥ वन्यतेस्मवा । वनु याचने । क्त: अनुदात्तोपदेशेति-नलोप: ॥

वतंस: । पुं० कर्णपूरे । कर्णाभरणे ॥ शिरोभूषणे । शेखरे ॥ अवतंस पति० अवतंस्यतेऽनेनवा । तसि:

सौशौभृषार्थं : । पचाद्यच्० इल इतिघञ् वा । भागुरिमतेनाकारलोपः ॥

वतण्डः । पुं० मुनिविशेषे ॥

वतोका स्त्री० अवतोकायाम् । स्खलितगर्भायाम् ॥

वत्स : । पुं० पुत्रादौ । मत्वा० इ० भा० ॥ तर्णके । शकृत्करौ ॥ वदत्यभीक्ष्णं मातरम् । वदव्यक्तायांवाचि० वदस्येवा । वृतृवदीतिसः ॥ ऋषिविशेषे ॥ वर्षे ॥ न० । उरसि । वक्षसि ॥

वत्सक : । पुं० कुटजवृक्षे ॥ न०पुष्पकासीसे ॥ संज्ञायांकन् ॥ अनुकम्पितोवत्सः अनुकम्पितोवत्सः । अनुकम्पायामितिकः ॥

वत्सकबीजम् । न० इन्द्रयवे ।

वत्सकामा । स्त्री० वत्साभिलाषिण्यां गवि । वत्सलायाम् ॥ पुत्रादिकामनाविशिष्टायांनार्याम् ॥

वत्सतरः । पुं० दम्ये । वत्सभावमतीत्यद्वितीयंवयः प्राप्ते ॥ तनुर्वत्सः वत्सोक्षाश्वर्षभेभ्यश्चतनुत्व इतिष्टरच् ॥

वत्सतरी । स्त्री० वत्साद्यभावमतीत्यद्वितीयंवयः प्राप्तायाम् । त्रिहायण्यां गवि ॥ तन्वीवत्सा । ष्टरच् । ङीप् ॥

वत्सनाभः । पुं० विषवृक्षविशेषे । अ



मृते । उग्रे । महौषधे । मारणे । माहुराबू० भा०प्र० ॥ अस्यस्वरूपनिरूपणंयथा । सिन्धुवारसदृक्पत्रोवत्सनाभ्याकृतिस्तथा । यत्पार्श्वेनतरोर्वृद्धिर्वत्सनाभः सभाषित इति ॥ अस्यगुणा : । अतिमधुरत्वम्०वातकफकण्ठरुक्सन्निपातनाशित्वम्०पित्तसन्तापकारकत्वञ्चेतिराजनिर्घण्टः ॥ वत्सान्नभ्नातिहिनस्ति । णभहिंसायाम् । कर्मण्यण् ॥ वत्सस्यनाभिरिवनाभिरस्येतिवा ॥

वत्सपः । पुं० वत्सचारकबालके ॥

वत्सपत्तनम् । न० भारतवर्षीयोत्तरदेशविशेषे । कौशाम्ब्याम् ॥

वत्सपालः । पुं० बलदेवे ॥ श्रीकृष्णे ॥ वत्सपे ॥

वत्सरः । पुं० द्वादशमासात्मककाले । संवत्सरे । अब्दे । हायने । शरदि । समायाम् । वर्षे ॥ सचसंवत्सरादिभेदेनपञ्चधाभवति । तथाहि । शकाब्दात्पञ्चभिः शेषात्समाद्यादिपुवत्सराः । सम्परीदनुपूर्वास्तथेदापूर्वकामताः ॥ अथषष्टिसंवत्सराणांगणना । मानेगुरोरगभिद : परिवत्सराणांषष्टिः स्मृतामुनिवरैः प्रभवादिकानाम् । एकादिकावत्सरमितिगुरुमध्यमेकराशिस्तुभेगमितिरेवसदातथाहि ॥

प्रभवो॰विभवः॰शुक्ल. प्रमोदो॰थ॰प्रजापतिः। अङ्गिराः श्रीमुखो॰भावो॰युवा॰धातेश्वराभिधौ॥ बहुधान्यः प्रमाथीच॰विक्रमो॰वृषसंज्ञकः। चित्रभानुःसुभानुश्च॰-तारणः पार्थिवो॰व्ययः सर्वजित्॰सर्वधारीच॰विरोधी॰विकृतस्ततः। खर॰नन्दनसंज्ञौच॰विजयो॰जय॰मन्मथौ॥ दुर्मुखस्तदनु प्रोक्तो॰हेमलम्बकसंज्ञकः। विलम्बाख्यो॰विकारी॰स्याच्॰छर्वरी-प्लवसंज्ञकौ॥उक्तःशुभकृतस्तस्माद्व्दः शोभनकृतस्मृतः। क्रोधी॰-विश्वावसुर्श्चेयो॰वत्सरोहिपराभवः। प्लवङ्गः कीलकाख्यो॰थसौम्यः साधारणाह्वयः ततोविरोधकृन्नामा॰परिधावि॰प्रमाथिनौ॥ आनन्दो॰राक्षसः प्रोक्तो॰ऽनलः पिङ्गलसंज्ञकः। कालयुक्ताख्यसिद्धार्थौ॰रौद्रो॰दुर्मतिदुन्दुभी। रुधिरोद्गारिरक्ताचौ॰क्रोधनः॰क्षयकृन्मतः। वत्सराणांगुरोर्मानेषष्टिरियमुदाहृता॥ वत्सरानयनंयथा। नगैर्नखैः सन्निहतोहिधाशकः सखचिशक्रोक्षयमाङ्गभाजितः। गताः सतत्व्यशकोभ्रपड्हृतोऽवशेषकैश्च : प्रभवादिवत्सराः। अत्र॰आद्यातुविंशतिर्ब्राह्मी द्वितीयावैष्णवीस्मृतातृतीयारुद्रदै

वत्याश्रेष्ठामध्याधमाभवेत्। वसन्त्यस्मिन्नयनर्त्तुमासपक्षादयः। वस निवासे। वसेश्चेतिसरप्रत्ययः। सस्यार्द्धधातुकइतिसस्यतः॥

वत्सरान्तकः। पुं॰ फाल्गुनेमासि॥

वत्सलः। पुं॰ शृङ्गारादिरसान्तर्गतरसविशेषे। वात्सल्ये। तृणाग्नौ। त्रि॰स्नेहयुक्ते। स्निग्धे॥ वत्सेपुत्रादिस्नेहपात्रेऽभिलाषोस्यास्ति वत्सांसाभ्यांकामबले॰इतिलच्॥

वत्सला। स्त्री॰ वत्सकामायांधेनौ।

वत्सशालम्। न॰ )
वत्सशाला। स्त्री॰ ) वत्सानांगृहे॥

वत्साशाला पुं॰। विभाषासेनेति॰पक्षेक्लीवता॥ त्रि॰वत्सशालोत्पन्ने॥ वत्सशालेजातः। जातार्थस्यबालुक्॥ पक्षेपि॰वात्सशालोपि :

वत्सा। स्त्री॰ पुत्र्याम्॥ वयसिप्रथमइतिङीपंबाधित्वा॰अजादित्वाट्टप्।

वत्सादनी। स्त्री॰ गोडुम्बायाम्। चिचायाम्॥

वत्सादनः। पुं॰ वृके॥

वत्सादनी। स्त्री॰ छिन्नरुहायाम्। गुडुच्याम्। वत्सैरद्यते। अद॰। ल्युट्॥

वदः। त्रि॰ वक्तरि॥ वदति। वद-

व्यक्तायांवचि । पचाद्यच् ॥
वदनम् । न० आनने । मुखे । वद्यतेऽनेन । वद्० । करणेल्युट् ॥
वदनासव : । पुं० अधरमधुनि । वक्त्रासवे ॥ वदनस्यआसवः ॥
वदन्ति : । ) स्त्री० कथायाम् ॥
वदन्ती । )
वदन्य : । त्रि० वदान्ये ॥
वदान्य : । त्रि० अत्युदारे । दानशौण्डे । बहुप्रदे ॥ मांयाचस्वेतिवदति । वद्० । वदेरान्यः ॥ चारुवादिनि । प्रियवादिनि ॥
वदामम् । न० फलविशेषे । मुकूले । वातवैरिणि । वातादे ॥
वदाल : पुं० पाठीनमत्स्ये वोआलि० हिं० गौ० दे० भा० प्रा० ॥
वदावद : । त्रि० वक्तरि ॥ वदति । वद्० । पचाद्यचि० चरिचलीतिद्वित्वादि ॥
वदि । अ० कृष्णपक्षे ॥
वध : । पुं० हिंसने ॥ हिंसायाम् ॥
वधुका । स्त्री० वध्वाम् ॥
वधू : । स्त्री० स्नुषायाम् । बहू० हिं० भा० प्रसिद्धे ॥ वहति० उह्यतेवा । वहप्रापणे । वहेर्धश्च ऊः ॥ शारिवौषधौ ॥ शट्याम् ॥ नवोढायाम् ॥ भार्यायाम् ॥ पृक्कायाम् ॥ अङ्गनायाम् ॥
वधूजन : । पुं० योषिति ॥
वधूट : । पुं० यौवने ॥
वधूटशयनम् । न० गवाक्षे ॥
वधूटी । स्त्री० स्वल्पवध्वाम् ॥ स्नुषायाम् ॥ सुवासिन्याम् ॥ युवतौ ॥ वयस्यचरमइतिङीप् ॥
वधूत्सवप्रसव : । पुं० रक्तम्लाने ॥
वध्रम् । न० दृशरज्जौ ॥ वध्यतेऽनेन । वधेरौणादिकः ष्ट्रन् ॥
वध्रि : । स्त्री० वध्रे ॥
वध्री । स्त्री० वध्रे ॥ षित्त्वान्ङीष् । चर्म्मा : पत्त्रवध्रिका : पत्त्रेतिभाष्यम् ॥.
वनम् । न० नीरे । जले ॥ निवासे ॥ आलये ॥ प्रस्रवणे ॥ कानने । स्वत : सिद्धवृक्षसमूहे । गहने । बना० हिं० भा० ॥ प्रवासे ॥ वन्यते० सम्भज्यते० सेव्यते० याच्यतेवा वनसम्भक्तौ० वनुयाचनेवा हलश्चेति कर्म्मणिघञ् । संज्ञापूर्वकत्वाद्वृद्ध्यभाव: ॥ कर्त्तरिपचाद्यच्च ॥ त्रि० वननीये ॥ सम्भजनीये ॥
वनकदली । स्त्री० काष्ठकदल्याम् ॥
वनकन्द : । पुं० सितशूरणे ॥ धरणीकन्दे ॥
वनकार्पासी । स्त्री० त्रिपर्णायाम् । भारद्वाज्याम् । वनकपास० हिं० भा० ॥
वनकुलत्थ : । पुं० कुलत्थायाम् ॥
वनकोद्रव : । पुं० उद्दाले ॥

वनकोलि:। पुं॰ वनजबदर्याम्। कर्कन्धिकायाम्॥
वनगो:। पुं॰ स्त्री॰ गवये॥
वनगोचर:। पुं॰ नारायणे॥ वनं जलं गोचरो निवासस्थानं यस्य स:॥ व्याधे॥
वनचन्दनम्। न॰ अगुरुणि॥ देवदारुणि॥
वनचन्द्रिका। स्त्री॰ मल्लिकायाम्॥
वनचम्पक:। पुं॰ वनदीपे। हेमाह्वे॥
वनचर:। पुं॰ किराते॥ वनमृगे॥ वने चरति। चर॰। चरेष्ट:॥
वनच्छाग:। पुं॰ वनच्छगले। एडके। शिशुवाह्यके॥ शूकरे॥
वनज:। पुं॰ मुस्तके॥ स्तम्बेरमे॥ वनशृङ्गाटे। अम्बुजे॥ त्रि॰ वनोत्पन्ने॥ वनेजायते। जनी॰। ड:॥
वनजा। स्त्री॰ मुद्गपर्ण्याम्॥ वनकार्पास्याम्॥ वन्योपोदक्याम्॥ अश्वगन्धायाम्॥ गन्धपत्रायाम्॥ मिश्रेयायाम्॥ ऐन्द्रे। वनार्द्रकायाम्॥
वनजायतेक्षण: त्रि॰ पद्मलोचने॥
वनजीर:। पुं॰ सूक्ष्मपत्रे। अरण्यजीरे॥
वनतिक्त:। पुं॰ रोहितकद्रुमे॥
वनतिक्ता। स्त्री॰ वनतिक्तिकायाम्॥
वनतिक्तिका। स्त्री॰ पाठायाम्॥ हरीतक्यां॥
वनद:। पुं॰ घने। मेघे॥ वनं जलं ददाति। डुदाञ्॰। क:॥ त्रि॰ वनदातरि॥
वनदमन:। पुं॰ अरण्यदमने॥
वनदीप:। पुं॰ वनचम्पके॥
वनधेनु:। स्त्री॰ गवय्यां॥
वननीय:। त्रि॰ सम्भजनीये॥
वनपल्लव:। पुं॰ शोभाञ्जनवृक्षे॥ अरण्यजपत्रे॥
वनपांशुल:। पुं॰ व्याधे॥
वनपिप्पली। स्त्री॰ क्षुद्रपिप्पल्याम्॥
वनपुष्पा। स्त्री॰ शतपुष्पायाम्॥
वनपूरक:। पुं॰ वनबीजपूरे॥
वनप्रिय:। पुं॰ परभृते। कोकिले॥ न॰ त्वचे। गुडत्वचि॥ त्रि॰ अरण्यप्रियमात्रे॥
वनभुक्। पुं॰ ऋषभौषधे॥
वनमक्षिका। स्त्री॰ दंशे॥ वनस्थमक्षिका॥
वनमल्लिका।
वनमल्ली। ) स्त्री॰ वनोद्भवमल्लिकायाम्॥
वनमाला। स्त्री॰ श्रीकृष्णस्रजि सपल्लवपुष्पग्रथिताया आजानुलम्बिन्यां स्रजि। तस्या: स्वरूपं यथा। आजानुलम्बिनी माला सर्वर्तुकुसुमोज्ज्वला। मध्ये स्थूलकदम्बाढ्या वन

मालेतिकीर्त्तिता ॥ वनपुष्पस्र
जि ।।

वनमाली । पुं॰ हरौ । श्रीकृष्णे ॥
वनं वनपुष्पं तन्मालाऽस्येति॰ वन
माली । व्रीह्यादित्वादिनिः । सप
ल्लवपुष्पग्रथितास्रक् वनमालेत्यन्ये
॥ आपादपद्मं यामालावनमालेति
सामतेतितुकलिङ्गः । सास्य स्ती
तिवा ॥ वनं मलितुं शीलमस्येति
वा । मलधारणे । सुपीतिणिनिः
। यद्वा भूतन्मात्ररूपांवैजयन्त्या
ख्यांवनमालांवहन् वनमाली । व
नमालापरिचिह्नं धन्याः पश्यंतिते
मुखमिति हरिवंशोक्तिः ॥

वनमालिनी । स्त्री॰ वाराह्याम् ॥ द्वा
रकापुर्य्याम् ॥

वनमुक् । पुं॰ जलदे । मेघे ॥ वनंनी
रमुञ्चति मुच्लृ॰ । क्विप् ॥

वनमुद्गः । पुं॰ मकुष्ठके ॥

वनमुद्गा । स्त्री॰ मुद्गपर्ण्याम् ॥

वनमूर्द्धजा । स्त्री॰ कर्कटशृङ्ग्याम् ॥

वनमेथिका । स्त्री॰ मेथिकाप्रभेदे ॥

वनमोचा । स्त्री॰ काष्ठकदल्याम् ॥

वनरः । पुं॰ वानरे ॥

वनराजः । पुं॰ मृगेन्द्रे ॥ वनस्यरा
जनि ॥

वनराजकः । पुं॰ सिंहे ॥

वनराजिः । स्त्री॰ वनवृक्षाणांपङ्
क्तौ ॥

वनरुहम् । न॰ पद्मे ॥ वनेरोहति ।
रुह॰ । इगुपधेतिकः ॥

वनलक्ष्मीः । स्त्री॰ कदल्याम् ॥

वनवर्व्वरः । पुं॰ कृष्णार्जके ॥

वनवर्व्वरिका । स्त्री॰ अरण्यजबर्वर्या
म् । सुप्रसन्नके । विषघ्ने । सूक्ष्मप
त्रके । निद्राली ॥

वनवल्लरी । स्त्री॰ निःश्रेणिकातृणे ॥

वनवह्निः । पुं॰ दवानले ॥

वनवासनः । पुं॰ गन्धौतौ । खट्टा
शे ॥

वनवासी । पुं॰ नीलमण्डिषकन्दे ।
शाल्मलिकन्दे ॥ पाटल्याम् । मु
ष्ककवृक्षे ॥ शृङ्ग्याम् । ऋषभौ
षधे ॥ शूकरकन्दे । वाराहीकन्दे
॥ त्रि॰ वनवासकर्त्तरि ॥

वनवीजः । } पुं॰ मातुलुङ्गका
वनवीजकः । } ग्राम् ॥ अर
वनवीजपूरकः । } ण्यजातवीजपू
रे । अम्लयाम् ॥

वनवृन्ताकी । स्त्री॰ वृहत्याम् ॥

वनव्रीहिः । पुं॰ नीवारे ॥

वनशूकरी । स्त्री॰ शूकशिम्ब्याम् ॥
अरण्यवाराह्याम् ॥

वनशूरणः । पुं॰ वनोद्भवोल्ले । सित
शूरणे । वनकन्दे ॥

वनशृङ्गाटः । पुं॰ गोक्षुरके ॥ वनस्य
शृङ्गाटइव ॥

वनशृङ्गाटकः । पुं॰ गोक्षुरके ॥

वनशोभनम् । न० पद्मे ॥ त्रि० वनस्यशोभाकर्त्तरि ॥

वनश्वा । पुं० गन्धमार्ज्जारे ॥ वृषके । गोमायौ ॥ व्याघ्रे ॥

वनसङ्कट : । पुं० मसूरे ॥

वनसद् । त्रि० वनेचरे ॥

वनसमूह : । पुं० वन्यायाम् ॥ वनानांसमूह : ॥

वनसरोजिनी । स्त्री० वनकार्पास्याम् ॥

वनस्थ : । पुं० मृगे ॥ त्रि० वनवासिनि ॥

वनस्था । स्त्री० अश्वत्थीवृक्षे ॥

वनस्पति : । पुं० द्रुममात्रे । विना पुष्पंफलशालिनिवृक्षे ॥ अपुष्पाफलवन्तोयेतेवनस्पतय : स्मृताइतिमनु : ॥ स्थालीवृक्षे । नन्दीवृक्षे ॥ वनस्पति: । पारस्करादित्वात् सुट् ॥ वटे ॥

वनहरिद्रा । स्त्री० काननोत्पन्नहरिद्रायाम् । शोलिकायाम् ॥

वनहास : । पुं० अश्ववाले । काशतृणे ॥ कुन्दवृक्षे ॥

वनहासक : । पुं० काशतृणे ॥

वनाखु : । पुं० शशके ॥

वनाखुक : । पुं० मुद्गे ॥

वनाज : । पुं० वनच्छागे । दुष्टिर्के ॥

वनाटु : । पुं० स्त्री० वर्वणायाम् । नीलमक्षिकायाम् ॥

वनाधिवासी । त्रि० वनस्थे ॥ वनमधिवसतितच्छील : । णिनि : ॥

वनामल : । पुं० करमर्द्दे । कृष्णपाकफले ॥

वनाम्र : । पुं० कोषाम्रे ॥

वनायु : । पुं० हरिणे ॥ देशविशेषे ॥

वनायव : । पुं० बहुवचनान्तोयम् । देशविशेषे ॥

वनायुज : । पुं० हयविशेषे । वनायुजे ॥ वनायुषुदेशेजात : । सप्तम्याम्जनेर्ड : ॥

वनारिष्टा । स्त्री० वनहरिद्रायाम् ॥

वनार्चक : । पुं० पुष्पजीविनि । मालाकारे ॥

वनार्द्रका । स्त्री० ऐन्द्रे । वनभवार्द्रके ॥

वनालिका । स्त्री० वज्रवल्ल्याम् । हस्तिशुण्डायाम् ॥

वनाश्रय : । पुं० द्रोणकाके ॥

वनाहिर : । पुं० दन्तायुधे । शूकरे ॥

वनि : । पुं० अग्नौ ॥ वन्यतेयाचते । वनुयाचने । खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचलिचरिभ्यश्चेति०इप्रत्यय : ॥

वनित : । त्रि० याचिते ॥ सेविते ॥

वनिता । स्त्री० उत्पादितात्यर्थानुरागनार्याम् ॥ योषिन्मात्रे ॥ वन्यतेस्म । वनुयाचने० वनसम्भक्तौवा । क्त : । यस्यविभाषेतिइण्निषेधात्वा

दिट् ॥ यथा । वनतैर्बाहुलकादि तन् ॥

वनी । पुं॰ कन्दमूलफलाद्याहारेणसाग्निहोत्रे॰निरग्निहोत्रे॰वानप्रस्थे । तृतीयाश्रमे । वनं निवासस्थानमस्यास्ति । अतइनिठनाविति निः ॥

वनी । स्त्री॰ विपिने । गहने ॥ वनति । वन॰ । पचाद्यच् । गौरादिः ॥

वनीपक : । त्रि॰ याचके ॥ वनीं पाति । आतइतिकः । ततः संज्ञायांकन् ॥

वनीयक : । त्रि॰ याचके ॥ वननम् । वनु॰ । सर्वधातुभ्यइन् । वनिर्याञ्चा॰तामिच्छति । सुपआत्मनः क्यच् । ण्वुल् ॥

वनेक्षुद्रा । स्त्री॰ करञ्जे ॥

वनेचर : । पुं॰ किराते ॥ त्रि॰ अरण्यचारिणि ॥ वनेचरति । चरेष्टइतिटः ॥ तत्पुरुषेकृतीत्यलुक् ॥

वनेज्य : । पुं॰ वरसाले ॥

वनेसद् । पुं॰ वनेचरे ॥ वनेसीदति । षद्लृ॰ । क्विप् । तत्पुरुषइत्यादिनाऽलुक् ॥

वनेसर्ज : । पुं॰ असनवृक्षे ॥

वनोद्भवा । स्त्री॰ वनकार्पास्याम् ॥ त्रि॰ वनजे ॥

वनोपल : । पुं॰ आरण्यगोमये ॥

वनौका : । पुं॰ वानरे ॥ वनस्थिते । पुलिन्दे ॥ वनमोकोस्य ॥

वनौषधी । स्त्री॰ वनोद्भवौषधिमात्रे ॥ प्रायोजना : सन्निवनेचराद्यागोपाद्य : प्राकृतनामतज्ज्ञा : । प्रयोजनार्थाश्च प्रवृत्तिर्यतस्ततः प्राकृतइत्यदोष : ॥ किञ्च । रसवीर्यविपाकेभ्योमूलात्पत्रात्फलाइलात् । आकाराद्दर्शकालादेर्वनौषध्यर्थमुन्नयेत् ॥

वन्दक : । पुं॰ नीलवस्त्राम् । वन्दायाम् ॥ त्रि॰ वन्दनकृति ॥

वन्दका । स्त्री॰ वृक्षादन्याम् । वन्दायाम् ॥

वन्दथ : । त्रि॰ स्तोतरि ॥ स्तुत्ये ॥ वन्दते॰ वन्द्यतेवा । वदि अभिवादनस्तुत्यो : । शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथइत्यत्र वन्दीत्यप्यस्यानेवन्दोतिपाठोपिबहुश्रुतनिर्दारितइतिवन्देरथ : ॥

वन्दनम् । न॰ नतौ । प्रणामे ॥ वन्दे ल्युट् ॥ मुखे ॥

वन्दनमाला । स्त्री॰ तोरणे । रम्भास्तम्भचतुष्टयवेष्टिताम्रपत्ररचितमालायाम् ॥ यथा । कुर्याद्वन्दनमालांयोरम्भास्तम्भै : सुशोभनै : । चूतवृक्षोद्भवै : पत्रैर्नागरेचक्रपाणिन : । युगानिपञ्चसङ्ख्यानांस्वर्गेतस्योत्सवोभवेत् । पूज्यतेवासवाद्यैश्च क्रीडतेचाप्सरोवृत : ॥

वन्दनमालिका । स्त्री० वहिर्द्वारोपरि शुभदायांमालायाम् ॥ यथा । तो रणोर्हेतुमङ्गल्यं दामवन्दनमालिका ॥

वन्दना । स्त्री० समीच्याम् । स्तुतौ । दीमभस्मनातिलके ॥ यथा । ऐशान्यामाहरेद्भस्मशुचावाथस्रुवेण वा । वन्दनांकारयेत्तेनशिरः क ण्ठांसकेषुच ॥ कश्यपस्यैतिमन्त्रेण यथानुक्रमयोगतइतिवशिष्ठः ॥

वन्दनी । स्त्री० नतौ ॥ जीवातौ ॥ वव्याम् ॥ पाचनकर्म्मणि ॥

वन्दनीयः । पुं० पीतभृङ्गराजे ॥ त्रि० नमस्ये । वन्द्ये । स्तवनीये ॥ वन्दितुमर्हः । वदि० । अनीयर् ॥

वन्दनीया । स्त्री० गोरोचनायाम् ॥ अजादित्वाट्टाप् ॥

वन्दा । स्त्री० वृक्षोपरिजातवृक्षे । वृक्षादन्याम् । वृक्षरुहायाम् । जीवन्तिकायाम् । वन्दाके ॥ वृक्षे विजातीयप्ररोहोवन्दा । वन्द्यते । वदि० । गुरोश्चहलः ॥ भिक्षुक्याम् । वन्द्यां ॥

वन्दाकः । पुं० द्रुमरुहायाम् । वन्दायाम् ॥ यथा । वन्दाकः स्याद्धिमः तिक्तः कषायोमधुरोरसे । मङ्गल्यः कफवातास्ररक्षोव्रणविषापहः ॥ + * +

वन्दाका । ) स्त्री० वन्दायाम् ।
वन्दाकी । ) वृक्षादन्याम् ॥

वन्दारुः । त्रि० वन्दनशीले । अभिवादके ॥ वन्दते । वदि० । शृवन्द्योरारुः ॥

वन्दिः । स्त्री० निवहमनुजादौ । प्रग्रहे । उपग्रहे । वन्दी० इ० लोक० प्र० ॥ सोपानके ॥

वन्दिग्राहः । पुं० अग्न्यायुधदेवतागारभेदके ॥

वन्दिचौरः । पुं० माचले । सन्धिचौरे ॥

वन्दितः । त्रि० पूजिते ॥

वन्दी । पुं० राजादेः स्तुतिपाठिनि । स्तुतिपाठके । भाट० इ० प्र० ॥ प्रस्तावानुवक्तरि ॥ वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः ॥ वन्दते । वदि० । ग्रह्यादित्वादावश्यके तिवाणिनिः ॥ पणमध्यस्थे ॥

वन्दिपाठः । पुं० भोगावल्याम् । स्तुतिग्रन्थे ॥

वन्दी । स्त्री० आहृतस्त्रियाम् ॥ पणमध्यस्थायाम् । वन्द्यते० वन्दते वा । वदि० इन् । ङीष् ॥ शूद्रायांचत्रियेणोत्पादितायाम् ॥

वन्दीकारः । पुं० वन्दिग्राहे । प्रसह्यचौरे । माचले ॥

वन्द्यः । त्रि० स्तव्ये । वन्दनीये ॥

वन्द्या । स्त्री० स्तव्यायाम् । वन्दनीयाया

म् । गोरोचनायाम् ॥ वन्दायाम् ॥
वन्द्र : । त्रि० पूजके ॥ पुं० गुरौ ॥
वन्दते० वन्द्यतेवा । वदि० ।
स्फायितञ्चीत्यादिनारक् ॥ न०
कल्याणे ॥
वन्य : । पुं० वनौल्ले । वनशूरणे ॥
वाराहीकन्दे ॥ देवनले ॥ न०
कैवर्तीमुस्तके ॥ त्वचे ॥ त्रि० वने
भूते । वनेभव : । यत् ॥
वन्या । स्त्री० वनसमूहे ॥ अम्बुसमू
हे ॥ वनानांसमूह : । पाशादि
भ्याय : ॥ गोपालकर्कट्याम् ॥
मुद्गपर्ण्याम् ॥ गुञ्जायाम् ॥ भद्र
मुस्तायाम् ॥ गम्भपत्रायाम् ॥
मिश्रयायाम् ॥
वन्यापोदकी । स्त्री० लताप्रभेदे वन
आयाम् । वनसाञ्चयायाम् ॥ इ
तिराजनिर्घण्ट : ॥
वन्न : । त्रि० भंगिनि । भागिनि ॥
वनति । वनसम्भक्तौ । ऋज्रेन्द्राग्र
त्यादिनारन् ॥
वप : । पुं० मेदसि ॥ केशमुण्डने ॥
बीजवपने ॥ वपति । टुवप० ।
पचाद्यच् ॥ वपतियद्विक्षपाणा :
पचेमासाद्यबीजम् ॥
वपनम् । न० बीजाधाने ॥ मुण्डने
॥ यथा । गङ्गायांभास्करक्षेत्रेमा
तापित्रोर्गुरोर्मृतौ । आधानेसो
मपानेच वपनंसप्तसुस्मृतम् ॥

टुवप० । ल्युट् ॥ अन्यत्रनिध
नात्पत्यु : पत्नीकेशान्नवापयेत् ॥
क्षौरे ॥
वपनी । स्त्री० नापितशालायाम् ॥
वपा । स्त्री० विवरे । छिद्रे ॥ मेदसि
॥ उप्यतेऽत्र । टुवप० । भिदाद्य
ङ् ॥ यद्वा । वपति । पचाद्यच्
॥ टाप् ॥
वपिल : । पुं० पितरि ॥
वपुस्रव : । पुं० शरीरस्थरसधातौ ॥
वपुन : । पु० देवे । सुरे ॥
वपुषा । स्त्री० हवुषायाम् । श्रीवेर०
इ० भा ॥
वपुष्टमा । स्त्री० पद्मचारिण्याम् ॥
वपु : । न० तनौ । शरीरे ॥ प्रशस्ता
कृतौ ॥ वपति० उप्यतेवा । टुव
प बीजसन्ताने । अर्त्तिपृवपीत्यु
सि : ॥
वप्रव्य : । त्रि० अपर्णीये ॥ भूमौवी
जं स्विवप्रव्य० मुर्वरायांनचोषरे ॥
वप्ता । पुं० जनके ॥ त्रि० वापके ।
उपति । टुवप० । नप्तृनेष्टृत्वष्टृहोतृ
पोतृभ्रातृजामातृमातृपितृदुहितृ इ ॥ कवौ ॥
वप्र : । पुं० तातै ॥ प्रकारे ॥ न०
सीसके ॥ पुं० न० प्राकाराधारवे
दिकायाम् । चये ॥ तथाचार्थशा
स्त्रम् । खातादुद्धृतमृदावप्रंकारये
त् ० तस्योपरिप्राकारमिति ॥ मत्ता
वप्रोयथा । मत्तोद्यानामंमत्तवप्रां

तङागशतशोभिताम् । प्राकारगृह
सम्बाधामिन्द्रस्येवामरावतीम् ॥
महान्वप्रोयस्या : । प्राकाराधार
भूताकृत्रिमोच्छ्रिताभूमिर्वप्रसंज्ञ
तिविश्व० पु० ॥ रोधसि । तटे ॥
रेणौ ॥ क्षेत्रे । केदारे ॥ सानुनि ॥
उप्यतेऽत्र । टुवप० । वृधिवपिभ्यां
रन् ॥
वप्रक्रीडा । स्त्री० वृषभादीनांवप्रक्रि-
यायाम् ॥ यथा । उत्खातकेलिःशृ
ङ्गाद्यैर्वप्रक्रीडानिगद्यतेइतिशब्दा-
र्णव : ॥
वप्रा । स्त्री० मञ्जिष्ठायाम् ॥
वप्रि : । स्त्री० क्षेत्रे ॥ वपति । टुव
प० । बङ्कादित्वात्साधु : ॥
वप्री । स्त्री० वल्मीके ॥
वम : । पुं० स्त्री० वमने ॥
वमथु : । पुं० वमने । गजस्यकरशी-
करे ॥ वमनं० वम्यतेवा टुवमउ
द्गिरणे । ट्वितोथुच् ॥
वमन : । पुं० शणे ॥ न० छर्द्दने ॥
अर्द्दने ॥ आहुतौ । आहरणे ॥
वमनी । स्त्री० जलौकायाम् ॥
वमनीया । स्त्री० मक्षिकायाम् ॥
त्रि० वमनयोग्ये ॥
वमि : । पुं० हुताशने । अग्नौ ॥
धूर्त्ते ॥ स्त्री० वान्तौ । छर्द्दने ॥
वमनम् । टुवम० । इकृष्या
दिभ्य : ॥



वमित : । त्रि० कृतवमने ॥ यथा ।
वमितंलङ्घयेत्प्राज्ञोलङ्घितंत
तुवामयेत् । वमनेऽक्षमबाहुल्याद्
न्यालङ्घनकर्षितम् ॥
वमी । स्त्री० वमने ॥ कृदिकारादिति
ङीष् ॥
वम्र : । पुं० वंशे ॥
वम्री । स्त्री० उपजिह्वायाम् । सीम
क० ह्रू० दे० भा० । वालवी० ह्रू०
महाराष्ट्रभाषा ॥ ह्रू० हि० न्द्र : ॥
वम्रीकूट : । पुं० वल्मीके ॥
वय : । पुं० पक्षिणि । खगे ॥ तारु
ण्ये ॥ यौवने ॥ कालकृतायांयौव
नादिरूपायांशरीरावस्थायाम् । बा
ल्यादौ ॥ अवस्थित्रय : पक्ष : ।
यथा । कौमारयौवनमध्यस्थस्थवि-
रत्वानिचत्वारिवयांसीत्येक : प
क्ष : । तथाहु : । आद्येवयसि
नाधीतंद्वितीयेनार्जितंधनम् । तृती
येनतपस्तप्तंचतुर्थेकिंकरिष्यतीति ॥
त्रीणिवयांसीत्यन्ये । यदाहु : ।
पितारक्षतिकौमारेभर्त्तारक्षतियौ-
वने । पुत्रास्तुस्थाविरेभावेनस्त्रीस्वा
तन्त्र्यमर्हतीति ॥ अन्ये तु । कौमार
यौवनस्थविरत्वानि । त्रीणीच्छन्ति ।
आहुश्चते । आषोडशाद्भवेद्बालोयावत्
क्षीरनिवर्त्तक : । मध्यम : सप्तति
र्यावत्परतोवृद्धउच्यतइति ॥ के-
चित्तुउपचयापचयलक्षणं द्वे वयसी

इत्युक्तिर्यस्मिन्पर्चे यौवनस्यप्रथम वयोवाचित्वात्तद्वयसिप्रथमइतिवधू- टीचिरचौत्यवलीपिसिद्धं० वय स्यचरमइतिनवक्तव्यमितिस्थितम्॥ यस्त्वर्थप्रकरणादिकमनपेक्ष्यश्रवण मात्रेणवय: प्रतिपादयति० सव योवाचीत्युच्यते० अन्तरङ्गत्वात्० तेनेहन । उत्तानशया० लोहित पादा । इहप्रकरणादिनावयस: प्रतीतावपि० शब्दादप्रतीते: । अ वालापिहिव्याध्यादिवशादुत्तानाशे ते० अलक्तकेनचरक्तचरणाभवति ॥ वयते० वेति० अजतिवा । वय गतौ० वीगत्यादौ० अजगतौश्च असुन् ॥ वयस्त्रिविधंबाल्यंमध्य मंवार्द्धकंतथेतिसुश्रुत: ॥

वयस्थ: । त्रि० मध्यमवयसि । तरु णे ॥ वयसितिष्ठति । सुपीतियो गविभागात्क: ॥

वय:स्था । ) वयस्था । ) स्त्री० ब्राह्मयाम् ॥ गुडू च्याम् ॥ आमलक्याम् ॥ सूक्ष्मैला याम् ॥ काकोल्याम् । पथ्याया म् । पूतनायाम् । हरीतक्याम् ॥ सोमलतायाम् ॥ शाल्मलौ ॥ क्षी रकाकोल्याम् ॥ मत्स्याक्ष्याम् ॥ वयोयौवनंतिष्ठ त्यनया । स्था० । घञर्थेक: ॥ युवतौ । तरुण्याम् । सख्याम् । माल्या

म् ॥ खर्परेशरिवाविसर्गलोप: ॥

वयस्य: । पुं० समानवयस्के । स्नि ग्धे । सवयसि ॥ वयसातुल्य: । नौवयोधर्मेत्यादिनायत् ॥ स ख्यौ ॥

वयस्या । स्त्री० सख्याम् ॥ टाप् ॥

वयस्यो । पुं० तरुणे ॥

वयुन: । पुं० देवतालये ॥ न० प्रज्ञा ने ॥ कर्मणि ॥ अजति । अज० । अजियमिशीङ्भ्यश्चेत्युनन्चित् । अजेर्वी गुणायादेशौ ॥

वयोधा: । पुं० यूनि । तरुणे ॥ वयो दधाति । डुधाञ् । वयसिधाञ इत्यसिङित् ॥

वयोवङ्गम् । न० सीसके ॥

वयोवाची । पुं० अर्थप्रकरणादिकम नपेक्ष्यश्रवणमात्रेणवय: प्रतिपा दकेकुमारादिशब्दे ॥

वर: । पुं० देवाद्दृते । देवतादेरभी प्सिते ॥ तपोभिरिष्यतेयस्तुदेवेभ्य: सवरोमतइतिभरत: ॥ भर्त्तरि ॥ जामातरि ॥ हस्ते । वरणे ॥ वि टे । षिड्गे ॥ गुग्गुलौ ॥ कन्या र्थिनि ॥ वरंपरीक्ष्यकन्यादेया । तथाहिविद्याप्रभावंज्ञानञ्चपरीक्ष्य वृणुयाद्वरम् । अन्योक्तं देवीभागवते । वरायगुणहीनायवृद्धायाज्ञानिने तथा । दरिद्रायचमूर्खायरोगिणे कुत्सितायच ॥ अत्यन्तकोपयुक्ताय

वाऽल्पमतदुर्मुखायच । पङ्क्तिवेपङ्क्तिहीनायचान्धायवधिरायच ॥ जडायचैवमूकायक्लीबतुल्यायपापिने । ब्रह्महत्यांलभेतसोपिय: स्वकन्यां प्रयच्छति ॥ शान्तायगुणिनेचैवयूनेचविदुषेपिच । साधकायसुतांदत्त्वा दशयज्ञफलंलभेदितिनवम : स्कन्ध : ॥ न० कुङ्कुमे ॥ किञ्चिदिष्टे । मनाक्प्रिये ॥ तथाहि । वरंप्राणास्त्याज्यामचशिशुविनाशिष्वभिरतिर्वरंमौनंकार्यंनचवचनमुक्तंयदनृतम् । वरंक्लीबंभाव्यंनचपरकलत्राभिगमनंवरंभिक्षाशित्वंनच परधनानांहिहरणम् ॥ त्रि० श्रेष्ठे ॥ साधुनि ॥ व्रियते०वरणंवा । वृञ् वरणे । ग्रहवृद्रित्यप् ॥ यद्वा । वृणोति० वरतिवा । पचाद्यच् ॥

वरक : । पुं० वनमुद्गे ॥ पर्पटे ॥ तृणधान्यप्रभेदे । स्थूलकङ्गौ । चीणा० हिं० भा० प्र० ॥ मधुरोवरकोरूक्ष : कषायोवातपित्तकृत् ॥ न० पत्रोर्णे । धौताधौतसाधारणवस्त्रे ॥ पोताच्छादने ॥

वरक्रतु : । पुं० इन्द्रे । मरुत्वति ॥

वरचन्दनम् । न० कालीये ॥ देवदारुणि ॥ वरश्चतच्चन्दनञ्च ॥

वरट : । पुं० हंसे ॥ गन्धोल्याम् । वरडै० हिं० प्र० कीटे ॥ म्लेच्छजातिविभेदे ॥ न० कुन्दपुष्पे ॥ वृणोतिसेवतेसर : । वृङ्सम्भक्तौ । वृणोतिवा । वृञ् वरणे । शकादिभ्योटन् ॥

वरटा । स्त्री० हंसस्ययोषिति । हंस्याम् ॥ गन्धोल्याम् । वरडै० हिं० भा० प्र० कीटे ॥ कुसुम्भबीजे । वरट्टिकायाम् ॥ यथा । वरटामधुरास्निग्धारक्तपित्तकफापहा । कषायाशीतला गुर्वी स्वादवृष्यानिलापहा ॥ + +

वरटी । स्त्री० हंस्याम् । वरडै० हिं०-प्र० सपक्षकीटे । गन्धोल्याम् ॥ गौरादि : ।

वरट्टिका । स्त्री० वरटायाम् । कुसुम्भबीजे ॥

वरण : । पुं० तिक्तशाके । वरुणद्रुमे ॥ प्राकारे । सेतौ ॥ उष्ट्रे ॥ सङ्क्रमे ॥ न० कन्यादिवरणे ॥ वेष्टने । वृत्याम् ॥ व्रियते० वृणोतिवा । वृञ्० । युच् ॥ कर्तृकरणयोर्वाल्युट् ॥ वरणे । यथा वरं वृणवन्तितंदेवायरदत्तवरार्थिनाम् । धातुर्वैवरणंप्रोक्तन्तस्मात्तद्वरणा : स्मृता : ॥ इति साम्बपुराणम् ॥ पूजनादौ ॥

वरणसी । स्त्री० वाराणस्याम् ॥

वरणा । स्त्री० काश्या उत्तरसीम्निस्थितायांनद्याम् ॥

वरणीय : । त्रि० उपासनीये । वरेण्ये ॥

वरण्ड : । पुं॰ अन्तरावेद्याम् । वरण्डके ॥ समूहे । सङ्घे ॥ वदनामये । वयस्फोडा॰इ॰भा॰प्र॰ ॥ वृणोति । वृञ्॰ । अण्डन्नुक्षम्भृवृञ्भ्यण्डन् ॥

वरण्डक : । पुं॰ अन्तर्वेद्याम् । वरण्डे । मातङ्गवेद्याम् ॥ अभ्यासकालिकाष्ठनवेदिमन्वार्यदन्तिनोयोधयेतिद्रुतिप्रसिद्धि : ॥ यौवनकण्टके ॥ संवर्त्तुले । गोलइतिख्याते ॥ भित्तौ ॥ त्रि॰विशाले ॥ भयसम्पन्ने ॥ कृपणे ॥

वरण्डा । स्त्री॰ शरिकायाम् । वर्त्याम् । शस्त्रविशेषे । छुरिकायाम् ॥

वरण्डालु : । पुं॰ फलपुच्छे ॥

वरतिक्त : । पुं॰ कुटजवृक्षे ॥

वरतिक्तिका । स्त्री॰ पाठायाम् ॥

वरत्वरी । स्त्री॰ रेणुकानामनिगन्धद्रव्ये ॥

वरत्रा । स्त्री॰ नद्ध्याम् । चर्ममयरज्जौ॰ । वरत॰इ॰भा॰प्र॰ ॥ दूष्यायाम् । कक्षायाम् । गजमध्यबन्धनरज्जौ ॥ व्रियतेऽनया । वृञ्॰ । बाहुलकाद्त्र : । वृञसिद्धिस्यन्नत्रा ॥ यद्वा । वरंत्रायते । चेष्टापालने ॥ आतोनुपेतिक : ॥

वरत्वच : । पुं॰ निम्बवृक्षे ॥ न॰श्रेष्ठवल्कले ॥

वरद : । त्रि॰ प्रसन्ने ॥ अभीष्टदातरि । समर्थके ॥ शान्तचित्ते ॥ वरंददाति । डुदाञ्॰ । आतोनुपसर्गइतिक : ॥ पुं॰ अग्नौ ॥ शान्तिकर्माणिपुष्टौचवरदोह्व्यवाहन इत्यागमात् ॥

वरदा । स्त्री॰ कन्यायाम् । कुमारिकायाम् ॥ वरदाख्याम् ॥ अश्वगन्धायाम् ॥ आदित्यभक्तायाम् ॥ टाप् ॥ तिथिविशेषे माघशुक्लचतुर्थ्याम् ॥

वरदाचतुर्थी । स्त्री॰ माघशुक्लचतुर्थ्याम् ॥ तस्यांगौरीपूज्या । यथा । भविष्योत्तरेमाघशुक्लमधिकृत्य । चतुर्थीवरदानामतस्यांगौरीसुपूजिता । सौभाग्यमतुलंकुर्यात्पञ्चम्यां श्रीरपिश्रियम् ॥

वरदातु : । पुं॰ भूमिसहवृक्षे ॥

वरदाची । स्त्री॰ दुर्गायाम् ॥

वरदानम् । न॰ भौमितीर्थभेदे ॥ यत्र विष्णुर्वेदुर्वाससावरोदत्त : ॥

वरदारु : । पुं॰ शाकवृक्षे ॥

वरदासङ्गम : । पुं॰ तीर्थविशेषे ॥

वरपर्णाख्य : । पुं॰ क्षीरकञ्चुकीवृक्षे ॥

वरप्रद : । त्रि॰ वरदे ॥

वरप्रदा । स्त्री॰ अगस्त्यमुने : पत्न्याम् । लोपामुद्रायाम् ॥ वरंप्रददाति । डुदाञ् : क : । टाप् ॥

वरफः । पुं० पिशाचविशेषे ॥ यथो- क्तं शूलिनीमन्त्रविधाने । सहस्रं प्र जपेन्मन्त्रं शूलिन्यायं स्पृशन्नरः । ब- टाश्च वरफाश्चैव न स्पृशन्ति कदाच- नेति ॥

वरफल : । पुं० नारिकेलवृक्षे ॥ वराणि फलानि यस्य ॥ न० श्रेष्ठफले ॥

वरम् । अ० ईषदुत्कर्षे ॥ मनागिष्टे ॥

वरमुखी । स्त्री० रेणुकाभिधगन्धद्र- व्ये ॥

वरम्बरा । स्त्री० पृश्निपर्ण्याम् ॥

वरयिता । पुं० भर्त्तरि ॥ वरणकार यितरि ॥

वरर् : । त्रि० वरप्रदे ॥ वरान्राति । रादाने । आतइतिकः ॥

वररुचि : । पुं० पुनर्वसौ ॥ कात्या यनमुनौ ॥ विक्रमादित्यराजसभा स्थकविविशेषे ॥ वरेषु रुचिर्यस्य ॥

वरल : । पुं० वरटे । गम्भोल्याम् ॥

वरलब्ध : । पुं० चम्पकवृक्षे ॥ त्रि० वरप्राप्ते ॥

वरला । स्त्री० गम्भोल्याम् ॥ हंस्याम् ॥

वरली । स्त्री० वरटायाम् ॥

वरवत्सला । स्त्री० श्वश्र्वाम् ॥

वरवर्णिनी । स्त्री० वरारोहायाम् । मस्तकाशिन्याम् । उत्तमायांनार्य्या म् ॥ अस्या : लक्षणं यथा । शीतेसु खोष्णसर्वाङ्गीग्रीष्मे यासुखशीत - ला । भर्तृभक्ताचयानारीसाभवेद्वर वर्णिनी ॥ इतिरुद्र : ॥ वरोवर्णो स्त्यस्या : । इनि : । ङीप् ॥ लाक्षा याम् ॥ हरिद्रायाम् ॥ रोचनाया म् । फलिन्याम् ॥ माधीयस्याम् वरश्चासौवर्णश्चसोस्त्यस्या : । इ- नि : । ङीप् ॥ शियि ॥ गौर्याम् ॥ सरस्वत्याम् ॥

वरवाह्लीकम् । न० कुङ्कुमे ॥

वरवृत्त : । पुं० सुप्रसादे । शिवे ॥ वरेषुवृत्त : ॥

वरा । स्त्री० फलत्रिके । त्रिफलाया- म् ॥ पाठायाम् ॥ रेणुकाख्यगन्ध द्रव्ये ॥ गुडूच्याम् ॥ मेदायाम् ॥ ब्राह्म्याम् ॥ हरिद्रायाम् ॥ विड ङ्ग । श्रेष्ठायाम् ॥ ग्रहवृद्धिस्त्यवन्ता ट्ठजष्टाप् ॥

वराक : । पुं० सङ्गरे । रणे । युद्धे ॥ त्रि० शोचनीये । शोच्ये ॥ अध- रे ॥ वृणोतितच्छील : । वृङ्सम्भ क्तौ । जल्पभिक्षकुट्टलुण्टवृङ : षा कन् ॥

वराकी । स्त्री० अवरोयाम् ॥ ङीष् ॥

वराङ्ग : । पुं० पुष्करिणि । गजे । मातङ्गे ॥ न० योनौ ॥ मस्तके ॥ गुडत्वचि ॥ शोभनावयवे ॥ त्रि० शोभनावयवविशिष्टे ॥ वरञ्चतद- ङ्गञ्च । वराण्यङ्गान्यस्य ॥

वराङ्गकम् । न० गुडत्वचि । त्वक्प त्रे । त्वचे ॥ वरमङ्गमस्य । शेषा-

द्विभाषितिकप् ॥

वराङ्गना । स्त्री० अतिप्रशस्ताङ्गयुक्तायांस्त्रियाम् ॥ यथा । शिर: सपुष्पं चरणौसुपूजितौवराङ्गनासेवनमल्पभोजनम् । अनग्नशायित्वमपर्वमैथुनम्चिरप्रनष्टांश्रियमानयन्तिषट् ॥

वराङ्गरूपोपेत : । त्रि० श्रेष्ठरूपयुक्ते । सिंहसंहनने ॥ अङ्गानिचरूपञ्चअङ्गरूपाणि । वराणिचतानिअङ्गरूपाणिच०तैरुपेत : ॥

वराङ्गी । पुं० अम्लवेतसे ॥

वराङ्गी । स्त्री० हरिद्रायां ।

वराट : । पुं० कपर्दके ॥ तस्यभेदा: पञ्चयथा । सिंही०व्याघ्री०मृगी०हंसी०विद्गलेतिराजनिर्घण्ट: ॥ रज्जौ ॥ वरमटति । अटगतौ । कर्मण्यण् ॥

वराटक: । पुं० पद्मवीजकोषे ॥ रज्जौ ॥ कपर्दके कौडी० इ० भा० प्र० ॥ तस्यसङ्ख्याभेदेनसंज्ञाभेदा यथा । वराटकानांदशकद्वयंयत् साकाकिणीताश्चपणश्चतस्र : तेषोडशद्रम्मइहावगम्योद्रम्मैस्तथाषोडशभिश्चनिष्क : ॥ इतिलीलावती॥ अपिच । तान्त्रिक : कार्षिक : पणइतियावत्वलक्ष्यवचनेन०गुञ्जा: पञ्चाद्यमाषकस्तेषोडशाच : कर्षोऽस्त्रीत्यमरसिंहोक्तेनचअशीतिरक्तिकापरिमिततामेपणशब्द : सङ्केतित : सचतावत्सङ्ख्यकवराटकैर्लभ्यतेइतिवराटकोप्यपितथाव्यवहार : । एतन्मूलकंभविष्यमत्स्यसूक्तयोर्वचनंयथा । अशीतिभिर्वराटकै : पणइत्यभिधीयते । तै : षोडशै : पुराणंस्याद्रजतंसप्तभिस्तुतै रितिप्रायश्चित्ततत्त्वम् ॥ तेचदक्षिणार्थंविधीयन्ते । यथा । हुतमश्रोत्रियंदानंहुतोयज्ञस्त्वदक्षिण: । तस्मात्पणंकाकिणींवाफलंपुष्पमथापिवा ॥ प्रदद्याद्दक्षिणांयस्मात यासफलोभवेत् । इतिशुद्धितत्त्वम् ॥ त्रियतेदल : । वृञ् आवरणे । अन्येभ्योपीत्याटच् । तत : स्वार्थेक : ॥ यद्वा । वरंदलवर्णमटति । अट० । कर्मण्यण् । तत : स्वार्थेकन् ॥ वराटकारजा : । पुं० नागकेशरवृक्षे ॥

वराटिका । स्त्री० कपर्दके ॥

वराण : । पुं० इन्द्रे ॥ वरुणवृक्षे ॥

वराणसी । स्त्री० काश्याम् ॥

वरादनम् । न० राजादने ॥

वराभिध : । पुं० अम्लवेतसे ॥ श्रेष्ठनामनि ॥

वरारकम् । न० हीरके ॥

वरारोह : । पुं० परमेश्वरे ॥ वरश्चारोहोऽस्य । पुनरावृत्त्यसम्भवात्०वरमारोहणंयस्मिन्वा ॥ गजारो

हि ॥ अमरीहि ॥

वरारोहा । स्त्री० मत्तकाशिन्याम् । वरवर्णिन्याम् । वरआरोहोनितम्बोऽस्याः । कटौ ॥

वरालिका । स्त्री० आर्यायाम् । पार्वत्याम् ॥ ब्र० चि० ॥

वराशि : । पुं० स्थूलवस्त्रे । स्थूलशाटके ॥ वरंश्रेष्ठवरणंवाअश्नुते । अशूव्याप्तौ । इन् ॥

वरासन : । पुं० षिड्गे ॥ द्वारपाले ॥ न० ओड्रपुष्पे ॥ श्रेष्ठासने ॥

वरासि : । पुं० स्थूलशाटके ॥ खड्गधरे ॥

वरासी । स्त्री० म्लानवस्त्रे ॥

वराह : । पुं० विष्णौ ॥ मानप्रभेदे ॥ तीर्थप्रभेदे ॥ अद्रिविशेषे । मुस्तायाम् ॥ शिशुमारे ॥ वाराहीकन्दे ॥ अष्टादशद्वीपान्तर्गतक्षुद्रद्वीपविशेषे ॥ यथा । गन्धर्वो० वरुणःसौम्योवराहःकङ्कएवच । कुमुदश्चकशेरुश्चनागोभद्रारकस्तथा ॥ चन्द्रेन्द्रमलयाःशङ्खयवाङ्गकगभस्तिमान् । ताम्राङ्गश्चकुमारीचतत्द्वीपाद्दशाष्टभिरिति ॥ सूकरे । कोले । भूदारे ॥ अस्यमांससाधनादियथा । वराहस्यतनुंतोयैःसम्यक्प्रक्षालितांमुहुः । दत्त्वाग्निनाथवाद्दग्धांकिञ्चित्तोयेनसेकितांम् ॥ शल्कोत्पाटंशयेत्तान्तुयावन्निर्लोमतामवेत् । ततोतितीक्ष्णशस्त्रेणवकर्त्तयित्वायथोचितम् ॥ गृहणीयाद्बामिषंतस्यपृथगङ्गविभागशः । रन्धयेद्बहुधात्रभ्रप्रलेहतलनादिकम् ॥ स्वेदनंबृंहणंवृष्यंशीतलंतर्पणंगुरु । श्रमानिलहरंस्निग्धंवाराहंबलवर्द्धनम् ॥ वरंश्रेष्ठमाहन्ति । हन० । अन्येष्वपीतिड : ॥ तन्मांसंविष्णवेनदेयम् ॥ तदुक्तंविष्णुसूत्रे । नाभक्ष्यंनैवेद्यार्थे०भक्षेष्वजामहिषीचीरंवर्जयेत् । पञ्चनखमत्स्यवराहमांसानिचेति ॥ आरण्यवराहमांसंश्राद्धादौविहितम् । अग्नन्तीव्यनुवृत्तौ० महारण्यवासिनश्चवराहांस्तथैतिहारीतोक्तेः ॥

वराहकन्दः । पुं० वाराह्याम् ॥

वराहकर्णी । स्त्री० अश्वगन्धायाम् ॥

वराहकान्ता । स्त्री० वाराह्याम् । वदराद्रुमे ॥

वराहकाली । स्त्री० सूर्यमणिपुष्पवृक्षे ॥ सूर्यावर्त्ते ॥

वराहक्रान्ता । स्त्री० लज्जालौ । तिक्तगन्धिकायाम् । नमस्कार्याम् ॥

वराहनामा । पुं० वाराहीकन्दे ॥

वराहपुराणम् । न० वाराहे ॥

वराहव्यूह : । पुं० वराहाकृतिवत्तत्तरचनेव्यूहे ॥ सूक्ष्ममुखपश्चाद्भागःपृथुमध्योवराहव्यूहोभवति ।

अनेनपार्श्वयोभेयेसतियातव्यं मा
गंवजेत् ॥
वराङ्गाङ्गी । स्त्री॰ दन्त्याम् ॥
वराटिका । स्त्री॰ कपिकच्छौ ॥
वराही । स्त्री॰ भद्रमुस्तायाम् ॥ शू
करकन्दे ॥
वरिमा । पुं॰ उरुत्वे । विशालता
याम् ॥ उरोर्भाव : । पृथ्वादित्वा
दिमनिच् । प्रियस्थिरेति॰ उरो
र्वभाव : ॥
वरिव : । न॰ परिचर्यायाम् ॥ धने ॥
वरिवसित : । त्रि॰ उपासिते ॥ वरि
व : कृतम् । नमोवरिवइतिक्यच।
क्तः क्यस्यविभाषेतिपक्षे यलोपः॥
वरिवसिता । त्रि॰ नमस्कर्त्तरि ॥
वरिवस्या । स्त्री॰ शुश्रूषायाम् । से
वायाम् ॥ वरिवस : करणम् । व
रिवस् शब्द : पूजार्थ : । नमोव
रिवश्चित्रङ : क्यच् । अप्रत्ययादि
त्य : । टाप् ॥
वरिवस्यित : । त्रि॰ उपासिते । वरि
वसिते ॥ वरिवस: क्यच् । क्तः ।
क्यस्यविभाषेतिपक्षे यलोपाभावः॥
वरिशी । स्त्री॰ मत्स्यवेधने ॥
वरिषम् । न॰ वत्सरे ॥
वरिषा : । स्त्री॰ भूम्नि॰ वर्षासु ।
प्रावृषि ॥ ॥
वरिषाप्रिय : । पुं॰ चातकेखगे ॥
वरिष्ठ : । पुं॰ तित्तिरौ ॥ नारङ्गवृक्षे

॥ न॰ मरिचे ॥ ताम्रे । त्रि॰ वरतमे ॥
उरुतमे ॥ अयमेषामतिशयेनवर :
॰उरुर्वा । अतिशायने॰ इष्ठन् ।
प्रियस्थिरेति॰उरोर्वभाव :॥ वत्से ॥
वरी । स्त्री॰ शतावर्याम् ॥ नीलोत्प
लाकारपुष्पत्वात् । वृणोति । वृ
ञ् । पचाद्यच् । गौरादि : ॥ सू
र्यपत्न्याम् ॥
वरीयान् । पुं॰ विष्कम्भादिष्वष्टादशे
योगे । तत्रजातस्यफलंयथा । दा
तादयालु : सुतरांसुवेश : सत्कर्म
कर्त्तामधुर : स्वभाव : नरोबलीया
न् धनवान् जनाढ्योयोगेवरीयान्
यदिजन्मकाले ॥ त्रि॰ अतियूनि
॥ श्रेष्ठे ॥ अतिविस्तारे ॥ अयमन
योरतिशयितउरुर्वरोवा । द्विवचने
तीयसुनिप्रियस्थिरेति॰ उरोर्वरा
देश : ॥
वरीवर्द : । पुं॰ वलीवर्दे ॥
वरुट : । पुं॰ म्लेच्छजातिविशेषे ॥
यथा । पुलिन्दानाहलानिष्ट्या :
शवरावरुटाभटा : । मालाभिल्ला:
किराताश्चसर्वेपिम्लेच्छजातय : ॥
इतिहेमचन्द्र : ॥
वरुड : । पुं॰ अन्त्यजजातिविशेषे ॥
यथा । रजकश्चर्मकारश्चनटोवरु
डएवच । कैवर्त्तमेदभिल्लाश्चसप्तै ते
चान्त्यजा:स्मृता :॥एतेषांचस्त्रियो
गत्वाभुक्त्वाचप्रतिगृह्यच । पतत्य

ज्ञानतोऽभिप्रोक्तानात् साम्यन्तु गच्छति ॥ इतियम : ॥ अस्योत्पत्तिर्यथा । कैवर्त्तस्य च कन्यायां शौण्डिकाद्देव सौचिक : । सौचिक्यां शौण्डिकाज्जातो नटो वरुड एव च ॥ इ० प० प० ॥

वरुण : । पुं० पश्चिमाशापतौ । प्रचेतसि । पाशिनि । यादसांपतौ । अप्पतौ ॥ यादसामस्मि तेषां राजा वरुणो नाम भगवतो विभूति : ॥ व्रियते० वृणोति वा । वृञ्० । कृवृदारिभ्य उनन् ॥ अप्सु । जले ॥ स्वरश्मिसंवरणात् सायङ्काले सूर्ये ॥ तरुविशेषे । वरणे । सेतौ । तिक्तशाके । कुमारके । अश्मरीघ्ने । श्वेतवृक्षे । तमाले । वरुणा० इ० भा० प्र० ॥ अस्य गुणा : । वरुण : पित्तलो भेदी श्लेष्मकृच्छ्राश्ममारुतान् । निहन्ति गुल्मवातास्रक्रमींश्चोष्णोऽग्निदीपन: ॥ कषायो मधुरस्तिक्त : कटुकोरूक्षको लघु : ॥ अपि च । वरुणोऽनिलशूलघ्नो भेदी चोष्णोऽश्मरोहर : । पुष्पं वरुणज ग्राहि पित्तघ्नमामवातजित् ॥ *

वरुणजा । स्त्री० मदिरायाम् ॥

वरुणात्मजा । स्त्री० मदिरायाम् ॥ वरुणालयोऽपि वरुण: । तस्य आत्मजा॥

वरुणानी । स्त्री० वरुणस्य पत्न्याम् ॥ वरुणस्य स्त्री० । इन्द्रवरुणेति ङी षानुकौ ॥

वरुणालय : । पुं० समुद्रे ॥ वरुणस्य आलय : ॥

वरुत्रम् । न० प्रावरणे । उत्तरीयवस्त्रे ॥ वृणोति । वृञ्० । अशित्रादिभ्य इत्रोत्रावितित्र प्रत्यय : ॥

वरुल : । पुं० सम्भक्ते ॥

वरूथ : । पुं० रथगुप्तौ । परप्रहरणाभिघातरक्षार्थं रथस्य सन्नाहवदावरणकद्रव्ये ॥ वरूथो रथगुप्तिर्यातिरोधत्ते रथस्थितमिति सज्जन : ॥ पिके ॥ काले ॥ समूहे ॥ त्रि० वरणीये ॥ न० चर्मणि ॥ वर्मणि ॥ वेश्मनि ॥ व्रियते रथोऽनेन । वृञ् वरणे । जॄवृञ्भ्यामूथन् ॥

वरूथाधिपति : । पुं० सेनान्याम् ।

वरूथी । त्रि० गुप्तिमति ॥ रथिनि ॥

वरूथिनी । स्त्री० सेनायाम् ॥ वरूथा : सन्त्यस्याम् । इनि : ङीप् ।

वरेण्य : । पुं० वह्नौ ॥ प्रजापतौ ॥ ध्यानेन सूर्यमण्डले द्रष्टव्ये पुरुषे ॥ तथा च योगियाज्ञवल्क्य : । वरेण्यं वरणीयं च जन्मसंसारभीरुभि : ॥ आदित्यान्तर्गतं यच्च भर्गाख्यं वा मुमुक्षुभि : । जन्ममृत्युविनाशाय दु : खस्य त्रिविधस्य च । ध्यानेन पुरुषोऽयन्तु द्रष्टव्य : सूर्यमण्डले इति ॥ न० कुङ्कुमे ॥ त्रि० प्रधाने ॥ वरणीये ॥ व्रियते । वृञ्० ।

बृअरण्यः ॥
वरेन्द्री । स्त्री० गौडदेशे ॥
वरेश्वरः । पुं० सदाशिवे । वराणामीश्वरः ॥
वरेटम् । न० मरुवकपुष्पे ॥
वरोलः । ) पुं० वरोली । ) स्त्री० वरटे ॥
बर्बरः पुं० नर्मणि । परिहासे ॥ युवपशौ ॥ छागे । बकरा० इ०भा० प्र०अस्यमांसगुणाः । यथा सहिङ्गुनाज्ये नयुतंसुपक्वमजासुतस्यामिषमल्पकस्य । एलालवङ्गोषणयोगयोगात्करोतिपुष्टिं जठरानलस्य ॥ अजासुतस्यबालस्यमांसं गुरुतरंस्मृतम् । हृद्यं मृदुतरंश्रेष्ठं सुस्वादुबलदंस्मृतम् ॥ वर्कायास्तु । सिद्धार्थसम्भवितैलेघृतेवोपस्करान्विते । साधितस्या प्रसूतायाः पलमाजं गुणोत्तमम् । अजाऽप्रसूतासम्भूतं मांसं पीनसनाशनम् । शुक्रकासारुचिशोफहितमग्नेश्चदीपनम् ॥ अजासुतस्यपीनस्ययौवनस्यस्यसाधितम् । घृतरामठसंयुक्तोपस्करैरसवत्पलम् ॥ वातपित्तहरंबल्यं सुस्वादुरुचिकारकम् । हृद्यं पीनसकासार्शः शोधघ्नं पुष्टिकृत्परम् ॥ इतिपिठौरा । अथक्लिलोधिया । स्थूलनिष्कासितान्त्रमांसंक्लतमजस्यच । रन्धितं बहुधासूदैरासुरादिकमस्तकम् ॥ तन्मांसंमांसदंबल्यं रुच्यं पित्तानिलापहम् । सुस्वादुमधुरंपाकेकिञ्चित्कफकरंस्मृतम् ॥ वर्कते । हकथादाने । बाहुलकाट्टरन् ॥

बर्बराटः । पुं० कटाक्षे ॥ तरुणादित्वरोचिषि ॥ नारीपयोधरोत्सङ्गकान्तदन्तनखक्षते ॥ इतिमेदिनिकरः ॥

वर्गः । पुं० स्वजातीयसमूहे । समानधर्मिभिः प्राणिभिरप्राणिभिर्वोपलक्षितेवृन्दे ॥ यथा । कवर्गः पशुवर्गः । इति ॥ ग्रन्थपरिच्छेदे ॥ यथा । सर्गोवर्गपरिच्छेदोद्घाताध्यायाङ्कसङ्ग्रहाः । उच्छ्वासः परिवर्त्तश्चपटलः काण्डमस्त्रियाम् ॥ स्थानंप्रकरणंपर्वाह्णिकञ्चग्रन्थसन्धयः ॥ समानाङ्कद्वयस्यपूरणे । कृतौ ॥ वृज्यते । वृजीवर्जने । घञ् । कुत्वम् ॥

वर्गोत्तमः । पुं० नवांशानांमध्येस्वांशे ॥ यथाचराणांमेषकर्कटतुलामकरराशीनांप्रथमोंशः । स्थिराणां वृषसिंहवृश्चिककुम्भानांपञ्चमोंशः । द्व्यात्मकानांमिथुनकन्याधनुर्मीनानांनवमोंशः । चराणांप्रथमेचांशेस्थिराणांपञ्चमेतथा । नवमेद्व्यात्मकानाञ्चवर्गोत्तमइतिस्मृतः ॥ अपिच । मेषाद्यामकराद्याश्चतुलाद्याः कर्कटादयः । क्रमान्नवांशा

राश्रीनांखांशावर्गोत्तमाःस्मृताः॥ इति ॥

वर्णाः। पुं० चन्द्रात्मजे ॥ यथा। रोहिण्यामभवद्वर्णोवर्चस्वीयेनचन्द्रमाः। त्रि० ॥ न० रूपे ॥ विष्ठायाम् ॥ तेजसि ॥ वर्चते । वर्चदीप्तौ । सर्वधातुभ्योऽसुन् ॥

वर्चस्कः। पुं० न० गूथे। पुरीषे। विष्ठायाम् ॥ वर्चते० वर्च्यतेवा। वर्च०। असुन्। कुत्सायांकन्॥

वर्चस्वी। पुं० चन्द्रमसि॥ त्रि० वर्चोविशिष्टे ॥ अस्मायामेधेतिमत्वर्थीयोविनिः॥

वर्जनम्। न० हिंसायाम्॥ त्यागे॥

वर्जनीयः। त्रि० त्यागार्हे। वर्ज्ये॥

वर्जितः। त्रि० परित्यक्ते ॥ वृजेः॥ क्तः॥

वर्ज्यः। त्रि० त्याज्ये। वर्जनीये॥

वर्णः। पुं० द्विजादौ। ब्राह्मणादौ। ब्राह्मणे। क्षत्रिये। वैश्ये। शूद्रे॥ देवेषुवर्णायथा। आदित्याःक्षत्रियास्तेषांविशश्चमरुतस्तथा। अश्विनौचस्मृतौशूद्रौतपस्युग्रेसमास्थितौ। स्मृतास्त्वाङ्गिरसादेवाब्राह्मणाइतिनिश्चयः। अपिच। चत्वारःकथितावर्णाआश्रमाअपिसुव्रते। आचाराश्चापिवर्णानामाश्रमाणांपृथक्पृथक् ॥ कृतादौकलिकालेतुवर्णाःपञ्चप्रकीर्तिताः। ब्राह्मणःक्षत्रियोवैश्यःशूद्रःसामान्यएवच॥ सामान्योवर्णसङ्करः॥ शुक्लादौ॥ सचबहुविधोयथा। श्वेतः १। पाण्डुः २ धूसरः ३। कृष्णः ४। पीतः ५। हरितः ६। रक्तः ७। शोणः ८। अरुणः ९। पाटलः १०। श्यावः ११। धूम्रः १२। पिङ्गलः १३। कर्बुरः १४। यथाऽमरः। शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः। अवदातःसितोगौरोऽवलक्षोधवलोऽर्जुनः॥ १ ॥ हरिणःपाण्डुरःपाण्डुः २। ईषत्पाण्डुस्तुधूसरः ३। कृष्णेनीलासितश्यामकालश्यामलमेचकाः ४॥ पीतोगौरोहरिद्राभः ५ पालाशोहरितोहरित् ६ लोहितोरोहितोरक्तः ७। शोणःकोकनदच्छविः ८॥ अव्यक्तरागस्त्वरुणः ९। श्वेतरक्तस्तुपाटलः १०। श्यावःस्यात्कपिशः ११ धूम्रधूमलौकृष्णलोहिते १२॥ कडारःकपिलःपिङ्गपिशङ्गौकद्रुपिङ्गलौ १३। चित्रंकिर्मीरकल्माषशबलैताश्चकर्बुरे १४॥ गुणेशुक्लादयःपुंसिगुणिलिङ्गास्तुतद्वति। इति। यशसि॥ गुणे। गजच्छिन्नकम्बले। प्रवेण्याम्। आस्तरणे। हाथीकीझूल० इ० भा०॥ स्तुतौ॥ काञ्चने॥

त्रते ॥ गीतक्रमे ॥ न० कुङ्कुमे । पुं० न० भेदे ॥ रूपे ॥ विलेपने ॥ अक्षरे । अकारादिवर्णेस्स द्विविधः । ध्वन्यात्मकोऽक्षरात्मकश्च ॥ अक्षरात्मकस्योच्चारणमुक्तं भरद्वाजेन । यथा । श्रीशिवउवाच । विशेषंशृणु गान्धर्वप्राचार्याः कण्ठतः स्वराः । हृदयंजिह्वयामूर्द्धालुद्वयं जिह्वदन्तजम् ॥ मुखस्थानाद्वलीवाच्याः अकारः कण्ठजातइति ॥ चित्रे ॥ शब्दे ॥ तालविशेषे ॥ षडजादिगतौ ॥ षड्गरागे ॥ त्रियतेऽनेन । वृञ् । कृवृजृसिद्रुपन्यनिस्वपिभ्योनिदितिनः ॥ यद्वा । वर्णयन्ति वर्णाः सन्त्यस्य । अर्शआद्यच् ॥ वर्ण्यतेऽर्थोऽनेनवा । वर्णवर्णने । वर्णप्रेरणेवा । घञ् ॥ वर्णयतिवा । अच् ॥

वर्णकः । पुं० चारणे ॥ मण्डले ॥ न० हरिताले ॥ चन्दनादिलेपमात्रे ॥ गात्रानुलेपनयोग्यपिष्टे वृष्टेवासुगन्धिद्रव्ये ॥ चन्दने ॥ पुं० स्त्री० हिङ्गुलहरितालका चनीलीकादौ ॥ पुं० न० चन्दने ॥ विलेपने ॥ त्रि० वक्तरि ॥ वर्णकरोति० वर्णयति० वक्तीतिवा । वर्ण० ॥ ण्वुल् ॥

वर्णकम्बलः । पुं० चास्तरणे ॥

वर्णकविः । पुं० कुबेरात्मजे ॥ मायुराजे ॥

वर्णका । स्त्री० प्रावर्णभेदे ॥ वर्णयत्यक्रियाविस्तारगुणवचनेष्विति चौरादिकः । ततोण्वुल् । वर्णकातान्तश्चइतीत्वंन ॥

वर्णकूटः । पुं० येटकविशेषे ॥ यथा । क्षात्रविट्शूद्रविप्राः स्युः क्रमान्मेषादिराशयः । तत्रवर्णाधिकाकन्यानवोढाव्याकदाचन ॥ दोषस्तु । वर्णज्येष्ठातुयानारीवर्णहीनस्तुयः पुमान् ॥ विवाहंयदिकुर्वीततदाभर्ताविनश्यतीति ॥

वर्णकूपिका । स्त्री० मसीधान्याम् ॥

वर्णक्रिया । स्त्री० वर्णकरणे ॥ यथा । वर्णस्यकरणेदेयंकुङ्कुमंरक्तचन्दनम् । ताम्बूलंयथयद्युक्तंतत्तच्च प्रयोजयेत् ॥ पार्श्वेषुगुरुणादेयो-गोऽस्यजैत्रौरजेषु च ॥ शेषेषुपाकयोगेषुधूपयेद्धिङ्गुसर्पिषा ॥

वर्णचारकः । पुं० चित्रकारे ॥

वर्णज्येष्ठः । पुं० ब्राह्मणे ॥ वर्णानां० वर्णेषुवाज्येष्ठः ॥ त्रि० स्ववर्णापेक्षयोत्तमवर्णे ॥

वर्णतूलिः । )
वर्णतूलिका । ) स्त्री० लेखन्याम् ॥
वर्णतूली । )

वर्णदम् । न० कालीयके ॥ त्रि० वर्णदातरि ॥

वर्णदात्री । स्त्री० हरिद्रायाम् ॥

त्रि॰ वर्णदातरि ॥

वर्णदूतः। पुं॰ लेखे। बाचिकहार के ॥

वर्णधर्म्मः। पुं॰ न॰ वर्णाधिकृत धर्म्मे ॥ वर्णत्वमेकमाश्रित्ययोधर्मः सम्प्रवर्त्तते। वर्णधर्मः सउक्तस्तु यथोपनयनंनृपेतिभविष्यपुराणम् ॥ अपिच। यजनंयाजनंदानंब्राह्मणस्यप्रतिग्रहः। अध्यापनंचाध्ययनंषट्कर्माणिद्विजोत्तमाः ॥ दानमध्ययनंयज्ञोधर्मःक्षत्रियवैश्ययोः। दण्डोयुद्धंक्षत्रियस्यकृषिर्वैश्यस्यशस्यते ॥ शुश्रूषैवद्विजातीनांशूद्राणांवर्णसाधनम्। कारुकर्मतथाजीवः पाकयज्ञोपिधर्म्मतः ॥ क्षमादमोदयादानमलोभस्त्याग एवच। आर्जवंचानसूयाचतीर्थानुसरणंतथा ॥ सत्यंसन्तोषआस्तिक्यंश्रद्धाचेन्द्रियनिग्रहः। देवताभ्यर्चनंपूजाब्राह्मणानांविशेषतः ॥ अहिंसाप्रियशादित्वमपैशुन्यमकल्कता। सामासिकमिमंधर्मंचातुर्वर्ण्येऽब्रवीन्मुनिः ॥ प्राजापत्यंब्राह्मणानांस्मृतंस्थानंक्रियावताम्। स्थानमैन्द्रंक्षत्रियाणांसङ्ग्रामेष्वपलायिनाम् ॥ वैश्यानांमारुतंस्थानंस्वधर्ममनुवर्त्तताम्। गान्धर्वंशूद्रजातीनांपरिचारेतुवर्त्तताम्। इतिकौर्मे २ अध्याय: ॥

वर्णनम्। न॰ उपवर्णने ॥ स्तवने ॥ शुक्लपीतादिवर्णयोजने ॥

वर्णना। स्त्री॰ प्रशंसायाम्। गुणकथने। स्तवे ॥

वर्णनीयः। त्रि॰ वर्ण्ये। वर्णितव्ये ॥

वर्णपात्रम्। न॰ चित्रकारस्यनील्यादिवर्णाधारे ॥

वर्णपुष्पः। ) वर्णपुष्पकः। ) पुं॰ महासहायाम्। राजतरुणीपुष्पवृक्षे। अम्लाने ॥

वर्णपुष्पी। स्त्री॰ उष्ट्रकाण्डीपुष्पवृक्षे ॥

वर्णप्रसादनम्। न॰ अगुरुणि ॥

वर्णमाता। स्त्री॰ भारत्याम् ॥ लेखन्याम् ॥

वर्णमातृका। स्त्री॰ सरस्वत्याम् ॥

वर्णमाला। स्त्री॰ क्रमागताकाराद्यक्षरसमूहे। मातृकायाम् ॥ वर्णानांमालेव ॥ तत्रसंस्कृतवर्णाः ५०। जपमालायाम् ५१। इङ्गरेजीयवर्णाः २६। फरासीयाः २३। हिब्रु॰ अर्थात्इहूदीयाः २२। आरबीयाः २८। पारसीयाः ३१। तुरस्कीयाः ३३। रूषीयाः ४१। ग्रिक्॰ अर्थात्इयुनानीयाः २४। लाटिन्देशीयाः २२। डच्॰ अर्थात्पोलन्दाजीयाः २६। स्पान्

देशीया : २७ । इटलीदेशीया : २० । तातारीया : २०२ । वर्म्म देशीया : १८ । चीनदेशीयवर्णा : शब्दात्मका : तच्छब्दसङ्ख्या : ८०००० ॥ इतिशब्दकल्पद्रुमेरा धाकान्तदेव : ॥

वर्णरेखा । )
वर्णलेखा । ) स्त्री० कठिन्याम् ॥
वर्णलेखिका । )

वर्णवती । स्त्री० हरिद्रायाम् ॥ त्रि० वर्णविशिष्टे ॥ वर्णोस्त्यस्याम् । रसादिभ्यश्चेतिमतुप् । उगित्वान् ङीप् ॥

वर्णविक्रिया । स्त्री० वर्णापचारे ॥ †

वर्णविलोडक : । पुं० श्लोकस्तेने । काव्यच्छायाद्दति ॥ सन्धिचौरे ॥

वर्णसङ्कर : । पुं० सङ्कीर्णाचारे ॥ मिश्रितजातौ । मूर्द्धाभिषिक्तमाहि ष्यकरणाद्यनुलोमप्रतिलोमजातेऽ न्त्यजजातौ ॥ वर्णयोर्वर्णानांवास ङ्करोयस्मिन्जनयितव्येसवर्ण : सङ्क र : ॥ व्यभिचारेणवर्णानामवेद्यावे दनेनच । स्वकर्मणाञ्चत्यागेनजाय न्ते वर्णसङ्करा : ॥

वर्णसङ्घात : । पुं० अक्षरसमाम्नाये ॥

वर्णसमाम्नाय : । पुं० वर्णमालाया म् ॥

वर्णसि : । पुं० जले । वृणोति । वृ अ० । सानसिवर्णसीत्यादिना०



असिप्रत्ययेधातोर्नुक्च ॥

वर्णा । स्त्री० आढक्याम् ॥

वर्णाङ्का । स्त्री० लेखन्याम् ॥

वर्णाट : । पुं० गायने ॥ चित्रकरे ॥ स्त्रीकृतजीवने ॥

वर्णात्मा । पुं० शब्दे ॥

वर्णाश्रमधर्म्म : । पुं० वर्णाश्रमोभयाऽ धिकृतधर्मे ॥ यथा । वर्णत्वमाश्रम त्वञ्चयोधिकृत्यप्रवर्त्तते । सवर्णाश्र मधर्मस्तुमौञ्जीयामेखलायथा ॥ वर्णाश्रमयोर्धर्म्मे ॥ सचोक्त : श्री महानिर्वाणतन्त्रे । यथा । श्रुत्वा धर्मान्बहुविधान्भवानीभवमोचि नो । हितायजगतांमाताभूय : श ङ्करमब्रवीत् ॥ श्रीदेव्युवाच । श्रुतं बहुविधंधर्ममिहामुत्रसुखप्रदम् । धर्मार्थकामदंविघ्नहरंनिर्वाणकार णम् ॥ साम्प्रतंश्रोतुमिच्छामित्व हिवर्णाश्रमान्विभो । यत्रयेविहि ताचारा : कृपयावदतानपि ॥ श्री सदाशिवउवाच ॥ चत्वार : कथि तावर्णाआश्रमाअपिसुव्रते । आचा राश्चापिवर्णानामाश्रमाणांपृथक्पृ थक् ॥ कृतादौ० कलिकालेतुव र्णा : पञ्चप्रकीर्त्तिता : । ब्राह्मण : क्षत्रियोवैश्य : शूद्र:सामान्यएवच ॥ एतेषांसर्ववर्णानामाश्रमौद्वौमहे श्वरि । तेषामाचारधर्मांश्चशृणुप्रव्रा क्ष्ये वदामिते ॥ पुरैवकथितंतावत्

कलिसम्भववर्ज्जितम् ॥ तप : स्वाध्यायहीनानान्तथामल्पायुषामपि। क्लेशप्रयासाशक्तानांकुतोदेहपरिश्रम : ॥ ब्रह्मचर्याश्रमोनास्तिवानप्रस्थोपिनप्रिये । गार्हस्थोभैक्षुकश्चैवआश्रमौद्वौकलौयुगे ॥ गृहस्थस्य क्रिया : सर्व्वाआगमोक्ता : कलौयुगे । नान्यमार्गै : क्रियासिद्धि : कदापिगृहमेधिनाम् ॥ भैक्षुकेप्याश्रमेदेविवेदोक्तंदण्डधारणम् । कलौनास्त्येवतत्त्वज्ञे यतस्तच्छ्रौतसंस्कृति :॥ शैवसंस्कारविधिनाऽवधूताश्रमधारणम् । तदेवकथितंभद्रे संन्यासग्रहणंकलौ ॥ विप्राणामितरेषाञ्चवर्णानांप्रवज्येकलौ । उभयत्राश्रमेदेविसर्व्वेषामधिकारिता ॥ सर्व्वेषामेवसंस्कारा : कर्माणिशैववर्त्मना। विप्राणामितरेषां स्वकर्म्मलिङ्गंपृथक्पृथक् ॥ जातमात्रोगृहस्थ : स्यात्संस्काराद्‌श्रमीभवेत् । गार्हस्थ्यंप्रथमंकुर्याद्यथाविधिमहेश्वरि ॥ तत्त्वज्ञानेसमुत्पन्ने वैराग्यंजायतेयदा । तदासर्वं परित्यज्यसंन्यासाश्रममाश्रयेत् ॥ विद्यामुपार्ज्जयेद्बाल्ये धनंदारांश्चयौवने। प्रौढे धर्म्याणिकर्माणिचतुर्थे प्रव्रजेत्सुधी: ॥ मातरंपितरंवृद्धंभार्याञ्चैवपतिव्रताम् । शिशुञ्चतनयंहित्वानावधूताश्रमंव्रजेत् ॥ मातॄ :

वर्णाश्रमधर्म्म :

पितॄन् शिशून् दारान् स्वजनान्बान्धवानपि । य : प्रव्रजतिहित्वैतान्समहापातकीभवेत् ॥ मातृहा पितृहासस्यात्स्त्रीवधीब्रह्मघातक : । असमर्प्यस्वपित्रादीन्योगच्छेत् भिक्षुकाश्रमे ॥ ब्राह्मणोविप्रभिन्नश्चस्वस्ववर्णोक्तसंस्क्रिया: । शैवेन वर्त्मनाकुर्याद्देशधर्म : कलौयुगे ॥ श्रीदेव्युवाच । कोवाधर्मोगृहस्थस्य भिक्षुकस्यचकिंविभो । विप्रस्यविप्रभिन्नानांसंस्काराद्दीनिमेवद ॥ श्रीसदाशिवउवाच ॥ गार्हस्थ्यंप्रथमंधर्म्मंसर्व्वेषामनुजन्मनाम् । तदेवकथयाम्यादौशृणुकालिनितम्बत: ॥ ब्रह्मनिष्ठोगृहस्थ : स्याद् ब्रह्मज्ञानपरायण : । यद्यत्कर्म प्रकुर्वीततद्ब्रह्मणिसमर्पयेत् ॥ नमिथ्याभाषणंकुर्यात्नचशाठ्यंसमाचरेत् । देवतातिथिपूजासुगृहस्थो निरतोभवेत् ॥ मातरंपितरञ्चैव साक्षात्प्रत्यक्षदेवताम् । मत्वागृहीनिषेवेतसदासर्व्वप्रयत्नत : ॥ तुष्टायांमातरिशिवेतुष्टेपितरिपार्वति । तवप्रीतिर्भवेद्देवि परब्रह्मप्रसीदति ॥ त्वमाद्या जगतांमातापिताब्रह्मपरात्परम् । युवयो : प्रीणनंयस्मात्तस्मात्किंरुद्धियांतप : ॥ आसनंशयनंवस्त्रंपानंभोजनमेवच । तत्तत्समयमाज्ञायमात्रे

पित्रे नियोजयेत् ॥ श्रावयेन्मृदुलां वाणीं सर्वदाप्रियमाचरेत्। पित्रोराज्ञानुसारी स्यात्सत्पुत्रः कुलपावनः ॥ औद्धत्यं परिहासश्च तर्जनं परिभाषणम् । पित्रोरग्रे न कुर्वीत यदीच्छेदात्मनो हितम् ॥ मातरं पितरं वीक्ष्य नत्वोत्तिष्ठेत्ससम्भ्रमः । विनाज्ञया नोपविशेत्संस्थितः पितृशासने ॥ विद्याधनमदोन्मत्तो यः कुर्यात्पितृहेलनम् । स याति नरकं घोरं सर्वधर्मबहिष्कृतः ॥ मातरं पितरं पुत्रं दारानतिथिसोदरान् । हित्वा गृही न भुञ्जीयात्प्राणैः कण्ठगतैरपि । वञ्चयित्वा गुरून्बन्धून् यो भुङ्क्ते स्वोदरम्भरः । इहैव लोके गर्ह्योऽसौ परत्र नारको भवेत् ॥ गृहस्थो गोपयेद्दारान्विद्यामभ्यासयेत्सुतान् । पोषयेत्स्वजनान्बन्धूनेष धर्म्मः सनातनः ॥ जनन्या वर्द्धितो देहो जनकेन प्रपोषितः । स्वजनैः शिक्षितः प्रीत्या सोऽधमस्तान्परित्यजेत् ॥ एषामर्थे महेशानि कृत्वा कष्टशतान्यपि । प्रीणयेत्सततं शक्त्या धर्म्मो ह्येष सनातनः ॥ स धन्यः पुरुषो लोके सत्कृतो परमार्थवित् । ब्रह्मनिष्ठः सत्यसन्धो यो भवेन्न विमानवः ॥ न भार्यां ताडयेत्क्वापि मातृवत्पालयेत्सदा । न त्यजेद्घोरकष्टेऽपि यदि साध्वी पतिव्रता ॥ स्थितेषु स्वीयदारेषु स्त्रियमन्यां न संस्पृशेत्। दुष्टेन चेतसा विद्वानन्यथा नारको भवेत् ॥ विरले शयनं वासं त्यजेत्प्राज्ञः परस्त्रिया । अयुक्तभाषणञ्चैव स्त्रियं शौर्यं न दर्शयेत् ॥ धनेन वाससा प्रेम्णा श्रद्धयामृतभाषणैः । सततं तोषयेद्दारान्नाप्रियं क्वचिदाचरेत् ॥ उत्सवे लोकयात्रायां तीर्थेष्वन्यनिकेतने । न पत्नीं प्रेषयेत्प्राज्ञः पुत्रामात्यविवर्जिताम् ॥ यस्मिन्नरे महेशानि तुष्टा भार्या पतिव्रता । सर्वधर्मः कृतस्तेन भवती प्रिय एव सः ॥ चतुर्वर्षावधि सुतान्लालयेत् पालयेत्पिता । ततः षोडशपर्यन्तं गुणान्विद्याश्च शिक्षयेत् ॥ विंशत्यब्दाधिकान् पुत्रान्प्रेरयेद्गृहकर्मसु । ततस्तांस्तुल्यभावेन मत्वा स्नेहं प्रदर्शयेत् ॥ कन्याप्येवं पालनीया शिक्षणीयातियत्नतः । देया वराय विदुषे धनरत्नसमन्विता ॥ एवं क्रमेण भ्रातॄन् स्वसृभ्रातृसुतानपि । ज्ञातीन्मित्राणि भृत्यांश्च पालयेत्तोषयेद् गृही ॥ ततः स्वधर्म्मनिरतानेकग्रामनिवासिनः । अभ्यागतानुदासीनान् गृहस्थः परिपालयेत् ॥ यद्येवं नाचरेद्देवि गृहस्थो विभवे सति । पशुरेव स विज्ञेयः स पापी लोकगर्हितः ॥ निद्रालस्यं देहयत्नं केशवि

न्यासमेश्च। आसक्तिमशनेवस्त्रे-
नातिरिक्तंसमाचरेत् ॥ ५१ ॥ यु
क्ताहारोयुक्तनिद्रोमितवाङ्मितमै
थुनः। स्वच्छोनम्रः शुचिर्दक्षोयु-
क्तः स्यात्सर्वकर्मसु ॥ शूरः श-
श्चोविनीतः स्याद्वाग्मीवेगुरुसन्नि-
धौ। जुगुप्सितान्नमन्येतनावम-
न्येतमानिनः। सौहार्दं व्यवहारां
श्चप्रवृत्तिं प्रकृतिंनृणाम्। सहवासे
नतर्कैश्चविदित्वाविश्वसेत्ततः॥
वसेद्दृष्टैरपिक्षुद्रात्सम्यंवीक्ष्य
बुद्धिमान्। प्रदर्शयेत्स्वप्रभावा-
न्नैवधर्मंविलङ्घयेत्॥ स्वीयंय
शः पौरुषञ्चगुप्तयेकथितञ्चयत्।
कृतंयदुपकारायधर्मज्ञोनप्रकाशये
त्॥ जुगुप्सितप्रवृत्तौचनिश्चितेपि
पराजये। गुरुणालघुनाचापियश
स्वीनविवादयेत्॥ विद्याधनयशो-
धर्मान्यतमानउपार्जयेत्। व्यस
नञ्चासतांसङ्गं मिथ्याद्रोहंपरित्यजे
त्॥ अवस्थानुगताश्चेष्टाः समया
नुगताः क्रियाः। तस्मादवस्थांस
मयंवीक्ष्यकर्मसमाचरेत्॥ योगर्व्व
मरतोदक्षोधार्मिकः प्रियवाक्श्चः
। मितवाङ्मितहासः स्यान्मा-
न्यार्येतुविशेषतः॥ जितेन्द्रियः
प्रसन्नात्माशुचिन्त्यः स्याद्दृढव्र-
तः। अप्रमत्तादीर्घदर्शीमाचास्य-
र्थान्विचारयेत्। सत्यंमृदुप्रियं



धीरोवाक्यंहितकरंवदेत्। आत्मो
त्कर्षंतथानिन्दांपरेषांपरिवर्जये-
त्। जलाशयाश्चवृक्षाश्चविश्रामगृ
हमध्वनि। सेतुः प्रतिष्ठितोयेनतेन
लोकत्रयंजितम्॥ सन्तुष्टोपितरौ
यस्मिन्ननुरक्ताः सुहृद्गणाः। गाय
न्तियद्यशोलोकास्तेनलोकत्रयंजित
म्॥ सत्यमेवव्रतंयस्यदयादीनेषु-
सर्वथा। कामक्रोधौवशेयस्यतेनलो
कत्रयंजितम्॥ विरक्तः परदारे
षुनिस्पृहः परवस्तुषु। दम्भमात्स
र्यहीनोयस्तेनलोकत्रयंजितम्॥ न
बिभेतिरणाद्योवैसङ्ग्रामेप्यपराङ्
मुखः। धर्मयुद्धेमृतोवापितेनलो
कत्रयंजितम्॥ असंशयात्मासुश्र
द्धः शास्त्रवाचारतत्परः। मच्छास
नेस्थितोयश्चतेनलोकत्रयंजितम्॥
ज्ञानिनालोकयात्रायैसर्वत्रसमदृष्टि
ना। क्रियन्तेयेनकर्माणितेनलोक
त्रयंजितम्॥ शौचन्तुद्विविधंप्रोक्तं-
बाह्याभ्यन्तरभेदतः ब्रह्मण्यात्मा
र्पणंयत्तच्छौचमान्तरिकंस्मृतम्॥
अग्निर्वाभस्मभावापिमलानामपक-
र्षणम्। देहशुद्धिर्भवेद्येनवह्निः
शौचंतदुच्यते॥ गङ्गानद्योहृदावा
प्यस्तथाकूपाश्चपुष्कराः। सर्वंपवित्रं
जननंस्वर्णदीक्रमतः प्रिये॥ भस्माच
याज्ञिकंश्रेष्ठंमृत्स्नातुमलवर्जिता।
वासोऽजिनतृणादीनिमृदस्थानी-

ह्निसुव्रते ॥ क्रिमत्रबहूनोक्तेनशौ-
चाशौचविधौशिवे । मनःपूतमवे
द्यैमगृहस्थस्ततदाचरेत् ॥ निद्रा
न्तेमैथुनस्यान्तेत्यागान्तेमलमूत्रयोः ।
भोजनान्तेमलेस्पृष्टेवह्निःशौचंवि-
धीयते ॥ सन्ध्याऽस्मैकालिकीकार्या
वैदिकीतान्त्रिकीक्रमात् । उपास-
नायाभेदेनपूजांकुर्याद्यथाविधि ॥
ब्रह्ममन्त्रोपासकानांगायत्रीजपना-
त्प्रिये । स्नानाद्ब्रह्मेतितद्वाच्यंस
न्ध्याभवतिवैदिकी ॥ अन्येषां
वैदिकीसंध्यान्सूर्य्योपस्थानपूर्वक
म् । अर्घ्यदानंदिनेशायगाय
त्रीजपनंतथा । अष्टोत्तरंसहस्रंवा
शतंवादशधापिवा । जपानांनियु-
मोभद्रेसर्वंत्राह्निककर्म्मणि ॥ शू-
द्रसामान्यजातीनामधिकारोस्तिके
वलम् । आगमोक्तविधौदेविसर्व-
सिद्धिस्ततोभवेत् ॥ प्रातःसूर्योद
यःकालोमध्याह्नस्तदनन्तरम् ।
सायंसूर्यास्तसमयस्त्रिकालानामयं-
क्रमः ॥ श्रीदेव्युवाच । विप्रादि
सर्ववर्णानांविहितातान्त्रिकीक्रिया ।
त्वयैवकथितानाथसम्प्राप्तेप्रबलेक
लौ ॥ तदिदानींकथंदेवविप्रान्वै
दिककर्मणि । नियोजयसिततस
र्वंविशेषाद्वक्तुमर्हसि । श्रीसदाशि
वउवाच । सत्यंब्रवीषितत्त्वज्ञेस
र्वेषांतान्त्रिकीक्रिया । लोकानांभे

गमोचायसर्वकामसुसिद्धिदा ॥ दु
यन्तुब्रह्मसावित्रीयथाभवतिवैदि
की । तथैवतान्त्रिकीगुह्येयाप्रशस्ता
भयकर्म्मणि ॥ अतोत्रकथितंदेवि
द्विजानांप्रबलेकलौ । गायत्र्यामधि
कारोस्तिनान्यमन्त्रेषुकर्हिचित् ॥
तारोद्याकमलायाच्चवाग्भवाद्याय
थाक्रमात् । ब्राह्मणश्चिरविप्रांसा
वित्रीकथिताकलौ ॥ द्विजातीनां
प्रभेदार्थंशूद्रेभ्यःपरमेश्वरि ।
सन्ध्येयंवैदिकीप्रोक्ताप्रागेवाह्नि
ककर्म्मणाम् ॥ अन्यथाशांभवैर्मा
र्गैःकेवलैःसिद्धिभाग्भवेत् ।
सत्यंसत्यंपुनःसत्यंसत्यमेतन्नसं
शयः ॥ कालात्ययेऽपिसन्ध्येयंक
र्त्तव्यादेववन्दिते । ओंतत्सद्ब्रह्म
चोच्चार्य्यमोक्षेप्सुभिरनातुरैः ॥
आसनंवसनंपात्रंशय्यांयानंनि
केतनम् । गृह्यकंवस्तुजातञ्चस्व
च्छात्स्वच्छंप्रशस्यते ॥ समाप्याह्नि
ककर्म्माणिस्वाध्यायंगृहकर्म्मवा ।
गृहस्थोनियतंकुर्यान्नैवतिष्ठेन्निरु
द्यमः ॥ पुण्यतीर्थेपुण्यतिथौग्रह
णेचन्द्रसूर्ययोः । जपंदानंप्रकु
र्वाणःश्रेयसांनिलयोभवेत् ॥ क
लावन्नगताःप्राणानोपवासःप्रशस्य
ते । उपवासप्रतिनिधावेकंदानं
विधीयते ॥ कलौदानंमहेशानिसर्व
र्वसिद्धिकरंभवेत् । ततपात्रं

केवलं स्त्रेयोऽदरिद्रः सत्क्रियान्वित : ॥ मासवत् सरपक्षाणामारम्भ दिनमम्बिके । चतुर्द्दश्यष्टमीशुक्ला तथैवैकादशीकुहू : ॥ निजजन्म दिनं चैव पित्रोर्म्मरणवासर : । वैधात् सवदिनञ्चैवपुण्यकाल : प्रकीर्त्तित : ॥ गङ्गानदामङ्गानद्यो गुरो : सदनमेवच । प्रसिद्धदेवता स्थानं पुण्यतीर्थं प्रकीर्त्तितम् ॥ त्यक्त्वासूाध्ययनं पित्रो : शुश्रूषां दारत्तणम् । नरकायभवेत्तीर्थं तीर्थायव्रततांनृणाम् ।। नतीर्थसेवा नारीणांनोपवासादिका : क्रिया : । नैवव्रतानांनियमोभर्त्तु : शुश्रूषणं विना भर्त्तैवयोषितांतीर्थं तपोदानं व्रतं गुरु : । तस्मात् सर्वात्मनानारोपतिसेवांसमाचरेत् ॥ १०१ ।। पत्यु : प्रियं सदाकुर्याद्वच सापरिचर्यया तदाज्ञानुचरीभूत्वातोषयेत् पतिबान्धवान् ॥ नेचेतत्पतिं क्रूरदृष्ट्याश्रावयेन्नैवदुर्वच : । माप्रियं मनसावापिचरेद्भर्त्तु : पतिव्रता॥ कायेनमनसावाचासर्वदाप्रियकर्म्मभि : । याप्रीणयतिभर्त्तारं सैवब्रह्मपदं लभेत् ॥ नान्यवक्त्रंनिरीचेतनान्यै : सम्भाषणं चरेत् । नचाङ्गं दर्शयेदन्यानांभर्त्तुराज्ञानुसारिणी ॥ तिष्ठेत् पित्रोर्व्वशेबाल्ये भर्त्तु : सम प्राप्तयौवने

वर्णाश्रमधर्म्म :

। वार्द्धक्ये पितृवन्धूनांनमृतन्त्वाभवेत् क्वचित् ॥ अज्ञातपतिमर्यादा मज्ञातपतिसेवनाम् । नोद्वाहयेत् पिताबालामज्ञातधर्मशासनाम् ॥ नरमांसंनभुञ्जीयान्नराकृतिपशूंस्तथा । बहूपकारकान्गाश्चमांसादान् रसवर्ज्जितान् फलानिग्राम्य वन्यानिमूलानिविविधानिच । भूमिजातानिसर्वाणिभोज्यानिस्वेच्छयाशिवे ॥ १०९ ॥ अध्यापनंयाजनञ्चविप्राणांवृत्तमुत्तमम् । अशक्तौ चत्रियविशांवृत्त्यैर्निर्वाहमाचरेत् ॥ राजन्यानाञ्चमङ्गृत्संसङ्ग्रामोभूमिशासनम् । अचाशक्तौवणिग्वृत्तं शूद्रवृत्तमथाश्रयेत् ॥ वाणिज्याशक्तवैश्यानांशूद्रवृत्तमदूषणम् । शूद्राणांपरमेशानिसेवा वृत्तं विधीयते ॥ सामान्यानान्तुवर्णानांविप्रवृत्त्यन्यवृत्तिषु । अधिकारोऽस्तिदेवेशिदेहयात्राप्रसिद्धये ॥ अद्वेष्टानिर्ममःशान्त : सत्यवादोजितेन्द्रिय : । निर्मत्सरोनिष्कपटः स्ववृत्तौब्राह्मणो भवेत् ॥ अध्यापयेत् पुत्रवच्छिष्यान्सन्मार्गवर्त्तिन : । सर्वलोकहितैषीस्यात् पक्षपातविनिर्मुख : ॥ मिथ्यालापमसूयांचव्यसनाप्रियभाषणम् । नीचै : प्रसक्तिं दम्भञ्च सर्वथाब्राह्मणस्त्यजेत् ॥ युयुत्सागर्ह्वितासम्भौसम्मानै : सम्भिकृत्त

मा । मृत्युर्जयो वा युद्धेषु राजन्या
नां वरानने ॥ चलोभी स्यात् प्रजा
वित्ते गृह्णीयात् सम्मितं करम् ।
रक्षन्नङ्गीकृतं धर्म्मं पुत्रवत् पालयेत्
प्रजाः ॥ न्यायं युद्धं तथा सन्धिं कर्मा
ण्यन्यानि यानि च । मन्त्रिभिः सह
कुर्वीत विचार्य सर्वथा नृपः ॥ धर्म
युद्धे नयो द्रव्ये न्यायदण्डपुरस्क्रियाः
। करणीया यथाशास्त्रं सन्धिं कुर्याद्य
थाबलम् ॥ उपायैः साधयेत्कार्य्यं
युद्धं सन्धिं सचक्षुभिः । उपाया-
नुगताः सर्व्वा जयक्षेमविभूतयः ॥
स्थाने चसङ्गाद्विरतः सदा विद्वज्ज
नप्रियः । धीरो विपत्तौ दक्षश्च शी
लवान् सम्मितव्ययी ॥ निपुणो दु
र्गसंस्कारे शस्त्रशिक्षाविचक्षणः ।
स्वसैन्यभावान्वेषी स्यात् शिक्षयेद्र-
णकौशलम् ॥ न हन्यान्मूर्छिता
न् युद्धे त्यक्तशस्त्रान् पराङ्मुखान्
। बलानीतान् रिपून् देवि रिपुदा
रशिशूनपि ॥ जयलब्धानि वस्तूनि स
न्धिप्राप्तानि यानि च । वितरेत् ता
नि सैन्येभ्यो यथायोग्यविभागतः ॥
शौर्य्यं वृत्तं चयो हृणांस्तं यं राज्ञा पृथ
क् पृथक् । बहुसैन्याधिपं नैकं
कुर्य्यादात्महितेरतः । नैकस्मिन्-
विश्वसेद्राजा नैकं न्यायेनियोजयेत्
। साम्यं क्रोडे पदासञ्चनीचैः सह
विवर्ज्जयेत् ॥ बहुश्रुतः स्वल्पभा

वर्णाश्रमधर्म्मः

षी जिज्ञासुर्ज्ञानिनामपि । बहुमा
नोऽपि निर्दम्भो धीरो दण्डप्रसादयोः
स्वयं वा चारदृष्ट्या वा प्रजाभावान् वि
लोकयेत् । एवं स्वजनभृत्यानां भावा
न् पश्येन् नराधिपः ॥ क्रोधाद्द-
म्भात् प्रमादाद्वा सम्मानं शासनं तथा
। सहसा नैव कर्त्तव्यं स्वामिना तत्त्वद
र्शिना ॥ सैन्यसेनाधिपामात्यव-
नितापत्यसेवकाः । पालनीयाः
सदोषाश्च दण्ड्या राज्ञा यथाविधि
॥ उन्मत्तानसमर्थांश्च बालांश्च मृत-
बान्धवान् । ज्वराभिभूतान् वृद्धां
श्च रक्षयेत् पितृवन्नृपः ॥ वैश्यानां
कृषिवाणिज्यवृत्तं विद्धि सनातन-
म् । येनोपायेन लोकानां देहयात्रा
प्रसिध्यति ॥ अतः सर्व्वात्मना दे
वि वाणिज्यकृषिकर्मसु । प्रमादव्य
सनालस्यं मिथ्या शाठ्यं विवर्ज्जयेत्
निश्चित्य वस्तुतन्मूल्यमुभयोः सम्म
तौ शिवे । परस्पराज्ञाकरणं क्रय
सिद्धिस्ततो भवेत् ॥ मत्तशिशु
प्रबालानामरिग्रस्तनृणां प्रिये । रो
गविभ्रान्तबुद्धीनामसिद्धौ दान
विक्रयौ ॥ क्रयसिद्धिरदृष्टानां गुण
श्रवणतो भवेत् । विपर्य्यये तद्गुणा
नामन्यथा भवति क्रयः ॥ कुञ्जरोष्ट्र
तुरङ्गाणां गुणदोषप्रकाशनात् ।
वर्षातीतेऽपि तत्क्रयमन्यथा कर्त्तुम
र्हति ॥ धर्मार्थकाममोक्षाणां भाज

नं मानवं वपुः। अतः कुलेशित
त्वं योनसिद्धो न्ममशासनात् ॥
यवगोधूमधान्यानांलाभो वर्षं गते
प्रिये। युक्तश्चतुर्थोधातूनामष्टमः
परिकीर्त्तितः॥ ऋणं कृषौ च वाणि
ज्ये तथा सर्वेषु कर्मसु। यद्यदङ्गीकृ
तं मर्त्यैस्तत्कार्यं शास्त्रसम्मतम् ॥
दक्षः शुचिः सत्यभाषीजितनिद्रो
जितेन्द्रियः। अप्रमत्तोनिरालस्यः
सेवावृत्तीभवेन्नरः प्रभुर्विष्णुसमो
मान्यस्तज्जायाजननीसमा। मान्या
स्तद्बान्धवाभृत्यैरिहामुत्रसुखेप्सुभिः॥
भर्त्तुर्मित्राणिमित्राणिजानीयात्
तं द्वेषीनरीन्। सभीतिः सर्वदा
तिष्ठेत्प्रभोराज्ञांप्रतीक्षयन्। अप
मानं गृहच्छिद्रं गुप्त्यर्थं कथितञ्चय
त्। भर्त्तुर्ग्लानिकरं यच्चगोपयेदति
यत्नतः॥ अलोभः स्यात्स्वामिध
नेसदास्वामिहितेरतः तत्सन्निधा
वसन्नाप क्रीडांहास्यं परित्यजेत् ॥
नपापमनसापश्येदपितद्गृहकिङ्क
रीः। शिविकाशय्यांहास्यञ्चताभिः
सहविवर्ज्जयेत्॥ प्रभोः शय्यास
नं यानं वसनं भाजनानिच। उपा
नद्भूषणं शस्त्रं नात्मार्थं विनियोजये
त्॥ क्षमांकृतापराधश्चेत्प्रार्थयेद्
यत्नतः प्रभोः। प्रागल्भ्यं प्रौढवा
दञ्चसाम्याचारं विवर्ज्जयेत्॥ सर्वे
वर्णाः स्वस्ववर्णैर्ब्राह्मोद्वाहं तथाश

वर्णाश्रमधर्म्मः

नम्। कुर्व्वीरन्भैरवीचक्रात्तत्त्व
चक्रादृतेशिवे॥ उभयत्रमहेशानि
शैवोद्वाहः प्रकीर्तितः। तथाद
नेचपानेचवर्णभेदोनविद्यते॥ श्री
देव्युवाच॥ गृहस्थानामशेषेणध
र्म्मानकथयः प्रभो। संन्यासविहि
तान्धर्म्मान्कृपयावक्तुमर्हसि॥
श्रीसदाशिवउवाच॥ अवधूताश्र
मोदेविकलौसंन्यासउच्यते। विधि
नायेनकर्त्तव्यस्तत्सर्वं शृणुसाम्प्रत
म्॥ ब्रह्मज्ञानेसमुत्पन्नेविरतेसर्व
कर्म्मणि। अध्यात्मविद्यानिपुणः
सन्न्यासाश्रममाश्रयेत्। विहायवृद्धौ
पितरौशिशुंभार्यांपतिव्रताम्।
त्यक्त्वाऽसमर्थान्बधूंश्चप्रव्रजन्नार
कीभवेत्॥ ब्राह्मणः क्षत्रियोवै
श्यः शूद्रः सामान्यएवच। कुला
वधूतसंस्कारे पञ्चानामधिकारि
ता॥ सम्पाद्यगृहकर्माणिपरि
तोष्यपरानपि। निर्ममोनिलयाद्ग
च्छेन्निष्कामोविजितेन्द्रियः॥ आहू
यस्वजनान्बंधून्ग्रामस्थान्प्रतिवा
सिनः। प्रीत्यानुमतिमन्विच्छेद्
गृहान्निर्गमिषुर्जनः॥ तेषाम-
नुज्ञामादायप्रणम्यपरदेवताम्।
ग्रामं प्रदक्षिणीकृत्यनिरपेक्षोगृहा
दियात्॥ मुक्तः संसारपाशेभ्यः
परमानन्दनिर्वृतः। कुलावधूतं
ब्रह्मज्ञं गत्वासम्प्रार्थयेदिदम्॥ गृ

ह्याश्रमेपरब्रह्मन्‌ममैतद्विगतंवयः। प्रसादंकुरुमेनाथसन्न्यासग्रहणंप्रति॥ निवृत्तगृहकर्माणं विचार्य विधिवद्गुरुः। शान्तंविवेकिनंवीक्ष्यद्वितीयाश्रममादिशेत्‌ ततः शिष्यः कृतस्नानोयतात्माविहिताह्निकः। ऋणत्रयविमुक्त्यर्थंदेवर्षीनर्चयेत्पितॄन्नित्यादिविधानेन द्वितीयाश्रमंस्वीकृत्य यथातिष्ठत्तदाह। ततोनिर्द्वन्द्वरूपोऽसौनिष्कामः स्थिरमानसः। विहरेत्स्वेच्छयाशिष्यः साक्षाद्ब्रह्ममयोभुवि॥ आब्रह्मस्तम्बपर्यन्तंसद्रूपेणविभावयन्‌। विस्मरन्नामरूपाणिध्यायन्नात्मानमात्मनि॥ अनिकेतः क्षमावृत्तोनिःशङ्कः सङ्गवर्जितः। निर्ममोनिरहङ्कारः सन्न्यासीविहरेत्क्षितौ॥ मुक्तोविधिनिषेधेभ्योनिर्योगक्षेमआत्मवित्‌॥ सुखदुःखसमोधीरोजितात्माविगतस्पृहः स्थिरात्माप्राप्तदुःखोपिसुखेप्राप्तेपिनिस्पृहः। सदानन्दः शुचिः शान्तोनिरपेक्षोनिराकुलः॥ नोद्वेजकः स्याज्जीवानांसदाप्राणिहितेरतः। विगतामर्षभीर्दान्तोनिस्सङ्कल्पोनिरुद्यमः॥ शोकद्वेषविमुक्तः स्याच्छत्रौमित्रेसमोभवेत्‌। शीतवातातपसहः समोमानापमानयोः॥ समः शुभाशुभेतुष्टोयदृच्छाप्राप्तवस्तुना। निस्त्रैगुण्योनिर्विकल्पोनिर्लोभः स्यादसञ्चयी॥ यथासत्यमुपाश्रित्यमृषाविश्वंप्रतिष्ठते। आत्मानमाश्रितस्तथादेहोजानन्नेवंसुखीभवेत्‌॥ इन्द्रियाण्येवकुर्वन्तिस्वंस्वंकर्मपृथक्पृथक्‌। आत्मासाक्षीविनिर्लिप्तोज्ञात्वैवंमोक्षभाग्भवेत्‌॥ धातुप्रतिग्रहंनिन्दामनृतंक्रीडनंस्त्रिया। रेतस्त्यागमसूयाञ्चसन्न्यासीपरिवर्जयेत्‌॥ सर्वत्रसमदृष्टिः स्यात्कीटेदेवेतथानरे। सर्वंब्रह्मेतिजानीयात्परिब्राट्‌सर्वकर्मसु॥ विप्रान्नंश्वपचान्नंवायस्मात्तस्मात्समागतम्‌। देशंकालंतथापात्रमश्नीयादविचारयन्‌॥ अध्यात्मशास्त्राध्ययनैः सदातत्त्वविचारणैः। अवधूतोनयेत्कालंस्वेच्छाचारपरायणः॥ सन्न्यासिनांमृतंकायंदाहयेन्नकदाचन। सम्पूज्यगन्धपुष्पाद्यैर्निखनेद्वाप्सुमज्जयेत्‌॥ अप्राप्तयोगमर्त्यानांसदाकामाभिलाषिणाम्‌। स्वभावाज्जायतेदेविप्रवृत्तिः कर्मसङ्कुले॥ तत्रापितेसानुरक्ताध्यानार्चाजपसाधने। श्रेयस्तद्देवजानन्तस्तत्रैवदृढनिश्चयाः॥ अतः कर्मविधानानिप्रोक्तानिचित्तशुद्धये। नामरूपंबहुविधंतदर्थंकल्पितंमया ब्रह्मज्ञानादृतेदेविकर्मसन्न्यसनंविना। कुर्वन्कल्पशतं

कर्मनभवेन्मुक्तिभाग्ज्ञान : ॥ कुलावधूतस्तस्त्वज्ञोजीवन्मुक्तोनराकृति : । साक्षान्नारायणंमत्वागृहस्थस्तंप्रपूजयेत् ॥ यतेर्दर्शनमात्रेणविमुक्त:सर्वपातकात् । तीर्थव्रततपोदानसर्वयज्ञफलंलभेत् ॥ इतिश्री महानिर्वाणतन्त्रेऽष्टमोल्लासेवर्णाश्रमधर्मनिरूपणम् ॥

वर्णाह्व : । पुं॰ मुद्गे ॥

वर्णि : । न॰ सुवर्णे ॥ वर्णिर्वर्णेलिखादिरण्यप्रत्ययुक्त : । अहिरण्येतु॰ वलि : ॥

वर्णिक : । पुं॰ लेखके ॥

वर्णिका । स्त्री॰ कथनस्योत्कर्षे ॥ काठिन्याम् ॥ मसौ ॥ नीलमृद्दिरागे ॥ व्याख्यायिकायाम् । ग्रन्थविशेषस्यव्याख्यायाम् ॥ लोचकर्ल्याम् ॥ वर्ण॰ । चौरादिक : । ततोण्वुल् । प्रत्ययस्थादितीत्वं ॥

वर्णित :। त्रि॰ स्तुतियुक्ते । अभिष्टुते । ईडिते । वर्ण्यतेस्म । वर्णवर्णक्रियोविस्तारगुणवचनेषु । क्त : ॥

वर्णी । पुं॰ लेखके ॥ चित्रकरे ॥ ब्रह्मचारिणि ॥ वर्ण : अष्टविधमैथुनाऽभावरूपास्तुति :सास्यास्ति । वर्णाब्रह्मचारिणीति॰इनि : । त्रि॰ वर्णवति ॥

वर्णिनी । स्त्री॰ वनितायाम् ॥ हरिद्रायाम् ॥

वर्णिलिङ्गी । पुं॰ ब्रह्मचारिवेशवति ॥ वर्णीब्रह्मचारी॰ तस्यलिङ्गंचिह्नमस्यास्ति । इनि : ॥

वर्णु : । पुं॰ सूर्ये ॥ नदविशेषे ॥ वृणोति । वृञ्॰ । अजिवृरीभ्योनिच्चेतिणु : ॥ देशविशेषे ॥ वर्णुनदसमीपदेशोवर्णु : । अदूरभवश्चेत्यर्थे॰ सुवास्त्वाद्यणोजनपदेलुविंतिलुप् ॥

वर्ण्य : । त्रि॰ वर्णनीये । श्लाघ्ये ॥ व्याख्यातव्ये ॥

वर्त्तक : । पुं॰ अश्वस्यखुरे ॥ व्याघ्राटपक्षिणि । भारइ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ अस्यमांसगुणाय था । वर्त्तकोग्निकर : शीतोज्वरदोषत्रयापह : । सुरुच्य : शुक्रदोबल्योवर्त्तकाल्पगुणाततः ॥ वर्त्तते ऋतुवर्त्तने । ण्वुल् । न॰ वर्त्तलोहे । नीललोहे । बिट्र॰ इ॰ भा॰ इ॰ केचित् ॥

वर्त्तका । स्त्री॰ वर्त्तिकायाम् । व्याघ्राटशकुनौ । बटेर॰ इ॰ भा॰ प्र॰ खगे ॥ वर्त्तकाशकुनौप्राचामितीत्वंन ॥

वर्त्तकी । स्त्री॰ अश्वखुरे । व्याघ्राटे॥

वर्त्तजन्मा । पुं॰ अम्बुदे । मेघे ॥

वर्त्तन : । पुं॰ वामने ॥ न॰ वृत्तौ । जीविकायाम् ॥ बहवोवर्त्तनोपायाऋषिभि : परिकीर्त्तिता : ।

सर्व्वेषामपिचैवैषांकुसीदमधिकंवि दुः॥ विशेषः कुसीदेद्रष्टव्यः॥

वर्त्ततेऽनेन, वृतुवर्त्तने। ल्युट्॥ साधारणवर्त्तुले॥ न० स्त्री० तूल मालायाम्॥ तर्कुपीठे॥ जीवने॥ त्रि० वर्त्तिष्णौ॥ वर्त्तनशीलः। वृतु०। अनुदात्तेतश्चेतियुच्॥

वर्त्तनिः। पुं० पूर्व्वदेशे॥ स्त्री० पथि॥ वर्त्ततेऽनया। वृतु०। वृतेश्च ष्यनिः॥

वर्त्तनी। स्त्री० पथि। वर्त्तने॥ तर्कुपीठे। प्रेषणायाम्॥ कृदिकारादितिङीष्॥

वर्त्तमानः। पुं० अतीतानागतभिन्नकाले॥ आरब्धापरिसमाप्तिवर्त्तमानः कालः। यथा। महाभारतंपठति। सचतुर्व्विधः यथा। प्रवृत्तोपरतश्चैव० वृत्ताविरत एवच॥ नित्यप्रवृत्तः सामीप्यो वर्त्तमानश्चतुर्व्विधः॥ क्रमेणोदाहरणानि। मांसंनखादति। आदौप्रवृत्तंमांसभोजनंनिवर्त्तय- ति० इत्यर्थः। इहकुमाराः क्रीडन्ति० तदानीन्तनक्रीडनाभावेपि पूर्व्वक्रीडाभावदृष्टौवर्त्तमानत्वात्। पर्व्वतास्तिष्ठन्ति० नित्यप्रवृत्तत्वात्। किन्तुपर्व्वतानांस्थितत्वे वर्त्तमानत्वंपिभूतभविष्यत्काला भ्यांसम्बन्धविवक्षयापर्व्वतास्तस्थुः० स्थास्यन्तीत्यपिस्यात्। सामीप्यो द्विविधः। भूतसामीप्ये यथा। कदाआगतोसि० इतिप्रश्ने० अ ध्वखेदादेर्वर्त्तमानत्वात्० एषो ऽहमागच्छामि०इत्यागतोपिवदति भविष्यत्सामीप्ये यथा। कदा० गमिष्यसीतिप्रश्ने० एषोऽहंगच्छा- मीतिगमनक्रियमाणोद्यमोपिवद ति० इतिमुग्धबोधटीकायांदुर्गा- दासः॥ प्रयोगाधिकरणीभूतका लोवर्त्तमानः कालइतिनैयायि काः॥ अद्यतने। अधुनातने॥ त्रि० तत्कालवृत्ते। विद्यमाने। स्थिते॥ वर्त्तते। वृतु०। शानच्। मुक्॥

वर्त्तरूकः। पुं० द्रौः साधिके। द्वारपाले॥ नदीभेदे॥ काकनीडे जलावटे॥

वर्त्तलोहम्। न० लोहविशेषे। लोहसंकरे। नीललोहे। विदर० इ० भा० प्र० इतिकेचित्॥

वर्त्तिः। स्त्री० वटिकायाम्। भेषजनिर्म्माणे॥ नयनाञ्जने। लेखे॥ गात्रानुलेपन्याम्॥ दीपकस्यदशायाम्॥ दीपे॥ वर्त्यते। वृतु०। ण्यन्तः अचइः वर्त्ततेऽनया वा वृतु०। इ पिशिकृत्यादिनेत्वा॥ वृतेश्छन्दसीति० इर्वा। स्वरभेदः। बाहुलकाद्गोकेपि॥

वर्त्तिविशेषे ॥ यथा । कतकस्य फलं शङ्खः सैन्धवं त्र्यूषणं वचा । फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनः शिला ॥ एषां वर्त्तिर्हन्त्याशु काचं तिमिरं पटलं तथेति ॥

वर्त्तिकः । पुं० पक्षिविशेषे । वर्त्तकी । बटेर० इ० भा० प्र० ॥

वर्त्तिका । स्त्री० वर्त्तकायाम् । व्याघ्राटे । बटेर । इ० भा० प्र० खगे ॥ अस्यामांसगुणायथा वर्त्तिकामधुराहृद्याकफमारुतनाशिनी ॥ अजशृङ्ग्याम् ॥ वर्त्ती । वर्त्ती० इ० भा० ॥ सापञ्चविधायथा । पद्मसूत्रभवादर्भगर्भसूत्रभवाथवा । शणजाबादरीवापिफलकोषोद्भवा यथा । वर्त्तिकादीपकृत्येषुसदापञ्चविधास्मृता ॥ वर्त्तते० वर्त्यतेवा । वृतु० ण्वुल् । उदीचांमते०प्रत्ययस्थादितीत्वम् ॥ वस्तुतस्तुवर्त्तिरस्तिकन्नितिकन्बोध्यः ॥

वर्त्तितः । त्रि० नीते ॥ निष्पादिते ॥ ग्रथिते ॥

वर्त्तितव्यः । त्रि० वर्त्तितुमर्हे ॥

वर्त्ती । त्रि० वर्त्तिष्णौ ॥

वर्त्तिष्णुः । त्रि० वर्त्तने ॥ वर्त्तनशीलः । अलङ्कृञितीष्णुच् ॥ वर्त्तिनि ॥

वर्त्तिष्यमाणः । त्रि० भविष्यत्कालादौ ॥ वर्त्तनप्रागभावाश्रये ।

वर्त्ती । स्त्री० वर्त्ती ।

वर्त्तुलः । पुं० कलायविशेषे । बाटुला० इ० गौ० दे० भा० प्र० ॥ यथा । कलायस्त्रयोभेदास्त्रिपुटोवर्त्तुलोऽङ्कटी । इतिशब्दमाला ॥ न० गृञ्जने ॥ त्रि० गोलवस्तुनि । निस्तले । वृत्ते ॥ वर्त्तते । वृतु० । बाहुलकादुलच् ॥

वर्त्तुला । स्त्री० तर्कुपीठ्याम् । टेकोरबाटुल इ० गौ० भा० ॥ इति हारावली ॥

वर्त्तुली । स्त्री० गजपिप्पल्याम् ॥

वर्त्म । न० नेत्रच्छदे ॥ मार्गे । अध्वनि ॥ वर्त्ततेऽनेनास्मिन्वा । वृतु० । मनिन् ।

वर्त्मनिः । स्त्री० पथि ॥ वर्त्तन्तेऽनया । वृतु० । वृतेश्चन्यनिः । चान्मुडितिगोवर्द्धनः ॥

वर्त्मनी । स्त्री० पथि ॥ कृदिकारादितिङीष् ॥

वर्त्स्यन् । त्रि० वर्द्धिष्यमाणे । लृटः सद्वेतिसदादेशे० वृद्भ्यः स्यसनोरितिविभाषयापरस्मैपदम् ॥

वर्द्धः । पुं० ब्राह्मणयष्टिकायाम् । पूर्त्तौ ॥ छेदे ॥ न० सीसके ॥

वर्द्धकः । पुं० ब्राह्मणयष्टिकायाम् । भार्ग्याम् ॥ वर्द्धते । वृधु छेदने । ण्वुल् ॥ त्रि० पूरके । छेदके ॥

वर्द्धकिः । पुं॰ त्वष्टरि । रथकारे तक्षणि । बढ़ई॰ इ॰ तखाण॰ इ॰ भा॰ प्र॰ । वर्द्धते । वर्द्धच्छेदने । ण्वुल् । वर्द्धं कषति । कष हिंसायाम् । बाहुलकात्किः ॥

वर्द्धकी । पुं॰ बढ़ई॰ इ॰ भा॰ प्र॰ वर्णसङ्करजातौ । त्वष्टरि । सूत्रधारे । रथकारे । काष्ठतक्षके ॥

वर्धनम् । न॰ वृद्धौ ॥ छेदने ॥ वर्धच्छेदनपूरणयोः ल्युट् ॥ त्रि॰ वर्धिष्णौ ॥ वर्धतेतच्छीलः । वृधुवृद्धौ । अनुदात्तेतश्चेतियुच् । वर्धयति । नन्द्यादित्वाल्ल्युर्वा ॥

वर्धनी । स्त्री॰ गलन्तिकायाम् । सनालजलपात्रे । बधना॰ बधनी॰ इ॰ भा॰ सम्मार्जन्याम् । बढनी॰ इ॰ भा॰ ॥

वर्धमानः । पुं॰ प्रश्नभेदे ॥ शरावे । एरण्डे ॥ वीरजिने । चरमतीर्थकृति । महावीरे । विष्णौ । नारायणे ॥ स्वस्तिके । राजगृहविशेषे । दक्षिणद्वाररहितोवर्द्धमानोधनप्रदः ॥ वर्धते । वर्धच्छेदनपूरणयोः । शानच् । स्वनामाप्रसिद्धेदेशविशेषे । त्रि॰ वृद्धिमति ॥

वर्धमानकः । पुं॰ शरावे ॥ वर्धते । वृधु॰ । शानच् । शप् । स्वार्थेकन् ॥ त्रि॰ वृद्धिविशिष्टे ॥

वर्धापनम् । न॰ नाडीच्छेदने ॥

वर्धितः । त्रि॰ प्रवृद्धे ॥ छिन्ने ॥ पूरिते ॥

वर्धिष्णुः । त्रि॰ वर्धने । वृद्धिशीले ॥ वर्धिते॰ तच्छीलः वृधु॰ । अलङ्कृञित्युष्णुच् ॥

वर्त्रम् । पुं॰ न॰ चपुणि । सीसे ॥ वरत्रायाम् ॥ वर्द्धते॰ इढवन्धनेन दीर्घीभवति । वृधु॰ । वृधिवपिभ्यां रन् । लघूपधगुणेरपरः ॥

वर्ध्री । स्त्री॰ नद्राम् । वरत्रायाम् । चर्म्मरज्जौ । बद्धी॰ इ॰ भा॰ ॥ वर्द्धते । वृधु॰ । रन् । गौरादित्वान्ङीष् ॥ यद्वा । औणादिकः ष्ट्रन् । गुणेरपरः । प्रत्ययतकारस्य॰ झषस्तथोर्धोधइतिधत्वे॰ षित्वान्ङीष् ॥

वर्पः । न॰ रूपे ॥ वृणोति । वृञ्स म्भक्तौ । वृञ्शीङ्भ्यांरूपस्वाङ्गयोः पुट्चेत्यसुन्॰ प्रत्ययस्यपुट् ॥

वर्म्मकण्टकः । पुं॰ पर्पटे ॥

वर्म्मकषा । स्त्री॰ चर्म्मकषायाम् । सप्तलायाम् ॥

वर्म्मा । पुं॰ क्षत्रियस्यपद्धतौ ॥ यथा । शर्म्मान्तंब्राह्मणस्यस्याद्वर्म्मान्तं क्षत्रियस्य च । गुप्तदासात्मकंनाम प्रशस्तं वैश्यशूद्रयोः ॥ न॰ कवचे ।

। तनुत्रे । वृणोति देहम् । वृञ् वरणे । मनिन् ॥

वर्म्मिः । पुं॰ मत्स्यविशेषे । बाँबो॰ बामी॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

वर्म्मिकः । त्रि॰ वर्म्मिणि । वर्म्मास्या स्तिव्रीह्यादित्वात्॰ ठक् ॥

वर्म्मितः । त्रि॰ धृतसन्नाहे । सन्नद्धे । सज्जे । वर्म्मसञ्जातमस्य । तारकादित्वादितच् ॥

वर्म्मी । त्रि॰ वर्म्मवति । वर्म्मिके ॥ वर्म्मास्यास्ति व्रीह्यादित्वादिनिः ॥

वर्म्मिमत्स्यः । पुं॰ बांबोतिख्याते मत्स्ये । वर्म्मिमत्स्योहरेद्वातपित्तंरुचिकरोलघुः ॥

वर्म्मुषः । पुं॰ बामिरूप॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ मत्स्ये ॥

वर्य्यः । पुं॰ कन्दर्पे । स्मरे ॥ त्रि॰ वरेण्ये ॥ वर्य्यते, वरईप्सायां चुरादावदन्तः । अचोयत् ॥

वर्य्या । स्त्री॰ पतिंवरायाम् ॥ अवद्यपण्यवर्य्यागर्ह्यपणितव्यानिरोधेष्विति॰ अप्रतिबन्धविषये॰ वृङ् सम्भक्ताविल्यस्मात्॰ यत् ॥

वर्व्वणा । स्त्री॰ वृहन्मक्षिकायाम् । नीलमक्षिकायाम् ॥ वरिति । वणति । वणशब्दे । अच् ॥ यद्वा । वर्वति । वर्वगतौ । युच् ॥

वर्व्वरः । पुं॰ पामरे । नीचे ॥ केशे । वक्रकेशे । बावरी॰ इ॰ भा॰ । चक्रले ॥

देशविशेषे । यथा । मायापुरंसमारभ्यसप्तशृङ्गात्तथोत्तरे । वर्व्वराख्योमहादेशः प्रोक्तः श्रीशक्तिसङ्गमे । पारसिकेजने । तृणविशेषे । सुमुखे । गरघ्ने । गन्धपत्रे । कालतावृक्ष॰ गौ॰ दे॰ भा॰ प्र॰ ॥ वर्वर्त्ति । वृञ्॰ । यङ्लुगन्तः । पचाद्यच् । यद्वा । वृणोति । वृञ्॰ । कृगॄशॄवृञ्चतिभ्यः ष्वरच् । न॰ हिङ्गुले । पीतचन्दने चोले । हिमवत्प्रान्तेषु॰ वङ्ग॰ प्र॰ धूपविशेषे । यथा । जलेनालोडितंशालिपिष्टकंखण्डमिश्रितम् । धारायांपक्कमुत्पाच्यतद्भवेद्वर्वराख्यकम् । वर्वरंबलकृत्मद्यः श्रेष्ठंपित्तानिलापहम् । रोचनं कफकृच्छीतंहृद्यंहृल्लासनाशनं ।

वर्व्वरकम् । न॰ चन्दनभेदे । श्वेतवर्वरके ॥

वर्व्वरा । स्त्री॰ शाकविशेषे । तुङ्ग्याम् । खरपुष्पायाम् । अजगन्धिकायाम् । वावुइ॰ इ॰ भा॰ प्र॰ । कृष्णार्जकस्तथाशुक्लोवटपत्रस्तीपरः । वर्वराचितयंरूक्षंशीतंकटुविदाहिच ॥ तीक्ष्णंरुचिकरंहृद्यंदीपनंलघुशाकिच । पित्तलंकफवातास्रदद्रुकृमिविषापहम् । पुष्पप्रभेदे ॥ वृणोति । वृञ्॰ कृगॄशॄवृञ्चतिभ्यः ष्वरच् । अनि

स्य : पितांङीष् ॥

वर्वरी । स्त्री॰ वर्वराऽर्थे ॥ पित्वात् ङीष् ॥

वर्व्वरीक : । पुं॰ भार्ग्याम् । ब्राह्म यष्टिकायाम् ॥ कुटिलकुन्तले । वावरी॰इ॰भा॰ ॥ अजगन्धिकाया म् । बावुइ॰इ॰भा॰ ॥ यूनि ॥ वृणुते । वृञ् । भृमृवृञांईकन् चाभ्यासस्येति॰ईकन् ॥

वर्व्वा । स्त्री॰ वर्वर्य्याम् ॥

वर्व्वि : । पुं॰ घस्मरे ॥ वृणुते । वृ-ञ् । वहृभ्यांविन् ॥

वर्व्वुर : । पुं॰ युगलाचे । तीच्णकराट के । गोश्रृङ्गे । कफान्तके । ववूर॰ ववूल॰इ॰प्र॰वृत्ते ॥ बर्व्वुर : कफ नुत्राहीकुष्ठक्रमिविषापह : ॥

वर्व्वूर : । पुं॰ वर्व्वुरे ॥ इतिराजनि-र्घण्ट : ॥

वर्ष : । पुं॰ न॰ भारतादौ ॥ जम्बुद्वी पे ॥ अब्दे । समायाम् । वत्सरे ॥ वृष्टौ ॥ वर्षधरे । मेघे ॥ वर्षणम्॰ वृष्यतेर्वा । वृषुसेचने । अज्विधौ-भयादीनामुपसङ्ख्यानमित्यच् ॥ वर्षयति॰वर्षतिवा । पचाद्यच् ॥ यद्वा ॥ वृणाति । वृञ्वरणे । वृ-तृवदीतिस : ॥ वर्षशब्दोदिवसप-रोपिदृश्यतेच॰दीर्घसत्राणिवार्षश तिकानि॰वार्षसहस्रिकाणिचेति ॥

वर्षकरी । स्त्री॰ झिल्लिकायाम् ॥

वर्षकेतु : । पुं॰ रक्तपुनर्नवायाम् ॥

वर्षकोष : । पुं॰ दैवज्ञे ॥ मासि ॥ वर्ष : कोषोऽस्य

वर्षज : । त्रि॰ वृष्टिजाते ॥

वर्षणम् । न॰ वृष्टौ ॥ वृषुसेचने । ल्युट् ॥ नचाऽचाल्युटोवाध : वृष भोवर्षणादितिभाष्यप्रयोगात्॰ल्यु ड्पिभवतीतिकैयटादय : ॥

वर्षणि : । स्त्री॰ वर्त्तने ॥

वर्षपर्वत: । पुं॰ वर्षविभक्तौ । भाजकगिरौ ॥ यथा । हिमवान्हेमकूटश्चनिषधोमे रुरेवच । चैत्र : कर्णीचशृङ्गीचसप्तै तेवर्षपर्वता : ॥ इतिहारावली ॥

वर्षपाकी । पुं॰ आम्रातके ॥

वर्षपुष्पा । स्त्री॰ सहदेवीलतायाम् ॥

वर्षप्रिय : । पुं॰ चातकपक्षिणि ॥

वर्षवर : । पुं॰ शण्ढे । अन्यस्मान्न-मर्हलके । खोजा॰इ॰भा॰प्र॰ ॥ वृणोति॰वरतिवा । वृञ्वरणे॰-वरश्चावरणेवा । अच् । वर्षस्वव-र : । येत्वल्पसत्त्वा : प्रथमक्लीवा-श्चस्त्रीस्वभाविन : । जात्यानदु-ष्टा : कार्येषुतेवैवर्षवरा : स्मृता : ॥

वर्षवृद्धि : । स्त्री॰ जन्मतिथौ ॥

वर्षा : । स्त्री॰ भूम्नि॰॰प्रावृट्काले । नभोनभस्ययो: । श्रावणभाद्रयो : ॥ आषाढादिचतुर्षुमासेषु । यथा । वर्षासुसविषंतोयंदिव्यमप्याश्विनं-विनेति ॥ वर्षवर्षणमत्रास्ति ।

अर्श आद्यच् । टाप् ॥
वर्षांश : । पुं॰ मासि ॥
वर्षाघोष : । पुं॰ महाभेके ॥
वर्षाङ्ग : । पुं॰ मासि ॥
वर्षाभव : । पुं॰ रक्तपुनर्नवायाम् ॥ त्रि॰वर्षासुजाते ॥
वर्षाभू : । पुं॰ भेके । मण्डूके ॥ भूलतायाम् । गण्डूपदे । किञ्चुलुके ॥ इन्द्रगोपे ॥ वर्षासुभवति । भू॰ । भुव : संज्ञान्तरयोरितिक्विप् ॥
वर्षाभू: । स्त्री॰ शोथघ्न्याम् । पुनर्नवायाम् ॥ भेक्याम् ॥
वर्षाभ्वी । स्त्री॰ भेक्याम् । वर्षासुभवति । भू॰ । क्विप् । वर्षाभ्वीत्यसाधु : । ङीष्विधायकाभावात् ॥ गौरादित्वाद्वाङीष् ॥ पुनर्नवायाम् ॥
वर्षार्चि : । पुं॰ कुजे । भौमे ॥
वर्षावसान : । पुं॰ शरत्काले ॥
वर्षिष्ठ : । त्रि॰ अतिवृद्धे ॥ अयमेषामतिशयेनवृद्ध : । इष्ठनि॰प्रियस्थिरेति-वृद्धस्यवर्षि॰आदेश : ॥
वर्षीयान् । त्रि॰ वृद्धतरे । ज्यायसि ॥ अयमनयोरतिशयेनवृद्ध : । द्विवचनेतीयसुनि॰ प्रियस्थिरेतिवर्षिआदेश : ॥
वर्षुक : । त्रि॰ वृष्टिकारिणि ॥ वर्षतितच्छील : । वृषुसेचने । लषपतपदेत्यादिनोकञ् ॥
वर्षुकाब्द : । पुं॰ वर्षणशीलमेघे ॥
वर्षेज : । त्रि॰ वर्षाकालजाते । वर्षेजे ॥ विभाषावर्षक्षरशरवरादित्यलुक् ॥
वर्षोपल : । पुं॰ करकायाम् ॥ वर्षायाउपल : ॥
वर्ष्म्म् । न॰ देहे ॥ इतिद्विरूपकोष : ॥
वर्ष्म । न॰ देहे । तनौ ॥ प्रमाणे ॥ प्रमाणमात्रोन्नतिरितिस्वामी । इयत्तेतिभरत : ॥ अतिसुन्दराकृतौ ॥ वर्षति॰ वृष्यतेवा । वृषु॰ । मनिन् ॥
वर्हम् । न॰ पुं॰ कलापे । मयूरपिच्छे ॥ दले ॥ न॰ ग्रन्थिपर्णे । स्थौणेये ॥ परीवारे ॥ वर्हति । वृहवृद्धौ । पचाद्यच् ॥ वर्ह्यतेवा । वर्हहिंसायां । घञ् ॥
वर्हणम् । न॰ पत्रे ॥
वर्हि : । पुं॰ पावके ॥
वर्हि : पुष्पम् । न॰ ग्रन्थिपर्णे ॥
वर्हि : शुष्मा । पुं॰ अग्नौ ॥ वर्हि : कुश : शुष्मबलमस्येतिविग्रह : ॥
वर्हि । न॰ स्थौणेये । कुकुरौंधा॰ इ॰ भा॰ ॥ वर्हअत्रप्रशस्तमस्य । अतइनि : ॥
वर्हिकुसुमम् । न॰ ग्रन्थिपर्णे ॥
वर्हिचूडा । स्त्री॰ खराश्वायाम् । मयूरशिखेतिप्रसिद्धायामोषधौ ॥

बर्हिण : । पुं॰ मयूरे ॥ बर्हमस्यस्य । फलबर्हाभ्यामिनच् ।
बर्हिणवाहन : । पुं॰ षडानने ॥
बर्हिर्ध्वजा । स्त्री॰ पार्वत्याम् ॥
बर्ही । पुं॰ मयूरे ॥ बर्होस्यस्य । इनि : ॥
बर्हिपुष्पम् । न॰ ग्रन्थिपर्णे ॥
बर्हिर्ज्योति : । पुं॰ अग्नौ ॥
बर्हिमुख : । पुं॰ गीर्वाणे । देवे ॥ बर्हिरग्निमुखंयस्यस : ॥
बर्हिषद् । पुं॰ दैत्यदानवादीनांपितृषु ॥ यथा । दैत्यदानवयक्षाणां गन्धर्वोरगरक्षसाम् । सुपर्णकिन्नराणाञ्चस्मृताबर्हिषदोत्रिजा : ॥
बर्हिष्ठम् । न॰ वाले । ह्रीवेरे । बाला॰ । इ॰ भा॰ प्र॰ ओषधौ । बर्हिषिकुशेतिष्ठति । सुपिस्थइतिक : । अम्बाम्बेतिषत्वम् ॥
बर्हि : । पुं॰ हुताशने ॥ चित्रके ॥ यज्ञे ॥ दीप्तौ ॥ न॰ ग्रन्थिपर्णे ॥ पुं॰ न॰ कुशे । दर्भे ॥ बर्हिर्द्विविधम् । मुख्यंगौणञ्च । तत्रमुख्यं कुशकाशादिदशदर्भमयम् । गौणन्तु॰तत्सदृशंद्रव्यान्तरम् । बृंहति बर्हिवृद्धौ । ओष्यादि : । बृंहेर्नलोपश्चेति॰ इसि : । बर्हि : सान्त : ॥
बलम् । न॰ सैन्ये ॥
वलच : । पुं॰ शुक्लवर्णे । धवले ॥ त्रि॰ तद्वति ॥ वलते । वलसंवरणेसञ्चरणेच । क्विप् । वलमच्छत्यस्मिन् । अच्॰ । वज् ॥ अवलचतेवा । अकारलोप : ॥
वलचगु : । पुं॰ चन्द्रे ॥ वलचा : गावोयस्यस : । गोस्त्रियोरितिह्रस्व : ॥
वलभी । स्त्री॰ गोपानस्याम् । कुड्याच्छादनार्थंदत्तवक्रकाष्ठे । वडभ्याम् ॥ पटलाधारवंशपञ्जरे ॥ वलति । वल॰ । बाहुलकादभच् । गौरादि : ॥
वलय : । पुं॰ कण्ठरोगे ॥ वेलायाम् ॥ पुं॰ न॰ कङ्कणे । कटके । प्रकोष्ठाभरणे ॥ वल्यते । वल॰ । वलिमलितनिभ्य : कयन् ॥ अस्थिविशेषे ॥ यथा । पाण्यो : पार्श्वयुगेपृष्ठेवक्षोजठरपायुषु । पादयोरपिचास्थीनिवलयानिबभाषिरे ॥ लघ्वादित्रिकले॰ । ऽऽ॰ ॥ गुर्वचरेपुं॰ ॥
वलयित : । त्रि॰ वेष्टिते । नद्यादिनावृते ॥ वलयंजातमस्य । तारकादित्वादितच् ॥ यद्वा । वलयवत्कृतम् । तत्करोतीतिणिच् ॥ क्त : ॥
वला । स्त्री॰ वलायाम् । वाट्यालके ॥ विद्याविशेषे ॥
वलाक : । पुं॰ क्षुद्रवके । वलायाम् ॥

वलाहक : । पुं॰ बलाहके ॥

वलिकर : । त्रि॰ वलिकर्त्तरि ॥ वलिं करोति । डुकृञ्॰ । दिवाविभेति टः ॥

वलित : । त्रि॰ वेष्टिते ॥

वलिर : । त्रि॰ केकरे । निम्नोन्नताक्षिणि ॥ वलते । वल॰ । बाहुलकात् किरच् ॥

वलिशम् । ) न॰
वलिशि : । ) स्त्री॰ बलिशे । बडिशे ॥
वलिशी । )

वली । स्त्री॰ मध्यमरेखायाम् ॥ ऊर्म्याम् ॥ शीर्णत्वचि ॥ गृहदारुणि ॥

वल्क : । पुं॰ न॰ त्वचि । वल्कले ॥ शल्के । खण्डे । पुं॰ पट्टिकालोध्रे ॥ वलते । वल॰ । शुल्कवल्कोल्कादयोऽतिकक् ॥ यद्वा । वल्कयति । वल्कपरिभाषणे । पचाद्यच् ॥

वल्कतरु : । पुं॰ पूगवृक्षे ॥

वल्कद्रुम : । पुं॰ भूर्जवृक्षे ॥

वल्कल: । पुं॰ न॰ द्रुमत्वचि । वल्के वक्कल॰ ङ॰ भा॰ प्र॰ ॥ त्वचे । दालचीनीतिभा॰ प्र॰ ॥ वलति । वल॰ । बाहुलकात्कल : ॥ वल्कं लातीतितुस्वामी ॥

वल्कला । स्त्री॰ शिलावल्कायाम् ॥

वल्कलोध्र : । पुं॰ पट्टिकालोध्रे ॥

वल्कवान् । पुं॰ मत्स्ये ॥ त्रि॰ वल्कयुक्ते ॥

वल्गिल : । पुं॰ कण्टके ॥

वल्ग : । पुं॰ न॰ अभ्यवहारे । जेमने ॥ वल्गभोजने । अच् ॥

वल्गन् । त्रि॰ धावति ॥

वल्गनम् । न॰ बहुभाषणे ॥ प्लुतगमने ॥

वल्गा । स्त्री॰ दन्तालिकायाम् । अवचेपण्याम् । अश्वमुखरज्जौ ॥ साचोत्क्षिप्तादिभेदेनचतुर्दशविधो क्ताश्वलीलावल्याम् । उत्क्षिप्ता शिथिलातथोत्तरवतीमन्दाचवेहायसीविक्षिप्तैककराङ्कस्वरसमोत्कीर्णाविभक्तातथा । अल्युत्क्षिप्त लोङ्कृतेखलुतथा व्यागूढगोकर्णिके वाहानाङ्कथितास्तुर्दशविधावल्गा प्रभेदाश्चमीति ॥ तल्लक्षणानितुतत्रैवद्रष्टव्यानि ॥ अश्वप्रेरणविशेषे ॥

वल्गाविभागकुशल: । त्रि॰ वाहानां षड्विधप्रेरणाभिज्ञे ॥ यथाहभोज : । वाहनंप्रतिवाहानांषड्विधंप्रेरणंविदु : । रागावल्गाकषापार्ष्णिप्रतोदस्वभेदत : ॥ वल्गायाविभागोविविच्यप्रयोग : तत्रकुशल : ॥

वल्गितम् । न॰ घोटकस्यविशेषगमने । देशेनविंशत्तोपरिचरणे ॥ गमने ॥ बहुभाषणे ॥ वल्गनम् । वल्ग गतौ । भावेक्त : ॥

वल्गु : । पुं॰ छागे ॥ त्रि॰ मनोज्ञे । सुन्दरे ॥ यथाक्रमम् । छागमाच

मतिवल्गु जगदेतदतिफल्गु। धन लोभमपहायनमपद्मनयनाय॥ वलते। वल ०। वलिगुंक्चेत्यु :॥ वाचाले॥

वल्गुकम्। न० चन्दने॥ विपिने॥ पणे॥ त्रि० रुचिरे॥

वल्गुपद :। पुं० बनमुद्गे॥

वल्गुला। स्त्री० वाकुच्याम्॥ पक्षि विशेषे। बल्कविहायाम्। बादुड० इतिभाषा॥

वल्गुलिका। स्त्री० तैलपायिकायाम्॥

वल्गुली। स्त्री० खविहादेपक्षिविशेषे॥

वल्भनम्। न० भक्षणे॥

वल्मीक :। पुं० न० वामलूरे। बल्मीके॥ तन्मृत्तिकयाशौचनिषेधोयथा। वल्मीकमृत्तिकोत्खातांमृदमन्तर्जलांतथा। शौचावशिष्टांगेहाच्च नादद्याल्लेपसम्भवाम्। अन्य : प्राग्यवपन्नाश्च हलोत्खातानकर्ह्रमाम्॥

वल्लरि :। स्त्री० मञ्जर्याम्॥ वल्लते। वल्ल०। क्विप्। ऋच्छति। ऋगतौ अचइ :। वल्लचासावरिश्च॥ मेथिकायाम्॥ चित्रमूले॥

वल्लव :। पुं गोदोग्धरि। गोपे॥ भीमसेने॥ त्रि० सूपकारे॥ वल्लनम्। वल्लसंवरणसञ्चरणेच। वल्लि : सौभोवाप्रीतौ। भावेघञ्। वल्लोऽस्यास्ति। अन्येभ्योपीतिव :॥ वल्लंवाति० वायतिवा। वागति गन्धनयो : ओवैशोषणेवा। आ तोनुपर्तिक :॥

वल्लवी। स्त्री० आभीर्याम्। गोपिकायाम्। महाशूद्राम्॥

वल्लि :। स्त्री० वल्ल्याम्। लतायाम्॥ पृथिव्याम्॥ वल्लते। वल्ल०। सर्वधातुभ्यइन्॥

वल्लिकण्टकारिका। स्त्री० अग्निदमनीक्षुपे॥

वल्लिदूर्वा। स्त्री० मालादूर्वायाम्॥

वल्लिशाकटपोतिका। स्त्री० मूलपोत्याम्॥

वल्लिशूरण :। पुं० अत्यम्लपर्ण्याम्॥

वल्ली। स्त्री० व्रतत्याम्। गुडूच्यादिलतायाम्॥ याभूमेर्नसमारोहन्तिताबल्ल्य :॥ अजमोदायाम्॥ कुसुमान्तरे। वेलाइ० भा० प०॥ कृदिकारादितिङीष्॥

वल्लीगड :। पुं० मत्स्यविशेषे॥ भेला० बालिकडा० इ० च० गौ० दे० भाषाप्रसिद्धे॥

वल्लीजम्। न० मरिचे। वेल्लजे॥

वल्लीवदरी। स्त्री० भूवदर्याम्॥

वल्लीमुद्ग :। पुं० मकुष्ठके॥

वल्लीव्रह :। पुं० सालवृक्षे॥

वल्लुरम्। न० शाद्वले॥ क्षेत्रे॥ गहने॥ औषधे॥ कुञ्जे॥ मञ्च

र्याम् । औषधे । निर्जलस्थाने ॥ विश्वधरणिशब्दरत्नावलिषु ० वञ्जर-मितिपाठः ॥

वञ्जूरम् । त्रि० आतपादिनाशुष्कमांसे ॥ वनत्तेत्रे ॥ वाहने ॥ ऊषरभूमौ ॥ कोलमांसे ॥ वल्लते०वल्ल्यतेवा । वल्ल० । खर्जादित्वादूरः ॥

वल्ल्या । स्त्री० धात्रीवृक्षे ॥

वल्वजाः । पु० भूमि०उलपे । बघ-शो०द्वि०प्र०तृण ॥ वलते । वल० । क्विप् । वजति । वजगतौ । अ-च् । वल्चासौवजश्च । एकोवल्वज इतिभाष्यादेकत्वेपि ॥ यद्वा । ब-लतिभुवंवेष्टयतिविशादित्वात्प्रत्य-ये० बल्वः पर्वतः तत्रजाताः बल्वजाः । इत्यन्ये । स्वभावा द्बहुत्वेबल्वजाः ॥ अतएव०सुमनोऽ प्सरोबल्वजादेर्वैतिपाक्षिकबहुत्वोऽ र्थंक्रमदीश्वरसूत्रम् ॥

वल्वजा । स्त्री० तृणविशेषे । दृढपत्र्याम् । तृणोर्ध्वौ । मौञ्जीपत्रायाम् । सा वैवागे०द्वि०भा० ॥

वशः । पुं० एकादशकर्णान्तर्गतप्रथमकरणे ॥ तत्रजातस्यफलंयथा । ववाभिधानेजननंहियस्यशूरोतिधीरोमनुजः क्षतीस्यात् । पद्मालया तन्निलयेनिवासंकरोतिनित्यंसुविचक्षणः स्यात् ॥

वशंवदः । त्रि० आयत्तकरवाक्यस्यकारि । इष्टवादिनि ॥ वशंवशकरंमधुरंवदति । प्रियवशेवदः खच् । मुम् ॥

वशः । पुं० कान्तौ । स्पृहायाम् । इच्छायाम् ॥ वेश्यागृहे ॥ आयत्ततायाम् ॥ योयस्यवशमापन्नः सतस्यकिङ्करः किल ॥ प्रभुत्वे ॥ जन्मनि ॥ न० आयत्तत्वे ॥ इच्छायाम् ॥ प्रभुत्वे ॥ त्रि०आयत्ते ॥ वशनम् । वशकान्तौ । वशिरण्योरुपसङ्ख्यानमित्यप् ॥ वष्टि । अच्वा ॥

वशका । स्त्री० वश्यायांनार्याम् ॥

वशक्रिया । स्त्री० वशीकरणे । संवदने ॥ मणिमन्त्रौषधैरायत्तीकरणे ॥ वशस्यकरणम् । कृञः शच ॥

वशगः । त्रि० वशीभूते ॥

वशा । स्त्री० वन्ध्यायाम् ॥ सुतायाम् । दुहितरि ॥ योषायाम् । नार्याम् ॥ वन्ध्यगव्याम् ॥ करिण्याम् । हस्तिन्याम् ॥ वष्टि । वश० । पचाद्यच् । उश्यतेवा । वशिरण्योरुपसङ्ख्यानमित्यप् ॥

वशाव्यकः । पुं० शिशुमारे ॥

वशापायी । पुं० कुक्कुरे ॥

वशि । न० वशित्वे ॥

वशिकः । त्रि० रिक्ते । शून्ये ॥ उश्यते । वश० । सर्वधातुभ्यइन् । संज्ञायांकन् ॥

वशिका । स्त्री० अगुरौ ॥

वशिता । स्त्री० वशित्वे ॥ वशोऽस्या स्ति । इनि : । वशिनोभाव : । तल् ॥

वशित्वम् । न० शिवैश्वर्यविशेषे । अ ष्टभूतिर्व्यं कस्याम् । येनभूतंभौति कञ्चावश्यमेववशीभवति ॥

वशी । पुं० जितेन्द्रिये ॥ अव्यसनिनि ॥ स्ववशीकृतकार्यकरणसङ्घाते ॥ स्वतन्त्रे । परमेश्वरे ॥ यत: सर्वेष्व स्यजगद्वशेवर्त्तते०इतिवशी ॥

वशिनी । स्त्री० शमीवृक्षे ॥वन्दा- याम् ॥

वशिर : । पुं० किणिह्याम् । अपामा- र्गे ॥ हस्तिपिप्पल्याम् ॥ चव्ये ॥ वचायाम् ॥ न०अचीवे । सामुद्रल वणे ॥ वष्टि । वश० । वाहुलका त्किरच् । संज्ञापूर्वकत्वान्नसम्प्र- सारणम् ॥ यद्वा । वशनम् । व- श० । क्वन् । वशिंराति । रा० । आतोनुपेतिक : ॥

वशिष्ठ : । पुं० स्वनामप्रसिद्धेमुनौ । अथर्वनिधौ । अरुन्धतीपतौ ॥ त्रि० वशकर्त्तरि ॥ श्रेष्ठतमे ॥

वशीकरणम् । न० मणिमन्त्रौषधैराय त्तीकरणे । वशक्रियायाम् ॥

वशीकारसञ्ज्ञा । स्त्री० ज्ञानप्रसाद रूपायांतृष्णाविरोधिन्याम् चित्तवृ त्तौ । दृष्टानुश्रविकविषयवितृष्णा स्यवैराग्ये ॥ औत्सुक्यमात्रस्यापि निवृत्तिरुपस्थितेष्वपिदृष्टानुश्रवि- कविषयेषुयासंज्ञात्मयात्मपराधीना सावशीकारसंज्ञावैराग्यम् । उक्त ञ्चपतञ्जलिना । दृष्टानुश्रविकवि षयवितृष्णस्यवशीकारसंज्ञावैरा- ग्यमिति ॥

वशीकृत : । त्रि० जिते ॥

वशीभूत : । त्रि० वश्यतामप्राप्ते ॥ अवशोवशोभवति । च्वि : । अस्य च्वु ॥

वशीर : । पुं० गजपिप्पल्याम ॥

वश्यम् । नलवङ्गे ॥ आयत्तीकरणे ॥ वश्यंजनानांसर्वेषांविधेयत्वमुदाहृ तम् ॥ त्रि० प्रणये । प्रवर्त्तयितुं निवर्त्तयितुंवाशक्ये ॥ वशमधीन त्वंगत : । वशंगतइतियत् ॥

वश्यका । स्त्री० वशगायाम् ॥

वश्यकूट : । पुं० वैवाहिकविचारवि शेषे ॥ यथा । सिंहस्यसर्वेवशगा विनालिंविहायसिंहंवशिनोनरा णाम् । भक्ष्यास्तथैषांजलराशयस्ते वश्यास्तुलोकव्यवहारतोन्ये ॥ एवं वश्यसमायोगेदम्पत्यो : प्रीतिरुत्त मा । वश्याभावेपिदम्पत्योर्विवाह: कलहप्रद : ॥

वश्या । स्त्री० वशगायाम् ॥ टाप् ॥

वश्यात्मा । पुं० स्वाधीनान्त:करणे ॥ वैराग्यपरिपाकेण० वासनाक्ष येसति०वश्य : स्वाधीनोविषयपा

रतन्त्राशून्य : ग्रात्मीयमन्त्र : कर्त्र यंयस्य स : ॥

वषट् । ग्र० देवहविर्दानमन्त्रे ॥ उद्यतेऽनेन । वह० बाहुलकात्० डषट् ॥

वषट्कार : । पुं० देवयज्ञे । ग्राहुतौ । होमे ॥ वषट्क्रियाक्रियतेयस्मिन्नधिकरणे घञ् ॥ विष्णौ ॥

वषट्कृतम् । त्रि० हुते । ग्रग्नौप्रक्षिप्ते ॥ ग्रग्नौहुतन्तुयद्द्रव्यं तत्स्यात्त्रिषुवषट्कृतम् ॥ वषडितिमन्त्रोपलक्षणम् । वषट्मन्त्रेणकृतम् ०ग्रग्नौप्रक्षिप्तम् ॥

वष्कय : । पुं० तरुणवत्से ॥ एकहायनेवत्से । वष्कते । वष्कगतौ । बाहुलकादयन् ॥

वष्कयणी । स्त्री० वष्कयिण्याम् । चिरप्रसूतायांगवि ॥ वष्कयस्त्वेकहायनोवत्स इतिशाकटायन : । तेननीयते । णीञ् ० । क्विप् । सर्वतोऽक्तिन्नर्थादितिङीष् । गौरादित्वाद्वा । पूर्वपदादितिणत्वम् ॥

वष्कयिणी । स्त्री० वष्कयण्याम् ॥ वष्कयस्तरुणोवत्स : । सोऽस्त्यस्या : । ग्रतइनि : । ग्रट्कुप्वाङितिणत्वम् ॥

वसति : । स्त्री० वासे । ग्रवस्थाने ॥ यामिन्याम् । निशायाम् ॥ निकेतने । सदने ॥ वसन्त्यस्याम् ०वसनंवा । वसनिवासे । वहिवस्यर्तिभ्यश्चिदित्यति : ॥

वसती । स्त्री० वसतौ ॥ कृदिकारादितिङीष् ॥

वसनम् । न० छादने । वस्त्रे ॥ ग्रस्यधारणेनचवादयोयथा । धातानुराधवसुपुष्पविशाखहस्ताचित्रोत्तराश्विपवनादितिरेवतीषु । जन्मर्क्षजीवबुधशुक्रदिनोत्सवादौधार्यं-नवंवसनमोश्वरविप्रतुष्टाविति समयप्रदीप : ॥ वस्यतेऽनेनवा । वस ग्राच्छादने ॥ ल्युट् ॥ निवासे ॥ स्त्रीकटीभूषणे ॥

वसना । स्त्री० स्त्रीकटीभूषणे । सारसने ॥

वसन्त : । पुं० ऋतुराजे । पुष्पसमये । कुसुमाकरे । सुरभौ । पिकानन्दे । कामसखे । मधुमाधवयो: । चैत्रवैशाखयो: ॥ वसन्त्यत्रपठनोत्सवा : । वस० । तॄभूवहिवसिभासीतिभच् । ग्रतिसारे ॥ रागविशेषे ॥ तालविशेषे ॥ वसन्ततालेकर्त्तव्योनगणोमगणस्तथा ॥ श्रेणीनाकविशेषे ॥ क्रतुविशेषे ॥

वसन्तक : । पुं० श्द्रःनाकप्रभेदे ॥ वसन्ते ॥

वसन्तकुसुम : । पुं० शेलुवृक्षे ॥

वसन्तकुसुमाकर : । पुं० ग्रौषधवि

शेषे ॥ यथा । प्रवालरसमौक्तिका
म्बरमिदं चतुर्भागभाक् पृथक् पृथग
यस्मृतेरजतहेमतोद्ध शक्ते । अयो
भुजगरङ्गकं चिलवकं विमर्दाखिलं-
शुभेहनि विभावयेद्भिषगिदं धिया
सप्तश : ॥ द्रवैर्वृषनिशेचजै : क
मलमालतीपुष्पजै : पय : कदलि
कन्दजैर्मलयजैर्घनाभ्युद्भवै : । व
सन्तकुसुमाकरो रसपतिर्हि वल्लाश्रि
त : समस्तगदहृद्भवेत् किलनिजानु
पानैरयमितिहृदयोगतरङ्गिणी ॥
वसन्तजा । स्त्री० वासन्तीलतायाम् ॥
वसन्ततिलकम् । न० शर्करीछन्द: १४
प्रभेदे । सिंहोद्धतावृत्ते ॥ यथा ।
उक्तं वसन्ततिलकं तभजाजगौग : ।
यथा फुल्लं वसन्ततिलकं तिलकं वना
ल्यालीलापरं पिककुलं कलमत्र रौति ।
वात्ययं पुष्पसुरभिर्मलयाद्रिवातो-
यातो हरि : समथुरां विधिना हता
स्म : ॥ पुष्पविशेषे ॥ औषधविशे
षे ॥ यथा । अचारलूटङ्गनसैन्धवि
श्वगन्धकचूर्णकरञ्जसहितं मथितेन पी
तम् । नैवं प्ररोहति पुनर्गुदज : स्व
हेतोस्तस्मै वसन्ततिलकैरपिकल्पक
ल्पम् ॥
वसन्ततिलका । स्त्री० वसन्ततिलके ॥
यथा । उक्ता वसन्ततिलका तभजा
जगौग : ॥
वसन्तदूत : । पुं० चूते ॥ पिके पञ्च
मरागे ॥ आम्रे ॥
वसन्तदूती । स्त्री० पाटलीवृक्षे ॥ अ
तिमुक्ते । माधवीलतायाम् ॥ ग
णिकार्याम् । कोकिलायाम् ।
पिक्याम् ॥
वसन्तद्रु : । वसन्तद्रुम: । पुं० आम्रवृक्षे ॥
वसन्तमालिका । स्त्री० विषमवृत्तप्र
भेदे ॥ यथा । विषमेससजागुरू स
मेचेत् सभरायस्य वसन्तमालिका सा ॥
वसन्तसख : । पुं० कामदेवे ॥
वसन्तोत्सव : । पुं० होलाकायाम् ॥
वसा । स्त्री० मांसप्रभवधातुविशेषे
कायस्नेहे । मेदसि । वपायाम् ॥
वसति० इस्ले वा । वसनिवासे०
वसआच्छादने वा । पचाद्यच्० भि
दाद्यङ् वा ॥ मांसरोहिण्याम् ॥
वसाढ्य : । पुं० शिशुमारे ॥
वसादनी । स्त्री० सिंहमुख्याम् ॥ वा
सके ॥
वसान: । त्रि० आच्छादयति ॥ वस०
। शानच् ॥
वसापायी । पुं० कुक्कुरे ॥
वसि । : पुं० वसने ॥ वस्ते० वस्यते वा
वसआच्छादने । खनिकष्यज्यसी
त्यादिनाइ : ॥
वसिरम् । न० अचीवे । सामुद्रलव
णे । वशिरे वस्ते वस० । वा
हुलकात् किरच् ॥ यथा । वसनम् ।

। वसुस्तम्भे । इन् । वसिंराति । राद्दाने । आतोनुपेतिक : । करि पिप्पल्याम् ।
वसिष्ठः । पुं॰ वसिष्ठमुनौ । अरुन्धती जानौ । अरुन्धतीनाथे ॥
वसु : । पुं॰ देवभेदे । गणदेवता विशेषे ॥ यथा । धरोध्रुवश्चसोमश्च विष्णुश्चैवानिलोऽनल : । प्रत्यूष श्चप्रभासश्चवसवोष्टौक्रमात्स्मृता : ॥ धनाधिपे ॥ आयाम् । दीप्तौ ॥ अग्नौ ॥ योक्त्रे ॥ वकवृक्षे । शिववमल्ल्याम् । पाशुपते ॥ राजनि ॥ साधौ ॥ पीतमुद्गे ॥ शिवे ॥ सूर्ये ॥ अष्टसङ्ख्यायाम् ॥ धनिष्ठानक्षत्रे ॥ पुष्करिण्याम् ॥ क्लीबे ॥ वृद्ध्यौषधे ॥ ख ञ्जे ॥ विष्णौ ॥ वसन्तिसर्वभूतान्यत्र॰तेष्वयमपिवसतीतिवावसुः ॥ न॰रत्ने ॥ धने । रायि ॥ हाटके ॥ जले ॥ स्त्री॰दीप्तौ । वृद्ध्यौषधे ॥ त्रि॰मधुरे ॥ शुष्के ॥ वसतिसर्व-त्र॰उच्यतेवागुणै : सर्वत्रोच्यतेऽनेनवा॰वस्ते॰वस्त्रतेवा । वसनिवासे॰वसआच्छादनेवा । शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिवन्धिमनिभ्यश्च : ॥
वसुक : । पुं॰ शिववल्ल्याम् । वकपुष्पे । सुरेष्टे ॥ अर्कपर्णे । रक्तार्के । मन्दारे ॥ न॰रोमके । साम्भरिलवणे ॥ पांशवे ॥ वासूके ॥ स्वार्थेकम् ॥ वसुकायतिवा । कै॰ । आतोनुपेतिक : । वस्तेव । यावादित्वात्कन्वा ॥ वसवस्त्यस्मिन् । ब्रीह्यादित्वाट्ठक् । वसुस्तिति-कोवा ॥
वसुकीट : । पुं॰ याचके ॥
वसुचरणम् । न॰ भगणे॰ऽ ॥ ॰ ॥
वसुच्छिद्रा । स्त्री॰ महामेदावृक्षे ॥
वसुद : । पुं॰ धनाधिपे । कुबेरे ॥ हरौ ॥ त्रि॰धनदातरि ॥ वसुदयते । देङ्पालने । वसुददातिवा । डुदाञ्॰ । आतश्चतिक : ॥
वसुदान : । त्रि॰ सर्वफलदे ।
वसुदेव : । पुं॰ श्रीकृष्णजनके । आनकदुन्दुभौ । शूरे । वसुषुधनेषुदीव्यतिमोदते । दिवु॰ । पचाद्यच् ॥
वसुदेवता । स्त्री॰ धनिष्ठानक्षत्रे ॥
वसुदेवभू : । पुं॰ श्रीकृष्णे ॥
वसुधा । स्त्री॰ क्षितौ ॥ वसुदधाति । डुधाञ्॰ । आतश्चतिक : ॥
वसुधाखर्जूरिका । स्त्री॰ भूखर्जूरिकायां ॥
वसुधाधिप : । पुं॰ भूपतौ ॥ अग-णे॰ । ऽ । ॰ ॥
वसुधान : । पुं॰ कोशे ॥ वसुधीयतेस्मिन् ।
वसुधारा । स्त्री॰ वृद्धिश्राद्धपूर्वकर्त्तव्यवेदिराजवसूद्दिश्यकाकुड्यालग्नघृत

धारायाम् ॥ यथा । कुडालमनांव सीर्धारांसप्तधारान् घृतेनतु । कारयेत्पञ्चधारान् वानातिनीचांनचोच्छ्रताम् ॥ आयुष्मान्नितिशान्त्यर्थंजप्तात्तव समाहितः । षड्भ्यः पितृभ्यस्तदनुश्राद्धदानमुपक्रमेत् ॥ इतिकात्यायनः । अपिच । देहल्यांनाभिमात्रायांप्रादेशपरिमाणतः । सप्तवापञ्चवाबिन्दून् दद्यात् सिन्दूरचन्दनैः ॥ प्रत्येकंबिन्दुंमतिमान् कामंमायांरमांस्मरन् । घृतधारामविच्छिन्नांदत्त्वातत्रवसुंयजेत् ॥ कुवेरपुर्याम् ॥ धनसम्पत्तौ ॥ जिनशक्तिविशेषे । तारायाम् ॥ वसोर्द्देदिराजस्यधारा ॥ भौमेतीर्थविशेषे ॥

वसुनन्दकः । पुं० खेटके । धनवृद्धिजीवके ॥

वसुन्धरा । स्त्री० गोचायाम् । उर्व्याम् ॥ वसूनिधारयति । संज्ञायांभृतृवृजिधारीतिखच् । खचिह्रस्वः । अरुर्द्विषदितिमुम् ॥

वसुप्राणः । पुं० वह्नौ ॥

वसुमती । स्त्री० भुवि ॥ यथासप्तद्वीपावसुमतीति । वसुधनमस्त्यस्याम् ॥ मतुप् । ङीप् ॥

वसुमनाः । पुं० विष्णौ ॥ वसुशब्देनप्राशस्त्यंलक्ष्यते । वसुप्रशस्तंमनोयस्य । रागद्वेषादिभिः क्लेशैर्म



दादिभिरुपक्लेशैश्चयतोनकलुषितंचित्तंततस्तन्मनःप्रशस्तम् ॥

वसुरोचिः । न० यज्ञे ॥ वसवः रोचन्तेयस्मिन् । रुचदीप्तौ । वसौरुचेः संज्ञायामिति० इसिन् ॥

वसुलः । पुं० देवतायाम् ॥

वसुश्रेष्ठम् । न० रूप्ये ॥

वसुसेनः । पुं० कर्णे । चम्पाधिपे ॥

वसुस्थली । स्त्री० कुवेरपुर्याम् ॥

वसुहट्टः । पुं० वकद्रुमे ॥

वसूकः । पुं० वकवृक्षे ॥ न० साम्भरिलवणे ॥

वसूत्तमः । पुं० भीष्मपितामहे ॥

वस्क्रयः । पुं० वष्क्रये ॥

वस्क्रयनी । ) स्त्री० वष्क्रयिण्याम् ।<br>वस्क्रयिनी । )

चिरप्रसूतायांधेनौ ॥ वस्क्रयिन्यास्त्रिदोषघ्नंतर्पणंबलकृत्पयः ॥

वस्कराटिका । स्त्री० वृश्चिकायाम् । कालिकारूपे ॥

वस्तः । पुं० छागे ॥ वस्तयते । वस्तअर्द्दनेचुरादिः । पचाद्यच् ॥

वस्तकम् । न० कृत्रिमलवणे ॥ वस्तइव । अजगन्धित्वात् । इवेप्रतिकृतावितिकन् ॥

वस्तकर्णः । पुं० शालवृक्षे ॥

वस्तगन्धा । स्त्री० अजगन्धायाम् ॥

वस्तस्येवगन्धोऽस्याः । वस्तशब्दः

स्वगर्भेलाघविक : ॥
वस्तमोदा । स्त्री० अजमोदायाम् ॥
वस्तं मोदयति । मुद० । ण्यन्त : कर्मण्यण् ॥
वस्तान्त्री । स्त्री० छगलान्त्रीक्षुपे । वृ षगन्धायाम् । मेषान्त्र्याम् ॥ ब स्तस्येवान्त्रमस्या : । गौरादि : ॥
वस्ति : । पुं० स्त्री० नाभेरधोभागे । नाभिलिंगयोरन्तरे ॥ मूत्राशयो धनुर्वक्त्रो वस्तिरित्यभिधीयते ॥ ना भेरधस्तादलाबूसदृशमधोनालमने कच्छिद्रं मूत्रभाजनं वस्तिरुच्यते ॥ अस्यालक्षणं यथा । विस्तीर्णमांस लास्निग्धावस्ति : पुंसांप्रशस्यते । निर्मांसाकर्कशारूक्षादु : खदारिद्रा दासूता ॥ गोमायुसदृशायस्यखरो ष्ट्रमहिषस्यच । सभवेद्दु : खितो नित्यं धनहीनस्समानव : ॥ वसति मूत्रमत्र । यद्वा । वस्ते० वस्ते वा । वस० निवासे० आच्छादने वा । वस्यतिवा । वसुस्तम्भे । व सेस्ति : ॥ चिकित्साविशेषे ॥ य था । वस्तिर्द्विधानुवासाख्योनिरूह स्ततः पर : । य : स्नेहैर्दीयतेस स्यादनुवासननामक : ॥ कषाय क्षीरतैलैर्योनिरूह : सनिगद्यते । वस्तिभिर्दीयतेयस्मात्तस्माद्वस्तिरि तिस्मृत : ॥ वस्तिभि : मृगादीनां मूत्राशयै : ॥ भूम्नि० वस्तय : --

वस्त्रान्तावयवेषु ॥ दशासु ॥
वस्तिकर्माढ्य : । पुं० अरिष्टवृक्षे । फेनिले ॥
वस्तिमलम् । न० मूत्रे ॥
वस्तु । न० द्रव्ये ॥ पदार्थे ॥ जग तिवस्तुद्वयंभावोऽभावश्चेतिन्याय शास्त्रम् ॥ वस्तु० सच्चिदानन्दा द्वयंब्रह्मेतिवेदान्तशास्त्रम् ॥ वस ति । वस० । वसेस्तुन् ॥ लक्षणप्र माणाभ्यांहिवस्तुसिद्धिर्भवतीतिव्या ख्यातार : ॥
वस्तुकम् । न० वास्तुके ॥
वस्तुकी । स्त्री० श्वेतचिल्लीशाके ॥
वस्तुपरिच्छेद : । पुं० सजातीयभेदो विजातीयभेद : स्वगतभेदश्चेतिचि विधभेदे ॥ जीवेश्वरभेद :० जीवज गद्भेद :० जीवपरस्परभेद :० ईश्वरजग द्भेद :० जगत्परस्परभेदइतिपञ्चवि धभेदे ॥ वस्तुन : परिच्छेद : परि च्छिन्नत्वम् ॥
वस्तुविवेक : । पुं० अनित्यान्नित्यस्य पृथक्करणे ॥ नित्यमात्मस्वरूपं हिदृश्यंतद्विपरीतगम् । एवंयोनि श्चय : सम्यक्विवेकोवस्तुन : सवै ॥ वस्तुनोविवेक : ॥
वस्ता । पुं० वास्तव्ये ॥ वसति । व स० । तृच् ॥
वस्त्यम् । न० निशान्ते । गृहे ॥ वस नम् । वस० वसेस्ति : ॥ तत्रसा

धुरितियत् । यद्वा । अवस्याय ति । ष्ये स्त्ये शब्दसङ्घातयोः । आतश्चोपसर्ग इतिकः । षष्टीत्य स्त्रोपः ॥

वस्त्रम् । न० आच्छादने । वाससि । चेले । वसने । अंशुके । कपडा० इ० भा० प्र० ॥ वस्यतेऽनेन । व सआच्छादने । सर्वधातुभ्यः ष्ट्रन् ॥

वस्त्रकुट्टिमम् । न० वस्त्रजालये । तंबूटी० इ० भा० प्र० ॥ वस्त्रस्यकुट्टिममल्पगृहम् ॥ छत्रे ॥

वस्त्रगृहम् । न० पटवेश्मनि । पटवापे । पटमये । दूष्ये । स्थले । तम्बू० इ० भा० प्र० ॥ वस्त्रस्य गृहम् ॥

वस्त्रग्रन्थिः । पुं० उच्चये । नीव्याम् । परिधान वस्त्रस्यग्रन्थने ॥

वस्त्रपञ्जल: । पुं० कोलकन्दे ॥

वस्त्रपुत्रिका । स्त्री० वस्त्रनिर्मितपुत्तलिकायाम् । गुडिया० इ० भा०॥

वस्त्रभूषण: । पुं० शाकरण्डवृक्षे ॥

वस्त्रभूषणा । स्त्री० मञ्जिष्ठायाम् ॥

वस्त्रयोनि: । पुं० स्त्री० वसनोत्पत्तिकारणे त्वगादौ । त्वक्फलकृमिरोमसु ॥ वस्त्रस्ययोनिः कारणम् ॥

वस्त्ररञ्जकम् । न० कुसुम्भे । वह्निशिखे ॥ वस्त्राणांरञ्जकम् ॥ त्रि०व स्त्राणांकुसुम्भादिनारञ्जनकर्त्तरि ॥

वस्त्ररञ्जन: । पुं० कुसुम्भे ॥

वस्त्ररञ्जनी । स्त्री० मञ्जिष्ठायाम् ॥

वस्त्वाभास: । पुं० मायामयेरज्जुसर्पादौ० कृष्णोगौरोदीर्घोह्रस्वइति व्यवहारे ॥ वस्तुधर्मि द्रव्यम्० त द्वदवभासते० इतितथा ॥

वस्न: । पुं० मूल्ये । अवक्रये ॥ न० वेतने ॥ वस्त्रे ॥ धने ॥ मूल्ये ॥ मृतौ ॥ द्रव्ये ॥ त्वचि ॥ वसत्यत्रवा । वस० । धापृवस्यज्य तिभ्योनः ॥

वस्ननम् । म० कटिभूषणे ॥

वस्नसा । स्त्री० वायुवाहिन्यांनाड्याम् । स्नायौ ॥ वस्ते शरीरम् । व सआच्छादने । धापृवस्यज्यतिभ्योनः । वस्नंचर्म० स्यति । षोअन्तकर्मणि । आतोनुपसर्ग इतिकः । टाप् ॥

वस्निक: । त्रि० वस्नजीवातौ ॥ वस्नेनमूल्येनजीवति । वस्नक्रय विक्रयाट्ठन् । यद्वा । वस्नंमूल्यं हरति० वहति० आवहतिवा । वस्नद्रव्याभ्यांठन्कनाविस्यार्षीय ष्ठन् ॥

वस्वोकसारा । स्त्री० अलकायाम् । कुबेरपुर्याम् ॥ कुबेरनलिन्याम् ॥ मानसोत्तरशिखरवर्त्तिन्यामिन्द्रस्य नगर्याम् । इन्द्रपुर्याम् ॥ इन्द्रनलिन्याम् ॥

वह्वोकसारिका । स्त्री॰ वह्वोकसारा-
याम् ॥

वहंलिह : । पुं॰ गवि ॥ वह : स्कन्ध
संलेढि । लिह॰ । वहाभ्रे लिहइ
तिखश् । मुम् । खशोऽङित्त्वान्न-
गुण : ॥

वह : । पुं॰ वृषभस्कन्धे ॥ वाहे । ह
ये ॥ गन्धवहे । वायौ ॥ पथि ॥
मदे ॥ वहतियुगमनेन । वहप्राप-
णे । गोचरसञ्चरेतिसाधु : ॥

वहत : । पुं॰ वृषे ॥ पान्थे ।

वहति : । पुं॰ गवि ॥ सचिवे ॥ वा
यौ ॥ वहति । वह॰ । वहिवस्य-
र्त्तिभ्यश्चिदित्त्यति : ॥

वहतु : । पुं॰ पथिके ॥ वृषभे । वह
ति । वह॰ । एधिवह्योश्चतु : ॥

वहनम् । न॰ प्रापणे ॥ होडे । तरा
स्त्री । हुडि॰ड॰गो॰भा॰प्र॰नौका
विशेषे ॥ वह॰ । ल्युट् ॥

वहन्त : । पुं॰ वायौ ॥ त्रि॰ बालके ।
वहति । वह॰ । तृभूवहिवसी-
त्यादिनाझच्षित् ॥

वहलम् । न॰ वार्वटे पोते ॥ त्रि॰व
हुले ॥ दृढे ॥

वहलगन्धम् । न॰ शम्बरचन्दने ॥

वहलचक्षु : । पुं॰ मेषशृङ्गाम् ॥

वहलत्वच: । पुं॰ श्वेतलोध्रे ॥

वहला । स्त्री॰ शतपुष्पायाम् ॥ स्थू-
लैलायाम् ॥

वहा । स्त्री॰ नद्याम् ॥ वहति । व-
ह॰ । अच् ॥

वहि : कुटीचर : । पुं॰ तिर्यग्यामे ।
कुलीरे ॥

वहि: प्रज्ञ: । पुं॰ विश्वस्मिन् । व्यष्ट्य
पहितचैतन्ये ॥ वहि: स्वात्मव्यति
रिक्तविषयेप्रज्ञायस्यस : ॥

वहित : । त्रि॰ अवहिते ॥ अवधीय-
तेस्म । डुधाञ् । क्त : । दधाते-
र्हि : । भागुरिमतेऽल्लोप : ॥

वहित्रम् । न॰ पोते । वार्वटे ॥ व
हति । वह॰ । अशित्रादिभ्यइत्रो-
त्राविति॰इत्रप्रत्यय : ॥

वहित्रकम् । न॰ जलयाने । यान-
पात्रे ॥

वहिर्द्वारम् । न॰ द्वारवाह्यभागे । तो
रणे ॥ वहिर्द्वारात् । वहिस्तद्द्वार-
स्येतिवा ॥

वहिर्द्वारप्रकोष्ठकम् । न॰ प्रघाणे ॥

वहिर्भूत : । त्रि॰ वहिर्गते ॥

वहिर्मुख : । त्रि॰ विमुखे ॥ यथा ।
शैवोवावैष्णवोवापियोवास्यादन्य-
पूजक : । सर्वंपूजाफलंहन्तिशिव-
रात्रिवहिर्मुख : ॥

वहिश्चर : । पुं॰ कर्कटे ॥

वहिष्ठ : । त्रि॰ वहिर्भवे । वहि :
स्थिते ॥

वहिष्पवमान : । पुं॰ याज्ञिकस्तो-
त्रे । सामगानांसूक्तत्रयगानसाध्ये

स्तोत्रे ॥

वहि : । अ० बाह्ये ॥ वहति । वह० । इस् ॥

वहुल : । पुं० अग्नौ ॥ कृष्णपक्षे ॥ न० आकाशे ॥ सितमरिचे । त्रि०-प्राज्ये । प्रचुरे ॥ कृष्णवर्णे ॥ वहून् मर्थान् लाति । ला० । आतइति-क : ॥ वहति । वह० । बाहुलका दुलच् ॥ वहुलायांजातौ ॥ सन्धिवे लायृतुनक्षत्रेभ्योऽण् । तस्यश्रविष्ठा षाढेतिलुक् ॥

वहुला । स्त्री० नीलिकायाम् ॥ एलाया म् ॥ गवि ॥ मानसाचलस्थदेवी-विशेषे ॥

वहुला : । स्त्री० भू‌म्नि० कृत्तिकासु ॥

वहेडुक : । पुं० विभीतकवृक्षे । व-हेडा० इ० भा० प्र० ॥

वह्नि : । पुं० वैश्वानरे । चीतिद्रुमे । धनञ्जये । अग्नौ ॥ स्वाहादेवीवह्नि पत्नी ॥ चित्रकाख्यौषधौ ॥ भल्लात के ॥ निम्बूके ॥ वहतिहव्यम् ० देवे भ्योहवि : प्रापयतिवा । वहप्राप णे । वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो निरितिनि : ॥

वह्निकरी । स्त्री० धातपुष्प्याम् । धा तक्याम् ॥

वह्निकाष्ठम् । न० दाहागुरुणि । दा हकाष्ठे ॥

वह्निगन्ध : । पुं० यक्षधूपे ॥

वह्निगर्भ : । पुं० वंशे ॥

वह्निगर्भा । स्त्री० शमीद्रुमे ॥

वह्निचक्रा । स्त्री० कलिकारीवृक्षे ॥

वह्निज्वाला । स्त्री० धातकीवृक्षे ॥ वह्नेरिवज्वालाऽस्या : । वह्निर्ज्वालि वबा । रक्तपुष्पत्वात् ॥

वह्निदमनी । स्त्री० अग्निदमनीक्षुपे

वह्निदीपक : । पुं० कुसुम्भे ॥

वह्निदीपिका । स्त्री० अजमोदायाम् ।

वह्निनामा । पुं० चित्रके ॥ भल्लात के ॥

वह्निनी । स्त्री० जटामांस्याम् ॥

वह्निपुष्पी । स्त्री० धातक्यां ॥

वह्निभोग्यम् । न० घृते ॥

वह्निमन्थ : । पुं० गणिकारिकावृ क्षे ॥

वह्निमन्थक : । पुं० अग्निमन्थे ॥

वह्निमारकम् । न० जले ॥

वह्निमित्र : । पुं० वायौ ॥

वह्निरेता : । पुं० शिवे । कृशानुरेत सि ॥ वह्नौरेतोऽस्य ॥

वह्निलोहकम् । न० कांस्ये ॥

वह्निवक्त्रा । स्त्री० कलिहार्याम् । लाङ्गल्याम् ॥

वह्निवधू : । स्त्री० अग्नाय्याम् । स्वाहायाम् ॥

वह्निवर्णम् । न० रक्तोत्पले ॥

वह्निवल्लभ : । पुं० सर्जरसे । धून के ॥ अनिले ॥ वह्नेर्वल्लभ : ॥

वह्निबीजम् । न॰ निम्बूके ॥ स्वर्णे ॥

वह्निशिखम् । न॰ कुसुम्भे ॥ वह्निवत्॰ शिखाऽस्य ॥

वह्निशिखरः । पुं॰ लोघमस्तके ॥

वह्निशिखा । स्त्री॰ अनन्तायाम् ॥ फलिन्याम् ॥ कलिकार्याम् ॥ धातक्याम् ।

वह्निसञ्ज्ञः । ) वह्निसञ्ज्ञकः । ) पुं॰ चित्रकाख्यौ षधौ ॥ वह्निः संज्ञायस्यसः ॥

वह्निसखः । पुं॰ वायौ ॥ जीरके ॥

वह्यम् । न॰ वाहने ॥ शकटे ॥ वहन्त्यनेन ॥ वह॰ । वह्यंकरणमितियत् ॥

वह्या । स्त्री॰ मुनिपत्न्याम् ॥

वह्लीकः । देशविशेषे ॥ वह्लते । वह्लप्राधान्ये । बाहुलकाद्दीकन् ॥

वा । विकल्पे ॥ उपमायाम् । उपमाने ॥ वितर्के ॥ पादपूरणे ॥ समुच्चये ॥ विस्रम्भे ॥ नानार्थे ॥ अतीते ॥ एवार्थे ॥ अवधारणे वाति । वागतिगन्धनयोः । क्विप् ॥

वांशः । त्रि॰ वंशसम्बन्धिनि ॥

वांशिकः । पुं॰ वंशीवादके । वैणिके ॥ वंशीवादनं शिल्पमस्य । ठक् ॥ भारभूतान्वंशान्हरति ॰ वहति॰ आवहतिवा । तद्धरति वहतीत्यादिनाठञ् ॥

वांशी । स्त्री॰ वंशरोचनायां ॥

वाःकिटिः । पुं॰ शिशुमारे ॥ कुम्भीरे ॥ वारिजलस्थकिटिःशूकरः॥

वाःसदनम् । न॰ जलाधारे ॥ जलान्तस्थगृहे । जलमन्दिर॰ इ॰ भा॰ प्र॰ ॥

वाकः । पुं॰ वाचि ॥ उच्यतेऽनयेति । वचपरिभाषणे । करणे घञ् ॥ न॰ वकसमूहे ॥ वकानांसमूहः तस्यसमूहइत्यण् ॥ त्रि॰ वकसम्बन्धिनि ॥ वकस्यावयवोविकारोवा । प्राणित्वादञ् ॥

वाकी । त्रि॰ वाग्विशिष्टे ॥ वाकोविद्यतेऽस्य । अतइनिः ॥

वाकुची । स्त्री॰ ओषधिविशेषे । सोमराज्याम् ॥ सुप्रभायाम् । काम्बोज्याम् । पूतिगन्धायाम् ॥ वाकुचीमधुरातिक्ताकटुपाकारसायनी । विष्टम्भहृद्धिमारुच्यासराश्लेष्मास्रपित्तनुत् ॥ रूक्षाहृद्याश्वासकुष्ठमेहज्वरकृमिप्रणुत् । तत्फलंपित्तलंकुष्ठकफानिलहरंकटु ॥ केश्यंत्वच्यंकृमीश्वासकासशोथामपाण्डुहृत् ॥ वातंसङ्कोचयति । कुचशब्दतारे । मूलविभुजादित्वात्कः पृषोदरादिः ।

वाकुलम् । न॰ वकुलफले ॥ वाकुलंमधुरंग्राहिदन्तस्थैर्यकरंपरम् ॥

वाक्ोवाक्यम् । न॰ तर्कशास्त्रे ॥ उक्तिप्रत्युक्तिरूपेवैदिकग्रन्थे ॥ यथा किंस्विदावपनंमहत्॰ भूमिरावपनंमहदिति ॥

वाक्रोर: । पुं॰ शृगालके ॥

वाक्छलम् । न॰ छलविभेदे । वाक्यव्याजे ॥ यथा । अविशेषाभिहितेर्थेवक्तुरभिप्रायादर्थान्तरकल्पना-वाक्छलम् ॥ यत्रशक्यार्थद्वयेसम्भवति॰ एकार्थनिर्णयेकविशेषाभावादनभिप्रेतशक्यार्थकल्पनेनदूषणाभिधानंतद्वाक्छलम् । लक्षणन्तु॰शक्यैकार्थशाब्दबोधतात्पर्यकशब्दस्यशक्त्यार्थान्तरतात्पर्यकत्वकल्पनयादूषणाभिधानम् । यथा । नेपालादागतोयंनवकम्बलवत्त्वादित्युक्ते॰ कुतोस्यनवसङ्ख्याका: कम्बलाइति ॥ एवंगौर्विषाणीत्युक्ते॰ कुतोगजस्यशृङ्गम् श्येतोधावतीतिश्वेतरूपवदभिप्रायेणोक्ते॰ श्वेतोनधावतीत्यभिधानमित्यादिकमूह्यम् ॥

वाक्पति: । पुं॰ बृहस्पतौ ॥ वाचांपति: ॥ त्रि॰ वागीशे । पटुवचने ॥

वाक्पारुष्यम् । न॰ अप्रियवाक्योच्चारणे । तच्च सप्तधाव्यसनान्तर्गतव्यसनविशेष: । यथा । मृगयाक्षा: स्त्रिय: पानंवाक्पारुष्यार्थदूषणे । दण्डपारुष्यमित्येतच्ज्ञेयंव्यसनसप्तकम् ॥ तल्लक्षणमाहनारद: । देशजातिकुलादीनामाक्रोशन्यङ्गसंयुतम् । यद्वच: प्रतिकूलार्थंवाक्पारुष्यंतदुच्यतइति ॥ देशादीनामाक्रोशन्यङ्गसंयुतम् । उच्चैर्भाषणमाक्रोश:॰ न्यङ्गमवद्यम्॰ तदुभययुक्तंयत्प्रतिकूलार्थमुद्वेगजननार्थं वाक्यंतद्वाक्पारुष्यंकथ्यते ॥

वाक्यम् । न॰ परस्पराकाङ्क्षितपदचये॰ तिङ्सुबन्तचये । तिङन्तानांचयेयथा । पचतिपश्येत्यादिवाक्यम् । सुबन्तानाञ्चयेयथा । प्रकृतिसिद्धमिदंहिमहात्मनामित्यादि ॥ कारकान्वितक्रियायाम् ॥ धात्वर्थ: क्रिया॰ कारकै: कर्त्रादिभिरन्विताम्बद्धार्थाकारकान्विता॰ अन्वितत्वञ्चक्रियाकारकाणामाकाङ्क्षायोग्यतासन्निधिवशाज्ज्ञेयम्॰तिङ्सुबन्तचयात्मकोपिसम्बद्धार्थतावोध्या॰ असम्बद्धार्थस्याप्रयोगात्॰ अतएवपरस्पराभिसम्बन्ध: पदसमूहोवाक्यमितिवृद्धा: । कारकान्वितोक्रियायथा॰घटमानयेत्यादि॥ वाक्यस्वरूपमाह । वाक्यंस्याद्योग्यताकाङ्क्षासत्तियुक्त: पदोच्चय: । वाक्योच्चयोमहावाक्यमित्थंवाक्यंद्विधामतम् ॥ उक्ताश्च । स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया ।

वाक्यानामेकवाक्यत्वंपुनः सम्भूय जायतइति ॥ अत्रवाक्यंयथा। शून्यंवासगृहमित्यादि । महावाक्यंयथा। रामायणमहाभारतरघुवंशादि। इति ॥ पुनश्चतद्द्विविधम्। लौकिकंवैदिकञ्चेति । वैदिकमीश्वरोक्तत्वात्सर्वमेवप्रमाणम् लौकिकन्त्वाप्तोक्तंप्रमाणम् । अन्यदप्रमाणम् ॥ समभिहारोवाक्यम्। समभिहारश्चसाध्यत्वादिवाचकद्वितीयाद्यभावेपिवस्तुतः शेषशेषिवाचकपदयोः सहोच्चारणम्। यथा। यस्यपर्णमयीजुहूर्भवतिनसपापंश्लोकंशृणोतीत्यत्र। पर्णताजुह्वोः समभिहारादेवपर्णतायाः जुह्वङ्गत्वम्। नचानर्थक्यंजुह्वाः सिद्धत्वादितिवाच्यम्। जुहूशब्देनतत्साध्यापूर्वलक्षणात् तथाचवाक्यार्थः। पर्णतयाऽवत्तह-विर्द्धारणद्वाराजुहूपूर्वंभावयेदिति। एवञ्चपर्णतयायदिजुहूः क्रियतेतदैवतत्साध्यमपूर्वंभवतिनान्यथेतिगम्यते। इतिनपर्णतायावैयर्थ्यम्। अवत्तहविर्द्धारणद्वारेतिचावश्यंवक्तव्यम्। अन्यथास्रुवादिष्वपिपर्णतापत्तेः। सेयंपर्णता। अनारभ्याधीतापिसर्वप्रकृतिष्वेवान्वेतिनविकृतिषु। तत्रचोदकेनापितत्प्राप्तिसम्भवात् पौनरुक्त्यापत्तेः। तदिदंवाक्यंप्रकरणादिभ्योवलवत्। अतएवैन्द्राग्नौइदंहविरित्यादेरेकवाक्यत्वाद्दर्शाङ्गत्वम्। नतुप्रकरणाद्दर्शपूर्णमासाङ्गत्वम् ॥ उच्यतेइतिवाक्यम्। वचेर्ण्यत्। अचोरितिकुत्वम्। शब्दसंज्ञात्वात्। वचोऽशब्दसंज्ञायामितिनिषेधेन ॥ शुभाशुभवाक्यानितु। नैवराज्येनमहतानचैवार्थस्यराशिभिः। प्राप्यतेज्ञानकथनंपरलोकसुभाषितम् ॥ स्वर्गापवर्गसिद्धार्थंभाषितंयत्सुशोभनम्। वाक्यंमुनिवरैः शान्तैस्तद्विज्ञेयंसुभाषितम् ॥ रागद्वेषानृतक्रोधकामतृष्णानुसारियत्। वाक्यंनिरयहेतुत्वात्तद्भाषितमुच्यते ॥ संस्कृतेनापिकिन्तेनमृदुनाललितेनवा। अविद्यारागवाक्येनसंसारक्लेशहेतुना ॥ यच्छ्रुत्वाजायतेपुण्यंरागादीनाञ्चसङ्क्षयः। निरुद्धमपितद्वाक्यंविज्ञेयमतिशोभनम् ॥ इतिवह्निपुराणम् ॥

वाक्यलक्षणवित्। पुं० मीमांसाशास्त्रज्ञे ॥

वाक्याध्याहारः। पुं० आकाङ्क्षितैकदेशपूरणे ॥ वाक्यस्यअध्याहारः ॥

वाक्याभिधायी। त्रि० पृष्ठमांसादे ॥ वाक्यंभिधायीपुरुषः पृष्ठमांसादउच्यतइतित्रिकाण्डशेषः ॥

वागधिपः। पुं० बृहस्पतौ ॥ वाचा

मधिप : ॥
वागर : । पुं॰ गतातङ्के । परित्यक्तभये ॥ मुमुक्षौ ॥ वातवेष्टके ॥ विशारदे । पण्डिते ॥ विघाणे ॥ निर्णये ॥ वारके ॥ शाणे ॥ वाडवे ॥ हके ॥
वागारु : । त्रि॰ आशाहन्तरि ॥ यथा । आर्जविलवतीदृत्तुयोहन्तिपिशुनोजन : । सजीवासीपिवागारुद्रुर्गो॰दानुस्तुदातरि ॥ इतिशब्दमाला
वागाशनि : । पुं॰ बुद्धे ॥
वागाशी : । पुं॰ शुभवाचि ॥ वाचिआशीर्यस्य : ॥
वागीश : । पुं॰ जीवे । वृहस्पतौ ॥ त्रि॰ वाक्पतौ ॥
वागीशा । स्त्री॰ सरस्वत्याम् ॥ वाचामीशा ॥
वागीश्वर : । पुं॰ ब्रह्मणि ॥ वृहस्पतौ ॥ स्वर्गेदादिरूपाणांवाचामीश्वर : । मञ्जुघोषे ॥ त्रि॰वाचामीश्वरे ॥
वागीश्वरी । स्त्री॰ सरस्वत्याम् ॥
वागुजी । स्त्री॰ सोमराज्याम् ॥ वाचंगुञ्जति । गुजिअव्यक्तशब्दे । मूलविभुजादित्वात्क : । पृषोदरादि : ॥
वागुण : । पुं॰ कर्मरङ्गे ॥
वागुरा । स्त्री॰ मृगबन्धनार्थजाले । मृगबन्धन्याम् ॥ खावल॰खावली॰ बू॰जाल॰बू॰च॰भवा ॥ अवागुरते । गुरीहिंसायाम । इगुपधेतिक : । वष्टिभागुरीत्यवाकारलोप : ॥
वागुरिक : । पु॰ व्याधविशेषे । जालिके ॥ वागुरयाचरति । चरतीतिठक् ॥
वाग्गुद : । पुं॰ पक्षिविशेषे । वागुड॰ वाड॰इ॰भा॰प्र॰ ॥
वाग्गुलि : । पुं॰ ताम्बूलिनि । राज्ञांताम्बूलदातरि ॥ जातिविशेषे ॥
वाग्गुलिक : । पुं॰ ताम्बूलदे ॥
वाग्जालम् । न॰ शास्त्रमात्रे ॥ यथा । परिनिर्मथ्यवाग्जालंनिर्णीतमिदमेवहि । नोपकारात्परोधर्मोनापकारादघंपरम् ॥
वाग्दरिद्र : । त्रि॰ वाग्ये । मितभाषिणि ॥ वाचादरिद्र : ॥
वाग्दलम् । न॰ दन्तवाससि । ओष्ठाधरयो : ॥
वाग्दुष्ट : । पुं॰ व्रात्ये ॥ त्रि॰ वाचादूषिते । परुषभाषिणि ॥ वाचादुष्ट : ॥
वाग्देवता । ) स्त्री॰ सरस्वत्याम् ॥
वाग्दवी । )
वाग्बन्ध : । पुं॰ पणे । समये ॥ *
वाग्मी । पुं॰ सुराचार्ये ॥ त्रि॰ पटौ ॥ वक्तरि । विविधशास्त्राभ्यासाधिवासितप्रशस्तवाग्युक्ते ॥ वाग्मीसत्य

वैखरीरूपायांवाग्याम् । सरस्वत्या म् ॥

वाङ्मात्रा । स्त्री० वाचोमात्रायाम् ॥ यथा । निमेषोन्मेषणं पुंसामङ्गुल्याक्रोटिकाथवा । गुर्वंचरोच्चारणं वावाङ्मात्रं यस्मृतावुधैः ॥

वाङ्मुखम् । न० वचनोपक्रमे । उपन्यासे ॥ वाचोमुखमिवमुखम्०उपक्रमः ॥

वाक् । स्त्री० वाग्याम् । भारत्याम् । अर्थपरिज्ञानफलायाम् । सर्वस्यार्थस्यप्रकाशिकायांसंस्काररूपायाम् ॥ योह्यर्थंसम्यगववुध्यतेतेनैवसासम्यक्श्रुताभवति । प्रत्यक्षेणशव्दस्वरूपमुपलभमानोऽपिअर्थापरिज्ञानान्नपश्यतिनशृणोतीत्यनुभवात् ॥ शव्दसामान्ये ॥ वचने । वाक्ये ॥ तीक्ष्णानारुन्तुदावुद्धिःकर्मशान्तप्रतापवत् । नोपतापिमनःसोष्मवागेकावाग्मिनःसतः ॥ कण्ठताल्वादिस्थाने०इन्द्रिये ॥ जिह्वामूलादिष्वष्टसुस्थानेषुविषक्तेनाग्नेयेवर्णानामभिव्यञ्जकेकरणे ॥ अकारादिवर्णेषु ॥ वर्णाश्चार्थसङ्केतपरिच्छिन्नाएतावन्तएवंक्रमप्रयुक्ताइत्येवंतदभिव्यङ्ग्यः शव्दःपदंवागित्युच्यते ॥ इतिभाष्यम् ॥ वक्तीति०उच्यते०ऽनयावा । वचपरिभाषणे । क्विप्वचीत्यादिनाक्विप्०दीर्घोऽसम्प्रसारणञ्च ॥

वागभवतीतिनिश्चितोर्थः ॥ प्रशस्तावागस्य । वाचोग्मिनिः । गकारोच्चारणंप्रत्ययेभाषायामित्यनुनासिकाभावाय । उत्तरसूत्रस्थवहुभाषिणीत्यस्यापिसम्बन्धात् । सम्यग्वहुभाषिणि०वाग्मीतिवोध्यम् ॥

वाग्य:। त्रि० निर्वेदे ॥ कल्पे ॥ वाग्दरिद्रे ॥

वाग्यतः। त्रि० यतशचि । मौनिनि ॥ वाचियतः ॥

वाग्यामः। त्रि० योह्यशक्त्यादिनावाचंयच्छतितस्मिन् ॥

वाग्वज्रः। पुं० शापे ॥ वागेववज्रोर्ऽहिंसकत्वात् ॥

वाग्वित् । त्रि० वैयाकरणे । वाक्यकोविदे ॥ वाचःविन्दति०वक्तुं०विवेक्तुंजानातिवा । सत्सूद्विषेत्यादिनाक्विप् ॥

वाग्विसर्गः। पुं० वाचःप्रयोगे ॥

वाङ्कः। पुं० कचङ्गले । समुद्रे ॥

वाङ्मती । स्त्री० नदीविशेषे ॥ यथा । हिमाद्रेस्तुङ्गशिखरात्प्रोद्भूतावाङ्मतीनदी । भागीरथ्याःशतगुणंपवित्रंतज्जलंस्मृतम् ॥

वाङ्मयः। त्रि० वाक्यात्मके ॥ यथा । स्मरस्तनभूगैर्लान्तैरेभिर्दशभिरक्षरैः । समस्तंवाङ्मयंव्याप्तंत्रैलोक्यमिवविष्णुना ॥

वाङ्मयी । स्त्री० परापश्यन्तीमध्यमा

वाच : । पुं॰ मत्स्यविशेषे । वाचा॰ इ॰गौ॰दे॰भा॰ ॥

वाचंयम : । पुं॰ मुनौ । मौनव्रतिनि ॥ वाचंयच्छति ।यमउपरमे । वाचियमोव्रतइतिखच् । वाचंयमपुरन्दरौचेत्यमन्तत्वम् ॥

वाचक : । पुं॰ शब्दे ॥ यथा । शास्त्रे शब्दस्तुवाचक : । शास्त्रे व्याकरणादौयोवाचक : साधुशब्द : सएवनिरुपपदेनशब्दशब्देनव्यवह्रियते ॥ वर्णव्यतिरिक्तस्यपदस्यवाक्यस्यवावाचकत्त्वमिच्छन्तिवैयाकरणा: । वर्णानांप्रत्येकंवाचकत्त्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गादितिकैयट : ॥ कथके। पुराणादिपाठके॥ सचब्राह्मणएवभवति । यथा । ब्राह्मणंवाचकंविद्यान्नान्यवर्णजमादरात् । श्रुत्वान्यवर्णजाद्राजनृवाचकान्नरकंव्रजेदिति ॥ त्रि॰वक्तरि ॥ वक्ति ॥

वाचक्नवी । स्त्री॰ वचक्नोर्दुहितरि । गार्ग्याम् ॥

वाचनम् । न॰ कथने ॥ पठने ॥ यथा । शुद्धेनानन्यचित्तेनपठितव्यंप्रयत्नत : । नकार्यासक्तमनसाकार्यंस्तोत्रस्यवाचनमितिवाराहीतन्त्रम् ॥

वाचनकम् । न॰ प्रहेलिकायाम् ॥ वायने ।व्रतोपायने । यूपविशेषे ॥

वाचनिक : । त्रि॰ वचनप्राप्ते ॥ वचनादागत : । ठक् ॥

वाचनीय : । त्रि॰ वाचयितुमर्हे ॥

वाचस्पति : । पुं॰ जीवे । बृहस्पतौ ॥ वाच : समस्तविद्यारूपस्यवचस : पति: । षष्ठ्या: पतिपुत्रपृष्ठपारपदपयस्पोषेष्वितिसत्त्वविधानात् ॰षष्ठ्याअलुक् ॥

वाचस्पतिवल्लभ : । पुं॰ पुष्परागमणौ । पोखराज॰इतिभाषाप्र॰ ॥

वाचस्पत्यम् । न॰ वाग्मित्वे ॥ ब्राह्मणादित्वाद्भावेष्यञ् ॥

वाचा । स्त्री॰ वाचि । वाण्याम् ॥ क्विबन्ताद्वाचो॰भागुरिमतेटाप् ॥

वाचाट : । त्रि॰ जल्पाके । वाचाले । बहुगर्ह्यवाचि ॥ कुत्सितंबहुभाषते । आलजाटचौबहुभाषिणि । कुत्सितइतिवक्तव्यमितिवाक्शब्दाट्टच् ॥ सुबहुभाषिण्यपिजल्पाकवाचाटवाचालावर्त्तन्ते । वाचाटोवाचालोजल्पाक : सुबहुभाषीस्यादितिश्रीकाशेपर्यायेवोपालित : । निस्यप्रगल्भवाचालामुपतिष्ठे सरस्वतीमितिमुरारिश्च ॥

वाचारम्भणम् । न॰ अनृतजडानात्मरूपे ॥ निरूप्यमाणेस्तत : सत्ताहीनमपियत्परोक्षव्यवहारगोचरतयागम्यतेतदित्यर्थ : ॥

वाचाल : । त्रि॰ वाचाटे ॥ कुत्सितं बहुभाषते । वाचोवक्तव्योऽस्यसन्तिवा । आलजाटचौबहुभाषिणि । कुत्सित

दुतिवक्तव्य मितिवाचश्चालच् ॥

वाचिकम् । न० सन्देशवाचि ॥ वाचोव्याहृतार्थाया मितिठक् ॥ वाचिकंतद्वदेवाद्भुतत्वेनाभिशंसन मितिशब्दरत्नावली ॥ पुं० वाक्यारम्भे ॥ यथा । आलापश्चविलापश्च संलापश्चप्रलापकः । अनुलापोपलापश्चसन्देशश्चातिदेशिकः ॥ अपदेशोपदेशौचनिर्देशोव्यपदेशकः । कीर्त्तितावचनारम्भाद्वादशामीमनीषिभिरित्युज्ज्वलनीलमणिः ॥ त्रि० वाचा० वचसाकृते ॥ यथा । कायिकंवाचिकंवापिमानसंवायथामति । आराधनेपरेशस्यभावशुद्धिर्विधीयते ॥

वाचिकहारकः । पुं० लेखे । पत्रे दूते ॥

वाचोयुक्तिः । त्रि० वाग्मिनि ॥ वाचोवचसः युक्तिः सयुक्तिकस्त्वम् । वाग्दिक्पश्यद्भ्योयुक्तिदण्डहरेष्विति षष्ठ्या अलुक् ॥

वाचोयुक्तिपटुः । त्रि० सुवक्तरि । वाग्मिनि । वाचोयुक्तिश्चासौपटुश्च ॥

वाच्यम् । न० प्रतिपादने । दूषणे ॥ त्रि० कुत्सिते । हीने ॥ वचनार्हे ॥ अभिधेये ॥ यद्यस्माच्छब्दान्नियमतः प्रतीयते० तत्तस्यवाच्यम् । यथा । गामानयेत्यस्मिन्वाक्ये० गोशब्दस्यगोत्वम् ॥ उच्यते । वचपरिभाषणे । ण्यत् । वचोऽशब्दसंज्ञायामितिनकुत्वम् ॥ अर्थोवाच्यश्चलक्ष्यश्चव्यङ्ग्यश्चेतित्रिधामतः । वाच्योर्थोभिधयाबोध्योलक्ष्योलक्षणयामतः । व्यङ्ग्योव्यञ्जनयाताः स्युस्तिस्रः शब्दस्यशक्तयः ॥

वाच्यमानः । त्रि० प्रस्तूयमाने ॥ वचेश्चौरादिकात्कर्मणिलटः शानच् ॥

वाजः । पुं० निस्वने । शब्दे ॥ पक्षे ॥ शरपक्षे ॥ वेगे ॥ मुनौ ॥ न० घृते । यज्ञे । अन्ने ॥ वारिणि ॥ वजत्यनेन । वजगतौ । हलश्चेतिघञ् । निष्ठायांसेट्त्वान्नकुत्वम् ॥ वाजयतिवा । ण्यन्तः । पचाद्यच् ॥

वाजपेयः । पुं० न० अन्नसुराप्रधाने यागविशेषे । वाजपेयप्रतिपादके ग्रन्थे ॥

वाजपेयिकः । पुं० वाजपेययागविदितरि ॥ वाजपेयप्रतिपादकग्रन्थाध्येतरि ॥ वाजपेयमधीते० वेदवा । क्रतूक्थादिसूत्रान्ताट्ठक् ॥

वाजभोजी । पुं० वाजपेययज्ञे ॥

वाजश्रवाः । पुं० अन्नदानादिनिमित्तयशोविशिष्टे । वाजमन्नं तद्दानादिनिमित्तं श्रवोयशोयस्य सः ॥

वाजश्रवसः । पुं० वाजश्रवसोपत्ये ॥

वाजसनेयः । पुं० जनमेजयकृतवेदा

र्थयन्ये ॥ सतुवैशम्पायनशापाद्दु
ष्छिन्न : ॥

वाजसनेयी । पुं॰ यजुर्वेदिनि ॥

वाजिगन्धा । स्त्री॰ अश्वगन्धायाम् ॥

वाजिता । स्त्री॰ अश्वत्वे ॥ पक्षे ॥

वाजिदन्त : । पुं॰ वासके ॥ वाजी
दन्तोऽस्य॰ वाजिदन्ताभकेशरत्वा
त् ॥

वाजिदन्तक : । पुं॰ वैद्यमातरि ।
अटरूषे ॥ स्वार्थेक : ॥

वाजी । पुं॰ अश्वे ॥ पक्षिणि । खगे
॥ बाणे ॥ वाजा : पक्षा : सन्त्य
स्य । अतइनि : । पूर्वेंह्यश्वा : स
पक्षाआसन् । तथाचशालिहोत्र
म् । सपक्षावाजिन : पूर्वेसञ्जा
तोव्योमचारिण : गन्धर्वेभ्योयथा
कामंगच्छन्तिचसमन्ततइति ॥
अवश्यंव्रजति । व्रजगतौ । आव
श्यकेणिनिर्वा ॥

वाजिनम् । न॰ आमिक्षाजले ॥ घ
नीभूत: पिण्डआमिक्षा॰ जलंवा
जिनमितिव्यवहारात् ॥

वाजिनी । स्त्री॰ अश्वगन्धायाम् ॥
अश्वायाम् । वडवायाम् ॥

वाजिपृष्ठ : । पुं॰ अम्लानवृक्षे ॥

वाजिभक्ष : । ) पुं॰ चणके ॥ वाजि
वाजिभक्ष्य : । ) नोभक्ष्य : ॥

वाजिभोजन : । पुं॰ मुद्गे ॥

वाजिमान् । पुं॰ पटोले ॥

वाजिवाहन : । पुं॰ गन्धर्वे ॥

वाजिशाला । स्त्री॰ मंदुरायाम् । घु
डशाल॰ इ॰ भा॰ ॥ वाजिनां
शाला ॥

वाजीकर : । त्रि॰ वाजीकरणे ॥

वाजीकरणम् । न॰ वीर्यवर्धकद्र
व्ये ॥ येनस्त्रीषुविषयेवाजीवनर :
सामर्थ्यंप्राप्नोति । अस्यलक्षणन्तु ।
यद्द्रव्यंपुरुषंकुर्याद्वाजिवत्सुरत-
क्षमम् । तद्वाजीकरमाख्यातंमुनि
भिर्भिषजांवरैरिति ॥ वाजीकरणत
न्त्रंनाम॰ अदुष्टविशुष्कक्षीणरेत
सामाप्यायनप्रसादोपचयजननि-
मित्तंप्रहर्षजननार्थंचेतिसुश्रुत: ॥
विधिमाह । नरोवाजीकरान्यो
गान्सम्यक्शुद्धोनिरामय : । स
प्तत्यन्तंप्रकुर्वीतवर्षादूर्ध्वन्तुषोडशा
त् ॥ नचवैषोडशादर्वाक्सप्तत्या:
परतोनच । आयुष्कामोनर : स्त्री
भि : संयोगंकर्तुमर्हति ॥

वाञ्छनम् । न॰ वाञ्छायाम् ॥

वाञ्छा । स्त्री॰ इच्छायाम् । काङ्
क्षायाम् । स्पृहायाम् । वाञ्छ
नम् । वाञ्छिइच्छायाम् । गुरोश्च
ह्ल : । टाप् ॥ आत्मवर्त्तिगुणवि
शेषइतिनैयायिका : । साद्विविधा
॥ यथा । उपायविषयिणी॰ फल
विषयिणीवा । फलंसुखंदु : खा

भावश्च । तत्र० फलेच्छांप्रतिफल ज्ञानंकारणम् । उपायेच्छांप्रति० इष्टसाधनताज्ञानंकारणमितिसि- द्धान्तमुक्तावली । ननाकपृष्ठंनच सार्वभौमंनपारमेष्ठ्यं नरसाधिपत्य म् । नयोगसिद्धीरपुनर्भवंवावा ञ्छन्तितत्पादरजःप्रपन्नाः ॥

वाञ्छितम् । त्रि० अभिलषिते ॥

वाञ्छिनी । स्त्री० वाञ्छनीयायांना र्याम् । लज्जिकायाम् । कलत्‌ लिकायाम् ॥

वाटः । पुं० पथि । मार्गे ॥ वृत्ति स्थाने । वृत्तौ । वाड० पू० भा० ॥ न० वरण्डे ॥ अङ्गे ॥ अन्नभेदे । पुष्पादिवाटिकायाम् ॥

वाटधनः । पुं० भूर्जकण्टकोद्भवस ङ्कीर्णजातौ ॥

वाटरम् । न० मधुविशेषे ॥ वटरैः कृतम् । क्षुद्राभ्रमरवटरेभ्यश्च ॥

वाटशृङ्खला । स्त्री० पथरोधकशृङ्ख लायाम् लम्भायाम् ॥

वाटिका । स्त्री० हिङ्गुपत्र्याम् ॥ कु ट्याम् ॥ वास्तुनि ॥ वाट्यालकी ॥ गृहोद्याने ॥ वट्यते । वटवेष्टने । संज्ञायामितिण्वुल् । टाप् । प्र त्ययस्थादितीत्वम् ॥

वाटी । पुं० वाट्याले ॥ त्रि०वेष्टित- स्थले ॥

वाटी । स्त्री० कुट्याम् ॥ वास्तौ ॥ गृ- होद्याने । पूगपुष्पादिकृतोपवने ॥ वाट्यालके ॥

वाटीदीर्घः । पुं० इत्कटवृक्षे ।

वाट्टकम् । न० भृष्टयवे ॥

वाट्यपुष्पी । स्त्री० वाट्यालके ॥

वाट्या । स्त्री० बलायाम् । वरिन्ना- रा०पू०भा० ॥

वाट्यालः । पुं० वाट्यायाम् ॥

वाट्यालकः । पुं० क्षुपविशेषे । वा ट्यायाम् ॥ वाटीमलति । अलभू षणादौ । कर्मण्यण् । स्वार्थेकन् । गवल्गा ॥ वाट्याअलकोवा ॥

वाट्याली । स्त्री० वाट्यालके ॥

वाडः । पुं० वेष्टने ॥

वाडवः । पुं० ब्राह्मणे ॥ वडवानले ॥ न० स्त्रीणांकरणे ॥ घोटकौघे ॥ पुं० न० पाताले ॥ वडवायां भवः । तत्रभवइत्यण् ॥ वडवा यांजातः । तत्रजातइत्यण्वा ॥ वडवानांसमूहः । खण्डिकादि भ्यश्चेत्यञ् ॥

वाडवाग्निः । पुं० वाडवाग्नौ ॥ वा डवश्चासावग्निश्च ॥

वाडवाग्र्यः । पुं० ब्राह्मणश्रेष्ठे ॥

वाडवेयः । पुं० अश्विनीसुते ॥ बीजा ऽश्वे ॥ वडवायाअपत्यम् । वडवा याद्वृषेवाच्ये०इतिढक् ॥

वाडवेयौ । पुं० द्विवचनान्तः नासत्य योः ॥

बाडव्यम् । न० विप्रवृन्दे ॥ बाडवा नांसमूहः । ब्राह्मणमाणवबाडवा द्यन् ॥ बाडवतायाम् ॥ बाडवस्य कर्म भावो वा । ब्राह्मणादित्वात् ष्यञ् ॥

बाड्गलिः । पुं० बाग्वादस्यापत्ये ॥ अपत्ये • अतइञ् । बाचोवादेड त्वं वलभावश्चोत्तरपदस्येञि ॥

बाढम् न० दृढे । भृशे । अतिशये ॥ प्रतिज्ञायाम् ॥ त्रि० अतिशयि नि ॥ आविष्टके ॥ बाहते । बाहृप्र यत्ने० चोष्ठ यादि: । गत्यर्थेतिक्त प्रत्यये० क्षुब्धस्वान्तेतिनिपातित म् ॥ उद्यतेस्मवा । बहप्रापणे । क्त: । क्षुब्धस्वान्तेतिसाधु: ॥

बाढम् । अ० स्वीकारे । अङ्गीकृतौ ॥

बाण: । पुं० काण्डे । शरे । पृषत्के । विशिखे । अजिह्मगे । खगे । कलम्बे । मार्गणे ॥ गोस्तने ॥ केवले ॥ अग्नौ ॥ शरस्यावयवे ॥ वृक्षविशेषे ॥ भद्रमुञ्जे ॥ दैत्यविशेषे । बलेर्ज्येष्ठपुत्रे ॥ कविवरे ॥ मुञ्जे ॥ नीलझिण्ट्याम् ॥ ध्वनौ ॥ त्रि० ध्वनियुक्ते ॥ बाण यति० रोषमुत्पादयतिशत्रुम् । वणशब्दे । स्वार्थेण्यन्त: । पचा द्यच् ॥ वण्यते । कर्मणिघञ्वा ॥ वणनम् । भावेघञ्वा ॥ बाण: शब्दोऽस्त्यस्य । अर्शआद्यच्वा ॥

बाणगङ्गा । स्त्री० रावणबाणनिर्भिन्नसोमेश्वरगिरिप्रभवनदीविशेषे ॥ यथा । सोमेशाद्दक्षिणे भागेबाणे नाद्रिं विभिद्यवै । रावणेनप्रकटितानलधारातिपुण्यदा ॥ बाणगङ्गेतिविख्यातायास्नानादघहारिणी ॥ स्नात्वातुबाणगङ्गायां दृष्ट्वाबाणे- श्वरं विभुम् । गङ्गास्नानफलंप्राप्य मोदतेदेववद्दिवि ॥

बाणदण्ड: । पुं० बाणदण्डे । वेमनि ॥

बाणपुङ्खा । स्त्री० शरपुङ्खायाम् ॥

बाणपुरम् । न० देवीकोटे । शोणितपुरे ॥ बाणस्यासुरविशेषस्य पुरम् ॥

बाणभट्ट: । पुं० ग्रन्थकारविशेषे ॥

बाणयुद्धम् । न० बाणासुरेणसहश्रीकृष्णस्ययुद्धे ॥ शरैर्युधे ॥

बाणलिङ्गम् । न० नर्मदानद्युद्भवशिवलिङ्गे ॥ यथा । नर्मदाजल मध्यस्थं बाणलिङ्गमितिस्मृतम् । बाणलिङ्गं स्वयंभूतंचन्द्रकान्ताह्वयंस्थितम् ॥ चान्द्रायणशतंकार्यंशम्भोर्नैवेद्यभक्षणात् । ग्राह्याग्राह्यविभागोयंबाणलिङ्गे नविद्यते ॥ तदर्पितं जलंबाह्यं याह्यं प्रासादसंज्ञया । शिवनाभमयं लिङ्गं सदापूज्यं मह र्षिभि: ॥ यतस्सर्वलिङ्गेभ्यस्तद्धिपूज्यतमंमतम् । चतुरङ्गुल

मुक्तायंरम्य वेदिकयायुतम् ॥ उत्त मं लिङ्गमाख्यातंपश्चसूत्रसमाधित म् । तदर्धमध्यमंप्रोक्तं तदर्ध मवरंस्मृतम् ॥ तस्मान्यूनंपूजनीयं नकदापिनतत्फलम् ॥ रुद्राचंशि वलिङ्गस्यस्थूलस्थूलंप्रशस्यते । शा स्त्रामेनाममंदस्वसूक्ष्मसूक्ष्मोविशि ष्यते ॥

बाणबार: । पुं॰ भटादेर्दोलाकृतिस न्नाहे । वारबाणे । चोलके ॥

बाणवारक : । पुं॰ कञ्चुके । बाणस्य वारक : ॥

बाणसुता । स्त्री॰ उषायाम् ॥ बाण स्यसुता ॥

बाणाहा । पुं॰ विष्णौ ॥

बाणा । स्त्री॰ बाणमूले । पुं॰ स्त्री॰ नीलझिण्टाम् ॥ बण्यते । बणश ब्दे । कर्मणिघञ् ॥

बाणाह्व : । पुं॰ मुञ्जे ॥ बाणतुल्या ह्वास्य ॥

बाणाश्रय : । पुं॰ धनुषि ॥

बाणासनम् । न॰ धनुषि ॥

बाणि : । स्त्री॰ वस्त्रादेर्वयनक्रियाया म् । व्यूतौ ॥ वयने ॥ वायदण्डे अम्बुदे ॥ मूल्ये ॥ सरस्वत्याम् ॥ बाणनम् । बण॰ । चुरादि : । अचइ : ॥

बाणिनी । स्त्री॰ नर्त्तक्याम् ॥ मत्ता यांनार्याम् ॥ विदग्धवनितायाम् ॥ अवश्यंवणति । वण॰ । आवश्यके तिणन्यादित्वाद्वाणिनि : ॥ अष्टिसं ज्ञकछन्द : १६ प्रभेदे ॥ नजभजरै र्यदाभवतिवाणिनीगयुक्तै : ॥ यथा । स्फुरतुममाननेऽद्यननुवाणिनी- तिरम्यं तवचरणप्रसादपरिपाकत : कवित्वम् । भवजलराशिपारकर णक्षमंमुकुन्दं सततमहंस्तवै : स्वर चितैस्तवानिनिच्यम् ॥

बाणी । स्त्री॰ सरस्वत्याम् । भारत्या म् ॥ बायक्रियायाम् । व्यूतौ ॥ वचने ॥ वण्यते । वण॰ । सर्वधा तुभ्यइन्निति॰ इन् । कृदिकाराद क्तिनइतिङीष् ॥

बात : । पुं॰ पवने । श्वसने । वायौ ॥ निमित्तभेदेनास्यगुणायथा । व्य जनस्यानिलस्त्वास्वेदमूर्च्छाश्रमा पह : ॥ तालवृन्तभवोवातस्त्रिदो षशमनोमत : ॥ वंशव्यजनज: सो ष्णोरक्तपित्तप्रकोपन : । चामरोत्थ स्वसमभूतोमायूरोवेत्रजस्तथा ॥ ए तेदोषजितावाता: स्निग्धाहृद्यास्तु पूजिता : ॥ वाति । वागतिगन्ध नयो : । हसिमृग्रिण्वाऽमिदमि लूपूधूर्विभ्यस्तन्निति तन् ॥ स्वाति नक्षत्रे ॥ रोगविशेषे ॥ हेमन्तवर्षा शिशिरेषुवायो : प्रकोपोभवति । यत : । मार्गेपौषेतथामाघेआषा ढेश्रावणेपिच । भाद्रेमासेपिचक्षि

स्मान्नैर्वातोरोगाप्रकीर्त्तितइति ॥

वातकः । पुं॰ शीतले । अपराजितायाम् । शणपर्ण्याम् ॥ वातंकरोति । डुकृञ॰ । अन्येभ्योपीतिडः ॥

वातकर्म्म । न॰ मरुत्क्रियायाम् । पर्द्दने ॥

वातकी । त्रि॰ वातरोगयुक्ते । वातरोगिणि ॥ वातोऽतिशयितोऽस्य । वातातीसाराभ्यांकुक्चेतीनिः ॥

वातकुम्भः । पुं॰ गजकुम्भाधोभागे ॥

वातकेतुः । पुं॰ पांशौ । धूलौ ॥

वातकेलिः । पुं॰ कलालापे । चर्व्वरीके ॥ षिड्गदन्तक्षते ॥

वातखुडा । स्त्री॰ वात्यायाम् ॥ पिच्छिलस्फोटे ॥ वामायाम् ॥ वातशोणिते ॥

वातगुल्मः । पुं॰ वातूले ववण्डर॰ ववूला॰ इतिभाषाप्रसिद्धे ॥

वातघ्नम् । न॰ तैले ॥ त्रि॰ वातनाशकर्त्तरि ॥ वातंहन्ति । हन॰ अमनुष्यकर्त्तृकेचेतिटक् ॥

वातघ्नी । स्त्री॰ अश्वगन्धायाम् ॥ शालपर्ण्याम् ॥ शिम्बडीक्षुपे ॥

वातचक्रम् । न॰ आषाढ्यांवायुविचारे ॥ तच्चोक्तंवाराह्यांभट्टोत्पलेन । यथा । आषाढपौर्णमास्यान्तुयदोशानोनिलोभवेत् । अस्तंगच्छतितोष्णांशोसस्यसम्पत्तिरुत्तमा ॥ पूर्व्वः पूर्व्वसमुद्रवीचिशिखरप्रस्फालनाघूर्णितश्चन्द्रार्कांशुसटाकलापकलितोवायुर्यदाकाशतः । नैकान्तस्थितनीलमेघपटलाशारदासंवर्द्धितावासन्तोत्कटसस्यमण्डिततलासर्व्वामहीशोभते ॥ यदाग्नेयोवायुर्वहतिगगनेखण्डिततनुः प्रवत्यस्मिन्योगेभगवतिपतङ्गे प्रवसति । तदानित्योद्दीप्ताज्वलनशिखरालिङ्गिततलास्तगोत्रोष्मोच्छ्वासैर्व्वमतिवसुधाभस्मनिकरम् ॥ तालीपत्रलताविताननतरुभिः शाखामृगान्नर्त्तयन्योगेस्मिन्नभवतिध्वनिः सुपरुषोवायुर्यदादक्षिणः । तद्वद्योगसमुत्थितस्तुगजवत्तालाङ्कुशैर्घट्टिताः कीनाशाइवमन्दवारिकणिकामुञ्चन्तिमेघास्तदा ॥ सूक्ष्मैलालवलीलवङ्गनिचयान्व्याघूर्णयन्सागरेभानोरस्तमयेप्रवत्यविरतोवायुर्यदानैर्ऋतः । क्षुत्तृष्णावृतमानुषास्थिशकलप्रस्तारभारच्छदामत्ताप्रेतवधूरिवोग्रचपलाभूमिस्तदालक्ष्यते ॥ (*) यदावारुणात्तैः प्रविचलसटाटोपचपलः प्रवातः पश्चार्द्धे दिनकरकरापातसमये । तदासस्योपेताप्रवरनिकरावह्नसमराचिताः स्थानस्थानेष्वविरतवसामांसरुधिरा ॥ आषाढीपर्व्वकालेयदिकिरणपतेरस्तकालोपपत्तौ वायव्योहव्यवेगः

पवनघनवपु : पन्नगार्धानुकारी । आनीलाकारिधाराप्रमुदितमुदितां मुक्तमण्डूककण्ठांसद्योहासं क्वचि [illegible]बहुलतया भाग्यसेनामिवो [illegible] ॥ मेरुग्रस्तमरीचिमण्डलत [illegible]प्रायसानैरवौ वात्यामोदिक दम्बगन्धसुरभिर्वायुर्यदा चोत्तर : । विद्युद्भाभिस्समस्तकान्तिकलना [illegible]स्तदा तोयदा उन्मत्ता इवष्टच न्द्रकिरणाणां पूरयन्त्यम्बुभि : ॥ इतिवातचक्रनामाध्याय : । १७ ॥ श्रावणायामाषाढ्यांकृष्णाचतुर्थ्यामज कपादर्षे । यदिवर्षतिपर्जन्य : प्रावृट्शस्तानचेन्नतत : ॥

वातचटक : । पुं॰ वार्त्तिकीखगे । बटेर॰ इ॰ भा॰ ॥

वाततूलम् । न॰ मरुद्ध्वजे । वृद्धसूत्रे । आकाशे॰ उड्डीयमानसूत्रे । ग्रीष्महासे ॥

वातथुडा । स्त्री॰ वातखुडा र्थे ॥

वातध्वज : । पुं॰ मेघे ॥

वातपित्तजशूलम् । न॰ शूलरोगवि शेषे ॥ तस्यौषधं यथा । मातुलुङ्ग स्यनिर्यासं गुडाढ्येनसमन्वितम् । वातपित्तजशूलानिहन्तिवैपानयो गत : ॥

वातपुत्र : । पुं॰ महाधूर्त्ते ॥ भीमसे ने ॥ हनूमति ॥

वातपोत : ।
वातपोतक : । } पुं॰ पलाशे ॥

वातपोथ : । पुं॰ पलाशे । किंशुके । पर्णे । केसू॰ इ॰ भा॰ प्र॰ वृक्षे ॥ वातंपोथयति । पुथहिंसायाम् । कर्मण्यण् ॥

वातप्रमी । पुं॰ स्त्री॰ वातमृगे । वा ताटहरिणे । नि : शृङ्गमृगाकृतौ ॥ वातंप्रमिमीते॰ वाताभिमुख धावनात् । माङ्माने । वातप्रमी ल्युणादिसूत्रेणमाङईप्रत्यय : कित् । स्त्रीत्वेकृदिकारादितिवाङीषित्ये के । अन्येतुकारग्रहणस्यतपरार्थ त्वाद्दीर्घान्तान्ङीषन्नेत्याहु : नहि कारग्रहणं केवलग्रहणमितिमुनि त्रयेणपरिभाषितम् । अतएव॰ वातप्रमीश्रीलक्ष्मीतिपद्ये ङ्यन्ता : सुसाधवइतिरचित : ॥ अश्वे ॥ नकुले ॥

वातफुल्लान्त्रम् । न॰ पुपफुसे

वातमज : । पुं॰ वातप्रमी । वाताट हरिणे ॥ वातमजति । अजगति क्षेपणयो : । वातशुनीतिलक्षणे ष्वजघेटतुदजहातिभ्यउपसङ्ख्या नमितिखश् । अरुर्द्विषदितिमु म् ॥

वातमजा । स्त्री॰ वातसृग्याम् ॥

वातमण्डली । स्त्री॰ वायुसंहतौ । वात्यायाम् ॥

वातमृग : । पुं॰ वातमजे । वातप्र मी ॥ वातद्रुव॰ वातस्य वामृग : ॥

वातरक्तम् । न॰ रोगविशेषे ॥

वातरक्तघ्न: । पुं॰ कुक्कुरे । ग्रन्थिपर्णे ॥

वातरक्तारि : । पुं॰ पिचप्राम् । गु डूच्याम् ॥

वातरङ्ग : । पुं॰ अश्वत्थे ॥

वातरथ : । पुं॰ मेघे ॥ वातोरथोस्य ॥ गन्धे ॥

वातरशन: । त्रि॰ दिग्वाससि । दिग म्बरे ॥

वातरायण : । पुं॰ उन्मत्ते ॥ निष् प्रयोजनपुरुषे ॥ काण्डे । साय के । करपत्रे । क्रकचे ॥ कूटे ॥ शरसङ्क्रमे ॥ परसङ्क्रमे॰ द्रू॰ मेदिनी ॥ सरलद्रुमे ॥

वातरूष : । पुं॰ वातूले ॥ शक्रका र्मुके ॥ उत्कटे । द्रू॰ मेदिनी ॥ उत्कोचे : द्रू॰ हेमचन्द्र: ॥

वातरोग : पुं॰ वायुव्याधौ । चलात ङ्के । अनिलामये ॥

वातरोगी । त्रि॰ वातरोगयुक्ते । वातकिनि ॥ वातरोगोस्यास्ति । इनूर्दोपतापेतीनि : ॥

वातर्षि: । पुं॰ काष्ठलोष्टाभयनिमि त्तपात्रे । काष्ठलोष्टाम् ॥

वातल : । पुं॰ चणके ॥ त्रि॰ वायु कारके ॥ वातंलाति । ला॰ । क : ॥

वातलमण्डली । स्त्री॰ वात्यायाम् ॥

वातवैरी । पुं॰ वाता[illegible] त्रि॰ वा तघ्ने ॥ वातस्यवैरी ॥

वातव्याधि: । पुं॰ वातरोगे ॥ [illegible] स्त्रिणि । उत्सवे ॥

वातशीर्षम् । न॰ वस्तौ ॥

वातशोणितम् । न॰ वातरक्तरोगे ॥

वातष्ठीला । स्त्री॰ वातव्याधिविशेषे ॥ यथा । नाभेरधस्तात्सञ्जा त : सञ्चारीयदिवाचल : । अष्ठी लावद्घनोग्रन्थिरूर्ध्वमायतमुन्नत: । वातष्ठीलांविजानीयाद्वहिर्मार्गनि रोधिनीम् ॥

वातसह : । त्रि॰ अत्यन्तवायुयुक्ते । वातूले ॥

वातसारथि : । पुं॰ अग्नौ ॥

वातस्कन्ध : । पुं॰ आकाशस्यभाग विशेषे ॥

वातहा । त्रि॰ वातघ्ने । वायुनाश कौषधौ ॥

वातहुडा । स्त्री॰ वातयुक्तार्यां ॥

वातज्ञ : । पुं॰ वायुग्रस्ताङ्गे ॥ वा तज्ञ : पारदारिक : ॥

वाताट: । पुं॰ सूर्यघोटके । वातमृगे ॥

वाताण्ड : । पुं॰ मुष्करोगविशेषे ॥ तल्लक्षणं यथा । इषणौदूषयेद्वायु : श्रेष्मणायस्यसंवृत: । तस्यमुष्कस्य सत्येषोरोगोवाताण्डसंज्ञक : ॥

वातात्मज : । पुं॰ हनुमति ॥

वाताद : । पुं॰ वहामपादपे । नेत्रो पमफले ॥ वातादउष्णः सुस्निग्धो वातघ्नः शुक्रकृद्गुरुः । वातादम ज्जामधुरोवृष्यः पित्तानिलापहः॥ स्निग्धोष्णः कफकृन्नेष्टोरक्तपित्त विकारिणाम् । वातमत्ति । अद॰ । कर्मण्यण् ॥

वाताध्वा । पुं॰ वातायने ॥

वातापिः । पुं॰ इल्वलभ्रातर्यसुरवि शेषे । वातमाप्नोति । आप्नृ॰ । फ लेयच्छिरात्मभरिर्धे तिपचाराादिन् ॥

वातापिद्विट् । } पुं॰ अगस्त्यमु
वातापिसूदनः । } नौ ॥
वातापिहा । }

वाताम : पुं॰ वातादे ॥

वातायन : । पुं॰ एकशफे । अश्वे । हये ॥ न॰गवाक्षे ॥ ईयतेऽनेन । इण॰ । करणेतिल्युट् वातस्याय यनम् ॥ त्रि॰शीघ्रगे ॥

वातायुः । पुं॰ मृगे । कुरङ्गे । हरि णे ॥ वातमयते । अय॰ । बाहुल कादुण् ॥

वातारिः । पुं॰ रक्तैरण्डे ॥ सयथा। वातारिबीजं प्रस्थञ्चसुपक्वं निस्तु षीकृतम् । क्षीरंद्रोणार्द्धसंयुक्तं भिषक्मन्दाग्निनापचेत् ॥ घृत प्रस्थार्द्धसंयुक्तं खण्डप्रस्थद्वयंक्षिपेत्। त्र्यूषणञ्चचतुर्जातंग्रन्थिकंवह्निचि त्रकम् ॥ कृष्णामिसीशटीबिल्वंदी प्यकाैरीनिशायुगम् । अश्वगन्धा बलांपाठांश्वपुष्पांवेरपौष्करम् ॥ श्व दंष्ट्रांग्वधाद्राक्षेविडंगंबालकंवरी । एतानिपिचुमात्राणिचूर्णयित्वावि निःक्षिपेत् ॥ वातव्याधिंसशूलञ्च राजयक्ष्मांतथोदरम् । आनाहंच धं गुल्मञ्चआमवातंकटिग्रहम् ॥ ज रयच्चंतथाहिक्काश्वासकासश्चदाम यान् । अर्दितापपविश्वाचीगृध्र सीमपतन्त्रकम् ॥ पक्षाघातंपाण्डु वातंभङ्गंदण्डापतानकम् । मन्या स्तम्भंहनुस्तम्भंनाशयेदपिवेगतश्च ति ॥ पुत्रदाशीलतायाम् ॥ यवा न्याम् ॥ शेफालिकायाम् ॥ स्नु ह्याम् ॥ भार्ग्याम् ॥ विडङ्गे ॥ शू रणे ॥ भल्लातके ॥ अतुकायाम् ॥ शतमूल्याम् ॥

वाताली । स्त्री॰ वातसंहतौ । वा त्यायाम् ॥

वाताश्वः । पुं॰ कुलीनाश्वे । हयोत्त मे । जात्ये । आजानेये ॥

वातासहः । त्रि॰ वातूले ॥

वातिः । पुं॰ अनिले । वायौ ॥ सू र्ये ॥ सोमे ॥ वाति । वागतिगन्ध योः । क्तिच् । वातेर्निदित्य तिर्वा ॥

वातिकः । पुं॰ वायुजव्याधौ ॥ न॰ वातस्यशमने ॥ वातस्यकोपने ॥ वातपित्तश्लेष्मभ्यः शमनकोपनयो

रूपसङ्ख्यानमितिठञ् ॥

वातिगः । पुं॰ भण्टाक्याम् ॥ त्रि॰ धातुवादिनि ॥

वातिगमः । पुं॰ वार्त्ताकौ ॥

वातिङ्गणः । पुं॰ वार्त्ताकौ । भण्ट॰ भटा॰ इ॰ च॰ प्र॰ फलशाके ॥

वातीयम् । न॰ काञ्जिके ॥

वातुलः । पुं॰ वात्यायाम् ॥ त्रि॰ वायुरोगिणि ॥ वातसुखसेवनयोरदन्तः । बाहुलकादुलच् ॥ उन्मत्ते ॥

वातुलिः । स्त्री॰ तरुतूलिकायाम् । वादुड॰ इ॰ भा॰ ॥

वातूलः । पुं॰ वात्यायाम् ॥ त्रि॰ वातासहे । मारुतासहे ॥ वातानांसमूहः । वातंनसहतेवा । वातात् समूहेचेत्यूलः । चात्तदसहने ॥ यद्वा । वाताः सन्त्यस्यास्मिन्वा । सिध्मादित्वाल्लच् । वातदन्तबललालाटानामूङ्चेत्यूङ् ॥ उन्मत्ते ॥

वाता । पुं॰ वाते ॥ वाति । वागतिगन्धनयोः ॥ तृच् ॥

वातोना । स्त्री॰ गोजिह्वाक्षुपे ॥ त्रि॰ वायुहीने ॥

वातोर्म्मी । स्त्री॰ त्रिष्टुप्छन्दः ११ प्रभेदे ॥ तल्लक्षणादियथा । वातोर्मीयंगदिताम्भौतगौगः । यथा ॥ ध्यातामूर्त्तिः क्षणमप्यच्युतस्यश्रेणीनाम्नांगदिताहेलयापि । संसारेऽस्मिन्दुरितंहन्तिपुंसांवातोर्म्मी पोतमिवाम्भोधिमध्ये ॥

वात्या । स्त्री॰ वातसमूहे । वाताल्याम् ॥ वातानांसमूहः । पाशादिभ्योयः ॥

वात्सकम् । न॰ वत्सानांवृन्दे । वत्सानांगणे ॥ वत्सानांसमूहः । गोत्रोक्षोष्ट्रेतिवुञ् ॥

वात्सल्यः । पुं॰ रसविशेषे ॥ न॰ प्रेम्णि ॥ त्रि॰ तद्वति ॥

वात्सल्यता । स्त्री॰ कृपालुत्वे ॥

वात्सीपुत्रः । पुं॰ नापिते ॥

वात्स्यः । पुं॰ मुनिविशेषे ॥ वत्सस्य गोत्रापत्यम् । गर्गादिभ्योयञ् । बहुत्वे॰ वत्साः । यञञोश्चेतिलुक् ॥

वात्स्यायनः । पुं॰ शब्दादयोविषया भूयोभूयोभुज्यमानास्तत्त्वमितिकल्पनापरेऋषिविशेषे । मन्दनागे । पक्षिले । स्वामिनि ॥

वादः । पुं॰ यथार्थबोधेच्छोर्वाक्ये ॥ अरिविद्विषोर्द्वयोः कथायाम् । व्यक्तवाक्ये ॥ भगवद्विभूतिविशेषे । यथोक्तंभगवद्गीतायांवादः प्रवदतामहमिति । अस्यार्थः । प्रवदतांवादिनांसम्बन्धिन्योवादजल्पवितण्डाख्यास्तिस्रः कथाः प्रसिद्धाः॰ तासांमध्येवादोऽहम् । यत्र द्वाभ्यामपिप्रमाणतस्तर्कतश्चस्वपक्षः

स्थापयति। परपक्षं छलजातिनिग्रह
स्थानैर्दूषयति स जल्पो नाम। यस्त्वे
कः स्वपक्षं स्थापयति। अन्यस्तु।
छलजातिनिग्रहस्थानैस्तत्पक्षं दूष
यति। न तु स्वपक्षं स्थापयति। सा
वितण्डा नाम कथा। तत्र जल्पवितण्डे
विजिगीषमाणयोर्वादिनोः शक्ति
परीक्षामात्रफले। वादस्तु वीतराग
योः शिष्याचार्ययोरन्ययोर्वा तत्त्व
निरूपणफलः। अतोऽसौ श्रेष्ठत्वा
दादौ भणित इत्यर्थः॥ इति श्रीध
रस्वामिनः॥ अस्य लक्षणं गौतमो
क्तं यथा। प्रमाणतर्कसाधनोपाल
म्भः सिद्धान्ताविरुद्धः॥ १।
४१॥ अस्यार्थः। वाद इति लक्ष्यनि
र्देशः। पक्षप्रतिपक्षौ विप्रतिपत्ति
कोटी। तयोः परिग्रहस्तत्साधनो
पालम्भोक्तिप्रत्युक्तिरूपवचनसन्दर्भः
तावन्मात्रं च कथान्तरसाधारणम
त आह। प्रमाणेत्यादि। प्रमाण
तर्काभ्यां तद्रूपेण ज्ञाताभ्यां साधनो
पालम्भौ यत्र स तथा। उभयत्रापि
प्रमाणादिसद्भावः कोटिद्वयस्यापि सि
द्धिः स्यादतस्तद्रूपेण ज्ञाताभ्यामि
ति। ज्ञानमनाहार्यं विवक्षितम्।
उपालम्भो दूषणम्। जल्पादौ तु प्र
माणाभासत्वादिना ज्ञाताभ्यामपि
साधनोपालम्भौ भवत इति तद्वारणं
तथा। इतरथा तु सद्धेतोरेव दुष्टत्व

वाद :

म्। इत्यत्र च प्रमाणाभासत्वप्रका
रकज्ञानविषयकरणकसाधनोपाल
म्भयोग्यान्यत्वे सतीत्यर्थः। तेन
तादृशजल्पविशेषेणातिव्याप्तिः। तत्र
च निग्रहस्थानविशेषनियमार्थं सिद्धा
न्तेत्यादिविशेषणद्वयम्। अन्ये तु तदपि
लक्षणघटकमेव। तदर्थश्च। तावन्मा
त्रनिग्रहस्थानयोग्यत्वम्। तावद
तिरिक्तनिग्रहस्थानोपन्यासायोग्य
त्वं वा। निग्रहस्थानं प्रतिज्ञाहान्या
दीनामेकं धृत्वा। तदुपन्यासायोग्य
त्वमिति निष्कर्षः। तेनोक्तजल्प
विशेषवारणमित्याहुः। सिद्धा
न्ताविरुद्ध इत्यनेनापसिद्धान्तो
द्भावनम्। पञ्चावयवोपपन्न इत्य
नेन न्यूनाधिकोद्भावने। अवयवा
भासस्य दृष्टान्तासिद्ध्यादेश्चोद्भावनम्
प्रमाणेत्यनेन च प्रमाणाभासत्वेन हे
त्वाभासानां तर्काभासस्य चोपन्यासो
नियम्यते तथा च हेत्वाभासन्यूनाधि
कापसिद्धान्तरूपनिग्रहस्थानचतुष्ट
योद्भावनमिति वदन्ति। वस्तुतस्तु वाद
स्य वीतरागकथात्वेन तत्त्वनिर्णयस्यो
द्देश्यतया पुरुषदोषस्याविज्ञातार्था
देरिव न्यूनाधिकयोरपि नोद्भावनमुचि
तम्। अत एव पञ्चावयवावश्यकत्व
मपि भाष्यकारो नानुमेने। हेत्वाभा
साद्युद्भावनेनापि च तदेव कथाविच्छे
दो यदि हेत्वन्तरेणापि साधयितुं न श

वाद :

क्यते॰ इतरथातुतदूर्ध्वं तोरेवदुष्टत्वम् । इत्यञ्चपञ्चावयवोपपन्नइतिप्रायिकत्वाभिप्रायेणे तितत्त्वम् । वादाधिकारिणस्तुतत्त्वबुभुत्सवः॰ प्रकृतोक्तिकाः॰ अविप्रलम्भकाः॰ यथाकालस्फूर्त्तिकाः॰ अनाक्षेपकाः युक्तिसिद्धप्रत्येतारः । अनुविधेयश्चेयः सभ्यपुरुषवतीजनतासभा अनुविधेयो राजादिः स्थेयान्मध्यः सावा देनावश्यकोवीतरागकथात्वादिति ॥ १ । ४१ ॥ अपिच । वादफलस्यतत्त्वनिर्णयस्यदुरूढवादिनिराकरणेन॰ संरक्षणार्थंविजगीषुकथे जल्पवितण्डे॰ जयपराजयमात्रपर्य्यन्ते । तदुक्तम् । तत्त्वाध्यवसायसंरक्षणार्थंजल्पवितण्डे बीजप्ररोहसंरक्षणार्थंकण्टकशाखाप्रावरणवदिति ॥ छलजातिनिग्रहस्थानैः परपक्षोदूष्यते॰ इतिजल्पे वितण्डायाञ्चसमानम् । तत्रवितण्डायामेकेनस्वपक्षस्थाप्यतएव॰ अन्येनचसदूष्यतएव । जल्पेतु॰ उभाभ्यामपिस्वपक्षः स्थाप्यते॰ उभाभ्यामपिपरपक्षोदूष्यतइतिविशेषः । तदुक्तम् । यथोक्तोपपन्नश्छलजातिनिग्रह स्थानसाधनोपालम्भोजल्पः ॥ १ । ४२ ॥ सप्रतिपक्षस्थापनाहीनोवितण्डेति । १ ॥ ४३ ।

वाद :

चतोवितण्डादय शरीरत्वाज्जल्पोनामनकाकथा॰ किन्तुशक्त्यतिशयज्ञानार्थंसमयबन्धमात्रेणप्रवर्त्ततइतिखण्डनकाराः ॥ तत्त्वाध्यवसायपर्य्यवसायित्वेनतुवादस्यश्रेष्ठत्वमेव ॥ सङ्घातादिवादेषु ॥ तेचोक्ताराजमतोनस्त्वेवयथा । सङ्घातवादोलोकायतिकानांनास्तिकानाम् । अनादौचविकिलोकेनैश्वरादिरपेक्ष्यते । प्रत्यक्षसङ्घातभेदशक्तिभिः सर्वंसिद्धमितः ॥ यथौषधानांसङ्घातेमादोरागोरसायनम् । तथैवभूतसङ्घाते चैतन्यंकान्यजीवता ॥ १ ॥ यथाचारम्भवादस्तोर्किकाणांमीमांसकानाञ्च । आत्माकाशाणुखत : कारणंपूर्वमिष्यते । कुलालादिवदण्डस्तुघटवज्जन्मनाशभाक् ॥ पृथिव्यम्भोगिवायूनांकर्मसंयोजिताणवः । व्याणुकादिक्रमेणाण्डमारभन्तइदंमहत् ॥ २ ॥ यथाचपरिणामवादः साङ्ख्यपातञ्जलपाशुपतानाम् । गुणसाम्यंप्रधानं स्याद्गुणाः सत्त्वंरजस्तमः । सुखदुःखमोहरूपं हश्यतेहिस्फुटंजगत् ॥ प्रधानंस्यान्महान्सोऽहङ्कारोऽसौषोडशात्मना । जायतेपञ्चतन्मात्राण्यक्षाणि कादशापिवत् । तन्मात्राणितुभूतानि जायन्ते तत्सङ्ख्यया । चतुर्विंशति

वाद :

रैतानितथात्मापञ्चविंशति : ॥ स
देवकार्यमुत्पत्ते : पूर्व्वंकारकरूप
कम् । आविर्भावतिरोभावौजन्म
नाशावुदीरितौ ॥ ३ ॥ यथाचजी
वोत्पत्तिवाद : पाञ्चरात्राणाम् ।
ब्रह्मणोवासुदेवाख्याज्जीव : सङ्कर्ष
णाभिध : । जायतेचमनस्तस्मात्प्र
द्युम्नाख्यंतत : पुन : ॥ अहङ्कारोऽ
निरुद्धाख्यस्तत्त्वारोविश्वरूपका: ।
वासुदेवाराधनाद्यैर्जायतेवम्भमोक्ष
णम् ॥ ४ ॥ यथाचक्षणिकविज्ञा
नातिरिक्तभावाभाववादोबौद्धाना
म् । विज्ञानंबुद्धिरितिनार्थान्तर
म् । यदन्तर्ज्ञेयतत्त्वंतद्बहिर्वदव
भासते । स्वप्नवज्जागरेसुप्तावभाव:
स्फुटएवहि ॥ ५ ॥ यथाचबाह्या
स्तित्ववादोबौद्धैकदेशिनाम् । समु
दायोऽणुसम्भूतोबाह्योभूम्यापगादि
क : । आन्तर : स्कन्धजश्चित्तश्चै
त्यरूपस्ततोजगत् ॥ रूदन्वावह्निवा
यूनांखरस्निग्धोष्णचञ्चला : । चतु
र्द्धाणव : पञ्चस्कन्धारूपादिभेद
त : ॥ रूप : शब्दादयस्तेषांव्यक्ति
विंज्ञानमुच्यते । वेदनासुखदु : खि
त्व : सञ्ज्ञाडित्यादिनामयत् ॥ सं
स्कारोवासनाचैवमुक्तसङ्घद्वया
त्मकम् । जगत्प्रत्यक्षत : सिद्धं
किमन्यपरिकल्पनै : ॥ ६ ॥ यथा
चसप्तपदार्थवादआर्हतानाम् । जी

वाद :

वाजीवात्मकंविश्वंचेतन : स्वशरी
रवत् । परिणामावयववानऽजीव :
षड्विध : स्मृत : ॥ मत्तीधरादिरे
क : स्यात्पञ्चधाचास्रवादिक : ।
आस्रव : संवरोनिर्जरोवन्धोमोक्ष
एवच ॥ इन्द्रियाण्यविवेकादि : के
शोल्लुञ्चादिभिस्तप : । जन्मान्यूर्द्ध्व
गतिश्चेतिपञ्चानामर्थउच्यते ॥ स्या
दस्तीत्यादिनासप्तभङ्गीन्यायेनवा
दिन : । सप्तैवक्रमशोऽपास्यस्वमतं
साधयेत्सुधी : ॥ सत्त्वासत्त्वोभयाऽ
वाच्यवादिन : स्युश्चतुर्विधा : । द्वि
धाऽऽद्याश्चावाच्यतोक्तावादिन : स
प्तकीर्त्तिता : ॥ ७ ॥ एतेषांवादा
नांप्रमाणानपेक्षत्वादहमात्रमूलत्वा
द्वक्ष्यमाणप्रमाणबाधितत्वाच्चनसाम
ञ्जस्यम् । तथाहि । तावत्सङ्घा
तवादोनयुक्तिसह : । घटोपलब्धि
वत्सङ्घोपलब्धिर्भिद्यतेस्फुटम् ।
साजीवोममदेहोयमितिभेदानुभूति
त : ॥ योगिनश्चाथभूतादेर्देहान्तर
गति : स्फुटम् । आत्माभावेकृत
ध्वंसोह्यकृताभ्यागमस्तथा ॥ क्षणि
कान्नोकार्यजन्मसहकार्यप्रतीक्षि
णा : । सहकारिप्रतीक्षायांक्षणिक
त्वंपराहतम् ॥ ईशानुमानन्तुपुष्प
दन्त : समर्थयामास । अजन्मानो
लोका : किमवयववन्तोपिजगताम
धिष्ठातारंकिंभवविधिरनादृत्यभ

वति। अनौशोवाकुर्यांद्वनजनमी क : परिकरोयतोमन्दास्तांप्रथमरव रसंशेरतद्बमे ॥ इति। यतोवाइमानिभूतानिजायन्ते येनजातानिजीवन्तियत्प्रयन्त्यभिसंविशन्तितद्ब्रह्मेत्यादिश्रुतयस्तु स्वतन्त्रमेवप्रमाणम् ॥ १ ॥ आरम्भवादोपिनयुक्तिसह : । यथा। अणुसंयोजकंकर्म्म निर्निमित्तंयदाभवेत् प्रलयस्तर्हिनभवेत् सनिमित्तंकथंवद ॥ शरीराभावतस्तत्रप्रयत्नादेरसम्भवात्। नित्यत्वादीशयत्नोपिकादाचित्कोऽहितोनहि ॥ जीवात्मसमवेतत्वाददृष्टंनाणुषुक्कचित्। एवमादिविचारेणदुष्टाणुपरिकल्पना ॥ कुलालवत्तटस्थश्चेदीश्वरस्तर्हिमत्सम: । शरीरोपस्कराकाङ्क्षीविषमोनिर्घृणस्तथा। ईशेवेद:प्रमाणञ्चेत्तत्त्याज्यातर्हितटस्थता॥ यत:स्फुटंनिराबाधंमायित्वंतत्रवर्ण्यते॥ अखण्डसच्चिदानन्दोजगद्रूपेणभासते। मायायांदुर्घटंनास्तिकिञ्चित्तद्रूपणाहिसा ॥ परमाण्वादिकल्पनाविरोधिन्य: श्रुतय: । एकोऽहंबहुस्यांप्रजायेयेति। एतस्मादात्मनआकाश: सम्भूत: आकाशाद्वायुर्वायोरग्निरग्नेराप: अद्भ्य: पृथिवीति। मायान्तुप्रकृतिंविद्यान्मायिनन्तुमहेश्वरमिति। इन्द्रो

वाद :

मायाभि: पुरुरूपईयते। इत्येवमायाप्रसङ्ख्यातएव। एवंस्मृतीतिहासवाक्यान्यपि ॥ २ ॥ परिणामवादोपिनयुक्तिसह: । यथा। विचित्रजगतोहेतुर्नप्रधानमचेतनम्। चेतनोपिहिनिस्सङ्गोनसहायत्वमर्हति ॥ गुणकार्यंसुखादीनामान्तरत्वस्यनिश्चयात्। घटादावन्वयोनास्तिकथमव्यक्तकार्यता ॥ किञ्चापरिणतेतस्मिन्नकार्योत्पत्तिर्नयुज्यते। परिणामेतस्यनाश: कार्यस्यापिनिराश्रयात् ॥ नचप्रधानकल्पनायाम्। अजामेकांलोहितशुक्लकृष्णामित्यादिश्रुति: प्रमाणम्। तस्या: यदग्नेरोहितंरूपंतेजसस्तद्रूपंयच्छुक्लंतदपांयत्कृष्णंतदन्नस्येतिच्छान्दोग्योक्ततेजोबन्नात्मकप्रकृतिपरत्वेनमायापरत्वेनापिसूरिभिर्व्याख्यातत्वात्। एवमन्यत्स्वयंसमाधेयम् ॥ ३ ॥ जीवोत्पत्तिश्चनयुक्तिसहा। यथा। जीवोत्पत्तिर्नयुक्तेतिजीवस्यानादिताश्रुता। विनाशेकृतनाश: स्यादकृताभ्यागमस्तथा ॥ ४ ॥ विज्ञानवादोपिनयुक्तिसह: । यथा। जागरेबाध्यतेस्वप्नोजागरोनैवबाध्यते। तवतद्बाधकाभावाद्बाह्यमस्त्युपलब्धित: ॥ वह्निवंदितितेप्युक्तिर्बाह्यमर्थंप्रसाधयेत्। एवंनयुज्यतेबुद्धे

वादः

र्जगदाकारतातथ ॥ स्थिरचेतन राशिस्थात् स्वयञ्च चयचित्कणत: । म: स्थादिव्यवहारस्यलोपप्रसङ्ग दाढथ: ॥ ममतु॰ज्ञागरादिभ्रमाधिष्ठानस्थाखण्डबोधानन्दरूपस्यब्रह्मण: साचात्कारोबाधकोस्ति ॥ ५ ॥ बाह्यास्तित्ववादोऽपिनयुक्तिसह:। यथा । स्थिरचेतनराशित्वात् स्वयञ्चाचेतनत्वत: । नस्कन्धानामणूनांवासमुदायोऽवयुज्यते ॥ ६ ॥ सप्तपदार्थीवादश्चनयुक्तिसह:। यथा । एकस्मिन् सदसत्वादिविरुद्धप्रतिपादनात् । अपन्याय: सप्तभङ्गीनचजीवस्यसांशता ॥ अस्यार्थ: । स्यादस्ति १ । स्यान्नास्ति २ । स्यादस्तिचनास्ति च ३ । स्यादवक्तव्य: ४ । स्यादस्तिचाऽवक्तव्य: ५ । स्यान्नास्तिचावक्तव्य: ६ । स्यादस्तिचनास्तिचावक्तव्यश्चेति ७ । सप्तभङ्गीवाक्यानि । तेषुचस्याच्छब्द: ईषदर्थवाचीनिपात:। तदयंचपूर्वपक्षश्लोकोक्तानांसद्वादसद्वाद्‌भयवाद्यनिर्वचनीयवाद्यसदनिर्वचनीयवादाद्‌भयानिर्वचनीयवादिनांमतानि । क्रमेणाभिहितानि । तेचवादिन: समागत्याहर्म्मं प्रतिकिन् तन्मते मोचोस्तीत्यादिसर्व्वमतं क्रमेणपृच्छन्ति । तत्राहर्न् तान् प्रतिप्रश्ने क्रमेणतान्येववाक्यानोयत् तन्मताभ्युपगमनार्थं कानिप्थक् प्थगेवोत्तरत्वेनब्रूते । तावतासर्व्ववादिनोनिर्विषण्णा: सन्तोनोत्तरं प्रतिपद्यन्तेएवंविधस्तेषांसप्तभङ्गीरूपोयं न्यायोऽपन्याय एव॰ अपकृष्टोन्यायोन्यायाभ्यास एवेत्यर्थ: । कुतइत्यतआह । एकस्मिन्निति । एकस्य जीवपदार्थस्यसदादिनंप्रतिसद्रूपत्वम्॰ असदादिनं प्रत्यसद्रूपत्वञ्चत्येवमादिविरुद्धधर्म्मप्रतिपादकत्वात् । नचजीवस्यसावयवत्वं युज्यते॰ शरीरादिवदनित्यत्वप्रसङ्गात् । तदनित्यत्वेमोच: कस्यपुरुषार्थ: स्यात् । तस्मान्न्यायाभासेनसप्तभङ्गाख्येनजीवादिपदार्थानांनसिद्धिरिति ॥ ततश्चपारिशेष्याज्जगतोमायामयत्वसिद्धि:। तदुक्तम् । ततोनिरंशआनन्दे विवर्त्तोजगदिष्यताम् । अवस्थान्तरभानन्तुविवर्त्तोरज्जु सर्पवत् ॥ मायाशक्ति: कल्पिकास्यादिन्द्रजालिकशक्तिवत् । शक्ति: शक्तात्पृथङ्नास्तितद्वद्दृष्टेनचाभिदा ॥ प्रतिबन्धस्यदृष्टत्वाच्छक्त्यभावेतुकस्यस: । शक्ते:कार्यानुमेयाया अनिर्वाच्यत्वमिष्यताम् ॥ इति ॥ वदनम् । वदव्यक्तायाम्वाचि । घञ् ॥

बादकः । त्रि० वाद्यकरे ॥ वक्तरि ॥

बादनम् । न० वाद्ये ॥ शिवागारेझल्लकस्वसूर्यागारेचशङ्खकम् । दुर्गागारेवंशिवाद्यंमधुरीञ्चनवादयेत्

बादफलम् । न० तत्त्वनिर्णये ॥

बादरम् । न० कृष्णालाबीजे । कार्पासविञ्च्याबीजे ॥ दक्षिणावर्त्तशङ्खे ॥ चीरे ॥ कार्पासविस्तायाम् ॥ भारद्याम् ॥ कृमिजे ॥ जले ॥ कार्पासीफले ॥ बदराया विकारः फलम् । अवयवेचेत्यण् । तस्य फलेलुक् । बदरस्य विकारः । तस्य विकार इत्यण् । त्रि० कार्पासीनिर्मितवस्त्रादौ ॥

बादरङ्गः । पुं० अश्वत्थवृक्षे ॥

बादरा । स्त्री० कार्पास्याम् ॥

बादरायणः । पुं० व्यासदेवे ॥

बादरायणिः । पुं० शुकदेवे ॥ व्यासतनये ॥ बादरायणस्यापत्यम् । अतइञ् ॥ व्यासदेवे ॥

बादलम् । न० मधुयष्टिकायाम् ॥

बादवादी । पुं० जिनभेदे । आर्हते ॥

बादवित् । त्रि० धातुवादीमन्त्रशादर्शे त्वादये । वादावस्तुभूतामवश्नीति वादज्ञे ॥ आत्मनैवैषा० ताम्रादिभावेस्थितेनष्टे अकनकादिस्वभावासम्भावात् । मन्त्रवादेपि० कालदष्टोनजीवति । अकालदष्टः स्वयमेवैत्याश्वतीत्यभ्युपगमात्० व्या

मोहमात्रमेव ॥ बादज्ञे ॥

बादान्यः । त्रि० बहुदातरि । बहुप्रदे ॥

बादमम् । न० बाद्दामे । बातादे ॥

बादालः । पुं० मत्स्यप्रभेदे । सहस्रदंष्ट्रे । बोयालि० इ० गौ० दे० भाषाप्रसिद्धे ॥

बादिः । त्रि० विदुषि ॥ वक्तरि ॥ बादयति । वद० । वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् । सूत्रे बादीतिण्यन्तो निर्दिष्टः । बाहुलकादण्यन्तादपि । तथाच भूवादिसूत्रे० वदश्नीति बादयो वाचका इति न्यासकारादयः ॥

बादित्रम् । न० आतोद्ये । बाद्ये ॥ बाद्यते० ध्वन्यते । वदेर्ण्यन्तात् । भूवदिगृभ्यो णित्रन्० इति० णित्रन् ॥

बादी । त्रि० वक्तरि । वदनशीले ॥ अर्थिनि । विवादकर्त्तरि । पुका इ० बादू० इ० भा० प्र० पूर्व्वपक्षकर्त्तरि । वादोऽस्यास्ति । इनिः ॥

बादिरम् । न० बदरीसदृशसूक्ष्मफलवृक्षे ॥

बादिराट् । पुं० पूर्वजिने । मञ्जुघोषे ॥

बादिराजः । त्रि० वादिश्रेष्ठे ॥ बादिनां राजा । टच् ॥ पुं० मञ्जुघोषे ॥

वादिशः। त्रि० साधुवादिनि ॥

वाद्यम्। न० वादनीये। वादित्रे। आतोद्ये ॥ वाद्यते ध्वन्यते। वदेर्ण्यन्तात् यत् ॥ तच्चतुर्विधं यथा। ततं वीणादिकं वाद्यमानद्धं मुरजादिकम्। वंश्यादिकन्तु शुषिरं कांस्यतालादिकं घनम् ॥ अथवा द्वानि। तालेन राजते गीतं तालो वादित्रसम्भवः। गरीयस्तेन वादित्रं तच्चतुर्विधमुच्यते ॥ ततं शुषिरमानद्धं घनमित्थं चतुर्विधम्। ततं तन्त्रीगतं वाद्यं वंशाद्यं शुषिरन्तथा। चर्मावनद्धमानद्धं घनं तालादिकं मतम् ॥ तत्र ततं यथा। अलावनी ब्रह्मवीणा किन्नरी लघुकिन्नरी। विपञ्ची वल्लकी ज्येष्ठा चित्रा घोषवती जया ॥ हस्तिका कुब्जिका कूर्मी शारङ्गी परिवादिनी। त्रिशवी शतचन्द्री च नकुलोष्ठी च ढंसवी ॥ औडम्बरी पिनाकी च निबन्धः शुष्कलस्तथा। गदावारणहस्तश्च रुद्रोऽथ शरमण्डलः ॥ कपिलासो मधुस्यन्दी घोणेत्यादि ततं भवेत् ॥ अलावणी यथा। कनिष्ठिकापरिध्यर्द्धमध्यच्छिद्रेण संयुतः। दशयष्टिमितो दण्डः खादिरो वैणवोऽथवा ॥ अधः करभवानूर्द्ध्वच्छत्रावल्याभिशोभितः। नवाङ्गुलादधश्छिद्रोपरि चन्द्रार्द्धसन्निभाम् ॥ निवेश्य चुम्बिकां भद्रालाबुखण्डं निवेशयेत्। द्वादशाङ्गुलविस्तारं दृढपक्वं मनोहरम् ॥ तुम्बिकाविधमध्येन दण्डच्छिद्रे तु निर्मिताम्। अलाबुमध्यगां डोरीं कृत्वा स्वल्पान्तु काष्ठिकाम् ॥ तथा संवेष्ट्य तन्मध्ये काष्ठिकां भ्रामयेत्ततः। यथा स्यान्निश्चलालाबुर्बन्धस्य ककुभोपरि ॥ पञ्चाङ्गुलिषु सन्त्यज्यालाबुं स्वल्पास्वबन्धयेत्। केशान्तनिर्मिता पट्टमयी सूत्रकृताथवा ॥ समा सूक्ष्मा दृढा तन्त्री तत्र देया विचक्षणैः। एतल्लक्षणसंयोग्यान्यालावणी प्रकीर्त्तिता ॥ विन्दुनानसमुपेतं तुम्बं निःक्षिप्य वक्षसि। मध्यमानामिकाभ्याञ्च वाद्या दक्षिणपाणिना ॥ तारे मन्द्रे च घोषे च विस्थाने विन्दुरिष्यते। तुम्बीमूलं समुत्पद्य वामाङ्गुष्ठेन धारयेत् ॥ ततस्ताभिस्तु सर्वाभिः स्वरव्यक्तिर्विधीयते। त्रिस्वरो दक्षिणः पाणिर्वामस्तत्र चतुःस्वरः ॥ अलावण्यां स्थिता ज्ञेयाः सप्त षड्जादयः स्वराः। रागव्यक्तिर्यथा रागे भवेत् षड्जादिभेदतः ॥ अंशन्यासविभेदाश्च तथा चापि विधीयते। द्वयमलावणी प्रोक्ता मनःश्रवणरञ्जनी ॥ प्रत्यक्षा शारदा देवी वीणारूपेण संस्थिता। इत्यलावणी ॥ अन्येषां लक्षणं विस्तरभयान्नोक्तम् ॥ शुषिरं यथा। वंशी पारी मधु

वाद्यम्

रीतित्तिरीशङ्खकाहला : । तोडही मुरलीबुक्का शृङ्गिकाखरनाभय : ॥ शृङ्गं कापालिकं वंशयमं वंशस्तथा पर : । एते शुषिरभेदास्तुकथिता : पूर्वसूरिभि : ॥ वर्त्तुल : सरलश्चैकपर्वदोषविवर्ज्जित : । वैणव : खादिरोवापिरक्तचन्दनजोऽथवा ॥ श्रीखण्डजोऽथसौवर्णोदन्तिदन्तमयोऽपिवा ॥ राजतस्ताम्रजोवापिलौहज : स्फाटिकोथवा । कनिष्ठाङ्गुलितुल्येनगर्भरन्ध्रेणशोधित : शिल्पविद्याप्रवीणैर्नवंश : कार्योमनोहर : ॥ वंशेनैवमतोपीतिमतङ्गमुनिनोदितम् । ततोऽन्येपितदाकारावंशाएवप्रकीर्त्तिता : ॥ तत्रत्यस्याशिरोदेशा द्वेविङ्गितमङ्गुलम् । फूत्काररन्ध्रं कुर्वीतमितमङ्गुलिपर्वया ॥ पञ्चाङ्गुलानिसन्त्यज्यतावद्रन्ध्राणिकारयेत् । कुर्यात् तथान्यरन्ध्राणिसप्तसङ्ख्यानिकौशलात् ॥ बदरीबीजतुल्यानिसन्त्यज्यार्द्धार्द्धमङ्गुलम् । प्रायशोवंश्यनं कार्यैस्वरार्थैर्नादहेतवे ॥ सिक्थकेनकलादेयातेनसुस्वरताभवेत् । पञ्चाङ्गुलोयं वंश : स्यादेकैकाङ्गुलिवर्द्धित : ॥ षडङ्गुलानिनाम्नाख्यायावदष्टादशाङ्गुलम् । फूत्कारताररन्ध्रस्ययावदङ्गुलिमन्तरम् ॥ तदेवनामवंश

वाद्यम्

स्त्वर्वांशिकै : परिकीर्त्त्यते । एकाङ्गुलोद्वाङ्गुलस्त्र्यङ्गुलश्चतुरङ्गुल : ॥ अतितारतरत्वेनवांशिकै : समुपेक्षित : । अयोदशाङ्गुलोवीणापर : । निन्दितोवंशतत्त्वज्ञैस्तथासप्तदशाङ्गुल : ॥ महानन्दस्तथानन्दोविजयोथजयस्तथा । चत्वारउत्तमावंशामतङ्गमुनिसम्मता : ॥ दशाङ्गुलोमहानन्दोनन्दएकादशाङ्गुल : । द्वादशाङ्गुलमानस्तुविजय : परिकीर्त्तित : ॥ चतुर्दशाङ्गुलमितोजयइत्यभिधीयते । ब्रह्मारुद्रोरविर्विष्णु : क्रमादत्रव्यवस्थिता : ॥ नैविडं प्रौढताचापिसुस्वरत्वञ्च शीघ्रता । माधुर्यमितिपञ्चामीफूत्कृतेषुगुणा : स्मृता : ॥ शीत्कारबहुल : स्तब्धोविस्वर : स्फुटतोलघु : । अमधुरश्चविज्ञेया : षड्दोषा : फूत्कृतेक्रमात् ॥ यथाप्रयोगबाहुल्यमल्पतागीतशब्दने । एभिर्दोषैर्युतोतोवनिन्दितोवांशिकोमत : ॥ स्थानकादिलयाभिज्ञोगमकाढ्य : स्फुटाक्षर : । शीघ्रहस्त : कलाभिज्ञोवांशिकोरक्तउच्यते ॥ प्रमुक्तिर्वद्धमुक्तिश्चयुक्तिश्चेत्यङ्गुलेर्गुणा : । मुख्यानलंसुस्वरत्वमङ्गुलीसारणक्रिया ॥ समस्तगमकज्ञानं रागरागाङ्गवेदिता । क्रियाभाषाविभा

षामुदञ्चता गीतवादने ॥ स्वस्थाने चापि दुःस्थाने नादनिर्माणकौशलं । गातॄणां स्थानदातृत्वं तद्दोषाच्छादनं तथा ॥ वांशिकस्य गुणा एते मया सङ्क्षिप्य दर्शिताः ॥ इति वंशः ॥ ॥ काहला स्त्री निषङ्गः । तोडही मुरली वुक्का इत्यन्ये ते च स्त्रियां सप्तस्वराणां नाभिरिव स्वरनोभिः स्त्रियां वर्त्तते । इतरेषां विस्तरभयान्नोक्तम् ॥ ॥ आनद्धं यथा । आनद्धे मर्द्दलः श्रेयान् इत्युक्तं भरतादिभिः । अपि च । मुरजपटहढक्काविश्वकोदप्वाद्यं पणवघनसरुञ्जालावजाल्लचिश्नल्यः । करटक-मठभेरीश्चात्कुडुक्काहुडुक्काभनसमुरलीभल्लीढुक्कलीदौण्डिगाना ॥ डमरुटमुक्किमड्डुः कुण्डलीस्तुङ्गनामारणमभिघटवाद्यं दुन्दुभीश्वर जघ । क्वचिदपि टुटुकौश्चाद्दर्दुरं चाप्युपाङ्गं प्रकटितमनवद्धं वाद्यमित्यं जगत्याम् ॥ त्रिपुरमथनकर्त्तुस्ताण्डवे तत्प्रयाणे ततमुखशुषिरस्थानद्धमित्यं घनस्य ॥ ॥ मर्द्दलः खादिरः श्रेष्ठो हीनः स्यादन्यदारुजः । रक्तचन्दनजो वाद्यो गभीरध्वनिरुच्चकैः ॥ सार्द्धहस्तप्रमाणस्तु दैर्घ्यमस्य विधीयते । चयोदशाङ्गुलं वाममथवा द्वादशाङ्गुलम् ॥ दक्षिणस्य भवेद्धीनमेकेनार्द्धाङ्गुलेन



वा । करणानद्धवदनामध्ये चैव पृथुर्भवेत् ॥ षण्मासीयो भवेद्धस्तस्त्वम करणं मतम् । मृत्तिकानिर्मितश्चैव मृदङ्गः परिकीर्त्तितः ॥ पातयेत् खरलिं वाद्यसादनार्थं स्वमर्द्दले । विभूतिर्गैरिकं भक्तं किन्तु केनचसंयुतम् ॥ यद्वा चिपीटकं देयं जीवनीसत्त्वमिश्रितम् । सर्वमेकत्र पिष्टं तल्लेपः खरलिरुच्यते ॥ वामास्ये पूरिकां कृत्वा लेपं दद्यात् दक्षिणे ॥ एवं मर्द्दलकः प्रोक्तः सर्ववाद्योत्तमो मतः ॥ अस्य संयोगमासाद्य सर्व्ववाद्यं प्रशोभते । एतदङ्गे शौजकाष्ठेदलमर्द्धाङ्गुलं विदुः ॥ तधिधोतेमितिर्ज्ञेयाः पाठवर्णाः मृदङ्गजाः । थोंद्दं ढें धिक्कटस्तद्धीताकं दं दं धेगं धिधि ॥ खर्भंभिं नं गटं दं थाकूटपाटामतायभी । तथिं थोंढें तक्कधीदों दं दं धिगणांततं तधि ॥ तक्कतं धं धिदोंताधिपाटखण्डेत्वयं क्रमः ॥ तथा च यतिमाने पाटखण्डः । द्रगतथें जां द्रगतथें जां धेधे धिकताधिकाथे जां थे जां तकतता धिकाथेता द्रगतता धिधि धिधिकतताकडना थे धिकथे जां धे ता द्रगतता द्रतता धि । इति यतिमाने पाटखण्डः ॥ ॥ यतिरोढाप्यवक्कोदोगजरोरूपकं ध्रुवम् । गलपः सारिगीणीचनाद

स्वकथितं तथा ॥ प्रहरणं वन्दनञ्च
प्रबन्धाद्वाद्यसम्मता: । यथा । दं
थातइत्थं कताल्यांयति: ॥ चोढ
वाद्यंयथा । दांतथोतधिकतधिक
दं थादंथाथोधिथोधितत्ततत्तथविथ
त्रिदिग्न्नांदिग्न्नांटटनकिटटनकित
दटङ्गतंटंदगथवटङ्गथवटङ्गत
गिनगितगिनगिदांदांदंदंदौंदौंदंता
तथा । इत्योढवाद्यम् ॥ अवच्छे द्यौ
वाद्यंयथा । दंथात: दंथात: धि
क्किधिक्किदिगणं दंथात: । इत्यव
च्छेदवाद्यम् ॥ ॥ गजावाद्यं
यथा । थोकटे जनेजढेङे गथोगथो
ङगटेङ्कथोगतकिधिकटे ङ्कनधिधि
कटतकथोकतधिकटतक्ककतथोग
तद्धीम् । इत्थं कताल्यांगजर: ॥
रूपकवाद्यंयथा । तकधिक्तक
धिक्कथवितकिथवितक्किधिक्कदंथात:
। इतिरूपकवाद्यम् ॥ ध्रुवकवा
द्यंयथा । तक्कतक्कटधिक्कधिक्कट ।
इतिनिसारतालेध्रुवक: ॥ ॥
गलपोयथा । तधिद्धिभिकतकतधि
गलगंथाथादेंतथाढेनञ ॥ इत्थं
कताल्यांगलप: ॥ ॥ सारिगो
णीयथा । थोङ्गटे ञ तक्कधिक्कत
कधिक्तकथो । हटङ्गनहटङ्गनथो
गक्कथो: । इतिप्रथमखण्ड: ॥ ॥
टे अथो: धिथोह: टे अटे अदक्
कतगदक्कधिक्कतदिदक्कदंगदं

गथोगथोक्क तकतक धिकत धिकत
धोटे अधोटे अथटे गलखोगगलखो
गखोहटगेंटगेंखोहटञ । इत्यस्यक
न्दनम् । इतिसारिगोणी ॥ ॥
नादोयथा । दांकारचितयंपूर्वं दां
धिगिति ततस्त्रयम् । दांदांधिक
चयंयञ्चइतिनाद: शचीप्रिय: ॥
इतिनाद: ॥ । द्रुतंमानसमार
ब्धं शुद्धं कूटविनिर्मितम् । सप्त
खण्डमयंवाद्यंकथितंतदिहोच्यते
॥ द्रुतमानत्वात्प्रतितालियथा ।
तत्ततत्ततत्तक्कितक्किदिदंधि
गनथोधिगनथोधिक्कधिक्धिक्क
धिक्कधिक्नगिनगमिथोथोधिधि
धि: दांदांधिक्कथोथोथोहथोह
नजिथोनजिथोथोहथोहङे ढिङे
ढिथोहथोहतटितटितटकगौंगौंध
गिधगिततधे ततधेततगिङौं
अङौंथोगथोगथौंथोगगथोगथोतत्ता
ता । इतिसप्तपदान्याहु: कथितं वा
द्यपण्डितै: । प्रतितालेनतालेन
पादवर्णसमासत: ॥ गन्धर्वपति
नापूर्वं मूर्धं शीलास्यनर्त्तने । सुध
र्मारञ्जनार्थंस्वकथितं प्रकटीकृतम्
॥ ॥ प्रहरणं यथा । थोगक्का
तद्धिकाथागकटगगोंदंथोगदिद्
धिकधिक्कदिकटे ञ । इत्थं कता
ल्यांप्रहरणम् ॥ ॥ वाद्यंविमुच्य
तेयेनछन्दनंतन्निगद्यते । यथा ।

तदृधिधोदिजटैजतन्न : । इति च्छन्दनम् ॥ ॥ कलासीविक्कलास ष्टाकलीचार्द्धटाकली । जोला टाकलिकाचैव गोमुद्रीमुरजस्तथा ॥ अलावुजवाद्यान्नि च्छवाद्यम् । मर्द्दलस्वयोदशाङ्गुलवाममुखोद्वाद शाङ्गुलदचिणमुखः । मुरजस्त्वष्टा दशांगुलवाममुख : सप्तदशांगुलद चिणमुख : । मर्द्दलमुरजयोरयंभे द : ॥ -॥ घनंयथा । अनुरक्तं विर क्तञ्चद्विविधंघनवाद्यकम् । गीता नुगमनुरक्तं विरक्तंतालसंश्रयम् ॥ कर ताल : कांस्यवलीजयघण्टोघशुक्ति का । कम्बिकापटवाद्यञ्चपट्टा तोघस्वघर्घरम् ॥ भाञ्भातालश्च मञ्जीरकर्त्तयुंद्धुरङ्गपि । द्वादशे तेमुनीन्द्रैर्गाकथिताघनसंज्ञका : ॥ चयोदशाङ्गुलव्यासौशुद्धकांस्यवि निर्मितौ । मध्यमुखौस्तनाकारौत न्मध्ये रज्जुगुम्फितौ । पद्मिनीपत्र सदृशौकराभ्यांरज्जुयन्त्रितौ । कर तालावुभौवाद्यौपाटैर्भानटकैरि ति ॥ यद्वाचयोदशयवव्यासंवक्त्रय वोन्मितम् । यवपञ्चकगम्भीरंमध्ये चयवसप्तकम् ॥ विस्तृतंवर्त्तुलंनि म्नंयवचयमितंततः । पृष्ठतोमध्य देशेचशिवलिंगसमाकृतिम् ॥ अ च्यल्पे ष्टौनिर्दिग्धशुद्धकांस्यवि- निर्मितम् । संरक्ताङ्गुलिमुक्ति



गधसुदीर्घमधुरध्वनिम् ॥ घनानि साविसंरक्तं दृढंशुष्कंमनोहरम् । काश्मीरादिसमुद्भूतंतालमाहुर्मनी षिण : ॥ सुनादंदक्षिणतालंततो हीनञ्चवामकम् । कुर्वीततद्द्व यंकार्यंतज्ज्ञैर्न्यङ्गुष्ठयोगतः । वा मह्स्तस्थतालस्यमध्यमंसन्निनादि- तम् । तिर्यग्दक्षिणतालस्यपरि व्यंशेनतालयेत् ॥ तालादौवाद्ये च्चैवमुक्तदीर्घलघुद्रुतैः । इतिक रतालविशेष : । कर्त्तरीघनविशे ष: । उद्धुरश्चघनविशेषोऽदन्तरेफा क्तपुंल्लिङ्ग: अन्येषांलक्षणंविस्तर भयान्नोक्तम् ॥ ॥ रुक्मिण्या : स त्यभामाया : कालिन्दीमित्रविन्द यो : । जाम्बवत्यानाग्निजित्याल क्ष्मणाभद्रयोरपि ॥ कृष्णस्याष्टमहि षीणांपुरोद्वाहमहोत्सवे । ततंशुषिर मानद्धंघनञ्चयुगपज्जना: ॥ अवा दयन्नसङ्ख्यातमितिपौराणिकी- श्रुति : । ततंवाद्यन्तुदेवानांगन्ध र्वाणाञ्चशौषिरम् ॥ आनद्धं राक्षसानान्तुकिन्नराणांघनंविदु : । निजावतारेगोविन्द : सर्वमेवानय त्क्षितौ ॥ यावन्तिवाद्यभांडानि रामरावणयोर्युधि । तावन्त्योनाभ वन्सेना: कुरुपाण्डवसङ्गरे ॥ ॥ किञ्च । निलिम्पहृत्कम्पनतोम रेणरणे सुरारेर्मथनात्सुरेण । अ

भूत्ततोवाद्यैरपिसिंहनादैः साप
ञ्चशब्दीतिकथावादः ॥ युद्धे
सैन्यानांयोऽहङ्काररवः ससिंहना
दः । ततादिभिरेभिश्चतुर्भिर्वाद्यै
श्च मूर्नांसिंहनादैश्चपञ्चशब्दीवाद्य
मभूत् । सिंहनादेनसहवाद्यंपञ्च
विधंभवतीत्यर्थः ॥ इतिसङ्गी
तदामोदरः ॥ शिवागारेझल्लक
ञ्चसूर्यागारेचशङ्खकम् । दुर्गा
गारेवंशीवाद्यंमाधुरीञ्चनवाद
येत् ॥ झल्लकंकांस्यनिर्मितकर
तालम् । इतियोगिनीतन्त्रम् ॥
मत्स्यपुराणेपि । गीतवादित्रनि
र्घोषंदेवस्याग्रेचकारयेत् । विरि
ञ्चिस्वगृहेढक्कांघण्टांलक्ष्मीगृहेत्यजेत्
॥ घण्टाभवेदशक्तस्यसर्ववाद्यमयी
यतः ॥

वाद्यभाण्डम् । न० वादनीयपात्रे ॥

वाद्यकरः । त्रि० वादित्रकर्त्तरि ।
बजन्त्रीतिभाषाप्रसिद्धे ॥

वाधनम् । न० बाधायाम् ॥

वाधुक्यम् । न० विवाहे ॥

वाधूः । पुं० वहित्रे ॥

वाध्रीणसः । पुं० खड्गे । गण्डके
॥ वार्ध्रीणसे ॥ पक्षिविशेषे ॥
यथा । रक्तग्रीवोरक्तशिराः श्वेत
पक्षोविहङ्गमः । स वै वाध्रीणसः
प्रोक्तइत्येषानैगमीश्रुतिः ॥

वानम् । न० स्यूतिकर्म्मणि । सीवने
॥ कटे ॥ गतौ । गमने ॥ जलस
मुत्थवातोर्म्याम् ॥ सुरुङ्गायाम्
॥ सौरभे ॥ गोचीरजीतवचीरे ॥
वाजिनांगतौ ॥ त्रि० शुष्कफले ॥
शुष्के ॥ वनजे । वनसम्बन्धिनि
॥ वायतिस्म । वै शोषणे ।
गत्यर्थाकर्मकेतिक्तः । श्रोदितश्चे
तिनत्वम् ॥ वन्यते । वनुयाचने ।
घञ् वा ॥

वानप्रस्थः । पुं० मधूकवृक्षे । गुड
पुष्पे । किंशुके । पलाशवृक्षे ॥
तृतीयाश्रमे ॥ सचकलौनास्त्येव ॥
वनमिवप्रस्थोवनस्यवाप्रस्थः प्रवे
शः । वनप्रस्थेवनैकदेशेभवः ।
तत्रभवः इत्यण् ॥

वानरः । पुं० मर्कटे । कपौ । प्लव
ङ्गे । शाखामृगे । बन्दर० इ०
भा० ॥ वनेभवम् ० फलादि० वा
नम् । अण् । वानंराति । रा० ।
आतोनुपसर्गेकः ॥ यद्वा । वान
म् । वा० । सम्पदादित्वात्क्विप्
। वा० गमनेपि० नृणाति० वाल
कम् नृनये । पचाद्यच् ॥

वानरप्रियः । पुं० चीरिवृक्षे ॥

वानराक्षः । पुं वनच्छागे ॥

वानराघातः । पुं० लोध्रवृक्षे ॥

वानरी । स्त्री० मर्कट्याम् । बांदरी
० इ० भा० ॥ वानरस्यस्त्री । ङीष्
॥ शूकशिम्ब्याम् ॥ वानरीइवविवि

धचेष्टाहेतुत्वात् ॥

वानरेन्द्रः । पुं० सुग्रीवे ॥ वानराणा मिन्द्रः ॥

वानलः । पुं० बाथवे । कालीवाचु ह०ह० भा० ॥

वानस्पत्यः । पुं० पुष्पजातफलवृक्षे ॥ वानस्पत्यः फलैः पुष्पादित्य मरः ॥ वनस्पतिः । पारस्करा दित्वात्सुट् । वनस्पतीभवः । दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः वनस्पतिसमूहे ॥ तस्यसमूहइत्यर्थे०प०वे०ष०ण्यः ॥

वाना । स्त्री० वर्त्तिकापक्षिणि ॥

वानायुः । पुं० हरिणे ॥ वनंवनभु वमयते । अय० । बाहुलकादुण् ॥ भारतवर्षस्योत्तरपश्चिमस्थेदेशविशे षे ॥ बहुवचनान्तः ॥

वानायुजः । पुं० हयविशेषे ॥ वनायु जाताः । सप्तम्यांजनेर्डः । सए व । प्रज्ञादाण् ॥

वानीरः । पुं० वेतसे । वञ्जुले ॥ वायति । पैओवैशोषणे । क्विप् वांशुष्कमासमन्तान्नीरमस्य ॥

वानीरकः । पुं० मुञ्जतृणे ॥

वानीरजम् । न० कुष्ठे । कूटह० प्र० ओषधौ ॥

वानेयम् । न० कैवर्त्तीमुस्तके । मो थाख्ये ॥ वनेपानीयेजायते । नद्या दिभ्योढक् ॥

वान्तम् । न० उद्गीर्णे ॥ त्रि० कृतव मने ॥

वान्तादः । पुं० कुक्कुरे ॥ वान्तम त्ति । अण् ॥

वान्ताशी । त्रि० उद्गीर्णाशिनि ॥ पुं० शुनि ॥

वान्तिः । स्त्री० उल्लेखने । वमने ॥

वान्तिकृत् । पुं० मदनद्रुमे । मदनफ ल०ह०भा०प्र० ॥ वान्तिंकरोति । डुकृञ्० । क्विप् । तुक् ॥

वान्तिदा । स्त्री० काट्काम् ॥

वान्या । स्त्री० वनसमूहे ॥

वापः । पुं० क्षेत्रे ॥ उप्यतेऽस्मिन् । डु वप् घञ् ॥ वपने ॥

वापकः । त्रि० वपनकारयितरि ॥

वापदण्डः । पुं० तन्तुवायदण्डे । वेम नि ॥ वपनम् । डुवप्० । घञ् । वापस्यदण्डः ॥

वापिः । स्त्री० वापिकायाम् ॥ उप्य तेपद्मादाऽस्याम् । डुवप्बीजसन्ता ने । वसिवपियजिराजिव्रजिसदिह निवाशिवादिवारिभ्यइञ् ॥ भावे इञ्०वपादिभ्यइतीञ्वा ।

वापिका । स्त्री० वाप्याम् ॥

वापितः । त्रि० मुण्डिते ॥ बीजाकृ ते । उप्तकृष्टे ॥ न०धान्यविशेषे । वेयाधान०ह०भा० ॥ वापितंयुक्त तद्धान्यंकिञ्चिद्धीनमवापितं ॥

वापी । स्त्री० दीर्घिकायावे ॥ वद्धस्ते

पानकूपे ॥ पाषाणैरिष्टिकाभिर्वा बद्धकूपाद्वहत्तरा । ससोपानाभवेद्वापीप्राहुः शास्त्रविशारदाः ॥ प परिमाणे नद्रोणादष्टगुणावापीति । यथा । नव्यवर्द्धमानधृतोवशिष्ठः । शतेनधनुर्भिः पुष्करिणी० त्रिभिः शतैर्दीर्घिका० चतुर्भिर्द्रोणः पञ्चभिस्तडागः द्रोणाद्दशगुणावावापी। तेनचतुर्विंशत्पञ्चविंशदूधस्तान्यूनतायांद्वादशशतहस्तान्तरान्यूनत्वेनदीर्घिका ॥ चतुर्विंशचत्वारिंशद्धस्तान्यूनतायांषोडशशतहस्तान्तरान्यूनत्वेनद्रोणः । चतुर्विंशत्रिंशदधिकशतहस्तान्यूनतायामृषोडशसहस्रहस्तान्तरान्यूनत्वेनवापीतिजलाशयोत्सर्गतत्त्वम् ॥ येवापीमथवाकूपंदेशेवारिविवर्ज्जिते । खानयेत्सदिवंयातिविन्दौविन्दौशतंसमाः ॥ तज्जलगुणास्तु । वाप्यंगुरुकटुक्षारंपित्तलंकफवातजित्० इ० । उप्यतेपद्मादिकमस्याम् । डुवप० । वसिवपील्यादिना०-इञ् । ततः कृदिकारातिपाक्षिकोङीष् ॥ याचायोमान्तरे ॥ यथा । एकान्तरगतेलग्नात्कुमेखटेऽथवाऽशुभे । वापीयोगस्त्वरित्रातितिमिरौघदिवाकरः ॥

वापीहः । पुं० चातकखगे ॥

वाप्यम् । न० कुष्ठौषधे । पारिभाव्ये ॥ वाप्यांभवम् । दिगादिभ्योयत् ॥ वापीजले ॥ वाप्यंवारियदिक्षारंपित्तकृत्कफवातहृत् । तदेवमिष्टंकफकृद्वातपित्तहरंभवेत् । त्रि० वापीभवे ॥

वाभ्रवी । स्त्री० चण्ड्याम् । दुर्गायाम् । बभ्रोरपत्यंस्त्री । अण् । ङीप् ॥ बभ्रोर्विष्णोरियंश ॥

वाम् । अ० युवामित्यर्थे ॥

वामः । पुं० उमानाथे । हरे ॥ कामदेवे । पयोधरे ॥ न० धने ॥ वास्तुके ॥ पुण्यकर्मफले ॥ त्रि० वल्गौ । चारौ । शोभने । अतिसुन्दरे ॥ प्रतीपे । प्रतिकूले ॥ सव्ये ॥ वमति० वम्यतेवा । टु वमउद्गिरणे । ज्वलितिकसन्तेभ्योणः भावेघञ्वा ॥ यद्वा । वाति । वागतिगन्धनयोः । अस्मिंस्तुक्षितिमन् ॥

वामदृक् । स्त्री० वनितायाम् ॥ वामामनोहराहक्दृष्टिर्यस्याःसा ॥

वामदेवः । पुं० शिवे ॥ वामयति० दुष्टानांमदमितिवामः । टुवम्० । णिजन्तात्पचाद्यच् । वामश्चासौदेवश्च ॥ लोकविपरीतत्वात्० सुन्दरत्वाद्वावामः । सचासौदेवश्च ॥ ऋषिविशेषे ॥

वामदेव्यम् । न० सामविशेषे ॥ वामदेवेनदृष्टम् । वामदेवात्

ङात्ङो ॥

वामनः। पुं० अच्युते। हरौ। मन्व न्तरेप्यसम्प्राप्तेतथावैवस्वतेद्विज। वामनः कश्यपाद्विष्णुरदित्यांस म्बभूवहेतिविष्णुपुराणम्। अङ् कोठवृक्षे। दक्षिणाशास्थ्योद्गजे॥ मुमुक्षुभिः सम्भजनीये॥ त्रि० अ तिखर्वे। ह्रस्वे। बौना०हू०भा प्र०॥ खर्वत्वाद्वामनः वामयति स्थाजयतिमदम्। टुवम्०। नन्द्या दित्वाल्ल्युः॥ वामशब्दादस्त्यर्थे पामादित्वान्नोवा॥ न०अयुतंवामना स्यस्रैः श्रुतसङ्ख्याविशिष्टे महा पुराणविशेषे॥

वामनतीर्थम्। न० तीर्थविशेषे॥ त त्रकौशिकीदेवीतिष्ठति॥

वामनी:। पुं० अक्षिस्थे निरञ्जनेपुरु षे॥ वामानिपुण्यकर्मफलानि०पु ण्यानुरूपंप्राणिभ्योनयतिप्रापयती तितथा॥

वामनी। स्त्री० खर्वायांगवि॥ वमन प्रदौषधिप्रभेदे॥

वामनेत्रम्। न० सव्येचक्षुषि॥ नेत्र स्याधःस्फुरणमसकृत्सज्वरेभङ्गहेतु र्नेत्रोपान्ते हरतिनयनंनेत्रमूलेच मृत्युः। नेत्रस्योर्द्ध्वं हरतिसकलं मानसंदुःखजातं वामेचैवंफलम विकलंदक्षिणेवैपरीत्यम्॥

वाममार्गः। पुं० पुनः पुनर्गम नागमनवर्ज्जितेविद्याब्रतांमार्गे। देवयानाख्येऽर्चिरादिमार्गे शुक्लकृ ष्णेगतीह्येतेजगतःशाश्वतेमते। एकयायात्यनावृत्तिमन्ययावर्त्तते पुनः॥ दक्षिणादुत्तमंवाममित्युक्तं कुलार्णवे॥ अग्नेनयसुपथेति मन्त्रे० सुपथेतिविशेषणंदक्षिणमा र्गनिवृत्त्यर्थम्० निर्विण्णोऽहंदक्षि णेनमार्गेणगतागतलक्षणेन०अतो याचेत्वांपुनःपुनर्गमनागमनव र्ज्जितेनशोभनेनपथानयेत्याचार्य्य भाष्यम्॥

वामलूरः। पुं० नाकौ। वल्मीके। बांबी० हू० भा० प्र०॥ वामैर्वा मंवा० लूयते। लूञ्छेदने। बा हुलकाद्रक्॥

वामलोचना। स्त्री० उत्कृष्टस्त्रीविशे षे॥ वामःकामोलोचनेयस्याःलोच नेनेत्रेवा० यस्याः यद्वा। वा मेसुन्दरेलोचनेचक्षुषीयस्याः॥

वामशील:। त्रि० वक्रस्वभावे॥ सु न्दरस्वभावे॥

वामा। स्त्री० नार्याम्। वनिताया म्॥ वमतिस्नेहम्। टुवम्० ज्व लादित्वाण्णः॥ यद्वा वामः का मोस्त्यस्याः। अर्शआद्यच्॥ दुर्गायाम्॥ बंसंविरुद्धरूपन्तुविप रीतन्तुगीयते। वामेनसुखदादेवी वामातेनमताबुधैः। पक्षिविशेषे॥

वामाक्षी । स्त्री० वामलोचनायाम् ॥ वामेमनोहरेअक्षिणीयस्याः । षच् । ङीष् ॥
वामाचारः । पुं० देवयानमार्गसाधकेदक्षिणाचारादुत्तमेसदागमविरोक्ताचारविशेषे ॥ वामस्यासावाचारश्च॥
वामापीडनः । पुं० पीलुवृक्षे ॥
वामिका । स्त्री० चण्डिकायाम् ॥
वामी । पुं० वामाचारयुक्ते ॥ वामः सव्यः सुन्दरोवादक्षिणादुत्कृष्टत्वादाचारः० सोऽस्यास्ति । अतइनि ठनाविनोतिः । नतबदक्षिणायान्तिनाविद्वांसस्तपस्विनः । तच्चश्चलोके ॥
वामिलः । त्रि० दाम्भिके । वामे ॥
वामी । स्त्री० शृगाल्याम् ॥ वडवायाम् ॥ रासभ्याम् ॥ करभ्याम् वामयति । टुवम्० स्वार्थण्यन्तः । मितांहस्वइत्यत्रवेत्यनुवृत्तेर्नह्रस्वः ॥ यद्वा । वंवरणममति । अमगत्यादौ । कर्मण्यण् । घञ्वा । गौरादिः ॥
वामोरूः । स्त्री० नारीविशेषे ॥ वामौसुन्दरौऊरूयस्याः । संहितशफलक्षणवामादेश्चेत्यूङ् ॥
वायकः । पुं० गणे । समूहे ॥ तन्त्रवायविशेषे ॥
वायदण्डः । पुं० वेमनि । वायदण्डे ॥ वयनम् । वेञ्तन्तुसन्ताने । भावेघञ् । आतोयुक् । वायस्यदण्डः ॥
वायनम् । न० व्रतोपायने । प्रहेणके । वायना० इ० भा० प्र० पृ० पादिद्रव्ये ॥
वायवी । स्त्री० वायुकोणे ॥
वायव्यम् । न० वायुदेवताकहविषि ॥ वायुदेवताकेऽस्त्रविशेषे ॥ वायुर्देवतास्य । वाय्वृतुपित्रुषसोयत् । गुणवादेशौ । त्रि० वायुसम्बन्धिदिगादौ ॥ न० षट्शतश्लोकाधिकचतुर्विंशतिसहस्रश्लोकात्मकेमहापुराणविशेषे ॥ वायव्यं षट्शतानिचचतुर्विंशतिसङ्ख्यातइतिदेवीभागवतोक्तेः ॥
वायसः । पुं० अगुरुवृक्षे ॥ श्रीवासे ॥ ध्वाङ्क्षे । काके ॥ वयतेः । वयगतौ । बयस्तेत्यसच् । णित् ॥ वायससमूहे ॥ तस्यसमूहइत्यण् ॥
वायसविरुतम् । न० शकुनविशेषे ॥
वायसादनी । स्त्री० तेजोवल्याम् ॥ महाज्योतिष्मत्याम् ॥ काकतुण्डाम् ॥
वायसारातिः । पुं० पेचके ॥ वायसस्यकाकस्यआरातिः ॥
वायसाह्वा । स्त्री० काकनामनि ॥ काकमाच्यां ॥
वायसी । स्त्री० काकोदुम्बरिकाया

म् ॥ काकमाच्याम् । महाज्योतिष्मत्याम् ॥ काकनामनि ॥ काकतुण्डाम् ॥ वायसानामियम् । तस्येदमित्यण् । ङीप् ॥ काक्याम् ॥

वायसेक्षु : । पुं० काशे । इक्षुगन्धायाम् ॥

वायसोलिका । स्त्री० काकोल्याम् ॥

वायसोली । स्त्री० काकोल्याम् ॥ वायसानुपोलगडयति । पोलडिउत् क्षेपे । अन्येभ्योपीतिड : । शकन्ध्वादि : ॥

वायु : । पुं० श्वसने । स्पर्शने । मातरिश्वनि । शब्दतन्मात्रसहितात् स्पर्शतन्मात्रादुत्पन्ने शब्दस्पर्शगुणे सर्वदाचलनस्वभावे रूपरहितस्पर्शवतिमारुते ॥ शरीरान्तर्वाह्यभेदेन वायुर्दशविधोयथा । प्राण : ॥ १ ॥ तस्यकर्मवहिर्गमनम् । अपान : ॥ २ ॥ तस्यकर्माधोगमनम् । व्यान : ॥ ३ ॥ तस्यकर्मकुञ्चनप्रसारणादि । समान : ॥ ४ ॥ तस्यकर्माऽशितपीतादीनांसमंनयनम् । उदान : ॥ ५ ॥ तस्यकर्म० ऊर्द्ध्वनयनम् । उद्गारेनाग ॥ ६ ॥ आख्यात : कूर्म ॥ ७ ॥ उन्मीलनेस्मृत : । कृकर : ॥ ८ ॥ क्षुत्करोज्ञेयोदेवदत्तो ॥ ९ ॥ विजृम्भणे ॥ नजहातिमृतञ्चापिसर्वव्यापीधनञ्जय : ॥ १० ॥ अन्यदप्युक्तंयथा । द्वितीयंमारुतोभूतंत्वगध्यात्मञ्चविश्रुता । स्पृष्टव्यमधिभूतञ्चविद्युत्तत्राधिदैवतम् ॥ अस्यगुणायथा । स्पर्शस्त्वगिन्द्रियञ्चापिलघुतास्पन्दनंतनो : । चेष्टासर्वशरीरस्यवायोरेतेगुणामता : ॥ अपिच । वायोरनियमस्पर्शोवादस्थानंस्वतन्त्रता । वलंशैघ्र्यञ्चमोक्षञ्चकर्मचेष्टात्मताभव : ॥ इ० म० भा० मोक्षधर्म : । अस्यार्थ : । अनियमस्पर्श : अनुष्णाशीतस्पर्श : ॥ १ ॥ वादस्थानम् ० श्रोगिन्द्रियगोलकानि ॥ २ ॥ स्वतन्त्रता० गमनादौ ॥ ३ ॥ वलम् ॥ ४ ॥ शैघ्र्यम् ॥ ५ ॥ मोक्ष : सूत्रादे : ॥ ६ ॥ कर्म० उत्क्षेपणादि ॥ ७ ॥ चेष्टा० श्वासप्रश्वासादि ॥ ७ ॥ आत्मता० प्राणरूपेणचिद्व्यञ्जकत्वम् ॥ ९ भव : जन्ममरणे ॥ १० ॥ इतिटीका ॥ न्यायमतेऽस्यगुणादिर्यथा । अपाकजानुष्णाशीतस्पर्शस्तुपवनेमत : । तिर्यग्गमनवानेषज्ञेय : स्पर्शादिलिङ्गक : ॥ पूर्ववन्नित्यताद्युक्तंदेहव्यापित्वगिन्द्रियम् । प्राणादिस्तुमहावायुपर्यन्तोविषयोमत : ॥ वायुंनिरूपयति० अपाकजइति । अनुष्णाशीतस्पर्शस्यपृथिव्यामपिसत्त्वात् ० अपाकजइति । अपाकजस्पर्शस्यजलादावपिसत्त्वादुक्तम् ० अनुष्णाशीतइति । एतेन

वायोर्विजातीयस्पर्शोदर्शितः । त
ज्जनकतावच्छेदकं वायुत्वमितिभा
वः । एषवायुः स्पर्शादिलिङ्गकः । वा
युर्हिस्पर्शशब्दधृतिकम्पैरनुमीयते ।
विजातीयस्पर्शेन० विलक्षणशब्देन
० तृणादीनांधृत्या० शाखादीनांक
म्पनेनच० वायोरनुमानात् । तथा
च वायुर्नप्रत्यक्षः । वायुर्नित्योऽ
नित्योवा० परमाणुरूपोनित्यस्तद
न्योऽनित्यः समवेतश्च । सोऽपित्रि
विधः शरीरेन्द्रियविषयभेदात् ।
अत्रशरीरमयोनिजं पिशाचादीना
म् । देहव्यापीति । शरीरव्यापकं
स्पर्शग्राहकमिन्द्रियं त्वक् । तच्च
वायवीयम् रूपादिषुमध्ये स्पर्शस्यैव
व्यञ्जकत्वात् । अङ्गसंसर्गिसलिल
शैत्यव्यञ्जकव्यजनवातवत् । विष
यं दर्शयति० प्राणादिरितियद्यप्यनि
त्योवायुश्चतुर्विधः तथापिचातुर्वि
ध्यं प्राणादिना० इत्युक्तमाकरे ।
तथापिसङ्ख्यं पादृश्चतुर्विध्यमुक्तम्
० प्राणस्त्वेकएवहृदादिनानास्था
नवशान्मुखनिर्गमादिनानाक्रिया
वशाच्च० नानासंज्ञांलभतइत्यर्थः
॥ ॥ सप्तवायवोयथा । भूवायुराव
हइहप्रवहस्तूर्द्धं स्यादुद्वहस्तदनुसं
वहसंज्ञितश्च । अन्यस्ततोपिसुवहः
परिपूर्वकोऽस्मादवाह्य : परावह
इमेपवनाः प्रदिष्टाइतिशिरोमणिः



॥ प्रावाहोनिवहश्चैवउद्वहः संवह
स्तथा । विवहः प्रवहश्चैवपरिवह
स्तथैव ॥ अन्तरीक्षेचवाह्येतेपृथ
ङ्मार्गविचारिणः । महेन्द्रप्रवि
भक्ताङ्गामरुतः सप्तकीर्त्तिताः ॥
॥ वायोः सप्तस्कन्धायथा । वायु
स्कन्धाः सप्ततेषामेकैकं सप्तसप्त
भिः । आमेयादेवावहादिरूपयुप
रिसंस्थिताः ॥ आवहप्रवहानुवह
उद्वहइ० पाठान्तरम् संवहविवह
परावहाभ्यपरिवहेति पाठान्तरम्
वर्त्मेतिभेदात्सप्तवायोः स्कन्धाः
॥ तथाचपुराणम् । आवाहः
प्रवहश्चैवतथाचैवोद्वहः परः ।
संवहोविवहश्चैवतदूर्द्ध्वंस्यात्परावहः
॥ तथापरिवहश्चोर्ध्वंवायोर्वैसप्तने
मयइति ॥ तेषांस्थानानियथा ।
मध्येभूमेघयोर्वायुरावहः प्रवहस्त
तः । मेघभास्करयोः सूर्यशशिनो
रुद्वहस्ततः ॥ चन्द्रनक्षत्रगणयोः
संवहोविवहस्ततः । नक्षत्रग्रहम
ध्यस्थोग्रहसप्तर्षिमध्यगः ॥ परा
वहः परिवहः सप्तर्षिध्रुवमध्यगः
॥ इत्येवं वायवः सप्त वहन्तिभु
वनत्रयमिति ॥ वाति । वा० ।
कृवापाजीत्युण् । आतोयुगितियु
क् ॥ वायुरायुश्चलं वायुर्वायुर्धाता
शरीरिणाम् । वायुर्विश्वमिदं सर्वं
प्रभुर्वायुः प्रकीर्त्तितः ॥ वाह्मम

गडलचक्रे पुयथाराजाप्रशस्यते ।
तथाशरीरमध्ये पिवायुरेक: परोवि
भु : ॥ वायो : पत्नीखस्तिदेवी ॥
वायुकेतु: । पुं॰ क्षितिकणे । धूलौ ॥
वायुगण्ड: । पुं॰ अजीर्णे ॥
वायुगुल्म : । ) पुं॰ आवर्त्ते । अम्भसा
वायुगुल्मक: )
म्भ्रमे ॥
वायुग्रस्त : । त्रि॰ विक्षिप्तचित्ते ॥
वायुदारु : । पुं॰ व्योमधूमे । मेघे ॥
वायुपुत्र : । पुं॰ भीमसेने ॥ हनू
मति ॥
वायुफलम् । न॰ शक्रकार्मुके ॥ जल
दोपले ॥
वायुभक्ष्य : । पुं॰ सर्पे ॥ त्रि॰ वात
भक्षके ॥
वायुवर्त्म । न॰ ख । नभसि ॥ वायो
र्वर्त्म ॥
वायुवाह : । पुं॰ धूमे ॥
वायुवाहन : । पुं॰ विष्णौ ॥ वहत:
सप्त॰ आवहादीन् वाहयतीतिव्यु
त्पाद्द्वैल्युं : ॥
वायुवाहिनी । स्त्री॰ वायुसञ्चारिण्यां
शिरायाम् ॥
वायुष : । पुं॰ मत्स्यविशेषे । काल
वायुषपीना॰ इ॰ गौ॰ दे॰ भा॰
प्र॰ । वायुषोष्ण्हणोष्ण्योमधुरो
धातुवर्द्धन : ॥
वायुसख : । पुं॰ पावके । वह्नौ ॥

वायो : सखा । राजाह : सखिभ्य
ष्टच् ॥
वायुसखा । पुं॰ अनले ॥ अग्नौ ॥
वायु : सखास्येतितथा । टजभा
वादनङ्सावित्यनङ् ॥
वाय्वस्पदम् । न॰ आकाशे ॥
वा : । न॰ जले ॥ वारयति । वृञो
ण्यन्तात्क्विप् ॥
वार : । पुं॰ सूर्यादिवासरे ॥ यथा ।
रवि : सोमोमङ्गलश्चबुधोजीव: सि
त : शनि : । एतेषांनामतोवारावि
ख्याता : सर्वकर्म्मसु ॥ सितेन्दु
बुधजीवानांवारा : सर्वत्रशोभना :
भानुभूसुतमन्दानांशुभकर्मसुकेष्व
पि ॥ द्वारे ॥ हरे ॥ कुब्जवृक्षे ॥
निवहे । वृन्दे ॥ अवसरे ॥ क्षणे ॥
वारयति॰ व्रियतेवा । वृञ्॰ । प
चाद्यच् । घञ् वा ॥ यद्वा । वार्यते॰
आच्छाद्यतेऽनेन । वृञश्चुरादे: पुं॰
सीतिघ : ॥ स्यन्दने ॥ न॰ मदि
रापात्रे ॥
वारक : । पुं॰ अश्वगतौ ॥ अश्वविशे
षे ॥ न॰ कष्टस्थाने ॥ ह्रीवेरे ॥
त्रि॰ कार्य्यनिषेधके ॥ वारयति
वृञ्॰ । ण्वुल् ॥
वारकी । पुं॰ शत्रौ ॥ निषेद्धरि ॥
पर्णाशे ॥ जीवे ॥ पर्णाजीविनि
पयोधौ ॥ इ॰ मेदिनिकार : ॥
वारकीर : । पुं॰ श्याले ॥ द्वारपाले

णि ॥ वाडवे ॥ यूकायाम् ॥ वेधि वेधिन्याम् ॥ जलौकायाम् ॥ नीराजितद्रये ॥

वारङ्कः । पुं॰ पक्षिणि ॥

वारङ्गः । पुं॰ खड्गादिमुष्टौ ॥ वारयति॰ व्रियतेऽस्मात् । ब्रज्॰ । खडसोर्वृद्धिश्च त्वङ्कच् ॥

वारटम् । न॰ क्षेत्रे ॥ क्षेत्रसमूहे ॥

वारटा । स्त्री॰ हंस्याम् ॥

वारणः । पुं॰ मतङ्गजे । गजे ॥ वारणवारि ॥ न॰ प्रतिषेधे । प्रत्यस्तिविघाते ॥ नदेवगुरुविप्राणांदीयमानन्तुवारयेत् । नचात्मानंप्रशंसेद्वापरनिन्दाञ्चवर्ज्जयेत् ॥ वारयतिशत्रुबलम् । वृञ्आवरणे । ल्युः ॥

वारणवल्लभा । स्त्री॰ कदल्याम् ॥

वारणबुसा । स्त्री॰ कदल्याम् । रम्भायाम् ॥ बुसते । बुसउत्सर्गे । इगुपधज्ञाप्रीकिरः कः । वारणानांबुसा ॥

वाराणसी । स्त्री॰ वाराणस्याम् । काश्याम् ॥ वरश्चासौ अनश्च॰ वरानः श्रेष्ठोदकम् । तस्यादूरेभवा । अदूरभवश्चेत्यण् । वृद्धिः । ङीप् । पृषोदरादिः ॥

वारप्रवृत्तिः । स्त्री॰ रेखादेशस्थलोकानांसूर्यावलोकनसमये ॥ रेखाभूमौ हिवारप्रवृत्तिर्भवति । रेखाभूमि



स्थ॰लङ्कासुमेरुपर्वतयोर्मध्यसूत्रगतोदेशः । यथा । यल्लङ्कोज्जयनीपुरोपरिकुरुक्षेत्रादिदेशान्स्पृशन् सूत्रंमेरुगतंबुधैर्निगदितासामध्यरेखाभुवः ॥ आदौप्रागुदयोऽपरत्रविषयेपश्चाद्धिरेखोदयात् स्यात्तस्मात्क्रियतेतदन्तरभुजैःखेटैष्वृणं स्वंफलम् ॥ इतिसिद्धान्तशिरोमणिः ॥ अपिच । रेखोक्तासूर्यसिद्धान्ते यथा । रेखामधिकृत्य । राक्षसालयदेवौकःशैलयोर्मध्यसूत्रगाः । रोहितकमवन्तीचयथासन्निहितंसरः ॥ अस्यार्थः । लङ्कासुमेरुपर्वतयोर्मध्यसूत्रगादेशारेखासंस्थिताः । तान्देशानाह । रोहितकदेशोऽवन्तीदेशः सन्निहितंसरःकुरुक्षेत्रमित्यर्थः । रेखायाः पूर्वदेशे॰ परदेशेच॰ यथासङ्ख्यंसूर्योदयकालात्परकालम्॰ पूर्वकालञ्च॰ वारप्रवृत्तिः स्यादित्यर्थः । एतेनैतदुक्तंभवति॰ रेखासंस्थदेशस्थलोकायदासूर्यंपश्यन्ति॰ तदैवसर्वदेशेवारप्रवृत्तिरित्यर्थः । तत्र॰ रेखापूर्वस्थाः सन्निहितत्वादादौ सूर्यंपश्यन्ति॰ तदनन्तरंरेखास्थाः । अतोरेखापूर्वे॰ सूर्योदयात्परं वारः । तथारेखास्थैः सूर्येदृष्टेसति । पश्चात्रेखापरस्थाः पश्यन्ति अतोरेखापरदेशेसूर्योदयात्पूर्ववार

इत्यर्थः । तत्तत्कालपरिमाणमाह । रेखातोयावन्तिदेशान्तरयोजनानि० तत्परिमिताभिर्विघटीभिः पलैः पादहीनाभिः चतुर्थभागहीनाभिर्वारप्रवृत्तिः स्यादित्यर्थः । देशान्तरसाधनप्रकारस्तु सूर्यसिद्धान्ते० उक्तः ॥ रामदैवज्ञोप्याह । पादोनरेखापरपूर्वयोजनैः पलैर्युतोनास्तिथयोदिनार्द्धतः । ऊनाधिकास्तद्विवरोद्भवैः पलैरूर्द्ध्वं तथाधोदिनपप्रवेशनमिति ॥

वारमुख्या । स्त्री० जनैः सत्कृतायां वेश्यायाम् ॥ वारे० वेश्यावृन्दे मुख्या ॥

वारम्वारम् । अ० पौनःपुन्ये ॥

वारम्वारेण । अ० शश्वदर्थे ॥

वारयिता । पुं० भर्त्तरि ॥ त्रि० निषेधके ॥

वाररुचः । पुं० वररुचिनाकृतेग्रन्थे ॥ कृतेग्रन्थइत्यण् ॥

वारला । स्त्री० गन्धोल्याम् । वरटायाम् ॥ हंसकान्तायाम् ॥

वारलीकः । पुं० बल्वजायाम् । वायुः० ह० भा० ॥

वारवधूः । स्त्री० वेश्यायाम् ॥ वारस्य०समूहस्यवधूः साधारणत्वात् ॥

वारवन्तीयम् । न० सामविशेषे ॥ वारवन्तशब्दोऽस्मिन्नस्ति । मतौच्छः सूक्तसाम्नोरितिच्छः ॥

वारवाणः । पुं० न० लोहचर्मणि । कवचे । कञ्चुके । चोलकाकृतिसन्नाहे ॥ वाणंवारयति०वृणोतिवा । वृञ्० ण्यन्तोवा । कर्मण्यण् । राजदन्तादित्वात्परनिपातः ॥ वारमाच्छादकंबानमस्यवा । पूर्वपदादितिणत्वम् ॥

वारशिः । पुं०वंशीवादके । उत्तमगायके ॥ धर्माध्यक्षे ॥ संवत्सरे ॥

वारवाणिः । ) स्त्री० वेश्यायाम् ।
वारवाणी । )

शूल्लायाम् । झर्झरायाम् ॥

वारविलासिनी । स्त्री० वेश्यायाम् ॥ वारे० जनसमूहे० विलासिनी० विलसनशीला ॥

वारवेला । स्त्री० यामार्द्धविशेषे ॥ यथा । चतुः सप्तद्विपञ्चाष्टत्रिषट् सूर्यादिवारतः । यामार्द्धं वारवेला स्यान्नशुभाशुभकर्मसु ॥ अपिच । कृतमुनियमशरमङ्गलरामर्त्तुशुभास्करादियामार्द्धे । प्रभवतिहिवारवेलानशुभाशुभकार्यकरणाय ॥ इति ॥

वारसिद्धा । स्त्री० वासरविशेषेनन्दादितिथौ ॥ यथा । वारेनन्दापूर्व्वंदे वार्चिताऽब्रेभद्राविद्याऽऽरेजया० सौनिरिक्ता । पूर्णागीर्वाणेशवन्द्ये

ऽखिलेषु कर्म्मस्वेवन्दोषवर्ज्यस्तिसिद्धा ॥ भौमादिवारेष्वेतास्वनेष्टा यथा । सर्वारम्भे भूमिदायादभान्वोर्नन्दा॰शुक्रविन्द्वोश्च भद्राजयार्के । रिक्ताधिष्ण्ये॰ हेलिसूनौ च पूर्णा॰ ष्णे यायाम्यागारदा॰कालविद्भिः ॥

वारसुन्दरी । स्त्री॰ वेश्यायाम् । मञ्जिकायाम् ॥ वारस्य जनतायाः सुन्दरी॰स्त्रीसामान्यत्वात् ॥

वारस्त्री । स्त्री॰ गणिकायाम् । वेश्यायाम् ॥ वारस्य वृन्दस्य स्त्री । साधारणत्वात् ॥

वारांनिधिः । पुं॰ अम्बुधौ । समुद्रे ॥

वाराणसी । स्त्री॰ विश्वनाथनगर्याम् । काश्याम् । तपस्थल्याम् । महाश्मसाने ॥ अविमुक्ते । आनन्दकानने ॥ मोक्षं सुदुर्लभं मत्वा॰संसारञ्चातिभीषणम् । अश्मनाचरणौ हत्वा वाराणस्यां वसेन्नरः ॥ वरणायास्तथा चास्या मध्ये वाराणसी पुरी । वाराणस्यां महादेशज्ञानं लब्ध्वा विमुच्यते ॥ वरणासी च नद्यौ द्वे पुण्ये पापहरे उभे । तयोरन्तर्गताया तु सैषा वाराणसी स्मृता ॥ विशेषोऽसिशब्दे द्रष्टव्यः ॥ वरणा च तत् अनश्च वरानः श्रेष्ठादकम् । तस्य अदूरे भवा । अदूरभवश्चेत्यण् । आदिवृद्धिः । ङीप् । पूर्वपदात्संज्ञायामगहूतिणत्वम् ॥

वाराणसीचक्रम् । न॰ सिद्धक्षेत्रविशेषे । काश्यां ॥

वाराणसेयः । त्रि॰ वाराणसीभवे ॥ वाराणस्यां जातादिः । नद्यादिभ्यो ढक् ॥

वारासनम् । न॰ जलालये । वाःसदने ॥

वाराहः । पुं॰ महापिण्डीतकवृक्षे ॥ वराहार्थे ॥ वराह एव । अण् ॥ त्रि॰ वराहसम्बन्धिनि ॥ न॰ चतुर्विंशतिसहस्रश्लोकात्मके महापुराणविशेषे ॥ चतुर्विंशतिसाहस्रं वाराहं परमाद्भुतमिति भागवतोक्तेः ॥

वाराहकर्णी । )
वाराहपत्री । ) स्त्री॰ अश्वगन्धायाम् ॥

वाराहाङ्गी । स्त्री॰ दन्तीवृक्षे ॥

वाराही । स्त्री॰ मातृप्रभेदे ॥ योगिनीविशेषे ॥ तीर्थविशेषे वराहदेवस्य शक्तौ श्यामापक्षिणि ॥ विष्वक्सेनप्रियायाम् । वृष्टिभेषजे । गेंठी॰ इ॰भा॰ । अस्या गुणा यथा । वाराही पित्तला बल्या कट्वी तिक्ता रसायनी । आयुःशुक्राग्निकृन्मेहकफकुष्ठानिलापहा ॥ वाराहीकन्दसंज्ञस्तु पश्चिमे गृष्टिसंज्ञकः । वाराहीकन्द एवान्यैश्चर्मकारालुको मतः ॥ अनूपे सभवेद्देशे वाराहइव लोमवान् ॥ वराहस्येयम्॰प्रियत्वात् । तस्येदमित्यण् ॥

वाराह्या । स्त्री॰ शूकर्याम् ॥ वराह
स्यापत्यं स्त्री । यतङ्ञ् । तस्य॰
यचिओरनायर्थेगुरूपोत्तमयोः
ष्यङ्गोत्रे॰ इतिष्यङादेश: ॥
वारि: । स्त्री॰ वाचि । सरस्वत्या
म् । गजवन्धनभूमौ ॥ वन्द्याम्
। वारयति॰ वार्य्यते ऽनयावा । व
सिवपियजिराजीतीञ् ॥ न॰ वा
लके । ह्रीवेरे ॥ अम्बुनि । जले ।
नीरे । रसोरसेन्द्रियंयस्य स्वं स्पर्शश्च
गुरुतातथा । सर्वद्रवसमूहश्चशुक्लं
वारिगुणास्मृता: ॥
वारिकण्टक: । पुं॰ शृङ्गाटके । सिं
घाडा॰ इ॰ भा॰ ॥
वारिकर्णिका । स्त्री॰ कुम्भिकाया
म् । खमूलिकायाम् ॥
वारिकर्पूर: । पुं॰ इल्लिशमत्स्ये ॥
वारिकुब्ज: }
वारिकुब्जक: } पुं॰ वारिकण्टके ।
शृङ्गाटके ॥
वारिक्रिमि: । पुं॰ जलमक्षिकायाम् ॥
वारिचत्वर: पुं॰ कुम्भिकायाम् ॥
वारिचर: । पुं॰ मत्स्ये ॥ यादोमात्रे ॥
वारिचामरम् । न॰ शैवले ॥
वारिज: । पुं॰ शङ्खे ॥ शम्बूके ॥
न॰ पद्मे ॥ द्रोणीलवणे ॥ गौर
सुवर्णे । लवङ्गे ॥
वारितस्कर: । पुं॰ सूर्ये ॥ मेघे ॥
वारित्रा । स्त्री॰ जङ्गमकुट्याम् । रा

जानके॰ वारिवस्त्रेमे॰ चलती
तम्बू॰ इ॰ भा॰ यथा । जलवा
जङ्गमकुटीकावारीमूर्द्धकर्ष्य रीति
हारावली । छत्रे ॥
वारिद: । पुं॰ जलदे । मेघे । मु
स्तके ॥ वारिददाति । इदाञ्॰
। आतोनुपसर्गेक: ॥ न॰ वाला
याम् । ह्रीवेरे ॥
वारिधर: । पुं॰ मेघे ॥
वारिधार: । पुं॰ अद्रिविशेषे ॥
वारिधारा । स्त्री॰ जलधारायाम् ॥
वारिधि: । पुं॰ समुद्रे । अकूपारे ।
अर्णवे ॥ वारीणिधीयन्तेऽत्र ।
डुधाञ्॰ । कर्मण्यधिकरणे चे
ति॰ कि: ॥
वारिनिधि: । पुं॰ वारिधौ ॥
वारिपथिक: । त्रि॰ जलपथेनागते ॥
जलपथगामिनि ॥ वारिपथेनाहृत
म्॰ तेनगच्छतिवा॰ । ठक् ॥
वारिपर्णिका । स्त्री॰ वारिपर्ण्याम् ।
वारिपर्णी । स्त्री॰ कुम्भिकायाम् ।
खमूल्याम् । वारिपर्णीहिमातिक
क्तालघ्वीस्वाद्वीसरापटु: । दोषत्र
यकरीरूक्षाशोणितज्वरशोषकृत् ।
वारिणिपर्णान्यस्या: ॥ पाककर्णे
तिङीष् । यद्वा वारिपिपर्त्ति ।
पृ॰ । धापृवस्यज्यतिभ्योन: । जाते
रितिङीष् ॥
वारिपालिका । स्त्री॰ खमूल्याम् ॥

वारिप्रवाहः। पुं० निर्झरे। झरे। उत्मान्निर्गतजलप्रवाहे। वारिणः प्रवाहः॥

वारिप्रश्नी। स्त्री० कुम्भिकायाम्॥

वारिबदरम्। न० प्राचीनामलके॥

वारिभवम्। न० स्रोतोऽञ्जने॥

वारिमसिः। स्त्री० पाथोदे। मेघे॥

वारिमुक्। पुं० खतमालि। मेघे॥

वारिमूली। स्त्री० वारिपर्ण्याम्॥ वारिणिमूलं यस्याः। पाककर्णेति ङीष्॥

वारिरथः पुं० नावि। तरिके॥

वारिराशिः। पुं० समुद्रे॥

वारिरुहम्। न० कमले॥ वारिणि रोहति। रुह०। इगुपधेति कः॥

वारिलोमा। पुं० अप्पतौ। वरुणे॥

वारिवल्लभा। स्त्री० विदार्याम्॥

वारिवासः। पुं० सुराजीविनि। शौण्डिके॥

वारिवाहः। पुं० जलदे। मेघे॥ वारि वहति। वह०। कर्मण्यण्॥ मुस्तायाम्॥

वारिवाहकः। पुं० बलाहके। मेघे॥ वारिणोवाहकः॥

वारिवाहनः॥ पुं० वारिदे॥

वारिशः पुं० विष्णौ॥

वारिशिरीषिका। स्त्री० शिरीषिकायाम्।

वारिसम्भवः। पुं० यावनालशरे॥

न० उशीरे॥ लवङ्गे॥ सौवीराञ्जने॥

वारी। स्त्री० गजबन्धन्याम्। हस्तिशालायाम्॥ कलस्याम्॥ वार्यतेऽनया। वृञ्०। घञन्तः। बसिवपियजिराजीतीञ्। बह्वादित्वान्ङीष्वा॥

वारीटः। पुं० गजे। हस्तिनि॥

वारीशः। पुं० समुद्रे॥

वारुः। पुं० विजयकुञ्जरे॥

वारुठः। पुं० अन्त्यशय्यायाम्॥

वारुडकिः। पुं० वरुडापत्ये॥ व्यासवरुड्यादिनेञ्० अकङादेशश्च॥

वारुणः। पुं० भारतवर्षोपद्वीपविशेषे॥ न० उपपुराणविशेषे॥ शतभिषर्क्षे॥ जले॥ त्रि० वरुणसम्बन्धिनि॥

वारुणकर्म्म। न० जलाशयखननादौ॥

वारुणव्रतम्। न० नृपतेर्नियमविशेषे॥ यथा। वरुणेन यथापाशैर्बद्ध एवाभिदृश्यते। तथापापान्निगृह्णीयाद्व्रतमेतद्धि वारुणम्॥

वारुणिः। पुं० अगस्त्यमुनौ॥ वसिष्ठे॥

वारुणी। स्त्री० गण्डदूर्वायाम्॥ पश्चिमायाम्। प्रतीच्यांदिशि॥ इन्द्रवारुण्याम्॥ दूर्वायाम्। शतभिषानक्षत्रे॥ तिथिविशेषे॥ यथा। वारुणभसमायुक्तमधौकृष्णा

चरीदृशी । गङ्गायांयदिलभ्येत मू
र्य्यग्रहशतैः समा ॥ वरुणं० शतभि
षा ॥ इयमेव शनिवारयुक्ताचेन्महा
वारुणीतिशुभयोगयुताचेन्महाम
हावारुणीतिसंज्ञांलभते । यथा ।
शनिवारसमायुक्तासमहावारुणी-
स्मृता । गङ्गायांयदिलभ्येतकोटिसू
र्य्यग्रहैः समा ॥ शुभयोगसमायुक्ता
शनौशतभिषायदि । महामहेति
विख्याताचिकोटिकुलमुद्धरेत् ॥
सुराधिदेवतायाम् । प्रथमाभिमा
निन्यांमहत्त्वांदेवतायाम् । अन्नो
वारुणीतिश्रुतेः ॥ ६ ॥ अन्नमय्यां
सुरायाम् । पैष्ट्याम् ॥ पुनर्नवा-
शालिपिष्टैर्विहितावारुणीस्मृता ।
संहितैस्तालखर्जूररसैर्यासापिवारु
णी ॥ सुरावद्वारुणीलघ्वीपीनसा
ध्मानशूलनुत् ॥ वरुणप्रेरितवृ
न्दावानस्थकदम्बतरुकोटरनि :
सृतायांबलदेवपीतवारुण्याम् ॥
यथा । पराशरउवाच । वनेविचर
तस्तस्यसहगोपैर्महात्मनः । मा
नुषच्छद्मरूपस्यशेषस्यधरणीभृतः
निष्पादितोरुकार्य्यस्यकार्य्येणोर्वी-
विचारिणः । उपभोगार्थमत्यर्थंव
रुणः प्राहवारुणीम् ॥ अभीष्टा
सर्वदायस्यमदिरेत्वंमहौजसः । अ
नन्तस्योपभोगायतस्यगच्छमुदेशुभे ।
इत्युक्तावारुणीतेनसन्निधानमथाक
रोत्वृन्दावनवनोत्पन्नकदम्बतरुको
टरे ॥ विचरन्बलदेवोऽपिमदिराग
न्धमुत्तमम् । आघ्रायमदिरातर्षम
वापाथपुरातनम् ॥ ततः कदम्बात्
सहसामद्यधारांसलाङ्गली । पतन्तीं
वीक्ष्यमैत्रेयप्रययौपरमांमुदम् ॥ प
पौचगोपगोपीभिः समवेतोमुदा
न्वितः । उपगीयमानोललितं
गीतवाद्यविशारदैः ॥ इतिविष्णु
पुराणेपञ्चमांशे २५ अध्यायः ॥ च
त्वाहाधिकारिणः प्रतिश्रीसदाशि
वः । सम्यग्विधिविधानेनसुस
माहितचेतसा । पिबन्तिमदिरांम
र्त्याअमर्त्याएवतेक्षितौ ॥ इयन्तु वा
रुणीदेवीनिपीताविधिवर्ज्जिता । नृ
णांविनाशयेत्सर्वंबुद्धिमायुर्यशोध
नमितिकुलार्णवसेतुः ॥ कुलार्ण
वेऽपिनिसङ्कोनिर्भयोशोरोनिर्लज्जो
निष्कुतूहलः । निर्णीतवेदशास्त्रा
र्थोवरदावारुणींपिबेदिति ॥ वरुण
स्येयम् । तस्येदमित्यण् । ङीप् ॥

वारुणीवल्लभः । पुं० वरुणे ॥ वारु
णीवल्लभायस्य सः ।

वारुण्डः । पुं० फणिनांराज्ञि ॥ पुं०
न० सेकपात्रे । नौस्थजलनिस्सा
रणभाजने ॥ नेत्रमले ॥ कर्णमले ॥

वारुण्डी । स्त्री० द्वारपिण्डाम् ॥

वारुढः । पुं० वस्त्राञ्चले ॥ कपाटे
॥ अग्नौ ॥ पञ्जरे ॥ शम्बले ॥

इति मेदिनीकरः ॥

वारेन्द्रः । त्रि० वरेन्द्रजाते । अण् ॥

वरेन्द्री । स्त्री० देशविशेषे । राजसाही० इति गौडदेशभाषाप्रसिद्धे ॥

वार्ध्रम् । न० वर्ध्रे । वर्ध्राणां समूहः । तस्य समूह इत्यण् ॥ त्रि० वर्ध्रसम्बन्धिनि ॥

वार्क्षदुर्गम् । न० वृक्षैः समन्ताद्वेष्टिते पुरे पुराद्बहिः सर्वतो योजनमात्रं व्याप्य तिष्ठति महावृक्षकण्टकिगुल्मलताद्याचिते राज्ञो वासस्थाने ॥

वार्क्षी । स्त्री० स्त्रीविशेषे । इति महाभारतम् ॥

वार्ज्जम् । न० पद्मे ॥

वार्णवः । त्रि० वर्णुदेशजे ॥ कच्छाद्यण् ॥

वार्णिकः । त्रि० लेखके ॥

वार्त्तम् । न० निःसारे ॥ आरोग्ये । पाटवे । स्वास्थ्ये ॥ त्रि० वृत्तिमति । वृत्तिशालिनि ॥ नीरोगे ॥ वृत्तिरस्त्यस्य वृत्तेस्तिणः ॥

वार्त्तकः । पुं० पक्षिविशेषे । बटेर इ० भा० । वर्त्तके ॥ न० वर्त्तकानां गणे ॥ वर्त्तकानां समूहः । तस्य समूह इत्यण् ॥

वार्त्ता । स्त्री० वर्त्तने ॥ वातिङ्गने ॥ वार्त्ताक्याम् ॥ कृष्यादिवृत्तौ ॥ यथा । कृषिर्वाणिज्यं तद्वच्च तृतीयं पशुपालनम् । विद्यादेतां महाभाग वार्त्तां वृत्तिसदाश्रयाम् ॥ चतुर्विधा पिता प्रोक्ता कृष्णेन पितरं प्रति । कृषिर्वाणिज्यगोरक्षाकुसीदन्तुर्यमुच्यते इति ॥ जनश्रुतौ ॥ उदन्ते ॥ वृत्तान्ते ॥ वृत्तिर्लोकवृत्तम् । तदस्त्यस्याम् । वृत्तेरिति वार्त्तिकेन० णः ॥ दुर्गायाम् ॥ यथा । पश्वादिपालनाद्वैश्यकृषिकर्मान्तकारणात् । वर्त्तनाधारणाद्वापि वार्त्ता सा परिगीयते ॥

वर्त्ताकः । पुं० वार्त्ताकौ ॥ वातिङ्गणे । वनभण्टा० इति ख्याते ॥ वार्त्तमारोग्यमाकयति । अककुटिलायाङ्गतौ । ण्यन्तः कर्मण्यण् । वार्त्तफलमकं यस्य वा ॥ वार्त्तकपक्षिणि ॥

वार्त्ताकी । स्त्री० हिंगुल्याम् । भण्टाक्याम् ॥ जातेरिति ङीष् ॥ वृहत्याम् ॥ वातिङ्गणे । वनभण्टा० इति भा० ॥

वार्त्ताकुः । स्त्री० हिंगुल्याम् । भण्टाक्याम् । वृन्ताके । अस्या गुणा यथा । अग्निप्रदा मारुतनाशिनी च शुक्रप्रदा शोणितवर्द्धिनी च । ह्रस्वा सकासारुचिनाशिनी च वार्त्ताकुरेषा गुणसम्प्रयुक्ता ॥ सा बाला कफवातघ्नी पक्वा सक्षारपित्तला । सदा फला त्रिदोषघ्नी रक्तपित्तप्रसादनी ।

अङ्गारपक्वावार्त्ताकु : किञ्चित्पित्त करीमता । कफमेदोऽनिलहरासरा लघुतरापरा ॥ पुंसिक्कोपीतिचिका गडभेष : ॥ वर्त्तते । वृतु० । वृतेर्वृ हिश्चेतिकाकु : ॥ बाहुलकादुक्का रस्यात्त्वे वार्त्ताकमपि ॥

वार्त्तायन : । पुं० हेरिके । गूढपुरुषे । प्रवृत्तिज्ञे । प्रणिधौ । चरे ॥ इतिहेमचन्द्र : ॥

वार्त्तावह : । पुं० कृषिवाणिज्यादि जीवे । वैवधिके ॥ वार्त्तायाव ह : ॥

वार्ताहारी । पुं० चारे । यथार्थव र्णे ॥

वार्तिक : । पुं० वर्तिके । बटेर० इ० भा० ॥ वार्तिकोमधुरोरूक्ष : शीतश्चकफपित्तनुत् ॥ वार्ताकी ॥ चरे । स्पशे ॥ वैद्ये । न० उक्ताऽनुक्तदुरुक्तार्थव्यञ्जकसङ्ग्रहे ॥ उक्तानुक्तदुरुक्तार्थचिन्ताकारितुवार्तिक मितिहेमचन्द्र : ॥ वृत्तिमधीते० वेदवा । उक्थादित्त्वट्ठक् ॥ वृत्तौसाधुर्वा । कथादिभ्यष्ठक् ॥

वार्तिका । स्त्री० वर्तिकायाम् । विषाणिन्याम् । बटेर० इ० भा० ॥ वर्त्तिकेतिहारावली ॥

वार्त्तघ्न : । पुं० पार्थे । अर्ज्जुने ॥ वृत्रघ्नोऽपत्यम् । अण् ॥ जयन्तचि० वृत्रहसम्बन्धिनि ॥

वार्द्दल : । पुं० मेलानन्दायाम् । न० दुर्दिने । बादला० इ० भा० ॥ मस्याम् ।

वार्द्धकम् । न० वृद्धसङ्घाते ॥ वृद्धानांसमूह : । वृद्धाच्चेतिवक्तव्यमितिवुञ् ॥ वृद्धस्यभावकर्म्मणी : । वृद्धत्वे । यौवनात्पराव स्थायाम् ॥ यथा । तिथिवर्षमतं बाल्यंत्रिंशद्वर्षन्तुयौवनम् । मुख्यंगौणंद्विधाभिन्नंवार्द्धकन्तुतत : परम् ॥ वृद्धस्यकर्म्मभावोवा । मनोज्ञादित्त्वाद्वुञ् ॥ वार्द्धकेतप आतिष्ठेदितिशास्त्रोदितंवच : ॥

वार्द्धक्यम् । न० वृद्धत्वे । वार्द्धके ॥ वृद्धसङ्घाते ॥ वार्द्धकमेव । चतुर्वर्णादित्त्वात्० स्वार्थेष्यञ् ॥

वार्द्धि : । पुं० समुद्रे ॥ वारीणिधीयन्तेऽत्र । कर्म्मण्यधिकरणेचेतिधाञ : कि : ॥

वार्द्धिभवम् । न० द्रोणीलवणे ॥ *

वार्द्धुषि : । त्रि० वृद्ध्याजीवे ॥ वृद्ध्यर्थंद्रव्यंवृद्धि : तत्प्रयच्छति । प्रयच्छतीतिगर्ह्यमितिठक् । वृद्धेर्वृधुषिभाव : ॥ पृषोदरादित्वात्कलोप : ॥

वार्द्धुषिक : । त्रि० कुसीदिके । वृद्ध्याजीवे । वार्द्धुषी । बहुरा० इ० भा० ॥ तल्लक्षणंयथा । समर्घंधान्यमादायमहार्घंय : प्रयच्छति ।

सवं वार्द्धुषिकोनाम हव्यकव्यबहि
ष्कृत : ॥ तत्र वृद्धिग्रहणनियमो
यथा । अशीतिभागं गृह्णीयान्मा
साद्वार्द्धुषिक: शतात् । द्विकं शतं
वा गृह्णीयात्सतांधर्ममनुस्मरन् ।
द्विकं शतन्तु गृह्णानो न भवत्यर्थकि
ल्विषीति । शतकार्षापणे ऽशीति
भागं विंशतिपणा : । द्विकं पुराण
द्वयम् । एवं विधं नियममतिक्रम्य
अनापदि स्वयमन्यद्वारावास्वच्छ
न्दो नयोव्यवहरतितस्यैवप्रायश्चित्त
म् । आपदितुस्वयङ्करणे नियमा
तिक्रमेचनदोष : । इतिप्रायश्चित्त
विवेक : ॥ वृद्ध्यर्थं द्रव्यंवृद्धि :
। तांप्रयच्छति । प्रयच्छतिगर्ह्यमि
तिठक् । वृद्धेर्वृधुषिभावोवक्त
व्य : ॥

वार्द्धुष्यम् । न० धान्यवर्द्धने ॥

वार्धेयम् । न० द्रोणीलवणे ॥

वार्द्ध्रम् । न० स्त्री० चर्म्मणि ॥ व-
ध्र्यैइदम् । चर्मणोऽञ् त्रि० वध्र
स्य विकारे । तस्यविकारइत्यण् ॥

वार्ध्री । स्त्री० चर्मरज्जुम् । वध्री० इ०
भा० । वार्ध्रान् ङीष् ।

वार्ध्रीणस : । पुं० वाध्रीणसे । छाग
विशेषे ॥ यथा । त्रिपिवंस्त्विन्द्रिय
क्षीणं श्वेतं वृद्धमजापतिम् । वा
र्ध्रीणसमितिप्राहुर्याज्ञिका: पितृक
र्म्मणीतिनिगमे । एकचरे । गण्ड
के । गण्डा० इ० भा० ॥ पक्षिविशे
षे । यथा । नीलग्रीवोरक्तशीर्ष :
कृष्णपाद : सितच्छद : । वार्ध्रीण
स : स्यात्पक्षीशोममविष्णोरतिप्रि
य : ॥ रोहितञ्चतुमत्स्यस्यमांसैर्वा
र्ध्रीणसस्यच । तृप्तिमाप्नोतिवर्षाणां
शतानित्रीणिमत्प्रिया ॥ महिषा
णाञ्चखड्गानांरुधिरै : शतवार्षि
कीम् । तृप्तिमाप्नोतिपरमांशार्दूल
रुधिरैस्तथा ॥ इतिकालिकापुरा
णे ६६ ऽध्याय : ॥ वार्ध्रीवनासि
काऽस्य । अञ्नासिकायाइत्यच्
नसादेशश्च । पूर्वपदादितिणत्वम् ॥

वार्भट : । पुं० नक्रे । कुम्भीरे । वा
रिजले० भट : ॥

वार्म्मणम् । न० वर्मसमूहे ॥ वर्मणां
समूह : । भिक्षादिभ्योण् ॥

वार्म्मिणम् । न० वर्मिणांसमूहे ॥

वार्म्मुक् । पुं० अम्भोदे । मेघे ॥
वा : मुञ्चति । मुच्लृ० । क्विप् ॥

वार्य्य : । पुं० ऋत्विजि ॥ व्रियते ।
वृङ्सम्भक्तौ । ण्यत् । क्यप्तु० ह
ह्रस्वएव ॥ — * — ॥

वार्य्य : । त्रि० वरणीये ॥ वारिसम्ब
न्धिनि ॥

वार्य्युद्भवम् । न० पद्मे । त्रि० जलजे ।

वाराशि : । पुं० समुद्रे । इतिपुरा
णम् ॥

वाल्वट : । पुं० वह्निके ॥

वार्व्वणा । स्त्री॰ वर्व्वणायां ॥

वार्षकम् । न॰ सुश्रुतोक्तपृथिवीद्रव्यभागान्तर्गतभागविशेषे ॥

वार्षगण्य : । पुं॰ पतञ्जलौ ॥ वृषगणस्यगोत्रापत्यम् । गर्गादित्वात् यञ् ॥

वार्षभाणवी । स्त्री॰ वृषभानुकन्यायाम् । श्रीराधायाम् ॥ यथापरात्पर : कृष्णस्तथेयं वार्षभाणवीति पद्मपुराणम् ॥

वार्षलम् । न॰ वृषलकर्म्मणि ॥ यथा । नकार्य्यस्तु नकुर्व्वीत ब्राह्मण : कर्म्म वार्षलम् । वृषल : कर्म्म चब्राह्मं पतनीयेस्थितेतयो : ॥

वार्षिकम् । न॰ त्रायमाणायाम् । बलभद्रिकायाम् ॥ वृष्टिजले ॥ यथा । वार्षिकं तद्दृष्टवृष्टं भूमिष्ठमहितं जलम् । चिरावमुषितं तत्तु प्रसन्नममृतोपमम् ॥ त्रि॰ वर्षाभवे ॥ वर्षासुभवम् । जातम् ॰ साधु वा । वर्षाभ्यष्ठक् । ठस्येक : ॥ वर्षभवे । वात्सरिके । वर्षासम्बन्धिनि ॥ यथा । वार्षिकाश्चतुरोमासा दुर्गमा : पथिसर्व्वदा । तस्मादेकत्र विबुधै : स्थातव्यमितिनिश्चय : ॥ अष्टौमासांस्तुप्रवसेत्सदाकार्यवशाद्द्विज : । वर्षाकालेनगन्तव्यं प्रवासेसुखमिच्छतेतिभागवतेनारद : ॥

वार्षिकी । स्त्री॰ त्रायमाणायामोषधौ ॥ वेलङ्ग॰ प्र॰ पुष्पविशेषे ॥ यथा । श्रीमद्दौषट्पदानन्दावार्षिकीमन्तरभ्यनेतिभावप्रकाश : । वार्षिकीशीतलालघ्वीतिक्तादोषत्रयापहा । कर्णाक्षिमुखरोगघ्नी॰ तत्तैलं तद्गुणंस्मृतम् ॥ इतिच ॥ वर्षकर्त्तव्यपूजादौ ॥ वर्षासुभवा । ठक् । ङीप् ॥ कालाट्ठञ् वा ॥

वार्षिला । स्त्री॰ करकायाम् ॥

वार्ष्णेय : । त्रि॰ वृष्णिवंशोद्भवे ॥

वार्हतम् । न॰ वृहतीफले ॥ वृहत्या : फलम् । प्लक्षादिभ्योण् विधानसामर्थ्यात्तस्यफलेनलुक् ॥

वार्हद्रथ : । वार्हद्रथि : । पुं॰ नृपे ॥ वृहद्रथस्यापत्यम् । अण् इञ् वा ॥

वार्हस्पत्य : । पुं॰ नास्तिके ॥ यथा । स्याद्वादवाद्यार्हत : स्या॰ शून्यवादीतुसौगत : । नैयायिकस्त्वक्षपादो॰ योग : साङ्ख्यस्तुकापिल : । वैशेषिक : स्यादौलूक्यो॰ वार्हस्पत्यस्तुनास्तिक : । चार्व्वाकलौकायतिकश्चैतेषडपितार्किका : ॥ मैत्रेये ॥ कश्चिद्विद्यायांमैत्रेयोवृहस्पते : शिष्य : ॥ न॰ नीतिशास्त्रे ॥ वृहस्पतिदेवताके त्रि॰ वृहस्पतिसम्बन्धिनि ॥ वृहस्पतिर्देवताऽस्य॰ वृहस्पतेरिदंवा । दित्य

द्दिष्याद्दिष्यपत्युत्तरपदाध्य : ॥
वालक : । पुं० न० पारिहार्ये ॥ त्रि० अङ्गुरीयके । वालकोऽस्त्रीपारिहार्ये० विषुस्यादङ्गुरीयके । इ० मेदिनि : ॥ वालके ॥
वालव : । पुं० द्वितीयकरणे ॥ तत्र जातस्य फलंयथा । कार्यस्यकर्तास्वजनस्यभर्तासिनाप्रणेताकुलशीलयुक्त : । उदारबुद्धिर्बलवान्मनुष्यः स्येद्दालवाख्ये जननंहियस्य ॥
वाल्कम् । न० चौमादिवस्त्रे ॥ त्रि० वल्काभवे ॥ वल्कास्यवल्कलस्य० विकार : । तस्यविकारइत्यण् ॥
वाल्कलम् । त्रि० वल्कलनिर्मिते ॥ वल्कलस्येदम् । अण् ।
वाल्कली । स्त्री० मदिरायाम् ॥
वाल्मिकि : । वाल्मीक : । पुं० वाल्मीकि : । } कविश्रेष्ठे ॥
प्राचेतसेभृगुवंशीयमुनिविशेषे ॥
वाव । अ० अवधारणार्थे ॥ प्रसिद्धौ ॥
वावदूक : । त्रि० वाचोयुक्तिपटौ । वाग्मिनि । वक्तरि ॥ कुर्वादिषु वावदूकशब्दपाठसामर्थ्याद्वदेरूक : ॥ यद्वा । पुन : पुनरतिशयेनवावदति० इति० वदेर्यङन्तात्० उलूकादयश्चेत्यूक : ॥
वावय : । पुं० तुलसीविशेषे । वावुइ०
इ० भा० ॥ इतिशब्दचन्द्रिका ॥
वावृत : । त्रि० कृतवरणे । वृते । वृतौ । स्वयंवरादिनास्त्रीकृतवरादौ ॥ वावृत्यतेस्म । वावृतुवर्तने । क्त : ॥
वाशा । स्त्री० वासके ॥ वाश्यते । वाशृशब्दे । गुरोश्चेत्य: । टाप् ॥
वाशि : । पुं० छेदनसाधने । कुठारप्रभेदे ॥ अग्नौ ॥ वाश्यते । वाशृ० । वसिवपौत्यादिनाइञ् ॥
वाशिका । स्त्री० वासके ॥ वाश्यते । वाशृ० । गुरोश्चहलइत्य : टाप् । क : ॥ यद्वा । उश्यते । वशकान्तौ । संज्ञायामित्यनेन० खुल् ॥
वाशितम् । न० पशुपत्त्यादिशब्दे ॥ वाशनम् । वाशृ० भावेक्त : ॥
वाशिनायनि : । पुं० वाशिनोपत्ये ॥ उदीचांवृद्धादगोत्रादिति० फिञ् दाण्डिनायनेति० टिलोपाभाव : ॥
वाशिष्ठ : । त्रि० वशिष्ठसम्बन्धिनि ॥
वाशिष्ठी । स्त्री० । गोमत्यांनद्याम् ॥ तीर्थविशेषे ॥ अवैवक्र्षिकस्यातीर्थम् ॥ वशिष्ठसम्बन्धिन्याम् ॥
वाशुर : । पुं० गर्दभे ॥ वाश्यते । वाशृ० । मन्दिवाशिमथिचतिचङ्क्यङ्किभ्यउरच् ॥
वाशुरा । स्त्री० रात्रौ ॥ वाश्यन्तेऽस्याम् । वाशृ० । मन्दिवाशी

ष्युरच् । टाप् ॥

वाश्र : । पुं० दिवसे ॥ शकुनौ ॥ रासभे ॥ न० मन्दिरे ॥ चतुष्पथे ॥ वाश्यते । वाश्र० । स्फायितञ्चिव ञ्चीत्यादिना - रक् ॥

वाष्प: । पुं० न० नेत्रजले। भाफइ० भा० प्र० ॥ ऊष्मणि ॥ वायति । चोवे शोषणे० वातिवा । वाग स्था टो । खष्पशिल्पशष्पवाष्परूपपर्प तल्पा : इतिसाधु : । बाधतेनेत्र मितिवा । बाधते : पोनिपातना त् ॥ लोहे ॥ इतिमेदिनीकर : ॥

वाष्पक : । पुं० मारिषे । यथा । मा रिषोवाष्पकोमार्ष : श्वेतोरक्तश्चस स्मृत : ॥

वाष्पका । स्त्री० हिङ्गुपत्र्याम् ॥

वाष्पायमाण: । त्रि० वाष्पमुद्वमति ॥

वाष्पिका । स्त्री० हिङ्गुपत्र्याम् । कार व्याम् ॥ वाष्पमिव इवेप्रतिकृता विति कन् ॥

वाष्पी । स्त्री० वाष्पिकायाम् ॥

वाष्पीका । स्त्री० त्वक्पत्र्याम् । बाष्पि कायाम् । रांधुनी० इ० गौ० दे० भा० प्र० ॥ वाष्पमिव । कन् । टाप् । पृषोदरादि : ॥

वास : । पुं० वेश्मनि ॥ अवस्थाने ॥ वासके ॥ वसन्त्यत्र । वसनिवासे । हलश्चेतिघञ् ॥ लघ्वादिविक ले० । ६ ० ॥

वासकोष : । पुं० वस्त्रपेटके ॥

वासक : । पुं० वैद्यमातरि । वृषे । अटरूषे । सिंहास्ये । बांसा० वासू टी० इ० भा० प्र० कुचे ॥ अस्य गुणायथा । वासकोवातकृत्स्वर्य: कफपित्तास्रनाशन : । तिक्तस्तुवर कोहृद्योलघु : शीतस्तृडर्त्तिहृत् ॥ श्वासकासज्वरच्छर्दिमेहकुष्ठक्षया पह : ॥ गानाङ्गविशेषे ॥ त्रि० गन्ध कृति ॥ वासयति । ण्वुल ॥ यद्वा । वस्त्रे० आच्छादयति । वसआ च्छादने । ण्वुल् ॥

वासकर्णी । स्त्री० यज्ञशालाया म् ॥

वासकसज्जा । स्त्री० स्वीयादिनायिका भेदे ॥ अद्यमेप्रियवासर : ० इत्यं निश्चित्य०या० सुरतसामग्रींसज्जी करोतिसा० वासकसज्जा । वास कोऽवसर : ॥

वासका । स्त्री० वासकवृक्षे ॥

वासगृहम् । न० गर्भागारे । गृहमध्य भागे ॥ शयनगृहे ॥ स्थितिगेहे ॥ वासार्थं० वासस्य वागृहम् ॥

वासतेयी । स्त्री० रात्रौ ॥ वसनम्० वसति : वसतीसाधु : । पथ्यति थिवसतिस्वपतेर्ढञ् ॥

वासनम् । न० धूपने ॥ वारिधान्या म् ॥ वस्त्रे ॥ निक्षेपाधारे ॥ वासे ॥ ज्ञाने ॥ त्रि० वसनेनक्रीते ॥

शतमानविंशतिकसहस्रशसमादया ॥

वासना । स्त्री० प्रत्याशायाम् ॥ ज्ञाने ॥ देहात्मबुद्धिजन्यमिथ्यासंस्कारे ॥ दुर्गायाम् ॥ यथा । वसत्यहष्टा सर्वेषुभूतेष्वन्तर्हितायच । धातुर्वसनिवासितोवासनातेनसास्मृतेति ॥ स्मृतिहेतौ । संस्कारे । भावनायाम् ॥ धर्माधर्मरूपेजीवगतसंस्कारविशेषे ॥ वासनाद्विविधा । मलिना० शुद्धाच । शुद्धा० दैवीसम्पत० शास्त्र संस्कारप्राबल्यात्तत्त्वज्ञानसाधनत्वेनैकरूपैव । मलिनातु० त्रिविधा । लोकवासना० शास्त्रवासना० देहवासनाचेति । सर्वेजनायथा ननिन्दन्ति० तथैवाचरिष्यामीति०अशक्यार्थाभिनिवेशो लोकवासना । तस्याश्चकोलोकमाराधयितुम्समर्थ इतिन्यायेन०सम्पादयितुमशक्यत्वात्० पुरुषार्थानुपयोगित्वाच्चमलिनत्वम् । शास्त्रवासनातु०त्रिविधा । पाठव्यसनम्० बहुशास्त्रव्यसनम्० अनुष्ठानव्यसनञ्चेति । क्रमेण० भरद्वाजस्य० दुर्वाससो० निदाघस्यचप्रसिद्धा । मलिनत्वमस्या: क्लेशावहत्वात्०पुरुषार्थानुपयोगित्वात् ० दर्पहेतुत्वात् ० जन्महेतुत्वाच्च । देहवासनापित्रि



विधा । आत्मत्वभ्रान्ति: ० गुणाधानभ्रान्ति: ० दोषापनयनभ्रान्तिश्चेति । तत्रात्मत्वभ्रान्तिर्विरोचनादिषुप्रसिद्धा० सोवैलौकिकी । गुणाधानंद्विविधम्० लौकिकं० शास्त्रीयञ्च । समीचीनशब्दादिविषयसम्पादनम् लौकिकम्० गङ्गास्नानशालग्रामतीर्थादिसम्पादनं शास्त्रीयम् । दोषापनयनमपिद्विविधम्० लौकिकं०शास्त्रीयञ्च । चिकित्सकोक्तैरौषधैर्व्याध्याद्यपनयनंलौकिकं० स्नानाचमनादिभिरशौचाद्यपनयनंवैदिकम् । एतस्याश्चसर्वप्रकाराया मलिनत्वम्० अप्रामाणिकत्वात्०अशक्यत्वात् ० पुरुषार्थानुपयोगित्वात्०पुनर्जन्महेतुत्वाच्चशास्त्रप्रसिद्धम् । तदेतल्लोकशास्त्रदेहवासनात्रयमविवेकिनामुपादेयत्वेनप्रतिभासमानमपि ० विविदिषोर्वेदनोत्पत्तिविरोधित्वात्० विदुषोज्ञाननिष्ठाविरोधित्वाच्च०विवेकिभिर्हेयम् । तदेवंबाह्यविषयवासना० त्रिविधानिरूपिता । अभ्यन्तरवासनातु०कामक्रोधदम्भदर्पाद्यसुरसम्पद्रूपासर्वानर्थमूलंमानसीवासनेत्युच्यते । तदेवंबाह्याभ्यन्तर वासनाचतुष्टयस्य०शुद्धवासनयाक्षय: सम्पादनीयोविवेकिभि: ॥ अत्रवशिष्ठ:

॥ शुभाशुभाभ्यांमार्गाभ्यांवहन्तीवा सनासरित् । पौरुषेणप्रयत्नेनयोज नीयाशुभेपथि ॥ अशुभेषुसमाविष्टं शुभेष्वेवावतारयेत् । स्वमन : पुरु षार्थेनबलेनबलिनांवर ॥ अशुभा चालितंयातिशुभंतस्मादपीतरत् । जन्तोश्चित्तन्तुशिशुवत्तस्मात् तच्चालयेद्बलात् ॥ अपिच । वास नानांपरित्यागेयदित्वंकरोष्यलम् । ततस्तेशिथिलतांयान्तिसर्वाधिव्या धय : क्षणात् । पौरुषेणप्रयत्नेन बलात्सन्त्यज्यवासना : । स्थितिं वध्नासिचेत्तर्हिपदमासादयस्यल मिति ॥

वासनाक्षय : । पुं॰ वासनानाशे ॥ यथा । पूर्वापरपरामर्शमन्तरेण॰ सहसोत्पद्यमानस्यक्रोधादिवृत्तिवि शेषस्य॰ हेतुश्चित्तगत : संस्कार विशेषोवासना । पूर्वपूर्वाभ्यासेन॰ चित्तेवासमानत्वात् । तस्या : क्षयोनाम॰ विवेकजन्यायांचित्तप्र शमवासनायांदृढायांसत्यपिबाह्ये निमित्ते क्रोधाद्यनुत्पत्ति : । तत्र॰ तत्त्वज्ञानेसति॰मिथ्याभूतेजगति ॰ नरविषाणादाविव॰ धीवृत्त्यनुद यात्॰आत्मनश्चद्रष्टृत्वेन॰ पुनर्वृ त्त्यनुपयोगात्॰ निरिन्धनाग्निवन् मनोनश्यति॰नष्टेचमनसि॰संस्का रोद्बोधकस्यबाह्यस्यनिमित्तस्याऽप्र तिपत्तौ॰ वासनाक्षीयते । एवं क्षीयमाणायांवासनायां॰ हेत्वभावे नक्रोधादिवृत्त्यनुदयात् मनोनश्य ति॰नष्टेचमनसि॰शमदमादिसम्प त्त्या॰तत्त्वज्ञानमुदेति॰एवमुत्पन्ने तत्त्वज्ञाने॰रागद्वेषादिरूपावासना क्षीयते॰ क्षीणायाञ्चवासनायांप्रति बन्धाभावात् तत्त्वज्ञानोदय इति परस्परत्वंद्रष्टव्यम् ॥ वासनाया: क्षय : ॥

वासनाक्षयाभ्यास : । पुं॰ वासनाक्ष यस्यावृत्तौ । यथा । दृश्यासम्भव बोधेनरागद्वेषादितानवे : । रति र्घनोदितायासौवज्ञाभ्यास : सउ च्यते ॥

वासनात्याग : । पुं॰ पूर्वसंस्कारो पेक्षायाम् ॥ वासनाया : त्या ग : ॥

वासनापरित्याग : । पुं॰ मनोनिग्रह स्योपायविशेषे ॥ यस्तु॰ विद्यामदा दिदुर्वासनयापीड्यमानोनसाधून नुवर्त्तितुमुत्सहते॰ तस्यविवेकेन वासनापरित्यागएवोपाय : ॥ वास नाया : परित्याग : ॥

वासनिक : । पुं॰ निवासी । मार्गे निवासी ॥

वासन्त : । पुं॰ परपुष्टे । कोकिले । करभे । उष्ट्रे ॥ विटे ॥ मुद्गे ॥ कृष्णमुद्गे ॥ मदनवृक्षे ॥ त्रि॰ अव

ञ्चिते ॥ वसन्तोद्भवे ॥ वसन्ते भवः सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ॥

वासन्तकः । त्रि० वसन्तसम्बन्धिनि ॥

वासन्तिकः । पुं० विदूषके । कोकिले ॥ त्रि० वसन्तजोत्सवे ॥ वसन्तसहचरिताध्ययनवति ॥ वसन्तमधीते वेद वा । वसन्तादिभ्यष्ठक् ॥

वासन्ती । स्त्री० लताविशेषे । माधव्याम् ॥ यूथ्याम् ॥ पाटलायाम् ॥ स्मरोत्सवे । चैत्रावल्याम् । मधूत्सवे । गणिकार्याम् ॥ पुष्पलताविशेषे । प्रहसन्त्याम् । वसन्तजायाम् ॥ नवमल्लिकायाम् । नेवारा० निवारी० इ० प्र० पुष्पवृक्षविशेषे ॥ यथा । नेपालीकथिता तज्ज्ञैः सप्तलानवमालिका । वासन्तीशीतलालघ्वीतिक्तादोषत्रयापहा ॥ वसन्ते पुष्प्यति । कालात् साधुपुष्प्यत्पच्यमानेष्विति अण् ॥ शर्करीच्छन्दः १४ प्रभेदे ॥ तल्लक्षणं यथा । मात्तोनोमोगौ यदि गदीता वासन्तीयम् । यथा । भ्राम्यद्भृङ्गीनिर्भरमधुरालापोद्गीतैः श्रीखण्डाद्रेरङ्गतपवनैर्मन्दान्दोला । लीलालोलापल्लवविलसद्धस्तोल्लासैः कंसारातेर्नृत्यति सदृशी वासन्तीयम् ॥ वासन्तीदुर्गापूजा प्रमाणं यथा । चैत्रे मासि सिते पक्षे सप्तम्यादिदिनत्रये । पूजयेद्विधिवद्दुर्गां दशम्यां च विसर्जयेत् ॥ अपि च । श्रीनारायण उवाच । पुरा सुरथो राजा बैश्यः कृष्णेन परमात्मना । सम्पूज्य मधुमासि च प्रीतेन रासमण्डले ॥ मधुकैटभयोर्युद्धे द्वितीये विष्णुना पुरा । तत्रैव काले सा दुर्गा ब्रह्मणा प्राणसङ्कटे ॥ इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ६२ अध्यायः ॥

वासयोगः । पुं० चूर्णायाम् । पाटवासादिक्षोदे । गन्धचूर्णे ॥ वासे सुगन्धीकरणे योग उपायः ॥

वासरः । पुं० न० अह्नि । दिने ॥ रागप्रभेदे ॥ वासयति वसतेर्ण्यन्तात् ० अर्त्तिकमिभ्रमीत्यादिना ऽरः ॥

वासरच्छवि: । स्त्री० प्रकाशे । आतपे ॥

वासवः । पुं० इन्द्रे । मरुत्वति । मघोनि । देवाधिपतौ ॥ स च देशनामध्ये भगवतो विभूतिः ॥ वसवो देवाः ० वसूनि रत्नानि वा ० अस्य सन्ति । ज्योत्स्नादित्वादण् ॥ वासोऽपत्यं वा ॥ दैत्यानां वासं वाति । वा गतिगन्धनयोः । आतोऽनुपसर्गे कः ॥ त्रि० वसुदेवताके । साऽस्य देवतेत्यण् ॥ वसुशब्दात् स्वार्थिकः प्रज्ञाद्यण् वा ॥

वासवदत्ता । स्त्री० गद्यरूपे० आख्यायिका।ग्रन्थविशेषे ॥ वासवदत्ताम धिकृत्यकृता० आख्यायिका। वृद्धाच्छ : । तस्यलुक् ॥

वासवानुज : । पुं० उपेन्द्रे ॥ वासवस्यअनुज : ॥

वासवी । स्त्री० व्यासमातरि । सत्यवत्याम् । दासेय्याम् । उपरिचरवसोर्वीर्य्यजातायाम् ॥ वसोरास्यापत्यम् । अण् । ङीप् ॥ इन्द्राण्यम् ॥

वासवेय : । पुं० व्यासे । पाराशर्य्ये ॥ वासव्याअपत्यम् । स्त्रीभ्योढक् ॥

वास : । न० वस्त्रे ॥ वसतेऽनेनवा० वस्तेशरीरंवा । वसआच्छादने । वसेर्णिदित्यसुन् ॥

वाससज्जा । स्त्री० नायिकाप्रभेदे ॥

वासा । स्त्री० अटरूषे । वासके ॥ वासायांविद्यमानायामाशायांजीवितस्यच । रक्तपित्तक्षयीकासीकिमर्थमवसीदति ॥ वासयति । वसनिवासे । ण्यन्त : । पचाद्यच् ॥

वासागारम् । न० भोगगृहे । कन्याटे ॥ वासस्यआगारम् ।

वासि : । पुं० कुठारभेदे । छेदनसाधने । वसूला० इ० भा० ॥ वास्यादीनामिवकरणानांकर्तृव्यापार्यत्वनियमादितिवैशेषिका : ॥ वसति० वस्तेवा । वसनिवासे० आच्छादनेवा । वसिवपियजीत्यादिना० इञ् ॥

वासिका । स्त्री० वासके ॥ वासैव । स्वार्थेकन् । प्रत्ययस्थादितीत्वम् ॥

वासितम् । न० रुते । खगाऽऽरावे॥ ज्ञानमात्रे ॥ त्रि० सुरभीकृते । धूपितव्यञ्जनादौ । भाविते ॥ वस्त्राच्छन्ने ॥ वासःतेस्म । वासस्नेहनादौ । चुरादि : । क्त : । वासउपसेवायाम्वा ॥ ख्याते ॥

वासिता । स्त्री० करिण्याम् ॥ नार्य्याम् ॥ वासयति । वसनिवासे० ण्यन्त : । वासउपसेवायाम्वा । क्त : । टाप् ॥

वासिनी । स्त्री० सितझिण्ट्याम् ॥

वासिष्ठ : । पुं० वसिष्ठात्मजे ॥ ऋष्यण् । बहुत्वे० वसिष्ठा : ॥ न० रुधिरे ॥ उपपुराणविशेषे ॥ वसिष्ठकृतेयोगशास्त्रादौ ॥ त्रि० वसिष्ठसम्बन्धिनि ॥

वासी । स्त्री० तक्षण्याम् । वसूली० इ० भा० प्र० ॥

वासु : । पुं० विष्णौ । नारायणे ॥ वसतिसर्वभूतेषु जीवरूपेणान्तर्यामिरूपेणवा०वासयतिसर्वाणिभूतानिस्वात्मनिवा । वस० । बाहुलका

दुण् ॥ पुनर्वसौ ॥ विश्वरूपे ॥
वासुकि : । पुं॰ अहिराजे । सर्पराजे । सर्पजातिभेदानांमध्ये॰ भगवतोविभूतौ ॥ वसु : रत्नंकेमूर्द्धि यस्य । वसुकायतिवा । कै शब्दे । आतोनुपसर्गेक : । वसुकस्यापत्यम् । अतइञ् ॥
वासुकेय : । पुं॰ अहिराजे ॥
वासुकेयस्वसा । स्त्री॰ विषहर्याम् । मनसादेव्याम् ॥ आस्तीकस्यमुनेर्माताभगिनीवासुकेस्तथा । जरत्कारुमुने : पत्नी मनसादेविनमोस्तुते ॥
वासुदेव : । पुं॰ चित्ताधिष्ठातरि । विष्णौ । नारायणे । वृष्णीनांमध्ये॰ वसुदेवपुत्रत्वेनप्रसिद्धे॰ऽर्जुनोपदेष्टरिभगवद्विभूतौ ॥ तस्येश्वरस्यापिविभूत्यन्त : पाठस्तेनरूपेणचिन्तनार्थ : । एवंरामादावप्यवगन्तव्यम् ॥ वसुदेवस्यापत्यम् । ऋष्यन्धकेत्यण् ॥ यद्वा । वसतीति वासु : । वस॰ बाहुलकादुण् । वासुश्चासौदेवश्च ॥ विष्णुपुराणे नामव्युत्पत्तिर्यथा । सर्वत्रासौसमस्तञ्चवसत्यत्रेतिवैयत: । ततोसौवासुदेवेतिविद्वद्भि : परिगीयते ॥ इतिविष्णुपुराणम् ॥ यद्वा । वस्ते आच्छादयति॰ स्वमायया आवृणोतिजगदितिवासु : । वसेरौणादिकउ : । अन्येषामपिदृश्यतइतिवसुशब्दाकारस्यदीर्घ : । बाहुलकादुणप्रत्ययेवा । दीव्यतिप्रकाशतइति देव : वासुश्चासौदेवश्च ॥ छादयामिजगत्सर्वंभूत्वासूर्यइवांशुभिरितिमोक्षधर्मेभारतम् ॥ लक्षणं यथा । दक्षिणेतुकरेचक्रमधस्तात्पद्ममेवच । वामेशङ्खंगदाधस्ताद्वासुदेवस्यलक्षणमित्यग्निपुराणम् ॥
वासुदेवप्रियङ्करी । स्त्री॰ शतावर्याम् ॥ श्रीकृष्णप्रियकारिण्याम् ॥
वासुदेववरीयसी । स्त्री॰ शतावर्याम् ।
वासुपूज्य : । पुं॰ जिनविशेषे ॥
वासुभद्र : । पुं॰ श्रीकृष्णे ॥
वासुरा । स्त्री॰ वासितायाम् ॥ रात्रौ ॥ भुवि । वासतेयभूमौ ॥
वासू : । स्त्री॰ नाट्योक्त्यावालायाम् ॥ वाश्यते॰ स्वगृहे । वसेर्ण्यन्ताद्बाहुलकादूः ॥
वासौक : । न॰ शयनास्पदे । वासमन्दिरे ॥
वास्तवम् । न॰ परमार्थभूते । परमात्मनि ॥ वस्त्वेव । स्वार्थेऽण् ॥ जीवे ॥ वस्तुनोंशत्वात् ॥ मायायाम् ॥ वस्तुन : शक्तित्वात् ॥ जगति वस्तुन : कार्य्यत्वात् ॥
वास्तविक : । त्रि॰ परमार्थभूतेवस्तुनि ॥
वास्तव्य : । त्रि॰ वस्तरि । वासकर्त्

रि । वसति । वस० । वसेस्तव्यत् कर्त्तरिणिच्चेतितव्यत् । वासयो ग्यं ॥ पुं०वसती ॥

वास्तु । न० वास्तुकशाके । वास्तूके ॥ पुं०न०पुर्याम् । सीम्नि ॥ सुरङ्गा-याम् । गृहार्हभूमौ । वेश्मभूमौ । वसन्त्यत्र । वसनिवासे । वसेस्तुन् । अगारेणिच्च । पुं० दैत्यविशेषे ॥ जलाशयगृहारामसेतुसङ्क्रमशा-खिनाम् । देवतानांप्रतिष्ठायांवा स्तुदैत्यंप्रपूजयेत् ॥ अनर्चयित्वा योवास्तुंकुर्यात्कर्माणिमानव : । विघ्नंतस्यचरेद्वास्तु : परिवारगणै: सहैतिनिर्वाणतन्त्रम् ॥ अपिच । मारीभयेरोगभयेडाकिन्यादिभयेत था । औत्पातिकेपत्यदोषेव्यालिर क्षाभये पिचेति ॥ ध्यात्वाचपू जयेद्वास्तुं सर्वशान्तिस्ततो भवेदि-त्यूह :॥

वास्तुकम् । न० वास्तूकशाके । वथु वा० इ० भा० प्र० ॥ यथास्यगुणा: । लघुदीर्घपत्रभेदाद्वास्तुकद्वितयं मतम् ।वास्तुकद्वितयंस्वादुक्षारंपा केकटुदितम् ॥ दीपनंपाचनंरु च्यंलघुशुक्रबलप्रदम् । सरंप्लीहा स्रपित्तार्श : कृमिदोषत्रयापहम् ॥ वास्तौभवम् । अध्यात्मादित्वा ट्ठञ् । इसुसुक्तान्तात्क :॥

वास्तुकी । स्त्री० चिल्लीशाके । क्षुद्र वास्तुकी ॥

वास्तुपुरुष : । पुं० वास्तुरक्षसि । पू र्वमासीन्महद्भूतंसर्वलोकभयङ्करम् । तद्देवैर्निहतंभूमौसवास्तुपुरुष: स्मृत :॥

वास्तुविद्या । स्त्री० वास्तुविधानशा-स्त्रे ॥ पञ्चवाराहीमन्यच्च ॥

वास्तूकम् । न० वास्तुके । वथुवा० इ०प्र०शाके । वसतिदेहेचिरम्० गुणावाऽस्मिन्वसन्ति । वस० । उ लूकादयश्चेतिसाधु ।

वास्तेयम् । त्रि० वस्तिसदृशे । वस्ति रिव । वस्तेर्ढञ् । ङीपि०वा-स्तेयी ॥

वास्तोष्पति : । पुं० सुरपतौ । वला रातौ । इन्द्रे ॥ वास्तोर्गृहस्तेवस्य० पतिरधिष्ठाता । वास्तोष्पतिगृहमे धाच्छचेतिनिपातनादलुक्०षत्व प्रत्यये । इण : परत्वात्०क-स्कादिषुचेतिषत्वम् । देवे ॥

वास्तोष्पतीयम् । न० वास्तोष्पतये० हविषि ॥ वास्तोष्पतिर्देवतास्य । द्यावापृथिवीत्यादिनाछ :॥

वास्तोष्पत्यम् । न० वास्तोष्पतीये । वास्तोष्पतिर्देवताऽस्य । द्यावापृ थिवीत्यादिनायत् ॥

वास्त्र : । त्रि० वस्त्रावृतरथे । वस्त्रे णपरिवृतोरथ: परिवृतोरथइत्यण् ।

वास्थ : । त्रि० जलस्थे ॥

वाह्य :। त्रि० आच्छाद्ये ॥ वसत्याच्छादने । कर्म्मणिण्यत् ॥
वाह :। पुं० भुजे ॥ धान्यमानप्रभेदे यथाहुः। पलंप्रकुञ्चकंमुष्टिः कुडवस्तच्चतुष्टयम्। चत्वारः कुडवाः प्रस्थस्तु: प्रस्थमथाढकम् ॥ अष्टाढकोभवेद्द्रोणोद्विद्रोणः सूर्प उच्यते। सार्द्धसूर्पोभवेत्खारीद्वेखार्य्यौगोण्युदाहृता ॥ तामेवभारंजानीयाद्वाहोभारचतुष्टयमिति ॥ अश्वे ॥ वृषे ॥ वायौ ॥ वहति वहप्रापणे। हलश्चेतिघञ् ॥ उह्यते ऽनेनवा। वहेः कर्मणि० करणेवा० घञ् वाह्यतेवा। ण्यन्तः। अच् ॥ वाहतेवा। वाहृप्रयत्ने। अच् ॥ रथादौ ॥ त्रि० वहनकर्त्तरि ॥
वाहकः। त्रि० वहनकर्त्तरि ॥ वहति। वह० ण्वुल् ॥
वाहद्विषन्। पुं० महिषे ॥ वाहानां द्विषन्० वाहैर्द्विषन्वा। सप्तमीतियोगविभागात्समासः ॥
वाहनम्। न० हस्त्यश्वरथादौ। याने। युग्य। पत्रे। धोरणे ॥ देव्यावाहनानियथा। विष्णुब्रह्मशिवैर्द्देवैर्भ्रियतेसाजगन्मयी। सितप्रेतोमहादेवोब्रह्मालोहितपङ्कजः ॥ हरिर्हरिस्तुविज्ञेयोवाहनानिमहौजसः। स्वमूर्त्यावाहनत्वन्तुतेषांदत्त्वान्नियुज्यते ॥ तस्मान्मूर्त्त्यन्तरंकृत्वावाहनत्वंगतास्त्रयः। यस्मिन्यस्मिन्महामायाप्रीत्यातिसततंशिवा ॥ तेनतेनैवरूपेणआसनान्यभवंस्त्रयः। इतिकालिकापुराणम् ॥ वहत्यनेन। वह०। करणेल्युट्। वाहनमाहितादितिनिपातनाद्दीर्घः ॥ यद्वा। वाहयति। वहेः स्वार्थण्यन्तात्कर्त्तरिल्युट् ॥ वाहानांप्रेरणे ॥ यथा। वाहनंप्रतिवाहानांषड्विधंप्रेरणंविदुः। रागाववल्गाकशापार्ष्णिप्रतोदरवभेदतः ॥ चतुर्थभवने ॥
वाहनश्रेष्ठः। पुं० अश्वे। हये ॥
वाहना। स्त्री० निर्वाहयितृत्वे ॥ ण्यासश्रन्थोयुच् ॥
वाहवेगः। पुं० पशुभेदे ॥
वाहाः। पुं० अनडुहि ॥ वहति। वह०। वहिहाधाञ्भ्यश्छन्दसीत्यसुन् ० णित्। णेोणाभ्रषाभ्रन्तवाहसा ॥
वाहसः। पुं० अजगरे। शयौ। शयालौ ॥ जलनिर्याणे ॥ सुनिषण्णके ॥ वहति। वह०। वहियुभ्यांणिदित्यसच्। णित्वाद्वृद्धिः ॥ वाहंगतिंस्यतीतिवा। षोन्तकर्मणि। आतोनुपेतिकः ॥
वाहा। स्त्री० बाहौ। भुजे ॥ अजादित्वाट्टाप् ॥

वाह्लिक : । पुं॰ ढक्कायाम् ॥ गोवा ह्नि । शकटादौ ॥

वाह्लित : । त्रि॰ लङ्घिते ॥

वाह्लित्थम् । न॰ हस्तिकुम्भाधोभागे ॥ कुम्भोऽत्रवातकुम्भ : । वाह्लित्थंवा तकुम्भाधइतिभागुरि : । सचललाटाधोभाग : । अवश्यंवहति । वह॰ । आवश्यकेणिनि : । सतिष्ठत्यत्र । घञर्थेक : । पृषोदरादित्वात्साधु : ॥

वाह्लिनी । स्त्री॰ तरङ्गिण्याम् । शैवलिन्याम् ॥ सेनायाम् ॥ सेनाविशेषे । त्रिषुगणेषु ॥ यथा । इभा : ८१ । रथा : ८१ । अश्वा : २४३ । पदातय : ४०५ । एतत्परिमाणपरिमितायांसेनायामित्यर्थ : । समस्तसङ्ख्यया ८१० ॥ वहति । वह॰ । ग्रह्यादित्वाण् णिनि : ॥ वाह्ला : सन्त्यस्यांवा । इनि : ॥

वाह्लिनीपति : । पुं॰ सेनापतौ । सेनान्याम् ॥ समुद्रे ॥ वाह्लिन्या : सेनाया : ॰ वाह्लिनीनांनदीनांवापति : ॥

वाह्लीक : । पुं॰ देशविशेषे ॥ जर्त्तिकजातौ जाट॰ जट्ट॰ इ॰ भा॰ प्र॰ जातौ ॥ यथोक्तंकर्णपर्वणि ४०० अध्याये । तत्रहव : पुरावृत्ता : कथा : कश्चिद्॰ द्विजोत्तम : । वाह्लीकदेशंमद्रांश्चकुत्सयन् वाक्यमब्रवीत् ॥ पञ्चानांसिन्धुषष्ठानामन्तरंयेसमाश्रिता : । तान् धर्मवाह्यानशुचीन् वाह्लीकान् परिवर्जयेत् ॥ शाकलंनामनगरमापगानामनिम्नगा । जर्त्तिकानामवाह्लीकास्तेषांवृत्तंसुनिन्दितमिति ॥ शतद्रुविपाशैरावतीवितस्ताचन्द्रभागेतिपञ्चनद्य : सिन्धु : षष्ठ : तन्मध्यदेशीवाह्लीकइतिव्याख्याता र : ॥ म्लेच्छप्रभेदे ॥ गवि ॥ वाह्रके ॥ वहति । वह॰ । अलीकादित्वात्कीकन्॰ वहतेर्वृद्धिश्च ॥ त्रि॰ वाह्ये ॥ प्राग्दीव्यतीयेष्वर्थेषु॰ ईकक्चेतिवार्तिकेन॰ ईकक् ॰ वहिषष्टिलोपश्च ॥ वाह्लीका : पुं॰ भूम्नि॰ देशविशेषे । टक्कनामसु ॥ वाह्लीकाष्टक्कनामानोवाह्लीकावह्लिकाह्वयाइतिहेमचन्द्र : ॥

वाहुशार : । पुं॰ श्लेष्मातके । वहुवारे ॥

वाह्यम् । न॰ याने । युग्ये । पत्रे । वाहने । वाह्ये ॥ त्रि॰ वहनीये । वलीवर्दादौ ॥ वहिरर्थे ॥ वहिर्भवे ॥ वाहयितुंयोग्य : । वहेर्ण्यत् ॥ वहिर्भवोवा । वहिषष्टिलोपोयञ्चेतियञ् ॥

वाह्यप्रपञ्च : । पुं॰ आन्तरप्रपञ्चातिरिक्ते ॥ सयथा । पृथिव्यादिपञ्चभूततज्जन्यब्रह्माण्डतदन्तर्भूतोप

र्ध्वपरिविद्यमानभूर्भुवःस्वर्महर्ज
नस्तपःसत्यनामकाधोधोविद्यमा
नातलवितलसुतलतलातलमहात
लरसातलपातालनामकचतुर्द्दशभु
वनतन्निष्ठजरायुजाण्डजस्वेदजोद्भि
ज्जचतुर्विधभूतग्रामसमुदायोयथा
योग्यंविविधनाम रूपगुणधर्म्माश्च
त्याश्रयो० बाह्यप्रपञ्चः ॥ *

**बाह्यमानः ।** त्रि० पृष्ठेनोह्यमाने ॥

**बाह्यवृत्तिः ।** पुं० श्रोत्रवागादौ ॥

**बाह्यास्तित्ववादः ।** पुं० बौद्धैकदे
शिनांवादे ॥ सयथा । समुदायोऽ
णुसम्भूतोबाह्योभूम्यापगादिकः
। आन्तरःस्कन्धजश्चित्तचैत्यरूपश्च
तौजगत् ॥ मृदम्बुवह्निवायूनां
खरस्निग्धोष्णचञ्चलाः। चतुर्द्धाणा
णवः पञ्चस्कन्धारूपादिभेदतः ॥
रूपशब्दादयस्तेषांव्यक्तिर्विज्ञानमु-
च्यते । वेदनासुखदुःखेस्तःसंज्ञा
डित्थादिनामयत् ॥ संस्कारोवास
नाचैवमुक्तसङ्घद्वयात्मकम् । ज
गत्प्रत्यक्षतःसिद्धंकिमन्यपरिक
ल्पनैरिति ॥ नायंवादोयुक्तिसहः
। यतः । यथा । स्थिरचेतनराहि
त्यात्स्वपञ्चाचेतनत्वतः । नस्क
न्धानामणूनांवासमुदायोपयुज्यते ।

**बाह्येन्द्रियम् ।** न० श्रोत्रत्वक्चक्षुर्जि
ह्वाघ्राणेषु ॥ वाक्पाणिपादपा
यूपस्थेषु ॥

बाह्येन्द्रियम्

**बाह्येन्द्रियविषयम् ।** न० श्रोत्रादिवि
षयेषु ॥ यथाहुः । बुद्धीन्द्रिया
णितेषांपञ्चविशेषाविशेषविषयाणि
। वाग्भवतिशब्दविषयाशेषाणितुप
ञ्चविषयाणि ॥ अस्यार्थः । तेषांद
शानामिंद्रियाणांमध्ये० पञ्च० वि
शेषाविशेषविषयाणि० विशेषाः०
स्थूलाः शब्दादयः शान्ताघोरामू
ढाः पृथिव्यादिरूपाः० अविशेषाः
तन्मात्राणि० सूक्ष्माः शब्दादयः
। तन्मात्रग्रहणेन० स्थूलभूतमा
त्रमपाकरोति० विशेषाश्चाविशे-
षाश्चविशेषाविशेषाः० तएवविषया
येषांबुद्धीन्द्रियाणांतानि० तथो
क्तानि । तत्रोर्द्ध्वरेतसांयोगिनां
चश्रोत्रम्० शब्दतन्मात्रविषयंस्थू
लशब्दविषयञ्च० अस्मदादीना
न्तुस्थूलविषयमेव । एवंतेषांत्व
क्० स्थूलसूक्ष्मस्पर्शविषया० अ
स्मदादीनान्तुस्थूलस्पर्शविषयैव ।
एवंचक्षुरादयोपि० तेषामस्मदा
दीनाञ्चरूपादिषुस्थूलेषुद्रष्टव्याः
एवंकर्मेन्द्रियेषुमध्ये० वाग्भव
तिशब्दविषया० स्थूलशब्दविषया०
तद्धेतुत्वात्० नतुशब्दतन्मात्रस्यहे
तुः० तस्याहङ्कारकार्यत्वेन० वा
गिन्द्रियेणसहैककारणत्वात् । शेषा
णितुचत्वारि० पाणिपादपायूप
स्थानि० पञ्चविषयाणि० पाण्य

याच्छादर्शापटादीनामपञ्चशब्दाद्यात्मकत्वात् ॥

वह्लिः। पुं० अश्वयोनौदेशविशेषे ॥

वाह्लिकः। पुं० वाह्लीकदेशे ॥ वाह्लीकदेशोत्पन्नेऽश्वे ॥ न० धीरे। कुङ्कुमे ॥ हिङ्गुनि ॥ वह्लिकदेशेभवः। कोपधादिण्यण् ॥

वाह्लिजः। पुं० वाह्लिदेशोत्पन्नेतुरगे ॥

वाह्लीकः। पुं० बलख० इ० भा० प्र० देशविशेषे ॥ यथोक्तं शक्तिसङ्गमे। काम्बोजदेशमारभ्य महाम्लेच्छात्पूर्वके। वाह्लीकदेशो देवेशि अश्वोत्पत्तिपरायणः ॥ तद्देशोत्पन्नाश्वे ॥ न० हिङ्गुनि ॥ धीरे। कुङ्कुमे ॥ उच्यते० वहतिवा। वहप्रापणे। अलीकादयश्चेतिसाधुः ॥ यद्वा। वह्लते। वल्लप्राधान्ये। बाहुलकादीकन् ॥ त्रि० वह्लीकदेशोद्भवे ॥ वह्लीकदेशभवः कच्छादिभ्यश्चेत्यण् ॥ पुं० गन्धर्वविशेषे ॥

। अ० निग्रहे ॥ नियोगे ॥ पदपूरणे ॥ निश्चये ॥ सहने ॥ हेतौ ॥ अव्याप्तौ ॥ विनियोगे ॥ ईषदर्थे ॥ परिभवे ॥ शुद्धावलम्बने ॥ विज्ञाने ॥ श्रेष्ठे ॥ अतीते ॥ विगते ॥ विशेषे ॥ गतौ ॥ आलम्भे ॥ पालने ॥ नानार्थे ॥ गते ॥ विरुद्धे ॥

विः। पुं० स्त्री० पक्षिणि। वा गतिगन्धनयोः। वातेर्डिच्चेतीण् ॥

विंशः। त्रि० विंशतेः पूरणे विंशतितमे ॥ तस्यपूरणे डट् ॥

विंशकः। त्रि० विंशतौ ॥ विंशत्या क्रीते ॥ विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम्। तिविंशतेर्डितीति लोपः ॥

विंशतिः। स्त्री० सङ्ख्याविशेषे। एकाधिकोनविंशतौ ॥ सङ्ख्यार्थे० एकद्विबहुवचनान्तः। सङ्ख्येये० एकवचनान्तः। यथा। विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः। सङ्ख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः ॥ द्वौदशतौ परिमाणमस्य। पङ्क्तिविंशतीतिनिपातनात्० प्रकृतेर्विन्भावः शतिप्रत्ययश्च ॥

विंशतिकः। त्रि० विंशत्याक्रीतद्रव्याद्यर्थे ॥ विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायामित्यत्र योगविभागात्कन् ॥

विंशतितमः। त्रि० विंशे ॥ विंशतेः पूरणः ॥ तस्यपूरणे डट्। विंशत्यादिभ्यस्तमडन्यतरस्याम्० इतिडटस्तमडागमः ॥

विंशी। पुं० विंशतौ ॥

विक्कम्। न० सद्यः प्रसूतायाः गोः क्षीरे ॥ यथा। क्षीरं सद्यः प्रसूतायाः पेयूषः पालनं विक्कमितिशब्द

 

चन्द्रिका ॥

विकङ्कट:। पुं॰ गोक्षुरे॥ इति शब्दमाला॥

विकङ्कत:। पुं॰ स्वादुकण्टकी। स्रुवावृक्षे। ग्रन्थिले। व्याघ्रपादि। मृदुफले। वंङ्क च॰ इ॰ गो॰ दे॰ मा॰ प्र॰ विकङ्कते। कङ्किगतौ। अतच् प्रत्यय:॥ विकङ्कतफलंपक्वंमधुरंसर्वदोषजित्॥

विकङ्कता। स्त्री॰ अतिबलायाम्॥

विकच:। पुं॰ क्षपणे॥ केतुग्रहे॥ त्रि॰ अकेशे। केशशून्ये॥ विकसिते। स्फुटिते॥ कचति। कचबन्धने। पचाद्यच्॥ विगत: कचोऽस्माद्वा॥

विकचा। स्त्री॰ महाश्रावणिकायाम्॥

विकच्छ:। त्रि॰ कच्छरहिते। मुक्तकच्छे॥

विकट:। पुं॰ विस्फोटके॥ साकुरुण्डवृक्षे॥ त्रि॰ उरौ। विशाले। पृथुले॥ पृथौ॥ विकराले॥ रम्ये। सुन्दरे॥ दन्तुरे॥ कटाभावे। विकटति। कटे वर्षावरणयो:। पचाद्यच्॥ यद्वा। सम्प्रोदश्चेतिचकारादूदरपिकटच्॥

विकटा। स्त्री॰ बौद्धदेव्यन्तरे। मायादेव्याम्। मारीच्याम्। त्रिमुखायाम्। वज्रकालिकायाम्। वज्रवाराह्याम्। गौर्याम्। पीवरथायाम्॥

विकटानन:। पुं॰ राक्षसान्तरे॥ त्रि॰ भीषणास्ये॥

विकण्टक:। पुं॰ विकङ्कते॥ दुरालभायाम्॥ विरुद्ध: कण्टकोऽत्र॥

विकत्थनम्। न॰ मिथ्याश्लाघायाम्॥ यथा।-श्लाघाप्रशंसार्थवाद: सातुमिथ्याविकत्थनम्। इ॰ हेमचन्द्र:॥ विकत्थ्यते। कत्थश्लाघायाम्। भावेल्युट्। त्रि॰ तच्छीले॥ ताच्छीलिकेषु॰वासरूपविधिर्नास्तीत्युत्सर्गायिकत्वात्॰ बौकषलसितिघिनुण् विषये॰ चलनशब्देतियुच्॥ स्वगुणश्लाघनादौ॥

विकत्थी। त्रि॰ विकत्थनशीले॥ विकत्थते। तच्छील:। कत्थ॰। वौकषलसकत्थस्रम्भ:। इति घिनुण्॥

विकथा। स्त्री॰ अध्ययनेऽनुपयुक्तायां कथायां॥

विकनीनिक:। त्रि॰ काणे॥ विगताकनीनिकातारायस्मात्॥

विकम्पित:। त्रि॰ विशेषेणकम्पविशिष्टे॥

विकर:। पुं॰ रोगे॥ विकीर्यते। कृ॰। ऋदोरप्॥ त्रि॰ करशून्ये॥

विकराल:। त्रि॰ भयानके॥

विकर्ण:। पुं॰ विट्टिशि। कीर्णे।

द्वयोर्म्मध्ये ॥ यथा । शक्रादीनांपुरेतिष्ठन्स्पृशन्पुरत्रयम् । विकर्णौद्वौ विकर्णस्थश्वीनकोणान्द्विपुरेतथेतिविष्णुपुराणम् ॥ दुर्योधनानुजे ॥ त्रि० कर्णरहिते ॥

विकर्णिक : । त्रि० कर्णिकारहिते ॥ पुं० भूमि० सारस्वतदेशे ॥ यथा । काश्मीरस्तुमाधुमता : सारस्वता विकर्णिका : । इतिहेमचन्द्र : ॥

विकर्णी । स्त्री० अयाङ्कुशेशरे० उद्दारेऽन्वयारिणि ॥

विकर्त्तन : । पुं० अर्के । मार्त्तण्डे । सूर्ये ॥ विकर्त्तयतिभक्तं रागात् । कृतीछेदने । णिअन्तात्ल्युट् ॥ यद्वा । विशेषेणकर्त्तनंयस्य । विश्वकर्मणोयन्त्रोल्लीढत्वात् ॥ अर्कवृक्षे ॥

विकर्म्मकृत् । त्रि० निषिद्धकर्मकारिणि ॥

विकर्म्म । न० शास्त्रप्रतिषिद्धे० व्यापारे ॥

विकर्म्मस्थ : । त्रि० निषिद्धकृति । श्रौतस्मार्त्तिकस्वकर्मणोविरोधीनियानिकर्माणि० अगम्यागमनादीनि तत्कारिणि ॥

विकर्ष : पुं० । कर्षणे ॥ विकर्षणम् । कृष० । घञ् ॥ बाणे ॥

विकर्षणम् । न० आकर्षणे ॥

विकल : । त्रि० जने ॥ विह्वले ॥ स्वभावहीने ॥ विगताकलायस्य ॥ निष्कले ॥

विकलपाणिक : । पुं० कुणौ । कुकरे । विकृतकरे ॥ विकल : पाणिर्यस्य ॥

विकला । स्त्री० ऋतुहीनायाम् ॥ राश्यादिकलाया : षष्टितमांशे ॥

विकलाङ्ग : । त्रि० स्वभावतोन्यूनाधिकाङ्गे । अपोगण्डे ॥ विकलमङ्गमस्य ॥

विकली । स्त्री० ऋतुहीनायाम् । गौरादित्वान्ङीष् ॥

विकल्प : । पुं० भ्रमे । भ्रान्तौ ॥ कल्पने ॥ सङ्कल्पविपर्यये ॥ वितर्के ॥ संशये ॥ तुल्यबलरूपविरोधेविकल्पोभवति ॥ शब्दज्ञानानुपातीवस्तुशून्योविकल्प : ॥ विकल्पनम् । कृपू सामर्थ्ये । भावेघञ् ॥ विविधकल्पे ॥ विशिष्टकल्पे ॥

विकल्पक : । त्रि० निर्मातरि ॥

विकल्पित : । त्रि० विपरीतत्वेनकल्पिते ॥

विकषा । स्त्री० मांसरोहिण्याम् ॥ मञ्जिष्ठायाम् ॥ विकषति । कषहिंसायाम् । पचाद्यच् ॥

विकस : । पुं० सिन्धुनन्दने ॥ चन्द्रे ॥

विकसत् । त्रि० जृम्भमाणे ॥

विकसनम् । न० स्फुटने ॥
विकसा । स्त्री० मञ्जिष्ठायाम् ॥ विकसति । कसगतौ । अच् ॥
विकसित : । त्रि० उज्जृम्भिते । विनिद्रे । दलानामन्योन्यविश्लेषे । दलिते ॥ व्यकासीत् । कस० । गत्यर्थेतिक्त : ॥
विकस्वर : । त्रि० विकसनशीले । विकाशिनि ॥ विकसति । कस० । स्थेशभासपिसकसोवरच् ॥
विकस्वरा । स्त्री० रक्तपुनर्नवायाम् ॥
विकार : । पुं० प्रकृतेरन्यथाभावे । विकृतौ ॥ स्वरूपपरित्यागेनरूपान्तरापत्तौ । कार्ये ॥ पञ्चमहाभूतान्येकादशेन्द्रियाणीतिषोडशकोगणः॥ जन्मादिनाशान्तपरिणामे । सचयास्केनपठितोयथा । जायते० अस्ति० वर्द्धते० विपरिणमते० अपक्षीयते० विनश्यतीतिषट्भावविकारा:इति॥ शार्ङ्गज्योति: कथमनुदितानस्तमितप्रकाशं विश्वोत्पत्तौव्रजतिविकृतिं निष्कलंनिर्म्मलञ्च । शश्वन्नीलोत्पलदलरुचामम्बुवाहावलीनांप्रादुर्भावेभवतिनभस:कीदृशोवाविकार: ॥ विकरणम् । कृञ० । घञ् । रुजि । रोगे ॥
विकारहीन : । त्रि० निर्विकारे । जायतेऽस्तीत्यादिषड्भावविकारशून्ये ॥
विकारावर्त्ति । न० निर्गुणे० भगवद्रूपे ॥ विकारेषुनवर्त्ततइतितथा ॥
विकारी । पुं० षष्टिवत्सरान्तर्गतवत्सरविशेषे ॥ विषमस्थंजगत्सर्वंविरोधिभयसम्भ्रमम् । विकारीसर्वतोऽपायोममवाक्यमुनान्यथा ॥ ३३ ॥ त्रि० उपचयादिमति । परिणामिनि ॥ विकारोऽस्यास्ति । इनि : ॥ षड्भावविकारयुक्तदेहवति ॥ तथाहि । ब्रह्मादिस्तम्बपर्य्यन्तादेहवन्तोविकारिण:।किंविष्णु किंशिवोब्रह्मामघवाकिंबृहस्पति: । देहवान्प्रभवत्येवविकारै: संयुत: सदेतिव्यास : ॥
विकार्य्य : । पुं० सोमादौ० कर्म्मणि ॥ विक्रियते । डुकृञ्० । विभाषाकृवृषोरितिक्यब्भावे० ऋदृलोर्ण्यत् । वृद्धि : ॥ अहङ्कारे ॥ विविधंकार्य्यमस्य । सचत्रिविध : । तामसोराजस:सात्विकइतिभेदात् । तत्रतामसाज्जडानिभूतसूक्ष्माणिजायन्ते० राजसाद्बहिर्मुखानिदशेन्द्रियाणि० सात्त्विकान्मनइन्द्रियदेवताश्चजायन्ते ॥
विकाल : । पुं० दिनान्ते । सायाह्नि ॥ दैवपैत्र्यादिकर्म्मणिविरुद्ध: काल : ॥
विकालक : । पुं० विकाले ॥
विकालिका । स्त्री० ताम्याम् । मा

गरन् प्रायाम् । तांबी॰ इ॰ गी दि॰ भा॰ प्र॰ बार्ये ॥

विकाश: । पुं॰ विजने । रहसि ॥ प्रकाशे । व्यक्ते ॥ विकाशनमस्मि न वा । काशृदीप्तौ । भावेऽलसे ऽधिकरणे वाघञ् ॥ यद्वा । विक शनमत्रवा काशशब्दे । पूर्ववद्घ ञ् ॥ विजृम्भणे ॥

विकाशनम् । न॰ विकाशे ॥

विकाशी । त्रि॰ विकस्वरे । विकास शीले ॥ विकाशोऽस्यास्ति । अतइ नि: ॥

विकाषी । त्रि॰ विकाशिनि ॥ शीक षेतिघिनुण् ॥

विकास: । पुं॰ विस्वरे ॥

विकासी । त्रि॰ विकस्वरे । विकसति । कसगतौ ॥ शीकषेतिघिनुण् । पृषोदरादि: ॥ विकासोऽस्यास्ति वा । अतइनि: ॥

विकिर: पुं॰ खगे । पक्षिणि । वि किरति । कृविक्षेपे । इगुपधेति क: ॥ कूपे ॥ पूजासमयेविघ्नो त्सारणार्थं प्रक्षीयलाजादौ । य था । लाजाचन्दनसिद्धार्थभस्मदू र्वाकुशाक्षता: । विकिराइतिस न्दिष्टा: सर्वविघ्नौघनाशका: ॥ अग्निदग्धादीनांपिण्डदाने ॥ न॰ जलविशेषे ॥ यथा । नद्यादिनिक टे भूमिर्यभवेद्वालुकामयी । उद्धा

व्यतैततोयस्तु तज्जलं विकिरंविदु: ॥ विकिरंशीतलंस्वच्छंनिर्दोषंल घु चस्मृतम् । तुवरंमादुपित्तघ्नं मनाक्कफकरं स्मृतम् ॥

विकीरण: । पुं॰ रक्तार्कवृक्षे ॥ वि किरति । कृविक्षेपे । कृवृइतिक्यु न् । ल्वंरपरत्वम् । बाहुलकाद्दी र्घ: ॥ विक्षेपणे । वखेरणा॰ इ॰ भा॰ ॥ विहिंसने । विज्ञाने ॥

विकीर्ण: । त्रि॰ विस्तीर्णे । लुलिते कीर्णे । विक्षिप्ते । विखराइति ख्याते ॥ विललापविकीर्णमूर्द्धजे ति॰ कुमारसम्भव: ॥ विकीर्यतेस्म । कृ॰ । क्त: ॥

विकीर्णरोम । न॰ स्थौणेये । कुकु रौंधा॰ इ॰ भा॰ प्र॰ ओषधौ ॥ विकीर्णानिरोमाण्यस्मिन् ॥

विकीर्णसञ्ज्ञम् । न॰ स्थौणेये ॥ *

विकुण्ठित: । त्रि॰ कुण्ठीकृते ॥

विकुर्वाण: । त्रि॰ हर्षमाणे । हृष्ट चित्ते ॥ विकुरुते । करोतेश्शानश् ॰शानज्वा ॥ विक्रियमाणे ॥ वि कृते ॥

विकुस्र: । पुं॰ चन्द्रे ॥ विकसति । शीकसेरितिरक्॰ उत्त्वोपधाया: ॥

विकूणिका । स्त्री॰ नासिकायाम् ॥

विकूननम् । न॰ आस्यगतविकारे । विराबना॰ कूटकढाबना॰ कील ना॰ इत्यादिभाषाप्रसिद्धे ॥

विकृतम् । न० विकारे ॥ तल्लक्षणं यथा । स्त्रीमतेर्ष्यादिभिर्यन्मनोच्यते स्वं विवक्षितम् । व्यज्यते चेष्टया वेदं विकृतं तद्विदुर्बुधाः ॥ पुं० वत्सरविशेषे ॥ तत्फलं यथा । सर्वाः प्रजाः प्रपीड्यन्ते व्याधिः शोकश्च जायते । शिरोवक्षोऽक्षिरोगास्तथा पादृधिविकृतेजनाः ॥ २४ ॥ त्रि० बीभत्से ॥ रोगिते ॥ असंस्कृते । बीभत्साख्यरसान्विते ॥ विकरणं विकृतम्० जुगुप्साप्रभवत्वात् ॥ विक्रियते स्मयत् । क्तः ॥

विकृतिः । स्त्री० विकारे ॥ ऋजि ॥ डिम्बे ॥ यत्रनसमग्राङ्गोपदेशः साविकृतिरिति मीमांसकाः० यथा सौर्यादिः । तत्रकतिपयाऽङ्गानामतिदेशेनापिप्राप्तत्वात् ॥ मद्यादौ ॥ विकरणम् । कृञः क्तिन् ॥

विकृष्टः । त्रि० दीर्घे ॥ आकृष्टे ॥ विकृष्यते स्म । कृषविलेखने । क्तः ॥

विकेशः । त्रि० केशरहिते ॥

विकेशी । स्त्री० केशशून्यायाम् ॥ पटवर्त्याम् ॥

विकोकः । पुं० वृकासुरपुत्रे ॥

विकोषः । त्रि० कोषरहिते । निष्कोषे ॥

विक्कः । पुं० करिशावके । कलभे ॥

विक्रमः । पुं० पादविन्यासे ॥ आक्रमे । क्रान्तिमात्रे ॥ शक्तिसम्पत्तौ ॥ यथा । प्रमत्तेष्वभियुक्तेषु दैवेनप्रहतेषुच । विक्रमास्तत्रसिद्ध्यन्ति परीक्ष्यविधिनाकृताः ॥ इति युद्धकाण्डे रावणं प्रति विभीषणवाक्यम् ॥ शौर्यातिशये ॥ चरणे ॥ शिक्षाशास्त्रप्रयोगकौशले ॥ लग्नात्तृतीयभवने ॥ प्रभवादिषु चतुर्दशेवर्षे ॥ यथा । जायन्ते सस्य सर्वशस्यानिमेदिनीनिरुपद्रवा । जनयन्मधुगव्यस्तु महार्घ्यं विक्रमेप्रिये ॥ विक्रमादित्यभूपतौ ॥ विक्रमणम्० क्रमेगत्या । क्रमुपादविक्षेपे । घञ् ॥ त्रि० क्रमात् च्युते ॥

विक्रमादित्यः । पुं० स्वनाम्नातिप्रसिद्धे नृपतिश्रेष्ठे । साहसाङ्के । शकारौ ॥ विक्रमेणादित्यइव ॥ अथविक्रमार्कवर्णनम् सन्दधाति-ज्योतिर्विदाभरणसमाप्तौश्रीकालिदासः । वर्षेश्रुतिस्मृतिविचारविवेकरम्ये श्रीभारतेखधृतिसम्मित १८० देशपीठे । मत्तोऽधुनाकृतिरियंसतिमालवेन्द्रे श्रीविक्रमार्कनृपराजवरेसमासीत् ॥ प्रथमं नृपसभायां पण्डितवर्गं वर्णयति । शङ्कुःसुवाग्वररुचिर्मणिरंशुदत्तोजिष्णुस्त्रिलोचनहरोघटखर्पराख्यः । अन्येपिसन्तिकवयोऽमरसिंहपूर्वायस्यैवविक्रमनृपस्य सभासदोऽमी ॥

सत्योवराहमिहिरः श्रुतसेननामाश्री
बादरायणमणित्थकुमारसिंहाः
। श्रीविक्रमार्कनृपसंसदिसन्ति
चैतेश्रीकालतन्त्रकवयस्त्वपरे महा-
द्याः ॥ धन्वन्तरिः क्षपणकोऽमर
सिंहशङ्कुवेतालभट्टघटखर्परका-
लिदासाः । ख्यातोवराहमिहिरो
नृपतेः सभायांरत्नानिवैवररुचिर्न
वविक्रमस्य ॥ अथपरिजनान्वर्ण
यति । अष्टौयस्यशतानिमण्डलध
राधीशाः सभायांमहास्युः संस
त्परिणाहकोटिसुभटाः सत्पण्डि
ताः षोडश । दैवज्ञादशपञ्चमि
ता० श्चभिषजो० भट्टा० स्तथा० ढङ्ढि
नो० वेदज्ञारसचन्द्रमा १६ विजयते
श्रीविक्रमः सोधिभूः ॥ अथास्य
सैन्यंवर्णयति । यस्याष्टादशयोज
नानि कटके० पादातिकोटित्रयम्
३००००००० वाहानामयुतायुतम्
१००००००० च० नवतेस्त्रिघ्ना । कृ
ति २४३०० हस्तिनाम् । नौकाल
क्षचतुष्टयं० विजयिनोयस्यप्रयाणे
भवेत्० सोयंविक्रमभूपतिर्विजयते०
नान्योधरित्रीतले । अथास्यशाकप्र
वृत्तिंदर्शयति । येनास्मिन्वसुधा
तलेअकनामान्सर्वादिशः संकरेह
स्वापद्मनवप्रमान् ५५५५५५५५५
कलियुगेशाकप्रवृत्तिः कृता ।
श्रीविक्रमभूभुनाप्रतिदिनंतुष्टा



मणिस्वर्णगोसमोभाग्यपवर्ज्जनेनवि
हितोधर्मः सुवर्णाननः ॥ अथा
स्यदिग्विजयमाह । उद्दाममद्रविडद्रु
मैकपरशुर्लाटाटवीपावकोवल्गद्वङ्ग
भुजङ्गराजगरुडोगौडाब्धिकुंभोद्भवः
। गर्व्वान्धक्षितिराजसिन्धुरहरिर्धारा
न्धकारार्यमाकाम्बोजाम्बुजचन्द्र
माविजयतेश्रीविक्रमार्कोनृपः ॥
अथास्यप्रभुत्त्वादिगुणान्वर्णयति
। येनाप्युग्रमहोधराग्निविषयेदुर्गाण्य
सह्यान्यहोनीत्त्वायानिनतीकृतास्त
दधिपादृतानितेषांपुनः । वृन्दा
न्योध्यमरद्रुमस्मरसुरध्वाभङ्गुणेना
प्तस्त्रीमद्विक्रमभूभृताखलजनाम्भो
जेंदुनामण्डले ॥ अस्यपुरीवर्णय
ति । यद्राजधान्युज्जयिनीमहापुरी
सदामहाकालमहेशयोगिनी । स
माश्रितप्राण्यपवर्गदायिनी श्रीवि
क्रमार्कोऽवनिपोजयत्यपि ॥ योरू
मदेशाधिपतिंशकेश्वरंजित्वागृही
त्वोज्जयिनींमहाहवे । आनीयस
म्भ्राम्यमुमोचतन्नृपं श्रीविक्रमार्कः
समसह्यविक्रमः ॥ तस्मिन्सदा
विक्रममेदिनीशेविराजमानेसमव
न्तिकायाम् । सर्वप्रजामण्डलसौ
ख्यसम्पद्बभूवसर्वत्रचवेदकर्म ॥ श
ङ्क्वादिपंडितवराः कवयस्त्वने
केज्योतिर्विदः समभवंश्चवराहपू
र्वाः । श्रीविक्रमार्कनृपसंसदिमा

न्यवृत्तिस्तेरप्यहंनृपसखाकिलका लिदास : ॥ इतिज्योतिर्विदाभरण म् ॥ पाकविशेषे ॥ यथा । घृतेगु डंपलंविंशत्पचेत्सम्यग्भिषग्वर: । उत्तार्यचक्षिपेदेषांखण्डञ्चपलविं शति : । तालमूलीतुरङ्गीचशुण्ठी चेतिपलार्द्धकम् । जातीफलंचक क्कोलंलवङ्गञ्चेतिकार्षिकम् ॥ मा लतीचकुलिञ्जञ्चकबावंकरभंस्तथा म् । एतेषांकोलमात्रञ्चआयसस्य पलद्वयम् ॥पलैकंमोदकंकृत्वाए कैकंभक्षयेद्दिने । धातुक्षीणेग्नि क्षीणञ्चबलानलकरंपरम् ॥ मेच रोगेषुसर्वेषुकासश्वासेचकामले । प्रमेहान्विंशतिंहन्याद्विक्रमादि त्यमोदकइति ॥

विक्रमार्क : । पुं॰ विक्रमादित्ये ॥

विक्रमी । पुं॰ सिंहे ॥ त्रि॰ शक्ति मति ॥ विक्रम : शौर्यम्॰ तद स्यास्मिन्वाअस्ति । अतइनिठना विति णिनि : ॥

विक्रय : । पुं॰ विक्रयणक्रियायाम् । विपणे । मूल्यग्रहणपूर्वकद्रव्य त्यागे । वेचा॰ इ॰ भा॰ ॥ क न्याविक्रयेदोषो यथा । य : कन्या पालनंकृत्वाकरोतिविक्रयंयदि । वि[illegible]धनलोभेन कुम्भीपाकं सग च्छ[illegible] कन्यामूत्रपुरीषञ्चतत्रभक्ष [illegible] कृमिभिर्दंशित : का

कर्योवदिन्द्रायतुर्दश ॥ मृतस्यव्याध येनोच सलभेत्सम्मनिश्चितम् । विक्रीणीतेमांसभारंयस्तत्वेवदिवा निशमितिब्रह्मवैवर्त्तपुराणे ॥ विक्रयणम् । डुक्रीञ्द्रव्यविनिम ये । एरच् ॥

विक्रयणम् । न॰ विक्रये ॥ यथा । यमाद्दिशक्तानिहुताशपूर्वानिष्टा : क्रयेविक्रयणेप्रशस्ता : । पौष्णाग्नि चित्राशतविन्दुवाति : क्रयेहिता विक्रयणेनिषिद्धा : ॥

विक्रयिक : । त्रि॰ विक्रेतरि ॥ विक्र येणजीवति । वस्नक्रयविक्रयाट्ठ न् । क्रयविक्रयग्रहणंसङ्घातविगृ हीतार्थम् ॥

विक्रयी । त्रि॰ विक्रयकर्त्तरि ॥

विक्रान्त : । पुं॰ शूरे ॥ विक्रान्तस्य लज्जाभूषणम् ॥ सिंहे ॥ न॰ वैक्रान्तमणौ ॥ नीचवज्रे । कुव ज्रे ॥ विक्रामतिस्म । क्रमु॰गत्य र्थेतिक्त : ॥

विक्रान्ति: । स्त्री॰ अश्वगतौ । पुला यिते ॥ विक्रमे ॥

विक्रयिक : । त्रि॰ विक्रेतरि ॥

विक्रिया । स्त्री॰ विकारे । विकृतौ ॥ विकरणम् । कृञ : शच ॥ विविधत्वेनक्रियतेइतिवा ॥ विशे षाकारे ॥

विक्रीत : । त्रि॰ कृतविक्रये । वेच

द्दिया० भा० ॥ विक्रीतेकरिथिवि भयुशिविवाद : ॥

विक्रुष्ट : । वि० निष्ठुरे ॥

विक्रेता । वि० विक्रयकर्त्तरि ॥ वि क्रयिकि ॥ विक्रीणाति । डुक्रीञ् ०तृच् ॥

विक्रेय : । त्रि० विक्रययोग्यद्रव्ये । पणितव्ये । विक्रयक्रियाकर्म्मणि ॥ विक्रीयते । डुक्रीञ्० । अचो यत् । गुण : ॥

विक्लव : । त्रि० विह्वले । भयादिना भिभूते ॥ विक्लवते । क्लुङ्गतौ । पचाद्यच् ॥

विक्लवता । स्त्री० भीरुतायाम् ॥ भव तिहिविक्लवतागुणोङ्गनानाम् ॥

विक्लित्तिः । स्त्री० विक्लेदने ॥ क्तिन् ॥

विक्लिधिः । पुं० विचर्चिकादियुक्तदे हे ॥

विक्लिन्न : । त्रि० जरसाजीर्णे ॥ शी र्णे ॥ आर्द्रे ॥ विक्लिद्यतिस्म । क्लिदू० । कर्त्तरिक्त : ॥

विक्षत : । पुं० विशेषेणक्षते ॥

विक्षर : । त्रि० अविनाशिनि ॥ वि विगत : क्षरोविनाशोयस्य स : ॥

विक्षवणम् । न० विक्षावे । कासे ॥ टुक्षुशब्दे । ल्युट् ॥

विक्षार : । पुं० भोजनादौ ॥

विक्षालित : । त्रि० धौते ॥

विक्षाव : । पुं० विक्षवणे ॥ शब्दे ॥ विक्षवणम् । टुक्षु० । वोक्षुश्रुव इतिघञ् ॥

विक्षिप्तम् न० चित्तस्यभूमिकाविशे षे ॥ यथा । सर्व्वदाविषयासक्तम पि०कदाचिद्ध्याननिष्ठंक्षिप्ताद्विशि ष्टतया० विक्षिप्तम्० चित्तस्यतृतीया भूमि : । तत्र० क्षिप्तमूढयो : स माधिशङ्कैवनास्ति० विक्षिप्ते तुचे तसि० कादाचित्क : समाधिर्वि क्षेपप्राधान्याद्योगपक्षे नप्रवर्त्तते० किन्तु । तीव्रपवनविक्षिप्तप्रदीपवत् स्वयमेवनश्यति ॥ त्रि० विप्रस्ते ॥ विक्षेपयुक्ते ॥ क्षिक्षिप्यतेस्म । क्षिपप्रेरणे । क्त : । त्यक्ते ॥

विक्षीर : । पुं० अर्कवृक्षे ॥

विक्षुब्ध: । त्रि० कुद्धिते । क्रुटागश्या द्दु० भा० ॥

विक्षेप: । पुं० प्रेरणे । त्यागे । वि क्षेपणे ॥ ताडने ॥ अखण्डवस्त्व नवलम्बनेन० चित्तवृत्तेरव्यापल म्बने । विषयस्फुरणे ॥ ज्ञानेना वरणे नष्टे विक्षेपस्त्ववशिष्यते० इ त्याराद्दीक्ति : ॥ विक्षेपंलक्षयति गोतम : कार्य्यव्यासङ्गात्कथाविच्छे दोविक्षेप : । इति ॥ अस्यार्थ: । कार्य्यव्यासङ्गात्० कार्य्यव्यासङ्गमु द्दाव्यत्यर्थ:० ल्यब्लोपेपञ्चमी । कार्य्यव्यासङ्गव्यासम्भवात्कालान्त

रकत्वेनारोपितः । तेन तादृशकार्यविक्षेपहेतुर्विक्षेपः । तेन राजपुरुषादिभिराक्कारणे । गृहजनादिभिर्वावश्यककार्यार्थमाकारणे । स्वगृहदाहादिकं पश्यतो गमनेन वा । शिरोरोगादिना प्रतिबन्धो वा । नविक्षेपः । ननु कार्यव्यासङ्गेनाभावनं कुतः । सभाक्षोभादिना चेत् । अननुभाषणमेव । उत्तराप्रतिपत्तिश्चेत् । अप्रतिभैवेति चेन्न । उत्तरावसराभावात् । वस्तुतस्तूत्तरस्फूर्त्तावपि । तद्दूषणसम्भावनया विक्षेपसम्भवात् । यथा चितिः सकर्त्तृका कार्य्यत्वादित्युक्तम् । अङ्कुरे व्यभिचारस्तावन्मयोद्भाव्यः । तत्र चेदयं पक्षसमत्वं ब्रूयात् । तदा मे किमुत्तरम् । यतोऽस्मत्तार्थं बलिखितं मया चविचारितम् । किञ्चित्कार्य्यमुद्भाव्य गृहे गन्तव्यं दृश्यते । कुर्य्यं वं विक्षेपसम्भवादिति ॥ विक्षेपणम् । क्षिप । भावे । घञ् ॥

विक्षेपशक्तिः । स्त्री । अज्ञानसामर्थ्यं । मायाशक्तिः ॥ यथा । रज्ज्वज्ञानं । स्वावृतरज्जौ । स्वशक्त्या । सर्पादिकमुद्भावयति । एवम् । अज्ञानमपि । स्वावृतात्मनि । तया विक्षेपशक्त्या । आकाशादिप्रपञ्चमुद्भावयति तादृशं सामर्थ्यम् । वि[illegible]क्षितिलिङ्गादिब्रह्माण्डान्तं जगत्सृजेदित्युक्तेः । विविधस्वरूपेण भवनं विक्षेपशक्तिः ॥

विक्षेपसहभुः । पुं । अन्तरायविशेषेषु ॥ ते च योगसूत्रे प्रदर्शिताः । यथा । दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः । इति ॥ अस्यार्थः । कुतश्चिन्निमित्तादुत्पन्नेषु विक्षेपेषु । एते दुःखादयः प्रवर्त्तन्ते । तत्र दुःखं चित्तस्य राजसः परिणामो बाधनालक्षणः । यद्बाधात् प्राणिनस्तदुपघाताय प्रवर्त्तन्ते । दौर्मनस्यं बाह्याभ्यन्तरैः कारणैर्मनसो दौःस्थ्यम् । अङ्गमेजयत्वं सर्व्वाङ्गाणां वेपथुः आसनमनःस्थैर्य्यस्य बाधकः । प्राणो यद्बाह्यं वायुमाचामति स श्वासः । यत्कौष्ठ्यं वायुं निःश्वसिति स प्रश्वासः । त एते विक्षेपैः सह प्रवर्त्तमाना यथोदिताभ्यासवैराग्याभ्यां निरोद्धव्याः समाहितचित्तस्यैते न भवन्ति । विक्षिप्तचित्तस्यैव भवन्तीति विक्षेपसहभुवोऽन्तराया एव । एते अभ्यासवैराग्याभ्यां निरोद्धव्याः ईश्वरप्रणिधानेन वा ॥

विखः । त्रि । विगतनासिके ।

विखनाः । पुं । स्रष्टरि । ब्रह्मणि ॥

विख्रुः । त्रि । गतनासिके ॥ विगता नासिकाऽस्य । खुख्रौ वक्तव्या विनासिकायाः खुः ॥

विखुरः। पुं॰ राक्षसे। चौरे।
विखिद्ः। त्रि॰ गतमोहे॥ विगतः खेदोऽस्य॥
विख्यः। त्रि॰ विखौ॥ विगतानासिकाऽस्य। ख्यश्चेतिनासिकाया ख्यादेशोऽच् प्रत्ययश्च॥
विख्यातः त्रि॰ प्रसिद्धे। ख्यात्या पन्ने॥ विपूर्वात्ख्यातेः क्तः॥
विख्यातिः। स्त्री॰ अतिप्रसिद्धौ॥ विख्यानम्। ख्याप्रकथने। स्त्रियां क्तिन्॥
विख्यापनम्। न॰ व्याख्याने॥ प्रकाशने॥
विखुः। त्रि॰ विख्ये॥ विगतानासिकाऽस्य। खुर्खौचवक्तव्याविति नासिकायाः खुः॥
विगणनम्। न॰ ऋणमुक्तौ। ऋणादिनिर्यातने॥
विगतः। त्रि॰ निष्प्रभे। अरोके। प्रभारहिते॥ वीते। गते॥ विगच्छतिस्म। गम्लृगतौ। गत्यर्थेतिक्तः। च्युते॥
विगतकल्मषः। त्रि॰ निर्गतमले। निर्मले। स्वच्छे॥ संसारहेतुधर्माधर्मरहिते॥
विगतक्लमः। त्रि॰ शरीरक्लेशरहिते॥
विगतज्वरः त्रि॰ ऐहिकपारत्रिकदुर्यशोनरकपातादिनिमित्तशोकरहिते॥ ज्वरहीने॥
विगतशोकः। त्रि॰ निःशोके। शोकरहिते॥ विगताशोकोऽस्य॥
विगतस्पृहः। त्रि॰ देहजीवितभोगेष्वपिवाञ्छारहिते। सर्वदृश्येषु दोषदर्शनेन॰नित्यबोधपरमानन्दरूपमे। वगुणदर्शनेनच॰सर्वतोविरक्तौ॥ स्पृहारहिते॥ विगतास्पृहायस्य॥
विगतार्त्तवा। स्त्री॰ निष्फलायाम्। पञ्चपञ्चाशदब्दे भ्योनिवृत्तरजसिस्त्रियाम्॥ विगतमार्त्तवंरजोऽस्याः॥
विगन्धकः। पुं॰ इङ्गुद्याम्॥
विगन्धिका। स्त्री॰ हवुषायाम्॥
विगमः। पुं॰ नाशे। यथा। एकदेशदेशिनोर्वेदान्तिनस्तु॰यदुपाध्यनवच्छिन्नस्यब्रह्मणोविशुद्धरूपता॰तादृशोपाधिविगमएवकैवल्यम्। चिद्देशिनस्तु॰आनन्दमयपरमात्मनि॰जीवात्मनोलयोमोक्षः। जीवात्मपरमात्मनोरभेदेपि॰उपाधिविशेषविशिष्टस्यात्मनोजीवरूपतया॰तस्यौपाधिकः परमात्मभेदः। इतिभेदकोपाधिविगमएवजीवस्यपरमात्मनिलयः। यथाघटाकाशस्यघटविगमएवशुद्धआकाशेतस्यलयः। लिङ्गशरीरावच्छिन्नस्यैवात्मनोजीवभावः इतिलिङ्गशरीरनाश

एवपर्य्यंवसितोमोच : । इतिमु

ग्धवाद : ॥

विगर्हणम् । न० विगर्हणायाम् ।

विगर्हणा । स्त्री० निन्दने । भर्त्सना

याम्

विगर्हित: । चि० जुगुप्सिते । निन्दि

ते ॥ निषिद्धे ॥

विगलित : । चि० स्खलिते ॥ यथा ।

विगलितवसनंपरिहृतवसनंघटय

जघनमपिधानम् । किसलयशयने

पङ्कजनयनेनिधिमिवहर्षनिधान

म् ॥

विगाढ : । चि० प्रविष्टे । विगाहते

स्म । गाहूविलोडने । क्त : ॥ क

ठिने ॥ प्ररूढे ॥ स्नाते । अवगा

हिते ॥

विगाथा । स्त्री० मात्रावृत्तप्रभेदे । य

था । गाथाद्वितीयतुर्य्यौ० पादौभव

तोयदाचविपरीतौ । सेयंभवतिवि

गाथा०फणिनायकपिङ्गलेनोक्ता॥

यथा । वृन्दारण्यविहारी० वल्लवनारी

मनोहारी । गोपालीकरतालो०न

र्त्तनशालीपुनातुवनमाली ॥

विगानम् । न० निन्दायाम् ॥ परदे

वते ॥ विरुद्धंगानम् ॥

विगाहनम् । न० स्नाने ।

विगाह्यमान : । चि० प्रविश्यमाने ॥

विगाहते । गाहू० । शानच् ।

मुक् ॥

विगीत : । चि० निन्दिते ॥

विगुण : । चि० गुणवैपरीत्यविशि

ष्टे ॥ यथा । यथामनोममाचष्टने

यंमातातथामम । विगुणेष्वपिपु

त्रेषुममाताविगुणाभवेत् ॥ अ

ङ्गविकले ।

विगूढ : । चि० गर्हिते ॥ गुप्ते ॥

विगृह्यवाद : । पुं० जयपराजयप्रधा

नेजल्पन्यायवे ।

विग्न : । चि० भीते ॥

विग्र : । चि० गतनासिके ॥ विग

तानासिकाऽस्य । वेर्ग्रोवक्तव्य : ।

प्रादिभ्योधातुजस्येतिसमास : ॥

विग्रह : । पुं० काये । शरीरे ॥ वि

भागे ॥ विस्तारे ॥ समासवाक्ये ।

विस्तरे । व्युत्पत्तिबोधकेवाक्ये॥पुं०

न० राज्ञोगुणभेदे । वैरे । रणे ।

युद्धे । कलहे । सङ्ग्रामे ॥ सम

ज्यायोभ्यांसन्दधीत० हीनेनविग्र

हणीयात् । यथा । बालोवृद्धोदी

र्घरोगी तथाज्ञातिबहिष्कृत : ।

भीरुकोभीरुकजनोलुब्धोलुब्धजन

स्तथा ॥ विरक्तप्रकृतिश्चैवविषयेष्वति

शक्तिमान् । अनेकचित्तमन्त्रश्चदेव

ब्राह्मणनिन्दक:॥ दैवेनोपहतश्चैव

दैवचिन्तकएवच । दुर्भिक्षव्यसनो

पेतोबलव्यसनसंयुत : ॥ अदेश

स्थोबहुरिपुर्युक्ताकालविपर्यय : ।

सत्यधर्मव्यपेतश्चविंशति : पुरुषा

धमा : ॥ एतै : सन्धिं नकुर्वीत विगृह्णीयात्तु कोविलम् इतिकामन्दकीय : ॥ विरुद्धं विविधं वा० प्रष्टव्यम् । अङ्ग० । यङ्हश्च्रिल्यप् ॥ विविधैर्व्याधिभिर्गृह्यतेवा । अप् ॥ विविधं सुखदु : खादिगृह्णातिवा । अच् ॥ त्रि० ग्रहशून्ये ॥

विपश्चावरम् । न० पृष्ठे ॥

विग्लापनम् । न० अमहतौ ॥ विग्लापयति । ग्लै० । ल्युट् ॥

विघटनम् । न० विरुद्धनिर्माणे ॥

विघटिका । स्त्री० पले ॥

विघटित : । त्रि० नाशिते ॥

विघटी । स्त्री० पले ॥

विघट्टनम् । न० सङ्घर्षे ॥

विघट्टित : । त्रि० अभिहते ॥ विशेषेणचालिते ॥ विपूर्वात् ० घट्टते : क्त : ॥ इट् ॥

विघस : । पुं० भुक्तशेषे । अतिथिगुर्वादिभुक्तावशेषे ॥ विशिष्टैरद्यते । अद० उपसर्गेऽदङ्ल्यप् । घञपोक्षेतिघस्लृ ॥ आहारे ॥ न० सिक्थके ॥

विघसाशी । त्रि० अतिथिगुर्वादिभुक्तशेषभुजि ॥ विघसं भुक्तशेषमेवाश्नाति । अश० । णिनि : ॥ विघसाशीभवेन्नित्यं नित्यं वाऽमृतभोजन : । विघसोभुक्तशेषन्तुयज्ञशेषं तथामृतम् ॥

विघात : । पुं० मारणे ॥ हननं घात : । विशिष्टोघात : ॥ व्याघाते । आघाते ॥

विघाती । त्रि० निवारके । घातके ॥

विघूर्णम् । त्रि० भ्रमति ॥ घुर्णघूर्णभ्रमणे । अनुदात्तत्वप्रयुक्तात्मनेपदस्य० अपिङ्ङोङित्वेनानित्यत्वज्ञापनात् ० परस्मैपदम् ॥ *

विघ्न : । पुं० अन्तराये । प्रत्यूहे । समाधिप्रतिबन्धकदुरिते ॥ विहननम्० विघ्नन्तिमनांस्यस्मिन्वा० विहन्यतेऽनेनवा । हन० । घञर्थेक : ॥

विघ्नकारी । त्रि० घोरदर्शने ॥ विघातिनि । विघातस्यकारके ॥

विघ्नचतुष्टयम् । न० लयविक्षेपकषायरसास्वादलक्षणेषु चतुर्षु ॥ निर्विकल्पसमाधौक्रियमाणेएतेचत्वारोविघ्ना : सम्भवन्ति ॥ विघ्नानांचतुष्टयम् ॥

विघ्ननायक: । पुं० गणेशे । विघ्नानांनायक : ॥

विघ्ननाशक : । पुं० विनायके । गणेशे ॥ विघ्नानांनाशक : ॥

विघ्ननाशन : । पुं० गणेशे ॥

विघ्नराज : । पुं० विनायके । गणाधिपे ॥ विघ्नानांराजा । राजाह: सखिभ्यष्टच् ॥

विघ्नविनायक : । पुं० श्रीगणेशे ॥

विघ्नहारी । पुं॰ गणाधिपे । लम्बो
दरे ॥ अवश्यं हरति । हृञ॰ ।
णिनिः । विघ्नस्यहारी ॥
विघ्नितः । त्रि॰ सञ्जातविघ्ने ॥ इ
तच् ॥
विघ्नेशः । पुं॰ हेरम्बे ॥ विघ्नाना
मीशः ॥
विघ्नेशवाहनः । पुं॰ महामूषके ॥
विघ्नेशस्यवाहनः ॥
विघ्नेशानकान्ता । स्त्री॰ श्वेतदूर्वायाम् ॥
विङ्कः । पुं॰ अश्वखुरे । पुटे ॥
विङ्का । स्त्री॰ अश्वगतिप्रभेदे ॥ शूक
शिम्ब्याम् ॥ नर्त्तने ॥ इ॰ मेदि
निकरः ॥
विचकिलः । पुं॰ मल्लीप्रभेदे । ह्रिपु
टायाम् ॥ मदनवृक्षे ॥ इतिमेदि
निकरः ॥
विचक्षणः । पुं॰ पण्डिते ॥ विचष्टे
चक्षिङ्॰ । अनुदात्तेतश्चहलादे
रितियुच् । कर्त्तरिल्युडितिन्या
सकारः ॥ त्रि॰ विचारकुशले ॥
निपुणे । तत्तत्कालकर्त्तव्यतायां
चतुरे ॥ निपुणतरवस्तुदर्शिनि ॥*
विचक्षणा । स्त्री॰ नागदन्त्याम् ॥
विचक्षुः । त्रि॰ विमनसि ॥ चक्षु
र्हीने ॥
विचयः । पुं॰ अन्वेषणे ॥ विचीय
ते । विञ्चयने । कमर्ण्यच् ॥
विचयनम् । न॰ मार्गणे ॥ संवीक्ष
णे ॥ विविधम्॰ चयनम् ॥ वि
ञ॰ । ल्युट् ॥
विचर्चिका । स्त्री॰ रोगविशेषे । पा
मनि । पामायाम् ॥ दाल्यतेत्वक्
खराकृष्यापायोर्न्यायाविचर्चिका ।
पादेविपादिकाक्षयाश्यानभेदा
द्विचर्चिका ॥ दाल्यते॰ ॥ विदार्य
ते ॥ विचर्च्यते । चर्चअध्ययने ।
रोगाख्यायांण्वुल्बहुलम् । प्र
त्ययोपसर्गाभ्यांरोगप्रतीतिः ॥
विचलः । त्रि॰ अस्थिरे ॥
विचलनम् । न॰ विभ्रमे ॥
विचलितः । त्रि॰ स्खलिते । पति
ते ॥ स्थानान्तरप्राप्ते ॥
विचारः । पुं॰ कार्याकार्यरूपेविम
र्शे ॥ तत्त्वनिर्णये । सन्दिग्धेवस्तु
निप्रमाणेनतत्त्वपरीक्षायाम् । वि
तर्के । प्रमाणैर्वस्तुतत्त्वपरीक्षाया
म् । चर्चायाम् । सङ्ख्यायाम् ॥
सन्दिग्धंसप्रयोजनञ्च॰ विचारमर्ह
ति ॥ विवेके ॥ कोहंकथमिदंजा
तंकोवैकर्त्तास्यविद्यते । उपादा
नंकिमस्तीहविचारः सोयमीदृ
शः ॥
विचरणम् । न॰ विचरत्यनेनवा ।
चर॰ । घञ् ॥
विचारणा । स्त्री॰ विद्यायाम् ॥
यथा । परीक्षापरीक्षाचविद्याद्वे
धाविचारणा । तत्रापरीक्षविद्यायां

विचारोऽयं समाप्यते ॥ त्रि॰ वि चारोत्पन्न । विचाराज्जाते ॥ ज- नी॰ । ड: ॥
विचारणम् । न॰ विचारे ॥ चरसंश येचुरादि: युच् ॥
विचारणा । स्त्री॰ विचारे । चर्चाया म् ॥ मीमांसाशास्त्रे ॥ चरसंशये॰ चुरादि: । ण्यासश्रन्थोयुच् । टाप् ॥
विचारणीयम् । न॰ शास्त्रे ॥ त्रि॰ विचार्ये ॥
विचारित: । त्रि॰ कृतविचारे । वि म्रे । विर्त्ते ॥ विचार्यतेस्म । चर गतौ॰णयन्त: । क्त: ॥ विचार: सञ्जातोऽस्या । तारकादित्वादि तच् ॥
विचार्य्य: । त्रि॰ विचारयोग्ये । वि चारितव्ये । विचारणीये ॥
विचार्य्यमाण: । त्रि॰ चिन्त्यमाने ॥ ज्ञानंचेयंतथाज्ञाताचितयंभाति मायया । विचार्यमाणेचितयेचा त्मैवैकोऽवशिष्यतइतिश्रीमन्हानि- र्वाणतन्त्रम् ॥
विचाल: । पुं॰ न॰ अन्तरे । अभ्यन्त रे । अन्तराले ॥ रूपान्तरापत्तौ ॥ यथापयसोदध्यादिरूपताविचाल: ॥
विचि: । पुं॰ स्त्री॰ अल्पतरङ्गे ॥
विचिकित्सा । स्त्री॰ संशये । विरुद्धा नेककोट्यवगाहिज्ञाने ॥ विचिकि त्सनम् । कितसंशये । गुप्तिज् किद्भ्य: सन् । तत: अप्रत्यया दित्यकारप्रत्यय: । टाप् ॥
विचिकित्सित: । त्रि॰ संशयिते । सन्दिग्धे ॥ विचिकित्सासञ्जाता स्य । तारकादित्वादितच् ॥
विचिकिल: । पुं॰ द्विपुटायांमल्लिका याम् ॥ दमनके ॥ इ॰ हे॰ चन्द्र: ॥
विचित: । त्रि॰ अन्विष्टे ॥
विचित्त: । त्रि॰ उन्मत्ते ॥
विचित्रम् । न॰ कर्बुरवर्णे ॥ पुं॰ न॰ अलङ्कारविशेषे ॥ विचित्रंस्वि रुद्धयत्नफलस्याप्तसमुद्यमइतिल क्षणात् ॥ त्रि॰ विचित्रवर्णवति ॥ नानाविधे ॥
विचित्रक: । पुं॰ भूर्जद्रुमे ॥
विचित्रदेह: । पुं॰ मेघे ॥ त्रि॰ आश्च र्यशरीरे ॥ नानावर्णदेहे ॥
विचित्रवीर्य्य: । पुं॰ चन्द्रवंशीयनृ पतिविशेषे ॥
विचित्रवीर्य्यसू: । स्त्री॰ सत्यवत्या म् ॥
विचित्रा । स्त्री॰ मृगेर्वारौ ॥ चित्रो त्पलानाडाम् ॥
विचित्राङ्ग: । पुं॰ कोकिले । मयूरे । व्याघ्रे ॥ त्रि॰ आश्चर्यशरीरे ॥ वि चित्राणि॰ अङ्गानियस्य स: ॥
विचिन्वन् । त्रि॰ मृगयमाणे । अ न्विष्यति ॥

विची । स्त्री० वीच्याम् । तरङ्गे ॥ इ० द्विरूपकोष : ॥

विचेतन : । त्रि० चेष्टारहिते ॥ विगताचेतनायस्य : ॥ ( ० ) ॥

विचेता : । त्रि० दुर्मनसि । अमर्मनसि । विमनसि । विगतचित्ते ॥ भगवद्ध्यानजनितदुरितप्रतिबद्धविवेकविज्ञाने । विक्षिप्तचित्ते ॥ उद्विग्नचित्ते ॥

विचेय : । त्रि० मृग्ये ॥

विचेष्टकम् । न० अङ्गपरिवर्त्तने ॥

विचेष्टितम् । न० विरुद्धाचरणे ॥ व्यापारे ॥

विच्छन्द : । पुं० विचक्रन्दके ॥ विशिष्टश्छन्दोऽस्य ॥

विच्छन्दक : । पुं० ईश्वरसद्मप्रभेदे ॥ विशिष्टश्छन्दोऽभिप्रायोऽस्य ॥ यद्वा । विशिष्टान् •छन्दयति•साभिलाषान् करोति । छदि० । ण्वुल् •कन् वा ॥ उपर्य्युपरियन्त्रेण तद्विच्छन्दकसंज्ञकमितिभरत : ॥

विचक्रन्दक : । पुं० विचक्रन्दके ॥ उच्छ्रिदिर दीप्तौ ॥ ण्वुल् ॥

विच्छाय : । पुं० मणौ ॥ न०पक्षिणां छायायाम् ॥ त्रि० हतप्रभे ॥ छायारहिते ॥ विगताछायायस्य ॥

विच्छाया । स्त्री० पक्षिच्छायायाम् ॥ क्लोवतोचिता•छायाबाहुल्यइतिस्मरणात् ॥

विच्छित्ति : । स्त्री० अङ्गहारे ॥ विच्छेदे ॥ हावभेदे ॥ यथा । मण्डनाना दरन्यासोविच्छित्तीरूपदर्पत : । आभरणविलेपनादीनांकृतचित्प्रियापराधादीर्ष्ययानादरेणस्वल्पानांसखीनांप्रयत्नतोधारणंविच्छित्ति : ॥ प्रियेणदत्तंप्रीतिनिबन्धनं स्वल्पमपिविभूषणं विच्छित्तिरित्यन्ये । आकल्पकल्पनाल्पापिविच्छित्ति : कान्तिपोषकृदित्युज्ज्वलनीलमणि : ॥ विच्छेदनम् । छिदिर् द्वैधीकरणे । क्तिन् ॥ छेदे•विनाशे•विच्छित्तिरितिचिकाण्डशेष : ॥ गेहावधौ ॥ इतिहैमचन्द्र : ॥

विच्छिन्न : । त्रि० समालब्धे । छन्ने । काटा•इ•मा• ॥ विभक्ते ॥ कुटिले ॥ विशेषेणच्छिन्न : ॥

विच्छिन्नावस्था । स्त्री० विच्छेदावस्थायाम् । अभिव्यक्तस्यजनितकार्यस्यापि•क्षीनचिद्बलवताभिभवे ॥

विच्छेद : । पुं० वियोगे । विरहे ॥ कान्तायाः कान्तविच्छेदोमरणादतिरिच्यते ॥ विच्छेदनम् । छिदिर्• । घञ् ॥

विच्छेदावस्था । स्त्री० विच्छिन्नावस्थायाम् ॥

विच्युत : । त्रि० विक्षरिते ॥ विगते ॥

विच्युति : । स्त्री० वियोगे ॥

विजन : । त्रि० निर्जने । विविक्ते ।

नंपश्येज्जलगोगोष्ठसन्निधौ ॥ दर्शनानन्तरंतन्नमस्कारमन्त्रोयम् । नीलग्रीवशुभग्रीवसर्वकामफलप्रद । पृथिव्यामवतीर्णोसिखञ्जरीटनमोस्तुते ॥ त्वंयोगयुक्तोमुनिपुत्रकस्त्वमदृश्यतामेषिशिखोद्गमेन । त्वंदृश्यसेप्रावृषिनिर्गतायांत्वंखञ्जनाश्चर्यमयेनमस्ते ॥ द्रव्यविशेषपरिस्थितस्यतस्यदर्शनफलंयथा ॥ अब्जेषुगोषुगजवाजिमहोरगेषुराज्यप्रदःकुशलदःशुचिशाद्वलेषु । भस्मास्थिकेशमलिनेतुषेषुदृष्टोदुःखंददातिबहुशःखलुखञ्जरीटः । अशुभदर्शनेप्रायश्चित्तंयथा । अशुभंखञ्जनंदृष्ट्वादेवब्राह्मणपूजनम् । दानंकुर्वीतकुर्याच्चस्नानंसर्वौषधीजलैरिति ॥ मादकद्रव्यविशेषे । भङ्गायाम् ॥ तस्यानाममानिगुणाश्चयथा । भङ्गागञ्जामातुलानीमादनीविजयाजया । भङ्गाकफहरीतिक्ताग्राहिणीपाचनीलघुः । तीक्ष्णोष्णापित्तलामोहमदवाग्वह्निवर्द्धनी ॥ इतिभावप्रकाशः ॥ अपिच । शक्राशनंतुतीक्ष्णोष्णंमेहकृत्कुष्ठनाशनम् । बलमेधाग्निकृच्छ्लेष्मदोषहारिरसायनम् ॥ जातामन्दरमन्थनाज्जलनिधौपीयूषरूपापुरात्रैलोक्येविजयप्रदेतिविजयाश्रीदेवराजप्रिया ॥ लोकानांहितकाम्ययाक्षितितलेप्राप्तानरैःकामदासर्वातङ्कविनाशहर्षजननीयैःसेवितासर्वदा ॥ इतिराजवल्लभः ॥ वचायाम् ॥ यमभार्यायाम् ॥ हरीतक्याम् ॥ अलाबुवृक्षाविजयेतिलक्षणाम् ॥ जयन्त्याम् ॥ शेफालिकायाम् ॥ मञ्जिष्ठायाम् ॥ शमीभेदे ॥ अग्निमन्थे । गणिकार्याम् ॥ अष्टमहाद्वादश्यन्तर्गतद्वादशीविशेषे ।

विजयासप्तमी । स्त्री॰ सप्तमीतिथिप्रभेदे ॥ सायथा । शुक्लपक्षस्यसप्तम्यांसूर्यवारोयदाभवेत् । सप्तमीविजयानामतत्रदत्तंमहाफलम् ॥

विजयी । त्रि॰ विजयशीले ॥ विशेषेणजेतुंशीलमस्य । जिदृक्षीत्यादिना॰ इनिः ॥

विजरः । पुं॰ वेदान्तवेद्यआत्मनि ॥ त्रि॰ जरारहिते ॥ विगताजरायस्य ॥

विजलम् । न॰ विजिले । पिच्छिले इतिहेमचन्द्रः ॥ त्रि॰ जलशून्ये ॥

विजल्पः । पुं॰ वाक्यविशेषे ॥ यथा । व्यक्तयासूययागूढमानमुद्रान्तरालया । अघद्विषिकटाक्षोक्तिर्विजल्पोविदुषांमतः ॥ इत्युज्ज्वलनीलमणिः ॥

विजातः । त्रि॰ विकृते ॥ जाते ॥

विजाता । स्त्री॰ जातापत्यायाम् ।

प्रजातायाम् ॥
विजातीय: । त्रि० विभिन्नधर्माक्रान्ते ॥ विलक्षणे । भिन्ने ॥ यथाश्च घाद्विजातीय: शिलादि: ॥
विजिगीष: । त्रि० जयेच्छौ ॥
विजिगीषा । स्त्री० विजयेच्छायाम् ॥ खोदरपूरणासक्तिनिमित्तकनिन्दा त्यागेच्छायाम् ॥
विजिगीषाविवर्जित: । त्रि० श्रायूने । औदरिके ॥ खोदरपूरणासक्तिनिमित्तकनिन्दात्यागेविजिगीषा०व्यवसाय: कश्चित्प्रकर्षोवा० श्रालस्यात्तेनविहीनोय: केवलमुदराधीनइतिभाव: ॥
विजिगीषु: । त्रि० जयैषिणि । जयेच्छाशीले । प्रतिवादिजयकामे ॥ यथा । जेतुमीषणशीलश्चविजिगीषुरितिस्मृत: । इति ॥ शत्रुश्चहि विजिगीषो: कार्यसाधनंप्रधानम्० श्रन्यत्समयरक्षणाद्यशक्तस्येतिनीति: ॥ विजेतुमिच्छाधातो: कर्मणइतिसन् । सनाशंसभिक्षउ: ॥
विजिघत्स: । त्रि० विगताशनेच्छे ॥ विगताजिघत्साचुधायस्य ॥
विजिज्ञासितव्य: । त्रि० स्वसंवेद्यतामापादयितव्ये०निजात्मनि ॥ विशेषेणज्ञातुमिष्टव्य: ॥
विजित: । त्रि० पराजिते ॥ विजीयतेस्म । जिधभिभवे । क्त: ॥
विजितात्मा । त्रि० स्ववशीकृतदेहे ॥ वशीकृतात्म: करणे ॥ विजित श्रात्मादेहो०मनोवायेन ॥
विजिताश्व: । पुं० पृथो: पुत्रे ॥ त्रि०वशीकृततुरगे ॥
विजिति: । स्त्री० विजये ॥ यथाह दण्डी । क्षितिविजितिस्थितिविहितिव्रतरतय: परगतय: । उरुरुरुधगुंरुदुधवुयुधिकुरव: स्वमरिकुलम् ॥ इति ॥
विजिलम् । त्रि० पिच्छिले । मण्डयुक्तजलयुक्तव्यञ्जनयो: ॥ विजनंविजि: । श्रोविजोभयचलनयो: । इगुपधात्किदितीन् । विजिंलाति । ला० । श्रातोनुपसर्गेक: ॥
विजिविल: । त्रि० विजिले ॥ इतिहेमचन्द्र: ॥
विजिहीर्षा । स्त्री० विहर्त्तुमिच्छायाम् ॥
विजिह्म: । त्रि० कुटिले । वक्रे ॥ विशेषेणजिह्म: ॥
विजुल: । पुं० शाल्मलीकन्दे ॥
विजृम्भणम् । न० विभ्रमे ॥ विकासे ॥ जृम्भणे ॥
विजृम्भितम् । न० चेष्टायाम् ॥ त्रि० विकस्वरे । विकसनशीले ॥ श्रप्यूर्ज्जिते ॥ उल्लसिते ॥ जृम्भायुक्ते ॥ विजृम्भासञ्जाताश्च । तारकादित्वादितच् ॥

त्यर्थ इतिकल्पतरु : । अहमितिप्रत्य योविज्ञानस्कन्धइत्यानन्दगिरि : ॥

विज्ञानावसित : । त्रि० विज्ञानेननि श्चिते ॥

विज्ञानिक : । त्रि० वैज्ञानिके । प्रवी णे ॥ विज्ञानमस्त्यस्य । अोष्ठादि त्वान्मत्वर्थीयठन् ॥

विज्ञापनम् । न० बोधने । सनावना० बुझावना० इ० भा० प्र० ॥ विपूर्वाण् ण्यन्तजानातेर्ल्युट् ॥

विज्ञेयम् । न० परमात्मतत्त्वे ॥ त्रि० विज्ञातव्ये । इदमेवमितिविस्पष्ट ज्ञानार्हे ॥ विज्ञातुंयोग्य : । ज्ञा० । अचोयत् । ईद्यति ॥

विज्यम् । न० निर्गुणे धनुषि ॥ विग ताज्यायस्मिन्०यस्माद्वा०तत् ॥

विज्वर : । त्रि० विगतज्वरे ॥ विगत मनस्तापे ॥ विगतोज्वरोयस्य ॥

विझर्झर : । त्रि० विषमे ॥

विझामरम् । न० चक्षुष : शुक्लचर्मे ॥ इतिकश्चित् ॥

विझोली । स्त्री० वीथ्याम् । पङ्क्तौ ॥

विट : । पुं० षट्रौ ॥ लवणविशेषे ॥ षिङ्गे । स्वैर्णे ॥ मूषिके ॥ खदि रे ॥ कामुकानुचरे ॥ धूर्त्ते ॥ काम तन्त्रकलाकोविदे ॥ नारङ्गवृक्षे ॥ वे टति । विटशब्दे । इगुपधलक्षण : क : ॥

बिटका । स्त्री० बीटिकायाम् ॥ इति कश्चित् ॥

विटङ्क : । पुं० न०गृहप्रान्तेरचितप क्षिस्थाने । कपोतपालिकायाम् ॥ विशेषेणटङ्क्यतेऽत्र । टङ्कबन्धने । हलश्चेतिघञ् ॥ तोरणस्तम्भयोरुप रितर्यङ्निहितेदारुणि ॥ त्रि०सु न्दरे ॥ यथा । तस्मिन्नतीत्यमुनय : षडसज्जमाना : कक्षा : समानव यसावयसममायाम् । देवाववक्षत गृहीतगदौपरार्द्ध्यकेयूरकुण्डलकि रीटविटङ्कवेशौ ॥ इतिभा०तृ०स्क न्धे १५ अध्याय : ॥

विटङ्कित : । त्रि० अलङ्कृते ॥

विटप : । पुं० विटाधिपे । पारदारिकश्रे ष्ठे ॥ आदित्यपत्रे ॥ पुं०न०शाखा पल्लवसमुदाये । विस्तारे ॥ स्तम्बे । गुल्मे ॥ शाखायाम् ॥ पल्लवे ॥ मु ष्कवङ्क्षणयोरन्तरे मध्यवीथ्यां ॥ विटान्पाति । पा० । आतोनुप सर्गे क : ॥ यद्वा । विटानांपानम् । पा० । घञर्थेक : ॥ वेटति०विस्त ृणोति वा । विटआक्रोशे०शब्दे च । वि टपविष्टपविशिपोलपा : ०इ०सा धु : ॥

विटपी । पुं० पादपे । तरौ । वृक्षे ॥ वटे ॥ विटप : शाखाविस्तारोऽस्या स्ति । अतइनि : ॥

विटप्रिय. । पुं० मुद्गरवृक्षे । मोगरा० इ० भा० प्र० ॥ विटानांप्रिय : ॥

विटमाक्षिक : । पुं॰ धातुविशेषे । ताप्ये । नदीजे । क्षमारी ।

विटि : । स्त्री॰ पीतचन्दने ॥

विट्कारिका । स्त्री॰ पक्षिविशेषे । गोराख्याम् ॥

विट्खदिर : । पुं॰ दुर्गन्धिखदिरे । अरिमेदे ॥ विड्गन्धि : खदिर : ॥

विट्चर : । पुं॰ ग्राम्यशूकरे ॥ विषं विष्ठांचरति । चर॰ । पचाद्यच् । मूलविभुजादित्वात्कोवा ॥ विषचरोवा ॥

विट्ठल : । पुं॰ अज्ञानुग्राहकेदेवे ॥ यद्वाहुरर्वाचीनादाक्षिणात्या : । विदाज्ञानेनठाम् शून्यान् ॰लाति अङ्गसे आत्मीयतयागृह्णाति । ला॰ । आतोनुपसर्ग इतिक : । विदाज्ञानेनठान्शून्यान्लातिगृह्णातिय : स्वयम् । अज्ञानुग्रह कृद्देवोविट्ठल : कथ्यतेवुधैरिति प्रक्रियाप्रसाद : ॥

विट्पति : । पुं॰ जामातरि ॥ यथा । मातामहंमातुलञ्चस्वस्रीयं श्वशुरंगुरुम् । दौहित्रंविट्पतिंबन्धुमृत्विग्याज्यौचभोजयेत् । एतान्मातामहादीन्॰दशमुख्यमोषियादसश्चवैभोजयेद् गुरुर्विद्यागुरुराचार्यादि : । विट्दुहितातस्या : पति : । इतिकुल्लूकभट्ट : ॥ भोजयेत्॰श्राद्धे॰इतिशेषोवोध्य : ॥ नृपतौ ॥ वैश्यवर्य्ये ॥

विट्सारिका । स्त्री॰ पक्षिविशेषे । कुणप्याम् । गुयासालुक्॰इ॰गौ॰दे॰भा॰प्रसिद्धे ॥

विठर : । पुं॰ वाग्मिनि ॥

विडम् । न॰ कृत्रिमलवणे । पाक्ये । खारीलूण॰इ॰भा॰ ॥ अस्यगुणायथा । विडंसक्षारमूर्द्धाध:कफवातानुलोमनम् । अर्द्ध्वंकफमधोवातंसञ्चारयेदित्यर्थ : । दीपनंलघुतीक्ष्णोष्णंरूक्षंरुच्यंव्यवायिच । विबन्धानाहविष्टम्भहृद्ग्गौरवशूलनुत् ॥ विडति । विडभेदने । इगुपधज्ञाप्रीकिर:क : ॥

विडङ्ग : । पुं॰ न॰वेल्ले । चित्रतण्डुलायाम् । कृमिघ्ने ॥ विडङ्गंकटुतीक्ष्णोष्णंरूक्षंवह्निकरंलघु । शूलाध्मानोदरश्लेष्मकृमिवातविबन्धनुत् ॥ वि॰अभिन्ने ॥ विडति ॥ विड॰ । विडआक्रोशेवा । विड्यादिभ्य : कित्वित्यङ्गच् ॥

विडम्बनम् । न॰ अनुकरणप्रतारणे ॥

विडम्बना । स्त्री॰ विडम्बने । अनुकृतौ ॥

विडम्बमान : । त्रि॰ अनुक्रियमाणे ॥

विडम्बित : । त्रि॰ अनुकृते ॥ व्यस्ते ॥ दुर्गते ॥ उपहसिते ॥

विडम्बा : । त्रि॰ उपहासास्पदे ॥

विडार : । पुं० विडाले ॥ रलयोर भेद : ॥

विडारक : । पुं० विडाले ॥

विडाल : । पुं० ओतौ । मार्जारे । वृषदंशके ॥ नेत्रपिण्डे ॥ विडति० विडातिवा । विडआक्रोशे ॥ तमि विशिविडिमृणिकुलिकपिपलिपञ्चि भ्य: कालन् ॥ नेत्रौषधविशेषे ॥ र गणे०८ । ८० ॥

विडालकम् । न० हरिताले ॥ पुं०ने त्ररोगौषधविशेषे ॥

विडालपद : । पुं० तोलकद्वयपरिमा णे ॥ न०मार्जारचरणे ॥

विडालपदकम् । न० कर्षपरिमाणे ॥

विडाली । स्त्री० भूमिकूष्माण्डे । वि दार्याम् ॥ मार्ज्जार्याम् ॥

विडीनम् । न० खगानांगतिप्रभेदे ॥ विशिष्टंडयनम् । डीङ्विहायसा गतौ । स्वादि: । नपुंसकेभावेक्त : । स्वादयओदितइत्यतिदेशात्ओदि त्वान्निष्ठानत्वम् ॥ विडीनंविचि त्रंपक्षिण : पतनमितिमहाभा- रतं ॥

विडुल : । पुं० वेतसवृक्षे ॥

विडोजा : । पुं० इन्द्रे ॥ वेवेष्टि । विष्लृव्याप्तौ । क्विप् । विट्०व्या पकम्०ओजस्तेजोऽस्य ॥ विट् सुप्रजासु०मनुष्येषुवा०ओजोयस्ये तिवा ॥

विडौजा : । पुं० पाकशासने । इ न्द्रे ॥ विडति । विडभेदने । इगु पधेतिक : । विडंभेदकमोजोऽ स्य । सान्त : ॥

विड्भम् । न० विड्लवणे ॥

विड्ज : । त्रि० विष्ठायांजाते ॥

विड्लवणम् । न० विडे ॥

विड्वराह : । पुं० विट्चरे ॥

वितंस : । पुं० वीतंसे ॥

वितण्डा । स्त्री० कच्चोशाके ॥ शिला ह्वये ॥ करवीर्याम् ॥ दर्व्याम् ॥ वा दप्रभेदे । परपक्षप्रतिवादे । स्वपक्ष स्थापनहीनायामविजिगीषुकथाया म् ॥ तथाचन्यायसूत्रम् । सप्रतिप क्षस्थापनाहीनोवितण्डा । यद्यपि तच्छब्देनजल्पोनपरामष्टुंशक्यते० जल्पस्यस्थापनाद्वयवत : प्रतिपक्ष स्थापनाहीनत्वस्यविरुद्धत्वात् । त थापिस्थापनाद्वयवत्त्वंविहाय०जल्पै कदेश : परामृश्यते । प्रतिपक्षोद्वि तीयपक्ष : । तथाच०प्रतिपक्षस्थाप नाहीनाविजिगीषुकथा०वितण्डेति । नचस्वस्यस्थापनीयाभावात्कथमि यंकथाप्रवर्त्तामितिवाच्यम् । पर पक्षखण्डनेनजयस्यैवोद्देश्यत्वात् । परेतु०यत्परपक्षखण्डनेनैवस्वपक्ष सिद्धेर्याद्रिसिद्धे तत्साधनाभावेपि नप्रवृत्त्यनुपपत्तिरितिवदन्ति ॥ १ । ४२ ॥ वितण्डातेपरस्योऽनया

। तडिभघाते । गुरोश्चेत्य : ॥

वितत : । त्रि० विस्तृते ॥ विशेषेणत त : ॥

वितति: । स्त्री० विस्तारे ॥

वितथम् । न० अनृतेवचसि ॥ त्रि० तद्वति ॥ विगततथासत्यं यस्मात्० तत्० वितथम् । अजितियोगविभागात्समासान्तोऽच् ॥

वितन्द्र : । त्रि० जागरूके ॥ तन्द्रारहिते ॥ विगतातन्द्रायस्यस : ॥

वितन्यमान : । त्रि० वितायमाने ॥ तनोते : कर्मणिलट : शानजादेश : ॥

वितन्वन् । त्रि० विस्तारयति ॥

वितमा : । त्रि० तमोगुणरहिते ॥

वितरणम् । न० दाने ॥ तृप्लवनतरणयो : विपूर्व : । भावेल्युट् ॥

वितर्क : । पुं० ऊहे ॥ संशये ॥ विपरीततर्के ॥ वितर्कणम् । तर्कभाषार्थयुरादौ । भावेघञ् ॥ ज्ञानसूचके ॥

वितर्कणम् । न० वितर्के ॥ तर्क० । ल्युट् ॥

वितर्द्दि : । स्त्री० वेदिकायाम् ॥ विगतातर्द्दि:हिंसाऽस्या: । तर्द्दहिंसायाम् । सर्वधातुभ्यइन्निति न् ॥

वितर्द्दिका । स्त्री० वेदिकायाम् ॥ स्वार्थेक : ॥

वितर्द्दी । स्त्री० वेदिकायाम् ॥ कृदिकारादितिङीष् ॥

वितलम् । न० पातालप्रभेदे ॥

वितस्ता । स्त्री० नदीविशेषे ॥ तीर्थविशेषे ॥ काश्मीरेवितस्ताख्यंनागसदनमस्ति ॥

वितस्ति : । पुं० स्त्री० कनिष्ठयासह विततेङ्गुष्ठे । द्वादशाङ्गुलपरिमाणे ॥ वितस्यति० वितस्यतेवा । तसु उपक्षये । वौतसेरितिति : ॥

वितान : । पुं० न० यज्ञे ॥ क्रतुकर्मणि । गार्हपत्यकुण्डस्य नामग्नेनामाहवनीयदक्षिणाग्निकुण्डयोर्विहारे ॥ कदके । उल्लोचे चन्द्रातपे ॥ विस्तारे ॥ न० वृत्तविशेषे । अवसरे त्रि० मत्ते ॥ तुच्छे । शून्ये ॥ मन्दे ॥ विननम्० वितन्यतेवा । तनुविस्तारे । घञ् ॥

वितानक : । पुं० माडहुमे ॥ पुं० न० चन्द्रातपे ॥

वितानतनिका । स्त्री० पटमण्डपरज्जौ ॥

वितानमूलकम् । न० उशीरे ॥

वितायमान : । त्रि० वितन्यमाने । विस्तीर्यमाणे । वितनोते : कर्मणि लट: शानजादेश:। तनोतेर्यक्कीति० वा० आकारादेश : ॥ त्रिटङ्किते । अलङ्कृते ॥

वितिष्ठमान : । त्रि० अवतिष्ठमाने ॥ समवप्रविभ्यस्थइत्यात्मनेपदम् ॥

वितीर्णः । त्रि॰ दत्ते ॥ अवगाढे ॥
वितुन्नम् । न॰ सुनिषण्णे । विषखप
रिया॰ इ॰ भा॰ प्र॰ शाके ॥ शै
वाले ॥ विगतन्तुन्नं व्यथनमस्मात्
॥ त्रि॰ व्यथिते ॥
वितुन्नकः । पुं॰ न॰ धन्याके ॥ झाटा
मलौषधौ । तामलक्याम् । भू
म्यामलक्याम् ॥ मुस्तावत्पेलवपु
रंशुका भंग्या वितुन्नकम् ॥ वितुन्न
कं हिमं तिक्तं कषायं कटु कान्तिदम् ॥
कफपित्तास्रश्वासर्प कुष्ठकण्डुविषप्र
णुत् ॥ वितुद्यतेऽस्मा । तुद व्यथने
कर्मणि क्तः । स्वार्थे कन् ॥ विगत
न्तुन्नं दुःखमस्माद्वा । कप् ॥
वितुन्ना । ) स्त्री॰ तामलक्याम् ।
वितुन्निका । ) भूम्यामलक्याम् ॥ वितुन्नके ॥
वितृप्तः । त्रि॰ सन्तुष्टे ॥ विशेषेण
तृप्तः ॥
वितृष्णः । त्रि॰ निष्कामे ।
वित्तम् । न॰ धने । न्यायार्जितध
ने । धर्माययशसेऽर्थायकामायस्वज
नाय च । पञ्चधा विभजन् वित्तमि
हामुत्र च मोदते । प्रभृतौ हिरण्य
रत्नादौ ॥ ज्ञाने ॥ लग्नाद्द्वितीय
भवने । त्रि॰ ख्याते । विज्ञाते ॥
विचारिते ॥ विद्यतेऽस्मा विद विचार
णे । क्तः ॥ नुदविदेतिपक्षे नत्वा
भावः ॥ यद्वा । अवेदि । विद ॡ
लाभे । क्तः । वित्तोभोगप्रत्यय
योरितसाधुः ॥ लब्धे ॥
वित्तदः । पुं॰ पूर्वदक्षिणोत्तरद्वारे
गृहे ॥ त्रि॰ धनदातरि ॥ वित्तं द
दाति । डुदाञ् दाने । आतश्चो
पसर्गे कः ॥
वित्तपः । पुं॰ कुबेरे ॥ त्रि॰ धनर
क्षके ॥ वित्तं पाति । पा॰ कः ॥
वित्तमयः । त्रि॰ धनप्राये ॥
वित्तिः । स्त्री॰ विचारे । ज्ञाने ॥
यथा । सत्त्वं भावेन वित्तिर्व्यपनुद
ति यतः कर्मनाश्योघटादिर्मिथ्या
भूतं च कर्म घपयति न तथा वित्तिघा-
त्यं यतस्तत् । इत्थं सिद्धे विभागेऽस्तु
ति मिखरगिरा वित्तिघात्यप्रतीताव
स्तोमिथ्येति सिद्धं न तदपहतये क्ष
मं ज्ञातं समर्थम् ॥ इति ॥ लाभे ॥
सम्भवे ॥ विदेर्भावादौ स्त्रियां क्तिन् ॥
वित्तेशः । पुं॰ धनपतौ । कुबेरे ॥
वित्तैषणा । स्त्री॰ धनलाभेच्छायाम् ॥
कर्मणां साधनं वित्तं तृष्णा वित्तैष-
णा मता ।
वित्रस्तः । त्रि॰ त्रासयुक्ते ॥ विपू
र्वात् त्रसेः क्तः ॥
वित्रासः । पुं॰ भये । त्रसी उद्वे
गे॰ विपूर्वः । घञ् ॥
विथुनः । पुं॰ वृषभे ॥
विधुरः । पुं॰ चौरे । राक्षसे ॥ व्य
थते ॥ व्यथ भयचलनयोः । व्य थेः

सम्प्रसारणं किञ्चेष्युरच् ॥

विध्या । स्त्री० गोजिह्वायाम् ॥

वित्०द्रु । त्रि० विदुषि ॥ न० ज्ञाने ॥ वेदनम् । विदज्ञाने । सम्पदादित्वात् भावे क्विप् ॥

विद् : । पुं० पण्डिते । वेत्ति । विद्० क: ॥

विदंश : । पुं० अवदंशे ॥ विदंश्यते । दंश० । कर्मणि० भावे वा घञ् ॥

विदग्ध : । त्रि० चतुरे । दग्धे ॥ नागरे ॥ पण्डिते ॥ अत्यन्तपक्वे ॥

विदग्धता । स्त्री० विदग्धत्वे ॥

विदग्धा । स्त्री० परकीयान्तर्गतनायिकाप्रभेदे ॥

विदथ : । पुं० योगिनि ॥ कृतिनि । प्राज्ञे ॥ वेत्ति । विदज्ञाने । रुदिविदिभ्यां ङिदित्यथ : ॥ यज्ञे ॥ वेत्ति० अस्मिन्देवान् ॥

विदन् । त्रि० पण्डिते ॥

विदन्दङ्क्षु : । त्रि० विदंष्टुमिच्छौ । उपदंशेच्छावति । दंशे : सन्नन्तादु प्रत्यय : ॥

विदन्ता । स्त्री० नातिदीर्घायांवराटिकायाम् ॥

विदर : । पुं० स्फुटने । भिदायाम् । फटना०इ०भा० ॥ विदरणम् । दृविदारणे । ऋदोरप् ॥ न०विस्रसारके । नागफणीथूहर०इ०भा० ॥ त्रि० दरशून्ये । निर्भये ॥

विदरणम् । न० विदरे ॥ विद्रधौ ॥

विदर्भ : । पुं० कुण्डिनपुरे ॥ सतुवङ्गदेशस्यदक्षिणपश्चिमेवर्त्तते०अधुना० वडानागपुर०इतिख्यात: । भद्रकालीमहापूर्वेरामदुर्गाच्चपश्चिमे । श्रीविदर्भाभिधोदेशोवैदर्भीतत्रतिष्ठति ॥ त्रि० दर्भशून्ये ॥ कर्मठे ॥ विशिष्टेनदर्भेणोपलक्षित : ॥

विदर्भजा । स्त्री० अगस्त्यमुने : पत्न्याम् । कौशीतक्याम् । लोपामुद्रायाम् ॥ दमयन्त्याम् । रुक्मिण्याम् ॥

विदर्भराज : । पुं० विदर्भदेशाधिपतौ । भीमाभिधे पुराणप्रसिद्धे राजनि । दमयन्तीजनके ॥

विदर्भसुभ्रू : । स्त्री० दमयन्त्याम् ॥

विदर्भाधिपति : । पुं० कुण्डिनपतौ । भीष्मकाभिधे । रुक्मिणीजनके ॥

विदल : । पुं० रक्तकाञ्चने ॥ पिष्टके ॥ न० वंशादिकृतपात्रविशेषे ॥ वेणुदले ॥ शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दममितिमनु : ॥ दाडिमवल्कले ॥ द्विधाकृतकलायादौ । दाल०इ०भा० ॥ स्वर्णादिरवयवे ॥

विदला । स्त्री० त्रिवृति ॥ पत्रशून्यायाम् ॥

विदा । स्त्री० ज्ञाने ॥ मनीषायाम् ॥ भिदादित्वाद्विदेरङ् । टाप् ॥

विदाय : । पुं० गमनानुमतौ ॥ यथा । क्षणं वाचम्पकवनं गच्छ यातिष्ठसु

न्दरि। चणांगदच्छयाख्यामिविशिष्टं कार्यमस्तिमे। विदार्यदेहिसम्प्रीत्या चणंमांप्राणवल्लभे॥ इतिब्रह्मवैवर्त्ते श्रीराधांप्रतिश्रीकृष्णवाक्यम्॥

विदार:। पुं॰ जलोच्छ्वासे। आजौ। युधि॥ दारणे॥ विदार्यते। इ॰। कर्मणिघञ्॥

विदारक:। पुं॰ शुष्कनद्यादौवार्य्यर्थंकृतगर्त्ते। कूपके॥ नद्यादौस्रोतोद्धकारिणितरुशिलादौ। कूपके॥ याचायोगान्तरे॥ यथा। मार्गेश: शनिसंयुक्त: सप्तमेऽस्तगतोयद:॥ विदारकमिमंमन्ये प्राहु: पत्नीविनाशकम्॥ पुनश्च। मार्गेशात्सप्तमेभानु: पञ्चमेक्रूरखेचर:। विदारकाख्यएवासौभार्य्यामरिवशंनयेत्॥ न॰वज्रचारे॥ विदार्यते। इ॰विदारणे। णिच्। वाहुलकात्कर्मणिखवुल्॥ यद्वा। विदार्यते। कर्मणिघञ्॥ कुत्सितोविदार:। कुत्सायांक:॥ त्रि॰विदारणकर्त्तरि॥ विदृणाति। इ॰। खवुल्॥

विदारकसमाख्य:। पुं॰ याचायांनिषिद्वयोगान्तरे॥ यथा। भार्य्येशोव्ययगोनीचपुत्रस्थानेशनैश्वर:। विदारकसमाख्योऽयंयातु: पत्नींनिहन्तिवै॥ विदारकोणसमाख्यायस्य:॥

विदारण:। पुं॰ कर्णिकारवृत्त्वे॥ न॰ विडम्बे। विडम्बने॥ भेदे॥

भेदने॥ पुं॰ स्त्री॰ रणे। सम्पराये। समीके॥ विदार्यतेऽनेन इ॰। करण:। ल्युट्॥ विदारयतिवा॥

विदारिका। स्त्री॰ शालपर्ण्याम्॥ विदार्य्येव॥ विदार्य्येव। स्वार्थेक:॥

विदारिगन्धा। स्त्री॰ अंशुमत्याम्। शालपर्ण्याम्॥ विदार्य्या: गन्ध: विदारिगन्ध:। ङ्यापोरितिह्रस्व:। सोऽस्त्यस्या:॥

विदारिणी। स्त्री॰ काश्मर्य्यां॥

विदारित:। त्रि॰ भेदिते॥ विदार्य्यतेस्म। इ॰। करण:। क्त:॥

विदारी। त्रि॰ विदारणकर्त्तरि॥ विपूर्व्वादृणाते: कर्त्तरिणिनि:॥

विदारी। स्त्री॰ शालपर्ण्याम्॥ अष्टादशप्रकारकण्ठरोगान्तर्गतरोगविशेषे॥ यथा। सदाहतोयंश्वयथुंसुतास्त्रमन्तर्गलेपूतिविशीर्णमांसम्। पित्तेनविद्याद्दने विदारींपार्श्वेविशेषात्सतुयेनशेते॥ सपुरुषोयेनपार्श्वेन॰ विशेषाद्वाहुल्येनशेते॰ तस्मिन्पार्श्वेसाविदारीभवतीत्यर्थ:॥ इक्षुगन्धायाम्। श्वेतभूकूष्माण्डे॥ विदारीचीरशुक्लेक्षुगन्धाक्रोष्ट्रीचेत्यमर:॥ अस्या: गुणास्तु। विदारीमधुरास्निग्धावृंहणीस्तन्यशुक्रदा। शीतास्वर्य्यामूत्रलाचजीवनीबलवर्णदा॥ गुरु: पित्तास्रपव

नदाहंहन्तिरसायनीति ॥ विदारयति । दृविदारणे० ण्यन्त: । पचाद्यच् । गौरादि:॥ विदार्या:फलं मूलञ्च० विदारी ! अनुदात्तादेश्च: ०पुष्पमूलेषुबहुलमिति० लुपि० युक्तवद्भाव : ॥

विदारु : । पुं० क्रकचपादे । कृकलासे ॥

विदाहि । न० परिणामेऽम्लपाकमुपयाते० दाहजनकद्रव्ये ॥ विदाहिद्रव्यमुद्गारमम्लं कुर्यात्तथातृषाम् । हृदिदाहञ्चजनयेत्पाकंगच्छतितच्चिरात् ॥

विदिक्चक्र : । पुं० हरिद्राङ्गपक्षिणि ॥

विदित : । पुं० कवौ ॥ त्रि० बुधिते । प्रगते । ज्ञाते । विदिक्रियातिशयेनाप्ते । विदिक्रियाकर्मभूते । यथा । तस्मिन्ब्रह्मणिविदितेविश्वमशेषंभवेदिदंविदितम् । कारणमृदिविदितायांघटकर्कादायथाऽवगम्यन्ते ॥ ७५ ॥ श्रुते ॥ अर्थिते ॥ वृत्तान्तज्ञानवति ॥ अभ्युपगते ॥ व्याकृते ॥ विद्यतेस्म । विद्ज्ञाने । क्त : । यस्यविभाषेतीट् ॥ विदितंवेदनमस्यास्तिवा । अर्शआद्यच् ॥

विदिक् । स्त्री० अपदिशं । अपदिशे । दिशोर्मध्ये । अग्निनिर्ऋतिवायवीशानकोणचतुष्टये ॥ दिग्भ्यां विनिर्गता० प्रान्ताविदिक् ॥

विदिशा । स्त्री० नगरीविशेषे ॥

विदीर्ण : । त्रि० कृतविदारणे । चीरा० फाडा इ० भा० ॥ दॄ० । कर्मणिक्त : । ऋतइत्० रपर : । रदाभ्यामितिनत्वम् । णत्वम् ॥

विदु : । पुं० हस्तिकुम्भयोर्मध्यभागे ॥ कुम्भौतुपिण्डौशिरसस्तयोर्मध्येविदु : पुमान् ॥ वेत्तिसंज्ञामनया तेन । विद्० । बाहुलकात्कु : ॥

विदुर : । पुं० नागरे ॥ धीरे ॥ धृतराष्ट्रानुजे । कौरवाणांमन्त्रिणि ॥ त्रि०ज्ञानशीले ॥ वेदनशील : । विदिभिदिच्छिदे : कुरच् ॥

विदुल : । पुं० अम्बुवेतसे ॥ वेतसे ॥ गन्धरसे । बोले ॥ वेत्तिविद्यतेवा । बाहुलकादुलच् ०गुणाभावश्च ॥ नम्रवेतसे ॥

विदुषी । स्त्री० पण्डितायांनार्याम् ॥ वेत्ति । विदे : शतुर्वसु : । उगितश्चेतिङीप् ॥

विदुष्मती । स्त्री० पण्डितवत्यांपुर्याम् ॥

विदून : । त्रि० परितप्ते ॥ विदूयतेस्म । टुदुउपतापे । क्त : । ल्वादिभ्यइतिनिष्ठानत्वम् ॥ विशेषेणादूनोवा ॥

विदरम् । न० देशविशेषे । बालवा

ये ॥ बालबायाद्रे : समीपवर्त्ति
निनगरे ॥ त्रि॰ अतिदूरस्थदेशा
दौ । विप्रकृष्टे ॥
विदूरजम् । न॰ वैदूर्य्यमणौ ॥
विदूरथः । पुं॰ राजविशेषे ॥
विदूरभूमिः । स्त्री॰ विदूरदेशे ॥
विदूराद्रिः । पुं॰ रोहणपर्व्वते ॥
विदूषकः । पुं॰ क्रीडनीयकपात्रे ।
षिड्गे । विटे । व्यलीके । काम
केलौ । चाटुवटौ । वासन्तिके ।
वैहासिके । प्रहासिनि । परनिन्दा
करे । खले । अभीरौ । सूचके ।
कराटके । परहेलिनि ॥ नायकवि
शेषे ॥
विदेशः । पुं॰ परदेशे ॥ कोतिभा
रः समर्थानां किं दूरं व्यवसायिना
म् । को विदेशः सविद्यानां कः
परः प्रियवादिनाम् ॥
विदेहः । पुं॰ जनकान्वयभूमिपे ।
मैथिले ॥ विदेहाः पुं॰ भूम्नि ।
देशविशेषे । तीरभुक्तौ । तिरहु
त॰ इ॰ भा॰ प्र॰ ॥ यथा । गण्ड
कीतीरमारभ्य चम्पारण्यान्तकं शि
वे । विदेहभूः समाख्याता तीरभु
क्त्यभिधः स तु ॥ त्रि॰ कायशून्ये ।
निर्द्देहे ॥
विदेहमुक्तिः । स्त्री॰ मुक्तिविशेषे ॥
सा यथा । ततः कालवशादेव प्रार
ब्धे तु क्षयं गते । वैदेहीं मामकीं मु

क्तिं याति नास्त्यत्र संशय इति ॥ त
तो जीवन्मुक्त्यनन्तरम् ॥
विदेहा । स्त्री॰ मिथिलायाम् ॥
विद्धः । त्रि॰ वेधिते । क्षतच्छिद्रे ॥
क्षिप्ते ॥ सदृशे ॥ बाधिते ॥ ताडि
ते ॥ विध्यतेस्म । व्यधताडने ।
क्तः । ग्रहिज्येति सम्प्रसारणम् ॥
विद्धकर्णः । पुं॰ विद्धकर्ण्याम् ॥
त्रि॰ कृतकर्णवेधे ॥ विद्धौ कर्णौ
यस्य ॥
विद्धकर्णा । )
विद्धकर्णिका । ) स्त्री॰ विद्धकर्ण्याम् ॥
विद्धकर्णी । स्त्री॰ पाठायाम् । अम्ब
ष्ठायाम् ॥ विद्धौ कर्णौ यया॰ अस्या
वा । पाककर्णेति ङीष् ॥
विध्यर्थः । पुं॰ विधिफले ॥ कृति
साध्यत्वमर्थहेतुत्वमनर्थाहेतुत्वञ्चे
ति तार्किकाणां दर्शनम् ॥ भाट्टमते
विध्यर्थस्तु॰ श्येनफलस्यैवाभिचार
स्यानर्थहेतुत्वादधर्म्मत्वम् । श्येनस्य
तु विहितस्य समीहितसाधनस्य धर्म्म
त्वमेव । अर्थपदव्यावर्त्त्यन्तु॰ कल
ञ्जभक्षणादेर्निषिद्धस्यैवेति । फल
तोऽनर्थहेतुत्वेन तु॰ शिष्टानां श्येना
नौ नधर्म्मत्वेन व्यवहारः । तदुक्त
म् । फलतोऽपि च यत् कर्म्म नानर्थे
नानुबध्यते । केवलप्रीतिहेतुत्वात्
तद्धर्म्म इति कथ्यते ॥
विध्वंसः । पुं॰ विनाशे ॥ विधि

ष्टोध्वंस : ॥

विद्यमान : । त्रि० वर्त्तमाने ॥

विद्या । स्त्री० उमायाम् । शिवायाम् । दुर्गायाम् ॥ मन्त्ररूपायाम् ॥ देवताज्ञाने । उपासनायाम् ॥ विज्ञाने ॥ श्रेयोविषयायाम् ब्रह्मविद्यायाम् ॥ अनावृतसंवित्ताद्रात्म्यापन्नायां ब्रह्माकारान्त : करणवृत्तौ ॥ आत्मसाक्षात्कारे ॥ वेदार्थपरिज्ञाने ॥ शास्त्रे ॥ आन्वीक्षिकीत्रयीवार्त्तादण्डाख्यासु चतसृषु ॥ यथा । आन्वीक्षिकीं त्रयीं वार्त्तां दण्डनीतिञ्च पार्थिव: । तद्विधैस्तत्क्रियोपेतैश्चिन्तयेद्विनयान्वित : ॥ आन्वीक्षिक्यात्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ । अर्थानर्थौ तु वार्त्तायां दण्डनीत्यां नयानयौ ॥ विद्याश्चतस्र एवैता योगश्च मायदेहिनाम् । विद्याविनीतो नृपतिर्न कृच्छ्रे ष्ववसीदति ॥ इति ॥ पुराणादि चतुर्दशसु ॥ यथा । पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिता: । वेदा : स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ इति ॥ अष्टादशविद्यासु ॥ यथोक्तं विष्णुपुराणे । अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तर : । धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश । आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रय : । अर्थशास्त्रं चतुर्थञ्च विद्या ह्यष्टादशैव ता : ॥ इति ॥ तत्राङ्गानि षट् । यथा । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । ऋग्यजु : सामाथर्वाख्या : वेदाश्चत्वार ईरिता : । विचारो वेदवाक्यानां मीमांसा प्रोच्यते बुधै : ॥ सा च पूर्वोत्तरभेदाद्द्विधा । तथाहि । कर्मप्रतिपादनपरा जैमिनिप्रणीता द्वादशाध्यायी पूर्वमीमांसा । ब्रह्मप्रतिपादनपरा व्यासप्रणीता चतुरध्यायी उत्तरमीमांसेति । पदार्थनिर्णयपरं तर्कशास्त्रं न्याय: अत्रैव वैशेषिकनयस्यान्तर्भाव : । मन्वत्रिविष्णुहारीतादिप्रणीतं धर्मशास्त्रम् । कापिलपातञ्जलपाशुपतपाञ्चरात्रादीनामागमानामपि धर्मशास्त्र एवान्तर्भाव : । सर्गादिपञ्चलक्षणलक्षितम् मत्स्यमार्कण्डेयभविष्यभागवतब्रह्मब्रह्माण्डब्रह्मवैवर्त्तवायुवामनविष्णुवराहाग्निनारदीयपद्मलिङ्गगरुडकूर्मस्कन्दभेदादष्टादशविधं पुराणम् । तदुक्तम् । मद्वयं भद्वयञ्चैव ब्रत्रयं वचतुष्टयम् । अनापलिङ्गकूस्कानि पुराणानि विदुर्बुधा : ॥ उपपुराणानामप्यत्रैवान्तर्भाव : । रोगोपशमपूर्वकानन्दफलकोऽष्टस्थानसंयुत आयुर्वेद : । शस्त्रास्त्रप्रयोगोपसंहारप्रतिपादकमन्त्रसहित : पादचतुष्टयात्मको धनुर्वेद: । पदावच्छिन्नतानपरिच्छेदप्रयुक्तावधानेपृथक्षड्जादि

स्वरसमुदायो गान्धर्ववेदः। चतुःषष्टिकलासङ्ग्राहकमौशनसादिशास्त्रमर्थशास्त्रमिति॥ सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम्। अहार्य्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा॥ विद्या ददाति विनयं विनयाद्याति पात्रताम्। पात्रत्वाद्धनमाप्नोति धनाद्धर्मस्ततः सुखम्॥ इति विष्णुशर्म्मा॥ दानेन तपसा यज्ञैरुपवासव्रतैस्तथा। न तां गतिमवाप्नोति विद्यायामवाप्नुयादिति यमः॥ विदन्त्यनया॰ ज्ञानमिति वा। विद-ज्ञाने। संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिण इति क्यप्॥ ब्रह्मविद्या। स्त्री॰ दृश्यमिथ्यात्वं दृग्वस्तुनः स्वप्रकाशत्वं बोधयति॥ परापरविभेदेन विद्या द्वैविध्यमीरितम्। ऋग्वेदाद्याऽपरा विद्या परा त्वक्षरतत्परा॥ व्यवहारस्य दशेयं विद्याविद्येति भेदपरिभाषा। नास्त्येव तत्त्वदृष्ट्या तत्त्वं ब्रह्मैव नान्यदस्ति स्मात्॥ तत्त्वदृष्ट्या॰ ब्रह्मात्मैकत्वसिद्धान्तदृष्ट्या। तत्त्वम्॰ यथार्थस्वरूपम्॥ गणिकार्यामोषधौ॥

विद्यागुरुः। पुं॰ आचार्यातिरिक्तोपाध्यायादौ॥

विद्यातीर्थम्। न॰ सन्ध्यातीर्थे॥ विद्यादानपात्रे॥

विद्यादलः। पुं॰ भूर्जवृक्षे॥

विद्यादाता। त्रि॰ विद्यादानकर्त्तरि॥ यथा। अन्नदाताभयत्राता पत्नीतातस्तथैव च। विद्यादाता जन्मदाता पञ्चैते पितरो नृणाम्॥

विद्यादानम्। न॰ अध्यापने॥ पुस्तकदाने॥ अन्नदानं महादानं विद्यादानं ततोऽधिकम्। अन्नेन क्षणिका तृप्तिर्यावज्जीवन्तु विद्यया॥ अपि च। वाजपेयसहस्रस्य सम्यगिष्टस्य यत्फलम्। तत्फलं समवाप्नोति विद्यादानान्न संशयः॥ तस्माद्दापयेन्नित्यं धर्मशास्त्रस्य वा श्रुते। पठनं कारयेद्राजन् यदीच्छेद्धर्ममात्मनः॥ गोभूहिरण्यवासांसि शयनान्यासनानि च। प्रत्यहं तु मद्भक्ताभिभवन्ति नृपसत्तम॥ धर्माधर्मं न जानाति लोकोऽयं विद्यया विना। तस्मात् सदैव धर्मात्मन् विद्यादानरतो भव॥ इति वह्निपुराणे विद्यादाननामाध्यायः॥ अपि च गारुडे ५१ अध्याये। विद्यां दत्त्वा ब्राह्मणाय ब्रह्मलोके महीयते। दद्यादहरहस्तान्तु श्रद्धया ब्रह्मचारिणे॥ सर्वपापविनिर्मुक्तो ब्रह्मस्थानमवाप्नुयात् इति॥ यस्तु देव्या गृहे नित्यं विद्यादानं प्रवर्त्तयेत्। स भवेत् सर्वलोकानां पूज्यः पूजापदं व्रजेत्॥ धर्मार्थं यच्च नस्यात्तां शुश्रूषा वा पितत्रिधा। तत्र विद्यानमप्राप्याशुभं वीजमिवो

षरे ॥ विद्ययैव समं कामं मर्त्तव्यं ब्रह्मवादिना । आपद्यपि हि घोरायां नत्वेनामिरिणे वपेत् ॥ विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम् । असूयकाय मां मादास्तथा स्यां वीर्य्यवत्तमा ॥ यमेव तु शुचिं विद्यान्नियतं ब्रह्मचारिणम् । तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने ॥ इति मनुः ॥

विद्यादेवी । स्त्री॰ विद्याधिष्ठात्र्याम् । सरस्वत्याम् ॥ जिनषोडशदेवीषु ॥ यथा । विद्यादेव्यस्तु षोडश ॥ १५२ ॥ रोहिणी प्रज्ञप्ती वज्रशृङ्खला कुलिशाङ्कुशा : । चक्रेश्वरी नरदत्ता काल्यथोऽसौ महापरा ॥ गौरी गान्धारी सर्वास्त्रामहाज्वाला च मानवी । वैराट्याच्छुप्तमानसी महामानसिकेति ताः ॥ १५४ ॥ हे॰ च॰ ॥

विद्याधनम् । न॰ विद्ययोपार्ज्जितवित्ते ॥ यथाह कात्यायनः । उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्वकम् । विद्याधनन्तु तद्विद्याद्विभागेन नियोजयेत् ॥ शिष्यादार्त्विज्यतः प्रश्नात् सन्दिग्धप्रश्ननिर्णयात् । स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत् ॥ विद्याधनन्तु तत्प्राहुर्विभागेन प्रयोजयेत् । शिल्पेष्वपि हि धर्मोऽयं मूल्योद्यच्चाधिकं भवेत्



साधारणसुवर्णादिकमादाय॰ कुण्डलादिकं निर्माय॰ सुवर्णादिमूल्यात्॰ शिल्पगुणेन यदधिकं मूल्यं स्यात्तदित्यर्थः ॥ परं निरस्य यल्लब्धं विद्यया द्यूतपूर्वकम् । विद्यातिशयनैपुण्येन॰ द्यूतपूर्वकं यल्लब्धमित्यर्थः ॥ विद्याधनन्तु तद्विद्यान्न विभाज्यं बृहस्पतिः ॥ अस्यार्थं वचनार्थानुक्रमेणाह । यदीति । यदि भवान् भद्रमुपन्यस्यति॰ तदा भवते॰ एवमयैतद्देयमिति पणितं यथोपन्यासं निस्तीर्य लभते तन्न विभाज्यम् ॥ शिष्यादध्यापितात्॰ आर्त्विज्यतः ε यजमानाद्दक्षिणया लब्धं धनम्॰ दक्षिणा च न प्रतिग्रहे॰ वेतनरूपत्वात्तस्याः तथा यत्किञ्चिद्विद्यया प्रश्ने निस्तीर्णे॰ अपणितमेव यदि कश्चित् परितोषाद्ददाति॰ प्रश्ने निस्तीर्णे॰ प्रश्नस्य सम्यगुत्तरे दत्ते इत्यर्थः सन्दिग्धप्रश्ननिर्णयादिति व्याचष्टे । तथेति॰ तथा यो ह्यस्मिन् शास्त्रार्थे मम संशयमपनयति॰ तस्मै सुवर्णमिदं ददानीत्युपस्थितस्य संशयमपनीय यल्लब्धम् । तत्रैव विकल्पेन व्याख्यान्तरमाह यद्वेति । यद्वा॰ वादिनोर्वादसन्देहे॰ न्यायकरणार्थमागतयोः सम्यङ्निरूपणेन यल्लब्धं षष्ठांशादिकम् । स्वज्ञानशंसनादिति व्याचष्टे॰ तथेति॰ तथा शास्त्रादिषु प्रक

इत्यनंविभाव्ययत्प्रतिग्रहादिनाल
ब्धम्। वादादित्यस्यार्थमाह॰ तथे
ति। तथादूयो: शास्त्रज्ञानविवादे॰
अन्यथापियत्कुत्रचिदन्योन्यज्ञान-
विवादे॰ निर्जित्ययल्लब्धम्॰ नि
र्जित्य॰ एककोटिव्यवस्थापनेनवि
वादमपनीय॰ लब्धम्॰ वादिपत्रि
संराज्ञावाप्रसाददत्तमित्यर्थ:। प्रा
ध्ययनादितिव्याचष्टे॰ तथेति॰ त
थैकस्मिन्देयेवहूनामुपप्लवे॰ येन
प्रकृष्टमधीत्य॰ यल्लब्धम्। शिल्पे
ष्वपीत्यस्यार्थमाह॰ तथेति॰ तथा
शिल्पादिविद्यया॰ चित्रकारसुवर्ण
कारादिभिर्यल्लब्धम्॰ शिल्पगुणेन
यदधिकंलब्धम्। तथाद्यूतेनापि
परंनिर्ज्जित्ययल्लब्धं॰ तत्सर्वंविद्या
धनमविभाज्यमितरैरित्यर्थ:। त
स्माद्यायाकयाचविद्यायालब्धमर्ज-
कस्यैवतन्नेतरेषामिति॰ प्रदर्शना
र्थन्तुकात्यायनेनविस्तारितमितिदा-
यभाग:॥ अत्रनारद:। कुटुम्बं-
विभृयाद्भ्रातुर्योविद्यामधिगच्छत:
। भागंविद्याधनात्तस्मात्सलभे
ताश्रुतोपिसन्निति॥ विभृयादित्ये
कवचननिर्द्देशान्नवहव:। यदिवि
द्यामभ्यस्यतोभ्रातु: कुटुम्बमपरो
भातास्वधनव्ययशरीरायासाभ्यांसं-
वर्द्धयति॰ तदातद्विद्यार्ज्जितधने
तस्याधिकार:॰ अश्रुतोमूर्ख:॥



विद्याधर:। पुं॰ देवयोनिविशेषे।
जीमूतवाहनपुष्पदन्तादौ॰ कामरू
पिणि॰ खेचरे॥ विद्यायागुटिका
ञ्जनादिविषयिण्या:॰ धरोधारक:
॥ रतिबन्धविशेषे॥ यथा। नार्याज
ङ्घयुगंधृत्वाकराभ्यांताडयेत्पुन:।
कामयेन्निर्भयंकामीवन्धोविद्याधरो
मत:॥ यन्त्रविशेषे॥ यथा॥
विद्याधरयन्त्रम्। न॰ डमरुयन्त्रे॥
विद्याधार:। पुं॰ वर्णवृत्तान्तरे॥
यथा। नागाधीशेनोक्तंवृत्तंविद्या
धारम्॰ षड्भि: कर्णै: शेषे पूर्णंभू
मौसारम्। स्यादस्मिन्विश्रामोवेदै
र्वेदैर्वेदै:॰ कृत्वायत्नात्पूर्णंधीर: कौ
स्यायुक्त:॥ यथा। वन्देपादाम्भो
जन्नित्यंसीताभर्त्तु: कृत्वासिन्धौ
सेतुंरक्षोनाथंहन्तु:। पैत्र्यामाज्ञां
ज्ञात्वाप्राप्तंराज्यंभ्रातु: स्वीयै: स
र्वैर्लोकै: साकंनाकंयातु:॥ वि
द्यां धरति। धृञ्॰। कर्म्म
ण्यण्॥
विद्याधिकारी। त्रि॰ उपनिषन्निर्व्व
चनेनोक्ते॥ विद्याया: ब्रह्मविद्या
या: अधिकारी॥ सद्विविध:॰
कृतोपास्तिरकृतोपास्तिश्च। तत्रो
पास्तिसाक्षात्कारपर्य्यन्तामुपासनां
कृत्वायोज्ञानेप्रवर्त्ततेसमुख्योविद्या
धिकारी। इदानीन्तनस्तुप्रायेणा
कृतोपासनएवोत्तमुक्षमाचात्मद्दसा

विद्यायांप्रवर्त्ततेसतुगौणोधिकारी॰ तस्यज्ञानस्यसवातप्रदेशप्रदीपवत्स हसानिवर्त्तनात् । ननु सर्वेषाम पिविदुषामात्मनोऽनित्यप्राप्तिरूपो मुख्याधिकारः किमस्मादविशेषा दविद्यानिवृत्ति रितिचेत्॰शृणु॰स्व स्वायम्भावः । यस्तूपास्यदेवतासा साक्षात्कारपर्यन्तं सगुणोपासनं वि धायविद्यायांप्रवृत्तस्तस्यविचारेणज्ञा नोत्पत्तौविघ्नपाभावात्॰आत्मधी र्नित्यप्राप्तैव । यः पुनरुपासनमकृ त्वाश्रवणाद्यनुष्ठायतत्त्वं निश्चिनोति तस्यचित्तवशीकरणाभावेविघ्नपस म्भवात्तत्प्रतिनियमविधिः । नच तत्त्वज्ञानेनाज्ञानस्यनष्टत्वाद्विघ्नवै यर्थ्यमितिशङ्क्यम्॰वशीकरणा भावे॰शास्त्रिवनश्येत्परमार्थबुद्धिरि त्युक्तेपरमार्थत्वांशनाशेपि॰जन्म हेत्त्वज्ञानमायायोगात् । अन्यथा वेदान्तेषूपास्तिविधीनामेकाग्र्यद्वा राऽद्वितीयब्रह्मपरत्वंनस्यात् । अ तस्तेषांश्रुतिप्रसिद्धप्रणवोच्चारणपूर्व कमप्रतिबद्धसाक्षात्कारायनिरन्तरं निर्गुणब्रह्मभावनाकार्या । अतएव शास्त्रे॰विदुषोविधिर्नास्तीत्युक्त्वा॰ पुनर्विद्वानज्ञवद्विधिमर्ह तीतिब्रह्म निष्ठाविधीयते॰इत्याद्युक्तिर्नविरु ध्यते । अधिकारिभेदेनव्यवस्थास म्भवात् ॥

विद्यानिधिः । पुं॰ विद्यासम्प्रदाय प्रवर्त्तके ॥

विद्यानैपुण्यकामः । त्रि॰ विद्याति शयमात्रार्थिनि ॥

विद्याप्रयोजनम् । न॰ आत्यन्तिक्यांसं सारनिवृत्तौब्रह्मप्राप्तिलक्षणायाम् ॥ विद्यायाः प्रयोजनम् ॥

विद्याभीप्सी । त्रि॰ विद्यार्थिनि ॥

विद्यारम्भः । पुं॰ प्राप्तेतुपञ्चमेवर्षे विद्यारम्भञ्चकारयेदितिवचनबोधि तेविद्यायाः प्रारम्भे ॥

विद्यार्थी । त्रि॰ विद्याभीप्सिनि ॥ विद्यैवार्थः सोस्यास्तीति॰इ- निः ॥

विद्यावान् । त्रि॰ विद्याविशिष्टे ॥ पण्डिते ॥ विद्यास्त्यस्य । म- तुप् ॥

विद्याविषयः । पुं॰ परब्रह्मणि॰प्र त्यगात्मभूते ॥ विद्यायाः विष यः ॥

विद्युज्जिह्वः । पुं॰ राक्षसविशेषे ॥ त्रि॰तडिदाभजिह्वे ॥

विद्युज्ज्वाला । स्त्री॰ कलिकारीवृ- क्षे ॥ तडित्प्रभायाम् ॥

विद्युत् । स्त्री॰ मेघेषुदृश्ये॰दीर्घाका रे॰ज्योतिषि । तडिति । सौदा मिन्याम् । चञ्चलायाम् ॥ साचतु र्विधायथा । वातायकपिलाविद्युदा तपायहिलोहिता । पीतावर्षायवि

स्त्रियां दुर्भिक्षायां सिता भवेत् ॥ सन्ध्यायाम् ॥ विशेषणद्योतते । द्युतदीप्तौ । भ्राजभासीतिक्विप् ॥ त्रि० निष्प्रभे ॥

विद्युत्केश : । पुं० राक्षसविशेषे ॥

विद्युत्प्रियम् । न० कांस्ये ॥

विद्युत्वान् । पुं० मेघे ॥ विद्युत : सन्त्यस्मिन् । मतुप् ॥

विद्युन्माला । स्त्री० अनुष्टुप्छन्दोभेदे ॥ यथा । मोमोगोगोविद्युन्माला । वासोवल्लीविद्युन्मालावर्हश्रेणीशाक्रश्चाप : । यस्मिन्नास्तांतापोच्छित्त्यैगोमध्यस्थ : कृष्णाम्भोद : ॥ अपिच । उक्तायस्यामष्टौवर्णा : पादेपादेसर्वेदीर्घा: । विश्राम : स्याद्वेदैर्वेदै : साविद्युन्मालानिर्दिष्टा ॥ यथा । आगामिन्योनोयामिन्यो यायायाताभूयोभूय : । अभ्रच्छायावत्तारुण्यंमानेनामेनस्यात्किन्ते ॥

विद्युन्माली । पुं० राक्षसविशेषे ॥

विद्योपयोग : । पुं० विद्यायेष्टसिद्धौ ॥ चतुर्भिश्चप्रकारैर्विद्योपयुक्ताभवति । आगमकालेन० आगमःकालश्चविद्याग्रहणकाल : । १ । स्वाध्यायकालेन० स्वाध्यायकालश्चाभ्यासकाल : । २ । प्रवचनकालेन० प्रवचनकालोऽध्यापनकाल: । ३ । व्यवहारकालेन० व्यवहारोयज्ञानुष्ठानकर्म्मणि । ४ । तत्राद्ययोर्विद्याध्य्र्यंबुद्धिमानिष्पादरपूर्वकमन्नवस्त्रादिलाभरूपोपयोग: । तृतीयेप्रतिष्ठा० सच्छिष्यलाभद्वारार्थप्राप्ति : सत्कारविशेषश्च । चतुर्थे० यज्ञादानुष्ठानकालेऽपशब्दप्रयोगप्रयुक्तप्रायश्चित्ताभाव: ० कर्म्मसाङ्गता० दक्षिणालाभ : प्रतिष्ठाचेत्युपयोग : ० तादृशश्चोपयोग : सर्वाध्ययनएवेतिमहाभाष्यकारादय : ॥

विद्रम् । न० छिद्रे ॥

विद्रधि : । पुं० रोगविशेषे । हृद्ग्रन्थौ । हृद्व्रणे ॥ अस्यसम्प्राप्तिपूर्व्वकंसामान्यंलक्षणंयथा । त्वग्रक्तमांसमेदांसिप्रदुष्यास्थिसमाश्रिता : । दोषा : शोथंशनैर्घोरंजनयन्त्यायताभृशम् ॥ महामूलंरुजावन्तंवृत्तंव्याप्यथवायतम् । सविद्रधिरितिख्यातोविज्ञेय : षड्विधश्च स : ॥ पृथग्दोषै : समस्तैश्चक्षतेनाप्यसृजातथा । विद्रधि : षड्विध: प्रोक्तोविशेषोभाषसङ्ग्रहे ॥ जलौकापातनंशस्तंसर्वस्मिन्नपिविद्रधौ । मृदुर्विरेकोलघ्वन्नंस्वेद : पित्तोत्तरंविना ॥ वेदनम् । विदेर्वहुलमन्यत्रापिसंज्ञाछन्दसोरितिवारक् । यद्वा । विद्रासप्रपलायने । आतश्चोपसर्गइतिक: । विद्रंधीयतेऽस्याम् । डुधाञ्० । कर्मण्यधिकरणेचेतिकि : ॥ यद्वा । विद्रस्यधानम् । इकृष्यादिभ्य : ॥

विद्रधिनाशन : । पुं० शोभाञ्जनवृक्षे ॥

विद्रवः। पुं॰ विद्रुतौ। पलायने॥ धियि। बुद्धौ॥ विद्रवणम्। द्रुगतौ। ऋदोरप्॥ निन्दायाम्॥ क्षरणे॥

विद्रावितः। त्रि॰ पलायिते॥

विद्रुतः। त्रि॰ पलायिते॥ प्रचलिते॥ द्रवीभूते स्रुतः प्राप्तद्रवीभावे। विलीने। द्रुते॥ विद्रवतिस्म। द्रु गतौ। गत्यर्थेतिक्तः॥

विद्रुतिः। स्त्री॰ पलायने। प्रद्रावे॥

विद्रुमः। पुं॰ रत्नवृक्षे॥ प्रवाले॥ किशलये॥ विशिष्टोद्रुमः॥ यद्वा। विशिष्टेद्रौवृक्षेभवः। विशिष्टोद्रुर्वोस्यस्यवा। व्युद्रुभ्यां मः॥ त्रि॰ विगतद्रुमेभूमिपर्वतादौ॥

विद्रुमलता। स्त्री॰ नलीनामौषधौ॥ शुषिराविद्रुमलताकपोताङ्घ्रिर्नटीनली॥ विद्रुमस्येवलता॥

विद्रुमलतिका। स्त्री॰ विद्रुमलतायाम्॥

विद्वत्कल्पः। त्रि॰ ईषदूने विदुषि। विद्वद्देशीये॥

विद्वत्संन्यासः। पुं॰ सम्यगनुष्ठितैः श्रवणमनननिदिध्यासनैः परन्तत्त्वं विदितवद्भिः सम्पाद्यमाने॰ ज्ञानफलभूतेचतुर्थाश्रमे॥ तञ्चयाज्ञवल्क्यादयः सम्पादयामासुः॥

विद्वान्। त्रि॰ प्राज्ञे। दक्षे॥ पण्डिते॥ वेदविदि॥ विदितसकलवेद्ये। आत्मविदि॥ व्युत्थानमपरिग्रहश्चेतिद्वयंविविदिषूणांसाधनत्वेनोक्तम्॰ तत्॰ विदुषांस्ततः सिद्धमित्याह। लोकाश्रयार्थैषणाभ्योव्युत्थानस्यापरिग्रहः। द्वयं बोधमहिम्नैवविदुषांनतुयत्नतः॥ आनन्दैकस्वभावं स्वमात्मानंपश्यतः कुतः। कामः परिग्रहोवास्याद्येषाकामइतिचश्रुतेः॥ वेत्ति। विद्ज्ञाने। विदेः शतुर्वसुरिति पाक्षिकोवसुरादेशः॥ नशिल्पादिज्ञानयुक्ते विद्वच्छब्दः प्रयुज्यते॥ विद्वत्त्वञ्चनृपत्वञ्चनैवतुल्यं कदाचन। स्वदेशेपूज्यतेराजा विद्वान्सर्वत्रपूज्यते॥

विद्विट्। त्रि॰ शत्रौ॥

विद्वेषः। पुं॰ विद्वेषणे। द्विषअप्रीतौ। घञ्॥

विद्वेषकः। त्रि॰ विद्वेष्टरि। द्वेषकर्त्तरि॥ विद्वेष्टि। द्विष॰ ण्वुल्॥

विद्वेषणम्। न॰ विद्वेषे। वैरे॥ अभिचारकर्मविशेषे॥ स्निग्धानां द्वेषजननं मिथोविद्वेषणं मतम्॥

विद्वेषणी। स्त्री॰ स्त्रीविशेषे॥

विद्वेषी। त्रि॰ शत्रौ। वैरिणि॥ विद्वेषोस्त्यस्यास्मिन्वा। इनिः॥

विधनम्। त्रि॰ विनाशयति॥

विधवनम्। न॰ कम्पने॥

विधरणः। त्रि॰ विधारयितरि॥

विधवा । स्त्री॰ रण्डायाम् । मृतभर्तृकायाम् । विश्वस्तायाम् । पतिनौनाचयानारीकामंभवतुपुत्रिणी । धनधान्यसमृद्धापिविधवेत्युच्यतेबुधैः । विगतोधवोभर्तायस्याः ॥

विधा । स्त्री॰ गजाशने । ऋद्धौ । विधौ । विधानम् । डुधाञ् धारणपोषणयोः ॥ आतश्चोपसर्गे ॥ इत्यङ् ॥ वेतने ॥ कर्माणिविधौ ॥ प्रकारे ॥ वेधने ॥

विधाता । पुं॰ वेधसि । द्रुहिणे ॥ स्मरे । कामदेवे ॥ विशेषेणदधाति । डुधाञ्॰ । तृच् । विरन्योपसर्गनिवृत्त्यर्थः ॥ मदिरायामितिराजनिर्घण्टः ॥ भृगुमुनेः पुत्रे ॥ विष्णौ कर्माणिदर्शपूर्णमासादीनि॰ तत्फलानिस्वर्गादीनिचविदधातिसृजति । पूर्ववत्तृच् ॥

विधातृभूः । पुं॰ नारदमुनौ ॥

विधात्रायुः । पुं॰ सूर्यशोभायाम् ॥ ब्रह्मणोवयसि ॥

विधात्री । स्त्री॰ पिप्पल्याम् ॥ मद्ये ॥ विधानकर्त्र्याम् ॥

विधानम् । न॰ हस्तिकवले ॥ विधौ ॥ कारणे ॥ अप्रवृत्तप्रवर्त्तने ॥ वेदे ॥ विधीयन्तेऽनेनकर्माण्यग्निहोत्रादीनि । डुधाञ्॰ । ल्युट् ॥

विधानगः । पुं॰ पण्डिते ॥ विधानंगायति । गैशब्दे । गापोष्टक् ॥

विधानोक्तः । त्रि॰ विधिशास्त्रबोधिते ॥ विधानेनउक्तः ॥

विधाय । अ॰ कृत्वेत्यर्थे ॥

विधायकः । त्रि॰ विधेर्ज्ञापके । विधानस्यकर्त्तरि ॥ विपूर्वोधाञो ण्वुल् ॥

विधायी । त्रि॰ विधानकर्त्तरि ॥

विधारकः । पुं॰ विधरणे ॥

विधिः । पुं॰ ब्रह्मणि । परमेष्ठिनि । काले ॥ दैवे । नियतौ ॥ विधाने ॥ विधिवाक्ये ॥ प्रकारे ॥ कल्पे ॥ क्रमे ॥ नियोगे ॥ विष्णौ ॥ वैद्ये ॥ योगोपदेशग्रन्थे ॥ कर्मणि ॥ लिङाद्यर्थे ॥ वेदे ॥ कुर्यात्क्रियेतकर्त्तव्यंभवेत्स्यादितिपञ्चमम् । एतत्स्यात्सर्ववेदेषुनियतंविधिलक्षणमितिन्यायविदांस्मरणम् ॥ तथाच॰ पुरुषार्थमुद्दिश्य॰ कर्मोपासनाज्ञानात्मककाण्डत्रयविधायको वेदो॰ विधिरितिफलितोर्थः ॥ प्रपञ्चस्तुज्ञापकोवेदभागो॰ विधिरितिमीमांसकाः । सचतादृशप्रयोजनवदर्थविधानेनार्थवान्॰ यादृशंचार्थंप्रमाणान्तरेणाप्राप्तंविधत्ते । यथा॰ अग्निहोत्रंजुहुयात्स्वर्गकामइतिविधिर्मानान्तरेणाप्राप्तंस्वर्गप्रयोजनवद्धोमंविधत्ते॰ अग्निहोत्रेणस्वर्गंभावयेदितिवाक्यार्थबोधः । यत्रकर्ममानान्तरेणाप्राप्तं॰

तत्रतदुद्देशेनगुणमात्रं विधत्ते । यथादध्नाजुहोतीत्यत्र॰होमस्याग्निहोत्रं जुहुयादित्यनेनप्राप्तत्वाद्धोमोद्देशेन॰दधिमात्रविधानं॰दध्नाहोमंभावयेदिति । यत्रतूभयमप्राप्तं॰तत्रविशिष्टं विधत्ते । यथा॰सोमेनयजेतेत्यत्र॰सोमयागयोरप्राप्तत्वात्॰सोमविशिष्टयागविधानम् सोमपदेमत्वर्थलक्षणया॰सोमवतायागेनेष्टं भावयेदिति॰वाक्यार्थबोधः। नचोभयविधानेवाक्यभेदः॰प्रत्येकमुभयस्याविधानात्॰किन्तु॰विशिष्टस्यैकस्यविधानात्॥ विधिश्चतुर्विधः नियोगविधिरधिकारविधिः प्रयोगविधिश्चेति॥ विधिरत्यन्तमप्राप्तौनियमःपाक्षिकेसति । तत्रचान्यत्रचप्राप्तौपरिसङ्ख्याविधीयते ॥ अप्राप्तप्रापकोविधिरितिवैयाकरणाः॥ न्यायमतेविधिर्यथा। प्रवृत्तिः कृतिरेवात्रसाचेच्छातोयतश्चसा। तज्ज्ञानं विषयस्तस्यविधिः॰स्तज्ज्ञापकोऽथवा ॥ विधिजन्यज्ञानात्॰प्रवृत्तिर्दृश्यते॰सा॰इच्छातः॰चिकीर्षातः॰चिकीर्षाचकृतिसाध्यत्वेष्टसाधनत्वज्ञानात्॰तज्ज्ञानस्यविषयः कार्यत्वमिष्टसाधनत्वञ्चविधिरितिप्राचीनमतम्। स्वमतमाह॰तज्ज्ञापकोऽथवेति । इष्टसाधनत्वानुमापकप्राप्ताभिप्रायोविधिप्रत्ययार्थः। इतिहरिदासीयकुसुमाञ्जलिः॥ विधिर्विधायकइतिन्यायसूत्रम्। इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यंविधिः॰अग्निहोत्रं जुहुयात्स्वर्गकामइत्यादि॥ विधीयतेऽनेनसुखदुःखे। डुधाञ्॰उपसर्गेघोःकिः॰॥ विधत्तइतिविधिर्वा । बाहुलकात्कर्त्तरिकिः॥ यद्वा। विधविधाने। इन्। इगुपधात्किदितिकित्वान्नगुणः॥ विधानमनेनवा। पूर्ववत्किः॥

विधिगोचरः। त्रि॰ विधिकिङ्करे॥

विधिज्ञः। त्रि॰ शास्त्रज्ञे॥

विधित्समानः। त्रि॰ विधातुमिच्छति॥

विधित्सा। स्त्री॰ विधातुमिच्छायाम् ॥ विपूर्वाद्दधातेः सनिमीमेत्यादिना॰इकारः। अत्रलोपोऽभ्यासस्येत्यभ्यासलोपः। ततः स्त्रियामित्यनुवृत्तौ॰अप्रत्ययादितिअप्रत्ययेटाप्॥

विधित्सितः। त्रि॰ विधातुमीप्सिते। कर्त्तुमिष्टे॥

विधित्सुः। त्रि॰ विधातुमिच्छौ॥ विपूर्वाद्दधातेः सन्नन्तादुप्रत्ययः॥

विधिदर्शी। पुं॰ सदस्ये। न्यूनाधिकविचारकेऋत्विग्विशेषे॥ विधिंद्रष्टुंशीलमस्य। णिनिः॥

विधिदृष्टः। त्रि॰ यथाशास्त्रंनिश्चिते॥ विधिनादृष्टः॥

विधिदेशकः । पुं॰ सदस्ये । विधिदर्शिनि ॥

विधियज्ञः । पुं॰ विधिनानुष्ठेयमानेवाज्ययज्ञे । दर्शपौर्णमासादौ । विधिविषयोयज्ञः ॥

विधिवत् । अ॰ यथाविधि । विध्यनुसारेणेत्यर्थे ॥

विधिविषयः । त्रि॰ विधिजन्यप्रयत्नभाज्ये ॥ विधेर्विषयः ॥

विधिहीनः । त्रि॰ यथाशास्त्रबोधितविपरीते । विधिनाहीनः ॥

विधुः । पुं॰ सुधांशौ । सोमे । चन्द्रे ॥ कर्पूरे । अच्युते । हरौ । ब्रह्मणि ॥ राक्षसे । विध्यतिविरहिणम् । विध्यत्यसुरान्वा । व्यधताडने । पृभिदिव्यधिगृधिधृषिभ्यः कुः । ग्रहिज्येतिसम्प्रसारणम् ॥

विधुक्षयः । पुं॰ अमावास्यायाम् ॥

विधुतः । त्रि॰ त्यक्ते । निरस्ते ॥ कम्पिते ॥ विशेषेणधुतः ॥

विधुतिः । स्त्री॰ कम्पने ॥

विधुन्तुदः । पुं॰ राहौ । सैंहिकेये । विधुंतुदति । तुद॰ । विध्वरुषोस्तुद इतिखश् । मुम् ॥

विधुपञ्जरः । पुं॰ खड्गे ॥

विधुप्रिया । स्त्री॰ चन्द्रपत्न्याम् ॥ दाक्षायिण्योविधुप्रियाः । इतिकोषान्तरम् ॥

विधुरम् । न॰ प्रविश्लेषे । वैकल्ये ॥ त्रि॰ विकले । विगताधूः कार्यभारः । ऋक्पूरित्यप् । धुरोविगतइतिप्रादिसमासोवा । न॰ प्रत्यवाये ॥ कष्टे ॥

विधुरा । स्त्री॰ रसालायाम् । कृ॰ मे॰ ॥

विधुरितः । त्रि॰ विश्लिष्टे ॥

विधुवनम् । न॰ विधूनने । कम्पने ॥ धूविधूनने । ल्युट् । गाङ्कुटादिभ्यइतिङित्त्वाद्गुणाभावः ॥

विधूतः । त्रि॰ कम्पिते ॥ त्यक्ते ॥ विधूयतेस्म । धूञ्कम्पने । क्तः । यस्यविभाषेतिनेट् ॥

विधूननम् । न॰ कम्पने । विधुवने । धूञ्कम्पनेचुरादिः । ल्युट् । धूञ्प्रीञोर्नुग्वक्तव्यः ॥ अश्वादीनामुगात्कम्पने ॥

विधूनितः । त्रि॰ व्याप्ते ॥ कम्पिते ॥ धूञोण्यन्तात्कर्मणि॰ क्तः । धूञ्प्रीञोरितिनुगागमः ॥

विधूम्रः । पुं॰ धूसरे । कृष्णरक्तमिश्रितवर्णे ॥ त्रि॰ तद्वति ॥

विधृतः । त्रि॰ विधारिते ॥ विशेषेणधृते ॥ विष्टब्धे ॥

विधृतिः । स्त्री॰ विधरणे ॥

विधेयः । पुं॰ मन्त्रे ॥ विधीयतेविनियुज्यतेऽत्रासुरणवाक्येनकर्माणीत्यनेनेतिहरिहरभाष्यम् ॥ त्रि॰ विनयग्राहिणि । वचनेस्थिते ॥ विधिजन्यबोधविषये ॥ यथा । अनुवाद्यम

मुक्त्वातुनविधेयमुदीरयेत् । नह्यल्पमल्पंकिञ्चित्कुत्रचित्प्रतितिष्ठति ॥ विधातुं शक्य : । अचोयत् । ईयति । । गुण : ॥ विधिगम्ये । अनुष्ठेये । कर्त्तव्ये ॥ वश्ये ॥

विधेयता । स्त्री॰ विधेयत्त्वे । विधिजन्यबोधविषयत्त्वे ॥ यथा ॥ यथाब्रह्मवधादिषुपापस्यनिषिततयोपयुक्तब्राह्मणादिस्नानेहेगुण्यं॰तथागङ्गास्नानादिषुपुण्यस्यविधेयतावच्छेदकगङ्गादिस्नानेहेगुण्यमितिप्रायश्चित्ततत्त्वम् ॥

विधेयवर्त्ती । त्रि॰ वशवर्त्तिनि ॥ विधेयेवर्त्तते॰विधेयंवर्त्तयतिवा । णिनि : ॥

विधेयात्मा । पुं॰ वशीकृतान्त : करणे ॥ विधेयआत्माअस्य ॥

विनत : । त्रि॰ प्रणते ॥ भुग्ने ॥ शिक्षिते ॥ विनमतिस्म । णम॰ । क्त : ॥ विशेषेणनतोवा ॥

विनता । स्त्री॰ तार्क्ष्यजनन्याम् । सुपर्णायाम् ॥ पिटकाभेदे ॥

विनतासूनु : । पुं॰ अरुणे । सूर्यसारथौ ॥ गरुडे । खगेश्वरे ॥ विनताया : सूनु : ॥

विनति : । स्त्री॰ विनये ॥ विशिष्टानति : ॥

विनद : । पुं॰ छयाकी । शिलीन्ध्रे ॥

विनम्र : । त्रि॰ विनयिनि ॥ विशेषेणनम्र : ॥

विनम्रकम् । न॰ तगरपुष्पे ॥

विनय : । पुं॰ शिक्षायाम् ॥ प्रणतौ । विनीतत्त्वे । निरहङ्कारे । सौशील्ये । अनौद्धत्ये । अवनतौ ॥ विनयप्रशंसायथा । विनयोपग्रहान्भृत्यैकुर्वीतनृपति : सुतान् । अविनीतकुमारंहिकुलमाशुविशीर्यते । विनीतमौरसंपुत्रंयौवराज्येऽभिषेचयेत् ॥ अपिच । वृद्धांश्चनित्यंसेवेतविप्रान्वेदविद : शुचिन् । वृद्धसेवीहिसततंरक्षोभिरपिपूज्यते ॥ तेभ्योधिगच्छेद्विनयंविनीतात्मापिनित्यश : ॥ विनीतात्मादिनृपतिर्नविनश्यतिकर्हिचित् ॥ बहवोऽविनयान्नष्टाराजान : सपरिच्छदा : । वनस्थाअपिराज्यानिविनयात्प्रतिपेदिरे ॥ वेणोविनष्टोऽविनयान्नहुषश्चैवपार्थिव : । सुदासोयवनश्चैवसुमुखोनिमिरेवच ॥ पृथुस्तुविनयाद्राज्यंप्राप्तवान्मनुरेवच । कुवेरश्चधनैश्वर्यंब्राह्मण्यञ्चैवगाधिज : ॥ इतिमनु : ॥ द्विविधोविनय : स्वाभाविक: कृत्रिमश्चेतिकौटिल्य : । विशिष्टोनय : ॥ दण्डे ॥ त्रि॰ वणिजि ॥ क्षिप्ते ॥ निभृते । विजितेन्द्रिये ॥

विनयग्राही । त्रि॰ विधेये । वचनेस्थिते । आश्रवे ॥ विनयंग्रहीतुंशीलमस्य । सुपीतिणिनि : ॥

विनयस्थ : । त्रि॰ विधेये । आश्रवे । वचनेस्थिते । आज्ञाकारिणि ॥ विनयेतिष्ठति । ष्ठा॰ । क : ॥

विनया । स्त्री॰ बलौषधौ । बाट्याल के ॥

विनयी । त्रि॰ विनयान्विते ॥ विनयो ऽस्यास्ति । इनि : ॥

विनर्द : । पुं॰ ऋषभकूजितसमेश्वर विशेषे ॥ विशिष्टोनर्द : ॥

विनशनम् । न॰ तीर्थविशेषे । कुरुक्षेत्रे । सरस्वत्या : प्रथमादर्शनस्थले ॥ विनाशे ॥

विनष्ट : । त्रि॰ अन्तर्हिते ॥ विनश्यति स्म । णशअदर्शने । गत्यर्थेतिक्त : ॥ छिन्ने । भिन्ने ॥ नाशाश्रये । ध्वंस विशिष्टे ॥ पतिते ॥

विनष्टि : । स्त्री॰ विनाशे ॥ णशेर्भावेक्तिन् ॥

विनस : । त्रि॰ विग्ने । गतनासिके ॥

विना । अ॰ वर्जने । पृथक् । अन्तरेण । ऋते । हिरुक् । विनञ्भ्यांनानाञौनसहेति॰निषेधार्थाद्विशब्दान्ना ॥

विनाकृत : । त्रि॰ विरहिते । भिन्ने ॥ डु॰त्रि॰ ॥

विनाम : । पुं॰ शरीरस्यनम्रतायाम् । व्यथयावपुषोनमने ॥ विनमनम् । णम । घञ् ।

विनामक : । पुं॰ अधिमासे ॥

विनायक : । पुं॰ विघ्नराजे । गजानने । हेरम्बे ॥ तार्क्ष्ये ॥ विघ्ने ॥ ॥ जिने ॥ गुरौ ॥ विनयतिहितमनुशास्ति । णीञ्॰ । ण्वुल् ॥ विशिष्टोनायकइतिवा ॥ विगतोनायकोनियन्ताऽस्येतिवा ॥ त्रि॰नायकवर्जिते ॥

विनायिका । स्त्री॰ तार्क्ष्यपत्न्याम् ॥

विनारुहा । स्त्री॰ विपर्णिकायाम् ॥

विनाश : । पुं॰ अदर्शने । विनष्टे ॥ ध्वंसे ॥ विनशनम् । णशअदर्शने । । घञ् ॥

विनाशक : । त्रि॰ विनाशकर्त्तरि ॥ विनाशयतितच्छीलादि : । णश॰ । विपूर्वोहेतुमण्ण्यन्त: । निन्दहिंसक्लिशखादविनाशपरिक्षिपेत्यादिनावुञ् ॥

विनाशी । त्रि॰ अनित्ये । देशकालवस्त्वात्मकत्रिविधपरिच्छेदवति ॥ विनष्टुंशीलमस्य । णिनि : ॥ विनाशकरणशीले ॥

विनाशोन्मुख : । त्रि॰ पक्के ॥ नाशोद्यते ॥ विनशनंविनाश : । भावेघञ् । उन्नतंमुखमारम्भोऽस्य । विनाशेउन्मुख : ॥

विनासक : । त्रि॰ अनासिके । गतनासिके ॥ विगतानासायस्यस : ॥

विनाह : । पुं॰ कूपाननपिधानके ॥ आच्छादने । वलशब्देतिघञ् ॥

विनिगमकः । चि॰ विशेषेणनितरां बोधके । ज्ञापके ॥

विनिगमना । स्त्री॰ एकतरपक्षपातिन्यायुक्तौ । वैकल्पिकोभयस्तुन्येकस्मिन्नवधारणायुक्तौ ॥

विनिद्रः । चि॰ उन्मीलिते । विकसिते । स्फुटिते । निद्रारहिते ॥ विगतानिद्राऽस्य ॥

विनिद्रत्वम् । न॰ निद्रारहितत्वे ॥ प्रबोधे ॥

विनिनीषुः । चि॰ विनेतुमिच्छौ ॥

विनिपातः । पुं॰ निपाते । अपपाते । दैवादिव्यसने । दैविकानर्थे । विशिष्टोनिपातः ॥ अपमाने ॥

विनिमयः । पुं॰ परिदाने । प्रतिदाने ॥ व्यतिहारे ॥ व्यत्यये । परस्मिन्नन्याऽभासे ॥ बन्धके ॥ यथा । विक्रयेगोविनिमयैर्दत्त्वागोमांसखादकः । व्रतंचान्द्रायणंकुर्याद्वधेसाक्षाद्वधोभवेत् ॥ इतिगोभिलवचनम् ॥ विशेषेणनिमीयते । मीञ् हिंसायाम् । एरच् ॥

विनियोगः । पुं॰ विनियोजने ॥ अनेनेदन्तुकर्त्तव्यंविनियोगः प्रकीर्त्तितः ॥ विशिष्टोनियोगः ॥ विभजने ॥ विनियोगोऽर्पणंफले॰इ॰ हेमचन्द्रः ॥

विनियोगविधिः । पुं॰ अङ्गप्रधानसम्बन्धबोधकेविधौ ॥ यथा । दध्नाजुहोतीति । सहितृतीयाप्रतिपन्नाङ्गभावस्यदध्नोहोमसंबन्धंविधत्ते॰द ध्नाहोमंभावयेदिति । गुणविधौच धात्वर्थस्यसाध्यत्वं नैवान्वयः । क्वचिदाश्रयस्येनापि । यथादध्नेन्द्रियकामस्यजुहुयादित्यत्र॰दधिकरणकमिन्द्रियंभावयेत् । तत्रकिन्निष्ठमित्याकाङ्क्षायां॰सन्निधिप्राप्तहोमआश्रयत्वेनान्वेति । एतस्य धेः सहकारिभूतानि॰श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणिषट्प्रमाणानि । एतत्सहकृतेनानेनविधिनाङ्गत्वंपरोद्देशसाध्यप्रवृत्तकृतिसाध्यत्वरूपंपाराार्थ्यापरपर्यायं ज्ञाप्यते ॥

विनियोजितः । चि॰ प्रवर्त्तिते । विनियुक्ते ॥

विनिर्णीतः । चि॰ विचार्यस्थापिते ॥ विशेषेणनिर्णीतः ॥

विनिर्देश्यः । चि॰ वक्तव्ये ॥

विनिर्धूतः । चि॰ दूरस्थयाचलिते ॥ विशेषेणनितरांकम्पिते ॥ समुन्मूलिते ॥ परित्यक्ते ॥

विनिर्भयः । पुं॰ साध्यगणविशेषे । चि॰भयरहिते ॥

विनिर्मुक्तः । चि॰ वियुक्ते ॥

विनिर्मोकः । पुं॰ विनिर्मुक्तौ ॥

विनिवृत्तः । चि॰ निष्पन्ने । समाप्ते ॥

विनिवृत्त : । मद्वत्तविशिष्टे । निर स्थे । शान्ते ॥

विनिवृत्तकाम : । त्रि॰ विवेकवैराग्य द्वाराव्यक्तसर्वकर्मणि ॥ विशेषेणनि वृत्त : कामोऽस्य ॥

विनिवेशित : । त्रि॰ प्रतिष्ठापिते । स्थापिते ॥

विनिश्चित: । त्रि॰ प्रमाणतोनिर्णीते ॥

विनिष्कल : । त्रि॰ निरवयवे ॥ विशे षेणनिर्गता : कला : यस्मा त् ॥

विनिष्ट्त : । त्रि॰ विनष्टे ॥

विनीत : । पुं॰ सुशिक्षाश्वे । साधुवा हिनि ॥ वणिजि ॥ दमनकवृक्षे शिक्षितवृषभादौ ॥ त्रि॰ जितेन्द्रि ये । अपनीते । हृते । निभृते । विनयान्विते । अनुद्धते । नम्रे । शिक्षिते ॥ क्षिप्ते । कृतदण्डे ॥ व्यनायि॰ विनीयतेस्मवा । णीञ् प्रापणे । क्त : ॥

विनीतक: । पुं॰ दमनकवृक्षे ॥ पुं॰ न॰ वैनीतके । परम्पराबाहने ॥

विनीय : । पुं॰ पिष्टयौषधिविशेषे । कल्के ॥ कपटे ॥ विनीयतेसिद्धिं प्राप्यत ॥ णीञ्॰ । निपूर्वविनीये तिक्यप् पपे ॥

विनीयमान । त्रि॰ शिक्ष्यमाणे ॥

विनेता । पुं॰ देशके । नियामके ॥ राजनि । द्व॰ मे॰ ॥ विशिष्टोने ता ॥ देशिते ॥ द्व॰ हे॰ चन्द्र: ॥

विनेय : । त्रि॰ नेतव्ये ॥ विनेतुंयो ग्य: । णीञ्॰ । अचोयत् ॥ दण्ड्ये ॥

विनेयक : । पुं॰ आदेशके ॥ राज्ञि ॥

विनोक्ति : । स्त्री॰ अलङ्कारविशेषे ॥ यथा । विनोक्तिश्चेद्विनाकिञ्चित् प्रस्तुतंहीनमुच्यते । विद्याहृद्यापि सावद्याविनाविनयसम्पदम् ॥ कि ञ्चित्॰ विनाप्रस्तुतंवर्ण्यं हीनंदुष्टमु च्यतेचेत्तदाविनोक्तिर्नामालङ्कार इत्यर्थ : ॥ प्रकारान्तरमपि । तत्र किञ्चिद्विनारम्यंविनोक्ति : सापि कथ्यते । विनाखलैर्विभात्येषाराज न्द्रभवत : सभा ॥ तत्प्रस्तुतंकि ञ्चिद्विनारम्यञ्चेत्सापिविनोक्तिर्ना मालङ्कार : कथ्यते ॥

विनोद : । पुं॰ क्रीडायाम् ॥ यथा । विनोदायचैतन्यमेकंविभज्यद्विधादे वि॰ जीवस्वरूपेतिनाम्ना । शिवस्या जीवत्त्वमापाद्यत्वंपुनर्जीवमेनंशि वंवाकरोषीति ॥ कुतूहले ॥ चम त्कारविशेषे ॥ अपनोदे ॥ राजगृह विशेषे ॥ आलिङ्गनविशेषे ॥ तल्ल क्षणंयथा । नायकोनायिकायादक्षि णपादंवामपादवाममध्यदेशे॰ स्वद क्षिणपादंवामपादेवा॰ नायिकामध्य देशेनिधाय॰ वक्षसिवक्ष : ॰ कोष्ठेको ष्ठंदत्त्वायदाश्लिष्यतितदितिकामशा स्त्रम् ॥

विनोदित : । त्रि॰ अपनीते ॥ सञ्जा

रविभेदे ॥ तारकादित्वादितच् ॥
बिन्दुः। पुं॰ विजयाख्ये मुहूर्त्ते ॥ बिन्दति। विदुलाभे। अनुपसर्गाल्लिम्पविन्दधारीत्यादिनाशः। शेमुचादीनामितिनुम् ॥
बिन्दुः। पुं॰ जलकणायाम्। विप्रुषि। पृषते ॥ दन्तक्षतान्तरे ॥ भ्रुवोर्मध्ये ॥ रूपकार्थप्रकृतौ ॥ लवे ॥ अनुस्वारे ॥ नादोद्भवे ॥ त्रि॰ वेदितरि। ज्ञातरि ॥ विज्ञानशीले ॥ बिन्दति॰ बिदिरवयवे। बाहुलकादुः। पवर्गीयादिः ॥ यद्वा। वेत्तितच्छीलः। बिन्दुरिच्छुरितिसाधुः ॥ दातरि ॥ वेदितरि ॥
बिन्दुचित्रकः। पुं॰ मृगविशेषे ॥ बिन्दुभिश्चित्रः॰ सएवकः ॥
बिन्दुजालम्। न॰ बिन्दुजालके ॥
बिन्दुजालकम्। न॰ तारुण्याज्जायमानेगजमुखादिस्थबिन्दुसमूहे। पद्मके ॥ बिन्दूनांजालकमिव ॥
बिन्दुतन्त्रः। पुं॰ शारिफलके ॥ तुरङ्गके ॥
बिन्दुपत्रः। पुं॰ भूर्जवृक्षे ॥
बिन्दुरेखकः। पुं॰ पक्षिविशेषे ॥
बिन्दुसरः। न॰ हैमवते॰ सरोविशेषे ॥ यथा। अथ्युत्तरेणकैलासंशिवंसर्वौषधिंगिरिम्। गौरन्तुपर्वतंश्रेष्ठं हरितालमयंप्रति ॥ हिरण्यशृङ्गः॰ सुमहान्दिव्यौषधमयोगिरिः। तस्यपादेमहद्दिव्यंसरः काञ्चनसन्निभम् ॥ रम्यंबिन्दुसरोनामयत्रराजाभगीरथः। गङ्गार्थेसतुराजर्षिरुवासबहुलाः समाः ॥ दिवंयास्यतिमेपूर्वेगङ्गातोयपरिप्लुताः। तत्रत्रिपथगादेवीप्रथमन्तुप्रतिष्ठिता ॥ सोमपादात्प्रसूतासासप्तधाप्रतिभज्यते। यूपामणिमयास्तत्रचितयश्चहिरण्मयाः ॥ तत्रेष्ट्वाक्रतुभिः सिद्धः शक्रः सुरगणैः सह। दिव्यच्छायापथस्तत्रनक्षत्राणान्तुमण्डलम् ॥ दृश्यतेभास्वरारात्रौदेवीत्रिपथगातुसा। अन्तरीक्षंदिवञ्चैवभावयित्वाभुवंगता ॥ भवस्योत्तमाङ्गेपतितासंरुद्धायोगमायया। तस्यायेबिन्दवः केचित्क्रुद्धायाः पतिताभुवि ॥ कृतस्तुतैर्बिन्दुसरस्ततोबिन्दुसरः स्मृतम् ॥ इतिमात्स्ये १०१ अध्यायः ॥
विन्ध्य.। पुं॰ जलयालके। विन्ध्याचले ॥ व्याधे ॥ विरुद्धंध्यायति। ध्यैचिन्तायाम्। आतश्चोपसर्गइतिकः पृषोदरादिः ॥ यद्वा। विद्ध्यते। जिद्धशौदौर्गेण्यत्। अन्तर्भावितण्यर्थः। शकन्ध्वादिः। अघन्यादिर्वा ॥ नर्मदासुरसाद्याश्चनद्योविन्ध्यविनिर्गताः ॥
विन्ध्यकूटः। पुं॰ अगस्त्यमुनौ ॥ विन्ध्याद्रिशृङ्गे ॥

विन्ध्यवासिदेश: । पुं० विन्ध्यस्थदेशेषु ॥ यथा । मालवाश्च करूषाश्च मेकलाश्चोत्कलैः सह । उत्तमार्णा दशार्णाश्च भोजाः किष्किन्धकैः सह ॥ तोषलाः कोशलाश्चैव त्रैपुरा वैदिकास्तथा । तुमुरास्तुम्बुराश्चैव पटवा नैषधैः सह । अनूपास्तुण्डिकेराश्च वीतिहोत्रा अवन्तयः । एते जनपदाः ख्याता विन्ध्यपृष्ठनिवासिनः ॥ इति मत्स्यपुराणम् ॥

विन्ध्यवासी पुं० व्याडिमुनौ ॥

विन्ध्यवासिनी । स्त्री० विन्ध्याचलनिवासिन्यां दुर्गायाम् ॥ विन्ध्ये वसतीयं देवार्थं इतो घोरो महाभटः । यदा पितत्र सा वासा तेन सा विन्ध्यवासिनी ॥ इति देवीपुराणम् ॥

विन्ध्यस्थ: । पुं० व्याडिमुनौ ॥ त्रि० विन्ध्याचलस्थिते ॥ विन्ध्ये तिष्ठति स्था० । क: ॥

विन्ध्या । स्त्री० लवल्याम् ॥ त्रुटौ । सूक्ष्मैलायाम् ॥

विन्ध्याचलनिवासिनी । स्त्री० विन्ध्यवासिन्याम् ॥ नन्दगोपगृहे जाता यशोदागर्भसम्भवा । ततस्तौ नाशयिष्यामि विन्ध्याचलनिवासिनी ॥ विन्ध्याचले तथापि गङ्गातीरे निवासिनीति बोध्यम् । अयमवतारो भगवत्या जात एवेति पुराणे प्रसिद्धम् ॥

विन्ध्यावली । स्त्री० बलिपत्न्याम् । बाणराजमातरि ॥

विन्ध्यावलीपुत्र: । पुं० बाणासुरे ॥

विन्ध्यावलीसुत: । पुं० बाणराजे ॥

विन्न: । त्रि० विचारिते । लब्धे ॥ स्थिते ॥ ज्ञाते । विद्यते स्म । विद् विचारणे । क्त: । नुदविदेति वा नत्वम् ॥

विन्यस्त: । त्रि० क्रमेण स्थापिते । रचिते ॥ कृतविन्यासे ॥ विशिष्टे न्यस्ते ॥ विन्यस्यते स्म । अस० । क्त: ॥

विन्याक: । पुं० छवाके ॥

विन्यास: । पुं० विभज्य स्थापने ॥ यथा । गृहेषु मणिविन्यासो विधेयो नवद्रोणवत् । शिशुस्तोरकन्यासो विधेयः सद्मोपरि ॥ तेन सर्वाभिमध्यस्थितिः चरिष्टोऽनिमषीभुजामितियुक्तिकल्पतरुः । विन्यसनम् । असु क्षेपणे । विनिपूर्व: । ततो घञ् ॥ सन्निवेशे ॥ विशिष्टो न्यास: । रचने ॥

विपक्ष: । पुं० रिपौ । द्विषि । प्रतिवादिनि ॥ अर्थी ॥ स्वाभाववति । निश्चितसाध्याभाववति ॥ यथा० धूमवत्त्वे हेतौ ह्रद: ॥ विरुद्ध: पक्षोऽस्य । विविध: पक्षोऽस्य वा ॥

विपक्षिका । स्त्री० विपञ्च्याम् ॥

विपञ्ची । स्त्री वीणायाम् । वल्लक्याम्

म् ॥ विपञ्चीषु सप्तस्वरान् वादयन्त्यस्तद्वारिगायन्तिगन्धर्वकन्या : । चक्षुं सावधानेनचित्तेनमात: समाकर्णयत्वं मयाप्रार्थितासि विपं चपतिविस्तारयतिशब्दं । पचि विस्तारे । ग्यन्तादच् । गौरादि : । केलौ । लीलायाम् ॥

विपण : । पुं॰ विक्रये । विक्रयक्रियायाम् ॥ विपणनम् । पणव्यवहारे । घञ् । संज्ञापूर्वकत्वान्नवृद्धि: । खनोघचेतिघोवा ॥

विपणि : । पुं॰ स्त्री॰ विक्रयार्थप्रसारितनानाद्रव्यायांवणिग्वीथ्याम् । पण्यवीथिकायाम् । वणिज् व्यवहार॰ बजार॰ वाणिजावीथी॰ इतिच भाषाप्रसिद्धायाम् । पण्यवीथ्याम् । वणिजांविक्रयस्थाने ॥ विपण्यते॰ ऽस्यांवा । पण॰ । सर्वधातुभ्यइन् । विपणन्ति ऽत्रवा । इकृकृष्यादिभ्य: ॥

विपणी । पुं॰ वणिजि । विपणोव्यवहार : सोऽस्यास्ति । इनि : ॥ बुध भेदे ॥

विपणी । स्त्री॰ पण्यवीथ्याम् । कृदिकारादितिङीष् ॥

विपण्यु : । त्रि॰ विगतव्यवहारे ॥

विपति : । पुं॰ खगेश्वरे । गरुडे ।

विपत्ति : । स्त्री॰ यातनायाम् ॥ आपदि । विपदि ॥ मरणे । विनाशे । यथा । यस्मिन्राशिगतेभानौविपत्तिंयान्तिमानवा : । तेषांतत्रैवकर्त्तव्यापिण्डदानोदकक्रिया ॥ विपदनमनयावा । पदगतौ । स्त्रियांक्तिन् ॥ पुं॰ विशिष्टपदातौ ।

विपथ : । पुं॰ निन्दितपथि । व्यध्वे । दुरध्वे । कदध्वनि । कापथे ॥ विरुद्ध : पन्था : । प्रादयोगताद्यर्थइतिसमास : । ऋक्पूरित्य : ॥

विपत् ॰ द् । स्त्री॰ विपत्तौ ॥ विपदनमनयावा । सम्पदादित्वात्क्विप् ॥ तृतीयतारायाम् ॥

विपदम् । न॰ नभसि ॥ वीनांवयसां पदंविहारस्थानम् ॥ त्रि॰ विगतप्रतिष्ठे ॥

विपदा । स्त्री॰ विपदि ॥

विपन्न : । पुं॰ भुजङ्गमे ॥ त्रि॰ विपदाक्रान्ते ॥ नष्टे ॥ विपद्यतेस्म । पद॰ । क्त : । नत्वम् ॥

विपरिणाम : । पुं॰ विशिष्टे : परिणामे ॥

विपरिश्रम : । पुं॰ आयासेसत्यपिश्रमरहिते ॥

विपरीत : । त्रि॰ तम : प्रकाशावित्वान्योन्यव्याहतरूपे । प्रतिकूले । उलटा॰ इ॰ भा॰ ॥ यथा॰ धर्मविपरीतोऽधर्म : ॥ पुं॰ रतिबन्धविशेषे ॥ यथा । पादमेकमुरौकृत्वाद्वितीयंकटिसंस्थितम् । नारीषुरमतेकामीविपरीतस्तुबन्धक : ॥ अपिच

। पादमेकमुरीकृत्वा द्वितीयस्कन्धसंस्थितम । कामिन्याः कामयेत्कामी बन्धः स्याद्विपरीतकः ॥

विपरीतभावना । स्त्री॰ अतस्मिंस्तद्बुद्धौ ॥ यथाथावस्तैततत्त्वं हित्वाऽन्यथात्त्वधीः । विपरीताभावना स्यात्पिचादावरिधीर्यथा ॥

विपरीता । स्त्री॰ कामुक्याम् ॥

विपर्ण : । त्रि॰ पर्णरहिते ॥

विपर्णक : । पुं॰ पलाशवृक्षे ॥ त्रि॰ पत्ररहिते ॥

विपर्य्यय : । पुं॰ व्यतिक्रमे । व्यत्यासे । विपर्यासे । व्यत्यये ॥ मिथ्याज्ञाने ॥ यथाशुक्तं विन्दुरजतमिति ॥ अन्यथाभावे । देहादिष्वात्माभिमानलक्षणे ॥ यथार्थानिश्चये । अतत्त्वज्ञाने ॥ विपर्ययाद्दिष्यतेबन्धः । अविद्यास्मितारागद्वेषाभिनिवेशाः यथासङ्ख्यंतमोमोहमहामोहतामिस्रान्धतामिस्रसञ्ज्ञकाः पञ्चविपर्ययभेदाभवन्ति ॥ लक्षणन्तुयथा । किञ्चित्सामान्यतोऽन्यत्रमतिरन्याविपर्ययः । किञ्चित्साधारण्यादन्यस्मिन्नन्यादृशीबुद्धिर्विपर्ययः । मरुमरीचिकाखिवजलावगतिः ॥ अपिच । विपर्ययस्तमोयोनिर्मिथ्यारूपतयासच । सामान्यमात्रकाभासात्सत्त्वात्मेतिविनिश्चितः ॥ विपर्ययस्यमिथ्यारूपत्वात्तमः प्रभवत्वम्॰ सचविपर्ययः साधारण्यमात्रप्रथनात्प्रकाशरूपः सत्त्वात्मकोऽपिनिश्चितः ॥ विपर्ययणम् । इणगतौ । एरच् ॥

विपर्य्यस्त : । त्रि॰ मिथ्याज्ञानविशिष्टे ॥ विपरीते ॥

विपर्य्याय : । पुं॰ विपरीतमयने । अन्यथाऽन्यरूपग्रहणे ॥

विपर्य्यास : । पुं॰ विपर्यये । व्यत्यये । व्यतिक्रमे । अतस्मिंस्तद्बुद्धौ । अविवेके ॥ विपर्य्यसनम् । असु॰ । घञ् ॥

विपव्य : । त्रि॰ शोधनीये ॥

विपश्चित् । त्रि॰ विदुषि । दोषज्ञे । पण्डिते । अत्यन्तविवेकिनि । मेधाविनि ॥ सर्वज्ञे॰निरस्तभेदे॰अविपरिश्रुतचैतन्यस्वभावे ॥ परमात्मनि ॥ विप्रकृष्टंनिश्चिनोति॰चेतति॰चिन्तयतिवा । पृषोदरादिः ॥

विपाक : । पुं॰ पचने ॥ स्वादे ॥ कर्मणोविसदृशफले ॥ कर्मणः परिणामे । दुर्गतौ ॥ जात्यायुर्भोगात्मकेकर्मफले ॥ पचनंपाकः विशिष्टपाकः विरुद्धः पाकोऽस्यवा ॥ विपच्यतेवा । घञ् ॥ विपाककाटुयत्कर्मनतच्छंसन्तिपण्डिताः ॥ जाठरेणाग्निनायोगात्यदुदेतिरसान्तरम् । रसानांपरिणामान्तेसविपाकइति

स्मृतद्वतिसुश्रुत : ॥ अपिच । मिष्ट : कटुश्चमधुरममूलोऽम्लंपच्यते रस : । कटुतिक्तकषायाणांपाक : स्यात्प्रायश : कटु : ॥ तथा चवाग्भट : । त्रिधारसानांपाक : स्यात्स्वाद्वम्लकटुकात्मक : । प्राय : पदेन• ब्रीहि : स्वादुरम्लविपाक : शिवाकषायामधुपाका । शुण्ठीकटुकमधुरपाकेत्यादि : ॥ विपाकानांगुणायथा । स्वेष्मकृन्मधुर : पाकोवातपित्तहरोमत : । अम्लस्तुकुरुतेपित्तंवातश्लेष्मगदापह : ॥ कटु : करोतिपचनंकफंपित्तञ्चनाशयेत् । विशेषएषरसतो विपाकानांनिदर्शित : ॥

विपाचनम् । न• नरके ॥

विपाट : । पुं• बाणे अस्त्रकाण्डके । शरे ॥ विपाटयति । पचाद्यच् ॥

विपाण्डु : । पुं• शुभ्रे ॥ अति शुभ्रे ॥ त्रि• तद्वति ॥

विपादिका । स्त्री• । पादस्फोटे । बिवाइ• इ• भा• ॥ प्रहेलिकायाम् ॥ वैपादिकंपाणिपादेस्फुटनंतीव्रवेदनम् । कण्डुमद्भि : सरागैश्चगण्डैरलसकंचितम् ॥ विपादिकावातश्लेष्मोद्भवेतिमाधव : । अयंकुष्ठरोग : ॥

विपाट् । स्त्री• विपाशायाम् ॥ पाशंविमोचयति । सत्यापपाशेत्यादिना• पाशान्मोचनद्दतिणिच् । क्विप्चेतिक्विप् ॥

विपाश : । त्रि• पाशरहिते ॥

विपाशा । स्त्री• नदीविशेषे । बिपाशि ॥ पाशंविमोचयति । सत्यापपाशेत्यादिना• पाशान्मोचनद्दतिणिच् । तत : पचाद्यच् । पुत्रशोकाद्वसिष्ठेपाशंबद्ध्वाप्रविष्टंवशिष्ठंपाशच्छेदात्विपाशितवतीविमुक्तपाशंकृतवतीतिविपाशा । अस्याजलस्यगुणायथा । शतद्रोर्विपाशायुज : सिन्धुनद्या : सुशीतंलघुस्वादुसर्वामयघ्नम् । जलंनिर्मलंदीपनंपाचनञ्चप्रदत्तेबलंबुद्धिमेधायुषञ्चेतिराजनिर्घण्ट : ॥

विपिनम् । न० अरण्ये । गहने । वने ॥ वेपन्तेऽत्र । टुवेपृकम्पने । वेपितुह्योर्ह्रस्वश्चेतीनन् ॥ विशेषिणापियत्यवबो । पिगतौ । बाहुलकान्नक् ॥

विपिनतिलकम् । न• अतिशक्वरीछन्द : प्रभेदे ॥ तल्लक्षणंयथा । विपिनतिलकंनसनरेफयुग्मैर्भवेत् । यथा । विपिनतिलकंविकसितंसिन्नागमेमधुकृतमदैर्मधुकरै : क्वणद्भिर्वृतम् । मलयमरुतारचितलास्यमालोकयन्व्रजयुवतिभिर्विहरतिस्मसुग्धोहरि : ॥

विपीड : । त्रि• निर्बाधे ॥

विपुल : । पुं॰ मेरुपश्चिमभूधरे । मेरोः स्थैर्यविधसायैष्टपुष्पतुर्षु विष्कम्भशैलेषु॰प्रतीच्यांविपुलोनाम विष्कम्भशैलोनीलवर्णः पद्माश तसहस्रयोजनोच्छ्रायोस्ति॰यथयोज नसहस्रोन्नतिमानश्वत्थपादपोस्ति ॥ सुमेरौ ॥ हिमाचले ॥ त्रि॰पृथुले । विशाले ॥ अगाधे । दक्षिणपश्चिमो त्तरदोरन्ध्रे ॥ विपोलति । पुलमह त्वे । इगुपधेतिकः ॥ विशिष्टपुलके ॥

विपुलपुलिना । स्त्री॰ नद्याम् ॥

विपुलरस : । पुं॰ इक्षौ ॥

विपुला । स्त्री॰ धात्र्याम् । क्षितौ ॥ आर्याप्रभेदे ॥ यथा । पथ्याविपुला चपलामुखचपलजघनचपलाश्च । गीत्युपगीत्युद्गीतयआर्यागीतिश्चन वधार्या ॥ संलङ्घ्यगणत्रयमादिमं शकलयोर्द्वयोर्भवतिपादः । यस्या स्तांपिङ्गलनागोविपुलामितिसमा ख्याति ॥ पुंसांकालिकालव्यालह तानांनास्त्यपद्दतिरन्यापि । वीर्य विपुलामुखेचेत्स्यादुगोविन्दाख्यम न्त्रोस्ति ॥

विपुलांस : । त्रि॰ मांसलोन्नतभुज शिरस्के ॥

विपुलाश्रवा । स्त्री॰ गृहकुमार्याम् ॥

विपूय : । पुं॰ रज्ज्वादिकरणाय शोधयितव्ये॰ मुञ्जे ॥ विपूयते । पूञ्पवने । विपूयविनीयेतिक्य प् । मुञ्जे ॥ यथा । वसानां वल्कलेशुद्धैर्विपूयैः कृतमेखला म् । धामामञ्जनपिण्डाभांददर्श ऋ भीमजिनान्तरामितिभट्टिः ॥

विपोथित : । त्रि॰ आघातेनाधः पातिते ॥ आमर्दिते ॥

विप्र : । पुं॰ ब्राह्मणे ॥ तल्लक्षणं यथा । जन्मनाब्राह्मणोज्ञेयः संस्कारैर्द्विजउच्यते । विद्ययाया तिविप्रत्वंत्रिभिःश्रोत्रियलक्षणमि तिप्रायश्चित्तविवेकः ॥ विशेषेण प्राति पूरयतिषट्कर्माणि । प्रा पूर्तौ । आतश्चोपसर्गेइतिकः ॥ उप्यतेधर्मबीजमत्रवा । डुवप्॰ ऋज्रेन्द्रेतिसाधुः ॥ क्षिपातिवा॰ विपतिवा । विपक्षेपे ॥ अश्व त्थे ॥

विप्रकर्ष : । पुं॰ विशेषे ॥ विशि ष्टः प्रकर्षः ॥

विप्रकार : । पुं॰ अपकारे । निकारे ॥ विप्रकरणम् । कृञोभावेघञ् ॥ तिरस्कारे ॥

विप्रकाष्ठम् । न॰ तूलवृक्षे ॥

विप्रकृत : । त्रि॰ तिरस्कृते । निकृते । यस्यापकारः कृतस्तस्मिन् ॥ विप्राकारि । क्तः ॥ वि प्रेणाकृते ॥

विप्रकृति : । स्त्री॰ विप्रकारे ।

विप्रक्षत्रम् । न॰ ब्राह्मणक्षत्रियौ ॥

यथा । अध्यापनञ्चाध्ययनञ्चयाजनं दानंद्विजेस्युर्यजनंप्रतिग्रह : । कर्माणिषड्‌यस्याप्रवर्गमेत्रिकर्मवानध्ययनंतथेतिराट् ॥ वैश्य : सदाप्रापयिकोद्विजन्माद्विजन्मसेवारतिरैतदीयम् । कर्मेत्यऽकृत्यव्यवहारआनिकर्माण्यनेकान्यपरान्यजानाम् ॥ यद्वर्णकर्माणितदेवकालेसंसाधितान्येवहियन्तिसिद्धिम् । ततस्त्ववर्णव्यवहारकालंनयेन्मनीषीयुगपन्नयर्द्धिम् ॥ अथविप्रादीनांस्वभावकृत्यमाह । शमोदम : सत्यमथार्जवंचमाशौचंतपोज्ञानकथामराचनम् । तीर्थंतथास्तिक्यमभिप्रसन्नति : स्वभावकर्मायजनेर्मखव्रतम् ॥ शौर्यंबलंधैर्यंधृतिर्धृतिर्मृधंविद्यासुदीप्तेश्वरतापवर्जनम् । क्षमाभृत : कर्मनिसर्गजंविशोवाणिज्यगोजीवनकर्षणन्त्विति ॥ द्विजातिसेवावनिदेवताचयाधर्मोविधि : शूद्रनिसर्गकर्मच । स्वभावकर्मप्रविहाययेोन्यथास्वयञ्चरेत्सोम्यजकर्मनर्मभाक् ॥ इतिकालिदास : ॥

विप्रकृष्ट : )
विप्रकृष्टक : ) त्रि॰ दूरे ॥ विप्रकृष्यतेस्म । कृषि : क्त : । स्वार्थेकनिविप्रकृष्टकोपि ॥

विप्रचित्ति : । पुं॰ दनोगर्भेकश्यपाज्जातेऽसुरविशेषे ॥

विप्रतिपत्ति : स्त्री॰ विरुद्धकोटिद्वयोपस्थापकेशब्दे ॥ विरुद्धाप्रतिपत्ति : ॥ विरोधे ॥ विकृतौ ॥

विप्रतिपन्न : । त्रि॰ विरुद्धतयावगते ॥

विप्रतिषिद्ध : । त्रि॰ निषिद्धे ॥

विप्रतिषेध : । पुं॰ तुल्यबलविरोधे ॥ परस्परविरोधे ॥ विप्रतिपूर्वात्कर्मव्यतिहारेवर्त्तमानात्सेधतेर्घञ् ॥

विप्रतिसार : । पुं॰ पश्चात्तापे ॥ विप्रतिसरणम् । सृगतौ । घञ् । उपसर्गस्यघञीतिपाक्षिकोदीर्घाभाव: ॥

विप्रतीसार : । पुं॰ पश्चात्तापे । अनुतापे । कौकृत्ये ॥ अनुशये ॥ रुषि । रोषे ॥ विप्रतिसरणम् । सृ॰ । घञ् । उपसर्गस्यघञीतिदीर्घ : ॥

विप्रदेह: । पुं॰ फलमूलादिशुष्कद्रव्ये ॥ ब्राह्मणतनौ ॥ विगत : प्रदेहो॰ विशेषेण प्रकृष्टोवादेहोस्य । विप्रस्यवादेह : ॥

विप्रप्रिय : । पुं॰ पलाशे ॥ विप्राणां प्रिय : ॥ विष्णौ । श्रीरामचन्द्रे ॥ त्रि॰ ब्राह्मणवल्लभे ॥ विप्रा : प्रियायस्य स : ॥

विप्रदास : । पुं॰ कायस्थे । मसीशे ॥

विप्रयाणम् । न॰ पलायने ॥

विप्रयुक्त : । त्रि॰ विभिन्ने । विश्लिष्टे ॥

विप्रयोग : । पुं॰ विरहे ॥ ब्राह्मणै : सहसङ्गमे ॥ विप्रयोजनम् । युजिर् योगे । घञ् ॥ विरुद्ध : प्रयोगोवा ॥ विशेषेणप्रकृष्टोवायोग : ॥ विप्राणांवायोग : ॥ विप्रलम्भे ॥

विरहोविसम्वादे।वीतिस्वामी ॥ रागिणोर्विच्छेदे ॥ इतिसुभूति : ॥

विप्रलब्ध : । त्रि॰ वञ्चिते ॥ विप्रलभ्यतेस्म । डुलभष्प्राप्तौ । क्त : ॥

विप्रलब्धा । स्त्री॰ स्वीयादिनायिकाभेदे ॥ सङ्केतनिकेतेप्रियमनवलोक्य समाकुलहृदयाविप्रलब्धे तिलक्षणम् ॥

विप्रलब्धा । त्रि॰ प्रतारके ॥

विप्रलम्भ : । पुं॰ विसंवादे । अङ्गीकृतासम्पादने ॥ वञ्चने ॥ वियोगे । विरहे । रागिणोर्वियोजने ॥ विशेषेणप्रलम्भनम् । डुलभष् प्राप्तौ । घञ् । उपसर्गादितिनुम् ॥ विप्रलब्धि : । लभेर्घञ् वा ॥

विप्रलम्भक : । पुं॰ मिथ्यावचनै : परप्रवञ्चके । ठग१इ॰भा॰प्र॰ ॥

विप्रलाप : । पुं॰ विरोधोक्तौ । अन्योन्यविरुद्धवचने ॥ यथा॰एकोब्रूते॰ आगताकल्याणीति॰अन्योब्रूतेनहीति । तथाभ्युदाजहारसर्वानन्द : । एक:स्वमन्मथ सरोजमवैतिवक्त्रमन्य : सुधाकिरणबिम्बमदोमृगाक्ष्या: । यूनोर्मुहुर्विवदतोर्वदनेनभ्रु : सिद्धान्तयन्मधुपराविगतागतानीति ॥ विरुद्ध : प्रलाप : ॥ अनर्थकवाक्ये । अपार्थवचने ॥

विप्रलिप्सा । स्त्री॰ वञ्चनेच्छायाम् ॥

विप्रलिप्सु : । त्रि॰ वञ्चके ॥

विप्रलुम्पक : । त्रि॰ अत्याग्रेनधनयाहिणि ॥

विप्रलोभी । पुं॰ अशोकपादपे । किङ्किराते ॥

विप्रवसित : । त्रि॰ कृतदूरदेशगमने ॥

विप्रश्निका । स्त्री॰ अनागतवार्तादिनाशुभाशुभनिरूपिण्याम् । ईक्षणिकायाम् । दैवज्ञायाम् ॥ विविध : प्रश्नोस्त्यस्या : । ठन् ॥

विप्रसृत : । त्रि॰ विक्षिप्ते ॥ विप्रसरतिस्म । सृगतौ । गत्यर्थेति- क्त : ॥

विप्रिय : । पुं॰ अपराधे । आगसि । त्रि॰ अप्रिये ॥

विप्रियकृत् । त्रि॰ शठे ॥

विप्रुट् । स्त्री॰ बिन्दौ । जलकणे ॥ प्रुषुदाहे । सम्पदादित्वाद्भावेक्विप् । विगतारुड्वाप्रुट्दाहोऽस्मात् ॥

विप्लव : । पुं॰ डिम्बे । धाकडलुण्टनादौ ॥ अयस्त्वकलहे ॥ विप्लवनम् । प्लुङ् गतौ । ऋदोरप् ॥ परचक्रादिभये ॥ राष्ट्राद्युपद्रवे ॥ नाशे ॥ मतिसम्मोहे ॥

विप्लाव : । पुं॰ अश्वस्यप्लुतगतौ ॥

विप्लुत : । त्रि॰ व्यसनार्ते । विप्लवे ॥ खण्डिते ॥ विप्लवनम् । प्लुङ् । क्त : ॥

विप्लुताक्ष : । त्रि॰ अश्रुपूर्णनयने ॥

विप्रुति : । स्त्री॰ स्वभावच्युतौ ॥
विप्रुष्ट : । त्रि॰ निर्दग्धे । त्रिशेषे षप्रुष्ट : ।
विफल : । त्रि॰ निरर्थके । मोघे ॥ विगतंफलंयस्य ॥
विफला । स्त्री॰ केतक्याम् ॥ ऋतुहीनायाम् ॥
विवध : । पुं॰ पर्याहारे । उभयतोबद्धशिक्येस्कन्धवाह्यकाष्ठे ॥ अध्वनि ॥ भारे ॥ विगतोवधोऽस्मात् ॥
विवधिक : । त्रि॰ वैवधिके ॥ विवधेनहरति । विभाषाविवधादिति ष्ठन् । ङीषि॰विवधकी ॥
विबन्ध : । पुं॰ आनाहे । आध्माने । मूत्रादिरोधे ॥ अथास्यचिकित्सा । तुल्यकारणकार्यत्वादुदावर्त्तहरींक्रियाम् । अनाहेपिचकुर्वीतविशेषश्चाभिधीयते ॥ त्रिवृत्कृष्णाहरीतक्योद्विचतुष्पञ्चभागिका : । गुडेनतस्याबटिकाहरत्यानाहमुल्बणम् ॥ वर्त्तिस्त्रिकटुक सैन्धवसर्षपगृहधूमकुष्ठमदनफलै: । मधुनिगुडेवापक्वैर्निर्हिताख्याङ्गुष्ठपरिमाणा ॥ वर्त्तिरियंदृष्टफलाशनै : प्रणिहितागुदेघृताभ्यक्ते । आनाहोदावर्त्तौशमयतिजठरंतथागुल्मम् ॥ त्रिकटुकाद्यावर्त्तिर्भावप्रकाशे ॥ विबन्धनम् । बन्धबन्धने । घञ् ॥ कारकेघञ् ॥
विबाधा । स्त्री॰ विहेठने ॥
विविध : । त्रि॰ नानाप्रकारे ॥
विबुद्ध : । त्रि॰ तत्त्वसाक्षात्कारवति ।
विबुध : । पुं॰ ज्ञे । पण्डिते ॥ सुरे । देवे ॥ चन्द्रे ॥ विशिष्टोबोधोयस्य । विशेषणबुध्यतेनस्वपितीति वा । बुधअवगमने । इगुपधेतिक : ॥
विबुधान : । पुं॰ आचार्ये ॥ पण्डिते ॥ देवे ॥
विबुधानुग : । पुं॰ किन्नरादिषु ॥
विबुभूषु : । त्रि॰ विविधंभवितुमिच्छौ ॥
विबोध : । पुं॰ प्रबोधे ॥
विबोधनम् । न॰ प्रबोधने । जगावना॰ इ॰ भा॰ ॥
विभक्त : । त्रि॰ विभज्यस्थापिते । कृतविभागे ॥ विभिन्ने । परस्परव्यावृत्ते ॥ प्राप्तविभागे ॥ विभज्यतेस्म । भज॰ । कर्मणिक्त : ॥ विभक्ताभ्रातरइत्यत्र तु॰ विभक्तमेषामस्तीतिमत्वर्थीयोऽर्शआद्यजित्यच् । नतुकर्त्तरिक्त : । सकर्मकेभ्यस्तस्यविधानाभावात् ॥ अथवोत्तरपदलोपोद्रष्टव्य : । विभक्तधनाविभक्ता : । गम्यार्थस्याप्रयोगएवलोपोभिमत : । तेनविभक्ताभ्रा

तरुणस्य च धनस्य यद्विभक्तस्य तत्। भ्रातृभ्यो देयमिति ॥ विभक्तं पितुर्धने यस्तु स्वीयांशं प्रतिपादयेत्। पुनर्विभज्य तद्द्रव्यमप्राप्तांशाय दापयेत् ॥

विभक्तज:। पुं॰ विभागानन्तरं जाता पत्ये ॥ पुत्रे: सह विभक्तेनापि जायत स्वयमर्जितम्। विभक्तजस्य तत् सर्वमनीशा: पूर्वजा: स्मृता: ॥

विभक्ति:। स्त्री॰ विभागे ॥ सुप्तिङो: ॥ यथा। सङ्ख्याकव्याप्य सामान्यै: शक्तिमान्प्रत्ययस्तु य:। साविभक्तिर्द्विधाप्रोक्ता सुप्तिङ्चेति प्रभेदत: ॥ सङ्ख्याकावान्तरव्याप्यवच्छिन्नशक्तिमान्य: प्रत्यय: साविभक्ति:। सुप्तिङिति भेदात् सा द्विधेति शब्दशक्तिप्रकाशिका ॥ कारकशक्तौ ॥ विभज्यते प्रातिपदिकार्थोऽनया। क्तियां क्तिन् ॥

विभजनीय:। त्रि॰ विभाज्ये। विभागयोग्ये ॥ भज नार्हे ॥

विभज्य:। त्रि॰ विभक्तव्ये ॥ ऋहलोर्ण्यदिति प्राप्ते॰ विभजनविभज्योपपदे॰ इतितद्पवादोयन्निपात्यते। तेनविभाज्यमितिनभवति ॥

विभव:। पुं॰ राये। धने ऐश्वर्ये ॥ विभवति। भू॰। पचाद्यच् ॥ भिक्षाप्राणरक्षार्थं कन्या शीतनिवारणे। चपलाक्षिग्रवेभक्तिर्विभवे: किं प्रयोजनमितिस्थासिधर्मं: ॥ निवृत्तौ ॥ मोक्षे ॥ विगत: भवोयस्मिन् ॥ षष्टिवत्सरान्तर्गतद्वितीयवत्सरे। यथाभविष्ये भैरवउवाच। सुभिक्षंक्षेममारोग्यं सर्वव्याधिविवर्जिता:। प्रशान्तामानवास्तत्र बहुशस्यावसुन्धरा। हृष्टास्तुष्टाजना: सर्वेविभवेवत्सरानने ॥ २ ॥

विभवी। त्रि॰ ऐश्वर्यवति ॥ विभवोऽस्यास्ति ॥ इनि: ॥

विभा। स्त्री॰ शोभायाम् ॥ प्रकाशे ॥ किरणे ॥ उद्दीच्यांसोमस्यपुर्याम् ॥

विभाकर:। पुं॰ अग्नौ। वह्नौ ॥ सूर्ये। विभांकरोति। दिवाविभानिशेति॰ ट:॥ अर्कवृक्षे। चित्रकवृक्षे ॥

विभाग:। पुं॰ अंशे। भागे। विवेके। विविच्यप्रयोगे। संयोगनाशकेनवद्रव्यवृत्तिर्गुणे ॥ सत्वनिर्णयानुकूलव्यापारे ॥ विभज्यते॰ विभजनंवा। भज॰। भावेघञ् ॥

विभागी। त्रि॰ अंशिनि ॥ विभागोऽस्यास्ति। अतइनिठनाविती नि: ॥

विभाजित:। त्रि॰ विभागेनस्थापिते ॥

विभाज्यः । त्रि० विभजनीये । विभागयोग्ये ॥ विपूर्व्वाण्ण्यन्ताद्भजेरचो यत् ॥

विभाण्डकः । पुं० ऋष्यशृङ्गपितरि० मुनिविशेषे ॥

विभाण्डी । स्त्री० आवर्त्तकीलतायां ॥

विभान् । त्रि० भासमाने ॥ शत्रन्तः ॥

विभातम् । न० प्रभाते । प्रत्यूषे ॥ विभातुं प्रवृत्तम् । भा० । आदिकर्म्मणि क्तः ॥

विभातकम् । न० प्रत्यूषे ॥

विभावः । पुं० परिचये ॥ रसस्योद्दीपनादौ ॥ रत्यादीनां कारणेषु । ललनोद्यानादिष्वालम्बनोद्दीपनकारणेषु ॥

विभावनम् । न० विभावनायाम् ॥

विभावना । स्त्री० अलङ्कारविशेषे ॥ विभावनाविनापिस्यात्कारणं कार्यजन्मचेत् । अप्यलाक्षारसासिक्तं रक्तंतच्चरणद्वयम् ॥ अत्रलाक्षारसासेककारणाभावेपिरक्तिमाकथितः स्वाभाविकत्वेनविरोधपरिहारः ॥

विभावरी । स्त्री० तमस्विन्याम् । रजन्याम् । यामिन्याम् ॥ निशायाम् । हरिद्रायाम् ॥ कुट्टन्याम् ॥ वक्रयोषिति ॥ विवादवत्स्वगुरुष्ठायाम् ॥ विभातिनक्षत्रादिभिः । क्वनिप् । वनोरचेतिङीब्रौ ॥ मौखर्यनिरतस्त्रियाम् ॥ मेदावृक्षे ॥

विभावसुः । पुं० ग्रहपतौ । सूर्ये ॥ अर्कवृक्षे ॥ पावके ॥ हारभेदे ॥ चित्रकवृक्षे ॥ चन्द्रे ॥ विभाप्रभावसुधनंयस्य ॥ असुरविशेषे ॥ मणौ ॥

विभावितः । त्रि० अभ्यूहिते । ज्ञाते ॥ विचिन्तिते ॥ विशेषेणोत्पादिते ॥ विशेषेणप्रापिते ॥ विमिश्रयिते ॥ विशेषेणभावितः ॥

विभावि । त्रि० प्रभावसम्पन्ने ॥ विभावोस्यास्ति । इनिः ॥

विभाव्यः । त्रि० संलक्ष्ये ॥

विभाषा । स्त्री० विकल्पे ॥ विभाष्यते विकल्प्यते । भाषव्यक्तायांवाचि । गुरोश्चहलइत्यकारः । ततष्टाप् ॥

विभिन्नः । त्रि० मिश्रिते ॥ विदारिते ॥ विदीर्णे ॥ विभक्ते ॥ समालब्धे । परिभिन्ने ॥ विकसिते ॥

विभीतः । त्रि० विभीतके ॥ विगतंभीतंरोगभयमस्मात् ॥ त्रि० निर्भये ॥

विभीतकः । त्रि० कर्षफले । भूतवासे । कलिद्रुमे बहेडुकी । बहेडा० इतिख्याते ॥ विभीतकंस्वादुपाकंकषायंकफपित्तनुत् । उष्णवीर्यंहिमस्पर्शंभेदनंकासनाशनम् ॥ रूक्षंनेत्रहितंकेश्यंकृमिवैस्वर्यनाशनम् । विभीतमज्जातृट्छर्दिकफवातहरो

लघु : ॥ कषायोमदकृत्स्वाथधातम व्यापित्तद्भुवा ॥ विगतंभीतंरोगभयमस्मात् ॥ स्वार्थेक : स्त्रियां॰वा तेरितिङीष् ॥

विभीषण : । पुं॰ रावणानुजे ॥ नक्षत्र । त्रि॰भयानके ॥ विशेषेणभीषयते । ञिभीभये । नन्द्यादित्वाल्लु : । भियोहेतुभयेषुक् ॥ निरस्ताविद्ये ॥ विगतंभीषणंभयङ्करमज्ञानंयस्यस : ॥

विभीषिका । स्त्री॰ भयप्रदर्शने ॥ यथा । कृत्वाशस्त्रविभीषिकांकतिपयग्रामेषुदीना : प्रजा : ॰मधूक्तो विटजल्पितैरुपहता :चोणीभुजस्ते किल । विद्वांसोपिवयंपरंत्रिजगतां सर्गस्थितिव्यापदामीशस्तत्परिचर्ययामगणितोयैरेषनारायण :॥ इति शिल्हणमिश्र : ॥

विभु : । पुं॰ शङ्करे । सदाशिवे ॥ परमेश्वरे ॥ सर्वमूर्त्तसंयोगिनि । परममहत्त्ववति ॥ सतु॰आत्मादिर्यथा । आत्मेन्द्रियाद्यधिष्ठाताकरणंहिसकर्तृकम् । विभुर्बुद्ध्यादिगुणवान्बुद्धिस्तुद्विविधामतेतिभाषापरिच्छेद : । विभुरिति॰विभुत्त्वपरममहत्त्वमितिसिद्धान्तमुक्तावली ॥ कालखात्मदिशांसर्वगतत्त्वंपरमंमहदिति भाषापरिच्छेद : ॥ अर्हति ॥ नित्ये ॥ भृत्ये ॥ विष्णौ ॥ त्रि॰व्यापके ॥ प्रभौ ॥ सर्वगते । दृढे ब्रह्मणि ॥ यथा । निवृत्त : सर्वदु:खानामीशान : प्रभुरव्यय : । अद्वैत : सर्वभावानांदेवस्तुर्योविभु : स्मृतइत्यागम : ॥ विविधंभवतियस्मात् । भू॰ । विप्रसम्भाद्डुतिडु : ॥

विभुता । स्त्री॰ सामर्थ्ये ॥ भावेतल् ॥

विभूति : । स्त्री॰ भूतौ । ऐश्वर्ये । अणिमादिषु ॥ यथा । अणिमालघिमाप्राप्ति : प्राकाम्यंमहिमातथा । ईशिताववशिताचैवतथाकामावशायितेति ॥ भस्मनि ॥ शिवधृतभस्मनि ॥ वंशे ॥ विविधभावे । विशेषेणभवनम् । स्त्रियांक्तिन् ॥ विभूतिरिति कथनमन्यप्रादिनिवृत्त्यर्थम् ॥

विभूतिद्वादशी । स्त्री॰ विष्णोर्व्रतविशेषे ॥

विभूतिमत् । त्रि॰ ऐश्वर्ययुक्ते ॥ विभूतिर्विद्यतेऽस्य । मतुप् ॥

विभूमा । त्रि॰ परिपूर्णे ॥ विगताभूमायस्मात् । यमपेच्यान्यचमहत्त्वं नास्तीति ॥

विभूषणम् । न॰ अलङ्कारे । आभरणे ॥ विशिष्टंभूषणम् । विभूष्यतेऽनेनवा । भूषअलङ्कारे । ल्युट् ॥ पुं॰मञ्जुघोषे ॥

विभूषा । स्त्री॰ शोभायाम् ॥ आभरणे ॥

विभूषित : । त्रि॰ अलङ्कृते ॥

विभृत : । त्रि॰ धृते ॥ पुष्टे ॥
विभ्यत् । त्रि॰ भयंकुर्वति ॥
विभेद : । पुं॰ विशेषे ॥
विभ्रंस : । पुं॰ नाशे ॥
विभ्रत् । त्रि॰ धारणकर्त्तरि ॥ पोषणकर्त्तरि ॥
विभ्रम : । पुं॰ भ्रान्तौ ॥ संशये ॥ शोभायाम् ॥ भ्रमणे ॥ हावप्रभेदे। स्त्रीणांशृङ्गारभावजातक्रियाविशेषे॥ तथाहि । मदरागहर्षजनितविपर्यासोविभ्रम : । यथा । अन्यनिमित्तमानसादुत्थायान्यत्रगमनं॰प्रियाख्यकथामाक्षिप्यसख्यासहालपनं॰मुखेहसितक्रोधौ॰पुष्पादीनांयाच्ञा॰सहसैवतत्परित्याग : । वस्त्राभरणमाल्यानामकारणत: खण्डनंमाननञ्च ।यदुक्तम्।क्रोध: स्मितञ्चकुसुमाभरणादियोञ्चातत्क्षेपणञ्चसहसैवविमण्डनञ्च। आक्षिप्यकान्तवचनंलपनंसखीभिर्निष्कारणोत्थितगतंबहुविभ्रमंतत् ॥ इति ॥ चित्तवृत्त्यनवस्थानंशृङ्गाराद्विभ्रमोमत:। इत्यन्यच ॥ अपिच। विभ्रमस्त्वरयाकालेभूषास्थानविपर्यय:। यथा । श्रुत्वायान्तंबहि: कान्तमसमापितभूषया । भालेञ्जनंदृशोर्लाक्षाकपोलेतिलक: कृत : । इति ॥ योषितांयौवनजोविकारेविभ्रमइत्येके ॥ अपिच । वल्लभप्राप्तिवेलायांमदनावेशसम्भ्रमात् । विभ्रमोहारमाल्यादिभूषास्थानविपर्यय : ॥ विविधंभ्रमणम् । भ्रमुअनवस्थाने । घञ् । नोदात्तोपदेशेतिनवृद्धि : ॥
विभ्रमा । स्त्री॰ विस्रसायाम् । जरायाम् । वार्द्धक्ये ॥
विभ्राट्॰ड् । त्रि॰ भ्राजिष्णौ । रोचिष्णौ । अलङ्कारादिनाशोभमाने ॥ विशेषेणभ्राजते । भ्राजृदीप्तौ भ्राजभासेतिक्विप् ॥
विभ्रान्त : । त्रि॰ विभ्रमयुक्ते ॥ यथा। विभ्रान्तबुद्धेर्मनुजात्कार्याकार्यमजानत : । स्वानिष्टञ्चपरानिष्टंजायतेस्मात्पदेपदे ॥ इतिमहानिर्वाणतन्त्रम् ॥
विभ्रान्ति : । स्त्री॰ विभ्रमे ॥
विमत : । त्रि॰ विरुद्धमतिविशिष्टे ॥
विमति : । स्त्री॰ नानामतौ ॥ विरुद्धमतौ ॥
विमत्सर : । त्रि॰ मात्सर्य्यरहिते ॥ अद्वितीयात्मदर्शनेननिर्वैरबुद्धौ । विगतोमत्सरोयस्मात् ॥
विमना : । त्रि॰ दुर्मनसि । अन्यमनसि । चिन्तादिनाव्याकुलचित्ते ॥
विमनस्क : । त्रि॰ विमनसि ॥
विमनीकृत : । त्रि॰ वैमनस्यंप्रापिते ॥ अविमना : विमना : सम्पद्यमान : कृत : । अरुर्मनश्चक्षुश्चेतोरहोरजसांलोपश्चेतिच्विप्रत्ययसलोपौ।

अस्त्रचूवितोकार : ॥
विमय : । पुं० परिवर्त्तने । विनिमये ॥ विमीयते । मीञ् । एरच् ॥
विमर्द्द : । पुं० कालकृतरुचं । चक्रमर्द्दे ॥ युद्धे ॥ व्यालोडने ॥ सङ्घर्षे ॥
विमर्द्दक : । पुं० चक्रमर्द्दे । कसौंन्दीतिप्रसिद्धक्षुपे ॥
विमर्द्दनम् । न० कुङ्कुमादिनामर्द्दने । परिमले । मृदक्षोदे । ल्युट् ॥
विमर्द्दना । स्त्री० कुङ्कुमादिमर्द्दे ॥
विमर्द्दोत्थ : । पुं० परिमले । मर्द्दनाज्जातिसुगन्धादौ ॥ यथा । अथगन्धे परिमलोविमर्द्दोत्थे मनोहरे । दूरगामीमनोहारीगन्धआमोदईरितइति शब्दरत्नावली ॥
विमर्श : । पुं० विचारे ॥ न्यायमार्गेणविचारे ॥ संशयात्मिकायांवृत्तौ ॥
विमर्शनम् । न० परामर्शे । वितर्के ॥
विमर्शित : । त्रि० विचारिते ॥ विमर्श : सञ्जातोस्य । तारकादित्वादितच् ॥
विमर्ष : । पुं० विचारणायाम् ॥ इतिजटाधर : ॥ विशिष्टार्थाक्षमायाम् ॥
विमर्षणम् । न० ज्ञाने ॥ कर्मणाकर्मनिर्हारोनह्यात्यन्तिकइष्यते । अविद्वदधिकारित्वात्प्रायश्चित्तं विमर्षणम् ॥ इतिभागवतेषष्ठस्कन्धः ॥
विमल : । पुं० सूर्यपरिवारे ॥ अर्हति । जिने ॥ न०तारवैमर्दिधातौ०उपरसविशेषे । निर्मले । स्वच्छधातुके ॥ त्रि०निर्मले । बौद्धे ॥ विगतंमलंयस्मात् ॥ चारौ ॥ रागादिशून्ये ॥
विमलतीर्थम् । न० तीर्थविशेषे ॥ यथा द्यापिसौवर्णराजतमत्स्याद्दश्यन्ते ॥
विमलदानम् । न० नित्यनैमित्तिककाम्यदाने ॥ यथोक्तंगरुडपुराणे । नित्यंनैमित्तिकंकाम्यंविमलंदानमीरितम् । चेतनासत्त्वयुक्तेनदानंतद्विमलंस्मृतमितिग०पु० ॥ ईश्वरप्रीणनार्थदाने ॥
विमलमणि : । पुं० स्फटिके ॥
विमला । स्त्री० शीतलायाम् । सप्तलायाम् । सोकुणडप्रभेदे ॥ भुव : प्रभेदे ॥ देवीप्रभेदे ॥ यथा । उत्कलेनाभिदेशस्तुविरजाक्षेत्रमुच्यते । विमलाचमहादेवीजगन्नाथस्तुभैरव : ॥
विमलात्मक : । त्रि० बौद्धे । निर्मले । स्वभावनिर्मले ॥ विमलआत्मास्वभावोस्य ॥
विमलाद्रि : । पुं० शत्रुञ्जयपर्वते ॥
विमलेश्वर : । पुं० शिवे ॥ विश्वेशादेव्यधिष्ठितपुण्यस्थाने ॥
विमाता । त्रि० गणयितरि ॥
विमाता । स्त्री० मातु : सपत्न्याम् ॥ विरुद्धामाता । प्रादयोगतेतिसमास : ॥
विमातृज : । पुं० सापत्नभ्रातरि ।

वैमात्रेये ॥ विमातुर्जात : । पञ्च म्यामजाताद्विति ङ : ॥

विमान: । पुं॰ न॰ देवतायाने । व्योमयाने । सार्वभौमगृहे । घोटके । यानपात्रे । विशिष्टं मानयन्त्यनेन । पुंसि संज्ञायामिति करणे घ: ॥ विशेषेण मान्यस्मिन्निति वा । अधिकरणे ल्युट् ॥ विगतं मानमुपमाऽस्येति वा ॥ त्रि॰ मानशून्ये ॥

विमानक : । पुं॰ विमाने ॥

विमानता । स्त्री॰ तिरस्कारे ॥

विमानित : । त्रि॰ अनादृते ॥

विमार्ग : । पुं॰ कुपथे ॥

विमिश्र : । त्रि॰ विभिन्ने ॥

विमुक्त : । त्रि॰ विरहिते ॥ पृथग्भूते ॥ सर्वेषणाविनिर्मुक्ते ॥ नित्यमुक्ते चिदानन्दरसआत्मनि ॥ विशेषेण॰ अविद्याकामक्रोधादिभिर्मुक्त: परित्यक्त : ॥ क्षिप्ते ॥ जीवन्मुक्ते ॥ जीवन्नेवदृष्टबन्धात्कामादेर्विशेषेणमुक्त : सन् देहपातेभाविबन्धाद्विशेषेणमुच्यते । विमुक्तश्चविमुच्यतइतिश्रुते : ॥

विमुक्ति : । स्त्री॰ मोक्षे ॥ विमोचने । अनुध्यानरूपेऽनुग्रहे ॥

विमुख : । त्रि॰ पराङ्मुखे ॥ विरुद्धं मुखं यस्य ॥

विमुद्र: । त्रि॰ प्रस्फुटे । प्रफुल्ले ॥ मुद्रारहिते ॥

विमूढ : । त्रि॰ विक्षिप्ते ॥ अनुत्पन्नब्रह्मात्मैक्यसाक्षात्कारे । दृष्टादृष्टविषयभोगवासनाकृष्टचेतस्तयाप्यात्मानात्मविवेकायोग्ये । अदूरदर्शिनि ॥ विगतमूढभावोऽतिचतुरे॰ शुष्यर्थविवेचनकुशले ॥

विमूढभाव: । पुं॰ व्याकुलचित्तत्वे ॥

विमूढात्मा । त्रि॰ रागद्वेषादिदूषितात्म: करणे ॥ विमूढ आत्मायस्य स: ॥

विमूढेन : । त्रि॰ मूर्खशिरोमणौ । देहात्मवादिनि । श्रुत्यनादरकारिणि ॥ विमूढानामिन : ॥

विमूल्य: । त्रि॰ अमोलविमोलइतिभाषायांख्याते । महार्घे ॥

विमृत्यु : । पुं॰ विगतकामाविद्ये । वेदान्तवेद्यआत्मनि ॥

विमृश : । पुं॰ विमर्शे ॥

विमृष्ट: । त्रि॰ विभाविते ॥

विमृष्य : । त्रि॰ विचार्ये ॥ विमृषे : ऋदुपधाच्चाक्लृपिचृतेरिति क्यप् ॥

विमृष्यकारी । त्रि॰ विवेकिनि ॥ विमृष्यकरोति । णिनि : ॥

विमोक्ष : । पुं॰ विमोचने ॥

विमोघ : । पुं॰ मुक्तौ ॥

विमोचनम् । न॰ विमोचने । परित्यजने ॥

विमोचनम् । न॰ दूरीकरणे । विमुक्तौ । विपूर्वान्मुचेर्ल्युट् ॥ तीर्थविशेषे ॥

विमोह : । पुं॰ भ्रमपरम्परायाम् । विशिष्टोमोह : ॥

विमोहनम् । न॰ आकुलीकरणे । वैचित्तीकरणे ॥

विमोहित : । त्रि॰ विविधं मोहं भ्रमपरम्परांप्रापिते । मोहयुक्ते ।

विम्ब : । पुं॰ कृकलासे ॥ न॰प्रतिबिम्बे ॥ बिम्बीफले ॥ वर्णवृत्तान्तरे ॥ नगणकरगणककर्णभवतिनवर्णपूर्णम् । फणिवद्नभपद्यंयत्तद्दितिकिलविम्बमेतत् ॥ यथा । कपटकृतगोपवेश : शयनवरभूतशेष : । जयतिकृतनन्दहर्षोगिरिविधुतशातवर्ष : ॥ पुं॰ न॰सूर्यचन्द्रमण्डले ॥ वेतिशोभते । वीगत्यादिषु । उल्वादयश्चेति॰वन्नन्तोगमकृत्वानि ॥ विम्बश्रोष्ठादयतान्॥त्यन्तरे ॥

विम्बकम् । न॰ मण्डले ॥ बिम्बीफले ॥

विम्बजा । स्त्री॰ विम्बिकायाम् ॥

विम्बट : । पुं॰ सर्षपे ॥

विम्बभूत: । त्रि॰ कारणभूते ।

विम्बा । स्त्री॰ विम्बिकायाम् ॥

विम्बिका । स्त्री॰ तुण्डिकेर्याम् । रक्तफलायाम् । पीलुपर्ण्याम् । कंदूरी॰कुंदुरुइतिभाषा ॥ बिम्बीं कायति ॥ कैशब्दे । आतोनुपसर्गेक : । ड्यापोरितिहस्व : ॥

विम्बी । स्त्री॰ विम्बिकायाम् ॥ गौरादित्वान्ङीष् ॥

विम्बीफलम् । न॰ विम्बिकायाम् । कंदूरी॰इ॰प्र॰फले । बिंम्बीफलंस्वादुशीतंगुरुपित्तास्त्रवातजित् । स्तम्भनंलेखनंरुच्यंविबन्धाध्मानकारकम् ॥

विम्बु : । पुं॰ गुवाके ॥

वियच्चारी । पुं॰ चिल्लखगे ॥ त्रि॰आकाशगामिनि ॥

वियत् । न॰ विष्णुपदे । गगने । आकाशे ॥ विविधंयतएतिव्याप्नोति । इण : शतृ । यद्वा । वियच्छति॰ नविरमति । विपूर्वाद्यमेरन्येभ्योपीतिक्विप् । अनुदात्तोपदेशेति मलोपेतुक् ॥

वियद्गङ्गा । स्त्री॰ मन्दाकिन्याम् । स्वर्णद्याम् । सुरदीर्घिकायाम् ॥ वियति॰वियतोवागङ्गा ॥

वियद्भूति : । स्त्री॰ तमसि । अन्धकारे ॥

वियन्मणि: । पुं॰ सूर्ये । सहस्रांशौ ॥ वियतोमणिरिव ॥

वियम : । पुं॰ सयमे ॥ विविधयमने ॥ वियमनम् । यम : समुपनिविषुचेतिपक्षे॰अप् ॥

वियात : । पुं॰ धृष्टे । निर्लज्जे ॥ विरुद्धंयातंचेष्टितंयस्य । विरुद्धमयामोद्दा । गत्यर्थेतिक्त : ॥

वियाम:। पुं॰ संयमे। विविधयमने ॥ वियमनम्। यम: समुपनिविषु चेति॰ अवभावेघञ् ॥

वियुक्त:। त्रि॰ वियोगविशिष्टे ॥

वियोग:। पुं॰ विच्छेदे। विप्रलम्भे। रागिणोर्वियोजने। विरहे ॥ स्मृत्वावियोगजंदु: खंत्यजस्नेहंप्रियेजने। अतिस्नेहपरिष्वङ्गाद्वर्तिरार्द्रापिदह्यते ॥ वियोजनम्। युजिर्योगे। घञ्। वियुज्यतेऽनेनवा ॥

वियोगभाक्। त्रि॰ विच्छेदयुक्ते।

वियोगी। पुं॰ चक्रवाके। कोकि ॥ त्रि॰विरहिणि। वियोगयुक्ते ॥ वियोगोऽस्यास्ति। इनि: ॥

वियोगिनी। स्त्री॰ विरहिण्याम् ॥

वियोजित:। त्रि॰ पृथक्कृते। वियोगंप्रापिते

विरक्त:। त्रि॰ विरागवति ॥ सच॰ कुटीचकवहूदकहंसपरमहंसभेदाच्चतुर्विध: ॥ विपूर्वाद्रञ्ज: क्त: ॥ अतिरक्तवर्णे ॥

विरक्ता। स्त्री॰ सांसारिकविषयेषुविरागविशिष्टायाम् ॥ दुर्भगायाम् ॥ अननुकूलायाम् ॥ यांचिन्तयामिसततंमयिसाविरक्ता ॥

विरक्ति:। स्त्री॰ वैतृष्ण्ये ॥ तीव्रातीव्रतराचेतिविरक्तिर्द्विविधामता। तवसत्यान्तुतीव्रायांन्यसेद्योगीकुटीचके। शक्तोवहूदकेतीव्रतरायांहंसमंज्ञिते। मुमुक्षु: परमेहंसेसाक्षाद्विज्ञानसाधने:: रज्ञ: क्तिन् ॥

विरङ्गम्। न॰ कङ्कुष्ठे ॥

विरचनम्। न॰ निर्माणे ॥ विशेषेणरचनम् ॥

विरचित:। त्रि॰ निर्मिते ॥ विशेषेणरचित: ॥

विरजम्। न॰ तीर्थविशेषे ॥

विरजा:। त्रि॰ विगतधर्माधर्मे ॥ रजोगुणरहिते ॥ विगतंरजोयस्य स: ॥

विरजा:। स्त्री॰ विगतार्त्तवायाम् ॥

विरजस्तमा:। पुं॰ दृयातिगे। निवृत्तरजस्तमोगुणे ॥ रजस्तमोभ्यांविगत:। निरादयइतिसमास: ॥ विगतेरजस्तमसीयस्मादितिवा ॥

विरजा। स्त्री॰ कपित्थपर्ण्याम् ॥ दूर्वायाम् ॥ ययातिमातरि ॥ गोलोकेश्रीकृष्णसखीविशेषे ॥ दीक्षाविशेषे ॥ देवयानपथवर्त्तिन्यांनद्याम् ॥ जगन्नाथक्षेत्रे ॥ यथा। मुण्डनञ्चोपवासश्चसर्वतीर्थेष्वयंविधि:। वर्जयित्वागयांगङ्गांविशालांविरजांतथा ॥

विरजाक्षेत्रम्। न॰ पुरुषोत्तमतीर्थे ॥ यथा। उत्कलेनाभिदेशन्तुविरजाक्षेत्रमुच्यते। विमलासामहादेवीजगन्नाथस्तुभैरव: इतितन्त्रचूडामणौपीठनिर्णय: ॥

विरजाश्रम :। पुं॰ अवधूतत्वस म्पादके॰ आगमप्रोक्तकर्मविशेषे॥
विरञ्च :। पुं॰ द्रुहिणे। ब्रह्मणि॥ विरचयति। रचप्रतियत्ने। पचा द्यच्। पृषोदरादित्वान्नुमागमः॥
विरञ्चिः। पुं॰ स्रष्टरि। ब्रह्मणि॥ विरचयति। रच॰। स्वार्थण्य न्तादचइ :। पृषोदरादित्वान्नुम्॥
विरणम्। न॰ वीरणतृणे॥
विरतः। त्रि॰ निवृत्ते। विरक्ते॥
विरतिः। स्त्री॰ आरतौ। उपरा मे। निवृत्तौ॥ विरमणम्। र मक्रीडायाम्। क्तिन्॥
विरथ :। त्रि॰ भग्नरथे॥
विरमणम। न॰ विरतौ॥ विपू र्वाद्रमेर्ल्युट्॥
विरमित :। त्रि॰ निरस्ते॥
विरलम्। न॰ दधि॥ त्रि॰ अवका शे। पेलवे। तनौ। सान्तरे॥ विराति। रादाने। बाहुलकात्क लन्॥ पुं॰ निर्जने॥
विरलजानुक :। त्रि॰ वक्रजानुवि शिष्टे। प्रज्ञौ। प्रज्ञे॥ सू॰ ह्रि॰ चन्द्र :॥
विरलद्रवा। स्त्री॰ श्लक्ष्णयवाग्वाम्॥ यथा। यवागुरुष्णिकाश्राणा सैवतुद्रुतसिकथिका। विलेपीत रलाचस्यतसाश्लक्ष्णाविरलद्रवा॥

विरस :। त्रि॰ रसहीने॥ विग तोरसोयस्मात्॥
विरह :। पुं॰ विप्रलम्भे। वियो गे। विच्छेदे॥
विरहिणी। स्त्री॰ वियोगिन्याम्॥ विच्छेदविशिष्टायाम्॥ नार्यामृभृ तौ॥ ङीप्॥
विरहित :। त्रि॰ त्यक्ते। विहीने विशेषेणरहित :॥
विरही। पुं॰ वियोगिनि। विरह विशिष्टे॥ विरहोस्यास्ति। अ तइनिः॥रहतेराभीक्ष्ण्येर्थेघिनिर्वा॥
विरहोत्कण्ठिता। स्त्री॰ नायिका विशेषे॥ चिरम्पत्युरनालोके विरहोत्कण्ठितोन्मनेतिलक्षणात्॥
विराग :। पुं॰ वैराग्ये। रागप्र तिद्वन्द्विनि॥ त्रि॰ गताभिला षे॥ विगत :रागोस्य॥
विरागार्ह :। त्रि॰ विरागयोग्ये। वैरङ्गिके॥ अर्हति। अर्ह॰। पचाद्यच्। विशिष्टोराग :विरा ग :। विरागस्यार्ह :॥ धन वति॥
विरागी। त्रि॰ विरक्तिमति॥
विराट्। पुं॰ विविधंराजमानत्वा त्स्थूलसमष्ट्युपहितचैतन्येभगवत: स्थूलरूपे॥ यथा ततकार्यस्त्ववि राड्देह: स्थूलदेहोयमात्मनइति। पञ्चीकृतभूतानांयत्कार्यंतत्का-

यं विराट् देहीभवति स च देह : परमेश्वरस्य स्थूलदेह: ॥ आत्मनो मम भगवत्याः दे० भा० ॥ विराडात्माना म० स्थूलप्रपञ्चाभिमानी सूर्यमण्डलात्मक : समष्टिदेहस्य चु गोलकह यानुयायि को हिरण्यगर्भ : च चन्द्रास्याम् अर्थान्तरमिति व्याख्यातार : ॥ विशेषेण राजते । राजृ दीप्तौ । विविधं राजते वा । सत्सूद्विषेति क्विप् । चर्विये ॥ स्त्री० दृशाचरायां त्वी ॥

विराज : । पुं० विराजि ॥

विराजमान : । त्रि० दीप्तिविशिष्टे । शोभमाने ॥

विराजित : । त्रि० शोभिते । दीप्ते ॥

विराट : । पुं० मत्स्यदेशे ॥ वैदर्भदेशादूर्ध्वं स्वइन्द्रप्रस्थाच्च दक्षिणे । मरुदेशात्पूर्व्वभागे विराट : परिकीर्त्तित : ॥ मत्स्यदेशाधिपे ॥ नगरविशेषे ॥

विराटक : । पुं० राजपट्टे ॥ इति हेमचन्द्र : ।

विराटज : । पुं० विराटदेशोयहीरके । राजपट्टे । राजावर्त्ते ॥ त्रि० विराटराजजाते ॥

विराणी । पुं० हस्तिनि ॥ इति शब्दमाला ॥

विराद्ध : । त्रि० विप्रकृते ॥ राधेर्निट : कर्म्मणि क्त : ॥

विराध : । पुं० रामायणप्रसिद्धे राक्षसविशेषे ॥

विराधनम् । न० पीडायां ॥

विराध्यन् । त्रि० अपकुर्वाणे ॥

विराम: । पुं० अवसाने ॥ वितर्क विचारानन्दास्मितादिरूपचिन्तात्यागे । इत्युपरमे ॥ विपूर्व्वाद्रमेर्भावे घञ् ॥ विरमन्ति निवर्त्तन्ते ऽस्मिन्निति वा ॥

विराव : । पुं० शब्दे । स्वाने । आरावे ॥ विरवणम् । रु० उपसर्गे रु वइति भावे घञ् ॥

विरिक्त : । त्रि० सञ्जातविरेके ॥

विरिञ्च : । पुं० वैकुण्ठे । विष्णौ ॥ परमेष्ठिनि ॥ शिवे ॥ इ० श० रत्नावली ॥

विरिञ्चन : । पुं० विरञ्चने । द्रुहिणे ॥ इ० हे० चन्द्र : ॥

विरिञ्चि : । पुं० शिवे । विष्णौ ॥ विधातरि । परमेष्ठिनि । सुरज्येष्ठे ॥ भूतानि विरचयति । रचप्रतियत्ने । स्वार्थण्यन्तात् चइ : । पृषोदरादित्वादकारस्येत्त्वं नुमागमस्य ॥

विरिब्ध : । पु० स्वरे । रेभृ शब्दे सौत्र : । क्त : । क्षुब्धस्वान्तध्वान्ते त्यादिना निपातित: ॥

विरिष्ट : । त्रि० विच्छिन्ने ॥

विरुद्ध :। पुं० हेत्वाभासान्तरे । साध्याभावव्याप्ते हेतौ ॥ यथा शब्दो नि

त्य: कृतकत्वादिति । कृतकत्वं हिनित्यत्वाभावेनानित्यत्वे नव्याप्तम् ॥ न्यायसूत्रञ्च ' सिद्धान्तमभ्युपेत्यतद्विरोधीविरुद्ध: । अत्र चसिद्धान्तंसाध्यम् ०प्रतिज्ञार्थांहिपत्तश्चसिद्धस्यान्तेसाध्यमभिधीयते० तथाचसाध्यमभ्युपेत्यतद्विरुद्धप्रयुक्तस्तद्विरोधीसाध्याभावव्याप्तइतिफलितार्थ: । यथावह्निमान्द्रव्यत्वादिति । एतच्चसाध्याभावानुमितिसामग्रीत्वेनसाध्यानुमितिप्रतिबन्धीदूषकतावीजम् । नचसत्प्रतिपक्षाविशेष: । तत्रहेत्वन्तरंसाध्याऽभावसाधकम् ०इहतुहेतुसाध्याभावसाधक: साध्यसाधकत्वेनत्वयोपन्यस्तवस्त्युशक्तिविशेषोज्ञापकत्तुनविशेषात् ॥ १ । ४६ इ० ॥ विपरीतधर्माक्रान्ते ॥ विरोधविशिष्टे ॥

विरूढ: । त्रि० अङ्कुरिते । विरूढा० इतिख्याते ॥ विपूर्वाद्रुहेर्गत्यर्थे तिक्त: । ढत्वधत्वष्टुत्वढलोपदीर्घा: ॥ चारोहणविशष्ट ॥

विरूपम् । न० पिप्पलीमूले ॥ त्रि० कुरूपे ॥ विरुद्धरूपंयस्यस: ॥

विरूपा । स्त्री० अतिविषायाम् ॥ दुरालभायाम् ॥ कुरूपायाम् ॥

विरूपाक्ष: । पुं० त्रिलोचने । शम्भौ । ईशे । शिवे ॥ रुद्रविशेषे ॥ विविधानिरविचन्द्राग्निरूपाण्यक्षीणियस्य । बहुव्रीहौसक्थ्यक्ष्णो: स्वाङ्गात्षच् ॥ विरूपेष्वपि० अचिन्त्यपादष्टिर्यस्येतिवा ॥ विविधरूपाणि० विविधरूपेषु० अक्षाणीन्द्रियाण्यस्येतिवा ॥ असुरविशेषे ॥

विरूपिका । स्त्री० कुरूपायाम् ॥

विरूपी । पुं० गायके ॥ त्रि० कुरूपविशिष्टे ॥

विरेक: । पुं० मलभेदे । रेचने । रेके । रेचनायाम् । विरेचने ॥ पृथक्कृ ॥ यथा । यत्रयद्ध्यासस्तद्विरेकाग्रहणनिबन्धनोभ्रमइतिभाष्यम् ॥

विरेचक: । त्रि० विरेककारके ॥ यथा । चूर्णमध्येत्रिवृच्चूर्णंस्वरसेकारवेल्लकम् । स्नेहेष्वेरण्डजंतैलंफलेष्वेवहरीतकीतिवाग्भट:

विरेचनम् । न० विरेके ॥ तत्कारकौषधंयथा । हरीतकीसमगुडामधुनासहपेषिता । विरेचनकरीह्यत्र भवतीतिनसंशय: ॥ त्रिफलाचित्रकंचिचंतथाकटुकरोहिणी । जलस्नेहरोग्यं पठत्समन्तुविरेचनम् ॥ अपिच । त्रिफलाष्टरंद्राक्षापिप्पलीचविरेचकृत् । हरीतकीसोष्णनीरालवणाज्चविरेचकृत् । इतिगरुडपुराणे ॥ पुं० पीलुवृक्षे ।

विरेफः। पुं॰ भद्रमार्गे ॥ त्रि॰ रेफशून्ये ॥

विरेभितः। त्रि॰ शब्दिते ॥

विरोकः। पुं॰ सूर्य्यकिरणे ॥ न॰ छिद्रे। रन्ध्रे ॥ विरोचतेऽनेन। रुच॰। घञ्। चजोः कुघिण्ण्यतोरिति कुत्वम्। लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति नपुंसकत्वाविरोधः ॥

विरोचनम्। न॰ स्फुरणे ॥

विरोचनः। पुं॰ प्रह्लादतनये ॥ अर्के। सूर्य्ये ॥ अग्नौ ॥ चन्द्रे ॥ अर्कवृक्षे ॥ रोहितकवृक्षे ॥ श्योनाकप्रभेदे। घृतकरञ्जे ॥ विशेषेण रोचते। रुचदीप्तौ ॥ अनुदात्तेतश्च हलादेरिति युच् ॥ त्रि॰ रोचके।

विरोचनसुतः। पुं॰ बलिराजाख्यदैत्ये ॥ विरोचनस्य सुतः ॥

विरोधः। पुं॰ वैरे। विद्वेषे ॥ यथा। प्रधानस्याप्रधानेनसहविरोधोनतुदुर्बलेनेति ॥ विरोधकरणे दोषो यथा। अथपुत्त्रेणकासाक्त्वास्नेहात्स्वश्वासि। उवाचकिञ्चिद्वचनंपरिणामसुखावहम् ॥ अविरोधोभवान्अस्तुसर्वमङ्गलमङ्गलम्। विरोधिनाम्बीजस्यसर्वोपद्रवकारणम् ॥ अकर्त्तव्योविरोधश्चदारुणैः सविथैः सह। प्रतिज्ञाचैषाकर्त्तव्या मदीयंश्रवनंशृणु ॥ इति ॥ अपि च। नकुर्य्याद्बन्धुभिः सार्द्धंविरोधंबन्धुभिस्तथा। आत्मनः प्रतिकूलानिपरेषांनसमाचरेदिति ॥ विरोधंनोत्तमैर्गच्छेन्नाधमैश्चसदाबुधइतिच ॥ विरोधनम्। रुधिर् आवरणे। घञ् ॥ अलङ्कारविशेषे। यथा। विरोधः सोऽविरोधेऽपिविरुद्धत्वेनयद्वचः। वस्तुवृत्तेरविरुद्धेऽपिविरुद्धयोरिवयदभिधानंसविरोधः। जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धास्याद्गुणस्त्रिभिः। क्रियाद्वाभ्यामपिद्रव्यंद्रव्येणैवेतितेदश ॥ अभिनवनलिनीकिसलयमृणालवलयादिदवदहनराशिः। सुभगकुरङ्गदृशोऽस्याविधिवशतस्त्वद्वियोगपविपाते ॥ गिरयोऽप्यनुन्नतियुजोमरुदप्यचलोऽब्धयोऽप्यगम्भीराः। विश्वम्भराप्यतिलघुर्नरनाथतवान्तिकेतिनियतम् ॥ (*) येषांकण्ठपरिग्रहप्रणयितांसम्प्राप्यधाराधरस्तीक्ष्णः सोऽप्यनुरज्यतेचकमपिस्नेहंपराप्नोतिच। तेषांसङ्गरसङ्गसक्तमनसांराज्ञांत्वया भूपतेपांशूनांपटलैः प्रसाधनविधिर्निर्वर्त्त्यतेकौतुकम् ॥ सृजतिचजगदिदमवतिच संहरतिचहेलयैवयोनियतम्। अत्र सरवशतः शफरोजनार्द्दनः सोऽपि चित्रमिदम् ॥ सततंमुसलासक्ताब

 

हृतरागद्वेषकर्मघटनयान्वपते । हिम पतनीनां कठिनाः सलिलभवतिकराः सरोजकुसुमाराः ॥ पेशलमपिखलवचनं दहतितरांमानसंसुतत्त्वविदाम् । परुषमपिसुजनवाक्यंमलयजरसवत्प्रमोदयति ॥ क्रौञ्चाद्रिरुद्दाममदपदटोयंयन्मार्गणानर्गलशातपाते अभून्नवाम्भोजदलाभिजातःस भार्गवः सत्यमपूर्वसर्गः ॥ परिच्छेदातीतः सकलवचनानामविषयः पुनर्जन्मन्यस्मिन्ननुभवपथं योनगतवान् । विवेकप्रध्वंसादुपचितमहामोहगहनोविकारःकोऽप्यन्तर्जडयतिचतापञ्चकुरुते अयंवारामेकोनिलयइतिरत्नाकरइतिश्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः । कएवंजानीतेनिजकरपुटीकोटरगतंक्षणादेनंताम्यत्तिमिमकरमापास्यतिमुनिः ॥ समदमतङ्गजमदजलनिस्यन्दतरङ्गिणीपरिष्वङ्गात् । क्षितितिलकत्वयितटजुषिशङ्करचूडापगापिकालिन्दी । इति ॥ अनैक्ये । विपरीतार्थे ॥ यथा । श्रुतिस्मृतिविरोधेतुश्रुतिरेवगरीयसी । अविरोधेसदाकार्यंस्मार्त्तंवैदिकवत्सता ॥ असामानाधिकरण्ये ॥ न्यायमते ०साध्यव्यापकाभावप्रतियोगित्वमितिचिन्तामणिः ।साध्यासमानाधिकरणत्वमितिदीधितिः । अहिनकुलादेरन्यतरेणापरस्मरणं ॥ विरोचनाख्यवस्तुनि ॥

विरोधकृत् । पुं० वत्सरविशेषे ॥ तत्फलंयथा । वासवोवर्षतेदेवविदेशेचाखण्डमण्डले । अहिक्षभेकान्यकुर्जे विरोधीकृषिनाशकृत् ॥ ४५ ॥ त्रि०विरोधकर्त्तरि ॥

विरोधनः । पुं० विद्विषि ॥ म०पर्यवस्थायाम् । विरोधे ॥ रुधिर० । ल्युट्वा ॥

विरोधी । पुं० शत्रौ ॥ विरोधोऽस्यास्मिन्वा । इनिः । वत्सरविशेषे ॥ यथा । अनग्निप्रबलालोकाधान्यौषधिप्रपीडनम् । जायतेमानुषेकष्टं विरोधिनिनसंशयः ॥ त्रि०विवादिनि । विरोधविशिष्टे ॥

विरोधिनी । स्त्री० विरोधकारिकायाम् ॥ विरोधविशिष्टायाम् ॥

विरोधोक्तिः । स्त्री० विप्रलापे । परवचनविरोधिवचने । विरोधस्यउक्तिः ॥

विलः । पुं० उच्चैःश्रवसि । इन्द्रस्यहये । वेतसे ॥ न०छिद्रे । रन्ध्रे । गुहायाम् ॥ विलतिभिनत्ति । विलभेदने०षोडशादिः । इगुपधेतिकः ॥ विल्यतेवा । कृत्यल्युटोबहुलमिति०इगुपधेतिकः । घञर्थेकोवा । खमेघचेतिवे०संज्ञापूर्वकत्वाद्गुणाभावोवा ॥

विलकारक : । पुं॰ मूषके ॥

विलकारी । पुं॰ मूषिके ॥ गर्त्त कारके ॥

विलक्ष : । त्रि॰ विस्मयान्विते । परकीयधर्मशीलादौप्राप्ताश्चर्ये ॥ विशेषेणलक्षयति । लक्षआलोचने । पचाद्यच् ॥ लक्ष्याद्भ्रष्टे ॥ लज्जिते ॥ विलक्षणे ॥

विलक्षणम् । न॰ हेतुशून्यायांस्थितौ । निष्प्रयोजनस्थितौ ॥ यथा । विलक्षणं मतं स्थानं यद्भवेन्निष्प्रयोजनमितिभागुरि : ॥ त्रि॰भिन्ने । अन्यलक्षणे ॥ विशेषलक्षणयुक्ते ॥ विगतं लक्षणमालोचनं यत्र ॥

विलक्षणा । स्त्री॰ शय्याविशेषे ॥

विलक्षित : । चिह्निते ॥ विशेषेणलक्षित : ॥

विलग्न: । पुं॰ न॰ मध्ये ॥ न॰जन्मलग्ने ॥ मेषादिलग्नमात्रे ॥ त्रि॰ लग्ने । संसक्ते ॥ विशेषेणलग्न : ॥ वियुक्ते ॥

विलङ्घनम् । न॰ अतिक्रमणे ॥

विलङ्घित : । त्रि॰ अतिक्रान्ते ॥

विलङ्घ्य : । त्रि॰ अतिक्रमणीये ॥

विलज्ज : । त्रि॰ लज्जयाहीने ॥ विगतालज्जायस्मात : ॥

विलपनम् । न॰ विलापे ॥ भाषणे ॥

विलम्ब : । पुं॰ उचितकालाधिककाले ॥ लम्बने ॥ गौणे ॥ वत्सरविशेषे ॥ तत्फलं यथा । तस्करैः पार्थिवैश्चैवअभिभूतमिदं जगत् । अर्घोभवतिसामान्योविलम्बे तुभयं महत् ॥ ३२ ॥

विलम्बनम् । न॰ अशीघ्रे ॥

विलम्बितम् । न॰ तत्त्वाख्यनृत्यादौ ॥ विशेषेणलम्बन्ते कारचरणादय : प्रत्यंगं गतिविशेषप्रदर्शनायात्र । लविअवस्रंसने॰अोष्ठोपध : क्तोधिकरणे चेतिक्त : ॥ त्रि॰ आश्रिते । विलम्बमाने ॥

विलम्बी । त्रि॰ लम्बमाने ॥ विशेषेणलम्बमाने ॥

विलम्भ : । पुं॰ अतिसर्जने । दाने ॥ विलब्धि : । डुलभष्प्राप्तौ । घञ् । उपसर्गात्खलघञोरितिनुम् ॥

विलय : । पुं॰ प्रलये ॥ विशेषेणलीयन्ते पदार्थाअस्मिन् । लीङ्श्रेषणे । एरच् ॥ यथालवणस्य तोये ॥

विलला । स्त्री॰ श्वेतवलायाम् ॥ इ॰राजनि॰ ॥

विलवास : । पुं॰ खाह्वकजन्तौ ॥

विलवासी । पुं॰ सर्पे ॥ विलेवसति । णिनि : ॥

विलशय : । पुं॰ विलेशये ॥

विलसन् । त्रि॰ विलासयुक्ते ॥

विलसितम् । न० चेष्टिते ॥ भावे क्त : ॥ उद्भूते ॥

विलाप : । पुं० परिदेवने । अनुशोचनोक्तौ । शोकोक्तौ ॥ विलपनम् । लपेर्भावेघञ् ॥ दु : खजे वचसि ॥

विलापित : । त्रि० घृतवद्द्रवीकृते । विलीनतांप्रापिते ॥

विलाल : । पुं०यन्त्रे ॥

विलास : । पुं० लीलायाम् । हावभेदे । सयथा । प्रियसमीपगमनेय : स्थानासनगमनविलोकनेषुविकारोऽकस्माच्चक्रोधस्मितचमत्कारमुखविकूननंसविलास : । तथाहि । योबल्लभांचानुगतोविकारोगत्यासनस्थानविलोकनेषु । तथास्मितक्राेधचमत्कृतोऽविकूननस्वास्यगतंविलास : ॥ अपिच । विलासोऽविशेषोय : प्रियाप्तावासनादिषु । इति । विलसनम् । लसश्लेषणे । घञ् । प्रकाशे ॥ शारीरिकसुखानुभवे ॥

विलासकाननम् । न० क्रौडावने ॥

विलासायुध : । पुं० कामदेवे ॥

विलासी । पुं० भोगिनि ॥ व्याले सर्पे । विष्वक्सेने । हरौ । अग्नौ ॥ चन्द्रे ॥ विलसनशील: । विपूर्वाल्लसेर्वोकषलसेतिघिनुण् ॥

विलासिनी । स्त्री० नार्याम् । वेश्यायाम् ॥

विलिप्त: । त्रि० श्लिष्टे । विशेषेणलिप्त : ॥

विलिम्पन् । त्रि० उपदिह्याने ॥ विलिम्पति । लिप० । शतृ ॥

विलीन : । त्रि० स्वत : प्राप्तद्रवीभावेघृतादौ । विद्रुते । द्रुते । श्लिष्टे । संसक्ते ॥ विलीयतेस्म । लीङ्श्लेषणे । गत्यर्थेतिक्त : । स्वादयओदितइतिनत्वम् ॥ विशेषेणलीनोवा । विशेषेणलयङ्गते । यथा । विलीनोवैवस्वतनगरकोलाहलभरोगतादूरंक्वचिदपिपरेतान्मृगयितुम् । विमानानांव्रातोविदलयतिवीथीर्दिविषादांकथातेकल्याणीयदवधिमहीमण्डलमगात् ॥ विश्लिष्टे ॥

विलुप्त : । त्रि० संहृते ॥ चोरिते ॥

विलुप्ताब्द : । पुं० लुप्तसंवत्सरे ॥ यथा । गोजाम्यकुम्भेतरभेऽतिचारगोनोपूर्वराशिंगुरुरेतिवक्रित: तदाविलुप्ताब्दइहातिनिन्दित : शुभेषुरेवासुरनिम्नगान्तरे ॥

विलुम्पक : । त्रि० अपहर्त्तरि ॥

विलुलित : । त्रि० आकुलिते । आकर्षणाकुलिते ॥ विधुते ॥

विलेखनम् । न० छेदने ॥ आकर्षणे ॥ लेखने ॥

विलिप: । पुं॰ लिपि ॥ लिपेर्भावेघञ् ॥

विलेपनम् । न॰ कुङ्कुमाद्यनुलेपने । समालम्भे ॥ गात्रानुलेपनयोग्ये पिष्टघृष्टवासुगन्धद्रव्ये । गात्रानुलेपन्याम् । घृष्टचन्दनादिलेपमात्रे । विलिप्यतेऽनेन । लिप उपदेहे । ल्युट् ॥

विलेपनी । स्त्री॰ यवाग्वाम् ॥ सुवेशस्त्रियाम् ॥

विलेपी । त्रि॰ विलेपनकर्त्तरि ॥

विलेपी । स्त्री॰ यवाग्वाम् । उष्णिकायाम् ॥ अन्नाद्विधगुणाम्बु । चतुर्गुणाम्बुसंसिद्धाविलेपीघनसिक्थिका । पृथगद्रवैषारहिता स्याताशिथिलभक्तिका ॥ संसिद्धा॰ अतीवसिद्धा । विलेपीगिलत्यो॰ इतिलोके । विलेपीदीपनी बल्याहृद्यासङ्ग्राहिणीलघुः । व्रणाक्षिरोगिणांपथ्यातर्पणीहृड्ज्वरापहा ॥ विलिम्पति । लिप॰ । पचाद्यच् । गौरादिः ॥

विलेवासी । पुं॰ सर्पे ॥

विलेशय: । पुं॰ सर्पे । मूषिके ॥ गोधादिषु ॥ यथा । गोधाशशभुजङ्गाखुशल्लक्याद्याविलेशया : । विलेशयावातहरामधुरारसपाकयो : । वृंहणाबद्धविण्मूत्रावीर्योष्णाअपिकीर्तिता : ॥ बिलेशेते । अधिकरणेशेते॰ इत्यच् । शयवासीत्यलुक् ॥

विलोकनम् । न॰ दर्शने । लोकृ दर्शने । ल्युट् ॥

विलोकित : । त्रि॰ दृष्टे ॥ लोकृ॰ । क्त : ।

विलोचनम् । न॰ चक्षुषि ॥ विलोच्यतेऽनेन । लोचृ॰ । ल्युट् ॥ दर्शने ।

विलोटक : । पुं॰ नलमीने । बालियामाछ॰ इ॰ गौ॰ भा॰ प्रसिद्धे ।

विलोडनम् । न॰ मथने ॥ आलोडने । विलोवना॰ इ॰ भा॰ प्र॰ ॥

विलोडित : । त्रि॰ आलोडिते । मथिते । विलोया॰ इ॰ भा॰ न॰ तक्रे ॥

विलोप : । पुं॰ विशिष्टलोपे ।

विलोभ : । पुं॰ विलोभने ॥ विलुभेर्घञ् ॥

विलोम : । पुं॰ सर्पे । वरुणे ॥ शुनि । न॰ अरघट्टके । पिपयन्त्रे । त्रि॰ प्रतीपे । विपरीते ॥

विलोमक : । पुं॰ प्रतिकूले । विपरीते ।

विलोमजिह्व : । पुं॰ अन्त : स्वेदे । महामृगे । हस्तिनि । विलोमाजिह्वायस्य स : ।

विलोमजिह्वक : । पुं॰ पीलौ । सि

स्थूरे । हस्तिनि । बिलीमाजिह्वा यस्य । कप् ॥

बिलीमवर्णः । पुं० वर्णसङ्करजातौ ॥

बिलीमी । स्त्री० आमलक्याम् ॥

बिलोल : । त्रि० चञ्चले । यथा । कापि विलासविलोलविलोचनजनितमनोजम् । ध्यायति मुग्धवधूरधिकं मधुसूदनवदनसरोजम् ॥

बिलोलित : । त्रि० विद्राविते ॥

बिल्लम् । न० तले । तर्के । आलवाले । हिङ्गुनि ।

बिल्व : । पुं० श्रीफलद्रुमे । शाण्डिल्ये । शैलूषे । मालूरे । श्रीफले ॥ अस्य फलगुणाः । श्रीफलस्तुवरस्तिक्तो ग्राही रूक्षोऽग्निपित्तकृत् । वातश्लेष्महरो बल्यो लघुरुष्णश्च पाचनः ॥ अपि च । बिल्वं बालं कषायोष्णं पाचनं वह्निदीपनम् । सङ्ग्राहि तिक्तकटुकं तीक्ष्णं वातकफापहम् ॥ पक्वं सुगन्धि मधुरं दुर्जरं ग्राहि दोषलम् । फलेषु परिपक्वेषु ये गुणाः समुदाहृताः ॥ बिल्वादन्यत्र सर्वे ये बिल्वमामं गुणोत्तरम् । कफवातामपित्तघ्नी ग्राहिणी बिल्वपेशिका ॥ अन्यच्च । काञ्जिके संस्थितं बिल्वमग्निसन्दीपनं परम् । इति ॥ भावप्रकाशे यथा । बालं बिल्वफलं ग्राहि दीपनं पाचनं कटु । कषायोष्णं लघु स्निग्धं तिक्तं वातकफापहम् । पक्वं गुरु त्रिदोषं स्याद्दुर्जरं पूतिमारुतम् । विदाहि विष्टम्भकरं मधुरं वह्निमान्द्यकृत् ॥ फलेषु परिपक्वं यद्गुणवत्तदुदाहृतम् । बिल्वादन्यत्र विज्ञेयमामं तद्धि गुणाधिकम् ॥ द्राक्षा बिल्वशिवादीनां फलं शुष्कं गुणाधिकमिति च ॥ अस्य शाकप्रकारस्तु । बाह्लीकसौरभ्यकृतप्रकाशैर्बिल्वं फलं खण्डितमेव तैलैः । विपाचितं वह्निजचूर्णकीर्णं रुचिं विधत्तेऽभ्यवहारकाले ॥ कफानिलघ्नं स्निग्धं कषायं दीपनं लघु । बालं तिक्तं फलं बैल्वं वृद्धं बैल्वं विबन्धकृत् । इति ॥ बिलति । बिलभेदने । उल्वादिः । न० बिल्ववृक्षस्य फले ॥ पलपरिमाणे ॥

बिल्वकर्कटी । स्त्री० बालबिल्वफले । बिल्वपेशिकायाम् ॥

बिल्वजम् । न० बिल्वशाके ॥ यथा । सुकृतं बिल्वजं शाकं चिरमाज्ये सहिङ्गुके । उषितं क्वथितं तक्रे शुक्लवर्णे सुपाचितम् ॥ बिल्वजं कटुकं शाकं तिक्तं स्वल्पलघु पाचितम् । सुगन्धं सुरसं प्रोक्तं सुशीतं रुचिकारकम् ॥

बिल्वपत्री । स्त्री० बिल्वशुण्ठ्याम् । ज्वरापहायाम् । शुष्कबिल्वखण्डे ॥

बिल्वपेशिका । स्त्री० बिल्वकर्क्ट्याम् । बेलगूंठा० हि० गौ० भा० ॥ ग्राहिणी कफवातामशूलघ्नी बिल्वपेशिका

विल्वमूला । स्त्री० वाराहीकन्दे ॥

विल्वशुण्ठी । स्त्री० विल्वपत्र्याम् । वेलशूंठा। इ० गौ० दे० भा० प्र० ॥

विल्वसूः । स्त्री० दशपुत्रायाम् ॥

विल्वा । स्त्री० हिङ्गुपत्र्याम् ॥

विवः । त्रि० पक्षिवाहने ॥ विनापक्षिणा याति गच्छति । या० । आतइति कः ॥

विवक्षा । स्त्री० कथनेच्छायाम् ॥ शक्तौ ॥

विवक्षितः । त्रि० कथनेच्छाविषये । वक्तुमिष्टे ॥ शब्दार्थे ॥

विवक्षुः । त्रि० वक्तुमिच्छौ ॥

विवत्सा । स्त्री० नष्टापत्यायाम् ॥

विवदमानः । त्रि० विवादकर्त्तरि ॥

विवधः । पुं० पर्याहारे । वीवधे । अध्वनि । भारे ॥ विविधोवधोगमनं गमनंवाचामेनवा । प्रादिभ्योधातुजस्येतिसमासेोत्तरपदलोपौ ॥

विवन्धः । पुं० मलाप्रवृत्तौ ॥

विवरम् । न० दूषणे । गर्त्ते । छिद्रे ॥ अलक्ष्यस्थाने ॥ विवृणोति । वृञ् वरणे । पचाद्यच् ॥ यद्वा । विव्रियते । ग्रहवृदृनिश्चिगमश्चेत्यप् ॥ विगतोवरोऽस्माद्वा ॥ वीनांपक्षिणांवरं वा ॥ पुं० अतलादिविलेषु । यथा । अतलं प्रथमंप्रोक्तं द्वितीयंवितलंतथा । तृतीयंसुतलंप्रोक्तं चतुर्थंचतलातलम् । महातलंपञ्चमञ्चषष्ठंप्रोक्तंरसातलम् । सप्तमंचपातालं सप्तैतेविवराः स्मृताः । एतेषुविलस्वर्गेषुदिवोप्यधिकमेवच । कामभोगैश्वर्यसुखंसम्यक्भवनेषुचेतिदेवीभागवतम् ॥

विवरणम् । न० व्याख्यायाम् । अर्थस्फुटीकरणे ॥ कथने ॥

विवरनालिका । स्त्री० वंश्याम् । वेणौ ।

विवरेसद् । त्रि० मध्यवर्त्तिनि ॥ विवरेसीदति । षद्लृ० । सत्सूद्विषेत्यादिना क्विप् । तत्पुरुषेकृतीत्यादिनाऽलुक् ॥

विवर्णः । त्रि० पामरे । नीचे । सङ्करे ॥ विगतोवर्णोयस्मात्सः ॥ मलिने ॥

विवर्णवासाः । त्रि० काषायवाससि ॥

विवर्त्तः । पुं० समुदाये । सङ्घे ॥ अपावृत्तौ । अपवर्त्तने ॥ नर्त्तने । नृत्ये ॥ स्वरूपानुपमर्द्देनकार्यान्तरापत्तौ । अप्रच्युतपूर्वस्वरूपस्य अन्यथाऽऽकाराभासे ॥ यथा । सतत्त्वतोऽन्यथाप्रथाविकारइत्युदीरितः । अतत्त्वतोऽन्यथाप्रथा । विवर्त्तइत्युदाहृतइति ॥ विवर्त्तनम् । वृतु० । घञ् ॥

विवर्त्तनम् । न० परिभ्रमणे ॥ प्रत्यावृत्तौ ॥ पराङ्मुखविलुण्ठने ॥

विवर्त्तवादः । पुं० वादविशेषे । अस्यैवानाऽनिर्वचनीयाविद्यावादोमाया

पीयविवत्तेति॰सुखमिवतत्त्वलाया
त्यनमेदादित्यवंनिर्द्धारिते ॥ त
थाहि । ततोनिरंशस्यानन्दविवर्त्ती
जगदित्यसाम् । चवस्थात्तरभानन्तु
विवर्त्तौरज्जुसर्पवत् ॥ मायाशक्तिः
कल्पिकाद्यादिन्द्रजालिकशक्तिवत्
। शक्तिः शक्तात्पृथङ्नास्तितदद
ष्टेभचाभिदा ॥ प्रतिवन्धस्यदृष्टत्वा
च्छक्त्यभावेतुकस्यसः । शक्तिः
कार्यानुमेयायाचनिर्वाच्यत्वमिष्य
ते ॥

विवर्त्तितः । त्रि॰ परिमण्डलिते ॥

विवर्द्धनः । पुं॰ विशेषेणवृद्धिहेतौ ॥

विवशः । त्रि॰ अस्वतन्त्रे । अवश्यात्म
नि ॥ अरिष्टदुष्टधीयि । आसन्नमर
णसूचकलक्षणेनदुष्टमतौ ॥ विरुद्धं
वष्टि॰कामयते । वश॰ । अच् ॥
कातरे ॥

विवसनः । पुं॰ अर्हति । जिने ॥ बौ
द्धे ॥ त्रि॰दिगम्बरे ॥ विगतंवसनं
यस्यसः ॥

विवस्त्रः । त्रि॰ नग्ने ॥

विवस्वान्। पुं॰ सर्ववस्त्रिवंशबीजभू
ते॰आदित्ये । सूर्ये ॥ विविधवस्त
॰आच्छादयति वस॰ । क्विप् ।
विवोरश्मिरस्त्यस्ति । मतुप् । तस्मै
मस्यवः तभस्त्वाद्रुत्वाभावः ॥ वि
वस्तानासौतिवा ॥ अर्कद्रुमे ॥
बुधे सुरे अरुणे ॥ वैवस्वत

मनौ ॥

विवस्वती । स्त्री॰ सूर्यनगर्याम् ॥

विवहः । पुं॰ दारपरिग्रहे ॥ वायोः
पञ्चमेस्कन्धे । यथा । स्कन्दे
गौदगन्यासुदृक्प्रतिच्छिन्नसमन्ततः
सम्भवस्यायस्य : पञ्चमोविवहो
गणः । ५ ॥

विवाकः । त्रि॰ विवेचनकर्त्तरि ॥ य
था । अर्थिप्रत्यर्थिनोर्वचनविरुद्धावि
रुद्धंसभ्यैः सहविविनक्तिविवेचयति
स॰विवाकइतिमिताक्षरा ॥

विवादः । पुं॰ व्यवहारे । ऋणादि
न्याये ॥ सचधनविभागादिविषय
न्यायादिः । यथा । ऋणादिदाय
कान्तेद्वयोर्विवादस्तथा । विवादोव्य
वहारस्वस्यसेतान्नगद्यते ॥ अष्टादश
विवादस्थानानियथा तेषामाद्य
मृणादानं निक्षेपोऽस्वामिविक्र
यः । सम्भूयचसमुत्थानंदत्तस्यान
पकर्म च ॥ वेतनस्यैवचादानंसंविद
श्च्व्यतिक्रमः । क्रयविक्रयानुशयो
विवादः स्वामिपालयोः ॥ सीमा
विवादधर्मश्चपारुष्ये दण्डवाचिके ।
स्तेयञ्चसाहसञ्चैवस्त्रीसङ्ग्रहणमेवच
॥ स्त्रीपुंधर्मोविभागश्चद्यूतमाह्वयमे
वच । पदान्यष्टादशैतानिव्यवहार
स्थितविहितिमनुः ॥ मिथोविरुद्ध
वादे । पक्षप्रतिपक्षपरिग्रहेणविरुद्ध
वदने ॥ विरुद्धोवादोविवादः ॥

विवादानुगतः । त्रि॰ विवादकर्त्तरि ॥

विवादी त्रि॰ विवादवति ॥ मत्वर्थीयइनिः ॥ विवादकर्त्तरि ॥

विबाधनम् । न॰ शाठ्ये । पीडायाम् ॥

विबाधा । स्त्री॰ पीडायाम् ॥

विवारः । पुं॰ वर्णोच्चारणे प्रयत्नविशेषे ॥ विवारयति विकाशयत्यास्यमिति विवार इति कैयटः ॥

विवासः । पुं॰ समाप्तौ ॥

विवाहः । पुं॰ भार्याप्राप्तिहेतौ । दारपरिग्रहे । उपयमे । परिणये । उद्वाहे । उपयामे । पाणिपीडने ॥ धर्मप्रजारत्यर्थो हि विवाहः । विवाहोऽष्टविधः प्रोक्तः स्मृतिशास्त्रे मुमूरिभिः । ब्राह्मणैर्वर्णभेदेन कालो सद्भिर्विधीमतः ॥ परिणीतास्तु या नार्यो ब्रह्मर्षिणैवकल्मभिः । ता एव दारा विज्ञेया अन्याः सर्वाः परस्त्रियः ॥ इति महानिर्वाणतन्त्रम् ॥ विवाहानन्तरकन्याया भर्तृगृहगमनकाले पित्रादीनां रोदनं पुराणसिद्धम् । यथा दुर्वाससा सह और्वकन्यायाः कन्दल्या विवाहे । कन्यासमर्पणं कृत्वा मोहाद्दुःखे रोदव । मूर्च्छामवाप स मुनिः स्वकन्याविरहातुरः ॥ अपत्यभेदशोकोऽयं स्वात्मारामं न मुञ्चति । चर्वं न चेतनां प्राप्य बोधयामास कन्यकाम् ॥ मूर्च्छितां तात विच्छेदाद्दुःखशोकसंयुताम् ॥ इति ब्रह्मवैवर्त्तपुराणम् ॥ विशिष्टं वहनम् । वहप्रापणे । घञ् ॥

विवाहकः । पुं॰ विवाहे । स्वार्थे कः ॥

विवाहितः । पुं॰ स्त्री॰ कृतविवाहे ॥

विवाह्यः । त्रि॰ विवाहयितव्ये ।

विविक्तः । पुं॰ वसुनन्दने ॥ त्रि॰ असम्पृक्ते ॥ एकान्ते । रहसि ॥ जनसम्मर्दरहितदेशे ॥ पूते ॥ विवेकिनि ॥ विविक्तं जनाभावश्च । विचिर्॰ । शौच्यार्थत्वाद्गत्यर्थत्वाद्वा अधिकरणे च क्तः । विविच्यते विविच्यते वा । विजिर् पृथग्भावे । विचिर् विरेचने वा । क्तः ॥ एकाग्रे

विविक्तदेशः । पुं॰ जनसम्बन्धविवर्जितदेशे । स्वभावतः संस्कारतो वा शुद्धे अशुचिभिः सर्पव्याघ्रादिभिश्च रहिते सुरधुनिपुलिनादौ चित्तप्रसादकरे देशे ॥ विविक्तश्चासौ देशश्च ॥

विविक्तसेवी । त्रि॰ एकान्तवासस्वभावे विवेकिनि ॥ विविक्तं जनसम्मर्दरहितं पूतं वा अरण्यगिरिगुहादि तत्सेवितुं शीलं यस्य ॥

विविक्ता । स्त्री॰ दुर्भगायाम् ॥

विविग्नः । त्रि॰ भीते ॥

विवित्सा । स्त्री॰ वेदितुमिच्छायाम् ॥

विवित्सितः । त्रि॰ ज्ञातुमिष्टे । ल

श्यमिष्टे ॥

विविदिषा । स्त्री० वेदितुमिच्छायाम् ॥

विविदिषासन्न्यास : । पुं० इहजन्मनि जन्मान्तरे वा सम्यगनुष्ठितैर्वेदानुवचनादिभिरुत्पन्नया विविदिषया सम्पादिते ज्ञानसाधनभूते त्यागे ॥ अयञ्च द्विविध : । जन्मापादककर्मादित्यागमात्रात्मक : प्रैषोच्चारणपूर्वकदण्डधारणाद्याश्रमरूपश्चेति । तत्राद्यो स्त्रियोऽप्यधिक्रियन्ते । अत एव वेदे येनाहं नामृता स्यां किमहं तेन कुर्यामित्यादि मैत्रेयीवाक्यमाम्नायते । ब्रह्मचारिगृहस्थवानप्रस्थानां केनचिन्निमित्तेन सन्न्यासाश्रमस्वीकारेऽप्रतिबन्धे स्वाश्रमधर्मं त्वनुष्ठीयमानेऽप्यपि वेदनार्थं मानसकर्मादित्यागो न विरुद्ध्यते । श्रुतिस्मृतीतिहासपुराणेषु लोके च तादृशानां स्त्रीविदुषां बहूनामुपलम्भात् । यस्तु दण्डधारणादिरूपो वेदनहेतु : परमहंसाश्रम : स पूर्वोक्ते यज्ञोपवीतधारणप्रपञ्चितस्तत्तदाश्रमैरवधेय : ॥

विविदिषु : । त्रि० विविदिषासन्न्याससमन्वित ॥ यथा । ब्राह्मणा विविदिषु : पुत्रवित्तलोकैषणाश्च । अनुतिष्ठन्ति विद्यार्थं श्रवणादीन्यत्र निर्गमम् ॥

विविध : । त्रि० बहुविधे । नानाप्रकारे ॥ त्रिविधाभिधायकस्तत्स : ॥

विविधप्रकरणनामा । पुं० पञ्च-

कलि० ॥ १० ।

विवीत : । पुं० भूमिविशेषे । यथा । सममेषां विवीतेऽपि खरोष्ट्रमहिषीसमम् ॥ विवीत : प्रचुरतृणकाष्ठो रक्ष्यमाण : परिगृहीतो भूप्रदेशस्तदुपघाते पीतरसवत्समं दण्डमेषां महिष्यादीनां विद्यात् । इति स्वामिपालविवादे मिताक्षरा ॥

विवीतभर्त्ता । पुं० विवीतभूस्वामिनि ॥

विवृक्ण : । त्रि० छिन्ने ॥

विवृत : । त्रि० विस्तृते ॥ उद्घाटिते । व्याप्ते । वा० यो० इ० भा० ॥ प्रकाशीकृते ॥

विवृता । स्त्री० क्षुद्ररोगभेदे ॥

विवृतास्य : । पुं० ताम्रचूडे ॥ त्रि० व्यादितास्ये ॥

विवृति : । स्त्री० व्याख्यायाम् । विवरणम् । तत्र० । विवरांशिन् ॥

विवृत्त : । त्रि० लुठिते ॥ तिर्यक्चलिते । परावृत्ते ॥

विवृत्ता । स्त्री० क्षुद्ररोगभेदे ।

विवृत्ति : । स्त्री० स्फुरिते ॥ घूर्णने । चक्रवद्भ्रमणे । विवर्त्तनम् । इत्यु० । क्तिन् ॥

विवेक : । पुं० विचारे । मिथोव्यावृत्या वस्तुस्वरूपनिश्चये । इदं हेयमिदमुपादेयमिति विवेचनायाम् ॥ यथा नित्यानित्यवस्तुनो : ॥ तत्त्वज्ञानस्य श्रवणादिकं साधनम् मनोमा

शस्ययोगः। वासनचयस्यप्रतिकूलवा। समेोत्पादनमित्थं वंविविच्य निश्च ये ॥ पृथगात्मतायाम्। पृथग्भावे। प्रकृतिपुरुषादिभेदज्ञाने। व्यक्ताव्यक्तज्ञविज्ञानेविवेचनम्। विचिर्पृथग्भावे। घञ् ॥ तत्त्वावधारणे। विद्यामदधनमदकुलाचारमदादिमदानांविरोधिनि। सचदर्शितोजनकेन। अद्ययेमहतांमूर्द्धितेदिनैर्निपतन्त्यधः। हन्तचित्तमहतायांचैषाविश्वस्ततातव ॥ कथनानिमहीपालाब्राह्मणाःकजगन्तिवा। प्राकृतानिप्रयातानिकेयंविश्वस्ततातव ॥ कोटयोब्रह्मणांयातागताःसर्गपरम्पराः। प्रयाताःपांशुवद्भूपाः काधृतिर्ममजीविते ॥ येषांनिमेषणोन्मेषौजगतः प्रलयोदयौ ताहशाःपुरुषायातामादृशांगणनैवका ॥ इति ॥ जलद्रोण्याम् ॥ पृथग्भावविचारे ॥ विभागे ॥ एकान्ते ॥

विवेकिता। स्त्री० विवेकित्वे। कार्याकार्यविचारतायाम्। मदमूढबुद्धिषुविवेकिताकुतः ॥

विवेकी। त्रि० मनीषिणि। गुरुशास्त्राद्युपदेशयुक्ते ॥ विवेकोऽस्यास्ति। अतइनिः ॥ शास्त्रदृष्टिर्विवेकिनाम् ॥ विचारकर्त्तरि ॥ पुं० देवसेनराजपुत्रे ॥

विवेचकः। पुं० विवेचनस्यकर्त्तरि ॥ विवेचयति। विचिर्०। ण्वुल् ॥

विवेचनम्। न० विवेके ॥

विवेचनीयः। त्रि० विवेच्ये। विवेचितव्ये ॥

विवोढा। पुं० परिणेतरि। वरे। पत्यौ ॥

विब्रुवन्। त्रि० विरुद्धवक्तरि।

विव्वोकः। पुं० हावविभेदे। स्त्रीणां शृङ्गारभावजायांक्रियायाम् ॥ यथोक्तम्। विव्वोकोऽभिमतप्राप्ताव पिगर्वादनादरइति ॥ विवानम्। वागतौ। विवुर्गतिविशेषः। मृगय्वादित्वात्कुप्रत्ययः। उच्यतेसमवैत्यत्र। उचसमवाये। हलश्चेति घञ्। घञर्थेकोवा। ओकउचः केइतिनिपातितः। विवेरोकः स्थानम् ॥

विट्। पुं० मनुजे ॥ वैश्ये ॥ प्रवेशे ॥ विशति। विशप्रवेशने। क्विप्। व्रश्चेतिषत्वम्। जश्त्वचर्त्त्वे ॥

विशम्। न० बिसे। मृणाले ॥

विशकण्ठी। स्त्री० बलाकायाम् ॥

विशङ्कः। त्रि० निश्शङ्के। शङ्कारहिते ॥

विशङ्कटः। त्रि० पृथौ। विशाले ॥ विस्तृतार्थवृत्तेर्विशब्दात्। वेः शालच्छङ्कटचौ ॥ स्त्री० विशङ्कटी। षष्ठादिभ्यश्चेतिङीष् ॥

विशद: । पुं॰ शुक्ले । शुभ्रे । श्वेते । पाण्डरे । धवले ॥ त्रि॰ धवलवर्णयुक्ते ॥ प्रसन्ने । विमले । व्यक्ते । विविक्तावयवे । यथा॰ खरविशदमभ्यवहार्यंमच्छमिति ॥ विशीयते॰ ॥ दृ शातने । अच् ॥

विशदप्रभ: । त्रि॰ निर्म्मलकान्तौ ॥

विशब्दनम् । न॰ प्रतिज्ञाने ॥ शब्देनप्रकटीकृताभिप्राये ॥

विशम्बरा । स्त्री॰ पक्षाराम् । इतिराजनिर्घण्ट: ॥

विशय: । पुं॰ संशये यस्यायमर्थो नवेतिसन्देहे ॥ विविधंशयनम् । शीङ्स्वप्ने । एरच् ॥

विशयी । त्रि॰ संशयिनि ॥

विशर: । पु॰ वधे । मारणे ॥ विशरणम् । शृहिंसायाम् । ऋदोरप् ॥

विशरणम् । न॰ अवयवानांविश्लेषे ॥ मारणे ॥ भेदने ॥

विशल्य: । त्रि॰ शल्यरहिते ॥

विशल्यकरणी । स्त्री॰ ओषधिविशेषे ॥

विशल्यकृत् । पुं॰ अङ्कोटके । भूपलाशे । इतिरत्नमाला । त॰गा॰दे॰भा॰प्र॰वृत्ते ॥ त्रि॰ विशल्यकारिणि ॥ विशल्यंकरोति । डुकृञ्॰ । क्विप् ॥

विशल्या । स्त्री॰ अग्निशिखायाम् । लाङ्गलिक्याम् । लघुदन्त्याम् । गुडूच्याम् ॥ त्रिपुटायाम् ॥ शल्यनरहितायाम् । लक्ष्मणाख्यौषधौ । अजमोदायाम् । कलिकार्याम् । विगताशल्यात् । विगतंशल्यमनया॰ यस्यावा । तीर्थविशेषे ॥

विशल्यानदी । स्त्री॰ तीर्थविशेषे ॥

विशसन: । पुं॰ तरवारौ ॥ खड्गे नरकान्तरे ॥ न॰ मारणे ॥ शसुहिंसायाम् । ल्युट् ॥

विशसित: । त्रि॰ मारिते ॥ विपूर्वात्शसे: क्त: ॥

विशसिता । त्रि॰ पशोरङ्गानांकर्त्तर्य्यादिनापृथक्पृथक्कारके ॥

विशस्त: । त्रि॰ अविनीते ॥ शसु॰ । क्त: । धृषिशसीवैयात्ये । इतीनिष्ठायामविनयएवानिटौस्त: ॥

विशस्ता । पु॰ चाण्डाले ॥

विशाकर: । पुं॰ भद्रचूडे ॥

विशाख: । पुं॰ शिखिवाहने । कार्त्तिकेये । षडानने ॥ विशाखति । शाखृव्याप्तौ । पचाद्यच् ॥ विशाखायांजातइतिवा । सन्धिवेलादीत्यण् । श्रविष्ठाफल्गुनीत्यादिनातस्यलुक् । लुक्तद्धितलुकि । धन्विनांसमरकाले॰ वितस्त्यन्तरेणस्थितेपादद्वयेसतिविशाखाख्यस्थानंभवति॰ तस्मिन् । याचके । तर्कौ । पुनर्नवायाम् ॥

विशाखलम् । न॰ योधानांपादविन्यासभेदे ॥

विशाखा । स्त्री० षोडशनक्षत्रे । राधायाम् ॥ पक्षाञ्जातस्य फलं यथा । सदानुरक्तो विविधक्रियायां सुवर्णकारैरपि सख्यमेति । यस्य प्रसूतौ च भवेद्विशाखा सखा न कस्यापि भवेत्प्रसूतः ॥ पाक्षिकमेकवचनम् ॥ अजाद्याप् ॥ कठिल्लके ॥

विशाय : । पुं० उपशाये । यामिनां क्रमाच्छयने ॥ यथा । उपशायो विशायश्च पर्यायशयनार्थकौ । विशयनम् । शीङ् स्वप्ने । व्युपयोः शेतेः पर्याय इति घञ् ॥

विशारणम् । न० मारणे ॥ इति हेमचन्द्रः ॥

विशारद : । पुं० सर्वज्ञे । ईश्वरे ॥ वकुले ॥ मद्यगन्धे ॥ त्रि० पण्डिते ॥ धृष्टे ॥ प्रगल्भे ॥ प्रसिद्धे ॥ श्रेष्ठे ॥ विशिष्टो विपरीतो वा शारदः । प्रादयो गताद्यर्थे इति समासः ॥ विशुद्धे ॥

विशारदा । स्त्री० क्षुद्रदुरालभायाम् ॥

विशाल : । पुं० मृगप्रभेदे ॥ पक्षिविशेषे ॥ नृपान्तरे ॥ वृक्षविशेषे ॥ त्रि० पृथुले ॥ विस्तृतार्थवृत्तेर्विशब्दात् । वेः शालच्छङ्कटचाविति शालच् ॥ यद्वा । विशति । विश प्रवेशने । तमिविशिविड्यादिना कालन् ॥ विस्तीर्णे ॥

विशालता । स्त्री० पार्श्वविस्तारे । परिणाहे । पनहा० हि० भा० ॥ विशालस्य भावः । तस्य भावस्त्वतलाविति तल् ॥

विशालतैलगर्भ : । पुं० अङ्कोठवृक्षे ॥

विशालत्वम् । न० विशालतायाम् ॥

विशालत्वक् । पुं० सप्तपर्णवृक्षे ॥ विशाला त्वगस्य । बृहत्त्वचि ॥

विशालपत्र : । पुं० कासालौ । कोकणदेशप्रसिद्धोयम् । मृदुताले । श्रीताले । विशालानि पत्राणि यस्य ॥

विशालफलिका । स्त्री० निष्पाव्याम् ॥

विशाला । स्त्री० इन्द्रवारुण्याम् ॥ अन्येन्द्रवारुणी प्रोक्ता विशाला तु महाफला । विशाला कफशातघ्नी मेहकुष्ठहरा सरा । उज्जयिन्याम् ॥ विशलति । शल चलने । ज्वलितीति णः ॥ यद्वा । विशति । विश० । तमिविशिविडीति कालन् । विशालशब्दात् स्त्रियामजाद्यतष्टाबिति टाप् ॥ उपोदक्याम् ॥ बदरिकाश्रमे ॥

विशालाक्ष : । पुं० हरे । महेश्वरे ॥ तार्क्ष्ये । गरुडे ॥ त्रि० विशालनयने । सुनेत्रे ॥ विशाले अक्षिणी यस्य । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ॥

विशालाक्षी । स्त्री० वरस्त्रियाम् ॥ नामदन्त्याम् ॥ देवताविशेषे ॥ वाराणस्याम् विशालाक्षी विशाला-

यामपिस्थिता ॥ योगिनीविशेषे ॥ षित्वान्ङीष् ॥
विशालाया । स्त्री० पाटलायाम् ॥
विशाली । स्त्री० अजमोदायाम् । वनयवान्याम् । बस्तगन्धायाम् ॥ अच्छादिभ्यश्चेति ङीष् ॥
विशिखः । पुं० शरे । बाणे ॥ तोमरे ॥ शरबर्चे ॥ विशिष्टा शिखाऽग्रमस्य ॥ त्रि० शिखारहिते ॥ यथा । विशिखोप्युपवीतीच यत्करोतिनतत्कृतमितिस्मृतिः ॥
विशिखा । स्त्री० खनित्याम् । रथ्यायाम् ॥ नलिकायाम् ॥ विशेते ॥ शीङ्० । शीङः किद्भ्रस्वश्चेतिखः । टाप् ॥
विशिपम् । न० गृहे । मन्दिरे । विशन्त्यत्र । विश० विटपविष्टपविशिपोलपाइति० विशेः कपन्० प्रत्ययोदेरित्वञ्च ॥
विशिष्टः । पुं० विष्णौ ॥ त्रि० प्रकृष्टज्ञानवति ॥ अधिके ॥ युक्ते ॥ विशेषेणशिष्टः ॥ यद्वा । विशिष्यतेसर्वज्ञत्वादिभिः सर्वेभ्योऽतिरिच्यते । विपूर्वात्० शिष्लृ विशेषणाद्धातोः कर्मणिक्तः ॥
विशिष्टाद्वैतवादी । त्रि० प्रकृतिपुरुषयोर्भिन्नत्वेपिमितयोस्तयोर्ब्रह्मत्ववादिनि ॥ तस्यमतंयथा । पुरुषस्तदतिरिक्ताकृतिः० किन्तु भयमितंब्रह्म । यथाकश्चिद्दलवत् । इत्थंब्रह्मणएकत्वंव्यवस्थितम् । चित्परमाणुस्वरूपोजीवः० समस्तविश्वंब्रह्मांशः । इतिमाधवभाष्यादिः ॥
विशीर्णः । त्रि० विध्वस्ते ॥ गलिते ॥ विशीर्यतेस्म । शॄहिंसायाम् । क्तः ऋल्वादिभ्यः । रदाभ्यामितिनः । णत्वम् ॥ विशीर्णः प्रारब्धोवपुरपिजराव्याधिविधुरंगतंदूरेविप्रस्वजनभरणंशाऽक्षितमपि । इदानींव्योमेशादहहविपरीतेहतविधौविधेयंयत्तत्वंस्फुरतिममनाद्यापिहृदये । इतिशिक्षणमिश्रः ॥
विशीर्णपर्णः । पुं० निम्बवृक्षे ॥
विशीर्णवाक् । त्रि० स्खलित वचने ॥
विशुद्धधम् न० । अज्ञानतत्कार्यमलरहितत्वान्निष्प्रपञ्चे वेदान्तप्रसिद्धेब्रह्मणिषट्चक्रान्तर्गतपञ्चमचक्रे कण्ठस्थे । विशुद्धिंतनुतेयस्माज्जीवस्यहंसलोकनात् । विशुद्धंपद्ममाख्यातमाकाशाख्यंमहाद्भुतम् ॥ जीवस्यहसस्यपरमात्मनोवलोकनाज्जीवंयस्माद्विशुद्धंतनुते० ततोविशुद्धमित्यन्वयः ॥ त्रि० उज्ज्वले । विमले । शुद्धे ॥ केवले ॥ निभृते ॥ सत्ये ॥

विशेषिगाशुद्ध : ॥ विषयोपराग शून्ये ॥

विशुद्धविज्ञानम् । न० कार्यकारणो पाधिविनिर्मुक्तेब्रह्मणि ॥

विशुद्धात्मा । त्रि० निर्मलाऽन्त : क रणे ॥ विशुद्धोरजस्तमोभ्यामकलु षितश्चात्माऽन्त : करणरूपंसत्वंय स्यस : ॥

विशुद्धि : । स्त्री० समे ॥ शोधने ॥ सर्वकर्मण्युपादेयाविशुद्धिस्तन्त्रतार योः ॥

विशृङ्खल : । त्रि० शृङ्खलारहिते । अवशे ॥ अप्रतिहते ॥ विगताशृ ङ्खलायस्य ॥

विशेष : । पुं० तिलके ॥ प्रभेदे ॥ अ तिशये ॥ प्रकर्षे । इतरव्यावर्त्तके असाधारणधर्मे ॥ सप्तपदार्थान्तर्ग तपदार्थभेदे ॥ विशेषंनिरूपयति । अन्त्योनित्यद्रव्यवृत्तिर्विशेष : परि कीर्त्तितइति । अन्तेअवसानेवर्त्त ते०इतिअन्त्य : । यदपेक्षयाविशे षोनास्तीत्यर्थ : । घटपटादीनांहा वयवपर्यन्तानांतत्तदवयवभेदात्प रस्परभेद : । परमाणूनांभेदको विशेषएव०सतुस्वतएवव्यावृत्त : ते नतत्रविशेषान्तरापेक्षानास्तीत्यर्थ : ॥ इतिमुक्तावली ॥ पञ्चतन्मा त्रेभ्योयथासङ्ख्यमाकाशादीनि यानिपञ्चभूतानि । एतेसूक्ष्मताविशे



षा : कुत : शान्ताघोरामूढात्वे तिसाङ्ख्या : ॥ अलङ्कारप्रभेदे ॥ यथा । विशेष : स्यात्तमाधारंवि नाप्याधेयवर्णनम् । गतेसूर्येपिदी पस्थास्तमश्छिन्दन्तितत्करा : ॥ १ ॥ विशेष : सोपियद्येकंवस्त्वनेकत्रव र्ण्यते । अन्तर्बहि : पुर : पश्चात् सर्वदिक्ष्वपिसैवमे २ ॥ किञ्चिदा रम्भतोऽशक्यवस्त्वन्तरकृतिश्चस : । त्वांपश्यतामयालब्धंकल्पवृक्षनिरी क्षणम् ॥ ३ ॥ विशिष्यते । शि- ष्लृविशेषणे । घञ् ॥ त्रि०शेष शून्ये ॥

विशेषकम् । न० तमालपत्रे । लला टकृततिलके ॥ अयाणांश्लोकानाम न्वये ॥ पुं०तिलकवृक्षे ॥ पुं०न० तिलकविशेषे ॥ त्रि०विशेषयितरि । विशेषाधायके०प्रभेदे ॥ विशिन ष्टि । शिषलृ० । ण्वुल् ॥

विशेषकच्छेद्यम् । न० चतु : षष्टि कलान्तर्गतषष्ठकलायाम् ॥ सातु तिलकेषुनानाविच्छेदरचनेतिशै व तन्त्रम् ॥

विशेषगुण : । पुं० बुद्ध्यादिषट्के । रूपादिचतुष्टये ॥ स्नेहे ॥ स्वाभा विकद्रवत्वे ॥ अदृष्टे ॥ भावनाया म् ॥ शब्दे ॥ इतिभाषापरि- च्छेद : ॥

विशेषज्ञ : । त्रि० सारविदि ॥

विशेषणम् । न॰ विशेष्यधर्मे ॥ सुगुणादिर्यथा । नीलोत्पलमित्यादि ॥ व्यवच्छेदके ॥ इदमपि सुबन्तविशेषणम् । विशिष्यते येन तद्विशेषणम् । कर्तुः करणस्य वा वचनायां ल्युट् ॥ सुबन्तं यथा नैकमन्तस्य विशेषणम् । तथा तिङन्तमप्युक्तिङन्तस्य विशेषणम् ॥ पश्य मृगो धावतीत्यादौ मृगकर्तृकगमनरूपक्रियायाः कर्म॰प्रधानरूपक्रियैव ॥

विशेषणविशेष्यभावः । पुं॰ पदार्थयोः सम्बन्धविशेषे ॥ द्वयोर्हि प्रतीतपदार्थयोर्लौकिकविशेषणविशेष्यभावो भवतीति पञ्च भाष्यम् ॥ सम्बन्धस्य दुभयत्र निरूपणीयत्वात् यथा सोऽयं देवदत्त इति वाक्ये॰ सशब्दार्थतत्कालविशिष्टदेवदत्तस्य॰ अयशब्दार्थैतत्कालविशिष्टदेवदत्तस्य चान्योन्याभेदस्यावर्त्तकतया विशेषणविशेष्यभावः इन्द्रियार्थसन्निकर्षे अभावप्रत्यक्षे॰ विशेषणविशेष्यभावः सन्निकर्षः घटाभाववद्भूतलमित्यत्र॰ चक्षुःसंयुक्तभूतले घटाभावस्य विशेषणत्वात् ॥

विशेषतः । अ॰ विशेषादित्यर्थः ॥

विशेषप्रतिपत्तिः । स्त्री॰ उत्कृष्टसम्भावनायाम् ॥

विशेषविधिः । पुं॰ अल्पविषयकविधौ ॥ यथा । तथा सामान्यकार्येभ्यो विशेषविधिर्बली । बहवो विषया यस्य स सामान्यो विधिर्भवेत् ॥ अल्पः स्याद्विषयो यस्य स विशेषविधिर्मतः ॥ सामान्यविशेषयोर्मध्ये विशेषविधिर्बलवान् ॥

विशेषव्याप्तिः । स्त्री॰ व्याप्तिभेदे ॥ तल्लक्षणं यथा । प्रतियोग्यधिकरणत्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वमिति चिन्तामणिः ॥

विशेषित । त्रि॰ व्यवच्छिन्ने ॥

विशेषोक्तिः । स्त्री॰ अलङ्कारभेदे ॥ तल्लक्षणोदाहरणे यथा । कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे । हृदि स्नेहक्षयो नाभूत् स्मरदीपे ज्वलत्यपि ॥ इति चन्द्रालोके ॥

विशेष्यः । पुं॰ व्यवच्छेद्ये भेद्ये ॥

विशोकः । पुं॰ वेदान्तवेद्यात्मनि ॥ विगतः शोकदुःखादिवियोगनिमित्तो मनसः संतापो यस्य ॥ अशोकवृक्षे ॥ त्रि॰ शोकरहिते ॥

विशोधनम् । न॰ विशुद्धिसाधने ॥

विशोधनी । स्त्री॰ दन्तीवृक्षे ॥ शोधन्याम ॥

विशोधनीबीजम् । न॰ दन्तीबीजे । जयपाले ॥

विशोधिनी । स्त्री॰ नागदन्त्याम् ॥

विस्रः । पुं॰ दीप्तौ ॥ गत्याम् ॥ विच्छदीप्तौ॰ गतौ वा । यजयाचयतविच्छप्रच्छरक्षो नङ् । ङित्त्वाद्गुणः ॥

विश्रुतः । त्रि० ख्याते । प्रसिद्धे ॥ व्यश्राबि । श्रु० । क्तः ॥ ज्ञाते ॥ हृष्टे ॥ बिशेषेणश्रुतः ॥

विश्रुतात्मा । पुं० बिष्णौ ॥ अनाद्यविद्यावशान्मनुष्योहंब्राह्मणोहंकर्त्ताहंभोक्ताहमित्यन्तताद्यात्मनाप्रतीयमानोप्यनन्तजडदुःखात्मकेभ्योदेहादिभ्योविशेषेणवैलक्षण्येनवेदान्तवाक्यैः सत्यज्ञानादिलक्षणः सन् श्रुतः श्रवणादिनाऽवगतआत्माअतोबिशेषेणश्रुतत्वाद्विश्रुतात्मा। सचचेतनः । ये चज्ञाप्यमांविदुरीतिभगवद्वचनात् ॥ ब्रह्मविदि । विशेषेणश्रुतआत्मायेन । ज्ञानीत्वात्मैवमेमतमितिभगवद्वचनादस्यविष्णुरूपत्वसुप्रसिद्धमेव ॥

विश्रुतिः । स्त्री० कीर्त्तौ ॥ विख्यातौ ॥

विश्लथः । त्रि० शिथिले ॥

विश्लिष्टः । त्रि० शिथिले ॥

विश्लेषः । पुं० बिधुरे ॥ बियोगे बिभागे ॥

विश्वः । पुं० विश्वरूपभगवति ॥ व्यष्टयुपहितचैतन्ये व्यष्टिस्थूलशरीरोपहितस्य० विश्वशब्दवाच्यत्वेहेतुः सूक्ष्मशरीरमपरित्यज्यस्थूलशरीरादिप्रविष्टत्वादिति । सूक्ष्मशरीरंकारणशरीरञ्च तदपरित्यज्य० स्थूलशरीरादौ० तदपेक्षयास्थूलशरीरंलिङ्गशरीरंतद्वादिर्यस्यपरमस्थूलशरीरस्येतितद्गुणसंविज्ञानोबहुव्रीहिः । तस्मिन्प्रविष्टत्वात् । तथाहि । जीवस्यत्रयउपाधयः सुषुप्त्यादौबुद्ध्यादिसंस्कारोपरक्तमज्ञानमात्रमुपाधिः । स्वप्नेजाग्रद्वासनामयंलिङ्गशरीरमुपाधिः । जाग्रदवस्थायान्तुसूक्ष्मशरीरसंसृष्टस्थूलशरीरमुपाधिः । तथाचपूर्वपूर्वोपाधिविशिष्टस्यैवोत्तरोपाधिप्रवेशात्सर्वशरीरप्रविष्टत्वेनैवस्थूलभोगायतनाभिमानिनोविश्वइतिसंज्ञा ॥ यद्वा । सूक्ष्मशरीरंलिङ्गशरीरंतदपरित्यज्य० स्थूलशरीरंविराट्व्यष्टितद्वादिर्यासांचतुरादिव्रीनां० तत्तद्विषयाकाराणान्तत्प्रविष्टत्वादितिहेतुयोजनाविश्वशरीरवर्त्तित्वाद्विश्वः ॥ गणदेवताविशेषे ॥ तेयथा ॥ क्रतुर्दक्षोवसुःसत्यः कालःकामोधृतिःकुरुः । पुरूरवामाद्रवाश्चविश्वेदेवाःदशस्मृताः ॥ इष्टिश्राद्धे क्रतुर्दक्षः सत्योनान्दीमुखेवसुः । नैमित्तिकेकालकामौकाम्येचधुरिलोचनौ ॥ पुरूरवामाद्रवाश्चपार्वणे समुदाहृतौ ॥ तेतु० धर्माद्दक्षकन्यायांविश्वायांजाताः ॥ बिशति० कर्म्मस्वितिबिश्वः । बिशप्रवेशने । अशूप्रुषिलटिकणिखटिविशिभ्यः

क्विन्निति क्वन् । ब्रह्मणि । विशन्ति सर्वाणि भूतान्यस्मिन्, तत् । अनुप्रवेशश्रुत्या विशति सर्वमिति वा ॥ पञ्चीकृतपञ्चमहाभूततत्कार्यात्मके विराजशरीरे । भुवने । जगति । सर्वं ह्यनुप्रपन्नं जाते ॥ विशति सर्वं कारणमिति निरुक्तेः । पञ्चकारणस्वरूपादिविषये तर्कजालं न कर्त्तव्यं मायामयत्वादित्याह किमिदं किमस्य रूपं कथमिदमभूदमुष्य को हेतुः । इति न कदापि विचिन्त्यं चिन्त्यं मायेति धीमता विश्वम् ॥ दान्तानि दारुविकारे दारुतिरोभवति सोऽपि तत्रैव । जगति तथा परमात्मा परमात्मन्यपि जगत्तिरोधत्ते ॥ ९४ ॥ इति । अपि च । मूलोच्छेदं विना कापि प्ररोहन्ति पुनः पुनः । यथा लतास्तथा विश्वमज्ञानप्रशमं विना ॥ अपि च ॥ विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया । यः साक्षात् कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं तस्मै श्रीगुरुमूर्त्तये नम इदं श्रीदक्षिणामूर्त्तये ॥ इति ॥ अपि चाहुर्गौडपादाचार्याः । स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा । तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैरिति ॥ नागरे । शुण्ठ्याम् ॥ बोले ॥ त्रयोदशाङ्के । त्रि० अखिले । कृत्स्ने ॥ विशति स्वकारणम् ॥ विश० । कर्त्तरि क्वन् । समस्ते ॥ विश्वं शतसहस्रं स्वसर्वमत्र यथा चक्रमिति भारतम् ॥ सर्वनामसंज्ञीयम् । आधुनिकसंज्ञास्विव सर्वनामत्वपर्युदासात् ॥

विश्वकद्रुः । पुं० आखेटशुनि । मृगयाकुशलकुक्कुरे । ध्वनौ । ध्वाने ॥ त्रि० खले । पिशुने ॥ विश्वं कंसवैद्रवति । द्रुगतौ । मितद्र्वादित्वात् डुः ॥ यद्वा । विश्वं कन्दते । कदि आह्वानादौ । जन्वादिः ॥

विश्वकर्मजा । स्त्री० विश्वकर्मसुतायाम् ।

विश्वकर्मा । पुं० सहस्रांशौ । सूर्ये । मुनिविशेषे ॥ देवशिल्पिनि । त्वष्टरि । देववर्द्धकौ । शैघ्रोक्तौ विश्वकर्मा भौमयस्त्वष्टा योगवित् । विश्वं कर्माऽस्मादस्येति ॥

विश्वकर्मसुता । स्त्री० सूर्यभार्य्यायाम् । संज्ञायाम् ॥

विश्वका । स्त्री० गङ्गाचिल्लायाम् ॥

विश्वकृत् । पुं० देवशिल्पिनि । विश्वकर्मणि । ब्रह्मणि । परमेष्ठिनि ॥ विश्वं करोति । डुकृञ्० । क्विप् । तुक् ॥

विश्वकेतुः । पुं० कामे । मदने । विश्वस्मिन् विश्वव्यापी वा केतुर्ज्योतिरस्य ॥ अनिरुद्धे ।

विश्वगः । पुं० ब्रह्मणि ।

विश्वगन्धः । पुं० पलाण्डौ । न० बो

ले ॥

विश्वगन्धा । स्त्री० भूमौ ॥ क्षितौ ॥ विश्वस्मिन्गन्धोऽस्याः ॥

विश्वग्रन्थिः । स्त्री० हंसपद्याम् ॥

विश्वचक्रम् । न० महादानविशेषे ॥

विश्वचक्रात्मा पुं० विष्णौ ॥

विश्वजनः पुं० सर्वसाधारणेविश्वादौ ॥ मजनौ० द्रू० भा० प्र० ॥

विश्वजनीन: त्रि० सर्व्वजनहिते ॥ विश्वश्चासौजनश्च० तस्मै हितम् । आत्मविश्वजनभोगोत्तरपदात्खः ॥

विश्वजनीयः । त्रि० विश्वजनहिते ॥ विश्वश्चजनः सर्वसाधारणोविश्वादिः । विश्वोजनोऽस्मिन्नितवा यद्दैपि० सएवान्यपदार्थः । तस्मै हितम् । कर्मधारयादेवेष्यतइतीष्टेरत्रखः । किन्तु छएव ॥ विश्वेषांजनायहितोवा ॥

विश्वजित् । पुं० सर्वस्वदक्षिणेयज्ञविशेषे । सर्वमेधे ॥ त्रि० सर्वजेतरि ॥ विश्वंजयति । जि० क्विप् चेतिक्विप् । तुक् ॥

विश्वतः । अ० सर्वतइत्यर्थे ॥ विश्वस्मात् । पञ्चम्यास्तसिल् ॥

विश्वतोमुखः । त्रि० सर्वतोमुखे ॥ विश्वतोमुखान्यस्य ॥

विश्वदेवः । पुं० गणदेवताविशेषे ॥ यथा । विश्वदेवौक्रतुदक्षौसर्वास्विष्टिषुविश्रुतौ । नित्यंनान्दीमुखश्राद्धेवसुसत्यौचपैतृके ॥ नवान्नालम्भेदेवौकामकालौसदैवहि । अपिकन्यागतेसूर्येश्राद्धेचध्वनिरोचकौ ॥ पुरूरवामाद्रवाश्वविश्वदेवौचपर्वणि इ० वह्निपु० ॥ चक्षुरादिषुप्राणेषु ॥ देवसद्वये ॥ कृष्णगवेधुकायाम् ॥

विश्वदेवा । स्त्री० कृष्णगवेधुकायाम् ॥ गोरक्षचाकुलिया० इ० गौ० दे० भा० प्र० ॥ नागबलायाम् ॥ अरुणपुष्पदण्डोत्पले ॥

विश्वधायाः । त्रि० विश्वस्यधारके ॥ विश्वंदधाति । डुधाञ्० । वहिहाधाञ्भ्यश्छन्दसीत्यसुन् । णित् । आतोयुक् ॥ वैदिकोयम् ॥

विश्वधृक् । पुं० श्रीपतौ ॥ विश्वंधृष्णोतिच्चानैश्वर्यादिभिर्व्वसुरादीन्वाऽभिभवति । ञिधृषा० । क्विप् । कुत्वाल्यूर्वशत्वं नञ् । गः । कः ॥

विश्वनाथः । पुं० विश्वेश्वरे । शिवे ॥ विश्वेषांनाथः ॥

विश्वनाथनगरी । स्त्री० काश्याम् ॥ यत्रदेहपतनेनदेहिनांमुक्तिरेवभवतीतिनिश्चितम् । पूर्वपुण्यनिचयेनलभ्यतेविश्वनाथनगरीगरीयसी ॥

विश्वपः । पुं० अग्नौ ॥ विश्वंपाति । पा० । आतोनुपसर्गेकः ॥

विश्वपाः । पुं० अग्नौ ॥ विधौ ॥ रवौ ॥ प्रजापतौ ॥ विश्वंपा-

ति । पा० । आतोऽनुपसर्गेकइतिके प्राप्ते॰वासरूपन्यायेन॰आतोमनिन्क्वनिप्वनिपश्चेतिवनिप् ॥ देवे ॥

विश्वप्साः । पुं॰ वह्नौ ॥ चन्द्रे ॥ सूर्य्ये ॥ समीरणे ॥ कृतान्ते ॥ विश्वंप्साति । प्साभक्षणे । शुश्रुश्चन्नितिसाधुः ॥

विश्वबोधः । पुं॰ धर्म्मकाये । बुद्धे ॥

विश्वभुक् । पुं॰ विष्णौ ॥ विश्वं कृत्स्नंजगद्भुङ्क्ते संहरतिप्रलयकालेइति॰भुनक्तिपालयतिस्थितिकालेइतिवाभुजेः परिपालनाभ्यवहारकर्म्मणः क्विप् ॥

विश्वभूः । पुं॰ बुद्धप्रभेदे ॥

विश्वभेषजम् । न॰ शुण्ठ्याम् ॥ विश्वस्यदोषस्यभेषजम् ॥

विश्वभोजाः । पुं॰ इन्द्रे ॥ विश्वं भुङ्क्तेभुनक्तिवा । भुज॰ । विट्भुजिभ्यांविश्वे॰इत्यसिप्रत्ययः ॥

विश्वमहाः । स्त्री॰ अग्नेर्जिह्वाविशेषे ॥

विश्वम्भरः । पुं॰ अच्युते । विष्णौ ॥ विडौजसि । शक्रे ॥ विश्वंबिभर्त्ति । डुभृञ्॰ । संज्ञायांभृतॄवृजिधारिसहितपिदमइतिखच् । अरुर्द्विषदितिमुम् ॥ अग्नौ ॥ विश्वस्यभरणाद्विश्वम्भरोऽग्निरितिभाष्यकाराः ॥ विसम्भरा॰इ॰भा॰प्रा॰णिविशेषे ॥

विश्वम्भरा । स्त्री॰ धरायाम् । स्थिरायाम् । पृथिव्याम् ॥ विश्वम्भरातद्धरणाद्वानन्तानन्तरूपतः । इतिपुराणम् ॥ विश्वंबिभर्त्ति॰ डुभृञ्धारणपोषणयोः । संज्ञायामित्यादिनाखच् । मुम् । टाप् ।

विश्वयोनिः । पुं॰ भगवति ॥ विश्वस्ययोनिः कारणम्॰निमित्तोपादानात्मकम् ॥

विश्वरूपः । पुं॰ विराजि । विष्णौ ॥ आदित्ये । सूर्य्ये ॥ विश्वानि बहूनिरूपाण्यस्य ॥ विश्वानिनानाविधानि॰ रूपाणिश्वेतपीतादिगुणात्मकान्यस्य सः ॥ मणिविशेषे ॥ सचनानारूपोऽवभासते॰ उपाधिसन्निधानात्॰नस्वतोनेकरूपः ॥ न॰ अगुरुणि ॥

विश्वरूपकम् । न॰ अगुरुणि ॥

विश्वरेताः । पुं॰ ब्रह्मणिविधातरि ॥ विश्वस्यरेतःकारणम् ॥ विश्वंसर्वंकार्यंतेनाभिमतंरेतः कार्य्यंयस्यसविश्वरेताः परमेश्वरः ॥

विश्वरोचनः । पुं॰ नाडीचशाके ॥

विश्ववेदाः । पुं॰ अग्नौ ॥ सर्वज्ञे ॥ विश्वंवेत्ति॰ विदज्ञाने । विद॰ । विद्भुजिभ्यांविश्वइति॰ असिप्रत्ययः ॥

विश्वसनम् । न० मुनिविश्रामदेशे। मुनिविश्रामदेशायस्तत् विश्वसनंस्मृतमितिवचनात् ।

विश्वसहा । स्त्री० वह्नेर्जिह्वाविशेषे

विश्वसारम् । न० तन्त्रविशेषे ॥

विश्वसारकम् । न० विटखदिरे । फाल्गुनसो० कृ० गौ० भा० । नागधूइर० कृ० भा० प्र० ॥

विश्वस्तिम : । त्रि० विश्वस्ते । कृतविश्वासे ॥

विश्वसृट्‌०ड् । पुं० विधौ । ब्रह्मणि ॥ विश्वंसृजति । सृज० । क्विप् । क्विन्प्रत्ययस्येतिकुत्वं न० रज्जुसृड्भ्यामितिभाष्यप्रयोगात् । यहासृजयज्योः पदान्तत्वविधेः कुत्वापवादत्वात् ॥

विश्वस्तः । त्रि० जातविश्वासे । चशङ्किते ॥

विश्वस्ता । स्त्री० विधवायाम् । विफलंश्वसिति । श्वसप्राणने । गत्यर्थे तः । चागमशास्त्रस्यानित्यत्वान्नेट् ॥

विश्वस्या । स्त्री० शतावर्याम् ॥

विश्वा । स्त्री० अतिविषायाम् ॥ शुण्ठ्याम् । शतावर्याम् ॥ विशति । विश० । अशूप्रुषीतिक्वन् । टाप् ॥ पिप्पल्याम् ॥

विश्वाकषायः । पुं० शुंठीक्काथे ॥

विश्वाची । स्त्री० अप्सरोविशेषे ॥

विश्वात्मा । पुं० परमेश्वरे । विश्वस्यात्मनियन्ता ॥ प्रतीचि ॥ विश्वस्मिन्पञ्चीकृतपञ्चमहाभूततत्कार्यात्मिकेऽस्थूलजगतिवैराजशरीरे० जागरितेच० आत्माअहममेत्यभिमानोऽस्य । विश्वस्यस्थूलशरीरस्यात्मानमात्मत्वेनप्रतिपद्यमानोवा । अमात्मान्तप्रत्ययपोवा ॥

विश्वामित्रः । पुं० ब्रह्मर्षिविशेषे । गाधिजे । विश्वरथे । यासिनि । कौशिके ॥ विश्वेषांमित्रः । विश्वस्ययोमैत्रीकर्तुमिच्छतिधर्मतः । विश्वामित्रः सद्गतिभागवतोक्तः ॥ आत्मनि ॥ विश्वस्यमित्रंनिरुपाधिप्रेमगोचरतयाप्रियम् । आत्मानमेवप्रियमुपासीतेतिश्रुतेः ॥ मित्रेचर्षाविति विश्वशब्दस्यदीर्घः ॥ त्रि० सकलशत्रवे ॥ विश्वेषांमित्रः ॥

विश्वामित्रतीर्थम् । न० तीर्थविशेषे ॥

विश्वामित्रप्रियः । पुं० नारिकेले ॥

विश्वाराट् । पुं० विश्वस्मिन्राजमाने ॥

विश्वावसुः । पुं० गन्धर्वविशेषे ॥ विश्वंवसुःयस्यस । विश्वस्यवसुराटोरितिपूर्वपदान्तस्यदीर्घः ॥ वत्सरविशेषे ॥ तत्रफलंयथा । सर्वेजनाश्चसंसर्वे शस्यमहार्घता । विश्वावसौवरारोहेक्षापतिसमहार्घता ॥ स्त्री० रात्रौ ॥

विश्वासः । पुं॰ विश्रम्भे । दृढमित्थमेवनान्यथेतिनिश्चये ॥ विश्वसनम् । श्वस॰ । घञ् ॥ लोभप्रमादविश्वासैःपुरुषोनश्यतित्रिभिः । तस्माल्लोभोनकर्त्तव्यःप्रमादोननविश्वसेत् ॥ सात्मीयानिमदंकुर्यात्ससुखीलक्ष्मीयोज्झितः । तन्निमित्तंयस्यविश्वासः पुरुषः सजितेन्द्रियः ॥ अपिच । सौहार्दव्यवहाराश्चप्रवृत्तिंप्रकृतंनृणाम् । सहवासेनतर्केश्चविदित्वाविश्वसेत्ततः ॥

विश्वास्यः । त्रि॰ श्रद्धेयवचने ॥

विश्वेदेवाः । पुं॰ अग्नौ ॥ श्राद्धदेवे ॥ क्रतुर्दक्षोवसुःसत्यःकामःकालस्तथाध्वनिः । रोचकश्चाद्रवाश्चैवतथाचान्यःपुरूरवाः ॥ विश्वेदेवाभवन्त्येतेदशसर्वत्रपूजिताः ॥

विश्वेशः । पुं॰ परमेश्वरे ॥ विश्वेषांसर्वेषामीशोनियन्ता ॥

विश्वेशा । स्त्री॰ विमलेश्वरेवर्त्तमानायांदेव्याम् ॥

विश्वेश्वरः । पुं॰ काशिस्थेशिवे । काशीनाथेलिङ्गविशेषे ॥ विश्वेषामीश्वरः ॥ इत्येविश्वेश्वरोदेवोव्यासमणिकर्णिका ॥

विश्वौषधम् । न॰ शुण्ठ्याम् ॥ विश्वेषामौषधम् । विश्वस्यसदौषधत्वेति वा ॥

विट् । स्त्री॰ विष्ठायाम् ॥ वेवेष्टि । विषव्याप्तौ । क्विप् । जगत्स्वच्चत्वे ॥ दुष्टतरि ॥ विट्पतिशब्दनिर्द्देशात् ॥ व्यापने ॥

विषम् । न॰ जले । तोये ॥ वत्सनाभाभिधे ॥ बोले ॥ सामान्यविषे ॥ पुं॰ न॰ क्ष्वेडे । गरले ॥ तद्भेदायथा । पुंसिक्लीवेचकाकोलकालकूटहलाहलाः । सौराष्ट्रिकःशौक्लिकेयोब्रह्मपुत्रःप्रदीपनः ॥ दारदोवत्सनाभश्चविषभेदाअमीनव ॥ अपिच । विषंतुगरलंक्ष्वेडस्तस्यभेदानुदाहरेत् । वत्सनाभःसहारिद्रःसक्तुकश्चप्रदीपनः ॥ सौराष्ट्रिकःशृङ्गकश्चकालकूटस्तथैवच । हालाहलोब्रह्मपुत्रोविषभेदाअमीनव ॥ ब्राह्मणःपाण्डरस्तेषुक्षत्रियोलोहितप्रभः । वैश्यःपीतोऽसितःशूद्रोविषउक्तश्चतुर्विधः ॥ रसायनेविषंविप्रंक्षत्रियंदेहपुष्टये । वैश्यंकुष्ठविनाशायशूद्रंदद्याद्धधायहि ॥ अथास्यगुणाः । विषंप्राणहरंप्रोक्तंव्यवायिचविकासिच । आग्नेयंवातकफहृद्योगवाहिमदावहम् ॥ व्यवायि॰ सकलकायगुणव्यापनपूर्वकपाकाय मनशीलम् । विकासि॰ ओजःशोषणपूर्वकंसन्धिबन्धशिथिलीकरणशीलम् । आग्नेयम्॰ अधिकाग्न्यंशम् । योगवाहि॰ संसर्गगुणग्राहकम् । मदावहम्॰ तमोगुणाधिक्येनबुद्धिविध्वंसकम् ॥

तदेवयुक्तियुक्तन्तुप्राणदायिरसायनम् । योगवाहिपरंवातश्लेष्मजित् सन्निपातहृत् ॥ योगवाहित्रिदोषघ्नं बृंहणंवीर्यवर्द्धनम् । येदुर्गुणाविषेऽशुद्धेतेस्युर्हीनाविशोधनात् ॥ तस्माद्विषंप्रयोगेषुशोधयित्वाप्रयोजयेत् । अथशोधनविधि : । गोमूत्रे त्रिदिनंस्थाप्यंविषंतेनविशुद्ध्यति । रक्तसर्षपतैलाक्तं तत्राधायं सुवाससि ॥ येगुणागरलेप्रोक्तातेस्युर्हीनाविशोधनात् । तस्माद्विषंप्रयोगेषुशोधयित्वाप्रयोजयेत् ॥ स्थावरंजङ्गमञ्चैव द्विविधं विषमुच्यते । दशाधिष्ठानमाद्यन्तु० द्वितीयंषोडशाश्रयम् ॥ विशेषोभावप्रकाशेद्रष्टव्य : ॥ वेवेष्टि कायम् । विष्लृ० शिषविप्रयोगेशा । घृगुपधेतिक : ॥ हालाहलोनैव विषं विषं रमापरंजनाव्यत्ययमेवमन्यते । योगेनजागर्त्ति निपीयतंशिव : स्मरन् रमांमुह्यतिनिद्रयाहरि : ॥

विषकण्टकिनी । स्त्री० वन्ध्याकर्कोटक्याम् ॥

विषकन्द : । पं० नीलकन्दे ॥

विषक्त : । त्रि० अतिश्लिष्टे । लग्ने ॥ चाश्रिते ॥

विषघा । स्त्री० गुडूच्याम् ॥

विषघाती । पं० शिरीषवृक्षे ॥ विषनाशके ॥ त्रि० ॥

विषघ्न : । पुं० शिरीषद्रुमे ॥ यवासे ॥ बिभीतके ॥ चम्पकवृक्षे ॥ त्रि० विषनाशके ॥ विषंहन्ति । हन० । हन्तेरमनुष्यकर्तृकेचेतिठक् ॥ विषघ्नौषधानिमात्स्ये १९२ ऽध्यायेद्रष्टव्यानि ॥

विषघ्नधूप : । पुं० धूपविशेषे ॥ तथा । सक्तु : सर्जरसोपेत : सर्षपा एलवालुकै : । सुवर्णातस्करशिरी : कुसुमैरर्जुनस्य तु ॥ धूपोवासगृहेहन्तिविषंस्थावरजङ्गमम् । नतत्रकीटा : सविषानदर्दुरसरीसृपा : । नकृत्याकर्मणास्तत्रधूपोयंयत्रदह्यते ॥

विषघ्ना । स्त्री० चित्रलतायाम् ॥ गुडूच्याम् ॥

विषघ्नी । स्त्री० हिलमोचिकायाम् ॥ वृन्दवारुण्याम् ॥ वनबर्वरिकायाम् ॥ स्वल्पफलायाम् ॥ भूम्यामलक्याम् ॥ रक्तपुनर्नवायाम् ॥ हरिद्रायाम् ॥ वृश्चिकाल्याम् ॥ महाकरञ्जे ॥ हबुषायाम् ॥

विषङ्गी । त्रि० मिथ : श्लिष्टे ॥

विषजिह्व : । पुं० देवताडवृक्षे ॥

विषज्वर : । पुं० महिषे ॥ विषजज्वरे ॥

विषगुण्डम् । न० मृणाले ॥

विषण्ण : । त्रि० विषादप्राप्ते ॥ भग्नोत्साहे ॥ दु : खिते ॥ विषीदतिस्म । षद्लृ० । गत्यर्थेतिक्त : । रदा

ध्यामितिनत्वम् ॥
विषसूता । स्त्री॰ जडतायाम् ॥
विषतिन्दुः । पुं॰ कुपीलौ ॥ कारस्करवृक्षे ॥
विषदम् । न॰ पुष्पकासीसे ॥ त्रि॰विषदातरि ॥ यथा । विषदः श्यावशुष्कास्योविलक्षोवीच्यतेद्दिशः । स्वेदवेपथुमांस्त्रस्तोभीतः स्खलति जृम्भते ॥ विषंददाति । ददाञ्॰। आतइतिकः ॥
विषदंष्ट्रा । स्त्री॰ सर्पकङ्काल्याम् ॥
विषदन्तकः । पुं॰ सर्पे ॥
विषदर्शनमृत्युकः । पुं॰ चकोरपक्षिणि ॥ जीवञ्जीवस्तुगुन्द्रालोविषदर्शनमृत्युकइतिहेमचन्द्रः ॥
विषद्रुमः । पुं॰ कारस्करवृक्षे ॥
विषधरः । पुं॰ आशीविषे । सर्पे ॥ विषस्यधरः ॥
विषधर्मा । पुं॰ कुलक्षयायाम् । शूकशिम्ब्याम् ॥
विषधात्री । स्त्री॰ जिषवर्ष्याम् ॥
विषनाशनः । पुं॰ शिरीषवृक्षे ॥ त्रि॰ विषनाशके ॥
विषनाशिनी । स्त्री॰ सर्पकङ्काल्याम् ॥ नाकुल्याम् ॥
विषनुत् । पुं॰ श्योनाकवृक्षे ॥
विषपुष्पः । पुं॰ मदनद्रुमे । मयनफलवृ॰क्ष॰ ॥ न॰ नीलपद्मे । विषयुक्तपुष्पे ॥
विषपुष्पकः । पुं॰ मदनवृक्षे ॥ ज्वरे ॥ विषपुष्पभक्षणजन्यरोगे ॥ विषपुष्पैर्जनितः । कालप्रयोजनाद्रोगइतिकन् ॥
विषभक्षणम् । न॰ विषखादने ॥ चषमुहूर्तमाह । चराचरेन्द्रकुलघुक्षिप्राविषाशनेभानुकवीन्दुभौमाम् । यद्वेहतेऽनेकविधानितावत्सकालकूटानिसदेतिवेना ॥
विषभिषक् । पुं॰ विषवैद्ये ॥
विषमः । पुं॰ अलङ्कारविशेषे ॥ यथा । क्वचिद्यदतिवैधर्म्यान्नश्लेषोघटनामियात् । कर्त्तुः क्रियाफलावाप्तिर्नैवानर्थश्चयद्भवेत् ॥ गुणक्रियाभ्यां कार्यस्यकारणस्यगुणक्रिये । क्रमेण चविरुद्धे यत्सएवविषमोमतः ॥ इयोरत्यन्तविलक्षणतया॰यदनुपपद्यमानमयेनयोगः प्रतीयते॰यत्रकिञ्चिदारभमाणः कर्त्ता॰क्रियायाः प्रणाशान्नकेवलमभीष्टं तत्फलंनलभेत॰यावदप्रार्थितमप्यनर्थं विषयमासादयेत्॰तथासत्यपिकार्यस्यकारणरूपाऽनुकारेयत्तयोर्गुणौक्रियेचपरस्परविरुद्धतांव्रजतः ॰ससमविषयात्मा॰चतूरूपोविषमः । क्रमेणोदाहरणम् । शिरीषादपिमृद्वङ्गीकेयमायतलोचना । अयंक्वचकुकूलाग्निकर्कशोमदनानलः ॥ सिंहिकासुतसन्त्रस्तः शशः शीतांशुमाश्रितः । जयसेसाश्रयंतत्रसमन्यः सिं

ष्टिका सुत : ॥ सद्य : करस्य शर्मवा प्यविषं रथे रणे यस्य कृपाणलेखा । तमालनीला शरदिन्दु पाण्डु यशस्त्रि लोक्याभरणं प्रसूते ॥ आनन्दमम न्दमिमं कुवलयदललोचने ददासित्व म् । विरहस्त्वयैव जनितस्तापयति तरां शरीरं मे ॥ अत्रानन्ददानं शरीर तापेन विरुध्यते ॰ एवम् ॰ विपुलेनसा गरशयस्य कुक्षिणा । भुवनानि यस्य प पिरे युगक्षये । मदविभ्रमासकलया पपे पुन : स पुर स्त्रैकतमयैकदृशा ॥ इत्यादावपि विषमत्वं यथायोगम वगन्तव्यम् ॥ तालभेदे ॥ यथा । चतुर्विध : परिज्ञ स्ताल : कङ्कणा नातक : । पूर्ण : खण्ड : समश्चै व विषमश्चै वकाथ्यते ॥ सचतुष्कांगपो पूर्ण स्तवखण्डे विन्दुद्वयं गुरु : । यगणा स्तु समे ज्ञे यस्तगणो विषमेऽभिधे इति ॥ अयुग्मराशौ ॥ न ॰ विषमाश्रमे ॥ वहुशो वामकालेषु भुक्तं यद्विषमं स्थि तत् ॥ पद्यस्य त्रिविधवृत्तान्तर्गतवृत्त विशेषे ॥ यथा । पद्यं चतुष्पदी तच्च वृत्तं जातिरितिद्विधा । वृत्तमक्षरस ङ्ख्यातं जातिर्मात्राकृताभवेत् ॥ सममर्द्धसमं वृत्तं विषमञ्चेति तत्त्रिधा । समं समचतुष्पादं भवत्यर्द्धसमं पुन : ॥ आदिस्तृतीयवद्यस्य पादस्तु र्यो द्वितीयवत् । भिन्नचिह्नचतुष्पा दं विषमं परिकीर्त्तितम् ॥ स्फुटे । उन्नतानते । उच्चनीचस्थाने ॥ त्रि ॰ असमाने ॥ कोपने ॥ अयुग्मे ॥ वि गत : सम : सदृशोऽस्य । सुविनि र्दुर्भ्यः : सुषिसूतिसमाद्गतिषत्वम् ॥

विषमच्छद : । पुं ॰ सप्तपर्णे । इतवि षीतिप्रसिद्धे ॥ विषमाश्छदायस्य स : ॥

विषमज्वर । पुं ॰ चतुर्थकादिज्वरवि शेषे ॥ तद्भेदानाह । दोषा ल्पोऽहितसम्भूतो ॰ ज्वरोत्सृष्टस्यवा पुन : । धातुमन्यतमं प्राप्य करोति वि षमज्वरम् ॥ सन्ततं रससक्तस्थ : स ततं रक्तधातुग : । दोष : क्रमोज्वरं पुंमांसोऽन्येद्यु : पिशिताश्रित : ॥ मेदोगतस्तृतीयेऽह्नि त्वस्थिमज्जग त : पुन : । कुर्याच्चतुर्थकं घोरम न्तकं रोगसङ्करम् ॥ य : स्यादनिय तात्कालाच्छीतोष्णाभ्यां तथैवच । वे गतश्चापि विषमो ज्वर : स विषम : स्मृ त : ॥ अस्य भेदा यथा । सन्तत : स ततोऽन्येद्युस्तृतीयकचतुर्थका वि ति ॥

विषमनयन : । पुं ॰ शिवे ॥ विषमो निनयनानि यस्य ॥

विषमल्ल : । पुं ॰ जाङ्गल्याम् । विष विद्यायाम् ॥

विषमर्दनिका । } विषमर्दनी । } स्त्री ॰ गन्धनाकुल्याम् ॥

विषमस्थ : । त्रि॰ दरिद्रे ॥ विषमेतिष्ठति । ष्ठा॰ । सुपिस्थइतिकः ॥ उपप्लवदेशस्थे ॥

विषमाक्ष : । पुं॰ शिवे ॥ विषमाण्यक्षीण्यस्य सः ॥

विषमायुध : । पुं॰ कामे । पञ्चशरे ॥ विषमाण्यायुधानि यस्य ॥

विषमाशनम् । न॰ अकालेबहुचाल्पं वाभुक्तन्तुविषमाशनमितिलक्षिते ॥ बहुस्तोकमकालेवाभुक्तं तद्विषमाशनम् ॥

विषमित : । त्रि॰ विषमीकृते

विषमीयम् । त्रि॰ विषमदेशभवे ॥ गहादिभ्यश्छ इतिछः ॥

विषमुष्टि : । पुं॰ महानिम्बे ॥ क्षुपविशेषे । सुमुष्ट्याम् । रणमुष्टिके ॥ विषंमुष्णाति । मुष॰ । क्तिच् ॥

विषमृत्यु : । पुं॰ चकोरे ॥

विषमेषु : । कामे ॥ विषमाइषवोयस्य सः ॥

विषमोन्नत : । त्रि॰ स्थपुटे ॥

विषय : । पुं॰ चक्षुरादिग्राह्ये रूपादौ इन्द्रियार्थे । गोचरे ॥ न्यायमतेक्षित्यप्तेजोवायूनांविषया यथा । तत्र क्षितिर्गन्धहेतुर्नानारूपवतीमता । षड्विधस्तुरसस्तत्रगन्धोपिद्विविधो मतः ॥ स्पर्शस्तस्यास्तुविज्ञेयोह्यनुष्णाशीतपाकजः । नित्यानित्याचसा द्वेधानित्यास्यादणुलक्षणा ॥ अनित्यातुतदन्यास्यात्सैवावयवयोगिनी साचत्रिधाभवेद्देहइन्द्रियंविषयस्तथा ॥ योनिजादिर्भवेद्देहइन्द्रियंघ्राणलक्षणम् । विषयोद्व्यणुकादिश्च ब्रह्माण्डान्तउदाहृतः ॥ वर्णः शुक्लोरसस्पर्शौजलेमधुरशीतलौ । स्नेहस्तत्रद्रवत्वन्तुसांसिद्धिकमुदाहृतम् ॥ नित्यतादिप्रथमवत्किन्तुदेहमयोनिजम् । इन्द्रियंरसनंसिन्धुर्हिमादिर्विषयोमतः ॥ स्पर्शउष्णस्तेजसस्तुस्याद्रूपंशुक्लभास्वरम् । नैमित्तिकंद्रवत्वन्तुनित्यतादिचपूर्ववत् ॥ इन्द्रियंनयनंवह्निस्स्वर्णादिर्विषयोमतः ॥ अपाकजोऽनुष्णाशीतः स्पर्शस्तुपवनेमतः । तिर्यग्गमनवानेषज्ञेयः स्पर्शादिलिङ्गकः ॥ पूर्ववन्नित्यताद्युक्तं देहव्यापित्वगिन्द्रियम् । प्राणादिस्तुमहावायुपर्यन्तोविषयोमतः ॥ विषिण्वन्तिविषयिणमवबध्नन्ति स्वेनरूपेणनिरूपणीयंकुर्वन्ति॰ इतिविषयाः । षिञ् बन्धने । पचाद्यच् । परिनिवीतिषत्वम् । विषयणमनया॰ विश्रिणोतिवा । षिञएरच्॰ पुं ॥ इतिघोषा॰ पचाद्यज्वा ॥ विषस्यविषयाणाञ्च दूरमत्यन्तमन्तरम् । उपभुक्तंविषंहन्तिविषयाः स्मरणादपीतिविषयानुसन्धानस्यनिन्दितत्वादिन्द्रियार्थेषु

…ञ्चिविषयेतिसतांमतम् ॥ यथोक्तम् । दोषिणतीत्रो विषय : कृष्णा सर्पविषादपि । विषंनिहन्तिभोक्ता रंद्रष्टारञ्चक्षुषाप्ययम् ॥ अपिच । विषयविषधराणांदोषदंष्ट्रोत्कटानां विषविषमविसर्पव्यक्तदुश्चेष्टितानाम् । विरमविरमचेत : सन्निधानाद्मीषामसुखकणमणिष्ठैता : सारसंमासकाशी : ॥ इति ॥ नियामके यथा । विशब्दोहिविशेषार्थ : सिनोतेर्बन्धउच्यते । विशेषेणसिनोतीतिविषयोऽतोनियामक : ॥ इति ॥ प्रबन्धाद्यस्त्रयोज्ञातस्तत्र ॥ यथाजीवब्रह्मैक्यंशुद्धचैतन्यंप्रमेयंवेदांतानांविषय : ॥ कुरुपञ्चालादिदेशे ॥ जनपदे ॥ अयने ॥ शुक्रे ॥ आश्रये । आश्रये ॥ भोगसाधने ॥ सर्वमेव हिकार्यमदृष्टाधीनम् यच्चकार्यंयददृष्टाधीनेतत्तदुपभोगसाक्षात्परम्परयाजनयत्येव नहिभोजप्रयोजनाभ्यांविनाकस्यचिदुत्पत्तिरस्ति तेनह्यणुकादिब्रह्माण्डान्तसर्वमेवविषयोभवतीत्यर्थ : । इतिसिद्धान्तमुक्तावली ॥

विषयवित् । पुं० वात्स्यायनादिमुनिषु ॥ तेचेत्यंकल्पयन्ति-शब्दादयोविषया: भूयोभूयोभुज्यमानास्तत्त्वमिति तदेतत्कल्पनंतेषांविभ्रममात्रम् । विषयञ्चविषयगाणाश्च तिविष…

यानुसन्धानस्यनिन्दितत्त्वात् ॥

विषयाज्ञानम् । न० तन्द्रायाम् ॥

विषयायी । पुं० राज्ञि ॥ वैषयिकजने ॥ इन्द्रिये ॥ कामदेवे ॥ विषयासक्तपुरुषे ॥

विषयी । पुं० नृपतौ ॥ कामदेवे ॥ वैषयिके ॥ ध्वनौ ॥ विषयोऽस्यास्ति । अतइनि : ॥ देशे ॥ ग्रन्थादित्वाम्निर्वृद्ध्यभाव : पक्षेऽस्मिनपाक्षति ॥ न० इन्द्रिये ॥ त्रि० विषयासक्ते ॥ आरोप्यमाणे ॥

विषयोग : । पुं० तिथिवारयोर्योगविशेषे ॥ यथा । षष्ठीशशाङ्केनवमीचशुक्रेबुधेद्वितीयातपनेचतुर्थी । जीवेष्टमी सौरिकुजेस्तिसप्तमीयोगाविषाख्या : कुलनाशका : स्यु : ॥ बुधवारेभद्रारूपेणसिद्धियोगस्तुसप्तमीशादशमीयारितार्थी नतुद्वितीयायामिति । अन्यथाबद्वस्यपूर्वाक्यविरोध : स्यादिति ॥

विषरूपा । स्त्री० अतिविषायाम् ॥

विषलम् । न० विषे ॥

विषलता । स्त्री० इन्द्रवारुण्याम् ॥

विषविद्या । स्त्री० विषघ्नमन्त्रे ॥

विषवैद्य : । पुं० कथाप्रसङ्गे । गारुडिके । जाङ्गुलिके ॥ विद्यामधीते वेत्तिवा । तदधीतेतद्वेदेत्यण् । विषवैद्य : ॥

विषवैरिणी । स्त्री० निर्विषायाम् ॥

विषशालूक : । पुं॰ पद्मकन्दे ॥

विषशूक : । ) पुं॰ भृङ्गरोले ॥
विषशृङ्गो । )

विषसूचक : । पुं॰ चकोरे ॥

विषस्त्रक्षा । स्त्री॰ भृङ्गरोलि ॥

विषहन्त्री । स्त्री॰ अपराजितायाम् ॥ निर्विषायाम् ।

विषहरः । पुं॰ गरलनाशकौषधादौ ।

विषहरा । ) स्त्री॰ मनसादेव्याम् ॥
विषहरी )

विषहा । स्त्री॰ देवदालीलतायाम् ॥

विषा । अ॰ बुद्धौ । विपूर्वात् स्यतेर्विषाविड्त्याप्रत्यय : ॥

विषा । स्त्री॰ अतिविषायाम् ॥ विषा सोष्णाकटुस्तिक्तापाचनीदीपनीहरेत् । कफपित्तातिसारामविषकासवमिक्रमीन् ॥ बुद्धौ ॥ वेवेष्टि । विषल॰ । विषप्रयोगेवा । इगुपधेति क : ॥

विषाङ्कुर : । पुं॰ शल्यास्त्रे ॥

विषाणम् । न॰ पशुशृङ्गे ॥ इभदन्ते ॥ कुष्ठनामौषधे ॥ क्रोले ॥ व्यस्ति । असभुवि । चानश्शसोरल्लोपः । उपसर्गप्रादुर्भ्यामितिषत्वम् ॥

विषाणिका । स्त्री॰ मेषशृङ्ग्याम् ॥ सातलायाम् ॥ कर्कटशृङ्ग्याम् ॥ आवर्त्तक्याम् ॥

विषाणी । पुं॰ हस्तिनि ॥ शृङ्गिणि ॥ ऋषभनामौषधे ॥ शृङ्गाटके ॥

विषाणी । स्त्री॰ क्षीरकाकोल्याम् ॥ अजशृङ्ग्याम् ॥ फलस्याजशृङ्गसदृशत्वात् । विषाणमस्त्यस्या : । अर्श आद्यच् । गौरादि : ॥ तिन्तिडाम् ॥ ऋषभौषधे ॥ वृश्चिकाल्याम् ॥

विषाद : । पुं॰ अवसादे । उपतापे । स्नेहविषयीभूतस्वजनविच्छेदाशङ्कानिमित्तशोकापरपर्यायेचित्तव्याकुलीभावे ॥ इष्टनाशकृतेमनोभङ्गे ॥ तदुक्तम् । विषादश्चेतसोभङ्गउपायाभावनाशयोरिति-विषदनम् । षद्लृ॰ । घञ् । मोहे ॥ विषादात्मकस्तमोगुण : ॥

विषादनी । स्त्री॰ पलाशीलतायाम् ।

विषादी । त्रि॰ सततमसन्तुष्टस्वभावत्त्वेनानुशोचनशीले ॥

विषानन : । पुं॰ सर्पे ॥

विषान्तक : । पुं॰ शिवे ॥ त्रि॰ विषनाशके ।

विषापह. । पुं॰ पाटलौ । मुष्कके ॥

विषापहा । स्त्री॰ इन्द्रवारुण्याम् ॥ निर्विषायाम् ॥ नागदमन्याम् । अर्कमूलायाम् ॥ सर्पकङ्कालिकायाम् ॥

विषाभावा । स्त्री॰ निर्विषायाम् ॥

विषायुध : । पुं॰ सर्पे । न॰ विषयुक्तास्त्रे ॥

विषारः । पुं॰ सर्पे ॥

विषाराति: । पुं॰ कृष्णधत्तूरके ॥

विषारिः । पुं॰ घृतकरञ्जे ॥ महाचञ्चुशाके ॥

विषास्यः । पुं॰ सर्पे ॥ त्रि॰ विषयुक्तमुखे ॥

विषास्या । स्त्री॰ भल्लातके ॥

विषीदन् । त्रि॰ विषादंकुर्वति । षदिदुः खिन्ने ॥

विषु । अ॰ नानार्थे ॥ साम्ये ॥ सर्वतोर्थे ॥

विषुण: । पुं॰ विषुवदाख्येकाले । विषुवे ॥ विषुनानाअस्मिन्निति विष्वग्विति । तान्यस्यसन्ति । पामादिषु॰ विष्वगित्युत्तरलोपश्चाक्रतसर्व्वरितिगणसूत्रात्प्रत्ययउत्तरपदलोपश्च । विषुवदाख्यकालस्यदिनानागतानिदिनानिसंति॰ दिनाम्तरायांन्यूनाधिकभावस्यतन्मूलकत्वात् ॥

विषुवम् । न॰ समरात्रिन्दिवेकाले । तुलामेषयोरर्कसङ्क्रमे ॥ विषुसाम्यमस्यास्ति॰ तुलयामेषेवास्तीत्यर्थे॰ वप्रकरणेऽन्येभ्योपीत्युक्तोवः ॥

विषुवत् । न॰ विषुवे ॥ प्रथमेकृत्तिकाभागेयदाभास्वांस्तदाशशी । विशाखानांचतुर्थेंशेमुनेतिष्ठत्यसंशयम् ॥ विशाखायांयदासूर्यश्चरत्यंशंतृतीयकम् । तदाचन्द्रंविजानीयात्कृत्तिकाशिरसिस्थितम् ॥ तदैव विषुवाख्योयंकालः पुण्योभिधीयते । तदादानानिदेयानिदेवेभ्यः प्रयतात्मभिः ॥ इतिविष्णुपुराणम् ॥ विषुसाम्यमस्यास्ति॰ तुलयामेषेवास्तीत्यर्थेमतुप्प्रत्ययः ॥

विषूचिः । स्त्री॰ नानागतौ ॥ पृथक्फले ॥

विषूचिका । स्त्री॰ प्रवाहिकायाम् ॥

विषूचीनः । त्रि॰ सर्वतः प्रसृते ॥

विषौषधी । स्त्री॰ नागदन्त्याम् ॥

विष्कः । पुं॰ विंशतिवर्षकेगजे ॥

विष्कम्भः । पुं॰ योगविशेषे ॥ तत्रोत्पन्नस्यफलंयथा । विष्कम्भयोगेयदिजन्मकालेकार्येस्वतन्त्रोमनुजस्तदानीम् । सुहृत्कलत्रात्मजसौख्ययुक्तोगृहस्यनिर्माणविधौसमर्थः ॥ विस्तारे ॥ प्रतिबन्धे । अर्गलायाम् । आगल॰ इतिभाषा ॥ योगिनांबन्धभेदे ॥ विष्कभ्नाति । स्कभुः सौत्रोरोधनार्थः । कर्मण्यण् । वेः स्कभ्नातेरितिषत्वम् इत्वं ॥

विष्कम्भकः । पुं॰ पूर्वनटसङ्क्षेपपूर्वकतत्प्रतिपन्नोत्कृष्टनटप्रवेशे ॥ यथा । वृत्तवर्त्तिष्यमाणानांकथांशानांनुसूचकः । विष्कम्भकस्तुविख्यातोहीनपात्रप्रयोजकइति ॥

विष्कम्भशैल : । पुं॰ मेरोर्दार्ढ्यार्थं स्थितेषु चतुर्षु पर्वतविशेषेषु ॥ यथा । विष्कम्भशैलाश्चत्वारो मेरोः स्थैर्यायवेधसा । लक्षार्द्धोन्नतयः क्लृप्ता स्तेषां पूर्वेण मन्दरः ॥ श्वेतोहरिद्रा चूर्णाभोयाम्यतो गन्धमादनः । प्रतीच्यां विपुलो नील : सुपार्श्व : सौम्यतोऽरुण : ॥ सहस्रयोजनोच्छ्राया स्तेषु कल्पद्रुमाः स्थिताः । कदम्बजम्बू अश्वत्थ न्यग्रोधाश्चोत्तरान्तिका ॥

विष्कम्भि । न॰ अर्गलायाम् ॥ विष्कभ्नाति॰ कणादि । स्कम्भु॰ । आवश्यके णिनि : ॥

विष्कल : । पुं॰ ग्राम्यशूकरे ॥ इ॰ रा॰ नि॰ ॥

विष्किर : । पुं॰ खगे । पक्षिणि ॥ पक्षिविशेषाणांगणे ॥ यथा । वर्त्तकालावविकिरकपिञ्जलकतित्तिराः । कुलिङ्गकुक्कुटाद्याश्च विष्किराः समुदाहृता : ॥ विकीर्य्य भक्षयन्त्येते यस्मात्तस्माद्धि विष्किरा : ॥ विष्किरा मधुरा : शीता : कषाया : कटुपाकिन : । बल्या वृष्यास्त्रिदोषघ्ना: पथ्यास्ते लघव : स्मृता : ॥ विकिरति । क॰ । इगुपधेतिक : । विष्किर : शकुनिर्विकिरो वेति पक्षे सुट् । परिनिविभ्य इति षत्वम् ॥

विष्ट : । त्रि॰ प्रविष्टे ॥ संवद्धे ॥ विशति । विश॰ । क्त : ॥

विष्टपम् । न॰ पुं॰ विष्टपे । भुवने ॥ विशन्त्यस्मिन् सुकृतिन : । विशप्रवेशने । विटपविष्टपविशिपोलपा इति विशेरौणादिक : कपन् प्रत्यय: । प्रत्ययस्य तुट् । ष्टुत्वम् । सूत्रे विष्टपस्थाने पिष्टप इति पकारादि पाठस्तूज्ज्वलदत्तरीत्योक्त इति बोध्यम् । नायं युक्त: यत्र ब्रध्नस्य विष्टपमित्यादौ॰ दन्त्योष्ठ्यादि पाठस्य दर्शनात्

विष्टब्ध : । त्रि॰ विधृते ॥

विष्टम्भ : । पुं॰ प्रतिबन्धे ॥ आमयस्य भेदे । आनाहरोगे ॥ तल्लक्षणन्तु । आमं सकृद्वाभिचितं क्रमेण भूयो विबद्धं विगुणानिलेन । प्रवर्त्तमानं न यथा स्वमेनं विकारमानाहमुदाहरन्ति ॥ आममपक्वमाहाररसम्॰ शकृत्पुरीषं वा क्रमेण निचितं सञ्चितम्॰ भूयो विगुणानिलेन दुष्टवायुना विबद्धं व्यामयेषितम् वा यथा स्वं पूर्ववत् अप्रवर्त्तमानम्॰ एनं विकारमानाहमाहु : ॥ उत्तरदेशगतिप्रतिबन्धे ॥ आक्रमे ॥

विष्टम्भी । त्रि॰ विष्टम्भरोगजनके ॥ विष्टम्भरोगवति ॥

विष्टर : । पुं॰ विटपिनि । महीरुहे ॥ दर्भमुष्टौ ॥ पीठाद्यासने ॥ आदिनाकुशासनादिग्राह : ॥ सप्तभ्य ग्रन्थि दर्भासने ॥ विष्टरलक्षणम् यथा । विष्टरस्तु॰ सार्द्धहितयवामावर्तवलि

ताधोमुखायाश्चसंख्यातदर्भाः ।
तथाचगृह्यसूत्रः । अर्द्धशिरोभवेद्
ब्रह्मालम्बकेशस्तुविष्टरः । दक्षिणा
वर्त्तकोब्रह्मावामावर्त्तस्तुविष्टरः ॥
इति ॥ दर्भसङ्ख्यानविहिताविष्टरास्तरणेष्वपीतिच ॥ विस्तीर्यते । स्तृञ्आच्छादने । वृक्षासनयो
विष्टरइतिसाधुः । विपूर्वात्स्तृञ्
इत्येतस्मात्० ऋदोरप्० इत्यपि०
षत्वंनिपातनादित्यर्थः ॥

विष्टरश्रवाः । पुं० विष्णौ ॥ विष्टरेषु
श्रूयते । असुन् । वृक्षाश्वत्थो
भिमतः० अश्वत्थः सर्ववृक्षाणा
मित्युक्तेः ॥ विष्टरोदर्भमुष्टिरिवश्र
वसीकर्णावस्येतिवा ॥

विष्टरा । स्त्री० गुण्डासिन्याम् ॥

विष्टरूषा । स्त्री० स्वर्णकेतक्याम् ॥

विष्टिः । स्त्री० वेतनंविनाहठाद्वारी
इत्यनादिकर्म्मणि । आज्ञाम् । वेठी०
वेठू० बेगारी० इतिभाषा ॥ ह
ठाद्भृतिकः कर्म्मणिविष्टिराजूर्त्तकी
र्त्यते ॥ वेतने ॥ कर्म्मणि ॥ प्रे
षणे ॥ करणान्तरे । भद्रायाम्
॥ अस्याउत्पत्तिमाह । भद्रापुरा
संयुगदेवविग्रहेत्वभूत्रवामीषदना-
मरासुरे । लाङ्गूलिनीसप्तभयाचि-
पद्गतीवराटकाद्दग्धमघोषकस्वना
॥ वामीरासभीतद्वदनंमुखंयस्याः ।
घनोनिविडः० कुत्सितोघोषोघोष

का: कुत्सितकांश्चैंतद्वत्स्वनः श
ब्दोयस्याः ॥ आविप्रविष्टाकुणपां
शुकाम्बराऽमरद्विषामग्रजकाननेत
दा । परेतगाधूमनिभाबलोद्धतो
वाणैश्वसाभूदतिदीर्घविग्रहा ॥ आ
लिसमूहे । अग्रजकानने० पितृव
ने । परेतगा० शवबाहना ॥ त
स्यास्तदाचानगिरेऽमरारयः कलि
न्दकासीद्रधामपद्धतिम् । अवाप
साकर्णपदंकपर्द्दिनोवज्रवायुधान-
न्दवतीमतद्दया ॥ आनगिरे० ज
गम् । वज्रवायुधा० अग्निश
स्त्रा । आनन्दवतः० परमसुखयुक्त
स्य ॥ विधेयमेवाऽग्निशिखायता
लुका० फलंनसाशेतवराऽस्तिमङ्गल
म् । नरैरतः स्वात्महितोपलब्धि
भिस्तदाश्रितंस्वाश्रितकर्मसिद्धिजम्
शेतवरा० ब्राह्मणात्कृतः प्राप्ता
वरोयया । अग्निशिखायतालुका०
वह्निज्वालायद्वत्तालुकंयस्याः ।
स्वाश्रितकर्मसिद्धिजम्० स्वयावि
ष्ट्याश्रितंविहितंकर्मतस्यसिद्धि-
स्तस्याजातम्० भद्रायांकृतकार्य-
निष्पत्तिजातम् । तदाश्रितम्०
विष्टिवेलाप्राप्तम्० मङ्गलमुद्वाहा-
दिकंनविधेयम् । स्वात्महितोप
लब्धिभिः० स्वात्मनेनिजजीवाय०
हिता० हितकारिणी० उपलब्धि
र्बुद्धिः प्राप्तिर्ज्ञानंवायेषांतैः ॥

विष्टियोग्यकालमाह । शुक्लेऽष्टमीपौर्णमास्योः पूर्वार्द्धे विष्टिसम्भवः । एकादशीचतुर्थ्योश्चपरार्द्धे विष्टिरीरिता ॥ दशम्याश्चतृतीयायाः परार्द्धे कृष्णपक्षके । चतुर्द्दश्याश्चसप्तम्याः पूर्वार्द्धेविष्टिरेवहि ॥ विष्टिस्तुसर्पाकृतिरेव । आननेपञ्चदण्डाः स्युर्वक्षःस्थानेचतुर्द्दश । मध्येचाष्टौविजानीयाद्विष्टिपुच्छेत्रयः स्मृताः ॥ फलंतु । आननेदेहनाशः स्याद्वक्षःस्थानेमहद्भयम् । मध्येचमध्यमंविद्याद्विष्टिपुच्छेध्रुवंजयः ॥ प्रकारान्तरञ्चापि । मुखेपञ्चगलेत्वेकावक्षस्येकादशस्मृताः । नाभौचतस्रः षट्कट्यांतिस्रः पुच्छेतुनाडिकाः ॥ फलंतु । मुखेकार्य्यध्वंसिर्भवति० मरणंचाथगलके० धननाशोवक्षस्यथकटितटेबुद्धिविलयः । कलिर्नाभीदेशेविजयमथपुच्छेचजगदुः शरीरंभद्रायाः पृथगितिफलंपूर्वमुनयः ॥ मनुवसुमुनितिथियुगदशशिवगुण-सङ्ख्यासुतिथिषुपूर्वान्योः १४ । ८ । ७ । १५ । ४ । १० । ११ । ० ३ । यायातिविष्टिरेषापृष्ठेशुभदापुरस्त्वशुभदा ॥ पूर्वान्योः० पूर्वाम्न्यादिदिङ्मुखीभवतीत्यर्थः ॥ शिवायविपरीताविष्टिंसर्वत्रवर्जयेत् । विष्टिपुच्छेचिदगड्ढेऽपि शेषिकार्येशुभावहम् ॥ त्रि० कर्मकर्त्तरि ॥ विशतिक्लेशम् । विश० क्तिच ॥ यद्वा । विष्णाति । विषविप्रयोगे । क्तिच् ॥ यद्वा । विष्यतेकर्म्मणि । क्तिन् ॥

विष्टुतिः । स्त्री० सामगानांस्तुतिप्रकारविशेषे ॥ तस्याविष्टुतेरुद्यतीतिनाम । एवंपरिवर्त्तिनीकुलायिनीतिद्वेविष्टुती ॥

विष्ठा । स्त्री० उच्चारे । शमले गूथे । विषिपुरीषे ॥ विविधप्रकारेणतिष्ठतिउदरे० अनयावा० पुरुषः । ष्ठा० । आतदूतिकः । उपसर्गादितिषः ॥

विष्ठारुहा । स्त्री० स्वर्णकेतक्याम् ॥

विष्णुः । पुं० नारायणे । देशकालवस्तुपरिच्छेदशून्येव्यापनशीलेपरमात्मनिवासुदेवे ॥ यथाविष्णुपुराणे । ज्योतींषिविष्णुर्भुवनानिविष्णुर्वनानिविष्णुर्गिरयोदिशश्चनद्यः समुद्राश्चसएवसर्वंयदस्तियन्नास्तिचविप्रवर्येति ॥ यथावा तत्त्वादिनीचैः सुकृतानसत्यानृपाषाणमृद्दारुमयादिदेवान् । भजन्तियेमाधवनिन्दकास्तेपूर्णः सदानन्दमयोहिविष्णुरिति ॥ अपिच । वेदेरामायणेचैवपुराणेभारतेतथा । आदावन्तेचमध्येचविष्णुः सर्वत्रगीयतइति । अवजातंवेकवचनंवोध्यम् ॥ द्वादशादित्यानांमध्येभगवतोवासुदेवस्यविभूतौ । आदित्यानामहंविष्णुरित्यु

क्तो : । वेवेष्टिव्याप्नोतिविश्वम् । विष्लृव्याप्तौ । विषे: किञ्चेति॰नु: । रषाभ्यामितिणत्वम् ॥ वेषति॰ सिञ्चति॰आप्याययतिविश्वम्॰इति वा । विष्णाति॰वियुङ्क्तेभक्तान्॰ मायापसारणेनसंसारादितिवा । पूर्वस्तु : । विशति॰भूतेन्द्रियम नोजीवभावेनसर्वप्राणिन : ॰विश न्तिसर्वभूतान्यत्रेतिवा । यस्माद्वि ष्टमिदंसर्वंतस्यशक्त्यामहात्मन : । तस्मादेवोच्यतेविष्णुर्विशधातो: प्र वेशनात् ॥ यद्वा । रोदसीव्याप्यका न्तिरभ्यधिकास्थितास्येतितथा। व्या प्त मेरोदसीपार्थकान्तिरभ्यधिकास्थि ता । विशेषेणक्रामति । क्रमु॰वि पूर्व : । अस्मात् णुप्रत्ययेधातुलो पश्चपृषोदरादित्वात् क्रमणाद्वाप्यहं पार्थविष्णुरित्यभिधीयते ॥ यत्त्वो ॥ वामने ॥ वेवेष्टित्रिभिर्विक्रमैरेवलो कत्रयमितितथा ॥ युते ॥ वसुदेव तापाम् ॥ वह्नौ ॥ धर्मशास्त्रकर्तृमु निविशेषे ॥

विष्णुकटम् । न॰ श्रवणर्क्षे ॥

विष्णुकन्द : । पुं॰ मूलविशेषे ॥ वि ष्णुगुप्ते । जलवासे । बृहत्कन्दे । दीर्घपत्रे ॥

विष्णुक्रान्ता । स्त्री॰ अपराजिताया म् ॥ अपराजितायाअन्यासुपजा तिरपिविष्णुक्रान्ता । तत् पर्याया:



। हरिक्रान्ता॰नीलपुष्पा॰अपराजि ता॰नीलक्रान्ता॰सुनीला॰विक्रान्ता ॰इतिकेतिराजनिघण्ट : ॥

विष्णुगुप्त : । पुं॰ कौण्डिन्यमुनौ ॥

विष्णुगुप्तकम् । न॰ चाणक्यमूलके ॥

विष्णुगृहम् । न॰ विष्णुमन्दिरे । ता म्रपुरे ॥

विष्णुचक्रम् । न॰ सुदर्शनचक्रे ॥ क रस्थरेखामयचक्रे ॥ विष्णुचक्रंकरे चिह्नंसर्वेषांचक्रवर्त्तिनाम् । भव त्यस्यास्तृतीयस्यप्रभावस्त्रिदशैरपि ॥

विष्णुतैलम् । न॰ भैषज्यरत्नावल्या द्युक्ते लघुवृहद्भेदभिन्नेतैलविशेषे ॥

विष्णुदत्त : । पुं॰ परिचित्नृपतौ ॥

विष्णुदैवतम् । )<br>विष्णुदैवत्यम् । ) त्रि॰ विष्णुरधिष्ठातृ देवताके ॥ श्रवणे ॥

विष्णुदैवत्या । स्त्री॰ एकादश्याम् ॥ द्वादश्याम् ॥ एकादशीद्वादशीचप्रो क्ताश्रीचक्रपाणिन : ॥

विष्णुधर्म : । पुं॰ शास्त्रविशेषे ॥ वि द्याविशेषे ॥

विष्णुधर्मोत्तरम् । न॰ संहिताविशे षे ॥ तत्रप्रश्नकर्त्ताजनमेजयसुत : ॰वक्तार : शौनकादय : ॥

विष्णुपञ्जरम् । न॰ विष्णुकवचविशे षे ॥

विष्णुपदम् । न॰ वियति । आकाशे ॥ विष्णो: पदम्॰आस्पदंस्वरूपंवा ॥

चक्रे । विष्णो : स्थाने ॥ यथा ।
अपुण्यपुण्योपरमेयोपुनर्भवनिर्भयाः शान्तधियस्ततः परम्।
यद्गत्वा न शोचन्ति तद्विष्णोः परमं पदम् ॥ पुं० क्षीरोदे ॥

विष्णुपदी । स्त्री० गङ्गायाम ॥ विष्णुः पदं स्थानं यस्याः सा । गौरादित्वान्ङीष् ॥ द्वारिकायाम् ॥ रवेः सङ्क्रान्तिविशेषे । वृषालिघटसिंहेषु विष्णुपदार्कसङ्क्रमे ॥

विष्णुपुरम् । न० वैकुण्ठे ॥ विष्णोः पूः । ऋक्पूरित्यप्रत्ययः ॥

विष्णुभक्त : । त्रि० वैष्णवे । विष्णुभक्तिविशिष्टे ॥ तल्लक्षणं यथा । मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः । निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे । न हरति न च हन्ति किञ्चिदुच्चैः सितमनसं तमवेहि विष्णुभक्तम् ॥ विमलमतिरमत्सरः प्रशान्तः शुचिचरितोऽखिलसत्त्वमित्रभूतः । प्रियहितवचनोऽस्तमानमायो वसति सदा हृदि तस्य वासुदेवः ॥ सकलमिदमहञ्च वासुदेवः परमपुमान्परमेश्वरः स एकः । इति मतिरचला भवत्यनन्ते हृदयगते व्रज तान्विहाय दूरात् ॥ यमनियमविधूतकल्मषाणामनुदिनमच्युतसक्तमानसानाम् । अपगतमदमानमत्सराणां व्रज भट दूरतरेण

मानवानामिति ॥

विष्णुभक्ति : । स्त्री० भगवत्सेवायाम् ॥

विष्णुमाया । स्त्री० दुर्गायाम् ॥ चिच्छक्तौ ॥ अव्यक्तं व्यक्तरूपेण रजः सत्त्वतमोगुणैः । विभज्य यार्थं कुरुते विष्णुमायेति सोच्यते ॥ विष्णोरेव माया । एकैवशक्तिः परमेश्वरस्य भिन्ना चतुर्धा व्यवहारकाले । भोगे भवानी पुरुषेषु विष्णुः कोपेषु काली समरेषु दुर्गा ॥ इत्यनेन विष्णुकालिकयोरेकमूर्तित्वप्रतिपादनात् ॥

विष्णुयशा : । पुं० ब्रह्मयशः पुत्रे । कल्किपितरि ।

विष्णुरथ : । पुं० नागान्तके । गरुडे ॥ विष्णोरथ इव ॥ यद्वा । रथः पौरुषदेहयोरिति त्रिकाण्डशेषः । विष्णोरथः पौरुषं देहो वा ॥ विष्णोः स्यन्दने ॥

विष्णुरात : । पुं० अभिमन्युसुते । परीक्षिन्नृपतौ ॥ विष्णुनारातः ॥

विष्णुलिङ्गी । स्त्री० वर्तिकापक्षिणि ॥

विष्णुवल्लभा । स्त्री० तुलस्याम् ॥ लक्ष्म्याम् ॥ अग्निशिखायाम् ॥

विष्णुवाहनम् । न० अरुणावरजे । गरुडे ॥ विष्णोर्वाहनम् ॥ गरुडः शाल्मल्यरुणावरजो विष्णुवाहन इति हेमचन्द्रः ॥

विष्णुवाह्य : । पुं० गरुडे

विष्णुस्थानम् । न॰ तीर्थविशेषे॥

विष्यन्दन: । पुं॰ रोचकरस स्वरे । विष्यंदे॥ यथोक्तं सूदशास्त्रे । दधि क्षीरेसमेपक्त्वात्वर्द्धभागावशेषिते । चष्टमांशंक्षिपेत्तत्र खण्डलान्निस्वच स्तिलाम्॥ प्रियालपनसाम्राणांम न्यामार्च समंक्षिपेत् । क्षीरादर्द्धं घृ तस्यैवमर्करांस्ततथान्यसेत्॥ सिद्ध स्त्रिकाटकोपेत: कर्पूरेणाधिवासि त:। एषविष्यन्दनोनामदेवलोके पिदुर्लभ:॥ यस्मिन्पक्ते हिघृतंस्य न्दतेसर्वतोमुखम् । तस्मात्सूपवि धानज्ञैर्विष्यन्दनइतिस्मृत:॥ वि ष्यन्दोवृंहणोहृद्य: पित्तानिलहरो गुरु:। कफ्यावहुतरंस्वादुर्बलशुक्र करोहिम:॥ इति॥

विष्य: । त्रि॰ विषवधोचिते॥विषेण बध्य:। नौवयोधर्मविषेत्यादिना यत्॥ विषायवधोवा । उगवा दिभ्योयत्॥

विष्व: । त्रि॰ हिंस्रे॥

विष्वक्पर्णी । स्त्री॰ भूम्यामलक्याम्॥ विष्वक्षिपर्णान्यस्य॥

विष्वक्सेन: । पुं॰ जनार्दने । वि ष्णौ॥विषुनानाचञ्चतिगच्छतीति । ऋत्विगादिनाक्विन् । उगितश्चेति ङीप् । विष्वचीसेनायस्य । मकार परत्वादेतिसंज्ञायामगादितिनष त्वम्॥ विष्वगञ्चतिपलायन्तेदैत्य सेनायद्दर्शनोद्योगमात्रेणेतिवा॥ वि ष्णोर्निर्माल्यधारिणि॥ चयीट्रीम मौ॥

विष्वक्सेनप्रिया । स्त्री॰ वाराह्यामोष धौ । चामारआलू॰हू॰गौ॰दे॰भा॰। लक्ष्म्याम्॥विष्वक्सेनस्यप्रिया॥

विष्वक्सेना । स्त्री॰ प्रियङ्गौ । फलि न्याम्॥ विष्वक्सेनेति विज्ञ् वर्ष्मणे । क्षत्त्रलमौत्यादिनाम:॥

विष्वक् । ष॰ पारत:। समन्तादर्थे॥ नानाविधगतौ॥ तुल्याडेराच काले॥ विषुञ्चति । चञ्चु॰। क्विन्॥

विष्वङ् । पुं॰ पुरुषे । आत्मनि । घ ञ्चौ॥ विविधंसृष्टत्चञ्चति । अञ्चु॰। क्विन्॥

विष्वणनम् । न॰ भोजने॥ भक्षकर णे॥

विष्वद्रयङ् । त्रि॰ सर्वतोगच्छति । वि ष्वग्गतिके॥ विष्वगञ्चति । ऋत्वि गादिनाञ्चे: क्विन् । विष्वग्देवयो रित्यद्र्यादेश:। स्त्रियांविष्वद्रीची॥

विष्वाण: । पुं॰ भक्षणे॥

विसंवाद: । पुं॰ विप्रलम्भे । प्रतिज्ञा तासम्पादने॥ विरुद्धंसम्यग्वदन म् । वदेर्भावेघञ्॥

विसंवादि । त्रि॰ विलक्षणे॥

विसम् । न॰ मृणाले । पद्मादीनांमू ले॥ बिसति । विसप्रेरणे । इगु

पधितिक : ॥
विसकण्ठिका । स्त्री॰ बलाकायाम् ॥
विसकुसुमम् । न॰ कमले ॥
विसकण्ट : । पुं॰ सिंहे । मृगेन्द्रे ॥ कण्टकीवृक्षे ॥
विसतन्तु : पुं॰ मृणालसूत्रे
विसनाभि : । पुं॰ पद्मिन्याम् ॥
विसपुष्पम् । न॰ नलिने ॥ विसस्य पुष्पम् ॥
विसप्रसूनम् । न॰ अम्भोरुहे । नलिने । पद्मे ॥ विसस्यप्रसूनम् ॥
विसम्वाद : । पुं॰ विप्रलम्भे । मिथ्याख्यानेनवञ्चने । अङ्गीकृतासम्पादने ॥
विसर : । पुं॰ सन्दोहे । व्रजे । समूहे । विसरति । सृगतौ । पचाद्यच् । प्रसरे ॥
विसर्ग : । पुं॰ दाने ॥ त्यागे ॥ मलनिर्गमे पायूपस्थयोर्व्यापारे ॥ विभासोच्चारणभेदे ॥ विसर्जनीये ॥ यथा । शृङ्गवद्वोलवत्सस्यबालिकाकुचयुग्मवत् । नेत्रवत्कृष्णसर्पस्यविसर्गोऽयमितिस्मृत : ॥ विशेषसृष्टौ ॥ यथा । पुरुषानुगृहीतानामेतेषांवासनामय : । विसर्गोयंसमाहारोबीजाद्बीजंचराचरम् ॥ विसर्ज्जनम् । सृज॰ । घञ् ॥ विविधंसृज्यतेक्षिप्यतेवा॰घञ् ॥
विसर्ज्जनम् । न॰ दाने ॥ परित्यागे ॥ सम्प्रेषणे ॥ सृजेर्विपूर्वाद्भावे ल्युट् ॥
विसर्ज्जनीय : । पुं॰ विसर्गे । द्विबिन्दुके ॥
विसर्प : । पुं॰ रोगविशेषे । सर्वावामये ॥ अथविप्रकृष्टं निदानं सङ्ख्यांनिरुक्तिञ्चाह । लवणाम्लकटूष्णादिसेवनाद्दोषकोपत : । विसर्प : सप्तधाज्ञेय : सर्वत : परिसर्पणात् ॥ आदिशब्दाद्दधिकोलकहरितशाकशिण्डाकीप्रभृतीनांग्रहणम् । सप्तधात्वं विवृणोति । पृथक्त्रयस्त्रिभिश्चैकोविसर्पोद्वन्द्वजास्त्रय : । वातिक : पैत्तिकश्चैवकफज : सान्निपातिक : । चत्वारएतेवीसर्पावक्ष्यन्तेद्वन्द्वजास्त्रय : । आग्नेयोवातपित्ताभ्यांग्रन्थ्याख्य : कफवातज : । यस्तुकर्दमकोघोर : सपित्तकफसम्भव : ॥ एषांलक्षणादिकंग्रन्थान्तराद्वबोध्यम् ॥
विसर्पणम् । न॰ प्रसरे । तन्तुवणादेर्विसर्पणे ॥ सृपॢगतौ । ल्युट् ।
विसर्पि : । पुं॰ विसर्पे ॥
विसलम् । न॰ किसलये । पल्लवे ॥
विसार : । पुं॰ मत्स्ये ॥ विशेषेणसरति । सृगतौ । व्याधिमत्स्यबलेषुचेतिवाच्यमितिघञ् ॥

विसारिणी । स्त्री० मत्स्यपर्य्याम् ॥

विसारित : । त्रि० प्रसारिते ॥ विपूर्व्वात्सर्त्तेः क्त : ॥

विसारी । त्रि० प्रसरणशीले । प्रसारिणि ॥ विसरणम् । सृ० । घञ् विसारोऽस्यास्ति । अतइनि : ॥ अभीक्ष्ण विसरतिवा । बहुलमाभीक्ष्ण्ये० इतिणिनि : ॥

विसिनी । स्त्री० पद्मिन्याम् ॥ म्टणाले ॥ विसमस्त्यस्या : । पुष्करादिभ्यइतिइनि : ॥

विसूचिका । स्त्री० अजीर्णहेतुकेरोगविशेषे । विसूच्याम् ॥

विसूची । स्त्री० विसूचिकायाम् अस्यालक्षणन्तु । मूर्च्छातिसारोवमथु: पिपासाशूलंभ्रमोद्वेष्टनजृम्भदाहा : वैवर्ण्यकम्पौहृदयेरुजश्चभवन्तितस्यांशिरसश्चभेद : ॥ अस्याउपद्रवायथा । निद्रानाशोऽरति : कम्पोमूत्राघातोविसंज्ञता । अमीउपद्रवाघोरा : विसूच्या : पञ्चदारुणाइति । निरुक्तिस्तु : । सूचीभिरिवगात्राणितुदन्संतिष्ठतेऽनिल : । यत्राजीर्णेनसावैद्यैर्विसूचीतिनिगद्यते ॥ नतांपरिमिताहारालभन्ते विदितागमा : । मूढास्तामजितात्मानोलभन्तेऽशनलोलुपा : ॥ अस्याश्चिकित्सायथा । लशुनजीरकसैन्धवगन्धकत्रिकटुरा मठचूर्णमिदंसमम् । सपदिनिम्बुरसेनविसूचिकांहरतिभोरतिभोगविचक्षणा इतिलोलिम्बराज : ॥

विसूरितम् । न० अनुतापे ॥ दु० ज० ध० ॥

विसृत : । त्रि० विस्तृते ॥ विसरतिस्म । सृ० । गत्यर्थे तिक्त : ॥

विसृत्वत : । त्रि० विस्तृते ॥

विसृत्वर : । त्रि० प्रसारिणि प्रसरणशीले ॥ विसरतितच्छील : । सृ० । सृगत्वरजोतिक्वरप् । ह्रस्वस्येति तुक् ॥

विसृमत्वम् । न० विस्तृते ॥

विसृमर : । त्रि० विसृत्वरे ॥ विसरतितच्छील : । सृ० । घस्मरः : क्मरच् ॥

विसृष्ट : । त्रि० निक्षिप्ते । उत्पादिते ॥ विपूर्व्वात्सृजे : क्त : ॥ मुक्ते ॥ दत्ते ॥ विशेषेणसृष्ट : ॥

विस्त : । पुं० हेम्नोर्क्षे । सुवर्णे । हेम्न : षोडशमाषेषु । अशीतिरक्तिकापरिमिते । स्वर्णे ॥ विस्यते । विसउत्सर्गे । क्त : । आगमशास्त्रस्यानित्यत्वान्नेट् ॥

विस्तर : । पुं० शब्दस्यविस्तारे । वाक्प्रपञ्चे ॥ विस्तारे ॥ प्रणये ॥ विस्तरणम् । स्तृञ्आच्छादने । प्रदोरप् ॥ पीठे ॥ समूहे ॥

विस्तार : । पुं० तिर्य्यगायतौ ।

विस्तृतौ । प्रसृतावयवेसमूहे ॥ विटपे ॥ शाखापल्लवादिसमुच्चये ॥ स्तम्बे ॥ विस्तीर्णतायाम् । विग्रहे । व्याप्तौ ॥ विस्तरणम् । स्तृञ् । प्रथनेवावशब्दइतिघञ् ॥ विभूतौ ॥ यथा । विस्तारः सर्वभूतस्य विष्णोः सर्वमिदंजगत् । द्रष्टव्यमात्मवत्तस्मादभेदेनविचक्षणैरिति । सर्वभूतस्यसर्वात्मकस्य ॥

विस्तारित :। त्रि॰ विस्तृते ॥ प्राप्तविस्तारे ॥

विस्तीर्ण :। त्रि॰ विपुले । विशाले ॥ विस्तीर्यतेस्म । स्तृञ् । क्तः । रदाभ्यामितिनः ॥

विस्तीर्णपर्ण :। पुं॰ म॰मानकद्रुमे । महापत्रे ॥

विस्तृत :। त्रि॰ विस्तृते । तते । विस्तारिते । लब्धविस्तारे ॥ विस्तर्यतेस्म । स्तृञ् । गत्यर्थेतिक्तः ॥

विस्तृति :। स्त्री॰ विस्तारे ॥ विस्तरणम् । क्तिन् ॥

विस्पष्ट :। त्रि॰ सुव्यक्ते । सुस्पष्टे ॥ न॰प्रकटोदिते । प्रकटोक्ते ॥

विस्फार :। पुं॰ धनुषः स्वाने । येधानौधनुर्गुणशब्दे ॥ विस्फुरणम् । स्फुरस्फुरणे । घञ् । स्फुरतिस्फुलत्योर्घञीत्यात्त्वम् ॥ स्फारस्फुरणेवा ॥

विस्फारित :। त्रि॰ निर्घोषिते ॥ विवर्त्तिते ॥ प्रकाशिते ॥ विपूर्वात् ण्यन्तस्फुरतेः क्तः ॥

विस्फुरणम् । न॰ सर्वत्रप्रसरणे ॥

विस्फुरित :। त्रि॰ स्फूर्त्तिविशिष्टे ॥

विस्फुलिङ्ग :। पुं॰ विषप्रभेदे ॥ अग्निकणे ॥

विस्फूर्ज्जथु :। पुं॰ वज्रघोषे ॥ ट्वितोथुच् ॥

विस्फूर्ज्जित :। त्रि॰ सञ्जृम्भिते ॥

विस्फोट :। पुं॰ विरुद्धस्फोटके । पिटके । पिटकायाम् । पिडिया॰फोड़ा॰इ॰भा॰ ॥ विस्फोटति । स्फुटिर्विशरणे । अच् ॥ करणेघञ् वा ॥

विस्फोटक :। पुं॰ व्रणविशेषे । विस्फोटे ॥ विस्फोटति । स्फुटिर् । ण्वुल् ॥

विस्मय :। पुं॰ अद्भुते । आश्चर्ये । अलौकिकचमत्कारविशेषे ॥ यथा । विविधेषुपदार्थेषुलोकसीमातिवर्त्तिषु । विस्फारश्चेतसोयस्तुसविस्मयउदाहृतः ॥ गर्वे । दर्पे ॥ विस्मयनम् । ष्मिङ्ईषद्धसने । एरच् ॥ सन्देहे ॥

विस्मयान्वित :। त्रि॰ विलक्षे ॥ विस्मयेनआश्चर्येणअन्वितः ॥

विस्मयाविष्ट :। त्रि॰ अद्भुतदर्शनजन्याश्चर्यव्याप्ते ॥ विस्मयेनआश्चर्येणआविष्टोव्याप्तः ॥

विस्मरणम् । न० विस्मृतौ ॥ स्मृध्याने । ल्युट् ॥

विस्मापनः । पुं० कुहके । इन्द्रजाले ॥ गन्धर्व्वनगरे ॥ स्मरे । कामदेवे ॥

विस्मितः । त्रि० विस्मयमाश्चर्य्यङ्गते । विस्मयान्विते ॥ ष्मिङ्० । कर्त्तरि क्तः ॥

विस्मृतः । त्रि० अन्तर्गते । स्मरणाविषये ॥ विस्मर्य्यतेस्म । स्मृ० । क्तः ॥

विस्मृतिः । स्त्री० विस्मरणे ॥ विस्मरणम् । स्मृ० । क्तिन् ॥

विस्मेरः । त्रि० विस्मयशीले ॥ विस्मयतेतच्छीलः । नमिकम्पीत्यादिना रः ॥

विस्रम् । न० आमगन्धिनि ॥

विस्रंसनम् । न० अवस्रंसने । अधःपतने ॥

विस्रंसमानः । त्रि० ध्वंसमाने ॥

विस्रगन्धः । पुं० हरिताले ॥ त्रि० दुर्गन्धिनि ॥ विस्रंगन्धोस्य ॥

विस्रगन्धा । स्त्री० हवुषायाम् ॥

विस्रगन्धिः । पुं० हरिताले ॥

विस्रब्धः । त्रि० अनुद्धटे ॥ गाढे ॥ विश्वस्ते ॥

विस्रम्भः । पुं० केलिकलहे ॥ विश्वासे ॥ प्रणये ॥ प्रणयः परिचयः शृङ्गारप्रार्थनावेत्यमरमाला । क्रीडापारतन्त्र्यमितिकश्चित् ॥ वधे ॥ परिहये ॥ विप्रलम्भे ॥ विस्रम्भणम् । विस्रभ्यतेऽनेनवा । स्रम्भु विश्वासे । घञ् ॥

विस्रम्भितः । त्रि० विश्वासंप्रापिते ॥

विस्रम्भी । त्रि० प्रणयिनि ॥ विश्वासिनि ॥ अस्त्यर्थे इनिः ॥

विस्रसा । स्त्री० जरायाम् । विस्रस्यतेऽनया । स्रंसु अधःपतने । भिदाद्यङ् ॥

विस्रस्तः । त्रि० विच्युते ॥

विस्रा । स्त्री० हवुषायाम् ॥

विहगः । त्रि० पक्षिणि ॥ आशुगे बाणे ॥ ग्रहे ॥ विहायसा० विहायसिवा गच्छति । गम्लृ० । अन्यत्रापिदृश्यतइतिडः । डेचविहायसोविहादेशोवक्तव्यः ॥

विहङ्गः । त्रि० पक्षिणि ॥ आशुगे । बाणे ॥ पुं० चन्द्रे । सूर्य्ये ॥ मेघे ॥ विहायसा० विहायसिवागच्छति । विहायसोविहचगमेः सुपीतिखच् । खच्चडिद्वा ॥

विहङ्गमः । पुं० विहङ्गे । खगे ॥ विहायसागच्छति । गम्लृ० । विहायसोविहच०गमेः सुपीतिखच् ॥

विहङ्गमा । स्त्री० भारयष्ट्याम् ॥

विहङ्गराजः । पुं० गरुडे ॥ विहङ्गानांराजा । टच् ॥

विहङ्गिका । स्त्री० भारयष्ट्याम् । वहँगी० इ० भा० ॥ विहङ्गप्रतिकृतिः

। हृवेप्रतिकृतावितिकन् ॥ विहा यसामच्छतिवा । गमश्चे तिखच् । विहायसोविहच । सञ्चमाडिहाच्य: । यावादिभ्योत्कन् । टाप् ॥

विहत: । चि॰ विनष्टे । विशेषेणहत: ॥

विहननम् । न॰ विघ्ने ॥ हिंसायाम् ॥ तूलपिञ्जले । तूलधनुषि ॥

विहर: । पुं॰ वियोगे ॥

विहरणम् । न॰ विहारे ॥ विपूर्वाहृ ञोल्युट् ॥

विहरन् । चि॰ क्रीड़ति ॥

विहर्तुम् । अ॰ क्रोडितुमित्यर्थे ॥

विहसितम् । न॰ महत्त्वाल्पत्त्वहीने॰ मध्यहास्ये । यथाहु: । आकुञ्चित कपोलाद्यं सस्वनं निस्वनंतथा । प्र स्तावोत्थंसानुरागमाहुर्विहसितंबुधा: ॥ हसेहसने । भावेक्त: ॥

विहस्त: । चि॰ पण्डिते ॥ विह्वले । व्याकुले ॥ करशून्ये ॥ विगतोवि क्षिप्तोवाहस्तोऽस्य ॥

विहा । अ॰ स्वर्गे । विशेषेणजहाति । ओहाक्त्यागे । विपाविहेत्याप्रत्य य: ॥ न्यायेनोपार्जितस्यधनादे: सत्पात्रेविनियोगे ॥

विहापितम् । न॰ दाने ॥ विहापन म् । ओहाक्॰ । ण्यन्तात्क्त: ॥

विहाया: । पुं॰ खगे । शकुने ॥ पुं॰ न॰गगने । आकाशे ॥ विशेषेणहा ययति॰गमयति॰विमानादीन् । हयगतौ । ण्यन्तादसुन् ॥ विजहा तिभुवंवा । ओहाक्॰ । वहिहाधा ञ्भ्यश्छन्दसीत्यसुन् । णिदित्यस्या नुवर्त्तेर्युक् । क्वचिच्छान्दसाअपि भाषायांप्रयुज्यन्ते तेनलोकेपि ॥

विहायसम् । न॰ व्योम्नि ॥

विहायसा । अ॰ नभसि ॥

विहार: । पुं॰ क्रीडार्थंपद्भ्यांसञ्चरणे । परिक्रमे । भ्रमणे ॥ स्कन्धे ॥ ली लायाम् ॥ सुगतालये ॥ विहरण म् । हृञ्॰ । घञ् ॥ यानादौ ॥ विहरन्त्यनेन । करणेघञ् ॥ क्रीडा स्थाने ॥ विहरन्त्यत्र । अधिकरणे घञ् ॥ बिन्दुरेखखगे ॥ चि॰हार वर्ज्जिते ॥ विगतोहारोऽस्य ॥

विहारगृहम् । क्रीडागारे ॥

विहारवित् । पुं॰ श्रीकृष्णे ॥ चि॰वि हारज्ञे ॥

विहारवेदिका । स्त्री॰ वितर्द्याम् ॥

विहारस्थानम् । न॰ क्रीडाप्रदेशे ॥

विहारी । चि॰ परिक्रमिणि । विहार कर्त्तरि ॥ मत्वर्थीयइनि: ॥

विहित: । चि॰ सृष्टे । निर्मिते ॥ वि धेये । विध्यागतोचितकृत्ये ॥ वि धीयतेस्म । डुधाञ्॰ । क्त: । दधातेर्हि: ॥ अभिहिते । विपूर्वस्य दधाते:क्रियासामान्यवाचित्वात्

विहिति: । स्त्री॰ विधाने ॥

विहीन: । चि॰ विगते । विशेषेणही

ते । त्यक्ते । वर्त्तिते । वेधविद्धो मेघोतरिक्तार्त्ता,वाक्यं प्रयातिवैफल्यम् । नयनविहीनेभर्त्तरिलावण्यमिव खञ्जनाक्षीणाम् ॥

विहृतम् । न० स्त्रीणांस्वाभाविकदृशा लङ्कारोन्तर्गतालङ्कारविशेषः ॥ यथा । लीलाविलासो विच्छित्तिर्विब्वोकः किलकिञ्चितम् । मोट्टायितंकुट्टमितं ललितंविहृतंतथा ॥ विभ्रमश्चे त्यलङ्काराः स्त्रीणांस्वाभाविकादृशेतिहेमचन्द्रः ॥ तल्लक्षणंयथा । वक्तव्याभाषणंव्याजाद्विहृतंदर्शितेङ्गितम् ॥ विहरणम् । हृञ् । भावेक्तः ॥

विहृतिः । स्त्री० सञ्चारे ॥ विहरणम् । हृञ् । क्तिन् ॥ विशेषेणहरणे ॥

विहेठः । पुं० विहेठने ॥

विहेठनम् । न० हिंसायाम् ॥ मर्द्दने ॥ विडम्बने ॥ हेठविबाधायाम् । ल्युट् ॥ दुःखे ॥

विहेडनम् । न० विहेठनार्थे ॥ हेडृ० । ल्युट् ॥

विह्वलः । त्रि० भीत्याद्यभिभूते । स्वाङ्गान्यवधारयितुमशक्ते । विक्लवे ॥ विह्वलति । ह्वलचलने । अच् ॥ मूर्च्छिते ॥ विलीने ॥ विवशे ॥

वी । पुं० गमने ॥ वेति । वीगत्यादौ । क्विप् ॥

वीक्षः । पुं० वायौ । वातौ ॥ पक्षिणि । स्वगे ॥ अवर्त्तिः । अज० । पक्षिपु

धूनीभ्योदीर्घश्चेतिकम् ॥ मनसि ॥

वीकाशः । पुं० रहसि । विजने ॥ विकाशे । प्रकाशे ॥ विकाशनम् । अस्मिन्वा । काशृदीप्तौ । भावे० इ लचेत्यधिकरणेवाघञ् । इकः काशइतिदीर्घः ॥ यद्वा । विकाशनमत्रवा । काशशब्दे । पूर्ववत् । घञ् दीर्घौ ॥

वीक्षणम् । न० विलोकने ॥ विशिष्ट मीक्षणम् ॥

वीक्षणीयः । त्रि० गुरुमुखाद्वगत्य विचारणीये । वीक्षितुंयोग्ये ॥ ईक्ष० । अनीयर् ॥

वीक्षापन्नः । त्रि० विस्मयान्विते ॥ वीक्षणम् । वीक्षातामापन्नः ।

वीक्षितः । त्रि० अवलोकिते । दृष्टे ॥ विशेषेणईक्षितः ॥

वीक्ष्यः । पुं० लासके ॥ वाजिनि । घोटके ॥ न० विस्मये ॥ दृश्ये ॥ त्रि० दर्शनीये ॥ *

वीङ्खा । स्त्री० शूकशिम्व्याम् ॥ गतिभेदे ॥ नर्त्तने ॥ अश्वगतिभेदे ॥ सप्तौ ॥

वीचिः । पुं० स्त्री० स्वल्पतरङ्गे । ऊर्म्याम् ॥ अवकाशे । वीच० इ० भा० ॥ सुखे ॥ वयति० जयतेवा । वेञ् तन्तुसन्ताने । वेञोडिच्चेति० इचिः ॥ अल्पे ॥ आल्याम् ॥

वीचिमाली । पुं० समुद्रे ॥ वीचीनां

माला । सा अस्ति अस्य । ब्रीह्यादित्वा दिनिः ॥

वीची । स्त्री० वीचिशब्दार्थे ॥

वीचीतरङ्गः । पुं० न्यायविशेषे ॥ स तु श्रोत्रे शब्दस्योत्पत्तिकारणरूपः । यथा । वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता । कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते ॥ इ० भा० प० ॥ ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरित्यत आह । वीचीति आद्यशब्दस्य बहिर्दशदिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन जन्यते तेन चापरस्तद्व्यापक एवं क्रमेण श्रोत्रे त्पन्नो गृह्यत इति । कदम्ब इति । आद्यशब्दाद्दशदिक्षु दश शब्दा उत्पद्यन्ते ततश्चान्ये दशशब्दा उत्पद्यन्त इति भावः । अस्मिन् कल्पे गौरवादुक्तं कस्यचिन्मत इति ॥

वीजम् । न० अङ्कुरकारणे ॥ हेतौ । तत्त्वे ॥ आधाने ॥ शुक्रे । रेतसि ॥ सर्वभूतानां प्ररोहकारणं बीजं तस्मा योपाधिकं चैतन्यं भगवद्विभूतिः ॥ विशेषेण जायतेऽनेन । उपसर्गे च संज्ञायामिति डः । अन्येषामपीति दीर्घः ॥ यद्वा । विशेषेण ईजते । ईज गतिकुत्सनयोः । अच् । वीज्यते वा । घञ् । कुत्वन्तु न भवति । यजेरित्यत्र निष्ठायामनिट इति वार्त्तिकक्तापूरितत्वात् । अस्य च निष्ठायांसेट्त्वात् ॥ यद्वा । वीजयति । वीज्यतेऽनेन वा । वीजव्यजने । पच० घञ् वा ॥ मज्जनि ॥ गणितविशेषे । अव्यक्तगणिते ॥ मन्त्रे ॥

वीजकः । पुं० मातुलुङ्गे ॥ असनवृक्षे । पीतसारके । विजयसार० इ० भा० ॥ वीजकः कुष्ठवीसर्पश्वित्रमेहगुदक्रमीन् । हन्ति श्लेष्मास्रपित्तघ्नस्त्वच्यः केश्योरसायनः ॥

वीजकृत् । न० वाजीकरणे ॥

वीजकोश । पुं० वीजकोषे ॥

वीजकोशी । स्त्री० शिम्बायाम् ॥

वीजकोषः । पुं० वराटके । कर्णिकायाम् ॥ वीजस्य कोषः पात्रमाधार इति यावत् ॥ वीजाभिधाने ॥

वीजगर्भः । पुं० पटोले ॥

वीजगुप्तिः । स्त्री० शिम्ब्याम् ॥

वीजधर्म्मिणी । स्त्री० सर्वेषां महदादीनां विकाराणां वीजत्वेनावस्थितायां प्रकृतौ ॥

वीजधान्यम् । न० धान्याके ॥

वीजनम् । व्यजने ॥ कोके । चक्रवाके ॥ चकोरे । वस्तुनि ॥ विधूनने ॥ वीजव्यजने । चुरादिः । ल्युट् ॥

वीजपादपः । पुं० भल्लातके ॥

वीजपुष्पम् । न० मरुवके ॥ मदनद्रौ ॥

वीजपूरः । पुं० फलपूरे । मातुलुङ्गे । टावाजेवू इ० वगौ० दे० भा० मङ्गभाषा च ॥ गुणास्तु । वीजपूरफलं

स्वादुरसेऽम्लं दीपनं लघु । रक्तपित्तह
रं कण्ठजिह्वाहृदयशोधनम् ॥ श्वा
सकासारुचिहरं हृद्यं तृष्णाहरं स्मृत
म् ॥ सैन्धवार्द्रकसंयुक्तं बीजपूरक
मग्निय : । शाकिनीभिरिवाकृष्टं
विशत्युदरमोदनम् ॥ केशरं मातु
लुङ्गस्य लघुष्णं शामिलापहम् । रो
चनं दीपनं हृद्यं गुल्मशूलार्शसां जये
त्इति ॥ क्वाथेऽस्य मूलं ग्राह्यमित्या
हु : ॥ बीजेन पूर्यते । पूरी आप्याय
ने । इगुपधेति कः । कर्मणि घञ्
वा ॥ देशभाषया बिजोरा • इतिप्र
सिद्धोयम् ।

बीजपूर्णः । पुं० बीजपूरे । छोलङ्गे ।

बीजपेशिका । स्त्री० अण्डकोषे ॥

बीजप्रदः । पुं० पितरि । गर्भाधा
नस्य कर्त्तरि ॥

बीजफलकः । पुं० बीजपूरे ॥

बीजसूः । स्त्री० क्षितौ ॥

बीजमातृका । स्त्री० पद्मबीजे । प
द्माक्षे ॥

बीजरत्नः । पुं० माषकलाये ॥

बीजरुहः । पुं० शाल्यादौ ॥ य
था । कुरण्टाश्चापि बीजाश्च मूल-
जास्तृणजादयः । पर्वयोनयइ
क्ष्वाद्याः स्कन्धजाः ॥ शल्लकीमु
खाः ॥ शाल्यादयो बीजरुहाः स
म्मूर्च्छजास्तृणादयः । सृजेनस्य
तिकायस्य षड्नेमे जातयः • हे

मचन्द्रः ॥

बीजरेचनम् । न० जयपाले ॥

बीजवपनम् । न० क्षेत्रे बीजक्षेपणे ॥

बीजवृक्षः । पुं० असनवृक्षे ॥

बीजसञ्चयः । पुं० बीजसङ्ग्रहे ॥

बीजसन्तानः । पुं० वपने । क्षेत्रे
बीजानां विकरणे ॥ गर्भाधाने ॥

बीजसूः । स्त्री० भूमौ । पृथ्व्याम् ॥

बीजाकृतम् । न० उप्तकृष्टे । सबीज
कृष्टक्षेत्रे ॥ बीजेन सहकृतं कृष्ट
म् । कृञो द्वितीयेति डाच् ॥

बीजाम्लम् । न० वृक्षाम्ले ।

बीजी । पुं० पितरि ॥ त्रि० बीज
विशिष्टे ॥

बीजोदकम् । न० करकायाम् ॥ बी
जाकृत्युदकम् । शाकपार्थिवादिः ॥

बीजोप्तिचक्रम् । न० बीजवपनजन्य
शुभाशुभज्ञानार्थं सर्पाकारचक्रे ।

बीज्यः । त्रि० कुलसम्भवे ॥ बीज्य
ते । बीजव्यजनेऽदन्तः । अचोय
त् ॥ यद्वा । बीजमस्यास्ति । अ
न्येभ्योऽपि दृश्यत इति यप् । बीजेभ
वः साधुर्वा ।

बीटिका । स्त्री० सुसज्जीकृतताम्बू
ले ॥ इति केचित् ।

बीणा । स्त्री० तडिति । विद्युति ।
बल्लक्याम् । विपञ्च्याम् ॥ वेति
आयते स्वरोऽस्याम् । बीणाद्य
षु । रोलासाक्षास्नुवाबीणाइति

नञस्य वीणात्वं गुणाभावश्च निपाति त : ॥ अस्या : प्रभेदा यथा । विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती । महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपी ॥ अपिच । शिवस्य वीणा नालम्बी सरस्वत्यास्तु कच्छपी । महती नारदस्य स्यात् गणानां सुप्रभावती ॥ विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती । चाण्डालानां तु कण्डालवीणा चाण्डालिका पिच ॥ तस्या अङ्गानां नामानि यथा । काय : कोलम्बकस्तस्या उपनाहो निबन्धनम् । दण्ड : पुन : प्रवाल : स्यात् ककुभस्तु प्रसेवक : ॥ मूले वंशशलाका स्यात् कलिका कूणिकापि चेति ॥ रत्न॰ ८ । ८॰ ॥

वीणादण्ड : । पुं॰ वीणास्थितालाबूपरिकाष्ठे ॥ प्रवाले ॥ वीणाया दण्ड : ॥

वीणानुबन्ध: । पुं॰ उपनाहे ॥

वीणाल : । त्रि॰ वीणावति ॥ पुं॰ नारदे ॥ वीणाऽस्तिअस्य । सिध्मादित्वाल्लच् ॥

वीणावाद : । त्रि॰ वैणिके ॥ वीणां वादति । वदेर्ण्यन्तात् ॰ कर्मण्यण् ॥

वीणावादक : । पुं॰ वैणिके ।

वीणास्य : । पुं॰ नारदे ॥ वीणा आस्यमिवप्रधानं यस्य ॥

वीतम् । न॰ असारगजे । युद्धाक्षमे हस्तिनि ॥ असारतुरगे । युद्धाक्षमे घोटके ॥ अङ्कुशकर्मणि । कारिण : पादाघातपूर्वकाङ्कुशवारणे ॥ पादकर्म यत्प्रोक्तं यातमङ्कुशवारणम् । उभयं वीतमाख्यातमिति हलायुध : ॥ वेति ॰ अजतिस्म वा॰ युद्धादिकर्मण: वीगत्यादौ॰ अजगतौ वा । गत्यर्थेतिक्त : ॥ अनुमानप्रभेदे । अन्वयमुखेन प्रवर्तमाने विधायकेऽनुमानविशेषे ॥ वीतानुमानञ्च द्विधा । पूर्ववत्॰ सामान्यतोदृष्टञ्च । दृष्टस्वलक्षणसामान्यविषयं यत्तत्पूर्ववत् । पूर्वं प्रसिद्धम्॰ दृष्टस्वलक्षणसामान्यमितियावत् । तदस्य विषयत्वेनास्त्यनुमानज्ञानस्येति पूर्ववत् । यथा धूमाद्वह्नित्वसामान्यविशेष : पर्वतेऽनुमीयते । तस्य वह्नित्वसामान्यस्य स्वलक्षणं वह्निविशेषो दृष्टो रसवत्याम् । अपरञ्च वीतं सामान्यतोदृष्टम्॰ अदृष्टस्वलक्षणसामान्यविषयम् । यथेन्द्रियविषयमनुमानम्॰ अत्र हि रूपादिज्ञानानां क्रियात्वेन करणत्वमनुमीयते यद्यपि च करणत्वसामान्यस्य च्छिदादौ वास्यादि स्वलक्षणमुपलब्धम्॰ तथापि यज्जातीयं रूपादिविज्ञाने करणमनुमीयते तज्जातीयस्य करणस्य न दृष्टं स्वलक्षणं प्रत्यक्षेण

इन्द्रियजातीयं हि तत्करणम्। न चेन्द्रियत्वस्य सामान्यस्य स्वलक्षणमिन्द्रियविशेषः प्रत्यक्षगोचरो वाग्दृशाम्। यथा वह्नित्वस्य सामान्यस्य स्वलक्षणं वह्निः सोऽयं पूर्ववतः सामान्यतोदृष्टस्य सत्यपि वीतत्वे न तुल्यत्वे विशेषः। अत्र च दृष्टं दर्शनम्। सामान्यस्य सार्वविभक्तिकस्तसिल्। अदृष्टस्वलक्षणस्य सामान्यस्य। दर्शनमनुमानमित्यर्थः॥ त्रि॰ शान्ते॥ निवृत्ते॥ आच्छादिते। विरहिते॥ विशेषणद्रुतः॥

वीतंसः। पुं॰ मृगाणां पक्षिणामपि बन्धनोपाये॥ मृगाणां पक्षिणां च विश्वासहेतोः प्रावरणे॥ वितंसयति। तसि अलङ्कारे। घञ्। उपसर्गस्येति दीर्घः॥

वीतदम्भः। त्रि॰ त्यक्तदम्भे॥

वीतनः। पुं॰ कृकपार्श्वद्वये॥ यथा। कृकस्तु कन्धरामध्यं कृकपार्श्वौ तु वीतनौ। इति हेमचन्द्रः॥

वीतभयः। त्रि॰ निर्भये॥ वीतं विगतं भयं यस्य॥

वीतमन्युः। त्रि॰ विगतरोषे॥

वीतरागः। पुं॰ बुद्धे॥ त्रि॰ निस्पृहे। रागशून्ये। विशेषणद्रुतः। गतः। रागः प्रीतिर्मात्सर्यं वा। यस्य। यस्माद्वा॥

वीतरागभयक्रोधः। त्रि॰ शुद्धसत्त्वे। रागभयक्रोधाः। वीताः विवेकेन विगता यस्मात्॥

वीतरागी। त्रि॰ इहामुत्रार्थफलभोगरहिते॥

वीतशोकः। पुं॰ अशोकद्रुमे॥ त्रि॰ आत्मज्ञे। आत्मज्ञ एव वीतशोको भवति नानात्मज्ञः॥ शोकहीने। वीतः विशेषेणागतः शोको यस्य यस्माद्वा॥

वीतस्पृहः। विरक्ते॥

वीतिः। पुं॰ अश्वे। स्त्री॰ गतौ दीप्तौ॥ प्रजने। अशने॥ धावने॥ वेति। वीगत्यादौ। क्तिच्। भावे स्त्रियां क्तिन् वा॥ निवृत्तौ॥

वीतिहोत्रः। पुं॰ धनञ्जये। अग्नौ॥ वीयते। वीगतिप्रजनकान्त्यसनखादनेषु। कर्मणि क्तिन्। वीति भक्ष्यं पुरोडाशादि। हूयतेऽस्मिन्। हु दानादनयोः। हुयामाश्रुभसिभ्यस्त्रन्। इति त्रन्॥ वीतिरश्वो होत्रं हवनमस्येति वा॥ अर्के। सूर्य्ये॥

वीत्तः। त्रि॰ विशेषेणदत्ते॥ विदीयतेस्म। डुदाञ्। क्तः। अच उपसर्गात्तः। इति तादेशः। दस्तीति दीर्घः॥

वीथिः। स्त्री॰ वीथ्याम्। अश्वसञ्चारस्थाने॥ तामनव। यथा। सि

ध्वंमुखेन वसुवीथिषु कश्चिदश्वं वल्गाविभागकुशलो गमयाम्बभूवेति माघव्याख्यानावसरे मल्लिनाथः । नव सुवीथिषु सञ्चारस्थानेषु गमयाम्बभूव । वीथयो नवाश्वानां सर्वत्र धाराद्व्यर्थाः परिमिताः प्रचारदेशाः । तास्तिस्रस्तुल्यके० नवेत्यन्ये० तत्रोत्तरपक्षमाश्रित्योक्तं कविना नवस्विति । यथाह भोजः । वीथ्यस्तिस्रोऽथ धाराणां लघ्वी मध्योत्तमाः क्रमात् । तासां स्याद्धनुषां मानमशीतिर्नवतिः शतम् ॥ श्रेष्ठमध्योत्तमानान्तु वाजिनां वीथिकाः स्मृताः । नवानां कथिता वीथ्यो दुष्टानां क्रमणक्रमे ॥ अन्येषामपि सर्वत्र गतिद्व्यर्थमीरिताः ॥ समोन्नता सा विषमा स्वकीर्णा शुद्धा नता यात् गणवी० रुद्राद्या । स्थाणुप्रकीर्णोपलसंप्रकीर्णा पार्श्वोन्नता ख्यामवधेति वीथ्यः ॥ सर्ववीथिषु योधाजीदृढशिक्षासमन्वितः । तेन राजा रणे नित्यं मृगयायां मृदं व्रजेदिति ॥ अन्ये तु० उरसाल्यादयो गतिविशेषा वीथय इत्याहुः । उरसाली वरश्वाली पृथुली मध्यनामकः । आलीढः शोभनैरङ्गैः प्रत्यालीढस्तथापरः ॥ उपधेनवउत्तुङ्गपादश्चालोचसर्वगः । निर्दिष्टा वीथयस्त्वेता इति ॥ विध्यतेऽनया । विधृ याचने । इगुपधा त्किदितीन् । बाहुलकाद्दीर्घः ॥

वीथिका । स्त्री वीथ्याम् ॥

वीथी । स्त्री० पङ्क्तौ ॥ गृहाङ्गे । गृहपिण्डकायाम् ॥ नाट्यरूपके । वर्त्मनि ॥ विध्यतेऽनया । विथृ० । घञ् । पृषोदरादिः । गौरादिः ॥ यद्वा । विध्यते । इगुपधात्किदितीन् । बाहुलकाद्दीर्घः । कृदिकारादिति पाक्षिको ङीष् ॥

वीथ्यङ्गः । त्रि० नाटकभेदे ॥

वीध्रः । पुं० अग्नौ ॥ वायौ ॥ न० नभसि ॥ त्रि० विमले ॥ वीन्धे । ञिइन्धी दीप्तौ ॥ वाचिन्धेरिति० क्रन् ॥

वीनाहः । पुं० इष्टकादिभिर्बद्धे कूपमुखे ॥ विनह्यतेऽनेन० कूपमुखम् । णहबन्धने । हलश्चेति घञ् । उपसर्गस्य घञीति दीर्घः ॥

वीपा । स्त्री० विद्युति ॥

वीप्सा । स्त्री० व्याप्तुमिच्छायाम् ॥ नानार्थकशब्दाधिकरणानां क्रियागुणाभ्यां प्रत्येकं युगपद्व्याप्तुमिच्छा वीप्सा ॥ शैले शैले न माणिक्यं मौक्तिकं न गजे गजे । देशे देशे न विद्वांसः चन्दनं न वने वने ॥

वीवधः । पुं० पर्याहारे । उभयतोबद्धशिक्ये स्कन्धवाह्ये काष्ठे । विहङ्गिकायाम् ॥ अध्वनि । भा

रे ॥ मार्गे ॥ धान्यादिप्राप्तौ ॥ विविधः वधोऽहननं गमनं वाऽत्रानेनश । प्रादिभ्योधातुजस्येतिसमासोत्त रपदलोपो अन्येषामपीतिदीर्घ ॥

वीवधिकः । त्रि॰ वार्त्तावहे ॥ वीवधेनहरति । एकदेशविकृतस्यान न्यत्वात्॰ विभाषाविवधादितिष्ठ न् । षोडोषर्थः ॥

वीरः । पुं॰ शूरे । विक्रान्ते ॥ विष्णौ ॥ जिने ॥ शृङ्गाराद्यष्टरसान्तर्गतरसविशेषे । उत्साहवर्द्धने ॥ उत्तमप्रकृतिर्वीरउत्साहस्थायिभावकः । महेन्द्रदेवतोहेमवर्णोऽयंसमुदाहृतः ॥ ककुभद्रुमे ॥ ब्राह्मणे ॥ भावविशेषे ॥ न॰ अग्नौ ॥ तण्डुलीये ॥ वराहकन्दे ॥ लताकरञ्जे ॥ करवीरे ॥ शृङ्गाम् ॥ नले ॥ मरिचे ॥ पुष्करमूले ॥ काञ्जिके ॥ उशीरे ॥ आरूके ॥ त्रि॰ उत्तमे । श्रेष्ठे । वीराचारविशिष्टेयथा । कुलाचाररतोवीरः कुलसङ्गीसदा भवेत् । संविदासेवनंकुर्यात्सोमपानंमहेश्वरि ॥ सर्वदाकुरुतेदेविवीर स्तोषतमानसः ॥ पुं॰ वीरयति । शूर वीरविक्रान्तौचुरादिः । पचाद्यच् ॥ यद्वा । विशेषेण॰ईर्त्ते॰ईरयतिवा । ईरगतौ । कोऽज्वा ॥ यद्वा । अजति । अजगतिक्षेपणयोः । स्फायितञ्चीतिरक् । अजेर्वी ॥ विविधानां शत्रूणामीरयितावा ॥ यद्वा । ईरणम् । ईरगतौकम्पनेच । भावेघञ् । ईरः पलायनंकम्पनञ्च॰तदुभये परवीरप्रयुक्तंविगतमस्येतिवीरः ॥

वीरकः । पुं॰ करवीरे ॥

वीरकुलम् । न॰ ब्राह्मणानांगणे ॥

वीरगतिः । पुं॰ स्वर्गे ॥

वीरजयन्तिका । स्त्री॰ रणेवीराणां नृत्ये ॥

वीरणम् । न॰ उशीरस्यतृणे । वीरतरे । बहुमूलके । गाँडरइतिख्याते तृणे ॥ वीरणंपाचनंशीतंस्तम्भनंलघुतिक्तकम् । मधुरंज्वरनुद्वान्तिमदजित्कफपित्तहृत् ॥ तृष्णासृग्विषवीसर्पकृच्छ्रदाहव्रणापहम् ॥ कुशादीनांगणे ॥ यथा । कुशः काशस्तदर्भश्चकत्तृणंभूतृणंतथा । ...तदूर्वानीलदूर्वागण्डदूर्वेतिवीरणम् ॥ विंपच्चिणमीरयति । ईरगतौकम्पनेच । ल्युयुञ्चा ॥

वीरतरः । पुं॰ वीरश्रेष्ठे ॥ शरे ॥ न॰ वीरणे ॥ अतिशयितोवीरः । द्विवचनविभज्येतितरप् ॥

वीरतरुः । पुं॰ अर्जुनवृक्षे ॥ वीरस्यासरैतरुश्च ॥ कोकिलाक्षवृक्षे ॥ बिल्वान्तरवृक्षे ॥ भल्लातके ॥

वीरपर्णम् । न॰ सुरपर्णे ॥

वीरपत्नी । स्त्री॰ वीरभार्यायाम् ॥ वीरः पतिर्यस्याइतिविग्रहे॰नित्यंस

पत्न्यादिष्विति॰पतिशब्दस्यनकारा
न्तादेशे॰कृते ङ्यप्रत्ययेतिङीप् ॥ नहि
वीरपत्नीनामलभ्यं नामकिञ्चिदस्ति ॥
वीरपत्ना । स्त्री॰ विजयायाम् ॥
वीरपाणम् । न॰ वीराणांसमरविशेषे
क्रियमाणेमद्यपाने ॥ यथा। वीरपा
नन्तुयत्पानंवृत्तेभाविनिवारणे ॥
वीराणांपानम् । वाभावकरणयो
रितिणत्वम् ॥
वीरपुरुषः । पुं॰ परैरपराजिते ॥
वीरपुष्पी । स्त्री॰ सिन्दूरपुष्प्याम् ॥
वीरप्रमोक्षः । पुं॰ तीर्थविशेषे ॥
वीरभद्रः । पुं॰ अश्वमेधाश्वे ॥ वीर
श्रेष्ठे ॥ वीरणे ॥ दक्षाध्वरध्वंसि
निशिवगणविशेषे ॥
वीरभद्रकम् । न॰ वीरणे ॥
वीरभार्य्या । स्त्री॰ वीरपत्न्याम् ॥
वीरस्यभार्य्या ॥
वीरमाता । स्त्री॰ वीरस्वाम् ॥ वीरस्य
माता ॥
वीररजः । न॰ सिन्दूरे ॥
वीररात्रिः । स्त्री॰ निशाविशेषे ॥ यथा
। दीपावल्याममायांवैग्रहणंयदि
सत्रवै । वीररात्रिमहेशानीत्याग
मः ॥
वीररेणुः । पुं॰ भीमसेने। नागवल्ले ।
वीरवती । स्त्री॰ मांसरोहिण्याम् ॥
वीरजनन्याम् ॥
वीरवत्सला । स्त्री॰ श्वश्र्वाम् ॥

वीरवत्सा । स्त्री॰ वीरजनन्याम् ॥
वीरविप्लावकः । पुं॰ शूद्रद्रव्येणहोम
कर्त्तरि ॥ यथा । वीरविप्लावकोजु
हुयाद्यो : शूद्रसमर्पितैरितिहेमच
न्द्रः ॥
वीरवृक्षः । पुं॰ भल्लातके ॥ ककुभद्रु
मे ॥ बिल्वान्तरे ॥ देवधान्ये । अश्म
रीहरे ॥ वीरद्रुमवृक्षः ॰दुस्पर्शत्वा
त् ॥
वीरव्रतः । पुं॰ दृढव्रते ॥ नैष्ठिके ॥
वीरसूः । स्त्री॰ वीरमातरि ॥ वीरंसू
ते । षूङ्प्राणिगर्भविमोचने । स
त्सूद्विषेतिक्विप् ॥
वीरसेनः । पुं॰ नलाभिधभूपपित
रि ॥ न॰आरुकवृक्षे ॥ आलुके ॥
वीरसेनजः । पुं॰ नलाभिधनृपे ॥
वीरहा । पुं॰ त्यक्तयज्ञाग्नौ । नष्टा
ग्नौ । प्रमादादिनायस्याग्निहोत्रि
णोऽग्निर्नष्टोनिर्वाणः शान्तस्तस्मि
न् ॥ वीरोऽग्निस्तंहन्ति । हन॰ ।
क्विप् । हरौ ॥ वीरान्असुरभटा
न्॰हिरण्यकशिपुप्रभृतीन्वाहन्ती
तितथा ॥
वीरा । स्त्री॰ सुरायाम् । मदिरायाम्
म् ॥ क्षीरकाकोल्याम् ॥ तामल
क्याम् ॥ एलवालुके ॥ पतिपुत्रव
त्याम् । पत्यासुतेनचयुक्तायाम् ॥
रम्भायाम् ॥ विदार्य्याम् ॥ विदा
रीस्थानेगम्भारीतिपाठान्तरम् ॥

काम्पील्याम् ॥ महाशतावर्याम् ॥ गृहकन्यायाम् ॥ ब्राह्म्याम् ॥ ब तिविषायाम् ॥ शिंशपावृक्षे ॥

वीराध्वा । पुं० शूराणांमृत्यौ मर्गे ॥ वीराणांमत्र्यामिष्वाणामित्यर्थः । वीराः कुशलामृत्युप्रकारेषुवेशस्थानाराकल्याणार्थं । कसपं संवृत्त्या शायभीतानामध्वा ॥

वीरारुकम् । न० आरुके ॥

वीराशंसनम् । न० अतिभयप्रदायां युद्धभूमौ ॥ साबीराशंसनंयुद्धभूमिर्या तभयप्रदा ॥ वीरा : शंस्यन्तेऽत्र । आङ् : प्रसि[illegible]कायाम् । ल्युट् ॥

वीराश्रम : । पुं० तीर्थविशेषे ॥ यत्र कार्त्तिकेयस्तिष्ठति ॥

वीरासनम् । न० राज्ञीखड्गहस्तस्य विष्ठतोजागरणे ॥ ऊर्द्ध्वस्थाने ॥ योगिनामासनविशेषे ॥ तदुक्तं योगशास्त्रे वसिष्ठेन । एकं पादमथैकस्मिन् विन्यसेदूरुसंस्थितम् । इतरस्मिंस्तथाबाहुं वीरासनमिदं स्मृतम् । इति ॥ अपिच । एकं पादमधः कृत्वा विन्यस्योरौ तथेतरम् । ऋजुकायोविशेन्मर्त्यो वीरासनमितीरितमिति तन्त्रशास्त्रम् ॥ श्रीभागवतेपि । कृत्वोरौ दक्षिणे सव्यं पादपद्मञ्चजानुनि । बाहुप्रकोष्ठे क्षमालामासीनं तर्कमुद्रयेति ॥

वीरिणी । स्त्री० दक्षप्रजापतेः पत्न्याम् ॥

वीरुत् । स्त्री० शाखापत्रप्रचयवत्यां लतायाम् । गुल्मिन्याम् । उपलौ ॥ विटपे ॥ विरुणद्धि । रुधिर्० । क्विप् । अन्येषामपीतिदीर्घः ॥

वीरुधा । स्त्री० वीरुधि ॥ भागुरिमतेनटाप् ॥

वीरेश : । पुं० शिवे ॥

वीरेश्वर : । पुं० सदाशिवे ॥ वीराणामीश्वर : ॥

वीरोज्झो : । पुं० होमाकर्त्तरि ॥ यथा । अभ्युदिताभिनिर्मुक्तौवीरोज्झोनष्टचेतस : ॥ इतिहेमचन्द्र : ॥

वीरोपजीविक : । पुं० जीविकार्थमग्निहोत्रिणि ॥ यथा । अग्निहोत्रफलादात्रापरोवीरोपजीविकइति हेमचन्द्र : ॥

वीर्य्यम् । न० शुक्रे । रेतसि ॥ यथा । हरितालं हरेर्वीर्यं लक्ष्मीवीर्यं मन : शिला । पारदं शिववीर्यं स्यात्गन्धकं पार्वतीरज : ॥ इति ॥ प्रभावे ॥ तेजसि ॥ इन्द्रियसामर्थ्ये ॥ अतिशयशक्तिभाक्स्यात्माहे ॥ शक्तौ ॥ साचपृथिव्यादीनांच : सारभागस्तदतिशयरूपा । साद्विविधाचिन्त्याचिन्त्यक्रियाहेतुत्वेन । तत्रचिन्त्यक्रियाहेतुर्याद्रव्यरसादीनां

स्वस्वकर्म्मविस्वभावसिद्धाशक्तिः । अचिन्त्यक्रियाहेतुश्चप्रभावापरपर्यायः द्रव्याणांरसाद्यनुरूपकार्यकरणशक्तिः । उक्तञ्च । भूतप्रभावातिशयोद्रव्येपाकोरसेस्थितः । अचिन्त्योऽचिन्त्यक्रियाहेतुर्वीर्यंधन्वन्तरेर्मतमिति ॥ अस्याश्वधिमाह । यामंकल्कक्षायवीर्यमखिलंचूर्णञ्चपञ्चवर्षंषण्मासान्घृतमोदकौसद्गुडौमासत्रयंगुग्गुलोः । सिद्धानांरसभस्मनांसुविपुलंवीर्यञ्चवर्षत्रयम्-किञ्चिद्गन्धविवर्जितंगुणपरंतैलंपुराणंमहदितिनारायणदासकृतापरिभाषा ॥ वीरे० अक्लीवेसाधु । तत्रसाधुरितियत् ॥ यद्वा । वीर्यतेऽनेन । वीरविक्रान्तौ । अचोयत् । अघ्न्यादिर्वा ॥ बले ॥

वीर्यवान् । त्रि० मांसले । वीर्यमस्त्यस्मिन्वा । मतुप् ।

वीर्य्यवृद्धिकरम् । न० वृष्ये । वाजीकरणे । शुक्रवृद्धिकारकौषधादौ ॥

वीर्य्या । स्त्री० अतिशयशक्तौ ॥

वीसर्प्पः । पुं० विसर्पे ॥

वीहारः । पुं० बुद्धमन्दिरे । महालये ।

वुक्कः । पुं० बक्कपोद्पे । शिवमल्ल्याम् ॥ वाति । वा० बाहुलकात्कुक् । कुनोकारस्योत्त्वं वा ॥

वृंहणः । पुं० यावकाख्ये० खाद्यभेदे ॥ संयावोवृंहणोगुरुः ॥ त्रि० पुष्टिकारके ॥

वृंहितम् । न० करिगर्जिते ॥ वृहणम् । वृहिध्वनौ । नपुंसकेक्तः ॥

वृकः । कोके । ईहामृगी । हुंडार० हि० भेडिया० इ० अभाषा० प्र० ॥ वर्कते । वृकआदाने । इगुपधेतिकः । यद्वा । वृणोति । वृञ० सृवृभूशुषिमुषिभ्यःकक् ॥ शृगाले ॥ कृत्रिमधूपे ॥

वृकदंशः । पुं० कुक्कुरे ॥ वृकान् दंशयति । दंश० । कर्मण्यण् ।

वृकधूपः । पुं० नानासुगन्धिद्रव्यकृतधूपविशेषे । कृत्रिमधूपे ॥ सरलद्रवे । वृक्षधूपे । श्रीवेष्टे ॥ वृकइवधूपः ॥ धूप्यतेऽनेन । धूपसन्तापे । घञ् । वृकनामाधूपः शाकपार्थिवादिर्वा ॥

वृकधूर्त्तः । पुं० शृगाले ॥

वृका । स्त्री० अम्बष्ठायाम् । पाठायाम् ॥

वृकाणी । स्त्री० त्रिवृति ॥

वृकारातिः । पुं० कुक्कुरे ॥

वृकारिः । पुं० कुक्कुरे ॥

वृकी । स्त्री० पाठायाम् ॥

वृकोदरः । पुं० भीमाख्यपाण्डवे । भीमसेने ॥ यस्यतीक्ष्णो वृकोनाम जठरेहव्यवाहनः । मयोदत्तः स

धर्मात्मातेनचासौवृक्षोदरः ॥ वृ० मत्स्यपु० ॥ वृक्षवदुदरंयस्यसः ॥

वृक्णः । त्रि० छिन्ने । वृश्च्यते स्म । ओव्रश्चूछेदने । क्तः ॥

वृक्षः । पुं० महीरुहे । शाखिनि । विटपिनि । पादपे ॥ पुष्पिताः फलिनश्चैववृक्षास्तूभयतः स्मृताः ॥ वृक्षतिवृक्षवरणे । पचाद्यच् । यद्वा । वृश्च्यत्युत्थाम्० वृश्च्यतेवा । ओव्रश्चू० । स्नुवृश्चिकृत्यृषिभ्यः किदितिसः ।

वृक्षकः । पुं० कुटजवृक्षे ॥ ह्रस्वो वृक्षः । ह्रस्वइतिकः ॥

वृक्षखण्डः । पुं० वृक्षाणांसमूहे ॥ वृक्षादिभ्यः खण्डः ॥

वृक्षचरः । पुं० वानरे ॥

वृक्षधूपः । पुं० श्रीवासे । सरलद्रवे ॥

वृक्षनाथः । पुं० वटवृक्षे ॥

वृक्षपञ्चकम् । न० चौरिवृक्षपञ्चके ॥

वृक्षपाकः । पुं० वटद्रुमे ॥

वृक्षभक्षा । स्त्री० वन्दायाम् ॥

वृक्षभवनम् । न० वृक्षकोटरे ।

वृक्षभित्० द् । स्त्री० वृक्षभेदिनि । वास्याम् ॥ वृक्षं भिनत्ति । भिदिर्० । क्विप् ॥

वृक्षभेदी पुं० कुठारविशेषे । वृक्षादने ॥ वृक्षं भेत्तुं शीलमस्य । भिदिर् विदारणे । सुपीतिणिनिः ॥

वृक्षमर्कटिका । स्त्री० हरिद्रूतिप्रसिद्ध पशुमृगजातौ ॥

वृक्षमार्जारः । पुं० वृक्षविडाले । गिलहरी० टिलरी० इ० भा० ॥

वृक्षमृदुः । पुं० जलवेतसे ॥

वृक्षराजः । पुं० अम्लवेतसे ॥

वृक्षरुहा । स्त्री० वन्दायाम् ॥ वृक्षं रोहतिरुहेर्मूलविभुजादित्वात्कः ॥ अमृतस्रवायाम् ॥

वृक्षवाटिका । स्त्री० अमात्यस्य० गणिकायाश्च० गेहस्योपवने ॥ वट्यते । वटवेष्टने । संज्ञायामितिण्वुल् । टाप् । प्रत्ययस्थादितीत्वम् । वृक्षाणांवाटिका ॥

वृक्षादनः । पुं० वृक्षभेदिनि० कुठारविशेषे ॥ वृक्षमत्ति । अद० । कृत्यल्युटइतिल्युट् । चलदले ॥ मधुच्छन्दे ॥ पियाले ॥

वृक्षादनी । स्त्री० वन्दायाम् ॥ विदारीकन्दे ॥ विदारीगन्धिकौषधौ ॥ टित्वान्ङीप् ॥

वृक्षादिरुहकम् । )<br>वृक्षादिरूढकम् । ) न० आलिङ्गने ॥

वृक्षामयः । पुं० लाक्षायाम् ॥

वृक्षाम्लः । पुं० आम्रातके ॥ न० शाकाम्ले । तिन्तिडीके । चुक्रे ॥ अस्यगुणाः । वृक्षाम्लमाममम्लोष्णंवातघ्नंकफपित्तलम् । पक्वन्तुगुरुसङ्ग्राहिकटुकंतुवरंलघु । अम्लोष्णं

रोपणं रक्षणं दीपनं कफशातकृत् । ल
ब्धार्थोयः फणीमुल्मशूलकृद्रोगजन्तुजि
त् ॥ वृक्षस्याऽस्त्रम् ॥ वृक्षेष्वस्त्रो
वा ॥

वृक्षायुर्वेदः । पुं० महीरुहाणां चिकि
त्सायाम् ॥ सच वाराह्यां ५३
अध्याये । यथा । तत्रादौ प्रयोजनप्र
दर्शनार्थमाह । प्रान्तच्छायाविनि
र्मुक्ता न मनोज्ञा जलाशयाः । तस्मा
द्धि जलप्रान्तेष्वारामान् विनिवेशये
त् ॥ १ ॥ तत्र भूलक्षणम् । मृ
द्वी भूः सर्ववृक्षाणां हिता तस्यां ति
लान् वपेत् । पुष्पितांस्तांश्च मृद्नी
यात् तत्कर्म प्रथमं भुवः ॥ प्रथम
रोप्या वृक्षाः । अरिष्टाशोकपुन्नाग
शिरीषाः सप्रियङ्गवः । मङ्गल्याः
पूर्वमारामे रोपणीया गृहेषु वा ॥ ३ ॥
काण्डरोप्याणां विधानमाह । पन
साशोककदलीजम्बूबकुलदाडिमाः ।
द्राक्षापालीवताश्चैव बीजपूरातिमु
क्तकाः ॥ एते द्रुमाः काण्डरोप्या
गोमयेन प्रलेपिताः । मूलोच्छेदेऽथ
वा स्कन्धे रोपणीयास्ततः परम् ॥ ५ ॥
कालनियमार्थमाह । अजातशा
खान् शिशिरे जातशाखान् हिमागमे
। वर्षागमे च सुस्कन्धान् यथादिक्
स्थान् प्ररोपयेत् ॥ घृतोशीरतिल
क्षौद्रविडङ्गक्षीरगोमयैः । आमूल
स्कन्धलिप्तानां सङ्क्रामणविरोपण

वृक्षायुर्वेदः

म् ॥ ७ । रोपणविधानम् । शुचि
र्भूत्वा तरोः पूजां कृत्वा स्नानानुले
पनैः । रोपयेद्रोपितश्चैव पत्रैस्तै
रेव जायते ॥ ८ ॥ रोपितानां सेक
विधानम् । सायं प्रातश्च घर्मर्त्तौ शी
तकाले दिनान्तरे । वर्षासु च भुवः
शोषे सेक्तव्या रोपितद्रुमाः ॥ ९ ॥
अनूपजानाह । जम्बूवेतसवानीरक
दम्बोदुम्बरार्ज्जुनाः । बीजपूर
कमृद्वीकलकुचाश्च सदाडिमाः ।
वञ्जुलो नक्तमालश्च तिलकः पनस
स्तथा । तिमिरोम्रातकश्चेति षोड
शानूपजाः स्मृताः ॥ ११ ॥ रोपि
तानां वृक्षाणां किम्प्रमाणमन्तरं का
र्य्यमित्याह । उत्तमं विंशतिर्हस्ता
मध्यमं षोडशान्तरम् । स्थानात्
स्थानान्तरं कार्य्यं वृक्षाणां द्वादशावर
म् ॥ १२ ॥ किमर्थमन्तरं कार्य्यं त
दाह । अभ्यासजातास्तरवः सं
स्पृशन्तः परस्परम् । मिश्रैर्मूलैश्च
न फलं सम्यग् यच्छन्ति पीडिताः
॥ २३ ॥ तेषां रोगज्ञानमाह । शी
तवातातपै रोगो जायते पाण्डुपत्र
ता । अवृद्धिश्च प्रवालानां शाखाशो
षो रसस्रुतिः ॥ १४ ॥ एतेषां चि
कित्सामाह । चिकित्सितमथैतेषां
शस्त्रेणादौ विशोधनम् ॥ विडङ्गघृ
तपङ्काक्तान् सेचयेत् क्षीरवारिणा ॥
फलनाशे चिकित्सितमाह ॥ फल

 

नारीकुलत्थैर्माषैर्मुद्गैस्तिलैर्यवैः। घृतशीतपयःसेकः फलपुष्पसमृद्धये ॥ १६ ॥ वृद्ध्यर्थंप्रयोगः। आविकाजशकृच्चूर्णस्याढके द्वे तिलाढकम्। सक्तुप्रस्थो जलद्रोणो गोमांसतुलया सह ॥ सप्तरात्रोषितैरेतैः सेकः कार्यो वनस्पतेः। वल्लीगुल्मलतानाञ्च फलपुष्पाय सर्वदा ॥ १८ ॥ अथ बीजानां वापनविधानम्। वासराणि दश दुग्धभावितं बीजमाज्ययुतहस्तयोजितम्। गोमयेन बहुशो विरूक्षितं क्रौडमार्गपिशितैश्च धूपितम् ॥ मांससूकरवसासमन्वितं रोपितञ्च परिकल्पितावनौ। क्षीरसंयुतजलावसेचितं जायते कुसुमयुक्तमेव तत् ॥ २० ॥ अथ तिन्तिडीविधानम्। तिन्तिडी ह्यपि करोति वल्लरीं व्रीहिमाषतिलचूर्णसक्तुभिः। पूतिमांससहितैश्च सेचिता धूपिता च सततं हरिद्रया ॥ २१ ॥ अथ कपित्थबीजरोपणम्। कपित्थवल्लीकरणाय मूलान्यास्फोतधात्रीधववासिकानाम्। पलाशिनीवेतसमूर्य्यवल्लीश्यामातिमुक्तैः सहिताष्टमूली ॥ क्षीरे शृते चाप्यनया सुशीते तालं शतं स्थाप्य कपित्थबीजम्। दिने दिने शोषितमर्कपादैर्मासं विधिस्त्वेष ततोऽधिरोप्यम् ॥ हस्तायतं तद्द्विगुणं गभीरं खात्वावटं प्रोक्तजलावपूर्णम्। शुष्कं प्रदग्धं मधुसर्पिषा तं प्रलेपयेद्भस्मसमन्वितेन ॥ चूर्णीकृतैर्माषतिलैर्यवैश्च प्रपूरयेन्मृत्तिकयान्तरस्थैः। मत्स्यामिषाम्भःसहितञ्च हन्याद्यावद्घनत्वं समुपागतं तत् ॥ उप्तञ्च बीजं चतुरङ्गुलाधो मत्स्याम्भसा मांसजलैश्च सिक्तम्। वल्ली भवत्याशु शुभप्रवाला विस्मापनी मण्डपमावृणोति ॥ २६ ॥ अथान्येषां रोपणम्। शतशोऽङ्कोठसम्भूतफलकल्केन भावितम्। एतत्तैलेन वा बीजं श्लेष्मातकफलेन वा ॥ वापितं करकाम्भश्च मर्द्दितं तत्क्षणजन्मकम्। फलभारान्विता शाखा भवतीति किमद्भुतम् ॥ २८ ॥ श्लेष्मातकरोपणम्। श्लेष्मातकस्य बीजानि निष्कुलीकृत्य भावयेत् प्राज्ञः। अङ्कोलविज्जलाद्भिश्छायायां सप्तकृत्वैवं ॥ माहिषगोमयघृष्टान्यस्य करीषे च तानि निक्षिप्य। करकाजलमृद्योगेन्युप्तान्यह्ना फलकराणि ॥ वृक्षाणां रोपणनक्षत्राणि। ध्रुवमृदुमूलविशाखागुरुभं श्रवणं तथाश्विनं हस्तम्। उक्तानि दिव्यदृग्भिः पादपसंरोपणे भानि ॥ ३१ ॥ इति ॥

वृक्षरुहा। स्त्री० वन्दाकायाम्। वृक्षमारोहतीति तथा ॥

वृक्षारोपकः। त्रि० वृक्षाणामारोप-

यितरि ॥

वृक्षार्हा । स्त्री॰ महामेदायाम् ॥

वृक्षालयः । पुं॰ खगे । पक्षिणि ॥

वृक्षाश्रयी । पुं॰ क्षुद्रोलूके ॥

वृक्षेशयः । पुं॰ विहगे ॥ वृक्षे शेते । शीङ्॰ । अधिकरणे शेतेरित्यच् । शयवासवासिष्वकालादित्यलुक् ॥

वृक्षोत्पलः । पुं॰ कर्णिकारे ॥

वृजनः । पुं॰ केशे ॥ न॰ पापे ॥ आकाशे ॥ वृणक्ति॰वृज्यते वा । वृजीवर्जने । कृपृवृजीत्यादिना क्युः ॥

वृजिनः । पुं॰ केशे ॥ न॰ कल्मषे । अघे ॥ रक्तचर्मणि ॥ कर्मफले । धर्माधर्मरूपसंसारफलेकर्मणि ॥ पापवत्पुण्यस्याप्यनिष्टफलत्वात् ॥ त्रि॰ कुटिले । वक्रे ॥ वृज्यते । वृजी॰ । वृजेः किच्चेति॰इनच् ॥

वृजिनच्छित् ॰दृ । त्रि॰ दुःखहन्तरि ॥

वृतः । त्रि॰ वृत्ते । व्यावृत्ते । कृतवरणे ॥ स्वयंवरादौस्वीकृतवरादौ ॥ व्रियतेस्म । वृञ्वरणे । क्तः ॥ आवृते ॥

वृतकौशा । स्त्री॰ देवदाल्याम् ॥

वृतपत्रा । स्त्री॰ पुत्रदात्र्यामोषधौ ॥

वृतपुत्रा स्त्री॰ वृतपत्रायाम् ॥

वृतिः । स्त्री॰ वरणे । वेष्टने । वाटे । बाड़इतिग्रामीणप्रसिद्धिविषयेकण्टकशाखावरणे ॥ वरणम् । वृञ् ॰ । क्तिन् ॥ गोपने ॥

वृतिङ्करः । पुं॰ विकङ्कतवृक्षे ॥ त्रि॰ वृतिकारके ॥

वृतिस्थः । पुं॰ सरटे ॥ त्रि॰ वृतौतिष्ठति ॥

वृत्तः । पुं॰ कूर्मे पुं॰न॰ पद्ये यथा । पद्यंचतुष्पदीतच्चवृत्तंजातिरितिद्विधा । वृत्तमक्षरसङ्ख्यातंजातिर्मात्राकृताभवेत् ॥ वृत्तौ ॥ चारित्रे ॥ वेदबोधिताचारस्यपरिपालने ॥ छन्दसि ॥ कृतिच्छन्दोभेदे ॥ यथा । वृत्तमीदृगन्तुनामतोरजौरजौरजौगुरुर्लघुश्च । यथा । चित्तवृत्तलीलयानिसर्गरम्यदेहरूपविभ्रमेणराजमानसद्वयोविलाससम्पदाकलाकुतूहलेन । यः समंव्रजाङ्गनाजनैः सुराङ्गनानिभैः सुखंसमेत्यविष्णुरुल्लासचित्तपङ्कजोषषट्पदः समेसदास्तु ॥ त्रि॰ अधीते ॥ गोरध्ययनेवृत्तमितिनिपातितः । वृत्तंव्याकरणम्॰अधीतमित्यर्थः ॥ अतीते ॥ अतिवर्त्तुले ॥ वृते ॥ मृते ॥ दृढे ॥ वर्त्ततेस्म॰वृत्यतेस्मवा । वृतुवर्त्ते । गत्यर्थेतिक्तः ॥ वर्त्तनम् । वृतुवर्त्तनेवरणे वा । भावेक्तोवा ॥

वृत्तकम् । न॰ गद्यप्रभेदे ॥ तल्लक्षणोदाहरणे यथा । अकठोराऽक्षरंस्वल्पसमासंवृत्तकंमतम् ॥ यथा । सहिचयाणामेवजगतांगतिः परमपुरुषः पुरुषोत्तमोदृप्तदानवभरेणभङ्गु

राज्ञीमवमिमवलोक्यकरुणार्द्रहृद
यस्तस्याभारमवतारयितुंरामकृष्ण
स्वरूपिणांशतोयदुवंशेऽवततारयस्तुप्र
सङ्गेनापिस्मृतोवागृहीतनामापुंसां
संसारपारमवलोकयति ॥

वृत्तकर्कटिका। स्त्री० वृत्तकर्कव्याम् ॥

वृत्तकर्कटी। स्त्री० वृत्तार्वारी। षड्भु
जायाम् ॥

वृत्तगन्धि। न० गद्यप्रभेदे ॥ तल्लक्षणं
यथा। भवेदुत्कलिकाप्रायंसमासा
व्यंदृढाक्षरम्। वृत्तैकदेशसम्बन्धा
द्वृत्तगन्धिपुन: स्मृतम्। तदुदा
हरणंयथा। जयजयजयजनार्दनसु
कृतिमनस्तडागविकस्वरचरणपद्मप
द्मपत्रनयनपद्मापद्मिनीविनोदराज
हंसाभभास्वरयश: पटलपरिपूरि
तभुवनकुहर। हरकमलासनादिवृं
दारकवृन्दवन्दनीयपादारविन्दद्व
न्द्वनिर्मुक्तयोगीन्द्रहृदयमन्दिराबि
ष्कृतनिरञ्जनज्योति: स्वरूपनीर
द्रूपविरूपपनाथनाथजगन्नाथमा
ममवधिभवदु: खव्याकुलंरक्षरक्षर
क्ष ॥

वृत्तगुण्ड:। पुं० तृणविशेषे। दीर्घ
नाले। जलाशये ॥ अयंद्विधा। ल
घुस्थूलभेदात्। तत्रस्थूलोऽधिकगु
ण: ॥

वृत्ततण्डुल:। पुं० यावनाले ॥

वृत्तत:। अ० वृत्तेनेत्यर्थे ॥

वृत्तनिष्पावी। स्त्री० वृत्तनिष्पाविकाया
म्। नखनिष्पावे ॥

वृत्तपर्णी। स्त्री० महाश्रावणपुष्पिकाया
म् ॥ पाठायाम् ॥

वृत्तपुष्प:। पुं० कदम्बे ॥ शिरीषे ॥
वानीरे ॥ कुब्जके ॥ मुद्गरे ॥

वृत्तफल:। पुं० दाडिमे ॥ बदरे ॥
न० मरिचे ॥

वृत्तफला। स्त्री० आमलक्याम् ॥ वा
र्त्ताक्याम् ॥ शशाण्डुल्याम् ॥

वृत्तमल्लिका। स्त्री० श्वेतार्के। मोदि
न्याम् ॥

वृत्तबीज:। पुं० भिण्डायाम् ॥

वृत्तबीजका। स्त्री० पाण्डुरफल्याम् ॥

वृत्तबीजा। स्त्री० आढक्याम् ॥

वृत्तसम्पन्न:। त्रि० सदाचारवति ॥

वृत्ता। स्त्री० झिञ्झिरिष्टायाम् ॥ प्रि
यङ्गौ। रेणुकायाम् ॥ मांसरोहि
ण्याम् ॥

वृत्ताध्ययनर्द्धि:। स्त्री० ब्रह्मवर्चसे ॥
वृत्तस्याचार: ०अध्ययनस्यगुरुमुखा
द्दाक्षरग्रहणम्०तयोर्ऋद्धि: ॥

वृत्तानन्दम्। न० मात्रावृत्तान्तरे ॥
तल्लक्षणोदाहरणं यथा। एकादश
विरामि०सप्तविरामि०यदिवृत्ताद्य
न्तं भवति। छन्दोवृत्तानन्दमिहया
नन्दकारिफणिनृपतिरितिवदति ॥
यथा। मधुरस्मितनवशालियदिव
नमालिवदनकमलमवलोकये। य

अरसुधारसधामपरमभिराममवलम्बि जीवितमयि ॥

वृत्तान्तः । पुं॰ वार्तायाम् । प्रवृत्तौ । उदन्ते । समाचारे ॥ यथा । अतीतजन्मवृत्तान्तं बाल्ये प्राये अपश्यति । ऐहिकं यौवनेऽन्ते तु तपस्वीभाविबोध्यते ॥ वार्ताजनश्रुतिराख्यायिकाचेतिस्वामी ॥ प्रभेदे । विशेषे ॥ प्रक्रियायाम् ॥ कार्त्स्न्ये । प्रस्तावे । अवसरे ॥ वृत्तोऽनुवर्तनीयोगवेषणीयोऽन्तः समाप्तिर्यस्य । वृत्तोन्तोस्य॰वृत्तस्यान्तइति वा । भावे ॥

वृत्तावृत्तम् । न॰ मात्रावृत्तान्तरे ॥ तस्यलक्षणोदाहरणे यथा । इहसमचतुष्कलगणनिर्मितपदंविलघुविरामंभवतियदि । नागाधिपपिङ्गलभणितसुमङ्गलवृत्तावृत्तमिदंहिपदि ॥ यथा । इहदितावदनेकः स्फुरतिविवेकस्तपसिमनोनियतंभवति । यावन्नवहरिणीनयनातरुणीस्मितसुभगंनविलोकयति ॥

वृत्तिः । स्त्री॰ व्याख्यानग्रन्थविशेषे । विवरणे ॥ आजीवे । वर्त्तने । कृष्यादिजीवने । अनुष्ठेयायांजीविकायाम् ॥ कैशिक्यादौ ॥ यथा । भारतीसात्वतीचैवकैशिक्यारभटीतथा । चतस्रोवृत्तयश्चैतायासुनाट्यंप्रतिष्ठितमितिभरतः ॥ शृङ्-



गारेकैशिकीवीरेसात्वत्यारभटीपुनः । रसेरौद्रे चबीभत्से वृत्तिःसर्वंचभारती । चतस्रोवृत्तयोह्येताः सर्वनाट्यस्यमातृकाः ॥ प्रवर्तने ॥ विभृतौ ॥ व्यवहारे ॥ वर्ततेऽनया । वृतुवर्त्तने । स्त्रियांक्तिन् ॥ प्रमाणविपर्ययविकल्पनिद्रास्मृतिषु पञ्चविधासु ॥ लज्जादिवृत्तीनामपिपञ्चस्वेवान्तर्भावः ॥ अर्थसन्निकृष्टेन्द्रिये ॥ इन्द्रियाणांव्यापारे । विषयाकारवृत्तिपरिणामे ॥ वृत्तीनामानन्त्याद्दर्शयत्तांसूचयतिपतञ्जलिः । वृत्तयः पञ्चतय्यःक्लिष्टाअक्लिष्टाइति । वृत्तयश्चित्तस्यपरिणामविशेषाः । रागद्वेषादिक्लेशरूपाः॰आसुरवृत्तयःक्लिष्टाः । रागादिरहितादैववृत्तयोऽक्लिष्टाः । यद्यपिपञ्चस्वेवक्लिष्टानामक्लिष्टानामन्तर्भावः॰तथापिक्लिष्टा एवनिरोद्धव्याइतिमन्दबुद्धिंवारयितुंताभिःसहाक्लिष्टाउदाहृताः । नामधेयलक्षणाभ्यांवृत्तीर्विशदयितुंसूत्रषट्कमाह । प्रमाणविपर्ययविकल्पनिद्रास्मृतयः । प्रत्यक्षानुमानागमाः प्रमाणानि । विपर्ययोमिथ्याज्ञानमतद्रूपप्रतिष्ठम् । अतद्रूपप्रतिष्ठम्॰तस्यार्थस्ययद्रूपंमतस्मिन्रूपेप्रतिष्ठति॰तस्यार्थस्ययत्पारमार्थिकंरूपंनतत्प्रतिभा

सयतीतियावत् । संशयोप्यतद्रूप प्रतिष्ठत्वान्मिथ्याज्ञानम् । यथास्थाणुर्वापुरुषोवेति । शब्दज्ञानानुपातीवस्तुशून्योविकल्पः । अभावप्रत्ययालम्बनावृत्तिर्निद्रा । अनुभूतविषयाऽसम्प्रमोषः स्मृतिः ॥ तत्रप्रमाणविपर्ययविकल्पाजाग्रदवस्था । तएवयदानुभवबलात् प्रत्यक्षायमाणाः सास्वप्नः । निद्रात्वसंवेद्यमानविषया । स्मृतिश्चप्रमाणविपर्ययविकल्पनिद्रानिमित्तेतिव्याख्याताः वृत्तयः । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपासुपञ्चसु । विच्छिन्नप्रतिविधाने ॥ अप्रतिबन्धे ।

वृत्तिग्लानः । त्रि० वृत्तिक्षीणे ॥

वृत्तिज्ञानम् । न० घटाकारज्ञाने ॥ यद्यपिवृत्तिज्ञानमपिस्वरूपज्ञानमेव । तथापि । अन्तःकरणदोषैस्तत्तथातयाभातीतितत्तोभेदः ॥

वृत्तिनिरोधः । पुं० वृत्तीनांप्रतिहनने ॥ तत्साधनंसूत्रयतिभगवान् पतञ्जलिः । अभ्यासवैराग्याभ्यांतन्निरोधः । इति । प्रकाशप्रवृत्तिनियमरूपाणांचित्तवृत्तीनामभ्यासवैराग्याभ्यांप्रतिहननंसनिरोधः यथातीव्रवेगोपेतंनदीप्रवाहंसेतुबन्धेननिवार्यकुल्याप्रणयनेनक्षेत्राभिमुखंतिर्यक्प्रवाहान्तरमुत्पाद्यते । तथावैराग्येणचित्तनद्याविषयप्रवाहंनिवार्य । समाध्यभ्यासेन । प्रशान्तप्रवाहः सम्पाद्यते । एतदुक्तंभवति । तासांविनिवृत्तबाह्याभिनिवेशानामन्तर्मुखतयास्वकारणएवचित्तेशक्तिरूपतयावस्थानम् । तत्रविषयदोषदर्शनजेनवैराग्येण । तद्वैमुख्यमुत्पाद्यते । अभ्यासेनचसुखजनकशान्तप्रत्ययप्रवाहप्रदर्शनेनद्वारेणदृढंस्थैर्यमुत्पाद्यतइत्याभ्यांभवतिचित्तवृत्तिनिरोधः ॥

वृत्तिभेदः । पुं० प्रवृत्तिनिमित्तभेदे ॥

वृत्तिमान् । त्रि० वार्ते ॥ वृत्तिरस्यास्मिन्वास्ति । मतुप् ॥

वृत्तिविषयः । पुं० वृत्तिव्याप्ये ॥ आत्मनि ॥

वृत्तिविस्मरणम् । न० ध्यातृध्येयाकारवृत्तिशून्ये । द्वैताननुसन्धाने ॥

वृत्तिव्याप्यत्वम् । न० विशिष्टशब्दादिप्रमाणबलात् । तत्तद्विषयाकाराधीसमुन्मेषाभिव्यक्तत्वे ॥ ब्रह्मज्ञाननाशायवृत्तिव्याप्तिरपेक्षिता ॥

वृत्त्यः । त्रि० वरणीये ॥ वरणं । क्रियतेवा । वृञ् वरणे । एतिस्तुशास् वृदृजुषः क्यप् ॥

वृत्त्यनुप्रासः । पुं० शब्दालङ्कारान्तरे । यथा । एकस्याप्यसकृत्परः । ए

क्षस्य • अपिशब्दादनेकव्यञ्जनस्य • हि वं हुङ्कृत्वोवासोद्दष्ट्यं वृत्त्यनुप्रास : । यथा । युधिष्ठिरं हैतवनेवनेचरद्र स्यच • द्वयो : स्वरव्यञ्जनसमुदाययो रेकदैवावृत्ति : ॥

वृत्र : । पुं • ध्वान्ते । अन्धकारे ॥ अ रौ । शत्रौ ॥ त्वष्टु : पुत्रे दानवबि शेषे ॥ वृजिनात् त्रातुमधुनायस्मा च्छत्तोसिपुत्रक । तस्माद्वृत्रइति ख्यातंतवनामभविष्यति ॥ धर्मे ॥ शैलविशेषे ॥ वासवे । इन्द्रे ॥ वृ णोति । वृञ् • । बाहुलकात् त्र : ॥ वर्त्तते । वृतुवर्त्तने । स्फायित श्चीत्यादिनारक् वा ॥

वृत्रद्विट् । पुं० इन्द्रे ॥ वृत्रं द्वेष्टि । द्विषअप्रीतौ । सत्सूद्विषेत्यादिना क्विप् ॥

वृत्रभोजन : । पुं • गण्डीरे । समष्ठि लायाम् । समठ • इ • गौ० दे० भा० ॥

वृत्रहा । पुं० इन्द्रे ॥ वृत्रं हतवान् । ब्रह्मभ्रूणवृत्रेषुक्विप् ॥

वृत्रारि : । पुं • शक्र । इन्द्रे ॥

वृथा । अ • वन्ध्ये । मुधा । अविधौ । निरर्थके ॥ यथा । वृथावृष्टि : समु द्रेषुवृथातृप्तस्यभोजनंवृथा । वथ ादानं समर्थस्यनीचस्यसुकृतंवृथा ॥ नि ष्कारणे ॥

वृथाजन्म । न • निरर्थकजनने ॥ *

वृथादानम् । न • परिहासनिमित्त पण्डादिभ्योदेये ॥ धूर्त्तेबन्दिनिम ल्लेचकुवैद्येकितवेशठे । चारचार णचौरेषुदत्तंभवतिनिष्फलम् ॥

वृथामांसम् । न • देवतादिकमनुद्दि श्यकृतेमांसे ॥ तद्भक्षणे प्रत्यवायं भव तीत्युक्तं वह्निपुराणे । यथा । वृथा रेतावृथामांसोवृथावादीवृथामति : । निन्दकोद्विजदेवानांसप्रेताजाय तेनरइति ॥

वृद्ध : । पुं • वृद्धदारके ॥ न • गन्धद्रव्य विशेषे । शैलजे । शैलेये । अश्मपुष्पे । रन्दूच • छरीला • इत्यादिभाषाप्र सिद्धे ॥ रूढे ॥ त्रि • जीर्णे । प्रवय सि । स्थविरे । जीने । गतयौवने ॥ सप्ततिवर्षानन्तरंवृद्धउच्यते । य था । वृद्धोजनोदु : खशतानिभुङ्क्ते । इ • ॥ नतेनवृद्धोभवतियेनास्यप लितंशिर : । योवैयुवाप्यधीयानस्तं देवा : स्थविरंविदुरितिमनु : । वृ द्धप्रत्युत्थायाभिवादनं कार्य्यम् ॥ ज्ञे । पण्डिते ॥ वर्द्धतेस्म । वृधुवृ द्धौ । गत्यर्थेतिक्त : । यस्यविभाषे तिनेट् ॥

वृद्धकाक : । पुं • काकोले । द्रोणका के ॥

वृद्धगङ्गा । स्त्री • कामरूपपीठस्थनदी विशेषे ॥

वृद्धत्वम् । न • स्थाविरे । वार्द्धक्ये ॥ वृद्धस्यभाव : । तस्यभावस्त्वतलौ ॥

वृद्धदारकः। पुं॰ छगलान्त्राम्। विधारा॰इ॰भा॥ वृद्धोदारकोऽस्मात्॥ वृद्धत्वंदारयतिवा। खुल्॥

वृद्धदारु। न॰ वृद्धदारके। विधारा॰इ॰भा॰प्रसिद्धे॥ यथा। वृद्धदारुद्वयंगोल्यं पिच्छिलंकफवातनुत्। बल्यंकासामदोषघ्नं द्वितीयंस्वल्पवीर्यदम्॥

वृद्धनाभिः। त्रि॰ उन्नतनाभौ। तुण्डिले। वृद्धाउन्नतानाभिरस्य॥

वृद्धप्रपितामहः। पुं॰ प्रपितामहस्यजनके॥

वृद्धप्रपितामही। स्त्री॰ प्रपितामहस्यजनन्याम्॥

वृद्धबला। स्त्री॰ महासमङ्गायाम्॥

वृद्धवाहनः। पुं॰ आम्रवृक्षे॥ सुपक्वावृद्धवाहनवृत्तिकेचित्॥

वृद्धविभीतकः। पुं॰ आम्रातके॥

वृद्धश्रवाः। पुं॰ सुनासीरे। इन्द्रे॥ वृद्धेभ्यः शृणोति। श्रुश्रवणे। असुन्॥ वृद्धेश्रवसीयस्येतिवा। वृद्धेषुपलितेषुश्रवोयशोयस्येतिवा।। वृद्धात्बृहस्पतेः शृणोतिवा॥

वृद्धश्रावकः। पुं॰ कपालिनि॥

वृद्धसङ्घः। पुं॰ वार्द्धके॥ वृद्धानांसङ्घः॥

वृद्धसूत्रकम्। न॰ इन्द्रतूले। योग्यासे। महदृध्वजे। बुढियाकासूत॰इ॰भा॰॥

वृद्धा। स्त्री॰ गतयौवनायाम्। पलिक्न्याम्। जरत्याम्॥ तदवस्थाकालोयथा। आषोडशाद्भवेद्बाला-तरुणीत्रिंशतोमता। पञ्चपञ्चाशतः प्रौढावृद्धाभवतितत्परम्॥ महाश्रावणिकायाम्॥ अङ्गुष्ठे॥

वृद्धाङ्गुलिः। स्त्री॰ अङ्गुष्ठे॥

वृद्धिः स्त्री॰ वर्द्धने। स्फात्याम्॥ विष्कम्भादिप्वेकादशेयोगे॥ तत्रजातस्यफलंयथा। प्रसूतिकालेयदिवृद्धियोगोनरः शुभोगोविनयान्वितश्च। धनप्रयोगग्रहणे पुटुस्तोविचक्षणः स्यात्क्रयविक्रयाभ्यामिति॥ अष्टवर्गौषधान्तरे। योग्यायाम्। ऋद्धौ। सिद्धौ। लक्ष्म्याम्॥ अस्यागुणायथा। ऋद्धिर्वृद्धिश्चमधुरासुस्निग्धातिक्तशीतला। कृमिमेधाकरीश्लेष्मकुष्ठक्रिमिहरापरा॥ प्रयोगेष्वनयोरेकंयथालाभंप्रयोजयेत्। यत्रयद्वातुमिष्टिः स्याद्द्वयमप्यत्रयोजयेदितिराजनिर्घण्टः॥ ऋद्धिवृद्ध्योरुत्पत्तिलक्षणानगुणायथा। ऋद्धिर्वृद्धिश्चकन्दौद्वौभवतः कोशयामले। श्वेतलोमान्वितः कन्दोलताजातः सरन्ध्रकः॥ सएवऋद्धिर्वृद्धिश्चभे

दमप्येतयोर्भुवि । तूलग्रन्थिसमा ऋद्धिर्वामावर्त्तफलाचसा ॥ वृद्धिस्तुदक्षिणावर्त्तफलाप्रोक्ता महर्षिभिः । ऋद्धिर्योग्यं सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वयाइमे ॥ ऋद्धिर्बल्या त्रिदोषघ्नी शुक्रला मधुरा गुरुः । प्राणैश्वर्यकरी मूर्च्छारक्तपित्तविनाशिनी॥ वृद्धिर्गर्भप्रदा शीता बृंहणी मधुरा स्मृता । वृष्यापित्तास्रशमनी-क्षतकासक्षयापहा ॥ राज्ञामप्यष्टवर्गस्तु यतोऽयमतिदुर्लभः । तस्माद्‌स्यप्रतिनिधिं गृह्णीयात्तद्गुणं भिषक्॥ मुख्याद्‌ : प्रतिनिधिः ॥ प्रतिनिधिमाह । मेदाजीवककाकोलीऋद्धिद्वन्द्वेपिचासति । वरीविदार्यश्वगन्धावाराहीश्च क्रमात् क्षिपेत् ॥ मेदामहामेदास्थाने शतावरीमूलम्० जीवकर्षभकस्थाने विदारीमूलम्० काकोलीक्षीरकाकोलीस्थानेऽश्वगन्धामूलम्० ऋद्धिवृद्धिस्थाने वाराहीकन्दं गुणैस्तुल्यं क्षिपेत ॥ कलान्तरे । वृद्धौ । लाभे । सूद० व्याज० इ० भा० ॥ अभ्युदये ॥ समृद्धौ ॥ हर्षे ॥ मुष्कवृद्धौ । कुरण्डरोगे । शैलेये ॥ धने ॥ समूहे ॥ नीतिवेदिनाक्षयादित्रिवर्गान्तर्गतवर्गविशेषे ॥ ह्रासाभावे ॥ वर्द्धनम् । वृधु वृद्धौ स्मिन् । वर्द्धतेऽनयावा ॥ उत्तमर्णेनमूलधनातिरिक्तोग्राह्यधने ॥

वृद्धिका । स्त्री० ऋद्धिनामौषधौ ॥

वृद्धिजीविका । स्त्री० अर्थप्रयोगे । कुसीदे । ऋणदानजीविकायाम् ॥ वृद्ध्याजीविका ॥

वृद्धिजीवी । त्रि० कुसीदिके ॥ वृद्ध्यर्थं द्रव्यं वृद्धिः । तयाजीवितुं शीलमस्य । णिनिः ॥

वृद्धिदः । पुं० जीवके ॥ शूकरकन्दे ॥ त्रि० वृद्धिदायिनि ॥

वृद्धिश्राद्धम् । न० आभ्युदयिकश्राद्धे ॥ नान्दीमुखश्राद्धे ॥

वृद्धोक्षः । पुं० जरद्गवे । वृद्धवृषे । वृद्धश्चासावुक्षाच । अचतुरेतिसाधुः ॥

वृद्ध्याजीवः । त्रि० वृद्धिजीविनि । कुसीदिके ॥ वृद्धिराजीवोजीविकाऽस्य ॥

वृधसानः । पुं० मनुष्ये ॥ वर्द्धते । वृधु० । ऋञ्जिवृधिमन्दिसहिभ्यः कित् इत्यसानच् ॥

वृन्तम् । न० फलपत्रादिर्येनधार्यते तत्र । प्रसवबन्धने । बोंटा० बोंटा० इ० भा० ॥ वृणोति । वृञ्० । वाहुलकाद्बिभृणोतिक्तोनुमच ॥ घटीधारायाम् ॥ कुचाग्र । स्तनमुखे ॥

वृन्ताकम् । न० वार्त्ताकौ । अस्यगुणायथा। वृन्ताकंकफपित्तकृत् ॥ अ

पित्त । वृन्ताकंस्वादुतीक्ष्णोष्णंकटु पाकमपित्तलम् । ज्वरवातबला सघ्नंदीपनंशुक्रलंलघु ॥ तद्वलंक फपित्तघ्नंवृद्धंपित्तकरंगुरु ॥ वृन्ताकंपित्तलंकिञ्चिदङ्गारपरिपाचितम् । कफमेदोनिलामघ्नमत्यर्थं लघुदीपनम् । तदेवहिगुरुस्निग्धं सतैलंलवणान्वितम् ॥ अपरंश्वेतवृन्ताककुक्कुटाण्डसमंभवेत् । तदर्शः सुविशेषणहितंहीनञ्चपूर्वत: ॥ पूर्वत: कृष्णात् ॥ भोनृन्तंधिगवृन्ताकंवृन्ताकंधिगवृन्तकम् । सवृन्तंधिगतैलाढ्यंसतैलंधिगरामठम् ॥ सर्वासांशाकजातीनांवृन्ताकंशाकनायकम् ॥

वृन्ताकी । स्त्री॰ वार्ताक्यां ॥

वृन्तिका । स्त्री॰ वृन्तितायाम् । कटुक्याम् ॥

वृन्द: । पुं॰ दशार्बुदे । शतकोटौ । मध्यार्बुदे । अजे ॥ न॰ समूहे ॥ वृण्यते वृणभक्षे । वृन्दादयश्चेतिसाधु: ॥

वृन्दा । स्त्री॰ तुलस्याम् ॥ जलन्धरस्य पत्न्याम् ॥ केदारराजकन्यायाम् ॥ राधाषोडशनामान्तर्गतनामविशेषे ॥

वृन्दार: । त्रि॰ मनोज्ञे ॥

वृन्दारक: । पुं॰ अमरे । देवतायाम् । सुरे । प्रशस्तंवृन्दंयस्यस: । शृङ्गवृन्दाभ्यामारकन् । स्त्रियांसूतकापुत्रिकावृन्दारकाणांवेतिवक्तव्यमिति॰वृन्दारका॰वृन्दारिकाच ॥ भयम् ॥ यूथपतौ ॥ यथा । वृन्दारक: सुरश्रेष्ठे मनोज्ञे यूथपावरौ तित्र्याडि: ॥ त्रि॰ मनोज्ञे ॥ श्रेष्ठे ॥

वृन्दावनम् । न॰ स्वनामप्रसिद्धे तीर्थविशेषे ॥ वृन्दावनेकिशजालसमानामीषदेवता । भूतेशोभैरवस्तत्रसर्व्वसिद्धिप्रदायक: ॥ इत्यागम: ॥ वृन्दायचतपस्तेपेतत्तु वृन्दावनंस्मृतम् । वृन्दयाचकृता क्रीडातेनवामुनिसत्तम ॥ इतिपुराणम् ॥ वृन्दायावनम् ॥

वृन्दावनेश्वरक: पुं॰ श्रीकृष्णे ॥

वृन्दावनेश्वरी । स्त्री॰ राधायाम् ॥

वृन्दिष्ठ: । त्रि॰ अतिवृन्दारके ॥ अयमेषामतिशयेनवृन्दारक: । इष्ठन् । प्रियस्थिरेतिसाधु: ॥

वृन्दीयान् । त्रि॰ वृन्दारकतरे ॥ अयमनयोरतिशयेनवृन्दारक: । ईयसुन्॰प्रियस्थिरेतिवृन्दारकस्यवृन्दादेश: ॥

वृश: । पुं॰ आर्द्रके ॥ मूले ॥ वृणोति ॥ वृञ्॰ । जनिदेच्यादिनाशक् ॥ उन्दुरौ ॥

वृशा । स्त्री॰ औषधीविशेषे ॥

वृश्चिक: । पुं॰ अलौ । द्रुणे । विच्छू॰ इ॰भा॰प्र॰ ॥ वृश्चिकविषस्यलक्षणं

यथा । दृश्यन्निरिशाटीचभिन-
तो॰वोर्द्धमाशु च । वृश्चिकस्य विषं
यातिपश्चाद्वंशोऽवतिष्ठते ॥ औषध
न्तु । जीरकस्यकृत : कल्कोघृतसै
न्धवसंयुत : । सुखोष्णोमधुनालिप्ता
वृश्चिकस्यविषं हरेत् ॥ गन्धमाघ्राय
मृदितसूर्यावर्त्तदलस्यतु । वृश्चिके
नभरोविद्ध : क्षणाद्भवतिनिर्विष :
अष्टमराशौ ॥ तत्रजनजातस्यफ
लंयथा । वृश्चिकोदयसञ्जात : शौ
र्य्यवानतिदुष्टधी : । भवेद्विद्वानस
म्पन्नोविग्रहीसुभग : सुधी : ॥ शू
ककीटे । शुयपोका॰ इ॰भा॰प्र॰
॥ ओषधीविशेषे ॥ वृश्चति । ओव्र
श्चूच्छेदने । व्रश्चिक्षो : किकन् ।
ग्रहिज्येतिसम्प्रसारणम् ॥

वृश्चिकप्रिया । स्त्री॰ पूतिकायाम् ॥

वृश्चिकर्णी । स्त्री॰ आखुकर्ण्याम् ॥

वृश्चिका । स्त्री॰ क्षुद्रक्षुपविशेषे । नखपर्ण्याम् । पिच्छिलायाम् । अलिप्रियायाम् ॥

वृश्चिकाधिप : । पुं॰ मङ्गले ॥

वृश्चिकाली । स्त्री॰ क्षुपविशेषे वृश्चिपत्याम् । विषघ्न्याम् । सर्पदंष्ट्रायाम् । भूरिदुग्धायाम् । भासुरपुष्पायाम् । विछाटी॰इ॰ गौ॰भा॰ ॥ वृश्चिकालीविषघ्नी तुकासमारुतनाशिनी ॥

वृश्चिपत्री । स्त्री॰ वृश्चिकाल्याम् ॥

वृश्चीर : । पुं॰ श्वेतमूलपुनर्नवायाम् ॥

वृष : । पुं॰ धर्मे ॥ वर्षतिफलम् । वृषुसेचने । इगुपधेतिक : ॥ वर्षणात्सर्वकामानांधर्मोवृष : इतिशङ्करभाष्यम् ॥ बलीवर्द्दे । उक्षणि । भद्रे । ऋषभे । वृषभे । अनडुहि । सौरभेये । गवि ॥ शिववाहनवृषस्यस्वरूपंयथा । शृङ्गायुध : शुद्धकायश्चतुष्पादसितच्छुर : । बृहत्ककुत्कृष्णपुच्छ : श्यामस्कंधोवृष : स्मृतइति ॥ वृषोत्सर्गवृषे ॥ तल्लक्षणंयथा । चरणानिमुखंपुच्छंयस्यश्वेतानिगोपते : । लाक्षारससवर्णञ्चतंनीलमितिनिर्द्दिशेत् ॥ एवंविधवृषाभावेऽन्यो वृषभोयोयस्योपादेय : सोऽप्युक्त : । वर्णतस्ताम्रकपिलोब्राह्मणस्यप्रशस्यते । तथा । श्वेतोदर : कृष्णपृष्ठो ब्राह्मणस्यप्रशस्यते ॥ स्निग्धरक्तेनवर्णेनक्षत्रियस्यप्रशस्यते ॥ काञ्चनाभेनवैश्यस्यकृष्णेनाप्यन्त्यजन्मन : ॥ इति । वृषोत्सर्गकालश्चाशौचान्तद्वितीयदिनम् । कार्त्तिकीचैत्री वतीयुताश्विनपूर्णि...चेति ॥ शृङ्ग्याम् ॥ चतुर्विधपुरुषमध्येपुरुषविशेषे ॥ तल्लक्षणन्तु । बहुगुणबहुबल : शीघ्रकामीनताङ्ग : सकलरुचिरदेह : सत्यवादीवृषोयमि

स्याम् । पत्न्याङ्ग्याम् । सुदर्शनायाम् । पुराती• इ•गौ•भा• ॥ आखुपर्ण्याम् ॥

वृषपर्व्वा । पुं• चम्बकसूदने । शम्भौ । ईशे ॥ दैत्यप्रभेदे । शृङ्गारिणि ॥ कशेरौ ॥ वृषरूपाविपर्व्वास्य ॥

वृषभः । पुं• श्रेष्ठे ॥ गवि । वृषे ॥ औषधीभेदे । शृङ्ग्याम् ॥ वर्षति मूत्रं यभूमिंसिञ्चति । वृषु• । ऋषिवृषिभ्यांकित्तदिल्लभच् । आदित्वे ॥ कर्त्तरि ॥

वृषभगतिः । पुं• रैरिशम्भे । शम्भौ । वृषभेणगतिर्यस्य ॥

वृषभध्वजः । पुं• महेश्वरे । शिवे ॥ वृषभोध्वजश्चिह्नमस्य ॥

वृषभाङ्कः । पुं• श्रीकृष्णे ॥ सर्वकामाभिवर्षकेषुश्रियोवसः । वसु क्रीडावितिपचः । वृषभोधर्म्मोहृष्टिरस्य ॥

वृषभाक्षी । स्त्री• इन्द्रवारुण्याम् ॥

वृषभानुः । पुं• सुरभानुपुर्ष्वे । राधिकापितरि ॥

वृषभासा । स्त्री• अमरावत्याम् ॥

वृषयः । पुं• आश्रये ॥ वृणोति । वृञ् वरणे । वृषो : पुक्दुकौचितिक यन्• पातो : पुगागमश्च ॥

वृषलः । पुं• शूद्रजने ॥ शूद्रे । चन्द्रगुप्तनृपे ॥ वाजिनि । तुरगे ॥ अधार्म्मिके ॥ वृष्यति•वर्षतिवा । वृषु• । वृषादिभ्यश्चिदितिकलः ॥ वृषं धर्म्मंलुनातिवा । लूञ्• । अन्येष्वपीतिडः । वृषंलातिवा । ला• । कः ॥ वृषोहिभगवान्धर्म्मस्तस्य यः कुरुतेह्यलम् । वृषलंतंविदुर्देवास्तस्माद्धर्म्मंनलोपयेत् ॥

वृषलपतिः । पुं• शूद्रे• चौराणांराज्ञि ॥

वृषलवृत्तिः । पुं• शूद्रोपजीवप्रवृत्तौ ॥

वृषली । स्त्री• शूद्रायाम् । जातित्वान्ङीष् ॥ स्त्रीमात्रे ॥ निरुक्तमपकुर्व्वन्ति । वृषस्यन्तीचपलयतिभर्त्तारमिति• वृषली• ब्राह्मणस्यपरिणीताब्राह्मण्यपिवृषलीति• श्राद्धभुग्वृषलीतल्पमित्यत्रकुल्लूकभट्टः ॥ कन्यातुवृषलीज्ञेया• वृषलीतुस्मृतप्रजा । अपरावृषलीज्ञेयाकुमारीयारजस्वला ॥ पितृगृहेऽपिविवाहितायांरजस्वलायांकन्यायां ॥ यथाऽविकाह्यपि । पितुर्गेहेचयाकन्यारजःपश्यत्यसंस्कृता । भ्रूणहत्यापितुस्तस्याः साकन्यावृषलीस्मृता ॥ यस्तुतांवरयेत्कन्यांब्राह्मणोज्ञानदुर्ब्बलः । अश्राद्धेयमपाङ्क्तेयंतंविद्याद्वृषलीपतिमिति ॥ स्वपतिंपरित्यज्यपरपतिगामिन्याम् । यथा । स्वबृषंयापरित्यज्यपरवृषे• वृषायते । वृषलीसाहिविज्ञेयानशूद्रीवृषलीभवेदिति ॥

वृषलीपति :। पुं॰ सवर्णामपरिणीय कृतशूद्राविवाहे ॥ वृषल्याः पतिः ॥ यस्तुतांवरयेत्कन्यांब्राह्मणोज्ञानदुर्बल : । अश्राद्धेयमपाङ्क्तेयंतंविद्याद्वृषलीपतिम् ॥ यदिशूद्रांव्रजेद्विप्रोवृषलीपतिरेवसः । तांपितुर्गृहेसञ्जातरजस्काम् ॥

वृषलीफेन :। पुं॰ शूद्रायाअधररसे॥

वृषलोचन :। पुं॰ मूषिके ॥ त्रि॰ वृषनयने ॥

वृषवाहन :। पुं॰ शिवे ॥

वृषशत्रु : । पुं॰ विष्णौ॥ द्रु॰त्रि॰प: ॥ विडाले ॥

वृषसृक्कौ । पुं॰भृङ्गरोले ॥

वृषस्यन्ती । स्त्री॰ कामुक्याम् । मैथुनेच्छावत्याम् ॥ वृषंनरं॰शुक्रलंवा॰इच्छत्यात्मनः । सुपआत्मनः क्यच् । अश्ववृषयोर्मैथुनेच्छायामितिसुक् । लटः शतृ । उगितश्चेतिङीप् ॥

वृषा । स्त्री॰ मूषिकपर्ण्याम् ॥ कपिकच्छ्वाम् ॥ वर्षति । वृषेरिगुपधेतिकः । टाप् ॥

वृषाकपायी । स्त्री॰ श्रियाम् ॥ गौर्य्याम् ॥ वृषाकपेः स्त्रीतिपुंयोगार्थे॰ वृषाकप्यग्निकुसितकुसिदानामुदात्त इत्येकारादेशोङीप्च ॥ वर्याम् । शतावर्याम् ॥ जीवन्त्याम् ॥ शच्याम् ॥ स्वाहायाम् ।

वृषाकपि :। पुं॰ हरे। स्मरहरे ॥ कृष्णे। वासुदेवे ॥ वर्षणात्सर्वकामानांधर्मोवृष : । आतृतीयात्भूमिमपादितिकपिर्वराह : । वृषत्वात्कपिरूपत्वाद्वृषाकपि : । कपिर्वराहश्श्रेष्ठश्चधर्मश्चवृषउच्यते । तस्माद्वृषाकपिंप्राहकश्यपोमांप्रजापतिरितिमहाभारतम् ॥ जातवेदसि । अग्नौ ॥ वृषंधर्मंनकम्पयति । कपिकिञ्चिच्चलने । कुण्डिकम्प्योर्नलोपश्चेति॰द्रु : । वृषादधर्मादाकम्पयतिदुष्टानितिवा ॥ यद्वा । वर्षतिकामान् । वृषु॰ । इगुपधेतिक : । आकम्पयतिपापानि । पूर्ववदि : । वृषश्चासावाकपिश्च ॥ यद्वा । वृषाइन्द्रोन कम्पते॰आकम्पतेवाऽस्मात् ॥ यद्वा । वृषोधर्मो॰वृषाइन्द्रोवा॰कपिरिववश्योयस्य ॥ यद्वा । वृषश्चक : कपिर्वराह : । शाकपार्थिवादि : । अन्येषामपीतिदीर्घ : ॥ यद्वा । वृषाइन्द्रस्य॰अकम् वृषाकम् पिय-ति॰विगतौ । अन्तर्भावितण्यर्थो-वा । इन्द्रदु : खंप्राप्नोति॰प्रापयति॰दैत्यान्॰रक्षकत्वात् । विचिसंज्ञापूर्वकत्वान्नगुण : । क्विपितुआगमशास्त्रस्यानित्यत्वान्नतुक् ॥

वृषाकर : । पुं॰ माषे ॥

वृषाकृति : । पुं॰ विष्णौ । नारायणे ।

धर्मार्थ्याकृतिरस्य ॥ वृषशब्दस्तादर्थ्ये। आकृतिराकार : शरीरम् । वृषार्थधर्मार्थ्याकृतिः शरीरमस्येति ॥

वृषाङ्कः । पुं॰ शङ्करे ॥ साधौ ॥ वृषः अङ्कश्चिह्नमस्य ॥ भल्लातके ॥ मदनके ॥

वृषाङ्कजः । पुं॰ डमरुशब्दे ॥ ष॰ त॰ ङी ॥

वृषाञ्चनः । पुं॰ शिवे ॥ ष॰ वि॰ ष : ॥

वृषाणकः । पुं॰ महाकाले ॥ ष॰ वि॰ ष : ॥

वृषाधिपः । पुं॰ शुक्रग्रहे ॥ वृषस्य राशिविशेषस्याधिपः ॥

वृषान्तकः । पुं॰ जनार्द्दने ॥ विडाले ॥

वृषायणः । पुं॰ चटके ॥ ष॰ हा॰ ली॰ ॥

वृषासनः । पुं॰ शिवे ॥ वृषोबलीवर्द्दः आसनं यस्य ॥ वृषरूपआसने ॥

वृषाहारः । पुं॰ बिडाले ॥ वृषाम् विकआहारोऽस्य ॥ ष॰ हा॰ ली॰ ॥

वृषी । पुं॰ मयूरे ॥ ष॰ श॰ ला॰ ॥

वृषी । स्त्री॰ यतीनामासने ॥ व्रतिविष्टरे ॥ वर्षतिसुखम् । वृषु॰ । इगुपधेतिकः । गौरादिः ॥

वृषोत्सर्गः । पुं॰ श्राद्धादौवत्सतरीचतुष्टयसहितत्रिशूलचक्राङ्कितवृषत्यागे ॥

वृष्टः । त्रि॰ सिक्ते ॥ वृषेः क्तः ॥

वृष्टिः । स्त्री॰ वर्षे । मेघाज्जलपतने । वर्षणे ॥ वर्षणम् । वृषु॰ । स्त्रियांक्तिन् ॥ भाग्याख्यायाम् तुष्टौ ॥

वृष्टिघ्नी । स्त्री॰ भृङ्गपर्णिकायाम् । सूक्ष्मैलायाम् ॥ त्रि॰ वृष्टिनाशके ॥

वृष्टिजीवनः । पुं॰ देवमातृकेदेशे ॥ वृष्टिर्जीवनं यस्य सः ॥ वृष्ट्याजीवनं यत्र वा ॥

वृष्टिप्रमाणम् । न॰ मेघाज्जलपतनेयत्ता याम् ॥ यथा । द्रोणोपस्थनिमित्तगर्भे॰ चोह्याढकानिपवनेन । षड्विंशतानवान्यैः स्तनितेनद्वादशप्रसवः ॥ इतिवराहोक्तौवृष्टेराढकद्रोणप्रमाणपरिज्ञानपराशरश्चोक्त । आढकाश्चतुरोद्रोणमपांविद्यात्प्रमाणतः । धनुःप्रमाणमेदिन्यांविद्याद्द्रोणाभिवर्षणम् ॥ समेविंशाङ्गुलानाहेऽद्विचतुष्कोङ्गुलोच्छ्रिते । भाण्डे वर्षतिसम्पूर्णे ज्ञेयमाढकवर्षणम् ॥ तथाचाचार्य्यः । हस्तविशालंकुण्डकमधिकृत्याम्बुप्रमाणनिर्द्देशः । पञ्चाशत्पलमाढकमनेनमिनुयाज्जलंपतितमिति ॥

वृष्टिभूः । पुं॰ भेके ॥ वृष्टौभवति ।

भू० । भुव : संज्ञान्तरयोरिति-
क्विप् ॥
वृष्णिः । पुं० यादवे । मेषे ॥ श्रीकृ
ष्णे ॥ वर्षति । वृषु० । सृवृषि
भ्यांकिदितिनिः ॥ त्रि०पाषण्डे ॥
चण्डे ॥
वृष्णिगर्भः । पुं० श्रीकृष्णे ॥ वृष्णी
र्गोगर्भयस्य सः ॥
वृष्यः । पुं० माषे ॥ न०वाजीकर
णे ॥ त्रि०शुक्रवृद्धिकारकौषधा
दौ ॥ वृष्यते । वृषु० । विभाषाकृ
वृषोरितिक्यप् । पक्षेण्यतितु०व
र्ष्यम् ॥ वृषायहितं ॥ वृषायका
मुकायहितम् । खलयवमाषेति-
यत् ॥
वृष्यकन्दा । स्त्री० विदार्याम् ॥
वृष्यगन्धा । स्त्री० वृद्धदारके ॥
वृष्यगन्धिका । स्त्री० अतिबलायाम् ॥
वृष्यवल्लिका । स्त्री० विदार्याम् ॥
वृष्या । स्त्री० ऋद्धिनामौषधे ॥ शता
वर्याम् ॥ आमलक्याम् ॥
वृसी । स्त्री० व्रतिनामासने । ब्रह्म
चार्याद्यासने ॥ व्रुवन्त : सीदन्त्य
स्याम् ॥ पृषोदरादित्वाद्व्रुवच्छ
ब्दस्य०वृ०आदेश : । अन्येष्वपीत्य
धिकरणे डः ॥
वृहच्चञ्चुः । पुं० महाचञ्चुशाकेपक्षि
विशेषे । दीर्घपादे । कुलङ्क०-
भा० ॥

वृहच्छिद्रः । पुं० बीजपूरे ॥
वृहच्छल्कः । पुं० चिङ्गटमत्स्ये ॥
वृहच्छुकः । पुं० दार्वाघाटे । काठ
कोरवा०इतिख्यातेखगे ॥
वैकटः । पुं० वैकटिके । मणिकारे ।
मणिआरा०बं०भा०प्र०भेकटी०बं०
गौ०देशभाषाप्रसिद्धे मत्स्ये ॥ यू
नि । आततारुण्ये ॥ विदूषके ॥
वेगः । पुं० जवे । रंहसि । रये ।
स्वदे ॥ प्रवाहे । ओघे । धाराया
म् ॥ किम्पाके । महाकालफले ॥
रेतसि ॥ मूत्रादिप्रवृत्तौ ॥ यथा ।
वेगान्नधारयेज्जातुबिण्मूत्रस्रवहट्-
स्नुधाम् ॥ अपिच । वेगरोधीनक
र्त्तव्योह्यन्यत्रक्रोधवेगतः ॥ पुन
श्च । स्वभावतः प्रवृत्तानांमलादी
नांजिजीविषुः । नवेगान्धारयेद्धी
रः कामादीनान्तुधारयेदिति ।
पृथिव्यादिचतुष्टयमनोवृत्तौसंस्का
रे । वेजनम् । ओविजीभयचलन
योः । घञ् ॥
वेगनाशनः । पुं० श्लेष्मणि ॥
वेगवान् । पुं० ईश्वरे । त्रि० वेगि
नि ॥ वेगोजवोऽस्त्यस्य । मतुप् ॥
वेगवती । स्त्री० अर्द्धसमवृत्तभेदे ॥
यथा । विषमेप्रथमात्तरतौभन्दोध
कमेवहिवेगवतीस्यात् ॥ यथा ।
स्मरवेगवतीव्रजरामाकेशववंशरवै
रतिमुग्धा । रभसाद्गुरुन्नगणय

ध्यायन् ॥

वैषयिकः । त्रि॰ विषयसम्बन्धिनि ॥

वैष्टुतम् । न॰ होमभस्मनि ॥

वैष्टम् । न॰ विष्णौ ॥ विष्टपे ॥ वेवेष्टि । विश॰ भ्रमजिगमिनमिहनिविश्यशांवृद्धिश्चेति ष्ट्रन् ॥ दिवि ॥ वायौ ॥

वैष्णवः । त्रि॰ विष्णूपासके । विष्णुमन्त्रदीक्षिते । कार्ष्णे । हारे ॥ तल्लक्षणमाहात्म्यादि यथा । फलसन्धानरहिता विष्णुभक्ताश्च वैष्णवाः । मत्प्रीतिभक्तिकामास्ते सर्व्वदा सर्व्वकर्म्मसु । गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे प्रविश्यते । जीवन्मुक्तं वैष्णवं तं वेदाः सर्व्वे वदन्ति च ॥ पुरुषाणां शतं पूर्व्वं पैतृकञ्च शतं परम् । मातामहञ्च शतं मातरं मातृमातरम् । भगिनीं भ्रातरञ्चैव भागिनेयञ्च मातुलम् । श्वश्रूञ्च श्वशुरञ्चैव गुरुपत्नीं गुरोः सुतम् । गुरुञ्च ज्ञानदातारं मित्रञ्च सहचारिणम् । भृत्यं शिष्यं तथा चेटीं प्रजाः स्वाश्रमसन्निधौ ॥ उद्धरेदात्मना सार्द्धं मन्त्रग्रहणमात्रतः । मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः । तत्संस्पर्शमात्रेण पूतं तीर्थञ्च भारतम् । तस्यैव पादरजसा सद्यः पूता वसुन्धरा ॥ पादोदकं तस्य तीर्थमेव भवेद्ध्रुवम् । इ॰ ब्र॰ वै॰ ब॰ पुराणम् । ये कण्ठलग्नतुलसीभवकाष्ठमाला ये द्वादशाङ्गहरिनामकृतोर्द्ध्वपुण्ड्राः । ये कृष्णभक्तिसुदृढा धृतशङ्खचक्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ति ॥ अपि च । पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदमिति ॥ अस्याचारश्च । सर्व्वान् कामान् परित्यज्य दृढभक्तिं प्रसाधयेत् । स एव वैष्णवाचारः कामसङ्कल्पवर्ज्जितः ॥ विष्णोरयम् । अण् ॥ न॰ विष्णुपुराणे ॥ यथा । त्रयोविंशतिसाहस्रं वैष्णवं परमाद्भुतमिति ॥

वैष्णवी । स्त्री॰ विष्णोः शक्तौ ॥ यथा । एषा चिच्छक्तिरुद्दिष्टा नयसिद्धान्तगामिनी । एषा श्वेतापरा सृष्टिः सात्त्विकी ब्रह्मसंस्थिता ॥ एषैव रक्ता राजसी वैष्णवी परिकीर्त्तिता । एषैव कृष्णा तमसी रौद्री देवी प्रकीर्त्तिता ॥ अष्टादश तथा कोट्यो वैष्णव्या भेद उच्यते । या विष्णो राजसी शक्तिः पालनी चैव वैष्णवी ॥ इति वाराहपुराणम् ॥ दुर्गायाम् ॥ यथा । शङ्खचक्रगदाधारि विष्णुमाता तथारिहा । विष्णुरूपा च या देवी वैष्णवीति निगीयते ॥ इति देवीपुराणम् ॥ गङ्गायाम् । तुलस्याम् ॥ अपराजितायाम् ॥ शतावर्य्याम् ॥

वैसादृश्यम् । न॰ विसदृशत्वे ॥

वैसारिण: । पुं॰ मत्स्ये ॥ विविधं सरति । सृ॰ । ग्रह्यादित्वाण्णिनि: । ततोविसारिणोमत्स्यइतिस्वार्थेऽण् ॥ सिद्धे ॥

वैहायस: । पुं॰ खेचरे ॥

वैहायसी । स्त्री॰ भारतवर्षस्थनद्यन्तरे ॥

वैहार्य्य: । त्रि॰ परिहासेनलालनीयेश्यालसंबंध्यादौ ॥

वैहासिक: । पुं॰ वासन्तिके । कौलिकिले । विदूषके । प्रहासिनि ॥

वोटा । स्त्री॰ चेट्याम् । दास्याम् ॥ इ॰हे॰न्द्र:॰ ॥

वोड्र: । पुं॰ गोनसाहौ ॥ झषान्तरे ।

वोड्री । स्त्री॰ पणचतुर्थांशे । बुडि॰ इ॰गौ॰दे॰भा॰प्र॰ ॥

वोढव्य: । त्रि॰ वहनीये ॥

वोढु: । पुं॰ मुनिविशेषे ॥

वोढा । पुं॰ भारिके ॥ सूते । वोढ ऋह: । वह॰ । अर्थेतृन्यद्वचसौ तितृच् । ढत्वधत्वष्टुत्वढलोपा: । सहिवहोरोदवर्णस्येत्योकार: ॥ चनड्हि ऋषभे । परिणेतरि ॥ मूढे ॥

वोद्र: । त्रि॰ आर्द्रे ॥

वोदाल: । पुं॰ पाठीनमत्स्ये ॥

वोद्र: । पुं॰ गोनसाहौ ॥ झषान्तरे ॥

वोद्री । स्त्री॰ पणपादे । काकिन्याम् ॥

वोरक: । पुं॰ लेखके ॥ इ॰त्रि॰शेष: ॥

वोरट: । पुं॰ कुन्दपुष्पे ॥ इ॰त्रि॰शेष: ॥

वोरपट्टी । स्त्री॰ मन्दरायाम् । मादरी॰कट॰चटाइ॰इ॰भा॰प्र॰ ॥

वोरव: । पुं॰ वोरो॰इ॰गौ॰भा॰प्र॰ धान्यविशेषे ॥ यथास्यगुणा: । वोरवस्तुबुधै: प्रोक्तस्त्रिदोषघ्नप्रकोपण: । मधुरश्चाम्लपाकश्चवोरिह: पित्तकरोगुरु: ॥

वोरुखान: पुं॰ पाटलवर्णाश्वे ॥ इ॰हे॰न्द्र: ॥

वोलम् । न॰ गन्धरसे । यस्यगुणा: । वोलंरक्तहरंशीतंमेध्यंदीपनपाचनम् । मधुरंकटुतिक्तञ्चयदस्वेदवि दोषजित् ॥ ज्वरापस्मारकुष्ठघ्नंगर्भाशयविशुद्धिकृत्॥अपिच । वोलस्वकटुतिक्तोष्णंकषायंरक्तदोषनुत् । कफपित्तामयान्हन्तिप्रदरादिरुजापहम् । पुं॰रसगन्धे ॥ वोलयति । कुलमञ्जने । अच् ॥ वालिवा । वा॰ । पिच्छादित्वाट्टलच् ॥

वोलक: । पुं॰ लेखके ॥

वोला । स्त्री॰ दोलावृत्ते ॥ यथा । द्विगुणितरविमितकलितकलाभिर्ल लितनिवद्धा॰ मङ्गलपिङ्गलभणितगणितकलयाविलसन्ती । एकादशकलविरतिविदितमृदुगतिरिह-

वेला॰ यशसापूरितभुवनभुवनर सनासनवेला ॥

वेल्लाहः। पुं॰ अश्वविशेषे। यथा वोल्लाहस्त्वयमेवस्यात्पाण्डुकेशरबालधिः॥ इ॰ हे॰ न्द्रः॥

वोहित्थम्। न॰ यानपात्रे। पोते। जहाज॰ इ॰ भा॰ प्र॰। इ॰ हे॰ न्द्रः॥

वौषट्। अ॰ देवहविर्दानमन्त्रे॥ स्वाहादेवहविर्दानेश्रौषट्वौषट्वषट्स्वधेत्यमरः॥ उह्यतेऽनेन। वह॰। बाहुलकात्॰ डौषट्॥

व्यंशकः। पुं॰ पर्वते॥ इ॰ मुद्राङ्कितशेम चन्द्रः॥

व्यंसकः। पुं॰ धूर्त्ते॥

व्यंसितः। त्रि॰ वञ्चिते॥

व्यक्तः। त्रि॰ स्फुटे॥ मनीषिणि॥ प्रत्यक्षे। हेतुमदनित्यमव्यापिसक्रियमनेकमाश्रितंलिङ्गम्। सावयवंपरतन्त्रंव्यक्तम्। इतिलक्षिते॥ स्थूले॥ यथा। अव्यक्तोव्यक्तकारणमिति॥ व्यज्यतेस्म। अञ्जूव्यक्त्यादौ। क्तः। विपूर्वादस्मात्क्तेतु॰ अञ्जेर्नत्वेव्यक्तप्रतिषिधइतिनिष्ठातस्यपक्षेनपादानइतिनत्वम्॥

व्यक्तकालः। पुं॰ स्थितिकाले॥

व्यक्तदृष्टार्थः। पुं॰ प्रत्यक्षिणि॥ साक्षिणि। इ॰ त्रि॰ शेषः॥

व्यक्तविशेषः। पुं॰ बुद्धौ॥

व्यक्तिः। स्त्री॰ पृथगात्मताम्॥ प्रत्यक्षे। स्पष्टतायाम्। शरीरविषयादिरूपायांभोगभूमौ॥ प्रभावे॥ व्यक्तिलक्षणमाहगौतमः। यथा। व्यक्तिर्गुणविशेषाश्रयोमूर्त्तिरिति। अस्यार्थः। यद्यपिजात्यादेरपिव्यक्तित्वात्प्रमेयत्वमेवव्यक्तित्वम्॰ तथापिजात्याकृतिशक्तिविषयव्यक्तेरिदंलक्षणम्। तथाच॰ गुणविशेषोजात्याकृतिसमानाधिकरणोगुणः॰ सङ्ख्यादिभिन्नस्तदाश्रयः॰ मूर्त्तिर्व्यक्तिरितिसमानार्थकमित्यर्थः। परेतु॰ गुणारूपादयः॰ विशेषाविशेषकाः॰ उत्क्षेपणादयस्तेषामाश्रयोद्रव्यम्॰ तेन जात्याश्रयोव्यक्तिरित्याशयः। विशेषलक्षणमाहमूर्त्तिरिति। मूर्त्तिः संस्थानविशेषस्तद्वानित्याहुः। अ[illegible]दसोपीसमासइत्याशयः। अन्यतु॰ व्यक्तेर्लक्षणंमूर्त्तिरिति॰ सैवकेत्याह। गुणविशेषाश्रय इति। गुणविशेषस्य॰ अवच्छिन्नपरिमाणस्याश्रयइत्यर्थइत्याहुः॥ १३२॥ व्यज्यतेऽनया। अञ्जू॰। स्त्रियांक्तिन्॥ जनं॥ इ॰ हे॰ चन्द्रः॥

व्यग्रः। त्रि॰ व्याहते। व्याकुले॥ अपवर्जिते॥ सोद्यमे। व्यासक्ते॥

त्रिविधं॰ विविधेवाध्वमध्यवहा । द्विवमगतिर्वा । अग॰ कर्त्स्न्द्रे तिसाधु :॥

व्यङ्कट :। पुं॰ अद्रिप्रभेदे ॥

व्यङ्ग :। पुं॰ भेके ॥ मुखरोगविशेषे ॥ तल्लक्षणंयथा । क्रोधायासप्रकुपितोवायु : पित्तेनसंयुत: । मुखमागम्यसहसामण्डलंविसृजत्यत: ॥ नीरुजंतनुकंश्यावंमुखेव्यङ्गंतमादिशेत् ॥ त्रि॰ हीनाङ्गे॰ छिन्ननासिकादौ ॥ विकलानि॰विगतानि वाअङ्गान्यस्य ॥ त्रिकस्ते॰ विगतमङ्गमस्य ॥

व्यङ्कुक :। पुं॰ शैले । पर्वते हू॰ त्रि॰ शेष : ॥

व्यङ्गाङ्ग :। त्रि॰ विकलाङ्गे । व्यङ्गमङ्गंयस्यस :॥

व्यङ्ग्य :। त्रि॰ व्यञ्जनयाबोध्येऽर्थे ॥ यथा । वाच्योऽर्थोऽभिधयाबोध्यो॰ लक्ष्योलक्षणयामत: । व्यङ्ग्योव्यञ्जनयाता : स्यु : स्तिस्र : शब्दस्यशक्तय: ॥ प्रकाश्ये । आन्तरेशब्दे ॥

व्यज :। पुं॰ तालवृन्ते । व्यजत्यनेन । अज॰ गोचरसञ्चरेतिघप्रत्ययान्तोनिपातित : ॥

व्यजनम् । न॰ वाजे । तालवृन्ते ॥ चामरे ॥ व्यजत्यनेन । अज॰ । करणे ल्युट् । वोयाविति पक्षे- वीन ॥

व्यञ्जक :। पुं॰ अभिनये ॥ त्रि॰ व्यक्तिकारके । प्रकाशके ॥ वैखरीरूपेशब्दे ॥ घटप्रत्यक्षसमयेआलोको व्यञ्जकोयथा ॥ व्यञ्जनयाप्रतिपादके ॥ हू॰सा॰द॰ अ॰ ॥ व्यनक्ति । अञ्ज॰ । ण्वुल् ॥

व्यञ्जनम् । न॰ निष्ठाने । तेमने । दधिघृतादौ । सूपशाकादौ । तीवण हू॰भा॰प्र॰ ॥ चिह्ने ॥ श्मश्रुणि ॥ अवयवे । स्त्रीपुंसयो : गुह्यदेशे । स्त्र्यादिचिह्ने ॥ अह्नि । दिने ॥ व्यज्यतेऽनेनवा ल्युट् ॥ स्वरहीनवर्णे ॥ अचाहितस्यास्योच्चारणंन भवति । नपुनरन्तरेणाचंव्यञ्जनस्योच्चारणमपिभवतीतिभाष्योक्ते :॥

व्यञ्जना । स्त्री॰ शब्दस्यवृत्तिविशेषे ॥ तस्यालक्षणंयथा । विरतास्वभिधाद्यासुययार्थोबोध्यतेपर : । सावृत्तिर्व्यञ्जनानामशब्दस्यार्थादिकस्य च ॥ शब्दबुद्धिकर्मणांविरम्यव्यापाराभावइतिनयेनाभिधालक्षणातात्पर्याख्यासुतिसृषुवृत्तिषुस्वंस्वमर्थंबोधयित्वोपक्षीणासु॰ययान्योऽर्थोबोध्यते॰ साशब्दस्यार्थस्यप्रकृतिप्रत्ययादेश्ववृत्तिर्व्यञ्जनध्वननगमनप्रत्यायनादिव्यपदेशविषयाव्यञ्जनानाम ॥ विशेष : साहित्यदर्पणादौद्रष्टव्य :॥

व्यञ्जित : त्रि॰ प्रकटीकृते ॥

व्यडम्बकः। पुं॰ एरण्डे ॥ व्यडं म लमम्बयति। अबि शब्दे। णिच्। ण्वुल् ॥

व्यडम्बनम्। न॰ एरण्डे ॥ व्यडंमलम म्बयति। अवि॰। ल्युट्॰ युव्वा ॥ शुक्लैरण्डे ॥

व्यतिकरः। पुं॰ व्यसने ॥ व्यतिष ङ्गे॰ ॥ मिश्रणे ॥ क्षोभे ॥ स म्बन्धे ॥

व्यतिकीर्णः। वि॰ संकीर्णे ॥

व्यतिक्रमः। पुं॰ व्यत्यये। अन्यथा त्वे। क्रमविपर्यये। यथा। सर्वं अप्राङ्मुखोदातायशीतावउदङ्मु खः। एषएवविधिर्दाने विधाद्वैतु व्यतिक्रमः ॥ व्यतिक्रमणम्। क्र म॰, घञ्। नोदात्तोपदेशेतिम वृद्धिः ॥ अन्याये ॥

व्यतिभेदः। पुं॰ समावेशे ॥

व्यतिरिक्तः। वि॰ व्यतिरेकविशिष्टे। भिन्ने। अन्यस्मिन् ॥ व्यतिरि च्यते स्म। रिचिर्विरेचने। क्तः ॥

व्यतिरेकः। पुं॰ अभावे। विरहे। कारणकार्याद्व्यवृत्तौ। कार्यव्य तिरेकप्रयोजकव्यतिरेकप्रतियोगि त्वे ॥ अलङ्कारविशेषे। यथा। व्य तिरेकोविशेषश्चेदुपमानोपमेययोः। शैलाइवोन्नताः सन्तः किन्तुप्रकृ तिकोमलाः ॥ अथमुपमेयाधिक्य पर्यवसायीव्यतिरेकः ॥ यथावा। पल्लवतः कल्पतरोरेषविशेषः क रस्यतेवीर। भूषयतिकर्णमेकः प रस्तुकर्णंतिरस्कुरुते। तन्न्यून त्वपर्यवसायी। यथा। रक्तस्त्वंनव पल्लवैरहमपिश्लाघ्यैः॰ प्रियायागुणै स्त्वामायान्तिशिलीमुखाः स्मरधनु र्मुक्ताः सखेमामपि। कान्तापाद तलाहतिस्तवमुदेतद्वन्ममाप्यावयोः स र्वंतुल्यमशोकक्षेवलमहंधात्रासशो- कः कृतः। अनुभयपर्यवसायीय था। दृढतरनिबद्धमुष्टेः कोषनि षण्णस्यसहजमलिनस्य। कृपणस्यकृ पाणस्यक्षेवलमाकारतोभेदः। वि शिष्टः॰ अतिरेकः॰ पृथग्भावः ॥ विपर्यये ॥

व्यतिरेकव्याप्तिः। स्त्री॰ साध्यनिषे- धेसाधननिषेधरूपेण॰ प्रवृत्तायांव्या प्तौ। यथा। यत्रवह्निर्नास्ति॰ तत्र धूमोनास्तीति॰ यथाह्रदे ॥

व्यतिरेकसंज्ञा। स्त्री॰ वैराग्यविशेषे। परिपाचनेचानुष्ठीयमानेकेचित्क- षायाः पक्वाः॰ पच्यन्तेकेचित् तत्रैवंपूर्वापरीभावेसतिपच्यमाने भ्यः कषायेभ्यः पक्वानांव्यतिरेके णावधारणे, क्वचित्पूर्वमिन्द्रियमा नदोषाणांमध्येऽभ्यस्यमानविवेकेने तेपक्वाः॰ एतेऽवशिष्टाइतिचिकित्स कवद्विवेचनस्वरूपे ॥

व्यतिरेक्युदाहरणम्। न॰ उदाहरण

विशेषे ॥ अव्यतीतम : । तद्विपर्य याद्वा विपरीतं व्यतिरेकयुदाहरणमिति । अस्यार्थ : । तद्विपर्ययात् • साध्यसाधनव्यतिरेकव्याप्तिप्रदर्शनात् । तथाच साध्यसाधनव्यतिरेकव्याप्त्युपदर्शको दाहरणं • व्यतिरेक्युदाहरणम् । यथा जीवच्छरीरं • सात्मकम् प्राणादिमत्त्वात् • यन्नैवम् • तन्नैवम् • यथा घटइति । वाक्यार : प्रयोगमपेक्ष्य • तथा चान्वय्युदाहरणं व्यतिरेक्युदाहरणं वा प्रयोक्तव्यमित्यर्थ : ॥ ३६ ॥

व्यतिषक्त : । त्रि • सम्बन्धाक्रान्ते । सम्बद्धे । व्यतिषज्यतेस्म । षञ्जसङ्गे । क्त : । उपसर्गात्सुनोतीत्यादिना षत्वम् ।

व्यतिषङ्ग : । पुं • विनिमये ॥ सङ्गे । परस्परमेलने ॥ व्यतिषञ्जनम् । पञ्जु • । घञ् ।

व्यतिहार : । पुं • विनिमये । परस्परकरणे ॥ यथा • त्वमहमस्मि • अहन्त्वमसीति व्यतिहार : सचैक्यतात्पर्यकमनुद्भवतीति । व्यत्यये । अन्यस्मिन्नन्यावभासे ॥ व्यतिहरणम् । हृञ् • । घञ् । व्यतिह्रियते ऽनेनाऽनवा । घञ् । उपसर्गस्य तिपाचिकोदीर्घाभाव : ॥

व्यतीत : । त्रि • विगते । विशेषिथ • अतीत : ॥

व्यतीपात : । पुं • महोत्पाते । उपद्रवे ॥ अपमाने । पलायने । योगविशेषे ॥ तत्र जातस्य फलं यथा । कठोरवाक्य : । पिशुनस्वभावो गदातुरो मात्हितो मनुष्य : । परस्य कार्ये कृतपक्षपातो यस्य प्रसूतौ व्यतिपातयोग । व्यतिक्रम्य पतनम् । पत्लृगतौ । घञ् । उपसर्गस्येति दीर्घ : ॥ अन्ययोगे ॥

व्यतीहार : । पुं • परीवर्ते । व्यतिहरणम • व्यतिह्रियते वा । हृञ् • । घञ् । उपसर्गस्येति पाचिकोदीर्घ : ॥ परस्परमेकजातीयक्रियाकरणे ॥

व्यत्यय : । पुं • व्यतिक्रमे । व्यत्यासे । विपर्यासे । विपर्यये । व्यत्ययनम् । इण् • । एरच् ॥

व्यत्यस्त : । त्रि • व्यतिक्रमसंस्थिते । यथा । व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरो : । सव्येन सव्य : स्प्रष्टव्यो दक्षिणेन च दक्षिण इति मनु : ॥ उत्तानाभ्यां हस्ताभ्यां दक्षिणोपरिभावेन व्यत्यास : शिष्टसमाचारात् बोध्य : ॥

व्यत्यास : । पुं • व्यतिक्रमे । व्यत्यये ॥ व्यत्यसनम् । असु क्षेपणे । घञ् ॥

व्यत्यासित : । त्रि • वैसादृश्यंप्रापिते ॥ तारकादित्वादितच् ॥

व्यथकः । त्रि० व्यथाकारिणि । दुःखजनके ॥ भयङ्करे । व्यथयतिव्यथभयचलनयोः । बहुल मन्यत्रापीति ण्वुल् ॥

व्यथा । स्त्री० पीडायाम् । दुःखे ॥ व्यथ० । घटादयः षित इति षित्त्वात् अङ् । टाप् ॥

व्यथितः । त्रि० दुःखिते । पीडिते ॥ व्यथासञ्जातास्य । तारकादित्वादितच् ॥

व्यधः । पुं० वेधे ॥ व्यधनम् । व्यधताडने । व्यधजपोरित्यप् ॥ ताडने ॥

व्यधनम् । न० वेधने ॥

व्यध्यः । पुं० प्रतिकाये । धनुर्गुणे ॥

व्यध्वः । पुं० दुरध्वे । विपथे । निन्दितेवर्त्मनि ॥ विरुद्धोध्वा । प्रादयोगताद्यर्थे इतिसमासः । उपसर्गादध्वन इत्यच् ॥

व्यपगतः । त्रि० निवृत्ते ॥

व्यपदेशः । पुं० शब्दे । नामनि ॥ कपटे ॥ विशिष्टोऽपदेशः । वाक्यविशेषे ॥ यथा । व्याजेनात्माभिलाषी त्रिवर्गव्यपदेशइतीर्यत इत्युज्ज्वलनीलमणिः ॥

व्यपवर्गः । पुं० । व्यपवृक्तभेदे ॥

व्यपाकृतिः । स्त्री० अपकृते । अस्वीकारे ॥

व्यपाश्रयः । पुं० शरणे ॥

व्यपेतः । त्रि० अपगते ॥

व्यपोढः । त्रि० विपरीते ॥

व्यपोहः । पुं० व्यपोहने ॥

व्यपोहनम् । न० अपाकरणे ॥

व्यभिचारः । पुं० कदाचारे । भ्रष्टाचारे ॥ परिलोपे ॥ स्खालित्ये ॥ दोषविशेषे ॥ तल्लक्षणं यथा । साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वं हि व्यभिचार इति व्यधिकरणधर्मावच्छिन्नाभावचिन्तामणिः ॥ सत्रिविधः । साधारणासाधारणानुपसंहारिभेदात् । तत्र विपक्षवृत्तित्वं साधारणत्वम् । सर्वसपक्षव्यावृत्तत्वमसाधारणत्वम् । व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावोविषयसत्वेत्वभिमतोऽनुपसंहार्यः । इतिसव्यभिचारचिन्तामणिः ॥ विशिष्टोभिचारः ॥ व्यभिचरणं वा । चर० । घञ् ॥

व्यभिचारिणी । स्त्री० परपुरुषगामिन्याम् । कुलटायाम् ॥ यथा । हृताधिकारांमलिनांपिण्डमात्रोपजीविनीम् । परिभूतामधःशय्यांवासयेद्व्यभिचारिणीम् ॥ व्यभिचारोव्यतिक्रमोस्त्यस्याः । इनिः । ङीप् ॥

व्यभिचारी । पुं० चतुर्स्त्रिंशत्प्रकारशृङ्गारभावविशेषे ॥ तेयथा । निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः । आलस्यञ्चैवदैन्यञ्चचिन्तामोहः स्मृतिर्धृतिः ॥ व्रीडाचपलता

हर्षश्च वेगो जडता तथा गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ सुप्तो विबोधोऽमर्षश्चावहित्थमथोग्रता मतिः । उपलभ्य व्याधिश्च उन्मादो मरणं तथा ॥ त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः इति भरतः ॥ साहित्यदर्पणे त्रिंशदुक्ताः । यथा । विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः । स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच्च तद्भिदाः ॥ स्थिरतया वर्त्तमाने हि रत्यादौ निर्वेदादयः प्रादुर्भावतिरोभावाभ्यामाभिमुख्येन चरणाद्व्यभिचारिणः कथ्यन्ते । के ते । इत्याह । निर्वेदावेगदैन्यश्रममदजडता औग्र्यमोहौ विबोधः स्वप्नापस्मारगर्वा मरणमलसतामर्षनिद्रावहित्थाः । औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्याधिसन्त्रासलज्जाहर्षासूयाविषादाः सधृतिचपलताग्लानिचिन्ता वितर्का इति ॥ त्रि० व्यभिचारविशिष्टे ॥

व्ययः । पुं० अर्थापचये । वित्तस्यापगमे । उठाव० खरच० इ० भा० ॥ पूर्वगृहीतदेहेन्द्रियादिवियोगे, धर्मादिगुणविनियोगे । चये ॥ वत्सरविशेषे । तत्फलं यथा । दुर्भिक्षं जायते घोरं सर्वोपद्रवसंयुतम् । अनावृष्टिः समाख्याता व्यये संवत्सरे प्रिये ॥ २० ॥ न० लग्नाद्द्वादशभवने व्ययनम् । व्ययविसमुत्सर्गेऽस्मात् । घञ्० अच्० वा । विपूर्वादिणएरज्वा ॥

व्ययितः । त्रि० कृतव्यये ॥

व्ययी । त्रि० व्यययुक्ते ॥ यथा । द्रविणं परिमितमधिकव्ययिनं जनमाकुलीकुरुते । चीनांशुकमिव पीनस्तनजघनायाः कुलीनायाः ॥

व्यर्थः । त्रि० निरर्थके । मोघे । विफले ॥ यथा । भर्त्ता निश्वसितेऽप्यसूयति मनोजिघ्रः सपत्नीगणः श्वश्रूरिङ्गितदैवतं नयनयोरीहा लिहो यातरः । तद्दूरादयमञ्जलिः किमधुना दृग्भङ्गिभागेन ते वैदग्धीमधुरप्रबन्धरसिकव्यर्थोऽयमत्र श्रमः इति ॥ विशेषेणगतः अर्थो यस्मात् ॥

व्यर्थभाषणम् । न० निरर्थकीव्यापारे । यथा । देवराद्यप्रसङ्गाच्च परार्थपरिकल्पनात् । नर्महासप्रसङ्गाच्च भाषणं व्यर्थभाषणमिति देवलः ॥

व्यलीकः । पुं० नागरे । षिङ्गे ॥ न० अप्रिये ॥ अकार्ये ॥ वैलक्ष्ये ॥ पीडने । व्यङ्गे । विशेषेणअलति । अलभूषणादौ । अलीकादयश्चेति साधुः ॥ विगतानृते । विगतमलीकम् । विपर्यये पीति स्वामी ॥

व्ययकलनम् । न० वियोगे । क्षीणे ॥ अङ्कस्यांतरकरणे । बाकिकाटा० इ० गौ० दे० भा० ॥

व्यवकलित : त्रि० कृतव्यवकलने । वियोजिते । न० व्यवकलने ॥
व्यवच्छिन्न : । त्रि० भिन्ने ॥ विशेषिते
व्यवच्छेद : । पुं० पृथक्त्वे ॥ बाणमुक्तौ ॥
व्यवच्छेदकम् । न० विशेषणे ॥
व्यवच्छेद्यम् । त्रि० विशेष्ये ॥
व्यवधा । स्त्री० अन्तर्द्धायाम् । तिरोधाने ॥ व्यवधानम् । डुधाञ्० । आतश्चोपसर्ग इत्यङ् ॥
व्यवधानम् । न० अन्तर्द्धौ । तिरोधाने । वस्त्वन्तरकृतेऽवच्छेदे । खड्गादेः कोषादिवदावरणे ॥ व्यवपूर्वाद्धाञोल्युट् ॥
व्यवधायक : । त्रि० व्यवधानकर्त्तरि ॥
व्यवधि : । पुं० पिधाने । व्यवधाने ॥ व्यवधानम् । डुधाञ्० । उपसर्गे घो : कि : ॥
व्यवसर्ग : । पुं० दाने ॥ व्यवसर्ज्जनं सृज० । घञ् ॥
व्यवसाय : । पुं० उपजीविकायाम् ॥ उद्यमे । फलाव्यभिचार्युद्यमे ॥ यथा । व्यवसायिनांव्यवसाय : फलाव्यभिचार्युद्यमोभगवद्विभूतिरिति । निश्चये ॥
व्यवसायात्मिका । स्त्री० निश्चयात्मिकायांबुद्धौ ॥ व्यवसायोनिश्चय : आत्मायस्या : ॥
व्यवसायी । त्रि० कृतनिश्चये ॥ साद्यमे ॥ व्यवसायविशिष्टे ॥ वाणिज्यकारके ॥ अनुष्ठातरि ॥
व्यवसित : । त्रि० निश्चये ॥ प्रतारिते ॥ अनुष्ठिते ॥ विशिष्टमवस्यतिस्म० अवसीयतेस्मवा । षोऽन्तकर्मणि । क्त : । द्यतिस्यतीतीत्वम् ॥
व्यवस्था । स्त्री० संस्थायाम् । सद्विषयकत्वनिर्धारणे ॥ विशिष्टाअवस्था ॥ शास्त्रनिरूपितविधौ ॥ रचनानियमे ॥ व्यवतिष्ठतेऽनया । ष्ठा० । आतश्चोपसर्गइत्यङ् । टाप् ॥ व्यवस्थानंवा ॥
व्यवस्थान : । पुं० श्रीहरौ ॥ यस्मिन् व्यवस्थिति : सर्व्वस्य स : ॥ जातिवर्णाश्रमतद्धर्मादिकान्विभज्यकरोतिवा । कृत्यल्युटोबहुलमिति० बहुलग्रहणात्कर्त्तरिल्युट् । व्यवतिष्ठतेसर्वंजगदस्माद्धर्य्येणाच । अधिकरणेल्युट्वा ॥ न० व्यवस्थितौ ॥
व्यवस्थापक : । पुं० व्यवस्थादातरि ॥
व्यवस्थापित : । त्रि० निश्चिते ॥
व्यवस्थित : । त्रि० अप्रचलिते । ततद्युगेनावस्थिते । प्रतिष्ठिते ॥ विशेषेणअवस्थित : ॥ व्यवस्थांप्राप्ते ॥ इतच् ।
व्यवस्थिति : । स्त्री० अवस्थाने । व्यवस्थाने ॥

व्यश्च । अ० निश्चित्येत्यर्थे ॥

व्यवहरणम् । न० व्यवहारे ॥

व्यवहर्त्ता । पुं० व्यवहारकर्त्तरि ॥ प्राड्विवाके ।

व्यवहारः । पुं० शास्त्रीयलौकिकादिव्यवहरणे । व्यौहार० इ० भा० ॥ यथाहुः । अहमिदमितिचमतिर्व्यासततंव्यवहरतिसर्वलोकोपि । प्रथमाप्रतीचिचरमानिवसतिवपुरिन्द्रियादिवाह्यार्थे ॥ इति ॥ द्रुमप्रभेदे ।। न्यासे ॥ पणे ।। स्थितौ व्युत्पत्तौ ॥ विवादे । ऋणदानादिविषयचतुष्पाद्याये ॥ ऋणदानाद्यष्टादशविषये० विरुद्धार्थार्थिप्रत्यर्थिवाक्यजनितसन्देहहारीविचारएवव्यवहारः । यथाहकात्यायनः । विनानार्थेऽवसन्देहहरणं हारउच्यते । नानासन्देहहरणाद्व्यवहारइतिस्मृतइति ॥

व्यवहारज्ञः । पुं० प्राप्तव्यवहारे ॥ सतुषोडशवर्षानन्तरंभवति । यथा । बालआषोडशाद्वर्षात्पौगण्डोपि निगद्यते । परतोव्यवहारज्ञःस्वतन्त्रः पितरावृतेइति ॥ त्रि० व्यवहारज्ञातरि ॥

व्यवहारदर्शनम् । न० न्यायदर्शने । विचारकरणे ॥

व्यवहारपदम् । न० वादिनाराज्ञिनिवेदने ॥ यथाहयाज्ञवल्क्यः । स्मृत्याचारव्यपेतेन० मार्गेणाधर्षितः परैः । आवेदयतिचेद्राज्ञेव्यवहारपदंहितदिति ॥

व्यवहारपादः । पुं० व्यवहारांशे ॥ यथा । पूर्वपक्षः स्मृतः पादोद्विपादश्चोत्तरः स्मृतः । क्रियापादस्तथाचान्यश्चतुर्थोनिर्णयः स्मृतइति ॥

व्यवहारमातृका । स्त्री० व्यवहारोपयोगिक्रियायाम् ॥ साचमिताक्षरातोनुसन्धेया ॥

व्यवहारमार्गः । पुं० व्यवहारविषये । व्यवहारपदे ॥

व्यवहारविधिः । पुं० धर्मशास्त्रे । व्यवहारस्यविधाने ॥

व्यवहारविषयः । पुं० व्यवहारपदे ॥

व्यवहारिका स्त्री० लोकयात्रायाम् ॥ वर्द्धन्याम् । सम्मार्ज्जन्याम् ॥ इङ्गुदे ॥

व्यवहारी । त्रि० व्यवहारविशिष्टे ॥

व्यवहार्य्यः । त्रि० व्यवहरणीये । व्यवहर्त्तव्ये । व्यवहारयोग्ये ॥

व्यवहितः त्रि० दूरस्थिते ॥ व्यवधानविशिष्टे । सान्तरे । भित्त्याद्यन्तरिते ॥ तिरोहिते ॥

व्यवहृतः । त्रि० कृतव्यवहारे ॥

व्यवहृतिः । स्त्री० व्यवहारे ॥

व्यवायः । पुं० सुरते । ग्राम्यधर्मे ।

मैथुने ॥ चक्रवर्त्तौ । व्यवधाने ॥ शुद्धाविति धरणिः ॥ न० ते जसि ॥ व्यवायनम् । इण्गतौ० अवगतौ वा । एरच् ० घञ् वा ॥

व्यवायी । त्रि० स्त्री० कामुके ॥ त्रि० द्रव्यविशेषे ॥ व्यवायोऽस्मिन् वास्ति । इनिः ॥

व्यश्नुवानः । त्रि० व्याप्नुवति ॥ अश्नोतेर्लटः शानजादेशः ॥

व्यष्टिः । स्त्री० व्यस्तव्यापिनि ॥ विशेषे । अध्यात्मादिविभागेन व्याप्तिर्व्यष्टिरितीरिता ॥

व्यसनम् । न० अशुभे ॥ सक्तौ ॥ दैवानिष्टफले । भ्रंशे ॥ पापे ॥ विपत्तौ । निष्फलोद्यमे ॥ स्त्रीपानमृगयादिष्वष्टादशविधेषु ॥ यथोक्तं मनुना । मृगयाक्षोदिवास्वप्नः परिवादः स्त्रियोमदः । तौर्य्यत्रिकं वृथाट्या च कामजोदशकोगणः ॥ पैशुन्यं साहसंद्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥ कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः । वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु ॥ द्वयोरप्येतयोर्मूलं यं सर्वे कवयो विदुः । तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ ॥ पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥ दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥ सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिणः । पूर्वं पूर्वं गुरुतरं विद्याद्व्यसनमात्मवान् ॥ तथाहि । द्यूतात्पानं कष्टतरम् । मद्यपानेन मत्तस्य संज्ञाप्रणाशात् । यथेष्टचेष्टयादेहधनादिविरोध इत्यादयो दोषाः । द्यूते तु पाक्षिकोधनाप्तिरप्यस्ति । स्त्रीव्यसनात् । द्यूतकष्टम् । द्यूते हि वैरोद्भवादयोऽनीतिशास्त्रोक्ता दोषाः । मूत्रपुरीषवेगधारणाच्च व्याध्युत्पत्तिः । स्त्रीव्यसने पुनरपत्योत्पत्त्यादिगुणयोगोऽप्यस्ति । मृगयास्त्रीव्यसनयोः स्त्रीव्यसनं दुष्टम् । तत्रादर्शनं कार्याणां कालातिपातेन धर्मलोपादयो दोषाः । मृगयायां तु व्यायामेनारोग्यादिगुणयोगोऽप्यस्तीत्येवं कामजचतुष्कस्य पूर्वं पूर्वं गुरुदोषम् ॥ क्रोधजेष्वपि त्रिषु । वाक्पारुष्यात् । दण्डपारुष्यं दुष्टम् । अङ्गच्छेदादेरशक्यसमाधानत्वात् । वाक्पारुष्ये तु । कोपानलो । दानमानपानीयसेकैः शक्यः शमयितुम् । अर्थदूषणात् । वाक्पारुष्यदोषवन्मर्मपीडाकरम् । वाक्पारुष्यस्य दुश्चिकित्स्यत्वात् । एवं पूर्वं पूर्वं दुष्टतरं क्रोधजे त्रिष्वर्थः । यतोव्यसनासक्तिरनर्थाय इति । व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते । व्यसन्यधोऽधो

व्रजतिस्वर्गाच्च व्यसनीमृत :॥ इ
ति ॥ अन्यचापि । एकैकव्यसना
सक्ता : सर्वेमृत्युवशंगता : । य :
पुन : संहृतान्सेवेद्विषयान्विषयी
नर : । सपतैन्मृहदेश्वर्याच्छिन्नमूल
द्रुमद्रुमइति ॥ चौर्य्यं वव्यसनान्यदा
कामजानिभवन्त्यत । मिथ्यावाक्यं
परमंतस्माद्दुस्तरावुभौ ॥ परदा
राभिगमनंविनावैरस्वरौद्रतेतिरामा
यणम् ॥ व्यस्यते । असुत्वेपणे । भा
वकर्मकरणादौल्युट् ॥ सर्वथैतत्
सम्पादयिष्यामीत्याग्रहोव्यसनम् ॥
व्यासनवारक : । पुं॰ राजर्षिविशेषे
व्यसनार्त्त: । त्रि॰ उपरक्ते । देवमा
नुषान्यतरपीडायुक्ते ॥ व्यसनेनार्त्त
योमार्गात् ॰ व्यसनम् ॰ तेनार्त्त : ॥
व्यसनी । त्रि॰ व्यसनग्रस्ते । पञ्चभ
द्रे । व्यसनमस्यास्ति ॰ अस्मिन्गा ।
इनि : ॥
व्यस्त : । त्रि॰ व्याकुले : व्यग्रे ॥
प्रत्येकम् । पृथक्पृथगर्थे ॥
विपरीते ॥ व्यस्यतेस्म । असुत्वेप
णे । क्त : । विभक्ते । विचि
प्ते ॥ *
व्यस्तपदम् । न॰ ऋणादानाभियोगेप
दान्तरेणोत्तरे ॥ यथा ॥ सुवर्णश
ताभियोगे ॰ अनेनाहंताडितइति ॥
व्यस्तारम् । न॰ हस्तिनोमदप्रयोगे ॥
व्याकरणम् । न॰ वेदस्यानेनेशब्द
शास्त्रे ॥ विशेषेणव्याक्रियन्तेव्युत्पा
द्यन्तेशब्दाअनेन । डुकृञ् ॰
ल्युट् । प्रादिसमास : ॥ अस्यार
म्भेशुद्धिर्यथा । नयेच्छब्दशास्त्राग
मारम्भकालंकृतीशिसुर्षोशोशनोबि
द्विर्गेषु । चलस्थिरप्रमैत्रोड़ुणे बाश्रिते
षुस्वतीधर्मशास्त्रादिकारस्त्रिकालमि
ति ॥ अत्रोक्तं महाभाष्ये । पुराक
ल्पएतदासीत् । संस्कारकालोत्त
रंब्राह्मणाव्याकरणंस्माधीयते ॰ ते
भ्यस्तत्तत्स्थानकरणनादानुप्रदा
नज्ञेभ्योवैदिका: शब्दाउपदिश्यन्ते ॰
तदद्यत्वेनतथा ॰ वेदमधीत्यत्वरिता
वक्तारोभवन्तीति । त्वरिताविधौ
ष्टादशितिकोयट : । संस्कारउपन
यनम् । करणमाभ्यन्तरप्रयत्न : ।
अनुप्रदाननादादिबाह्य : प्रयत्न :
। तेनअधीतव्याकरणशिर्वेभ्यइत्य
र्थइतिविवरणम् ॥
व्याकार : । पुं॰ व्याकरणे । कृञो
घञ् ॥
व्याकीर्ण : । त्रि॰ विकीर्णे । विचि
प्ते ॥ *
व्याकुल : । त्रि॰ शोकादिभिरितिक
र्त्तव्यतापरिज्ञानशून्ये ॥ विह्वले ॥
व्याकोलति । कुलसंस्त्यानेवन्धुषु
च । इगुपधेतिक : ॥ उपद्रुते ॥
सम्भ्रान्ते ॥
व्याकुलात्मा । त्रि॰ शोकाभिहतचित्ते ॥

व्याकृतः । पुं० कार्य्यब्रह्मणि । समष्टौ । हिरण्यगर्भे ॥

व्याकृतिः । स्त्री० भङ्ग्यां । व्युत्पत्तौ ॥ व्याकरणम् । डुकृञ्० । क्तिन् ॥ विशिष्टाकृतौ ॥ व्यञ्जने ॥

व्याकोशः । त्रि० व्याकोषे । विकसिते ॥ व्यावृत्तः कोशः सङ्कोचोऽस्मात् । प्रादिसमासः ॥

व्याकोषः । पुं० प्रफुल्ले । उत्फुल्ले । विकसिते ॥ व्यावृत्तः कोषः सङ्कोचोऽस्मात् । प्रादिभ्यो धातुजस्येति समासः ॥

व्याक्षेपः । पुं० अन्तराये ॥ अव्याक्षेपो भविष्यन्त्याः कार्य्यसिद्धेर्हि लक्षणम् ॥

व्याख्या । स्त्री० विवरणे । व्याख्यानम् । ख्या० । आतश्चोपसर्गे इत्यङ् । टाप् ॥

व्याख्यागम्यम् । न० उत्तराभासभेदे ॥ यथा अस्तव्यस्तपदव्यापि निगूढार्थं तथाकुलम् । व्याख्यागम्यमसारञ्चोत्तरं शास्यते बुधैः ॥ व्याख्यया गम्यते ज्ञायते यत् गम्लृ० । पोरदुपधादिति यत् ॥ *

व्याख्यातः । त्रि० विवृते । कथिते । विस्पष्टमाख्याते ॥

व्याख्याता । त्रि० विवरणकर्त्तरि ॥

व्याख्यानम् । न० व्याख्यायाम् ॥ यथास्वलक्षणम् । पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम् ॥ व्याख्यानसाधने ॥ व्याख्यायतेऽनेन । ख्या० । करणे ल्युट् ॥

व्याघातः । पुं० विष्कम्भादियोगान्तर्गतयोगभेदे ॥ अत्र जातस्य फलं यथा । व्याघातकर्त्ता च सतां नितान्तं व्याघातजन्मा मनुजः कठोरः । असत्यभाषी कृपया विहीनो मन्दे च योऽदीर्घतनुः कृशाङ्गः ॥ अन्तराये । विघ्ने । घाते । प्रहारे । विशिष्टाघातः ॥ अलङ्कारविशेषे ॥ तस्य लक्षणं यथा । तद्वत् साधितं केनाप्यपरेण तदन्यथा । तथैव यद्विधीयेत स व्याघात इति स्मृतः ॥ येनोपायेन यदेकेनोपकल्पितं । तस्यान्येन जिगीषुतया तदुपायेन यदन्यथाकरणं । सत्वसाधितवस्तुव्याहतिहेतुत्वात् व्याघातः ॥ उदाहरणम् । दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः । विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥

व्याघ्रः । पुं० शार्दूले । द्वीपिनि । रक्तैरण्डे ॥ करञ्जे ॥ नराद्युत्तरस्थः श्रेष्ठे ॥ यथा नरव्याघ्रः । व्याजिघ्रति । घ्रा० । व्याङिघ्राति सञ्ज्ञायामिति कः । यद्वा आतश्चोपसर्गे इति कः । पाघ्राध्मा धेट्दृशः

शब्दतिशीन । घ : संज्ञायांमितिनि
षेधात् ॥

व्याघ्रदल : । पुं॰ एरण्डे ॥

व्याघ्रनख: । पुं॰ नखीद्रव्य ॥ व्या
घ्रनखे । व्यसफले ॥ व्याघ्रस्य नखे
॥ न॰ नखीनामगन्धद्रव्ये ।
व्याडायुधे । करजे । चक्रकारके
कन्दविशेषे ॥ नखक्षतविशेषे ॥
व्याघ्रस्य नखमिव ॥

व्याघ्रनखकम् । न॰ नखघ्नी ॥

व्याघ्रनायक : । पुं॰ शृगाले । इ॰
रा॰ मट : ॥

व्याघ्रपात् । पुं॰ विकङ्कते । ग्रन्थि
ले । व्याघ्रस्यपादाएवपादमूला-
न्यस्य । मुनिविशेषे ॥ त्रि॰
व्याघ्रतुल्यचरणे ॥

व्याघ्रपाद : । पुं॰ विकङ्कतवृक्षे ॥
विकण्टकवृक्षे ॥ मुनिविशेषे ॥
रक्तैरण्डे ॥

व्याघ्रपुच्छ : । पुं॰ एरण्डमात्रे । व्या
घ्रपुच्छमिवपुच्छमस्य ॥

व्याघ्राट : । पुं॰ भरद्वाजपक्षिणि ।
व्याघमटति । अट॰ । कर्मण्यण् ।
व्याघ्रइवअटतिवा । अच् ।

व्याघ्रादनी । स्त्री॰ चित्रतायाम् ॥

व्याघ्रायुधम् । न॰ नखाख्यगन्धद्र
व्ये ॥

व्याघ्रास्य : । पुं॰ विडाले ॥ न॰
व्याघ्रमुखे ॥

व्याघ्री । स्त्री॰ निदिग्धिकायाम् ।
कण्टकार्याम् ॥ व्याजिघ्रति ।
घ्रा॰ । व्याघ्रादिभिरितिलिङ्गादा
तश्चोपसर्गइतिकः॰ नतुश : । गौ
रादि: ॥ धूम्रवर्णायाम् वराटिका
याम् ॥ व्याघ्रस्त्रियाम् ॥ यथा
। व्याघ्रीवास्ते जराचायुर्यातिभि
न्नघटाम्बुवत् । निघ्नन्तिरिपुवद्रो
गास्तस्माच्छ्रेय: समाचरेत् ॥ इ॰
कुलार्णव : ॥

व्याङ्घ्रि : । पुं॰ व्यङ्गसुते ॥ अपत्ये
इञ् । स्वागतादीनाञ्चेतिवृद्धिनि
षेधऐजागमश्चन ॥

व्याचिख्यासित : । त्रि॰ व्याख्यातु
मिष्टे ॥

व्याचिख्यासु : । त्रि॰ व्याख्यातु-
मिच्छौ ॥

व्याज : । पुं॰ शाठ्ये । कुसृतौ ॥
स्वरूपाच्छादने । अपदेशे । मिषे ॥
व्यजन्ति॰ क्षिपन्त्यनेन । अज॰
। हलश्चेतिघञ् । निष्ठायांसेट्
त्वान्नकुत्वम् ॥

व्याजनिन्दा । स्त्री॰ अलङ्कारविशेषे ॥
यथा । निन्दायांनिन्दयाव्यक्ति
र्व्याजनिन्देतिगीयते । विधेस
निन्द्योयस्तेप्रागेकमेवाहरच्छिर : ॥
अद्यहरनिन्दया॰ विषमविपाकं सं
सारं प्रवर्त्तयतोविधेर्निन्दाव्यङ्
ग्या॰ व्याजनिन्दा ॥ यथावा । वि

धिरेवविशेषगर्व्वीय: कारटस्व'रट कस्तवापराध:। सत्कारतरोचकार योसौसत्वासंसरतिनकोकिलेन॥ अ न्यस्तुत्या॰अन्यस्तुत्यभिव्यक्तिरिति पञ्चमप्रकारव्याजस्तुतिप्रातवन्दोयं व्याजनिन्दा॥कपटकुत्सायाम् ॥
व्याजस्तुति: । स्त्री॰ अलङ्कारविशेषे ॥ यथा । उक्तिर्व्याजस्तुतिर्निन्दा स्तुतिभ्यांस्तुतिनिन्दयो: । क: स्व र्धुनिविवेकस्तेपापिनोनयसेदिवम् ॥ साधुदूतिपुन: साधुकर्त्तव्यं किमत: परम् । यन्मदर्थं विलू नासिदन्तैरपिनखैरपि ॥ निन्दया स्तुते: ० स्तुत्यानिन्दयावा॰अवग मनंव्याजस्तुति: । क: स्वर्धुनी त्युदाहरणे॰विवेकोनास्तीतिनिन्दा व्याजेन॰गङ्गामुक्तिप्रदेव॰महा पातकिनोपि॰स्वर्गंनयतीतिव्याज रूपयानिन्दयातत्प्रभावातिशयस्तु ति: । साधुदूतीत्युदाहरणे॰म दर्थमियन्तंक्लेशमनुभूतवत्यसीति व्याजरूपयास्तुत्या॰मदर्थंनगतासि ॰किन्तुरन्तुमेवगतासि॰धिक्त्वांदू तिकांधर्मविरुद्धकोरिणीमितिनि न्दावगम्यते ॥कपटप्रशंसायाम् ॥
व्याजोक्ति: । स्त्री॰ छलवाक्ये ॥ अ लङ्कारविशेषे ॥ यथा । व्याजो क्तिरन्यहेतूक्त्यायदाकारस्यगोपनम् । सखिपश्यगृहारामपरागैरस्मिधूस रा ॥ अत्रचौर्यरसक्रतसहेतभूपृष्ठ लुण्ठनलग्नधूलिजालस्यगोपनम् ॥ कश्चवानभवेद्रोष: प्रियाया: स व्रणेधरे । सभृङ्गंपद्ममाघ्रासीर्वारि तापिमयाधुना ॥ उपपतिनाख ण्डिताधरायानायिकाया: सका शमागच्छन्तंप्रियमपश्यन्त्येवसख्या नायिकांप्रतिक्तिरियंपदेशव्याजेनत म्प्रति॰नायिकापराधगोपनंच्छेका पह्नुतेरस्यायंविशेष:। यत्तत्रांव यवस्यान्यथानयनेनापह्नव: । अस्या माकारस्यहेत्वन्तरवर्णनेन॰गोपन मिति॰लक्षणे॰लक्ष्यनाम्नियोक्तिय रूपमाकारस्यगोपनार्थहेत्वन्तरप्रत्या यकव्यापारमात्रेणलक्षणम् ॥
व्याड: । पुं॰ हिंस्रपशौ ॥ मांसा दिपशौ ॥ सर्पे ॥ व्याडति । अ डउद्यमे । व्याडवूर्व: । पचाद्य च् ॥ खले । वञ्चके ॥ इन्द्रे ।
व्याडायुधम् । न॰ व्याघ्रनखाख्यगन्धद्र व्ये॥ व्याडस्यव्याघ्रस्यायुधमिव ॥
व्याडि: । पुं॰ मुनिभेदे । विन्ध्यस्थे नन्दिनीसुते । मेधाविनि ॥ व्यड स्यापत्यम् । इञ् । स्वागतादित्वा द्वृद्धिनिषेधऐजागमश्च ॥
व्यात्त: । त्रि॰ विवृते । वाया॰इ॰ भा॰प्र॰ ॥ यथाव्यात्तानन: ॥
व्याल्युत्री । स्त्री॰ रसिकजनानाम न्योन्यंजलक्रीडने । करपार्श्वे । ज

लक्रीडायाम् । करपत्रिकायाम् । छींटाखेलना॰ इ॰ छींटाछींटीसेखेलना॰ इ॰ च॰ भा॰ ॥ व्यतिहारेणउक्षणम्॰ परस्पराभ्युक्षणम् । उक्षसेचने । कर्मव्यतिहारेणच्स्त्रियामितिणच्प्रत्ययः । णचः स्त्रियामञ् । टिड्ढाणञित्यादिनाङीप् ॥

व्यादित : । त्रि॰ प्रसारिते ॥

व्यादिष्ट : । त्रि॰ सन्दर्शिते ॥ व्याङ्पूर्वाद्दिशे : क्त : ॥

व्याध : । पुं॰ मृगवधाजीवे । मृगयौ । लुब्धके ॥ अयंसवर्णस्त्रिभार्यायांचत्रियाज्जात : । यथोक्तंब्रह्मवैवर्त्ते । नापितादृगोपकन्यायांसर्वस्त्री॰ तञ्चयोषिति । क्षत्राद्भूबव्याधश्चबलवान् मृगहिंसकवृत्ति दुष्टे ॥ तारामयेत्रि ॥ भेदने ॥ विध्यति । व्यधताडने । श्याद्व्यधेतिण : ॥

व्याधभीत : । पुं॰ मृगे ॥

व्याधाम : । पुं॰ वज्रे ॥ इ॰ श्रे॰ न्द्र : ॥

व्याधि : । स्त्री॰ कुष्ठौषधौ ॥ रोगे । धातुवैषम्यनिमित्ते॰ ज्वरातीसारादिरूपेविकारे ॥ चिकित्साशास्त्रे॰ पञ्चमहाभूतशरीरिसमवाय: पुरुषइत्युच्यते। तस्मिन्क्रियासोऽधिष्ठानम्॰ कस्माल्लोकस्यद्वैविध्यात् । लोकोहिद्विविध : स्थावरोजङ्गमश्च । द्विविधात्मकएवाग्नेय : सौम्यश्च॰ तद्भूयस्त्वात् । पञ्चात्मकोवा । तत्रचतुर्विधोभूतग्राम : । स्वेदजाण्डजोद्भिज्जजरायुजसंज्ञ : । तत्रपुरुषप्रधानम् । तस्योपकरणमन्यत् । तस्मात्पुरुषोधिष्ठानम् । तद्दु : खसंयोगाव्याधयइत्युच्यन्ते । तेचतुर्विधा:॰ आगन्तव:॰ शारीरा॰ मानसा:॰ स्वाभाविकाश्चेति । तेषामागन्तवोभिघातनिमित्ता: । शारीरास्त्वन्नपानमूलावातपित्तकफशोणितसन्निपातवैषम्यनिमित्ता : । मानसास्तु॰ क्रोधशोकभयहर्षविषादेर्ष्याभ्यसूयादैन्यमात्सर्यकामलोभप्रभृतयइच्छाद्वेषभेदैर्भवन्ति । स्वाभाविका : क्षुत्पिपासाजरामृत्युनिद्राप्रभृतय : तएतेमन: शरीराधिष्ठाना : ॥ तेषांसंशोधनसंशमनाहाराचारा : सम्यक्प्रयुक्तानिग्रहहेतव : इत्यादिसुश्रुतेप्रथमाध्याय : ॥ विगतआधिरनेन ॥ विशिष्टआधिर्वा ॥ व्याधत्तेवा । व्याधानंवा । उपसर्गेघो : कि : ॥

व्याधिघात : । पुं॰ आरग्वधे ॥ व्याधीन्हन्ति । हन॰ कर्मण्यण् । हनस्तोचिण्णलो : ॥

व्याधित : । त्रि॰ व्याधियुक्ते । आमयाविनि । आतुरे ॥ व्याधि: सञ्जा

तीस्य । तदृशसङ्ख्यातंतारकादिभ्य इतच् ॥

व्याधिहन्ता । पुं॰ वाराहीकन्दे ॥ त्रि॰ व्याधिघातके ॥

व्याधूतः । त्रि॰ कम्पिते ॥ विशेषेण आसमन्ताद्धूतः ॥

व्यानः । पुं॰ विष्वग्गमनवत्यखिलशरीरवर्त्तिनि देहस्थपञ्चवायुान्तर्गतानिलविशेषे ॥ प्राणापानयोर्निर्यमनकर्माचरणामम्युत्पादनादिवीर्य्यवत्कर्महेतुत्वादखिलशरीरवर्त्ती व्यानइत्यर्थः ॥ व्यानोविनामयत्ययंव्याने व्याधिप्रकोपणः । प्रतिदानंतथाकण्ठाद्व्यापनाद्व्यानउच्यते ॥ व्याप्त्यानित्यनेनहलश्चेतिघञ् ॥

व्यानतम् । न॰ रतिबन्धान्तरे ॥ यथा । स्वेच्छयाभ्रमतिवल्लभेप्रियायेषिदाचरतिवल्लभायितम् । व्यानतंरतमिदंयदिप्रियाश्चादधोमुखचतुष्पदाकृतिः ॥

व्यानद्धः । त्रि॰ विशेषेणावद्धे ॥

व्यापकः । त्रि॰ अपरिच्छिन्ने । अन्यूनदेशकालवर्त्तौ ॥ विष्णौ ॥ स्वसत्ताप्रकाशाभ्यांनामरूपेऽव्याप्नोति । आप्लृव्याप्तौ । ण्वुल्तृचाविति ण्वुल् ॥ तद्भिन्नवृत्यन्ताभावाऽप्रतियोगिनि । यथा । साध्यस्यव्यापकोयस्तुहेतोरव्यापकस्तथा । सउपाधिर्भवेत्तस्यनिष्कर्षोयंप्रदर्श्यते ॥ इ॰भा॰प॰ ॥ आच्छादके ॥ यथा । पद्यस्यव्यापकंसारमसन्दिग्धमनाकुलम् । अव्याख्यागम्यमित्येवमुत्तरंतद्विदोविदुः ॥ पद्यस्य॰ भावार्थस्य॰ व्यापकमाच्छादकम्॰ अभियोगाप्रतिकूलमितियावत् । इतिव्यवहारतत्त्वम् ॥ लिंगिनि ॥ येनचप्रतिवद्धंतद्व्यापकम् ॥ वाच्ये ॥

व्यापकता । स्त्री॰ व्यापकत्वे ॥

व्यापत्तिः । स्त्री॰ व्याधौ । मरणे ॥

व्यापद् । स्त्री॰ आपदि ॥ मृत्यौ ॥ व्याङ्पूर्वात्पदेः क्विप् ॥ विशिष्टाआपद ॥

व्यापनम् । न॰ आच्छादने ॥ व्याप्तौ ॥

व्यापन्नः । त्रि॰ मृते ॥

व्यापादः । पुं॰ द्रोहचिन्तने ॥ व्यापादनम् । व्याङ्पूर्वकपदधातोर्ण्यन्ताद्भावेघञ् ॥

व्यापादनम् । न॰ मारणे ॥ व्याङ्पूर्वात्पदधातोर्ण्यन्ताल्ल्युट् ॥

व्यापादितः । त्रि॰ मारिते ।

व्यापारः । पुं॰ कर्मणि । क्रियायाम् ॥ दशमभवने ।

व्यापारितः । त्रि॰ नियुक्ते ॥

व्यापारी । त्रि॰ व्यापारविशिष्टे व्यवसायिनि ॥

व्यापिका । स्त्री॰ व्यापिन्याम् । व्या

प्नोति । आप्लृ॰ ण्वुल् । टाप् । ह्रस्वम् ॥
व्यापी । त्रि॰ विभौ । व्यापके । आत्मनि । पूर्णे ॥ सकलव स्तुव्यापनशीले । व्याप्तुंशीलमस्य । आप्लृ॰ । सुप्यजातौणिनिस्ताच्छील्ये इतिणिनिः ॥
व्यापिनी । स्त्री॰ व्यापिकायाम् ॥
व्याप्रियमाणः । त्रि॰ व्याप्रियमाणे ॥
व्यापृतः । पुं॰ कर्मसचिवे । आयुक्ते ॥ त्रि॰ व्यापारयुक्ते ॥
व्यापृतिः । स्त्री॰ व्यापारे ॥
व्याप्तः । त्रि॰ ख्याते । समाक्रान्ते । यथा । यद्यत्कार्यंकारणेनव्याप्त मन्तर्वहिश्चेति । कारणत्वेनसर्वकार्याणांव्यापनाद्व्याप्तः परमात्मा । पूर्णे ॥ व्याप्यतेस्म ॥ आप्लृ॰ । गत्यर्थाकर्मकेतिक्तः कात्स्न्येनस म्बद्धे । तते ॥ सर्वंकार्यमुपादान त्वेनव्याप्नोति । विपूर्वादाप्नोतेः पूर्ववत्कर्त्तरिक्तः ॥
व्याप्तिः । स्त्री॰ व्यापने ॥ लम्भे । इतिमेदिनी ॥ लम्भने । इतिहेम चन्द्रः ॥ यत्रधूमस्तत्राग्निरितिसा हचर्य्यनियमे ॥ व्यापनम् । आप्लृ॰ । स्त्रियांक्तिन्नाबाधादिभ्यइतिक्तिन् ॥ आप्तौ ॥
व्याप्यम् । न॰ लिङ्गे । साधने ॥ अधिकदेशकालनियमंव्याप्यम् ॥ व्यापकाभावेव्याप्याभावोव्याप्यः ॥
व्याप्यते । आप्लृ॰ । ऋहलोर्ण्यत् ॥
कुष्ठौषधौ । पालके । व्याधौ । उत्पले ॥ त्रि॰ व्याप्तिविशिष्टे । व्याप्तिकर्मणि ॥ आवृते ॥ शङ्कितसमारोपितोपाधिनिराकरणेन स्वभावप्रतिबद्धंव्याप्यमितिसाङ्ख्याः ॥ अस्यार्थः । समययुक्तः शङ्कितः विपर्ययुक्तः समारोपितः उपाधिर्विशेषणम् स्वभावेति । भावः सत्ता तयाप्रतिबद्धमित्यर्थः । प्रतिबद्धंगृहीतम् तेनलिङ्गसत्ताभावेनाऽनुमानं सिद्ध्यतिभावः ॥
व्याप्यत्वासिद्धः । पुं॰ सोपाधिके ॥ साध्यव्यापकत्वेसतिसाधनाव्यापकत्वमुपाधिः । साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वंसाध्यव्यापकत्वम् । साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वंसाधनाव्यापकत्वम् । पर्वतोधूमवान्वह्निमत्त्वादित्यत्रार्द्रेन्धनसंयोगउपाधिः । यत्रधूमस्तत्रार्द्रेन्धनसंयोगइति साध्यव्यापकता । यत्रवह्निस्तत्रार्द्रेन्धनसंयोगोनास्ति अयोगोलके आर्द्रेन्धनाभावादितिसाधनाव्यापकत्वम् । एवंसाध्यव्यापकत्वेसतिसाधनाव्यापकत्वादार्द्रेन्धनसंयोगउपाधिः । सोपाधिकत्वाद्वह्निमत्त्वंव्याप्यत्वासिद्धहेत्वाभासः ॥

व्यालः। पुं॰ दुष्टगजे॥ सर्पे॥ श्वापदे॥ सिंहे॥ त्रि॰ खले॥ शठे॥ व्याडति। व्याडतमेव व्याडः पूर्वः। पचाद्यच्। डलयोरैक्यस्मरणाद्व्यालः यद्वा। विरुद्धमासमन्तादलति॰ सुडतिवा। अल॰ अड॰। डलयोरैक्यम्। पचाद्यच्॥

व्यालकः। पुं॰ दुष्टगजे। गम्भीरवेदिनि॥ ड॰ त्रि॰ ग्रीष्मः॥

व्यालखड्गः। पुं॰ व्यालनखे॥

व्यालगन्धा। स्त्री॰ नाकुल्याम्। रास्नायाम्॥

व्यालग्रहः। पुं॰ व्यालग्राहिणि॥

व्यालग्राही। पुं॰ आहितुण्डिके॥ व्यालं गृह्णाति। नन्द्यादीति णिनिः॥

व्यालजिह्वा। स्त्री॰ महासमङ्गायाम्॥

व्यालदंष्ट्रः। पुं॰ गोक्षुरे॥

व्यालनखः। पुं॰ गन्धद्रव्यविशेषे। व्याघ्रनखे॥

व्यालपत्रा। स्त्री॰ एर्वारौ॥

व्यालबलः। पुं॰ व्यालनखे॥

व्यालमालः। पुं॰ शिवे॥ व्यालाः सर्पा एव माला यस्य॥

व्यालमृगः। पुं॰ चित्रव्याघ्रे॥

व्यालम्बः। पुं॰ रक्तैरण्डे॥

व्यालायुधम्। न॰ व्याडायुधे॥ व्यालसिंहव्याघ्रायुधमिव॥

व्याली। त्रि॰ व्यालवति॥

व्याली। स्त्री॰ दुष्टायाम्॥

व्यालोडनम्। न॰ विमर्द्दने॥

व्यालोलितः। त्रि॰ विलुलिते॥

व्यावक्रोशी। पुं॰ परस्पराक्रोशने॥

व्यावर्त्तः। पुं॰ रोगभेदे॥ विशिष्टावर्त्ते॥

व्यावर्त्तकः। त्रि॰ भेदके॥

व्यावर्त्तनम्। न॰ इतरेतरवियोगस्थाने॥ वेष्टने। वेठन॰ इ॰ भा॰

व्यावर्त्तयितुम्। अ॰ बाधितुमित्यर्थे

व्यावर्त्तिका। स्त्री॰ बाधिकायाम्। प्रतिबन्धिकायाम्॥ यथा। बीभत्सप्रतिभान्तिभिन्नविषयाः किन्तुस्पृहायुष्मतो॰ देहव्यापचयोमतोनिविशतेगाढोग्रहिषुग्रहः। अस्मोपायमितिस्फुरत्यपिहृदिव्यावर्त्तिकावासना॰ कामामेयमतर्क्यमोहगहनाद्बीभत्सतायातना॥

व्यावर्त्तितः। त्रि॰ बाधिते। पराङ्मुखीकृते॥

व्यावहारिकः। त्रि॰ व्यवहारसिद्धे॥ व्यवहारेणचरति। चरतीतिठक्। खागतादिः॥ विनयादित्वात्स्वार्थेवाठक्॥

व्यावृत्तः । त्रि० निवृत्ते ॥ हते ॥

व्यावृत्तिः । स्त्री० व्यतिरेके ॥ निरसने ॥ खण्डने ॥ आवृत्तौ ॥ यथा सर्वसपक्षव्यावृत्तिरेवदोषो० नविपक्षव्यावृत्तिरपितस्याननुगुणत्वात् ॥

व्याश्रयः । त्रि० विभिन्नाश्रये । नानापक्षसमाश्रये ॥ विभिन्नआश्रयः ॥

व्यासः । पुं० मुनिविशेषे । बादरायणे । पाराशर्य्ये । भगवति० कृष्णद्वैपायने । मुनीनांमध्ये भगवतोविभूतौ ॥ येन० ऋग्वेदादिविभागेन० चतुर्धावेदाव्यस्ताः । तत्रर्ग्वेदएकविंशतिधाकृतः यजुर्वेदएकाधिकशतधाकृतः । सामवेदः सहस्रधाकृतः अथर्वणः पञ्चाशच्छाखाभेदेनकृतः । एवंविभागेनचतुर्धावेदव्यस्ताः । अन्यानिचपुराणानि० व्यस्तान्यनेनेतिव्यासः ॥ तंवेदशास्त्रपरिनिष्ठितशुद्धबुद्धिं-चर्माम्बरंसुरमुनीन्द्रनुतंकवीन्द्रम्-। कृष्णत्विषंकनकपिङ्गजटाकलापंव्यासनमामिशिरसातिलकंमुनीनाम् ॥ व्यस्यतिविभजतिविस्तारयतिवापूर्वेद्यतेर्वाहुलकात्कर्त्तरिघञ् ॥ वेदविस्तारकरणाद्व्यासनामाभवन्मुनिरितिभागवतम् ॥ पाठकब्राह्मणे ॥ यथा । विस्पष्टमद्रुतं शान्तंस्पष्टाक्षरपदन्तथा । कलस्वरसमायुक्तंरसभावसमन्वितम् ॥ बुद्ध्यमानः सदर्थैर्वेदान्यार्थंकृत्स्नशोनृप । ब्राह्मणादिषुसर्वेषुग्रन्थार्थंश्रावयेन्नृप । यएवंश्रावयेद्ब्रह्मन्सविप्रोव्यासउच्यते ॥ विस्तृते । प्रपञ्चे । विस्तारे ॥ मानभेदे ॥ गोलस्यमध्यरेखायाम् ॥ व्यसनम् । असुक्षेपणे । घञ् ॥

व्यासक्तः । त्रि० व्यापृते । विशेषासक्ते । संलग्ने ॥ व्यासक्तः कार्यान्तरंविस्मरतीत्यसावधानोक्तिः ॥

व्यासङ्गः । पुं० विक्षेपे ॥ विशिष्टासङ्गे ॥ विशेषेणआसङ्गः ॥ अभ्यासे ॥

व्यासमाता । स्त्री० सत्यवत्याम् । वासव्याम् ॥

व्यासिद्धः । त्रि० निषिद्धे ॥

व्यासेधः । पुं० प्रतिषेधे । व्यासेधनम् । व्याङ्पूर्वात्सिधतेर्घञ् ॥

व्याहतः । त्रि० बाधिते ॥ विधूनिते ॥ अयंनीते ॥ विशेषेणआहतः ॥ व्यर्थे ॥

व्याहतिः । स्त्री० व्याघाते ॥

व्याहन्यमानः । त्रि० प्रतिषिद्ध्यमाने ॥

व्याहरणम् । न० व्याहारे ॥ यथा । स्नातुस्तुवरुणस्तेजोजुह्वतोऽग्निः श्रियंहरेत् । भुञ्जानस्ययमस्त्वायुस्त

स्मान्नव्याहरेत्विप्रितिभविष्योत्तरपुराणम् ॥

व्याहरत् । त्रि॰ शब्दयति ।

व्याहारः । पुं॰ उक्तौ । जल्पिते । वचसि ॥ व्याहरणम् । व्याङ् पूर्वात्॰ह्रञोभावेघञ् ।

व्याहृतम् । त्रि॰ उक्ते ॥ सन्दिष्टे ॥

व्याहृतिः । स्त्री॰ भूरादिषु ॥ व्याहरतिभूरादिसप्तलोकान् । हृञ्॰ । व्याङ्पूर्वस्ततः॰ क्तिन् । व्याहारे ॥

व्युच्छिन्नः । त्रि॰ विमुक्ते ॥ विशेषेणोच्छिन्ने ॥

व्युतः । त्रि॰ स्यूते ॥ द्वि॰हि॰कोषः ॥

व्युतिः । स्त्री॰ व्यूतौ द्वि॰हि॰कोषः ॥

व्युत्क्रमः । पुं॰ क्रमविपर्यये । व्यतिक्रमे । उत्क्रमे । अक्रमे । विगिष्टउत्क्रमः ॥

व्युत्क्रमणम् । न॰ पृथगवस्थाने ॥ व्युत्पूर्वात्क्रमेर्ल्युट् ॥

व्युत्थानम् । न॰ स्वातंत्र्यकार्ये । चित्तमूढविक्षिप्ताख्यभूमिवये । समाधिपारणे ॥ विरुद्धमुत्थानम् । प्रादयोगतेतिसमासः ॥ वैपरीत्येनोत्थानंवा ॥ विरोधाचरणे । न्याय्यांवृत्तिंसमुल्लङ्घ्यतद्विरुद्धतयास्थितिः । व्युत्थानमुदितंराज्ञः सामन्तोव्युत्थितोयथा ॥ एषयानुगुणतयास्थितिमतिक्रम्यतत्प्रतिकूलत्वेन॰यास्थितिः सा॰व्युत्थानमित्युदितंमहद्भिरितिशेषः । तत्प्रसिद्धिंप्रमाणयति । राज्ञइति ॥ प्रतिरोधने ॥ नृत्यभेदे ॥ विशेषेणोत्थाने ॥

व्युत्थापनम् । न॰ बाधने ॥

व्युत्पत्तिः । स्त्री॰ सम्यग्ज्ञाने ॥ संस्कारे ॥ विशेषेणोत्पत्तिः ॥ विविधावोत्पत्तिः ॥ शक्तिज्ञाने ॥

व्युत्पन्नः । त्रि॰ व्युत्पत्तियुक्ते ॥ सम्यग्ज्ञानवति ॥ सस्कृते । विशेषेणाभ्यन्तम्॰उत्पन्नः परिचितः ॥

व्युत्पादकः । पुं॰ व्युत्पत्तिजनके ॥

व्युदसनम् । न॰ निरसने ॥

व्युदस्तः । त्रि॰ प्रतिषिद्धे ॥

व्युदासः । पुं॰ प्रतिषेधे ॥

व्युषितः । त्रि॰ पर्युषिते । वुसा॰इतिभाषाप्रसिद्धे ॥ व्युष्यतेस्म । उष॰ । क्तः ॥ देशान्तरकृते ॥

व्युष्टम् । न॰ फले । प्रभाते । कालः॰ इ॰भा॰ ॥ फले ॥ दिने ॥ त्रि॰ उषिते । पर्युषिते ॥

व्युष्टिः । स्त्री॰ फले ॥ समृद्धौ ॥ स्तुतौ ॥ व्युच्छनम्॰व्युच्छतेवा । उच्छीविवासे ॥ स्त्रियांक्तिन् ॥ स्वकरणसंवेद्यविश्रुतत्त्वे । अपरोक्षख्यातौ ॥

व्यूढ : । त्रि० विन्यस्ते । व्यूहरचनया स्थिते ॥ संहते ॥ पृथुले ॥ विशेषेणोढ्यतेस्म । वहप्रापणे । क्त : ॥

व्यूढकङ्कट : त्रि० सन्नद्धे । वर्म्मिते । सज्जे । दंशिते । धृतसन्नाहे ॥ गूढोधृत : • कङ्कट : सन्नाहोयेन ॥

व्यूढि : । स्त्री० व्यूहे ॥ विन्यासे ॥ संहतौ ॥ पृथुलतायाम् ॥

व्यूत : । त्रि० ऊते । तन्तुसन्तते ॥

व्यूति : । स्त्री० वस्त्रादिवानेवाणौ ॥ विशिष्टाऊति : । वेञः • ऊतियूतीत्यादिनाक्तिनिनिपातित : ॥

व्यूह : । पुं० निर्माणे ॥ वृन्दे । समूहे । विभागे ॥ तर्के ॥ देहे ॥ विस्तारे ॥ बलविन्यासे । युद्धार्थसेनारचनायाम् । युद्धार्थसैन्यस्यदशविशेषैर्विभज्यदुर्लङ्घ्यत्वेन मनस्थापने ॥ व्यूहते । ऊहवितर्के । इगुपधेतिक : ॥ व्यूह्यतेवा । घञ् ॥ विशिष्टऊहोवा ॥

व्यूहनम् । न० सैन्यसंस्थाने ॥

व्यूहपार्ष्णि : । पुं० व्यूहपृष्ठे । प्रत्यासारे । सैन्यस्यपृष्ठेधनु : शतद्वयान्तरेस्थितसैन्ये ॥ व्यूहस्य पार्ष्णि : पृष्ठभाग : ॥

व्यूहभेद : । पुं० बलविन्यासस्यप्रभेदे । व्यूहस्यभेदोविशेष : ॥ यथाहु : । समयज्ञतुसैन्यस्यविन्यास: स्थानभेदत : । सव्यूहइतिविख्यातोयुद्धेषुपृथिवीभुजाम् ॥ व्यूहभेदास्तुचत्वारोदण्डोभोगोस्त्रमण्डलम् । असंहतश्चनिर्णीतानीतिसारादिसम्मता : ॥ अन्येपिप्रकृतिव्यूहा : क्रौञ्चचक्रादय : क्वचित् । तत्र । तिर्यग्वृत्तिस्तुदण्ड : स्याद्भोगोन्वावृत्तिरेवच । मण्डलंसर्वतोवृत्ति : पृथग्वृत्तिरसंहत : ॥ इति ॥ दण्डवद्वस्थानंदण्ड : । अन्योन्यानुगतावृत्तिर्भोग : । सर्पशरीरवदवस्थानं मण्डलम् । गजादीनांविजातीयैरमिश्रितानांस्थानमसंहत : । शकटमकरपताकासर्वतोभद्रदुर्ज्जयादयोऽन्येपिव्यूहा : सन्तितेषांलक्षणंभारतादिपुद्रष्टव्यम् ।

व्यो । अ० लोहे ॥

व्योकार : । पुं० लोहकारके ॥ व्योहत्यव्ययंलोहवाचीतिश्रीभोज : । व्योकरोति । डुकृञ् • । कर्मण्यण् ॥

व्योम : । पु • मयासुरपुत्रे ॥

व्योमकेश : । पुं० शिवे ॥ व्योमेवकेशायस्य । गङ्गाधारणायव्योमव्यापिन : केशायस्येतिवा ॥

व्योमचारी । पुं० देवतायाम् ॥ विहङ्गमे । ग्रहे ॥ चिरजीविनि ॥ त्रि० व्योमचरे ॥

व्योमचारिपुरम् । न० देवानांपुरे ॥ व्योमचारिणांपुरम् । शोभे ॥

व्योमधूम : । पुं० मेघे ॥

व्योम । न० वारिणि ॥ आकाशे ॥ भास्करस्यार्चनाश्रये ॥ व्ययति । व्येञ् संवरणे । नामन्सीमन्व्योमन्नित्यादिनामन्नन्तं निपातितम् ॥ यद्वा । वयवति । विपूर्वेवतेर्मनिन् । ज्वरत्वरेत्यूठ् । सवर्णदीर्घः । अवधातुकेगुणः । अवके ॥ लवन इणमभवने ॥

व्योमनासिका । स्त्री० पक्षिविशेषे । भारद्याम् । गरुड्योधिनि ॥

व्योम... । न० पताकायाम् ॥

व्योममण्डलम् । न० आकाशे ॥

व्योममुद्गरः । पुं० निर्घाते ॥

व्योम... । न० विमाने ॥ व्योम्न यान्त्यनेन । करणे ल्युट् । व्योम ... ल्युटो बहुलमिति कर्त्तरि ल्युड्वा ॥

व्योमसद् । पुं० गन्धर्वे ॥

व्योमस्थली । स्त्री० भूमौ ॥

व्योमाभः । पुं० बुद्धे ॥

व्योमोदकम् । न० दिव्योदके ॥

व्योषः । पुं० करिविशेषे ॥ न० त्रिकटुद्रव्ये । विशेषेणोषति । उष दाहे । पचाद्यच् ॥

व्रजः । पुं० गोष्ठे । गोकुले । गवांस्थाने ॥ अध्वनि । अयने ॥ वृन्दे । समूहे । व्रजति । व्रजगतौ पचाद्यच् व्रजन्त्यनेनवा । गोचरसञ्चरवहव्रजेत्यादिना घः साधुः ॥

व्रजकः । पुं० तपस्विनि ॥

व्रजकिशोरः । पुं० ललितायामाधिवनाधिपेश्रीकृष्णदेवे ॥

व्रजनाथः । पुं० श्रीकृष्णे ॥

व्रजभूः । पुं० सत्कृदम्बे ॥ स्त्री० व्रजभूमौ ॥

व्रजमण्डलम् । न० व्रजभूमौ ॥

व्रजमोहनः । पुं० श्रीकृष्णे ।

व्रजवरः । पुं० आतटाधिवनाधिपेश्री कृष्णदेवे ॥

व्रजवल्लभः । पुं० श्रीकृष्णे

व्रजाङ्गना । स्त्री० गोप्याम् ॥

व्रजेश्वरी । स्त्री० व्रजाधिष्ठातृदेव्याम् ॥ यशोदायाम् ॥ *

व्रज्या । स्त्री० अटाव्यायाम् । पर्यटने ॥ प्रस्थाने । जिगीषोः प्रयाणे ॥ गमने ॥ वर्गे ॥ व्रजनम् । व्रज० । व्रजयजोर्भावेक्यप् ॥

व्रणः । पुं० न० क्षते । ईर्मं । अरुषि ॥ व्रणो द्विधापरिज्ञेयो दोषजश्चागन्तुभेदतः । दोषजो दुष्टदेहे स्यादन्यः शस्त्रादिसम्भवः ॥ सर्वेषांग्यस्तु । आयतश्चविशालश्चसुविभक्तो निराश्रयः । प्राप्तकालकृतश्चापि व्रणः कर्मणिशस्यते ॥ व्रणति । व्रणशब्दे । पचाद्यच् ॥ यद्वा । व्रणयति । व्रणगात्रविचूर्णने । दन्तः । अच् ॥ *

व्रणकृत् । पुं० भल्लातके ॥ व्रणंकरो

ति। इ कृञ्०। क्विप्। तुक्॥ त्रि० व्रणकारके॥

व्रणकेतुघ्नी। स्त्री० दुग्धफेन्याम्। गोजापर्ण्याम्॥

व्रणद्विट्। पुं० ब्राह्मणयष्टिकायाम्॥ त्रि० व्रणद्वेषके॥

व्रणशोधनम्। न० व्रणपरिष्कारणे यथा। व्रणस्य त्वक्शुद्ध्यर्थं क्वाथः शुद्धिकरः परः। पटोलनिम्बपत्रस्य सर्वत्रैव प्रयुज्यते। वातिकेऽष्टमूलानां क्षीरिणां पैत्तिके व्रणे। आरग्वधादेः कफजे कषायः शोधनं हितम्॥

व्रणहः। पुं० एरण्डवृक्षे॥ त्रि० व्रणघातके॥

व्रणहा। स्त्री० गुडूच्याम्॥

व्रणहृत्। पुं० कालकारीवृक्षे॥

व्रणारिः। पुं० बोले॥ अगस्त्यवृक्षे॥

व्रतम्। न० पुं० अशने। भक्षणे॥ इत्युणादिकोषः॥ पुण्यजनकोपवासादौ। नियमे। शास्त्रविहिते नियमानुष्ठाने। मधुमांसवर्जनादिनियमे॥ तथाच वेदे० पयोव्रतो ब्राह्मणो यवागूव्रतो राजन्यः आमिक्षाव्रतो वैश्य इत्युच्यते। व्रतस्य नाम अभ्यवहारार्थमुपादीयते। शक्यश्चानेन शालिमांसादीन्यपि व्रतयितुम्। तत्र नियमः क्रियते० इति भाष्यम्। सत्यामर्थितायां पय एव व्रतयतीति नियमोऽयं न तु विधिरिति कैयटः॥ उपनयने॥ व्रियते। वृञ्० वृङ् वा। पृषिरञ्जिभ्यां कित्। इत्यतच्। बाहुलकात् इञोऽपि। कित्त्वान्न गुणः॥ यद्वा। व्रजन्त्यनेन स्वर्गम्। गोचरसञ्चरेति घः। पृषोदरादिः। कन्यासङ्क्रान्त्यादौ स्त्रीणां व्रतं निषिध्यते कालिदासो यथा। वर्णिनां व्रतोपासनं नो हितं कुम्भतीर्थोदये वर्गिणीनाञ्च हरौ। देवतासुप्तकालेऽथ मासि धिक्पौषे दैत्यदेवेज्ययोरस्तके॥ कुम्भतीर्थोदये० कुम्भे घटे० तीर्थे निरुत्पत्तिर्यस्य सः० कुम्भतीर्थः० अगस्तिः तस्योदये॥ मयेदं कर्त्तव्यमिदं न कर्त्तव्यमित्येवं विधिसङ्कल्पविशेषे॥

व्रततिः। स्त्री० विस्तारे॥ वल्ल्याम्॥ व्रजनात्ततिर्विस्तृतिरस्याः। पृषोदरादिः॥ यद्वा। प्रतनोति। तनु विस्तारे। क्तिच्कौ च संज्ञायाम्। पृषोदरादित्वात् प्रस्य वः॥ व्रतमिव करोति। व्रतशब्दात्० तत्करोतीति णिच् तस्मात् बाहुलकात् अङ् ततिर्वा॥

व्रतती। स्त्री० वल्ल्याम्॥ विस्तारे। इ० द्विरूपकोषः॥

व्रतबन्धः। पुं० उपनयने॥ व्रतानां शास्त्रीयाणां नियमानां बन्धो बन्धनं यस्मिन् सः॥

व्रतयज्ञः । पुं॰ संशितव्रते ॥

व्रतसङ्ग्रहः । पुं॰ दीक्षायाम् ॥

व्रतस्थः । पुं॰ ब्रह्मचारिणि ॥

व्रतादेशः । पुं॰ उपनयने ॥

व्रती । पुं॰ यजमाने । साधके ॥ ब्रह्मचारिणि ॥ चान्द्रायणादिव्रतकारिणि ॥ व्रतमेषामजिनादिधारणं भोजनादिनियमो वास्यास्ति । इनिः । यद्वा व्रतयति । व्रताद्भोजनतन्निवृत्त्योरिति णिच् । व्रतेर्णिनिः ॥

व्रतोपनयनम् । न॰ व्रतस्योद्यापने ॥

व्रतोपायनम् । न॰ वायने ॥

व्रश्चनः । पुं॰ स्वर्णादिच्छेदनद्रव्ये । पत्रपरशौ । छेनी॰ इ॰ भा॰ व्रश्च्यतेऽनेन । ओव्रश्चू॰ । करणेति ल्युट् ॥ न॰ छेदने ॥

व्राजिः । स्त्री॰ वात्यौ ॥ वातालौ ॥ व्रजति । व्रजगतौ । वसिवपीत्यादिना॰ इञ् ॥

व्रातः । पुं॰ सङ्घे । नानाजातीयानामनियतवृत्तीनामुत्सेधजीविनां सङ्घे ॥ न॰ तेषां कर्मणि ॥ व्रियते॰ नियम्यते॰ मुण्डमिश्रेत्यन्तात् व्रतशब्दात्॰ घञ् । व्रातच्फञोरितिलिङ्गाद्वृत्तिः ॥ पुं॰ समूहमात्रे ॥ व्याधादौ ॥

व्रातीनः । त्रि॰ सङ्घजीविनि ॥ शरीरायासजीविनि ॥ व्रातेन शरीरायासेन जीवति॰ न तु वृत्त्यैव भवेन । व्रातेन जीवतीति खञ् ॥

व्रात्यः । पुं॰ षोडशादिवर्षपर्यन्तमप्यसंस्कृते भ्रष्टगायत्रीके विप्रादौ । संस्कारहीने ॥ यथाह मनुः । आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्त्तते । आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥ अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः । सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥ नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् । ब्राह्मान्यौनांश्च सम्बन्धानाचरेद्ब्राह्मणः सह ॥ इति ॥ शरीरायासजीवी व्याधादिः व्रातः॰ सङ्घः । शाखादिभ्यो यः ॥ यद्वा व्रातमर्हति । दण्डादिभ्यो यत् ॥ उपनयनादिसंस्कारहीने ॥

व्रात्यस्तोमः । पुं॰ यज्ञविशेषे ॥

व्रीडः । पुं॰ लज्जायाम् ॥ भावे घञ् ॥

व्रीडनम् । न॰ लज्जायाम् ॥

व्रीडा । स्त्री॰ लज्जायाम् । त्रपायाम् ॥ गुरोश्चेच्छः । टाप् ॥

व्रीडाकरवातः । पुं॰ गुदरवे । पर्दे ॥

व्रीडितः । त्रि॰ लज्जिते ॥ भावे क्तः ॥

व्रीहिः । पुं॰ धान्यमात्रे ॥ आशुधान्ये ॥ व्रीहति॰ उपचयं गच्छति । वृहवृद्धौ । इगुपधात्कि

दितीन् । पृषोदरादि : ॥ व्रीयते । व्रीङ् गत्याम् । बाहुलकाद्धिक्वा ॥ व्रीहे : फलंवा॰व्रीहि: । बिल्वादिभ्योऽण् । फलपाकशुषामिति॰लुपि॰युक्तवद्भाव : ॥

व्रीहिक : । पुं॰ धान्यविशिष्टे ॥ ठन् ॥

व्रीहिकाञ्चन : । पुं॰ मसूरे

व्रीही । त्रि॰ व्रीहियुक्तक्षेत्रादौ ॥ व्रीह्यादिभ्यश्चेतिइनि : ॥

व्रीहिपर्णी । स्त्री॰ शालपर्ण्याम् ॥

व्रीहिमय : । पुं॰ पुरोडाशे । व्रीहेर्विकारः पुरोडाशः । व्रीहेः पुरोडाशइतिमयट् ॥

व्रीहिराजक : । पुं॰ कामलिकायाम् । कङ्गुधान्ये । चीनकधान्ये ॥

व्रीहिश्रेष्ठ : । पुं॰ शालिधान्ये ॥

व्रीह्यगारम् । न॰ कुसूले । धान्यगृहे ॥

व्रैह : । त्रि॰ व्रीहिनिर्मिते ॥

व्रैहेयम् । न॰ व्रीहिभूस्थले । धान्यसामान्यकलमादेरुत्पत्तियोग्यक्षेत्रे ॥ व्रीहिशालयोर्ढक् ॥ व्रीहिशाल्योर्ढक्

इत्यादि गौड़कुलोत्पन्ना डीचवाल प्रधानोपनाम तुलाराम मिश्रात्मज श्रीधनपति मिश्रापरनाम्ना श्रीसद्गुरु कुलावधूत श्रीपरमहंस परिव्राजकाचार्य श्री महरिहरानन्द नाथ भारती शिष्येण ब्राह्मावधूत श्री सुखानन्दनाथ परनामधेयेन विरचिते शब्दार्थचिन्तामणौ यवर्ग : समाप्तिङ्गत :

श्रीसुखानन्दनाथ तच्छिष्य श्री जगदीशमिश्रा परनाम ब्राह्मावधूत श्री जगदानन्दनाथ प्रीतिकामै :, श्रीमन्महा राजाधिराज रविकुलावतंस महोमहेन्द्र यावदार्यकुलकमल दिवाकरैः मेदपाटदेशाधीशैः अखिल भूपाल मौलिमणिभि : श्री १०८ श्रीयुत सज्जनसिंहै : संस्थापिते उदयपुरस्थ सज्जन यन्त्रालये मुख्यमन्त्रि कविराजिराज श्रीश्यामलदास प्रेरणया पण्डितवाजपेयि वंशीधरेण अक्षिसूनाजितदेव शर्मणाचशोधित: हैडजीवनराम शम्भूनाथ गुलाबराम लक्ष्मीनाथ प्राणनाथ लालसिंह प्रभृतिभिर्द्विजै : वर्णक्रमेणदृभित : सर्दारवेग यवनेन गौरीशङ्करेणच मार्गशीर्षशुक्ला चतुर्दश्यां सोमवासरे शब्दार्थ-चिन्तामणिकोशस्य यवर्गोमुद्रित :

एकोनविंशत्येकाधिकचत्वारिंशत्तमे १९४१ वैक्रमाब्दे राजधा
न्युदयपुरि सज्जनयन्त्रालये श्रीमेदपाटेश्वर
कोशधनव्ययात् वाजपेयिवंशीधरस्य
प्रबन्धतोमुद्रित :

## शवर्गप्रारम्भः



शः । पुं॰ शिवे ॥ शस्त्रे ॥ शकारे ॥

शंयुः । त्रि॰ शुभान्विते ॥ शमस्त्य-
स्य । कंशंभ्यांबभयुस्तितुतयसः
इतियुस् । सकारः पदत्वार्थः ॥
पक्षेऽनुस्वारस्यपरसवर्णेऽनुनासि-
कोयः शय्युँः ॥

शंवः । पुं॰ मुषलाग्रस्थलौहमण्डल
के ॥ वज्रे । त्रि॰ शुभान्विते ।
शाम्यत्यरीन् । अन्तर्भावितण्यर्था
च्छमेर्वन् ॥ शंशुभमस्यास्त्यस्याभेद्य
त्वादितिवा । कंशंभ्यामितिवः
। पक्षद्वयेऽपिदन्त्योष्ठ्यः । अनुस्वा
रस्यवैकल्पिकेपरसवर्णेऽनुनासि-
कोवः । शव्वँः ॥

शंवट् ॰ अन्तःकरणे ॥ आभिमुख्ये ॥

शंसन् । त्रि॰ कथयति ॥

शंसनम् । न॰ शंसायाम् ॥ सूचने ॥
कथने ॥ शंसुस्तुतौ । ल्युट् ॥

शंसा । स्त्री॰ वचसि । वचने ॥ वा
ञ्छायाम् ॥ प्रशंसायाम् ॥

शंसितः । त्रि॰ निश्चिते ॥ हिंसि
ते ॥ स्तुते ॥ अनुष्ठिते । शंसिः क्तः ॥

शंसितव्रतः । त्रि॰ अनुष्ठितव्रते ॥

शंस्ता । पुं॰ स्तोतरि ॥ होतरि ॥
शंसति । शंसु॰ । तृन्तृचौशंसि
क्षदादिभ्यः संज्ञायांचानिटाविति-
तितृन् । नप्त्रादिग्रहणस्यनियमा
र्थत्वान्नदीर्घः । शंस्तारौ॰शंस्तर



इत्यादि ॥

शंस्यः । त्रि॰ स्तुत्ये ॥

शकः । पुं॰ म्लेच्छजातिप्रभेदे । श
कदेशोद्भवेपुरस्तान्क्षत्रिये॰पश्चाद्वि
हितक्रियालोपादिनाशूद्रत्वमापन्ने
॥ यथाहमनुः । शनकैस्तुक्रिया
लोपादिमाःक्षत्रियजातयः । वृष
लत्वंगतालोकेब्राह्मणादर्शनेनच ॥
पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा
यवनाः शकाः । पारदाः पह्ल
वाश्चीनाः किरातादरदाः खशाः
॥ इति ॥ अस्यसत्ययुगेसगरेणाम
स्तकार्धमुण्डयित्वावेशान्यत्वंवेद
वाह्यत्वञ्चाऽकारि । अर्द्धंशिरः
शकानान्तुमुण्डयामासभूपतिरिति
पाद्मेस्वर्गखण्डेनिरूपितम् ॥ रू
मइतिप्रसिद्धदेशे तत्रत्याः स
र्वेशकपदवाच्याः ॥ शालिवाहन
नाम्नाप्रसिद्धनृपतिलक्षे ॥ तस्यम
रणदिनावधिवत्सरगणनाङ्कः श-
काब्द॰इतिसंज्ञयातिथिपत्रेव्यवह्रि
यते ॥

शककारकः । पुं॰ शकप्रवर्त्तिकर्त्त-
रिनृपतिवरे ॥ यथाहकालिदासः
। निहन्तियोभूतलमण्डलेशकान्स
पञ्चकोट्यन्जदलप्रमान् ५५०००-
०००० कलौ । सराजपुत्रः श
ककारकोभवेन्नपाधिराजोद्युत-
शाककार्दशा । अष्टंशतकोटिन्त

स्यादिपश्चात्कोटिः ॥ कलौ षट् शककारकाः । युधिष्ठिरो विक्रमशालिवाहनौ नराधिनाथौ विजयाभिनन्दनः । इमेनु नागार्जुनमेदिनीविभुर्बलिः क्रमात् षट् शककारकाः कलौ ॥ एषामन्तरालवर्षाण्याह । युधिष्ठिरार्द्दयुगाम्बराग्नयः ३०४४ । कलम्बरविश्च १३५ ऽभ्रखखाष्टभूमयः १८००० इहायुतं १०००० लक्षचतुष्टयं ४००००० क्रमात् महाहनागाः ८२१ इति शाकवत्सराः ॥ एषां जन्मभूमिमाह ॥ युधिष्ठिरोभूद्धि हस्तिनापुरे तथोज्जयिन्यां पुरि विक्रमाह्वयः । शालेयधाराभृति शालिवाहनः सुचित्रकूटे विजयाभिनन्दनः ॥ नागार्जुनो रोहितकेक्षितौ बलिर्भविष्यतीन्द्रो भृगुकच्छपत्तने ॥ कृतप्रवृत्तक्षदनन्तरं भवेत्तदा भविष्यन्त्यवनीभृतोऽर्कतः ॥

शकटः । पुं० न० अनसि । छकड़ा० इ० भा० ॥ गन्त्र्याम् । गाड़ी० इ० भा० । शक्नोति भारं वोढुं० जीवयितुं वा । शक् गतौ । शकादिभ्योऽटन् ॥ तिनिशवृक्षे ॥

शकटव्यूहः । पुं० शकटाकारेण बलविन्यासे । सूच्याकाराग्रः पश्चात् पृथुलः शकटव्यूहो भवति । तेन पृष्ठतो भये सति यायात्सव्यं मार्गं गच्छेत् ॥

शकटहा । पुं० श्रीकृष्णे ॥ त्रि० शकटनाशके ॥

शकटाह्वा । स्त्री० रोहिणीनक्षत्रे ॥

शकटिका । स्त्री० गन्त्र्याम् ॥

शकटी । स्त्री० सुमीनांशाक्षमविशेषे ॥ बह्वादित्वात् ङीष् ॥

शकट्या । स्त्री० शकटसङ्घे ॥ शकटानां समूहः । पाशादिभ्यो यः ॥

शकलः । पुं० न० खण्डे एकदेशे ॥ न० रोहितादिमत्स्यमांसत्वचि ॥ रागवस्तुनि ॥ बल्कले । पुं० रुद्धन्तरे । शक्यते । शक्नोतिश । शक् गतौ । शकिशम्योर्नित्कलः ।

शकली । पुं० मत्स्ये ॥ शकलं शल्कमस्यास्ति । यतइनिः ॥

शकलीकृतः । त्रि० खण्डीकृते ॥

शका । स्त्री० भाषान्तरे ॥ शक्नोतीत्यर्थे पचाद्यच् ॥

शकान्तकः । पुं० विक्रमादित्ये ॥

शकारः । पुं० राज्ञोऽनूढायाः स्त्रिया भ्रातरि ॥ यथा । मदमूर्खताभिमानी दुष्कुलतैश्वर्यसंयुक्तः । सोऽयमनूढाभ्राता राज्ञः श्यालः शकार इत्युक्तः ।

शकारिः । पुं० विक्रमादित्ये । माहसाङ्के ॥

शकुनः। पुं॰ पक्षिमात्रे ॥ पक्षिविशेषे। गृध्रे ॥ शिवप्रभेदे। उत्सवादिषु मङ्गलार्थं गेयगीतविशेषे। न॰ शुभाशुभशंसिनि निमित्ते। शुभाशुभज्ञाननिर्णयहेतौ ॥ यथा। शकुनं कथ्यते तत्तु यच्छुभाशुभसूचकम्। तथाहि। विप्राश्वेभफलान्नदुग्धदधिगोसिद्धार्थपद्माम्बरं वेश्यावाद्यमयूरचाषनकुलाः बद्धैकपश्वामिषम्। सद्वाक्यकुसुमेक्षुपूर्णकलशच्छत्राणि मृत्कन्यकारत्नोष्णीषसितोक्षमद्यससुतस्त्रीदीप्तवैश्वानराः ॥ आदर्शाञ्जनधौतवस्त्ररजको मीनाज्यसिंहासनं शावं रोदनवर्जितं ध्वजमधुच्छागास्त्रगोरोचनम्। भारद्वाजनृयानवेदनिनदा माङ्गल्यगीताङ्कुशा दृष्टाः सत्फलदाः प्रयाणसमये रिक्तो घटः स्वानुगः ॥ नरो निरूपः सितवाससश्च व्यौशाचं प्रशस्तां मधुरांश्च जल्पन्। एवंविधो योषिदपि प्रयाणे प्रवेशकाले कुरुतेऽर्थसिद्धिम् ॥ पृथ्वीपतिर्ब्राह्मणहर्षयुक्तो वेश्या कुमारी सुहृदः सुवेशाः। नार्यो नराः श्वेतवृषाऽधिरूढाः शुभाय दृष्टाः सकलोद्यमेषु। श्वेताम्बराः श्वेतविलेपनाढ्याः श्वेतां स्रजं मूर्द्धनि धारयन्त्यो। दृष्टा प्रहृष्टा यदि गौरवर्णा नारी नरैः स्यात्तदभीष्टसिद्ध्यै ॥ धूतातपत्रः शुचिशुक्लवासाः पुष्पार्च्चितचन्दनचर्च्चिताङ्गः। निःश्वासयुक्तः कृतभोजनो वा विप्रः पठन् यच्छति सर्वसिद्धिम् अभ्युपगच्छति यस्य यियासोः स्त्रीपुरुषोऽप्यथवा फलहस्तः। सर्वसमीहितसिद्धिरवश्यं तस्य नरस्य भवत्यचिरेण ॥ आदाय रिक्तकलशं जलार्थी यदि व्रजेत् कोऽपि सहाध्वगेन। पूर्णं समादाय निवर्त्तते सौ यथा कृतार्थः पथिकस्तथैव ॥ गोधाजाहकसूकराहिशशकानां कीर्त्तनं शोभनं नो शब्दो न विलोकनं च कपिऋक्षाणां शुभो व्यत्ययः। नद्युत्तारभयप्रवेशसमरे नष्टार्थसंवीक्षणे व्यत्यस्ताः शकुनान्नृपेक्षणविधौ यात्रोदितः शोभनाः ॥ वामाङ्गे कोकिला पल्ली पोतकी शूकरी रला। पिङ्गला छुच्छुन्दरी शिवा पुरुषसंज्ञिता छिक्करः पिप्पको भासः श्रीकण्ठो वानरो रुरुः। स्त्रीसंज्ञकाः काकऋक्षश्वानः स्युर्दक्षिणे शुभाः। प्रदक्षिणगताः श्रेष्ठाः यात्रायां मृगपक्षिणः। ओजा मृगा व्रजन्तोऽति धन्या वामे खरस्वनः ॥ श्यामाशिवा पिङ्गलिकान्यपुष्टा पल्ली बलाशुकरिका तथैव। छुच्छुन्दरी चापि शुभाय वामे पुन्नामधेयाः शकुनाश्च सर्वे। श्रीकण्ठछिक्काररुरुप्लवङ्गाः श्रीकण्ठभासौ भषको मयूरः। श्ये

नः समः पिप्पकायाप्रशस्ताः स्त्रीनामधेयाश्चपिदृक्षिणेन। दुष्टेश कुनेजातेयत्कर्त्तव्यंतदाह। प्राणायामांस्त्रयस्त्वस्मरन्नायायादा शाकुनेवैविरुद्धे। तिग्मानुक्तत्वंहितीयेत्‌तीयेघस्त्रप्रख्यान्नेचतुर्थेगमः स्यात्॥ घस्त्रप्रख्यान्‌हिंस तुल्यान्‌निग्मानृतीस्नानृप्राप्येत्यर्थः: शक्नोति। शक्लृ•शकेरुनोन्तोन्त्युनयङ्क्युनप्रत्ययः॥

शकुनच्च:। त्रि• शकुनज्ञातरि॥

शकुनज्ञा। स्त्री• ज्येष्ठ्याम्। पल्ल्याम्।

शकुनाहृत:। पुं• शालिविशेषे॥

शकुनि:। पुं• विहगे। पक्षिणि॥ सौबले। दुर्योधनस्यमातुले॥ करणान्तरे॥ तत्रजातस्यफलंयथा। परजनधनहर्त्ताविश्वकः क्रूरचेष्टः करधृतकरवालोव्याहतः स्वामिपक्षः। अतिशयपरदारासक्तचित्तः सरोषोभवतिशकुनिजन्मामानवः शीघ्रकर्म्मा॥ शक्नोतीत्यर्थे। शकेरुनोन्तोन्त्युनयङ्क्युनि:॥

शकुनिक:। त्रि• शकुनीकुशले॥ आकर्षादित्वात्कन्॥

शकुनिप्रपा। स्त्री• पक्षिणांपानीयशालायाम्। श्येयहे॥

शकुनी। स्त्री• श्यामाख्यविहगे॥

शकुनीश्वर:। पुं• गरुडे॥

शकुन्त:। पुं• कीटविशेषे। भासपक्षिणि॥ विहङ्गमात्रे॥ शक्नोति। शकेरुनोन्तोन्त्युनयङ्कृति• उन्त:॥

शकुन्तला। स्त्री• दुष्यन्तपत्न्यां भरतमातरि॥ निर्जनेतुवनेयस्मात्• शकुन्तैः परिरक्षिता। शकुन्तलेतिनामाऽस्याः कृतञ्चापिततोमया॥ कालिदासविरचितेनाटके॥

शकुन्तलात्मज:। पुं• भरते॥ यन्नाम्नाभारतोवर्षः सुप्रसिद्धोधरातले॥

शकुन्ति:। पुं• पक्षिमात्रे॥ शक्नोति। शकेरुनोन्तोन्त्युनयङ्कृतिशकेरुन्ति:॥

शकुन्द:। पुं• करवीरे॥

शकुल:। पुं• मत्स्यविशेषे। कलके। शउल• इ• गौ• दे• भा• प्र•॥ शक्नोतिगन्तुंवेगेन। बाहुलकाच्छकेरुलच्॥

शकुलगण्ड:। पुं• शालमत्स्ये॥

शकुलादक:। पुं• श्वेतदूर्वायाम्। गोलोम्याम्॥ शकुलस्यमत्स्यस्येवाक्षियस्याः। अक्षोऽदर्शनादित्यच्। स्वार्थेकन्॥

शकुलाक्षी। स्त्री• गण्डदूर्वायाम्॥

शकुलादनी। स्त्री• कृष्णभेदायाम्। कटुकायाम्॥ कत्सटशाकी। जलपिप्प

 

ल्याम् । काचडाट्टाम० इति०गौ० भा०प्र० ॥ मांसाम् ॥ किशुलिकायाम् ॥ शकुलं दयति । घट० । कर्मण्यिल्युट् ॥ ङीप् । गजोषणायाम् । कटफले ॥

शकुलार्भकः । पुं० गडकमत्स्ये ॥ शकुलस्यमत्स्यविशेषस्यार्भकः ॥

शकुली । स्त्री० मत्स्यविशेषे । सौरी, इ०दे०भा०प्र० । मृगाल् इ० गौड०दे०भा० ॥ शकुलीग्राहिणी हृद्यामधुरातुवरास्मृतेतिभावप्रकाश: ॥ शकुलीरोहिताकाराभूमौ प्रायश्चरती । गुर्वीपाकेचम धुराभेदिकादेपकीपर्णा तिराजबल्लभ: ॥

शकृत् । न० विष्ठायाम् ॥ शक्नोति० शक्यतेवानिस्सर्तुंवानिस्सारयितुंवा । शकेरृतिन् ॥

शकृत्करि: । पुं० वत्से ॥ शकृत्करोति । स्तम्बशकृतोरिन् ॥

शकृद्द्वारम् । न० गुदे । पायौ ॥ शकृतोद्वारम् ॥

शक्कर: । पुं० वृषे ॥ इ०हे०चन्द्र: ॥

शक्करि: । पुं० इ०चि०शेष: ॥

शक्करी । स्त्री० चतुर्दशाक्षरायांवृत्तौ । शर्कर्याम् ॥ नदीप्रभेदे ॥ मेखलायाम् ॥

शक्त: । त्रि० शक्तिविशिष्टे । समर्थे ॥ शक्ल० । कर्मणिक्त: ॥ शक्तानां

भूषणंक्षमा ॥

शक्ति: । स्त्री० अस्त्रविशेषे । सेल इ० भा०प्र० ॥ गौर्याम् । दुर्गायाम् ॥ यादेवीसर्वभूतेषुशक्तिरूपेणसंस्थिता । चैतन्यरूपायाम् । चिच्छक्तौ । निर्विषयकसंविदि ॥ सा चसर्वत्रैकरूपा ॥ यथा । एकैव शक्ति: परमेश्वरस्यभिन्नाचतुर्धा व्यवहारकाले । भोगेभवानीपुरुषेषुविष्णु: कोपेषुकालीसमरेषुदुर्गा ॥ अपिच । एकमूर्त्तिरपिभिन्नरूपिणीयाजगज्जननपालनक्षये । काच्युतेश्वरतयाविवर्त्ततेत्वस्मशक्तिमहमानतोस्मितामिति ॥ तथाहिदेवीभागवते । निर्गुणायासदानित्याव्यापिकाऽविकृताशिवा । योगगम्याखिलाधारातुरीयायाचसंस्थिता ॥ तस्यास्तुसात्त्विकीशक्तीराजसीतामसीतथा । महालक्ष्मी: सरस्वतीमहाकालीतिता: स्त्रिय: ॥ तासांतिसृणांशक्तीनान्देहाङ्गीकारलक्षण: । सृष्ट्यर्थंसमाख्यात: सर्ग: शास्त्रविशारदैरिति । साचसच्चिदानन्दब्रह्मरूपिणी । तस्यायासात्त्विकीशक्तिस्तयाराजसीतथातामसीचयाशक्ति: तत्तच्छक्तिविशिष्टंयत्परम्ब्रह्मेत्यर्थ: । तन्महालक्ष्म्याद्यायाः प्रसिद्धा: स्त्रियस्ता:स्त्रियोभवन्ति । साम्यावस्था

त्मकब्रह्मरूपिणीमूलदेवतातद्दे-
कैकगुणविशिष्टब्रह्मरूपिण्योमहाल
क्ष्म्यादयोदेवताइतिभावः अतए
वश्रुत्यागमपुराणादिष्वासांसच्चिदा
नन्दरूपत्वमुक्तं नतुकेवलजडशक्ति-
रूपत्वं सृष्ट्यर्थंजगत्सर्जनाययस्ता-
सांतिसृणांशक्तीनांदेहाङ्गीकारोदे-
हधारणंतल्लक्षणोयः सर्गः सोऽ
त्रशास्त्रविशारदैः पण्डितैः सर्ग
शब्देनसमाख्यातइत्यर्थः ॥ अपि
च । चौराय वष्टिप्रमाणानिपठिता
निसुपण्डितैः । प्रत्यक्षानुमा
नञ्चशाब्दञ्चैवतृतीयकम् । चत्वा
र्येवेतरेप्राहुरुपमानयुतानिच ॥ इ
तरेनैयायकैकदेशिनः । अर्थाप-
त्तियुतान्यन्येपञ्चप्राहुर्मनीषिणः
॥ सम्पौराणिकाश्चैवप्राबदन्तिमनी
षिणः । पूर्वोक्तानिपञ्चसाक्षिरूपं
षष्ठम् । एतच्च सप्तममितिसप्तप्रमा
णानि । एतैः प्रमाणैर्दुर्ज्ञेयंय
द्ब्रह्मरूपमद्भुतम् । एतैरनेकधा
भेदभिन्नैः प्रमाणैर्दुर्ज्ञेयंयत्परंब्रह्म
तदेवपरमंमुख्यंजगत्कारणमस्ती-
तिवेदान्ताचार्याहुरितिशेषः । एव
मेतानिसर्वमतानिवेदे एकस्मिन् ।
तत्रैकंमतंमुख्यमितिविमर्शोदुर्घट
एव । तथापियच्छ्रुतिवाक्यानांपर
स्पराविरोधःस्तोपक्रमोपसंहारादि
लिङ्गैःश्रुतितात्पर्यंनिर्णीततात्पर्य



वतोश्रुतिः प्रबलेतिसिद्धान्तउत्तर
मीमांसायामुक्तः । ननुतेनसिद्धा
न्तेनब्रह्मैवजगत्कारणमितिसिद्धमे
तिचेत्तत्रानुमानेनापि नश्रुतिवा
क्येनच । यद्ब्रह्म किं सशक्तिकं जगत्का
रणमुतशक्तिरहितमितिविचारः
कर्तव्यइत्याह वितर्कइति । वित
र्कश्चात्रकर्तव्याबुद्ध्याचैवागमेनच ।
निश्चयात्मिकयायुक्त्याविचार्यचपु
नः पुनः ॥ वितर्कोऽनुमानमित्य
र्थः । बुद्ध्येत्यस्यार्थोनिश्चयात्मि
कयायुक्त्येति । प्रत्यक्षतस्तुविज्ञानं
चिन्त्यंमतिमतासदा । दृष्टान्तेना
पिसततंशिष्टमार्गानुसारिणा ॥
किञ्चमतिमताप्रत्यक्षतोयद्विज्ञानं ।
तदपिचिन्त्यंग्राह्यम् । प्रमाणत्वेने
त्यर्थः । शिष्टमार्गः शिष्टाचारस्त
दनुसारिणादृष्टान्तेन । व्याप्तिप्रदर्शके
णापिसततमनुमेयमितिशेषः ॥ तमे
वदृष्टान्तमाह । वि. सोपीति । वि
द्वांसोपिवदन्त्येवं पुराणैःपरिगीयते ।
दुर्लक्ष्या सृष्टिशक्तिश्चदृष्टौपालनशक्ति
ता ॥ हरेसंहारशक्तिश्चसूर्येशक्तिः
प्रकाशिका । धराधरणशक्तिश्चशेषे
कूर्मेतथैवच ॥ साद्याशक्तिः परि
णतासर्वस्मिन्याप्रतिष्ठिता । दाह
शक्तिस्तथावह्नौसमीरेप्रेरणात्मिका ॥
साद्येति । यासर्वस्मिन् । आद्याश
क्तिरस्तिसाशक्तिः परिणता । तत्र

शक्तिः

क्तिरूपेणित्यर्थः ॥ शिवोपिशवतां याति कुण्डलिन्याविवर्जितः । श क्तिहीनस्तुयः कश्चिदसमर्थः स्मृ तोवुधैः ॥ एवं सर्वभूतेषुस्थाव रेषुचरेषुच । ब्रह्मादिस्तम्बपर्यन्तं ब्रह्माण्डेऽस्मिन् महातपाः ॥ शक्ति हीनन्तुनिन्द्यंस्याद्वस्तुमात्रंचराचर- म् । अशक्तः सर्व्वविजयेगमनेभो जनेतथा ॥ तथाविद्वांसोवदन्तीत्य न्वयः ॥ एवं सर्वगताशक्तिः सा ब्रह्मेतिविविच्यते । सोपास्याविविधैः सम्यक् विचार्यासुधियासदा ॥ एवमिति । यथासर्वपदार्थ स्यावच्छेदेनशक्तिमत्त्वव्याप्तिर्गृहीता । तथाब्रह्मणोपिपदार्थत्वावच्छिन्नत्वे नशक्तिरस्ति । साचशक्तिः सामर्थ्यरूपा । नस्वाश्रयाद्भिन्नत्वेनभा सते । अग्निशक्त्यादावदृष्टत्वात् । । किन्त्वभिन्नैव । तदेवदर्शयितुमे वंसर्वगताशक्तिः साब्रह्मेतिविवि च्यते । इत्यनेनस्वाश्रयाद्भेदएवोक्तः तथाचश्रुतिप्रतिपाद्यं ब्रह्म । मा- यापशामारसिंहोतिमतसकार्यक्क रणस्वविद्यति । पराऽस्यशक्तिर्विविधै वश्रूयते । इत्यादिश्रुतिभिरनुमाना दिभिश्चशक्तिमेवजगत्कारणमि तितदेवोपास्यमितिभावः । एतेन याशक्तिरिच्छोत्तरं ब्रह्मसामर्थ्यरू पाशक्तिरस्तीतिबोधितम् । सोयाऽस्ति । यतोब्रह्माभिन्नानशक्तिस्ततस्त स्याभजने । अग्निशक्त्यादौसेऽग्नौ होमस्यार्थसिद्धत्ववद्ब्रह्मणउपासनं जातमेवेतिसर्वकारणभूतासैव शक्तिः साम्याश्चर्यात्मकोपास्येत्य र्थः । विष्णौचसात्त्विकीशक्तिस्तया होनोप्यकर्म्मकृत् । ब्रह्मणि राजसी शक्तिर्यया होनोऽसृष्टिकृत् ॥ शि वेचतामसीशक्तिस्तयासंहारकारकः । इत्यूह्यंमनसासर्वं विचार्यचपुनः पुनः ॥ ब्रह्मविष्णुरुद्रादिषुप्रसिद्धे ष्वन्वयव्यतिरेकं दर्शयन्तेषामेकैक गुणवत्तयान्यूनत्वेन । नोपास्यत्वं श्रीभगवत्पितयेतिदर्शयति [illegible] ष्णोरिति ॥ शक्तिः करोति [illegible] सर्वं पालयत्यखिलम् । [illegible] हरत्येषाजदेगतच्चराचरम् । [illegible] नेश्वरः शक्तोनब्रह्मानचपावकः । न सूर्यो वरुणः शक्ताः स्वेस्वेकार्ये क थञ्चन ॥ तयायुक्ताहिकुर्वन्तिस्वानि कार्याणितेसुराः । सेवकारणकार्ये षुप्रत्यक्षेणावगम्यते ॥ सगुणानिर्गु णासातुद्विधाप्रोक्तामनीषिभिः । सगुणारागिभिः सेव्यानिर्गुणातु विरागिभिः ॥ सगुणा । एकैकगुण विशिष्टा । निर्गुणासाम्यावस्थोपाधि कब्रह्मरूपेत्यर्थः ॥ धर्मार्थकाममो क्षाणांस्वामिनीसानिराकुला । ददा तिवांछितान् कामान् पूजिताविधि

पूर्वकम् ॥ न जानन्ति जना मूढास्तां सदा मायया वृताः । जानन्तोऽपि नराः केचिन्मोहयन्ति परानपि ॥ पण्डिताः स्वोदरार्थं वा पाखण्डानि पृथक् पृथक् । प्रवर्त्तयन्ति कलिना प्रेरिता मन्दचेतसः ॥ कलावस्मिन् महाभाग नानाभेदसमुत्थिताः । नान्ये युगे तथा धर्मा वेदबाह्याः कथञ्चन ॥ विष्णुश्चरत्यसावुग्रं तपो वर्षाण्यनेकशः । ब्रह्मा हरस्तथैवेदं ध्यायन्तः कामपि ध्रुवम् ॥ कामयानाः सदा कामं सेवयः सर्वदैव हि । यजन्ति यज्ञान् विविधान् ब्रह्मविष्णुमहेश्वराः ॥ यदि ब्रह्मादयो मुख्यास्ते स्वाधीनेऽयं किमिति भजेयुः । भजन्ति च । तस्मान्न ते मुख्याः । किन्तु पराशक्तिरेवेति भावः ॥ सैव शक्तिः परा देवी ब्रह्माख्या परमात्मिकाम् । ध्यायन्ति मनसा नित्यं नित्यां मत्वा सनातनीम् ॥ परं ब्रह्मैव तस्याः रूपं नान्यमतोत्यभिप्रायेण ब्रह्मात्मिकामित्युक्तम् । स्पष्टीकृतश्चैतदस्माभिस्तत्पीठवासे ॥ तस्माच्छक्तिः सदा सेव्या विद्वद्भिः कृतनिश्चयैः । निश्चयः सर्वशास्त्राणां ज्ञातव्यो मुनिसत्तमाः । कृष्णाच्छ्रुतं मया चैतत् तेन ज्ञातं नारदात् । पितुः सकाशात्तेनापि ब्रह्मणा विष्णुना श्रुतः ॥ न श्रोतव्यं न मन्तव्यमन्येषां वचनं बुधैः । शक्तिरेव सदा सेव्या विद्वद्भिः कृतनिश्चयैः ॥ यथा गणशरीरप्रविष्टस्य चैतन्यस्य गणपतिव्यवहारः । तथा प्रथमतो मायाशरीरप्रविष्टस्य चैतन्यस्य मायाशक्तिरिति व्यवहारः तदनन्तरं गुणोत्पादादेकैकगुणविशिष्टमायाशवलब्रह्मणः ब्रह्मविष्णुरुद्रमूर्त्यादिव्यवहारः । तथा च सर्वकारणं ब्रह्म मायाशक्तिसंवृतमेव भवतीति मायाशक्तिदेवी भगवतीत्यादिमुख्यशब्दैरेवोपास्या ॥ शक्तिरेवेति ॥ प्रत्यक्षमपि दृष्टं मम तातस्य विचेष्टितम् । अतः सर्वेषु भूतेषु ज्ञातव्या शक्तिरस्ति हि ॥ इति श्रीदेवीभागवते प्रथमस्कन्धे अष्टमोऽध्यायः ॥ या शक्तिः परमात्मा सोऽयं योऽसौ सा परमात्मता । अन्तरं मे तयोः कोऽपि सूक्ष्मं वेद च नारदेति तृतीयस्कन्धे ७ऽध्यायः ॥ इति ॥ उत्साहादौ । नीतिवेदिनां प्रभावोत्साहमन्त्रजास्तिस्रः ॥ तत्र प्रभुत्वसाधकत्वात् कोशदण्डौ प्रभुशक्तिः । विक्रमे बलशक्त्या विस्फुरणमुत्साहशक्तिः । सन्ध्यादीनां सामादीनाञ्च यथावस्थानं मन्त्रशक्तिः ॥ बले । सत्त्वे । शौर्ये । पराक्रमे ॥ वृद्धिसामर्थ्ये ॥ स्त्रियाम् । योषिति । नार्याम् ॥ प्रकृतौ ॥ लक्ष्म्याम् ॥ अस्मात्पदा

। व्यक्तीऽन्नयाष्टेयंमिश्वः शब्दश्चत्त्रयइति । ईश्वरसङ्केत : शक्तिस्तयाऽर्थबोधकंपदंशाब्दकम् । यथागेत्वादिविशिष्टबोधकंगवादिपदं•त त्त्राध्येयंगवादिर्वाच्यः सएवमुख्यार्थ इत्युच्यते । समर्थे ॥ शक्त्•। श क्तिसडोर्डितियत्साध्ये । शक्तनीये॥ शक्यतावच्छेदकम् । न० शक्यां शेभासमानार्थे ॥

शक्रः। पुं०इन्द्रे। देवराजे ॥ कुटजवृक्षे ॥ अर्जुनपादपे ॥ शक्नोतिदैत्यान्नाशितुम् । शक्॰ । स्फायितञ्चीतिरक्॥ ज्येष्ठानक्षत्रे ॥

शक्रक्रीडाचलः । पुं० सुमेरुपर्वते ॥

शक्रगोपः । पुं० इन्द्रगोपकीटे ॥

शक्रजः । पुं० काके । अवके । गूढमैथुने । इन्द्रपुत्रे ॥ शक्राज्जातः । जनी० डः ॥

शक्रजित् । पुं० इन्द्रजिति । रावणपुत्रे । शक्रमजैषात् । जि० । सत्सूद्विषेत्यादिनाक्विप् ॥

शक्रधनुः। न० शक्रायुधे। शक्रस्यधनुः ॥

शक्रध्वजः । पुं० इन्द्रध्वजे । उत्सवविशेषे ॥ चतुरस्रंध्वजाकारंराजद्वारेप्रतिष्ठितम् । आहुः शक्रध्वजंनाम पौरलोकसुखावहम् ॥ विशेषोदेवीपुराणे•वाराहीसंहितादिषुचद्रष्टव्यः ॥ शक्रस्यध्वजइव ॥

शक्रनन्दनः । पुं० जयन्ते ॥ अर्जुने वालिनि । काके ॥ शक्रस्यनन्दनः

शक्रपर्यायः । पुं० कुटजवृक्षे ॥ शक्रःपर्यायोऽस्य

शक्रपादपः । पुं० देवदारुवृक्षे शक्रस्यपादपः ॥ कुटजे ॥

शक्रपुष्पिका । स्त्री० शक्रपुष्प्याम् ॥

शक्रपुष्पी । स्त्री० अग्निशिखावृक्षे ॥ शक्रोऽर्जुनतरुः पुष्पमस्याः । शक्रशब्दस्तत्पुष्पेलाक्षणिकः । पाककर्णेतिङीष् ॥

शक्रभवनम् । न० स्वर्गे ॥

शक्रभित्•द् । पुं० इन्द्रजिति । रावणौ ॥ शक्रमभैत्सीत् । भिदिर्• । क्विप् ॥

शक्रभुवनम् । न० नाके । सुरलोके ॥ शक्रस्यभुवनम् ॥

शक्रभूभवा । स्त्री० इन्द्रवारुण्याम् ॥

शक्रमाता । स्त्री० भार्ग्याम् ॥ इन्द्रजनन्याम् ॥

शक्रमातृका।स्त्री० इन्द्रध्वजाङ्गयष्टिविशेषे ॥

शक्रमूर्द्धा । पुं० वल्मीके ॥ इ०वि० शेष ॥

शक्रवल्ली । स्त्री० इन्द्रवारुण्याम् ॥

शक्रशाखी । स्त्री० इन्द्रवारुण्याम् ॥

शक्रशाखनः । पुं० मेघे ॥

शक्रबीजम् । न० इन्द्रयवे ॥ शक्रसंज्ञकंबीजम् ॥

शक्रशरासनम् । न० इन्द्रधनुषि ॥

शक्रशाखी । पुं॰ कुटजवृक्षे ॥ शक्रास्य: शाखी ॥

शक्रशाला । ) स्त्री॰ प्रतिश्रये । स
शक्रशालिका । )

भायाम् ॥

शक्रशिर: । न॰ वल्मीके ॥ इन्द्रमस्तके ॥

शक्रसारथि: । पुं॰ मातली ॥

शक्रसुत: । पुं॰ जयन्ते । वालिवानरे ॥ अर्जुने ॥ काकी । शक्रस्य सुत: ॥

शक्रसुधा । स्त्री॰ कुन्दुरी ॥

शक्रसृष्टा । स्त्री॰ हरीतक्याम् ॥

शक्राख्य: । पुं॰ पेचके । त्रि॰ इन्द्रनामके ॥

शक्राणी । स्त्री॰ इन्द्राण्याम् ॥ शक्रमाणतिकीर्त्तयति । अणशब्दे । कर्मण्यण् । टिड्ढेतिङीप् ॥

शक्रायुधम् । न॰ इन्द्रायुधे ॥ अस्य सम्भवादिकंयथावाराह्याम् सूर्यस्य विविधवर्णा: । पवनेनविघट्टिता: करा: साभ्रे । वियतिधनु:संस्थानायेदृश्यन्तेतदिन्द्रधनु: ॥ केचिदनन्तकुलोरगनि: श्वासोद्भूतमाहुराचार्या: । तद्यायिनांन्रपाणामभिमुखमजयावहंभवति ॥ अच्छिन्नमवनिगाढंद्युतिमत्स्निग्धंघनंविविधवर्णम् । द्विरुदितमनुलोमञ्चप्रशस्तमम्भ: प्रयच्छतिच ॥ विदिग्दिगुद्भूतं दिक्पतिनाशंचव्यभ्रजंमरककारि । पाटलपीतकनीलै: शस्त्राग्निच्युत्कृतादोषा: ॥ जलमध्येऽनावृष्टिर्भुविसस्यवधस्तरौस्थितेव्याधि: । वल्मीकेशस्त्रभयंनिशिसचिववधायधनुरैन्द्रम् ॥ वृष्टिंकरोत्यवृष्ट्यांवृष्ट्यांवृष्टिंनिवारयत्यैन्द्र्याम् । पश्चात्सदैववृष्टिंकुलिशभृतश्चापमाचष्टे ॥ चापंमघोन: कुरुतेनिशायामाखण्डलायांदिशिभूपपीडाम् । याम्यापरोदक्प्रभवंनिहन्यात्सेनापतिंनायकमन्त्रिणौच ॥ निशिसुरचापंसितवर्णाद्यंजनयतिपीडांद्विजपूर्वाणाम् । भवतिचयस्यांदिशितद्दृश्यंनरपतिमुख्यंनचिराद्धन्यात् ॥ इति ॥

शक्राशन: । पुं॰ कुटजवृक्षे । न॰ भङ्गायाम् । विजयायाम् । संविदि ॥ अस्यगुणायथा । शक्राशनन्तुतीक्ष्णोष्णंमोहकृत्कुष्ठनाशनम् । बलमेधाग्निकृत्श्लेष्मदोषहारिरसायनम् ॥

शक्राह्व: । पुं॰ इन्द्रयवे ॥

शक्रोत्थानम् । न॰ शक्रध्वजोत्सवे ॥

शक्रोत्सव: । पुं॰ ध्वजोत्थाने । इन्द्रस्योत्सवे ॥

शक्ल: । त्रि॰ प्रियंवदे ॥ शक्नोति । शक्लृ॰ । सृशक्यन्विभ्य: क्ल: ॥

शक्वा । पुं॰ हस्तिनि ॥ शक्ते ॥ शक्नोति । शक्लृ॰ । अन्मामदिपद्यर्त्तिपॄशकिभ्योवनिप् ॥

शक्वरः। पुं० वृषे।

शक्वरी। स्त्री० चतुर्द्दशाक्षरायां छन्दो जातौ॥ नदीविशेषे॥ मेखलायाम्॥ सामविशेषे। नित्यं बहुवचनान्तोऽयम्। शक्वर्य इति। महानाम्नीषु ऋक्षु शक्वर्यो गीयन्ते। शक्वरी। अङ्गुलिरिति मन्त्रव्याख्यानम्। वनौर चेतिक्कौत्रौ॥

शङ्कः। पुं० शकटवाहकवृषे। स्कन्धवाहे। अवधूर्त्ते॥ हू० श० ली॥

शङ्कनकः। पुं० चुद्रशङ्खे॥ शङ्कते। शङ्कि शङ्कायाम्। कर्त्तरि० अनुदात्तेतश्च हलादेरिति युच्। संज्ञायां कन्॥

शङ्करः। पुं० सदाशिवे॥ एकादशरुद्राणां मध्ये भगवद्विभूतौ॥ शं सुखं करोति। शमिधातोः संज्ञायामिति अच्॥ यथा। शङ्करोमि सदाध्यानात् परमं यन्निरामयम्। भूतानामसकृद्यस्मात् तेनाहं शङ्करः स्मृतः॥ इति स्कान्दे॥ त्रि० कल्याणकरे॥

शङ्कराचार्य्यः। पुं० स्वनामप्रसिद्धे अद्वैतवादिनि वेदान्तभाष्यकर्त्तरि नरावतारे विश्वेश्वरे॥ यथाहुः। सत्सम्प्रदायप्रथमायतिभ्यो शिष्यैश्चतुर्भिः सहयोगतीर्थैः। उत्तोद्धरन् सङ्गमतन्त्रराजेशोशङ्कराचार्य्य गुरुं तमीडे॥



शङ्करावासः। पुं० कर्पूरप्रभेदे॥ कैलासे॥

शङ्करावाससंज्ञः। पुं० कर्पूरे॥

शङ्करी। स्त्री० मञ्जिष्ठायाम्॥ पार्वत्याम्॥ श्रीगिरौ शङ्करी ख्याता इति देवीगीता॥ अप्येश्वराधिवासिन्यां सम्बायाम्॥ शम्याम्॥

शङ्कव्यम्। न० शङ्कुपर्योगिदारुणि॥ शङ्कवे हितम्। उगवादिभ्यो यत्॥

शङ्का। स्त्री० त्रासे॥ वितर्के॥ इति शब्दार्णवः॥

शङ्कितः। त्रि० भीते॥ वितर्किते। संशययुक्ते॥ अविश्वस्ते॥ शङ्का सञ्जाताऽस्य। तारकादित्वादितच्॥ पुं० चोरकनाम्नि गन्धद्रव्ये। दुष्पत्रे॥

शङ्कितवर्णः।<br>शङ्कितवर्णकः। } पुं० चौरे॥

शङ्कुः। पुं० सङ्ख्याविशेषे॥ यथा। १••••••••••••••॥ अस्त्रप्रभेदे। दीर्घायुधे। कुन्ते। शल्ये। यादोभेदे। शङ्कोचमत्स्ये॥ कीले॥ दीपसूर्य्यच्छायापरिमाणार्थं काष्ठादिनिर्म्मितक्रमेण सूक्ष्माये द्वादशाङ्गुलपरिमिते कीलके॥ ईशे। शम्भौ॥ मेढ्रे॥ कलुषे॥ राक्षसे॥ नखीनामगन्धद्रव्ये॥ द्वादशाङ्गुलपरिमाणे॥ स्थाणौ। शा

खापचचरिततरौ ॥ पर्णमाधि ॥ पनमिरामाधि ॥ शङ्कतेऽस्मात् । शकि० । खरुशङ्कपीयुमिलङ्कमि ख्विलिकुप्रत्ययान्तः साधु: ॥

शङ्खकर्णः । पुं० गर्दभे ॥ सिद्धमच्या मविशेषे ॥ शङ्खकर्णध्वनिः प्रो क्तो सिद्देवीगीता ॥

शङ्खकर्णी । स्त्री० औषधिप्रभेदे । पा काकर्ण्यादिमाङीष् ॥

शङ्खधि : पुं० शङ्खमत्स्ये ॥

शङ्खतरु : । पुं० शालवृक्षे ॥

शङ्कुर : त्रि० भयदे ॥ त्रासदायि नि ॥

शङ्खला । स्त्री० उत्पलपर्णिकायाम्। पूमकर्त्यन्याम् । सरीता०इ०भा० प्र : ॥ शङ्कतेऽस्मा: । शकि० । बा हुलकादुलच् । टाप् ॥

शङ्खवृक्ष : । पुं० शालवृक्षे ॥

शङ्खशिरा : । पुं० दानवविशेषे ॥

शङ्खश्रुति : । पुं० पातालाधिपतिदै त्यविशेषे ॥

शङ्कोच : । पुं० शङ्कुमत्स्ये । शांकी च० इ०गी०दे०भा०प्र० ॥

शङ्कोचि : । पुं० शङ्खकोचमत्स्ये ॥

शङ्ख : । पुं० अलिकास्थ्नि । भा लाऽस्थनि ॥ कुवेरस्यनिधिप्रभेदे ॥ नखीनामनिगन्धद्रव्ये । शुक्तौ । कीलहले ॥ कर्णसमीपाङ्गनि ॥ अष्टनागनायकान्तर्गतनागविशेषे ॥ हस्तिदन्तमध्ये ॥ दशनिखर्वसङ्ख्या याम् । लक्षकोटौ ॥ धर्मशास्त्रप्रयो जकमुनिविशेषे ॥ रणवाद्यविशेषे । मात्रामात्रे० । ०॥ पुं०न०कस्वौ ॥ चर्चौभवे । पावनध्वनौ । अन्त : कुटिले । महानादे ॥ अस्योत्प त्यादिकं ब्रह्मवैवर्ते भागवतेब्रह्मखण्डे च तत्र च यथा । षस्थिभि: शंखचूडस्य शङ्खजातिर्बभूव ह । नानाप्रकाररू पेण शश्वत्पूता सुरार्चने ॥ प्रशस्तं श ङ्खतोयस्य देवानांप्रीतिदम्परम् । ती र्थतोयस्वरूपञ्च विना शंभुना ... [illegible] ॥ शङ्ख... [illegible] : सु संस्थि... [illegible] ...र्थेषु य : ... [illegible] शंखो हरि... [illegible] ... शंखस्ततो हरि : । तत्रैव वसतेलक्ष्मीर्दूरीभूतममङ्ग लम् ॥ स्त्रीणाञ्च शंखध्वनिभि : शू द्राणाञ्च विशेषत : । भीता रुष्टा या तिलक्ष्मी: स्थलमन्यत्स्थलात्त्रत इति ॥ भूताद्यहङ्कारात्मकेपाञ्चज न्ये ॥ यथा ॥ भूतादिमिन्द्रिया दिञ्चद्विधाहङ्कारमीश्वर : । बिभ र्ति शङ्खरूपेण शार्ङ्गरूपेण चस्थितमि तिविष्णुपुराणम् ॥ शङ्कनति० जन यति । खनुअवदारणे । अन्येभ्यो पीतिड : ॥ शङ्खञ्चस्येतिवा ॥ शा म्यतिचलक्ष्मीर्वा । शमु० । अन्त र्भावितण्यर्थ : । शमे : ख : ॥

शास्यत्यनेनवा ॥ असुरविशेषे ॥
शङ्खकः । पुं० शिरोरोगविशेषे । त
ल्लक्षणादिर्यथा । पित्तरक्तानिला
दुष्टाः शङ्खदेशेविमूर्च्छिताः । तो
व्ररुग्दाहरोगंहिशिरोर्थंकुर्वन्निदारुण
म् ॥ सशिरोविषवद्वेगान्निरुध्याशु
गलंतथा । त्रिरात्राज्जीवितंहन्ति
शङ्खकोनामनामतः । त्र्यहाज्जीव
वतिभैषज्यंप्रत्याख्येयस्यकारयेत् ।
पित्तरक्तानिला० अत्रकफोऽपिबो-
ध्यः । कृतानुतापः कफपित्तर
क्तै रितिसुश्रुतवचनात्। विमूर्च्छि
ताः प्रवृद्धाः । त्रिरात्रात्त्रिरा
त्रमध्येमारयति । अत्रचिकित्सा
शिरोरोगेभावप्रकाशेद्रष्टव्या । न०
बलये । पुं० न० कम्बौ ॥
शङ्खकारः । पुं० शुद्रागर्भेविश्वकर्म्मो
रसजाते० वर्णसङ्करजातौ । शा
ङ्खिके । शांखारी० इतिभा० ॥ श
ङ्खङ्करोति । डुकृञ्० कर्म्मण्यण् ॥
शङ्खचरी । स्त्री० ललाटिकायाम् ॥
शङ्खचरति । चर० । पचाद्यौचर
डित्युक्तेर्ङीप् ॥
शङ्खचर्च्ची । स्त्री० ललाटिकायाम् ॥
शङ्खचिल्लः । पुं० कम्बुतायिनि ॥
शङ्खचूडः । पुं० दैत्यविशेषे ॥
शङ्खचूर्णम् । न० शङ्खजातचूर्णे ॥
शङ्खचूर्णंकटुक्षारमुष्णंक्रिमिहरं-
परम् ॥

शङ्खजः । पुं० कपोतडिम्बवद्दृश्यम
णायाम् ॥ त्रि० शङ्खजातवस्तु
नि ॥
शङ्खद्रावी । पुं० अम्लवेतसे ॥
शङ्खधरा । स्त्री० हिलमोचिकायाम्॥
शङ्खधारी । पुं० छन्दोविशेषे ॥ ध्व
जानन्दकर्णाः षडेवाभवर्णाः ।
बुधानन्दकारोभवेच्छङ्खधारी ॥ य
था । स्फुरद्दीपनारोपरीरम्भकारी
। हरिःपातुवृन्दावनाभ्यर्णचारी ॥
शङ्खध्मः । पुं० शङ्खवादके । शाङ्खि
के ॥
शङ्खध्माः । पुं० शाङ्खिके ॥
शङ्खनखः । पुं० क्षुद्रशङ्खे ॥ शङ्ख
स्यनखइव । शङ्खनतिवा । बहु
लमन्यत्रापीतियुचल्युडवा । स्वा
र्थेकः । पृषोदरादिः नखीनाम
गन्धद्रव्ये । हट्टविलास्याम् ॥
शङ्खनखा । स्त्री० शङ्खनख्याम् ॥ हि
धाशङ्खनखास्या‌ऽन्याशुक्त्याख्यावद
रीच्छदः ॥ इतिरत्नमाला ॥
शङ्खपुष्पी । स्त्री० मङ्गल्यकुसुमायाम्
॥ शङ्खपुष्पीतुशङ्खाह्वामङ्गल्यकुसु
मापिच । शङ्खपुष्पीसरामेध्यापुष्या
मानसरोगहृत् । रसायनीकषायो
ष्णास्मृतिकान्तिबलाग्निदा॥ दोषा
पस्मारभूतास्रक्कुष्ठक्रिमिविषप्रणु-
त् । इतिभावप्रकाशः ॥ पाकक
र्णेतिङीष् ॥

शङ्खप्रस्थ : । पुं॰ चन्द्रस्यचिह्ने ॥
शङ्खभृत् । पुं॰ विष्णौ ॥ भूता
हङ्कारात्मकं पाञ्चजन्याख्यं शङ्खं
बिभर्त्ति । डुभृञ् ॥ क्विप् ।
तुक् ।
शङ्खमुख : । पुं॰ कुम्भीरे ॥
शङ्खमूलम् । न॰ मूलके ॥
शङ्खसञ्ज्ञा । स्त्री॰ याचायोगान्त
रे । यथा । स्वांशसंस्थे बुधेलग्ने
शुक्रे वादित्यपूजिते । शङ्खसंज्ञा
ह्वयेयोगेयातु : कीर्त्तिप्रद :
सदा ॥
शङ्खसेन : । पुं॰ चित्रगुप्तात्मजेका
यस्थविशेषे ॥
शङ्खाख्य : । पुं॰ नखनाम्नि ॥
शङ्खाक्षुकम् । न॰ श्वेततायुक्तेक
न्दविशेषे
शङ्खाह्वा । स्त्री॰ शङ्खपुष्प्याम् ॥
शङ्खिका । स्त्री॰ तृणविशेषे चो
रायाम् । चोरपुष्पी॰ इ॰गौ॰
भा॰ ॥
शङ्खी । पुं॰ हरौ ॥ समुद्रे ॥
त्रि॰ शङ्खवति ॥
शङ्खिनी । स्त्री॰ चोरपुष्प्याम् ।
श्वेतपिन्याम् । शांखाहुली॰ इ॰
भाषा ॥ श्वेतचुक्रायाम् । वधूभे
दे । चवलाप्रभेदे ॥ तीर्थविशेषे
॥ बुद्धशक्तिविशेषे ॥ श्वेतपुन्नागे ॥
यवतिक्तायाम् ॥ श्वेतवन्दायाम् ॥

शङ्खद्रव्याम् ॥ चतुर्विधस्त्रीमध्ये
स्त्रीविशेषे ॥ तल्लक्षणंयथा । दी
र्घासुदीर्घनयनावरसुन्दरीयाकामो
पभोगरसिकागुणशीलयुक्ता । रे
खात्रयेणचविभूषितकण्ठदेशासम्भो
गकेलिरसिकाकिलशङ्खिनीसा ॥
शशकःपद्मिनीतुष्टाचित्रिणीरमतेमृ
गम् । वृषभंशङ्खिनीतुष्टाहस्ति
नीरमतेहयम् ॥ पद्मिनीपद्मगन्धा
चमीनगन्धाचचित्रिणी । शङ्खिनी
क्षारगन्धास्यान्मदगन्धाचहस्तिनी ॥
नाडीविशेषे ॥ गान्धार्यास्सरस्व
त्या : स्थितामध्येचशङ्खिनी ॥ स
शङ्खा : सन्त्यस्या : शङ्खाका
रपुष्पत्वात् । घतइनि : ॥
शङ्खिनीफल : । पुं॰ शिरीषवृक्षे ॥
शङ्खिनीवास : । पुं॰ शाखोट-
वृक्षे ।
शचि । स्त्री॰ शच्याम् । इन्द्राण्याम्
॥ शचति । शचव्यक्तायांवाचि । स
र्वधातुभ्यइन् ॥ स्त्रीकरणाकारे ॥
शची । स्त्री॰ पुलोमजायाम् । पौलो
म्याम् । इन्द्राण्याम् । शचति॰
व्यक्तंवदति । शच॰ इन्नन्तात्॰
कृदिकारादितिङीष् ॥ शतावर्या
म ॥
शचीपति : । पुं॰ इन्द्रे ॥ शच्या :
पति : ॥
शचीश : । पुं॰ इन्द्रे ॥

शाम्यत्यनेनवा ॥ असुरविशेषे ॥

शङ्खकः । पुं॰ शिरोरोगविशेषे । तल्लक्षणादि यथा । पित्तरक्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः । तीव्ररुग्दाहरागं हि शोथं कुर्वन्ति दारुणम् ॥ स शिरो विषवद्वेगान्निरुध्याशु गलं तथा । त्रिरात्राज्जीवितं हन्ति शङ्खको नाम नामतः । त्र्यहाज्जीवति भैषज्यं प्रत्याख्येयस्य कारयेत् । पित्तरक्तानिला॰ अत्र कफोऽपि बो-ध्यः । कृतानुतापः कफपित्तरक्तैरिति सुश्रुतवचनात् । विमूर्च्छिताः प्रवृद्धाः । त्रिरात्रात् त्रिरात्रमध्ये मारयति । अस्य चिकित्सा शिरोरोगे भावप्रकाशे द्रष्टव्या ॥ न॰ वलये ॥ पुं॰ न॰ कम्बौ ॥

शङ्खकारः । पुं॰ शूद्रागर्भे विश्वकर्म्मरसजाते॰ वर्णसङ्करजातौ । शाङ्खिके । शांखारी॰ इति भा॰ ॥ शङ्खं करोति । डुकृञ्॰ कर्म्मण्यण् ॥

शङ्खचरी । स्त्री॰ ललाटिकायाम् ॥ शङ्खं चरति । चर॰ । पचादौ चरडित्युक्तेर्ङीप् ॥

शङ्खचर्च्ची । स्त्री॰ ललाटिकायाम् ॥

शङ्खचिल्लः । पुं॰ कम्बुतायिनि ॥

शङ्खचूडः । पुं॰ दैत्यविशेषे ॥

शङ्खचूर्णम् । न॰ शङ्खजातचूर्णे ॥ शङ्खचूर्णं कटुक्षारमुष्णं क्रिमिहरं-परम् ॥

शङ्खजः । पुं॰ कपोतडिम्बवद्वृहन्मुक्तायाम् ॥ त्रि॰ शङ्खजातवस्तुनि ॥

शङ्खद्रावी । पुं॰ अम्लवेतसे ॥

शङ्खधरा । स्त्री॰ हिलमोचिकायाम् ॥

शङ्खधारी । पुं॰ छन्दोविशेषे ॥ ध्वजानन्दकर्णाः षडेवात्र वर्णाः । बुधानन्दकारी भवेच्छङ्खधारी ॥ यथा । स्फुरद्गोपनारीपरीरम्भकारी । हरिः पातु वृन्दावनाभ्यर्णचारी ॥

शङ्खध्मः । पुं॰ शङ्खवादके । शाङ्खिके ॥

शङ्खध्माः । पुं॰ शाङ्खिके ॥

शङ्खनखः । पुं॰ क्षुद्रशङ्खे ॥ शङ्खस्य नख इव ॥ शङ्खनतिवा । बहुलमन्यत्रापीति युच्ल्युड्वा । स्वार्थे कः । पृषोदरादिः ; नखीनाम गन्धद्रव्ये । हट्टविलास्याम् ॥

शङ्खनखा । स्त्री॰ शङ्खनख्याम् ॥ द्विधा शङ्खनखा स्याऽन्या शुक्तया ख्याताऽवदरीच्छदः ॥ इति रत्नमाला ॥

शङ्खपुष्पी । स्त्री॰ मङ्गल्यकुसुमायाम् ॥ शङ्खपुष्पी तु शङ्खाह्वा मङ्गल्यकुसुमापि च । शङ्खपुष्पी सरा मेध्या पुष्पा मानसरोगहृत् । रसायनी कषायोष्णा स्मृतिकान्तिबलाग्निदा ॥ दोषापस्मारभूतास्रक्कुष्ठकृमिविषप्रणु-त् । इति भावप्रकाशः ॥ पाककर्णेति ङीष् ॥

शङ्खप्रस्थ : । पुं॰ चन्द्रस्थचिह्ने ॥

शङ्खभृत् । पुं॰ विष्णौ ॥ भूतादहङ्कारात्मकं शाङ्खनाख्यं शङ्खं बिभर्त्ति । शुभृञ्॰ ॥ क्विप् । तुक् ।

शङ्खमुख : । पुं॰ कुम्भीरे ॥

शङ्खमूलम् । न॰ मूलके ॥

शङ्खसञ्ज्ञा । स्त्री॰ योषायोगान्तरे । यथा । स्वांशसंस्थे बुधे लग्ने शुक्रे वा देवपूजिते । शङ्खसंज्ञा ह्ययोगेयातुः कीर्त्तिप्रदः सदा ॥

शङ्खसेन : । पुं॰ चित्रगुप्तात्मजेक्षायस्थविशेषे ॥

शङ्खाख्य : । पुं॰ श्वद्रष्ट्याम् ॥

शङ्खालुकम् । न॰ श्वेततायुक्तकन्दविशेषे

शङ्खाह्वा । स्त्री॰ शङ्खपुष्प्याम् ॥

शङ्खिका । स्त्री॰ तृणविशेषे । चोरायाम् । चोरवकुली॰ इ॰गौ॰भा॰ ॥

शङ्खी । पुं॰ हरौ ॥ समुद्रे ॥ त्रि॰ शङ्खवति ॥

शङ्खिनी । स्त्री॰ चोरपुष्प्याम् । कौशिन्याम् । शांखाहुली॰ इ॰भाषा ॥ श्वेतचुक्रायाम् । वधूभेदे । चवलाप्रभेदे ॥ तीर्थविशेषे ॥ बुद्धशक्तिविशेषे ॥ श्वेतपुन्नागे ॥ यवतिक्तायाम् ॥ श्वेतकन्दायाम् ॥ शङ्खवल्याम् ॥ चतुर्विधस्त्रीमध्ये स्त्रीविशेषे । तल्लक्षणं यथा । दीर्घातिदीर्घनयनावरसुन्दरी याकामोपभोगरसिका गुणशीलयुक्ता । रेखात्रयेण च विभूषितकण्ठदेशा सम्भोगकेलिरसिका किल शङ्खिनी सा ॥ शशकः पद्मिनीतुष्टश्चित्रिणीरमते मृगः । वृषभः शङ्खिनीतुष्टो हस्तिनीरमते हयः ॥ पद्मिनीपद्मगन्धा च मीनगन्धा च चित्रिणी । शङ्खिनी क्षारगन्धा स्यान्मदगन्धा च हस्तिनी ॥ नाडीविशेषे ॥ गान्धार्याश्च सरस्वत्याः स्थितामध्ये च शङ्खिनी ॥ शङ्खाः सन्त्यस्याः शङ्खाकारपुष्पत्वात् । चतङ्गनिः ॥

शङ्खिनीफल : । पुं॰ शिरीषवृक्षे ॥

शङ्खिनीवास : । पुं॰ शाखोटवृक्षे ॥

शचि । स्त्री॰ शच्याम् । इन्द्राण्याम् ॥ शचति । शचव्यक्तायां वाचि । सर्वधातुभ्य इन् ॥ स्त्रीकरणान्तरे ॥

शची । स्त्री॰ पुलोमजायाम् । पौलोम्याम् । इन्द्राण्याम् । शचति॰ व्यक्तं वदति । शच॰ । इन्नन्तात्॰ कृदिकारादिति ङीष् ॥ शतावर्याम ॥

शचीपति : । पुं॰ इन्द्रे ॥ शच्याः पतिः ॥

शचीश : । पुं॰ इन्द्रे ॥

शठ पुं॰ देशान्तरे । शटेरच् । च॰ चर्म्मे ।

शटा । स्त्री॰ जटायाम् । शटति । श टकुजाविशरणगत्यवसादनेषु । अ च् । टाप् ।

शटिः । पुं॰ शट्याम् । गन्धपला श्याम् । शट॰ । इन् ।

शटिका । स्त्री॰ शटीप्रभेदे । गन्ध पलाशयाम् ।

शटी । स्त्री॰ गन्धशट्याम् । गन्धम् स्याम् । षड्ग्रन्थिकायाम् । कर्चूरे । पलाशे । गन्धपलाश्याम् । कचूर॰हि॰दे॰भा॰ । बनचादा॰इ॰गौ॰दे॰भा॰ ॥ गन्धपलाशीसुगन्ध द्रव्यंकाश्मीरेप्रसिद्धम् । शटति । शट॰ । अच् । गौरादिः ॥

शट्ट । पुं॰ शट्टके ॥

शट्टकम् । न॰ शट्टे । सांटा॰हि॰भा॰ प्र॰ । शालिचूर्णं घृतंतोयंमि श्रतं शट्टकंवदेत् ।

शठः । पुं॰ मध्यस्थपुरुषे ॥ धूस्तूरे ॥ धूर्त्ते । परवञ्चनार्थं मन्यथा जानन्नप्यन्यथावादिनि । गूढविप्रियकृति । यथोक्तं विष्णुपुराणे । प्रियंव क्तिपुरोऽन्यत्रविप्रियंकुरुतेभृशम् । व्यक्तापराधचेष्टश्चशठोऽयंकथितोबुधैरिति ॥ अपिच । परकार्यविमुखे । यथा । मनसावचसायश्चदृश्यते कार्यतत्परः । कर्मणाविपरीतश्च सशठः सद्भिरुच्यते ॥ चतुर्विधप त्यन्तर्गतपतिविशेषे ॥ तल्लक्षणंयथा । कामिनीविषयकपटपटुरिति ॥ शठति॰वञ्चयति । शठकैतवे । प चाद्यच् ॥ न॰ तगरे । कुङ्कुमे ॥ तीक्ष्णायसे ।

शठता । स्त्री॰ कुसृतौ । निकृतौ । मायायाम् । शाठ्ये ॥ भावकर्मणोस्तल् ॥

शठाम्बा । स्त्री॰ अम्बष्ठायाम् । छिन्न पत्याम् ॥

शण ः । पुं॰ स्वनामख्यातप्रसिद्धक्षुपे । माल्यपुष्पे । कटुतिक्तके । त्वक्सारे । दीर्घपल्लवे ॥ न॰ भङ्गायाम् । मातुलान्याम् ॥

शणघण्टिका । स्त्री॰ शणपुष्प्याम् ।

शणपत्रम् । न॰ शणवल्कलनिर्मितेप त्रे । कागद॰इ॰प्र॰ ॥

शणपर्णी स्त्री॰ अश्मन्तपर्ण्याम् । श णः पर्णमस्याः । शणशब्दः शण पर्णसदृशत्वाल्लाक्षणिकः । पाककर्ण तिङीष् ॥

शणपुष्पम् । न॰ शणके ॥

शणपुष्पिका । स्त्री॰ घण्टारवायामो षधौ । शणाः पुष्पंयस्याः । स्वार्थेकन् ॥

शणपुष्पी । स्त्री॰ घण्टारवायाम् । घण्टेतिख्यातौषधौ । शणाः पुष्पं यस्याः । शणशब्दस्तत्पुष्पसदृ

अणिकः । पाककर्णेतिङीष् ॥
अश्मगुणी : । शणपुष्पीकटुस्तिक्ता
वामिनीकफपित्तजित् ॥ आढक्या
म् ।

शणसूत्रम् । न० शणद्रुमांशुसूत्रे ।
पवित्रके ॥ शणोति । शणगतौ ।
पत्राद्यच् । शणस्यसूत्रम् ।

शणालुः । }
शणालुकः । } पुं० आरेवते । आरग्व
धे । इ०श०र०लौ० ॥

शणिका । स्त्री० शणपुष्प्याम् ॥

शणीरम् । न० शोणमध्यस्थपुलिने
॥ दर्दरीतटे । इ०मेदिनिकरः ।

शण्डम् । न० षण्डे । पद्मादिसमूहे
॥ पुं० असुरपुरोहिते ॥ शण्डते ।
शडिरुजायांसङ्घातेच । अस्मात्
पचाद्यच् ॥

शण्डकः । पुं० देशविशेषे ।

शाण्डलः । पुं० मुनिविशेषे ॥ शण्ड
ते । शडि० । सलिकल्यनिमहिभ
डिभण्डिशण्डिपिण्डितुण्डिकुकिभू
भ्यइलच् ॥

शण्ढः । पुं० गोपतौ । सांड० इ०
भा० ॥ आकृष्टाण्डे ॥ वर्षवरे ।
अन्तर्मुष्कके । अभ्यन्तरस्त्रीरक्ष
के ॥ तृतीयप्रकृतौ । क्लीवे ॥
शाम्यतिशिश्नाभावात् । शमउप
शमे । शमेर्ढः ॥ वन्ध्यपुरुषे ।
उन्मत्ते ॥

शतम् । न० दशगुणितदशसङ्ख्या
याम् । दशतौ । १०० । दशदशतः
परिमाणमस्य । पङ्क्तिविंशतीतिनि
पातनात्० प्रकृतेः शभाव० त
अप्रत्ययः । सङ्ख्येये ॥

शतकः । त्रि० शतसङ्ख्याविशि
ष्टे सङ्घे ॥ शतंपरिमाणमस्य । स
ङ्ख्यायाअतिशदन्तायाः कन् ॥
शतेनक्रीतोवा ॥

शतकीर्त्तिः । पुं० भाव्यर्हद्विशेषे ॥

शतकुन्दः । पुं० करवीरे ॥

शतकुम्भः । पुं० पर्वतविशेषे । श्वेत
करवीरे ।

शतकोटिः । पुं० वज्रे ॥ शतंको
टयोधाराः कोणलक्षणाः यस्य सः
॥ दशार्बुदे । अब्जे । पद्मे ॥

शतक्रतुः । पुं० इन्द्रे ॥ शतंक्रत
वोयस्य सः ॥

शतखण्डम् । न० सुवर्णे ॥ त्रि० श
तभागे ॥

शतग्रन्थिः । स्त्री० दूर्वायाम् ॥

शतघ्नी । स्त्री० शिल्पविद्याप्रसिद्ध
शस्त्रविशेषे ॥ प्राकाररक्षार्थनि-
र्मितेयन्त्रविशेषे । शतंहन्ति ।
हन० । अमनुष्यकर्त्तृकेचेतिटक् ॥
ङीप् । लोहकण्टकसञ्छन्नाशतघ्नी
महतीशिलेति० विजयरक्षितः ॥
वृश्चिकाल्याम् ॥ करञ्जके ॥ गल
रोगविशेषे ॥

शतच्छन्दः । पुं॰ काष्ठकुट्टखगे । दार्व्वाघाटे ॥ शतं छदा अस्य ॥

शततमः । त्रि॰ शतस्य पूरणे ॥ नित्यं शतादिमासार्द्धमाससंवत्सराच्चेति डट्तमडागमः ॥

शततारा । स्त्री॰ शतभिषायाम् ॥

शतदन्तिका स्त्री॰ नागदन्त्याम् ॥

शतद्रुः । स्त्री॰ सरिद्विशेषे । शतद्रौ ॥ अस्या जलगुणा यथा । शतद्रोर्विपाशायुजः सिन्धुनद्याः सुशीतं लघु स्वादु सर्व्वामयघ्नम् । जलं निर्म्मलं दीपनं पाचनञ्च प्रदत्ते बलं बुद्धिमेधायुषञ्च । शतधा द्रवति । द्रु गतौ । हरिमितयोर्द्रुवः शते चेति कुः । मितद्र्वादित्वाड्डुर्वा ॥

शतधा । )
शतधा । ) स्त्री॰ शतप्रकारे ॥ दूर्व्वायाम् ॥

शतधामा । पुं॰ विष्णौ ॥ शतमनन्तानि धामान्यस्य ॥

शतधारम् । न॰ पवौ । वज्रे ॥ शतं धाराः कोणलक्षणा यस्य सः । त्रि॰ शतधाराविशिष्टे ॥

शतधृतिः । पुं॰ इन्द्रे । शक्रे ॥ परमेष्ठिनि । स्रष्टरि ॥ दिवि । स्वर्गे ॥

शतपत्रः । पुं॰ मयूरे ॥ दार्व्वाघाटे ॥ सारसे ॥ राजकीरे ॥ मूरीतिता॰ इ॰ भा॰ । न॰ कमले शतं पत्राण्यस्य ॥

शतपत्रकः । पुं॰ दार्व्वाघाटे । काष्ठकुट्टखगे ॥ शतं पत्राण्यस्य ॥

शतपत्रनिवासः । पुं॰ ब्रह्मणि ॥ त्रि॰ पद्मस्थे ॥

शतपत्रिका । स्त्री॰ शतपत्र्याम् । सेवन्त्याम् ॥

शतपत्री । स्त्री॰ सेवन्त्याम् । सेवती॰ चू॰ भा॰ ॥ पाटलवर्णा सेवती॰ गुलाब इ॰ प्रसिद्धा स्त्री॰ उभयोः पर्य्याया यथा । शतपत्री तरुण्युक्ता कर्णिका चारुकेशरा । महाकुमारी गन्धाढ्या लाक्षापुष्पातिमञ्जुला ॥ शतपत्री हिमा हृद्या ग्राहिणी शुक्रला लघुः दोषत्रयास्रजिद्वर्ण्या तिक्ता कट्वी च पाचनी ॥

शतपथः । पुं॰ वेदैकदेशे ।

शतपथिकः । त्रि॰ शतपथाध्येतरि ॥ शतपथमधीते वेद वा । ठकन् पदोत्तरपदात्॰ शतषष्टेः षिकन् पथः इति षिकन् ॥ षित्वात्॰ स्त्री॰ शतपथिकी ॥

शतपदचक्रम् । न॰ नामाक्षरनक्षत्रज्ञानार्थं चक्रं ॥ तद्यथा । चक्रं शतपदं वक्ष्ये॰ कचांमाचरसम्भवम् । नामादिवर्णतो ज्ञेया अक्षरा ऊर्द्ध्वशकास्तथा ॥ तिर्य्यगूर्द्ध्वगता रेखा रुद्रसङ्ख्या लिखेद्बुधः ॥ आयते कोष्ठका यत्र शतं नौ च संभवः ॥ प॰ व॰ का॰ इ॰ छोटिमान्यां॰

म० ट० प० र० ता० इरिति०
आग्नेय्याम् । न० य० भ० ज०
खा० नैऋत्यां० ग० स० द० च०
ला० वायव्याम् ॥ पञ्चपञ्चक्रमेणैवविं
शवर्णान्प्रयोजयेत् । पञ्चस्वरसमा-
योगेणैकैकंपञ्चधाकुरु ॥ अवर्णाद्या
स्वयोज्ञेयाः सव्यञ्जनयुतास्तथा ।
सजातीयैक्यमाख्यायपञ्चस्वरविनिर्ण
यः ॥ ऋट्टस्ततोरप्यकारेण० शेम
सम्परिग्रहः । कुर्यात्कुपु० भु०
दु० स्यामेषीषिषीख्यपराषिच ॥
कु० घ० ङ० छा० भवेत्स्तम्भो रौ
द्रेस्त्वीशानगोचरे । पु० ष० ण०
ठा० भवेत्स्तम्भे दर्ग्ने चाग्नेयसंज्ञ-
के ॥ भु० ध० फ० ढा भवेत्स्तम्भ पू
र्वाषाढे चनैऋते । दु० थ० झ०
ञ० भवेत्स्तम्भेवायव्ये भाद्रउत्तरे
एवंस्तम्भचतुष्कञ्चज्ञातव्यं स्वरवेदि
भिः । धिष्ण्यानिकृत्तिकादीनिप्रत्ये
कंचतुरक्षरैः । साभिजिन्त्यंशका
स्तत्रशतैकंद्वादशाधिकम् । यद्दर्श
शकोस्थः क्रूरः सौम्योपिवा
ग्रहः । तत्रस्थोवेधयेत्सम्यक् पुं
सोनामादिमाक्षरम् । सौम्यैर्विद्धं
शुभंज्ञेयमशुभंपापखेचरैः ॥ मि
श्रैर्मिश्रफलंतत्रनिर्वेधेनशुभाशुभम्
। यथाच्यंसर्वतोभद्रे ग्रहोपग्रहभेद
तः । शुभाशुभफलंसर्वंतद्दिहापि
विचिन्तयेत् ॥ पञ्चस्वराः० च०

शतपदचक्रम्

ढू० उ० ए० ओकारास्तैर्योगेधि-
ष्ण्यानिमक्षराणि । अत्रचतुर्भि-
र्वर्णैरेकनक्षत्रंयथा । च० चू० उ०
ए० कृत्तिका । ओ० व० वि०
वु० रोहिणी । वे० वो० क०
कि० मृगशिरः । कु० घ० ङ०
छ० आर्द्रा । के० को० ह० हि०
पुनर्वसू । हु० हे० हो० ड० पु
ष्यः । डि० डु० डे० डो० अश्लेषा
। म० मि० मु० मे० मघा । मो०
टा० टि० टु० पूर्वाफाल्गुनी ।
टे० टो० प० पि० उत्तराफाल्गु
नी । पु० ष० ण० ठ० हस्तः । पे०
पो० र० रि० चित्रा । रु० रे०
रो० त० स्वाति । ति० तु० ते०
तो० विशाखा । न० नि० नु० ने०
अनुराधा । नो० य० यि० यु० ज्ये
ष्ठा । ये० यो० भ० भि० मूलम् ।
भु० ध० फ० ढ० पूर्वाषाढा । भे०
भो० ज० जि० उत्तराषाढा । जु०
जे० जो० ख अभिजित् । खि०
खू० खे० खो० श्रवणः । ग० गि०
गु० गे० धनिष्ठा । गो० श० शि०
शु० शतभिषा । शे० षो० द० दि०
पूर्वभाद्रपदा । दु० थ० झ० ञ०
उत्तरभाद्रपदा । दे० दो० च०
चि० रेवती । चु० चे० चो० ल०
अश्विनी । लि० लु० ले० लो० भर
णी । ऋलृयुक्ताः अकारयुक्ता मध्ये

यः। कर्णेनदीर्घोत्रयः। ताल व्यशकारेणदन्त्यसकारेणपठितव्यः॥ इतिशतपद्चक्रम्॥

शतपदी। स्त्री॰ कर्णजलौकायाम्॥ शतंपादायस्याः। कुम्भपदीषुचेतिसाधुः॥ शतावर्याम्॥

शतपत्रम्। न॰ श्वेतकमले। पुण्डरीके॥

शतपर्वा। पुं॰ वंशे। स्वक्सारे। शतंपर्वाण्यस्य॥ वृक्षविशेषे। शतपोरके॥ यथा। शतपर्वाभवेत्किञ्चित्कोषकारगुणान्वितः। विशेषात्किञ्चिदुष्णश्चसचारः पवनापहः॥

शतपर्व्वी। स्त्री॰ दूर्वायाम्॥ वचायाम्॥ भार्गवभार्यायाम्॥ कोजागरपूर्णिमायाम्॥ कटुकायाम्॥ शतंपर्वाण्यस्याः। पाक्षिकः कव भावः॥

शतपर्विका। स्त्री॰ दूर्वायाम्॥ वचायाम्॥ शतंपर्वाण्यस्याः। शेषादितिकप्। यद्वा। शतंपर्वति। पर्वपूरणे। ण्वुल्। ध्येवे॥

शतपर्वेशः। पुं॰ शुक्रग्रहे॥ शतपर्वायाईशः॥

शतपात्-द्। स्त्री॰ शतपद्याम्॥ शतंपादाअस्याः॥ सङ्ख्यासुपूर्वस्येतिसाधुः॥

शतपादिका। स्त्री॰ शतपद्याम्॥ काकोल्याम्॥

शतपादी। स्त्री॰ शतपादिकायाम्॥

शतपुष्पा। स्त्री॰ सितच्छत्रायाम्। अतिच्छत्रायाम्। मधुरायाम्। सौंफ। भाषाप्रसिद्धा॰ इ॰ भा॰ प्र॰॥ अस्यागुणायथा। शतपुष्पालघुस्तीक्ष्णापित्तकृद्दीपनीकटुः। उष्णाज्वरानिलश्लेष्मव्रणशूलाक्षिरोगहृत्॥ मिश्रेयातद्गुणाप्रोक्ताविशेषाद्योनिशूलनुत्। अग्निमान्द्यहरीहृद्याबद्धविट्कृमिशुक्रहृत्॥ रूक्षोष्णापाचनीकासवमिश्लेष्मानिलान्हरेत्॥ अपिच। एकंवाङ्घ्रिरसास्तवासीनेववासिता। शतपुष्पावदत्येवंकृत्वंदृष्ट्वा जिगीषया॥ शतंपुष्पाण्यस्याः। सदृच्चाकाण्डेतिटाप्॥

शतपुष्पिका। स्त्री॰ शतपुष्पायाम्॥

शतपोरकः। पुं॰ शतपर्वाख्यवृक्षविशेषे॥

शतप्रसूना। स्त्री॰ शतपुष्पायाम्॥

शतप्रासः। पुं॰ करवीरवृक्षे॥ शतंप्रासाःकृषपत्राण्यस्य॥ शतंपुष्पाणिप्रासानिततानियस्य। बहुव्रीहौ। कर्मण्यण्॥

शतबलिः। पुं॰ कपोताख्यपक्षिविशेषे॥

शतभिषक्। स्त्री॰ शतभिषानक्षत्रे॥ त्रि॰ शतभिषजिजाते॥ नक्षत्राजातार्थेलुक्। पक्षे॥

तभिषज: । शातभिषोऽपि ॥

शतभिषा । स्त्री॰ अश्विन्यादिषु चतुर्विंशभे ॥ तत्र जातस्य फलं यथा । शीतभीरुरतिसाहसीसदामिष्टुरो हि चतुरो नरो भवेत् । वैरिणामतिशयोहि दारुणो दारुणो हि शतभिषग्युदयस्य सम्भवे ॥

शतभीरु: । स्त्री॰ मल्लिकायाम् । बेला॰ बेली॰ रायबेल॰ इ॰ च॰ भा॰ प्र॰ पुष्पे । शतं बहवो वियोगिनो भीरवो ऽस्या: ।

शतमख: । पुं॰ इन्द्रे । शचीपतौ ॥ शतं मखा यस्य ॥

शतमन्यु: । पुं॰ दिवस्पतौ ॥ इन्द्रे ॥ शतं मन्यवो यागा यस्य । शतेषु दैत्येषु मन्यु: क्रोधो ऽस्येति वा । शतं मन्यवो दैन्यान्यस्य वा । दैत्यै: पराजितत्वात् ॥

शतमान: पुं॰ दशरूप्यधरणेषु । विंशत्यधिकरक्तिकाशतत्रयपरिमाणे इत्यर्थ: । धरणानि दशशतीय: शतमानस्तु राजत इति मनु: ॥

शतमार्ग: । पुं॰ अश्वकारके ॥ इ॰ कश्चित् ॥

शतमूला । स्त्री॰ दूर्वायाम् ॥ वचायाम् ॥

शतमूलिका स्त्री॰ द्रवन्त्याम् । मूषिकपर्ण्याम् ॥

शतमूली । स्त्री॰ बहुसुतायाम् । शतावर्याम् ॥ शतं मूलान्यस्या: । पाककर्णेति ङीष् ॥

शतयष्टिक: । पुं॰ शतलतिकाहारे । देवच्छन्दे ॥

शतरुद्रियम् । न॰ हविरादौ ॥ शतं रुद्रा देवता अस्य । शतरुद्राद्घश्चेति घ: ॥

शतरुद्रीयम् । न॰ शतरुद्रिये ॥ शतरुद्राद्घश्चेति चकाराच्छ: । शतशब्दो ऽनन्तवचन: ॥

शतरूपा । स्त्री॰ स्वायम्भुवमनो: पत्न्याम् ॥ ब्रह्मण: कन्यायाम्॰ पत्न्यामिति मात्स्ये तृतीयोऽध्याय: ॥

शतलुम्प: । )
शतलुम्पक: । ) पुं॰ किरातार्जुनीयकाव्यकर्त्तरि भारविकवौ ॥

शतवीर्या । स्त्री॰ श्वेतदूर्वायाम् ॥ शतं वीर्याण्यस्या: ॥ कपिलद्राक्षायाम् । शतावर्याम् ॥

शतवेधी । पुं॰ अम्लवेतसे ॥ शतं वेद्धुं शीलमस्य । विधविधाने । सुपीति णिनि: ॥

शतवेधिनी । स्त्री॰ चुक्रिकायाम् । चूकापालशाके ॥

शतव्रज: । पुं॰ अनन्तगतौ । अपरिमितगतौ ॥

शतसहस्रम् । न॰ शतगुणितसहस्रे । लक्षे ॥

शतसहस्रकम् । न॰ तीर्थविशेषे ॥

शतह्रदा । स्त्री॰ वज्रे ॥ विद्युति । सौदामिन्याम् ॥ शतं ह्रदाः ॰ध्वनयो वि॰ अगाधजलाशया वा अस्यस्याः । अच् ॥ शतं ह्रादाः यस्या इति वा । पृषोदरादित्वात् साधुः ॥

शतांशः । त्रि॰ शततमे भागे । सङ्ख्याशब्दस्य वृत्तिविषये पूरणार्थत्वम् । यथा । तस्याश्चैवांशभागेन या गङ्गा सुरपूजिता । शतांशेन वसुन्धरा सीतेन विष्णोः प्रिया सदेति ब्रह्मवैवर्त्तम् । तस्याः सुरायाः अंशसम्भवः ॥

शताक्षी । स्त्री॰ पार्वत्याम् ॥ शतपुष्पायाम् ॥ रात्र्याम् ॥ शतमक्षीण्यस्याः । बहुव्रीहौ॰ षच् । ङीष् ॥

शताङ्गः । पुं॰ युद्धार्थरथे । स्यन्दने ॥ शतमङ्गान्यवयवा यस्य सः । तिनिशद्रुमे ॥

शतानकम् । न॰ रुद्राक्रीडे । श्मशाने ॥

शतानन्दः । पुं॰ मुनिविशेषे । गौतमस्य सुते देवकीनन्दने ॥ गौतममुनौ ॥ जनकपुरोहिते ॥ ब्रह्मणि ॥ विष्णुरथे । शतमानन्दा यस्य एकएव परानन्दरूपाधिभिन्दा स्तथाभिद्यते ॥ शतमनेके॰ यस्य: कारणवृत्तिविशेषेषूपाधिष्वभिव्यज्यमाना आनन्दा यस्य परमानन्दसिन्धौ र्वं स्याच्छ्रुतिश ॥

शतानीकः । पुं॰ व्यासशिष्ये॰ मुनिविशेषे ॥ वृद्धे ॥ नृपविशेषे । जनमेजयपुत्रे ॥

शतायुः । त्रि॰ शतवर्षवयसि ॥ शतवर्षाण्यायुर्यस्य सः ॥

शतारम् । न॰ वज्रे ॥

शतारुषी । स्त्री॰ } कुष्ठभेदे ॥ रक्तश्यावं सदाहार्त्ति शतारुः स्याद्बहुव्रणम् ॥
शतारुः । न॰ }

शतावरी । स्त्री॰ शतमूल्याम् । इन्दीवर्य्याम् ॥ अस्या गुणाः । शतावरी गुरुः शीता तिक्ता स्वाद्वी रसायनी । मेधाग्निपुष्टिदा स्निग्धा नेत्र्या गुल्मातिसारजित् । शुक्रस्तन्यकरी बल्या वातपित्तास्रशोथजित् इति ॥ अस्याः पाको यथा । शतावरीमूलकल्कं कल्कात् क्षीरं चतुर्गुणम् । क्षीरतुल्यं घृतं गव्यं सितया कल्कतुल्यया ॥ घृतशेषं पचेत्तन्तु पलार्द्धं लेहयेत्सदा । रक्तपित्तं ह्यम्लपित्तं क्षयं श्वासञ्च नाशयेत् इति लघुशतावरीपाकः ॥ शच्याम् । इन्द्राण्याम् ॥ शतेनावृणोति । वृञ्॰ । पचाद्यच् । गौरादिः ॥

शतावर्त्तः । पुं॰ विष्णौ ॥ शतमावर्त्ताः प्रादुर्भावा यस्य ॥

शतावर्त्ती । पुं॰ विष्णौ ॥

शताश्रिः । पुं॰ शतकोटौ ॥ वज्रे ॥

शताह्वा । स्त्री॰ शतपुष्पायाम् ।

शलफा० द्र० गौ० भा० ॥ मधु
रिकायाम् । अतिच्छत्रायाम् ॥
शतिकः । त्रि० शत्य ॥ शतेनक्री
तः० शतस्यविकारोऽवयवोवा ।
शतस्यनिमित्तं संयोगउत्पातोवा-
॥ क्रीतवत् परिमाणादित्यतिदेशा
त्• शताच्चठन्यतावशतइतिठन् ॥
शतिरः पुं० शचौ । हिंसायाम् ॥
शीयते । शद्लृशातने । अदिसचि
त्यिरक् ॥
शत्यः । त्रि० शतिके ॥ शतिकव
दलित्वाद्यत् ॥
शदि । पुं० कुञ्जरे । हस्तिनि॥शीय
ते । शद्लृ । राशदिभ्यांत्रिप् ॥
शत्रुः । पुं० । स्वविषयान्तरावनिपे
॥ विषयानन्तरोराजेत्यमरः ॥ नि
पातकारिणि । रिपौ । वैरिणि ।
सपत्ने । अरौ । अभिघातिनि ॥
शत्रुर्द्विधा । आभ्यन्तरोबाह्यश्च ।
आभ्यन्तरः कामक्रोधादिरूपः ॥
बाह्यश्चविघातादिकर्त्ता । यथा
हुः । एकः शत्रुर्नद्वितीयोस्ति
शत्रुरज्ञानतुल्यः पुरुषस्यराजन् ।
येनावृष्टः कुरुतेकार्यतिघोराणि
कर्म्माणिसुदारुणानीति ॥ लग्नात्
षष्ठस्थाने । शातयति । शद्लृ०
। ण्यन्तः । रुशातिभ्यांक्रुन् । ब
हुलमन्यत्रापीतिणिलुक् । प्रज्ञा
दिपाठाद्ह्रस्वः ॥ शातयितरि ।
हन्तरि ॥ यथा । इन्द्रशत्रुः ।
इन्द्रस्यशत्रुर्हन्ता । इन्द्रः शत्रु
र्हन्तायस्येतिबहुव्रीहिर्वा ॥
शत्रुघ्नः । पुं० सुमित्रातनये । श
त्रुमर्द्दने । श्रीरामभ्रातरि ॥ श
त्रून्हतवान् । हन० । मूलवि
भुजादित्वात्कः ॥ यद्वा । शत्रून्
हन्ति । अमनुष्यकर्त्तृकेऽपिचेत्यपि
शब्दात्• कृतघ्नशत्रुघ्नादयः सिद्धा
इतिदुर्गसिंहः । पाणिनीयेपि०
बहुलग्रहणादभीष्टसिद्धिः । कृत्य
ल्युटोबहुलम् ॥ त्रि० अरिघ्ने ॥
शत्रुघ्नजननी । स्त्री० सुमित्रायाम् ॥
शत्रुजित् । पुं० भूपविशेषे । कुव
लयाश्वपितरि ॥ त्रि० वैरिजय
कारिणि ॥ शत्रून्जयतिअभिभव
ति । जि० । क्विप्• तुक् ॥
शत्रुञ्जयः । पुं० विमलाद्रौ ॥ हस्ति
नि । शत्रुंजयति जि० । संज्ञायां
भृतवृजीतिखच् ॥ शत्रुजेतरि ॥
शत्रुता । स्त्री० शत्रुत्वे । वैरिभावे
। तल् ॥
शत्रुन्तपः । त्रि० वैरितापकृति ॥
शत्रुमर्द्दनः । पुं० शत्रुघ्ने । त्रि० वैरि
घ्ने ॥
शत्रुलः । त्रि० शत्रुमति । शत्रु
रस्त्यस्य । अन्येभ्योपिदृश्यतइति
लच् । असंज्ञात्वाल्लइतिनदीर्घः
शत्रुहा । पुं० क्रूरकर्मणिवक्षि ॥

शत्वरी। स्त्री० निशायाम्॥

शदः। पुं० फलमूलादौ॥ शदेरच्॥

शद्रिः। पुं० पर्ब्बाधरे। मेघे। अग्नौ॥ हस्तिनि॥ खण्डे॥ स्त्री० तडिति॥ शीयतेऽस्यतेवा। शद्लृ०। अदिशदीतिक्रिन्॥

शनकावलिः। स्त्री० गजपिप्पल्याम्॥

शनकैः। अ० अत्वरायाम्॥ शनैरिव। अव्ययसर्व्वनाम्नामकच्प्राक्टेरित्यकच्॥ सम्यमेवेत्यर्थे॥

शनपर्णी। स्त्री० वसनपर्ण्याम्॥ चटक्याम्॥

शनिः। पुं० सप्तमग्रहे। सौरौ। शनैश्चरे। नीलवाससि। मन्दे। छायात्मजे॥ कुब्जे॥

शनिगृहम्। न० मकरराशौ॥ कुम्भराशौ॥ शनेर्गृहम्॥

शनिप्रसूः। स्त्री० छायायाम्। सूर्यपत्न्याम्॥

शनिप्रियम्। न० नीलमणौ॥

शनिवारः। पुं० शनिभोग्यसप्ताहदिने॥ तत्पु०। उदयकालादेोदयकालः॥

शनैश्चरः। पुं० शनिग्रहे॥ शनैश्चरति० पङ्गुत्वात्। चर०। अच्॥ त्रि० मन्दगामिनि॥

शनैः। अ० क्रियामान्द्ये। स्वैरे॥ अत्वरायाम्। अद्रुते। शनैश्चरे। शणति०। शाणयतिवा। शचटा ने० शानतेर्व्वा। डैस्प्रत्ययः। पृषोदरादित्वात्० वस्यनः शत्वोवा॥

शन्तनुः। पुं० प्रतीपभूपतनये। महाभिषे॥

शपः। पुं० शपथे। निर्भर्त्सने॥

शपथः। पुं० कारे॥ आक्रोशे॥ दिव्ये। समये। सुतादिभिः शपने॥ शपन्ति शपथाक्रोशे। शीङ्शपिरुगमीवञ्चादिनाऽथप्रत्ययः॥

शपनम्। न० शपथे॥ शप०। ल्युट्॥

शपमानः। त्रि० क्रोशति॥ स्वरितेत्वादात्मनेपदम्॥

शप्तः। त्रि० शापग्रस्ते॥ शप्यतेस्म। शप०। क्तः। पुं० उल्० वृ० गौ० भा० प्र० तृणविशेषे॥

शफः। पुं० सुगन्धिद्रव्यविशेषे। नखि। कोलदले॥ न० तरूणां मूले॥ गवादीनांखुरे॥ शंफचति। फचगतौ। अन्येभ्योपीति डः। पृषोदरादिः॥

शफरः। पुं० मत्स्यविशेषे। प्रोष्ठ्याम्। यूंठी० वृ० गौ० दे० भा० प्र० शफंराति। रा०। आतोनुपेतिकः॥

शफराधिपः। पुं० इल्लिश० मत्स्ये। वारिकर्पूरे॥ शफराणामधिपः॥

शफरी। स्त्री० शफरे। प्रोष्ठ्याम्॥ जातेरितिङीष्॥

शब्दः

शबलः । पुं॰ एते । कर्बुरे । चित्रे । किर्मीरे । शपति॰ अक्रोश तिरस्कारम् । शप॰ शपेर्वकेतिक लप्रत्ययेवत्वम् । पेःपठ्यशब्दः । त्रि॰ तद्वति ।

शब्दः । पुं॰ अक्षरे । यशसि ॥ गीतौ । वाक्ये । खे । श्रवणे । ध्वनौ । इतिहेमचन्द्रः । श्रोत्रग्राह्यगुणपदार्थविशेषे । अस्य पर्यायाःयथा । शब्दे॰ निनादनिनदध्वनिध्वानरवस्वनाः । स्वानानिर्घोषनिर्ह्रादनादनिस्वानविस्वनाः । आरवारावसंरावविरावाः । इत्यमरः ॥ प्रयोगेणाभिज्वलितया काशदेशः शब्दः । सद्विविधः ध्वन्यात्मको॰ वर्णात्मकश्चेतिभेदात् । तथाहि । शब्दोध्वनिश्च वर्णश्चमृदङ्गादिभवोध्वनिः । कण्ठसंयोगादिजन्यावर्णास्तेकादयोमताः ॥ सर्वः शब्दोनभोवृत्तिः श्रोत्रोत्पन्नस्तुगृह्यते । वीचीतरङ्गन्यायेनतदुत्पत्तिस्तुकीर्त्तिता । कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते । उत्पन्नः कोविनष्टः कइतिबुद्धेरनित्यता ॥ सोयंकइतिबुद्धिस्तुसाजात्यमवलम्बते । तदेवौषधमित्यादौसजातीयेऽपिदर्शनात् । इ॰ भा॰ प॰ शब्दंनिरूपयति । शब्दइति । नभोवृत्तिरा

काशसमवेतः । दूरस्थशब्दस्या ऽग्रहणादाह । श्रोत्रोत्पन्नइति । ननुमृदङ्गाद्यवच्छेदेनोत्पन्नेशब्दे॰ श्रोत्रेकथमुत्पत्तिरतआह । वीचीतरङ्गन्यायेनेति । आद्यशब्दस्यबहिर्द शदिगवच्छिन्नोऽन्यःशब्दस्तेनैव शब्देनजन्यते॰ तेनचापरस्तद्व्यापकः एवंक्रमेणश्रोत्रोत्पन्नोगृह्यतइति कदम्बगोलकन्यायादिति । आद्यशब्दाद्दशदिक्षु॰ दशशब्दाउत्पद्यन्ते । ततश्चान्येदशशब्दाउत्पद्यन्ते॰ इतिभावः । अस्मिन्कल्पे गौरवादुक्तंकस्यचिन्मतइति । ननुशब्दस्यनित्यत्वादुत्पत्तिःकथमत॰ आह । उत्पन्नःकइति । शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः । ननुसएवायंककारइत्यादिप्रत्यभिज्ञानाच्छब्दानांनित्यत्वम् । इत्यंचोत्पादविनाशबुद्धिर्भ्रमरूपाचेत्यतआह । सोयं कइतिबुद्धिस्तुसाजात्यमवलम्बतेइत्यादि । तथप्रत्यभिज्ञानस्य तत्सजातीयत्वंविषयः । ननुतद्व्यक्त्यभेदोविषयः॰ उक्तप्रतीतिविरोधात् । इत्यप्रत्ययोरपिबुद्धयोर्भ्रमत्वमिति । ननुसजातीयत्वंसोयमिति प्रत्यभिज्ञायांभासते॰ इतिकुत्रदृष्टमित्यतआह । तदेवेति । यदौषधंमयाकृतंतदेवान्येनापिकृतमित्यौ

दिदर्शनादिति भावः इति मुक्तावली ॥ अथ प्रवाक्यं आप्तश्रुतिराप्तवचनं त्विति साङ्ख्याः । आप्तवचनमिति लक्ष्यनिर्देशः । शेषं लक्षणम् । आप्ताः प्राप्ता युक्तमिति यावत् । आप्ता चासौ श्रुतिश्च आप्तश्रुतिः श्रुतिः वाक्यजनितं वाक्यार्थज्ञानम् । तच्च स्वतःप्रमाणम् । अपौरुषेयवेदजनितत्वेन सकलदोषाशङ्काविनिर्मुक्तं युक्तं भवति । एवं वेदमूलस्मृतीतिहासपुराणवाक्यजनितमपि ज्ञानं युक्तम् । आदिविदुषः कपिलस्य कल्पादौ कल्पान्तराधीतश्रुतिस्मरणसम्भवः सुप्तप्रतिबुद्धस्येव पूर्वेद्युरवगतानामर्थानामन्येद्युः । तथा चावट्यजैगीषव्ययोः संवादे भगवान् जैगीषव्यो दशमहाकल्पवर्त्तिजन्मस्मरणमात्मन उवाच । दशसु महाकल्पेषु परिवर्त्तमानेन मयेत्यादिना ग्रन्थसन्दर्भेण । आप्तग्रहणेन च अयुक्ताः शाक्यभिक्षुकनिर्ग्रन्थकसंसारमोचकादीनामागमाभासाः परिहृता भवन्ति । अयुक्तत्वञ्चैतेषां विगानाद्विच्छिन्नमूलत्वात् प्रमाणविरुद्धार्थाभिधानात् कैश्चिदेव म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः परिग्रहाद्बोद्धव्यम् । तु शब्देनानुमानाद्व्यवच्छिनत्ति । वाक्यार्थो हि प्रमेयः न तु तद्धर्मो वा-



क्यं येन तत्र लिङ्गं भवेत् । न च वाक्यं वाक्यार्थं बोधयत् सम्बन्धग्रहणमपेक्षते । अभिनवकविरचितस्य वाक्यस्यादृष्टपूर्वस्याननुभूतचरवाक्यार्थबोधकत्वादिति । अध्ययनकार्यः शब्दः । शब्द इति शब्दजनितमर्थस्वरूपज्ञानमुपलक्षयति कार्ये कारणोपचारात् । साद्वितीया सिद्धिः सुतारमुच्यते । तदिदं द्विधा श्रवणम् । अन्येन पाठितं यच्च साङ्ख्यशास्त्रपाठमन्यदीयमाकर्ण्य तत्त्वज्ञानमुत्पद्यते सा सिद्धिः शब्दः शब्दपाठानन्तरं भावात् । इति माठराः ॥ आप्तोपदेशः शब्दः इति गौतमसूत्रम् । अस्यार्थः । शब्द इति लक्ष्यकथनं तदर्थः प्रमाणशब्द इति । आप्तोपदेश इति लक्षणम् । आप्तः प्रकृतवाक्यार्थयथार्थज्ञानवान् । तस्योपदेश इत्यर्थः । प्रकृतवाक्यार्थे यथार्थज्ञानप्रयुक्तः शब्द इति फलितार्थः । अथवा । आप्तो यथार्थ उपदेशः शब्दो बोधो यस्मात् तत् । शाब्दत्वञ्च जातिविशेषः । तथा च यथार्थशाब्दज्ञानकरणत्वमर्थः । अत्र च विशेष्यावच्छिन्नप्रकारकत्वतद्वति तत्प्रकारकत्वादिप्रमालक्षणानामैक्यम् । लक्षणपरस्य लक्ष्यतावच्छेदकीनिवेशनीयमतो नाभेदः ॥ ७ ॥ विभजते । स द्विविधो दृष्टा-

दृष्टार्थत्वात् । स प्रमाणशब्दः शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणगम्यार्थको दृष्टार्थकः । शब्दतदुपजीविप्रमाणमात्रगम्यार्थकोऽदृष्टार्थकः । तथाच दृष्टार्थकत्वादृष्टार्थकत्वभेदात् प्रमाणशब्दस्य द्वैविध्यमित्यर्थः ॥ ८ ॥ शप्यते । शपआक्रोशे । शाशपिभ्यां ददनाविति दन् ॥ शास्त्रे शब्दस्तु वाचक इति । शास्त्रे॰ व्याकरणादिशास्त्रे॰ यो वाचकः साधुशब्दः॰ स एव निरुपपदेन शब्दशब्देनाभ्युपगम्यते न ध्वनिर्न चापभ्रंशः । स द्विविधो लौकिकवैदिकभेदात् । तत्र गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इति लौकिकः । शन्नो देवीरभिष्टये॰ इषे त्वोर्जे त्वा । अग्निमीले पुरोहितम्॰ अग्न आयाहि वीतय इति वैदिक इत्यर्थः ॥ वाक्यसन्दर्भे ॥ अस्य प्रयोगविषयो यथा । महान् शब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्नाः । एकशतमध्वर्युशाखाः । सहस्रवर्त्मा सामवेदः । एकविंशतिधा बाह्वृच्यम् । नवधाथर्वणो वेदः । वाकोवाक्यम् । इतिहासः । पुराणम् । वैद्यकमित्येतावाञ्छब्दस्य प्रयोगविषयः । एतावन्तं शब्दस्य प्रयोगविषयमननुनिशम्य सन्त्यप्रयुक्ता इति वचनं केवलं साहसमेव । एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते । तद्यथा । शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति । विकार एवैनमार्या भाषन्ते शव इति । हम्मतिः सुराष्ट्रेषु रंहतिः । प्राच्यमध्यमेषु गमिमेव त्वार्याः प्रयुञ्जते । दातिर्लवनार्थे प्राच्येषु॰ दात्रमुदीच्येषु । इति महाभाष्यम् । शवतेर्मृतावस्थाविकारस्य चेत्यर्थः ॥ इति कैयटः ॥ शब्दश्चतुर्विधः । जातिगुणक्रियायदृच्छाशब्दभेदात् । तत्र जातिशब्दो यथा गौरश्वः पुरुषो हस्ती शकुनिर्ब्राह्मण इत्यादिः । गुणशब्दो नीलो हरित इत्यादिः । क्रियाशब्दः पचति पठति गच्छतीत्यादिः । यदृच्छाशब्दो डित्थो डवित्थश्चाखण्डलो बालखण्डस इत्यादिः ॥

शब्दकोषः । पुं॰ शब्दसमूहे ॥ शब्दानां कोषोऽर्थसमूहः शब्दकोषः ॥

शब्दग्रहः । पुं॰ कर्णे ॥ शब्दो गृह्यतेऽनेन । ग्रहवृदृनिश्चिगमश्चेत्यप् ॥

शब्दनः । त्रि॰ शब्दकारकः । रवणः ॥ शब्दयतीति तच्छीलः । शब्द शब्दक्रियायाम् । चलनशब्दार्थादिति युच् ॥

शब्दब्रह्म । न॰ वेदे ॥

शब्दभावना । स्त्री॰ शाब्दीभावनायाम् ॥ शब्दस्य भावना ॥ प्रेरणाधर्मकः

शः शब्दव्यापारः स्वज्ञानकरणकः स्तुत्यादिज्ञानेतिकर्तव्यताकः पुरुषप्रयत्नभाव्यनिष्टः शब्दभावनोच्यते ॥

शब्दभेदी । पुं॰ अर्जुने । तृतीयेपाण्डवे ॥ भेदनंभेदः । सोऽस्यास्ति॰ भेदी । शब्दस्य भेदी, बाणविशेषे । इ॰ रामायणम् ॥

शब्दयन् । त्रि॰ व्याहरति ॥ शब्दशब्दात् ॰ तत्करोतीतिण्यन्तात्लट : शतृ प्रत्ययः । स्त्री॰ ङीप् ।

शब्दयोनिः । पुं॰ भ्वेधस्पर्द्धादिधातुषु ॥ शब्दस्यनाम्नोयोनि : ॥

शब्दवृत्तिः । स्त्री॰ शब्दप्रवृत्तौ ॥ साचचतुर्विधा यथा । तत्स्थतद्धर्मताभ्यांस्वतत्समीपतयापिच । तस्माच्चर्याच्छब्दानांवृत्तिरुक्ताचतुर्विधा ॥ साच॰ मुख्यलक्षणागुणभेदेन॰ त्रिधा । मुख्यापिरूढियोगभेदेनद्विधारूढिस्वरूपेणजात्यागुणेनवा-निर्देशार्हेवस्तुनि॰ संज्ञासंज्ञिसङ्केतेन॰प्रवर्त्तते । यथा॰डित्थः डवित्थः ॰गौः शुक्लइति । लक्षणाचतेनैवसङ्केतेनाभिहितार्थसम्बन्धिनि । यथागङ्गायांघोषइति । गौणीच॰ अभिहितार्थलक्षितगुणयुक्तेतस्मद्दृशे । यथा॰ सिंहोदेवदत्तइति । योगवृत्तिस्तु॰ एतत्त्रिविधवृत्तिप्रतिपादितपदार्थयोः प्रकृतिप्रत्ययार्थयोर्योगेन । यथा॰ पङ्कजम्॰ औपगवः ॰पाचकइत्यादि ॰ ॥

शब्दवेधी । पुं॰ अर्जुने ॥ दशरथे ॥

शब्दस्मृतिः । स्त्री॰ व्याकरणे ।

शब्दहेतुः । पुं॰ यष्ट्यादिषु । यथा । यष्टीगुणक्रियाजातिरूढयः शब्दहेतवः । गोमान्नीलोत्पलञ्चैवपाचकोघटएवच ॥ आकाशवृत्तिशब्दानां तत्तदर्थप्रवर्तकाः ॥

शब्दाधिष्ठानम् । न॰ कर्णे ॥

शब्दानुशासनम् । न॰ प्रकृत्यादिविभागेनशब्दव्युत्पादने ॥ उक्तञ्च यथा । विविक्ताः साधवः शब्दाः प्रकृत्यादिविभागतः । ज्ञाप्यन्तेयेनतच्छास्त्रमत्रशब्दानुशासनमिति ॥ व्याकरणस्येदमन्वर्थ[illegible]नुशासनमिति॰

शब्दार्थः । पुं॰ [illegible] नविषये । वस्त्वाकृतौ ॥ शब्दस्यअर्थः ॥ यत्परः शब्दः सशब्दार्थ इतिमीमांसकाः ॥ संयोगोविप्रयोगश्चसाहचर्यंविरोधिता । अर्थः प्रकरणंलिङ्गं शब्दस्यान्यस्यसन्निधिः ॥ सामर्थ्यमौचितीदेशः कालोव्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदेविशेषस्मृतिहेतवः ॥

शब्दितम् । त्रि॰ भाषिते ॥ गीते । प्रतिपादिते ॥ शब्दसंशब्दनेचौरादिकः । कर्मणिक्तः ॥

शम् । अ॰ कल्याणे ॥ सुखे ॥ शास्त्रे

शमः । पुं॰ शान्तौ । विषयेभ्यइन्द्रियोपरतौ ॥ मोक्षे ॥ अन्तरिन्द्रियनिग्र

वे । अन्त : करणोपरमे ॥ मनोने
स्थ्ये ॥ मन : प्रसादे ॥ अन्त : क
रणस्य विषयेभ्यो निवृत्तौ ॥ अथवा
ब्रिव्यतिरिक्तविषयेभ्यो मनसो निव
र्तने ॥ उपशान्तौ ॥ सर्वकर्मसंन्या
से ॥ सदैववासनात्याग : शमोयमि
तिशब्दित : ॥ शमनम् । शम
उपशमे । भावेघञ् ॥ नोदात्तोप
देशेतिवृद्ध्यभाव : ॥ शान्तिरसे ॥
शाम्यतेऽनेनेतिव्याख्यानात् ॥ पा
णौ । शये । हस्ते । शाम्यतिकण्डू
र्मनेनेति । इलर्थेतिघञ् ॥ उप
चारे । चिकित्सायाम् ॥

शमक : । त्रि॰ शान्तिकारके ॥

शमथ : । त्रि॰ शान्तौ । मन्त्रिणि ॥
शमनम् । शम॰ । शमादिभ्योऽथच्
॥ शाम्यतिशा । बाहुलकादाथप्रत्य
य : ॥

शमन : । पुं॰ यमराजे । यमे । श्रा
द्धदेवे । अन्तके । पितृपतौ । मृग
विशेषे । कलापे ॥ न॰ शान्तौ ॥
वधे । हिंसायाम् ॥ परम्परायाम् ।
प्रोक्षणे । यज्ञार्थपशुहनने ॥ चर्व
णे ॥ शमयति । शम॰ । णिजन्ता
ल्ल्युः । भावेल्युट्वा ॥

शमनस्वसा । स्त्री॰ कालिन्द्याम् । य
मुनायाम् ॥ शमनस्यस्वसा ॥

शमनी । स्त्री॰ उन्मूलिन्याम् ॥

शमनीषद : । पुं॰ निशाचरे । राक्ष

से ॥

शमपरा । स्त्री॰ तीर्थप्रभेदे ॥

शमयिता । त्रि॰ विनाशके ॥

शमल : । पुं॰ अपराधे ॥ न॰ विष्ठा
याम् ॥ शम्यते । शाम्यतिवा ।
शम॰ । शकिशम्योर्नित्पिदितिकल : ॥

शमसुखम् । न॰ शान्त्यानन्दे ॥

शमादिषट्कम् । न॰ शमदमोपरति
तितिक्षासमाधानश्रद्धास् ॥ शमा
दीनांषट्कम् ॥

शमात्मक : । पुं॰ कामदेवे ॥ पु॰
त्रि॰ शेष : ॥

शमि : । स्त्री॰ शिम्बायाम् ॥ शाम्य
ति । शम॰ । सर्वधातुभ्यइन् ॥

शमित : । त्रि॰ शान्ते । शीतीभूतस
क्ते ॥ शम्यतेस्म । शम॰ । क्त : ।
वादान्तशान्तेतिपक्षे साधु : ॥ वि
नाशिते ॥ निर्वापिते ॥

शमी । त्रि॰ शान्ते ॥

शमिर : । पुं॰ शमीवृक्षे ॥

शमी । स्त्री॰ सक्तुफलायाम् । शिबे
याम् । कौंकरा॰ छोटी॰ इ॰ भा॰ प्र॰
वृक्षे ॥ अस्या : गुणायथा । शमी
तिक्ताकटु : शीताकषायारेचनील
घु : । कम्पकासज्वरश्वासकुष्ठार्श :
कृमिजित्स्मृता ॥ शिम्बिकाया
म् ॥ वल्ल्याम् ॥ शाम्यति ।
शम॰ । अच् । गौरादि : । यद्वा
। शमयतिरोगान् । शमेरन्तान्डी

ष् ॥

शमीकः । पुं॰ मुनिविशेषे ॥ शाम्यति । शम॰ । अलीकादित्वादीकन् ॥

शमीगर्भः । पुं॰ ब्राह्मणे ॥ अग्नौ ॥

शमीजः । पुं॰ शमीधान्ये ॥

शमीधान्यम् । न॰ वैदले । माषादौ । यथा । मुद्गामसूराराजमाषः कुलत्थ स्वयकस्तिलः । काकाण्डाचीवरश्च तिशमीधान्यगणः स्मृतः ॥ शम्याधान्यम् ॥

शमीपत्रा । स्त्री॰ खदिरिकायाम् । लज्जालौ । शमीपत्रसदृशानिपत्राणियस्या सा ॥

शमीफलम् । न॰ शम्याः फले । सागर॰ सैगर॰ कु॰ भा॰ प्र॰ । यथा । शमीफलंकोमलबीजसम्मितंतमोदके स्वेदितमिवकेवलम् । प्रलेहयोगेविधिनाविपाचितंसराजिकंवादधिसैन्धवान्वितम् ॥ शमीफलंलघूष्णन्दु कुष्ठार्शः कफहृत्सरम् । सुरुच्यंनिष्फलंरूक्षंमेध्यंपापविनाशनम् ॥

शमीरः । पुं॰ अल्पायांशम्याम् । ह्रस्वाशमीत्यर्थे॰ कुटीशमीशुण्डाभ्यो रः ॥

शम्पा । स्त्री॰ शतह्रदायाम् । विद्युति ॥ भयङ्करत्वात्॰ शंसुखंपिबति । पा॰ । आतोनुपेतिकः । टाप् ॥

शम्पाकः । पुं॰ आरग्वधे । चतुरङ्गुले ॥ शङ्कल्याणंपाकोस्य ॥ विपाके ॥ पाचके ॥

शम्पातः । पुं॰ आरग्वधे ॥

शम्बः । पुं॰ शंवे । मुसलाग्रस्थलौहमण्डलके ॥ लौहकाञ्च्याम् । पवौ ॥ शम्बसम्बन्धे॰ चुरादिः । शम्बयतिसम्बयतिशम्बन् दन्त्यवियते पवर्गतृतीयः । अच् ॥ प्रतिलोमे । द्वितीयकर्षणे ॥ यथा । शम्बाकरोति॰ अनुलोमंकृष्ट्वाच प्रतिलोमं कर्षतीत्यर्थः ॥ कृञोद्वितीयेतिडाच् ॥ त्रि॰ शुभान्विते ॥ शमस्यास्ति । कंशम्भ्यामितिवः ॥ यद्वा । शाम्यति । शम॰ । शमेर्वन् ॥ दन्त्योष्ठ्यः चोष्ठ्यवानपि ॥

शम्बरः । पुं॰ गवयाम्बुकृतिमृगविशेषे । साम्बर॰ कु॰ भा॰ प्र॰ ॥ अस्यमांसगुणाः । शम्बरस्यापलंस्निग्धंशीतलंगुरुवृंहितम् । रसेपाकेचमधुरं कफदंरक्तपित्तहृत् ॥ दैत्यविशेषे ॥ मत्स्यप्रभेदे ॥ गिरिविशेषे ॥ शंवृणोति । वृञ॰ । पचाद्यच् ॥ शंवंसंवरणंरातिवा । कः ॥ शंवयति । शाम्बूलकादर्ह्वेतिवा । शमिधातोः संज्ञायामित्युज्वा ॥ न॰ सलिले । जले ॥ चित्ते ॥ बौद्धव्रतविशेषे ॥

शम्बरकन्दः । पुं॰ वाराहीकन्दे ॥

शम्बरचन्दनम् । न॰ चन्दनविशेषे । कीरातीबहुलगन्धे ॥

शम्बरविद्या । स्त्री॰ मायायाम् । म

म्बरस्य दैत्यविशेषस्य रिपुः ॥

शम्बरसूदनः । पुं॰ मदने । कामदेवे ॥ शम्बरं दैत्यविशेषं॰ सूदितवान्॰ सूदयति वा । सूद॰ । नन्द्यादित्वात् ल्युः ॥

शम्बरारिः । पुं॰ मनसिजे । कामे ॥ शम्बरस्य दैत्यविशेषस्य॰ व्रतविशेषस्य वा॰ अरिः शत्रुः ॥

शम्बरी । स्त्री॰ आखुपर्ण्याम् ॥ मायायाम् ॥ शं वृणोति । वृञ्॰ । शमि धातोरित्यच् । गौरादिः ॥

शम्बलः । पुं॰ न॰ कूले । तटे ॥ पाथेये ॥ मत्सरे ॥ शम्बयति । शम्ब॰ । बाहुलकात् कलः ॥

शम्बली । स्त्री॰ कुट्टन्याम् ॥ शं सुखं॰ बलति॰ बलति वा ; बलसंवरणे॰ बलप्राणने वा । पचाद्यच् । गौरादिः ॥

शम्बाकृतम् । त्रि॰ द्विवारकृष्टक्षेत्रे । द्वितीयाकृते ॥ शमस्यास्ति । शं शम्बामिति वः । शं शब्दो द्वितीयकर्षे वर्त्तते । शं व कृतम् । कृञो द्वितीयतृतीयशंबबीजात् कृषाविति डाच् ॥ यद्वा । शं व शब्दः प्रतिलोमे । अनुलोमेन कृष्टं च पुनः प्रतिलोमेन कृष्टमित्यर्थः ॥

शम्बुः पुं॰ शम्बूके ॥ यथा । शम्बूकः शम्बुकोऽप्यथ पूर्वः का म्बुस्तु सर्वदा । कर्कारेयविनाशिनी इष्यते यन्यविस्तरे ॥ इति भट्टचन्द्रः ॥

शम्बुकः पुं॰ शम्बूके ॥ शमेर्बाहुलकादुकप्रत्ययो बुगागमश्च ॥ शम्बूकमपि शम्बुकमिति द्विरूपकोषः ॥

शम्बुकः पुं॰ जलशुक्तौ ॥

शम्बूकः । पुं॰ गजकुम्भान्ते । जलशुक्तिकायाम् ॥ शूद्रतापसे ॥ जलजन्तुविशेषे ॥ दैत्यविशेषे ॥ शङ्खे ॥ शाम्यति । शम॰ । उलूकादयश्चेत्यूकोबुक् च ॥ क्षुद्रशङ्खे ॥

शम्बूकपुष्पी । स्त्री॰ शङ्खपुष्प्याम् ॥

शम्बूका । स्त्री॰ जलशुक्तौ ॥

शम्भलः । पुं॰ ग्रामविशेषे ॥ तत्रच द्वितीयातिनिसामि॰ कल्कीचाविर्भूय सहस्रंसमाः स्थास्यति ॥

शम्भली । स्त्री॰ कुट्टन्याम् ॥ शं सुखं भलति । भलपरिभाषणे । पचाद्यच् । गौरादिः ॥

शम्भुः । पुं॰ महादेवे । ईशे । शिवे ॥ परमेष्ठिनि । ब्रह्मणि ॥ विष्णौ ॥ सिद्धे ॥ अर्हति ॥ श्वेतार्कपादपे ॥ शं सुखं भवति॰ भावयति भू॰ । मितद्र्वादित्वाड्डुः ॥ यद्वा । शं भवत्यस्मात् । भू सत्तायाम् । भू प्राप्तौ वा । बाहुलकाद्पादानेपि॰ मितद्र्वादि

त्वाद्भुः । वर्ण्णवृत्तविशेषे ॥ यथा ।
कुरुपाणिकङ्कणयुग्मालङ्कृतमपरमं
शारत्वम्० चरणं सन्नूपुरसंयुक्तंकु
रुकर्णं राजत्ताटङ्कम् । रसनामा
योजयमञ्जीरद्वयमेव शम्भुंसद्वृत्तम्
०भुविकान्तं गौरिचिरं सम्भावयतन्ना
गाधीशेनोक्तम् । यथा । जयमावामा
नवमूर्त्ते दानववंशध्वंसव्यापारौ०
वलमायोद्वावचहृत्याकारवलक्ष्मा
लक्ष्मीसंहारी । कृतकंसध्वंसनध
र्माशं सनगोगोपीगोपानन्दौ०वलि
लक्ष्मीशासनलीलावामनदैत्यशे
षौनिष्क्रान्तौ ॥

शम्भुतनयः । पुं० कार्त्तिकेये ॥ ग
णेशे ॥

शम्भुतिथिः । स्त्री० चतुर्द्दश्याम् ॥

शम्भुनन्दनः । पुं० कार्त्तिकेये ॥
गणेशे ॥ शंभोर्नन्दनः ।

शम्भुप्रिया । स्त्री० गौर्य्याम् ॥ आम
लक्याम् । शम्भोः प्रिया ॥

शम्भुवल्लभम् । न० श्वेतकमले ॥
त्रि० शिवप्रिये ॥

शम्या । स्त्री० युगकीलके ॥ शम्य
तेऽनया । शम० अघ्न्यादिः ॥
यज्ञाङ्गभूतेशूलाकारकाष्ठविशेषे ॥
दक्षिणहस्तगृहीततालविशेषे ॥ य
ष्ट्याम् ॥ यथा । धनुः शतंपरी
णाहोऽयामस्त्वाप्तसमन्ततः । श
म्यापातात्त्रयोवापि० त्रिगुणोनग

रस्तु ॥ चक्रमस्यायष्टिरितिकुल्लू
कभट्टः ॥

शम्याक्षेपः । पुं० भ्रमितक्षिप्तयष्टि
प्राप्तयावत्भूप्रदेशे । शम्यापाते ॥

शम्यापातः । पुं० शम्याक्षेपे ॥ य
था । भ्रामयित्वाबहुगुणांयष्टिः क्षि
प्तासमाप्नुयात् । भुवः प्रदेशंयाव
न्तंशम्यापातः सउच्यते ॥

शम्याप्रासः । पुं० व्यासाश्रमे । य
था । ब्रह्मनद्यांसरस्वत्यामाश्रमः
पश्चिमेतटे । शम्याप्रासइतिप्रोक्त
ऋषीणांसत्रवर्द्धनइति ॥

शयः । पुं० शय्यायाम् ॥ पञ्चशा
खे । पाणौ । शेतेऽस्मिन्सर्वम् ।
शीङ्स्वप्ने । पुंसीतिघः ॥ [illegible]
॥ निद्रायाम् । पणे ॥

शयण्डः । पुं० निद्रालौ । शयालौ ॥

शयथः । पुं० अजगरे ॥ निद्रालौ ।
मरणे ॥ शेते । शीङ्शपिरुग
मिवञ्चिजीविप्राणिभ्योऽथः । म
त्स्ये । वराहे ॥

शयनम् । न० शय्यायाम् ॥ निद्रा
याम् ॥ करणानामुपशमे ॥ सुर
ते । मैथुने ॥ शीङोभावेल्युट्
॥ शय्यतेऽत्र । अधिकरणेल्युड्वा
॥ शयनेविशेषोयथा । श्वासान
ष्टौसमुत्तानस्तावृद्धिः १६ पार्श्वे
चदक्षिणे । ततस्तुद्विगुणान् ३२
वामेपश्चात्स्वप्यात्यथासुखम्बा ॥

मद्दिशायामनलोनाभेरूर्द्ध्वमस्ति जन्तूनाम् । तस्मात्तु वामपार्श्वे शयीत भुक्तप्रपाकार्थम् ॥

शयनासनम् । न० शयनपृष्ठे । आस्यतेऽस्मिन् । आस० । करणाधिकरणयोरितिल्युट् । शयनस्य आसनम् ॥

शयनीयम् । न० शय्यायाम् ॥ शेते० शय्यतेऽनया । कृत्यल्युटइत्यधिकरणे शीङोऽनीयर् । त्रि० शयनयोग्ये ॥

शयनीयकम् । न० शय्यायाम् ॥

शयानः । त्रि० शय्यानिहिताङ्गे । शय्यायां सुप्ते । शयाना भुञ्जते यवनाः । भुजिक्रियायाः शयनं लक्षणम् । लक्षणहेत्वोः क्रियायाइति लटः शानच् । निद्राकृते ॥ शयानं न प्रबोधयेत् ॥ विश्रान्ते ॥

शयानकः । पुं० अजगरे ॥ कृकलासे ॥ शेते । आनकः शीङभिय ॥

शयालुः । पुं० वाहसे । अजगरे ॥ कुक्कुरे । शुनि ॥ स्तनकात्मके । शृगाले । सियाल० सयाल० बू० भा० प्र० त्रि० निद्रालौ । स्वप्नजि । निद्रालु० हू० भा० प्र० ॥ शयनशीलः । शीङोवाच्यवृत्यालुच् ॥

शयितः । पुं० शेलौ । श्लेष्मात्मके । वसन्तकुसुमे । त्रि० निद्रिते । निद्राणे । शेते स्म । शीङ० । अकर्मकात्कर्त्तरिक्तः । निष्ठाशीङिति न कित्वम् । स्थिते ॥

शयितवान् । त्रि० निद्रिते ॥ शेते स्म । शीङोऽकर्मकात्कर्त्तरि क्तवतुः । निष्ठाशीङ्स्विदिमिदिक्ष्विदिधृषइति न कित्वम् ॥

शयिता । त्रि० शयनकर्त्तरि ॥

शयुः । पुं० वाहसे । अजगरे ॥ शेते । भृ० मृ० शी० तृ० चरि० तनि० धनि० मि० मस्जिभ्यउः ॥

शयुनः । पुं० अजगरे ॥ शेतेऽत्यर्थम् । अजि० यमि० शीङभ्यश्चेति शीङउनम् ॥

शय्या । स्त्री० शयनीये । तूलिकाद्यास्तरणविशेषे ॥ शय्यतेऽत्र० शेतेऽस्यां वा । संज्ञायांसमजेतिशीङः क्यप् । अयङ्यिक्ङितीति शीङोऽयङादेशः । खट्वादौ । गुम्फने । शब्दगुम्फे ।

शय्याजन्तुः । पुं० मत्कुणे ।

शरः । पुं० तेजनके । गुन्द्रे ॥ बाणे । काण्डे ॥ दध्यग्रे । दधिसारे ॥ न० सलिले । नीरे । जले ॥ शृणाति० अनेन वा । शृहिंसायाम् । अच्० ऋदोरब्वा ॥

शरजम् । न० हैयङ्गवीने ।

शरजन्मा । पुं० षडानने । स्कन्दे ॥ शरेषुजन्मास्य ॥

शरटः । पुं० सरटे ॥ शृणाति । शकादिभ्योऽटन् ॥ कुसुम्भशाके ।

शरणम् । न० गृहे । रक्षितरि । व
धे ॥ रक्षणे ॥ श्रीधरस्तु : शम
स्मिन्निति व्युत्पत्त्या प्रपन्नानामार्त्ति
हृति । यथा । शरणं नहि मम जन
नी न पिता न सुता न सोदरा नान्ये ।
परमं शरणमिदमेव चरणं मम मूर्द्धनि दे
शिकन्यस्तमिति ॥ आश्रये ॥ घा
तके ॥ शृणाति । शृ हिंसायाम् ।
ल्युट् । भावे वा ॥

शरणद : । पुं० रक्षाप्रदातरि० ई
श्वरे । त्रि० शरणदातरि ॥

शरणा । स्त्री० प्रसारण्याम् ।

शरणागत : । त्रि० आश्रिते । शर
णापन्ने । शरणार्थिनि ॥ शरणे
आगत : । शास्त्रेषु निष्कृतिर्दृष्टा
महापातकिनामपि । शरणागत
हन्तुस्तु न दृष्टा निष्कृति : क्वचित् ॥
शरणागतमार्त्तं स्वार्थाज्जहाति नराध
म: । स एव नरकं याति यावदाहूतस
म्प्लवम् ॥

शरणागति : । स्त्री० शरणागमने ।
सा षड्विधा यथा । आनुकूल्यस्य स
ङ्कल्प : प्रातिकूल्यस्य वर्ज्जनम् ।
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं
तथा ॥ आत्मनिक्षेपकार्पण्ये ष-
ड्विधा शरणागति : ॥

शरणार्थी । त्रि० शरणागते । अनु
गते ॥

शरणापन्न : । पुं० शरणापन्ने । स
स्वारोचिषि ॥

शरणि : । स्त्री० पथि ॥ शृ० । वा
हुलकादनि : ॥ आवली ॥ शर
णिं हिंसामिति वेदभाष्यम् ॥ पृथ्
व्याम् ॥

शरणी । स्त्री० पथि ॥ प्रसारण्याम्
॥ जयन्त्याम् । जयावृक्षे ।

शरण्ड : । पुं० धूर्त्ते ॥ शरटे । भू
षणान्तरे ॥ पक्षिणि ॥ कामुके ॥
चतुष्पदे ॥

शरण्य : । त्रि० आर्त्तस्य रक्षितरि ।
त्रातरि ॥ शरणे रक्षणे साधु : ।
तत्र साधुरिति यत् ॥ शृणाति भयं
वा । शृ० । शृरम्यो रेत्यन्य : । श
रणमिव वा । शाखादिभ्यो य : ॥

शरण्या । स्त्री० शरणार्हायाम् । दुर्गा
याम् ॥ यथा । विषाग्निभयघोरे
षु शरण्या शरणागत : । शरण्याति
न सा देवी मुनिभि: परिकीर्त्तिता ॥

शरण्यु : । पुं० वारिदे ॥ वाते ॥

शरत्कम् । न० तृणप्रभेदे ॥

शरत्कामी । पुं० कुक्कुरे ॥

शरत्पद्मम् । न० सिताम्बुजे ॥

शरत्पर्व्व । न० दुर्गोत्सवे । कोजा
गरे ॥

शरत्पुष्पम् । न० आहुल्य० क्षुपे ।
हलरास्ये । तगरे । मस्त्रीफले ।
सुपुष्पे । पीतपुष्पे । काश्मीरे तरव
टनाम प्रसिद्धे । शारदपुष्पमात्रे ॥

शरत्‌॰द्‌। स्त्री॰ हायने। संवत्सरे। वर्षे॥ शृणाति भावान्‌। शृ हिंसायाम्‌। शृदृभसोऽदिः॥ ऋतुविशेषे। आश्विनकार्त्तिकयोः॥ वर्षावसाने॥ शीर्यन्तेऽस्यांपाकिनो ओषधयः। पूर्व्ववददिः॥ तज्जातस्य फलं यथा। नरः शरत्संज्ञककालजन्मा भवेत्सुकर्मा मनुजस्तरस्वी। शुचिः सुशीलो गुणवान्‌ सुमानी धनान्वितो राजकुलप्रपन्नः॥

शरदः। त्रि॰ शरवर्षिणि॥ शरं ददाति। डुदाञ्‌॰। आतश्चोपसर्गे इति कः॥

शरदन्तः। पुं॰ हेमन्ते॥ शरदोऽन्तोऽस्मिन्‌॥

शरदा। स्त्री॰ सम्वत्सरे॥ शरदृतौ॥ शरदो भागुरिमतेटाप्‌॥

शरदिजः। त्रि॰ शरत्कालजाते॥

शरदुदाशयम्‌। न॰ शरत्कालिकेसरोवरे॥

शरधिः। पुं॰ तूणे। तूणीरे॥ शरा धीयन्तेऽस्मिन्‌। डुधाञ्‌॰। उपसर्गे घोः किः। कित्वादाकारलोपः॥

शरपर्णी। स्त्री॰ ओषधिविशेषे॥

शरपुङ्खः। पुं॰ शोहगवी। सरफोंका॰ इ॰ भा॰ प्र॰ ओषधौ॥ अस्य गुणा यथा। शरपुङ्खो यकृत्‌ प्लीहगुल्मव्रणविषापहः। तिक्तः कषायः कासासज्वरश्वासहरो लघुः॥

शरभः। पुं॰ मृगेन्द्रविशेषे। महाऋषौ। अष्टापदे। महासिंहे। पर्वताश्रये॥ अस्य लक्षणं यथा महाभारते। अष्टपादूर्द्ध्वनयन ऊर्द्ध्वपादचतुष्टयः। सिंहं हन्तुं समायाति शरभो वनगोचर इति॥ शृणाति। शृ॰। कृशृशलिकलिगर्द्दिभ्योऽभच्‌॥ करभे उष्ट्रे। वानरविशेषे॥ हरौ। विष्णौ॥ शीर्यन्त इति। शराः शरीराणि॰ शीर्यमाणत्वात्‌॰ तेषु प्रत्यगात्मतया भाति। भा दीप्तौ। आतश्चोपसर्गे इति कः॥ पतङ्गे॥ वर्णवृत्तविशेषे॥ यथा। हिमकरतिलककलितमिहसगणं कलय शरभमिदमलिसुखकरणम्‌। कविवरसकलहृदयकृतहरणं फणिवरनरपतिवदनविहरणम्‌॥ अत्र हि ज वर शब्दस्य तुष्कलगणपञ्चमरूपवाचकत्वं तद्रूपम्‌ चतुर्लघु तेषां तत्र केनचितयेन कलितं द्वादशलघुभिरिति यावत्‌॥ यथा। सकलकमलदलरुचिधरनयनः अधिजलनिधिफणिपतिफणशयनः। दनुजविजयसुरपतिनतिमुदितो हरिरपहरतु दुरिततति मुदितः॥

शरभङ्गः। पुं॰ गौतमवंशजे। रामायणप्रसिद्धे। मुनिविशेषे॥

शरभङ्गाश्रमः। पुं॰ तीर्थविशेषे॥

शरभूः। पुं॰ पार्वतीनन्दने। स्कन्दे॥

शरभूमिजः। पुं॰ गन्धर्वे॥

शरमय:। त्रि॰ शरनिर्म्मिते॥

शरमल्ल:। पुं॰ खगविशेषे। गृध्र
लक्ष्ये॥

शरलकम्। न॰ जले॥

शरवणोद्भव:। पुं॰ स्कन्दे।

शरवाणि:। पुं॰ शरमुखे। शरजी
विनि। पदाती॥

शरबीजम्। न॰ चातुर्थे। बीटुका
स्ये॥

शरव्यम्। न॰ लक्ष्ये। शरविंशत्वा
र्थहितम्। उगवादिभ्योयत्। य
द्वा। शरान्व्ययति। व्येञ् संवर
णे। सम्प्रसारणाभावोड:॥

शराघात:। पुं॰ प्रचलाके। बाणा
घाती॥

शराटि:।
शराडि:। ) स्त्री॰ शरारिविहगे॥

शराति:। स्त्री॰ शरारी। आडि
विहगे। शरंनीरमतति। अत॰
सर्व्वतिभ्याश्छन्दसीच्॥

शराभ्यास:। पुं॰ उपासने। शर
क्षिपायाम्॥ शरस्यशरमोचनस्य
अभ्यास:॥

शरारि:। स्त्री॰ सुरगार्द्र॰ हृ॰ भा॰
प्र॰॥ पक्षिविशेषे। आटी। शरं
नीरमृच्छति। जगतीपचत्र:॥

शरारु:। त्रि॰ हिंस्रे॥ शृणाति।
शॄ॰। शृवन्द्योरारु:॥

शरालि:। स्त्री॰ शरारिपक्षिणि॥

शरं नीरमृच्छति। ऋ॰। अचइ:।
कपिलकादित्वाल्लत्वम्॥

शरालिका।
शराली ) स्त्री॰ शरालिविहगे॥

शराव:। पुं॰ कुडवद्वयपरिमाणे
चतु:षष्टितोलके। वैद्य॰ हृ॰
भा॰ प्र॰। माणिकायाम्॥ मृत्पा
त्रविशेषे। वर्द्धमानके। सराव॰
हृ॰ भा॰ प्र॰ शरणम्। शॄ॰।
ऋदोरप्। शृणातिवा। अप्॥
शरंशरादृणा॰ अवति। अवरक्षणा
दौ। अच्॰ अञ्चा॥

शरावती। स्त्री॰ रामात्मजस्यलवस्य
राजधान्याम्॥ नदीविशेषे॥ इय
स्वोत्तरपूर्वाभिमुखी॰ पश्चाद्दि
चपूर्वंस्त्रोव्यवस्थितोदेश: प्राग्दे-
श: उत्तरापरस्त्रोव्यवस्थितउदग्दे
श:। तथाचोक्तम्। प्रागुदञ्चौ
विभजतेहंस: क्षीरोदकंयथा। वि
दुषांशब्दसिद्ध्यर्थंसान: पातुशराव
तीति॥ शरा: सन्त्यस्याम्। मतु
प्। शरादीनाञ्चेतिदीर्घ:॥

शरावर:। पुं॰ कवचे॥ तूणीरे
॥ यथा। शरावरीशरै: पूर्णौ
विभ्रतौपश्चलक्ष्मणावेतिरामायणम्।

शरावाप:। पुं॰ धनुषि॥

शरावार्द्धम्। न॰ कुडवपरिमाणे।
दृषाविंशतोलके। आधसेरइ॰
भा॰ प्र॰ परिमाणे॥

शराश्रयः । पुं० तूणे ॥

शरासनम् । न० कोदण्डे । चापे धनुषि ॥ शरा अस्यन्तेऽनेन । अस क्षेपणे । करणे ल्युट् ॥

शरास्त्रम् । न० धनुषि ॥

शरिः । पुं० हिंस्रे ॥ शूले ॥ शृणाति । शॄ० । इन् ॥

शरिमा । पुं० प्रसवे ॥ शृणाति यौवनम् । शॄ० । हृभृधृसृशॄभ्य इमनिच् ॥

शरी । स्त्री० गुन्द्रायाम् । एरकातृणे । गौरादित्वान्ङीष् ॥

शरीरम् । न० कलेवरे । गात्रे । वपुषि । संहनने । वर्ष्मणि । विग्रहे । समग्रेन्द्रियकलापे । देवपशुमनुष्यादीनां देहे । जरायुजाण्डजोद्भिज्जस्वेदजभेदभिन्ने । पादादिशिरोन्ते ॥ शीर्यते । तत्त्वज्ञानाद्विनश्यतीति शरीरम् ॥ शरीरलक्षणं यथा । चेष्टेन्द्रियार्थाश्रयः शरीरमिति गौतमः ॥ अत्र चेष्टादिमिलिताश्रयत्वं न लक्षणम् । वैयर्थ्यात् । अपि तु । आश्रयपदस्य प्रत्येकमन्वयः । चेष्टाश्रयत्वादिलक्षणत्रयमिति तात्पर्यम् । चेष्टात्वञ्च । प्रयत्नजन्यतावच्छेदकजातिविशेषः । न च शरीरावयवेऽतिव्याप्तिः अन्त्यावयवित्वेन विशेषणात् । न च निष्क्रियशरीरेऽव्याप्तिः । तादृशमात्राभावात् । अतएवाह । इन्द्रियाश्रय इति । इन्द्रियाश्रयत्वञ्च । अवच्छेदकताख्यस्वरूपसम्बन्धविशेषेण । अस्मत्पादे वेदनीयमित्यादिप्रतीतेः । अर्थाश्रयत्वमित्यत्रार्थशब्दो गन्धरूपादिपरः । तदाश्रयत्वस्य घटादावतिव्याप्तेः । किन्तु सुखदुःखान्यतरपरः । अतएव भाष्यं । यस्मिन्नायतने सुखदुःखयोः प्रतिसंवेदनं प्रवर्त्तते । स एषामाश्रयस्तच्छरीरमिति । वस्तुतस्त्वन्यतराश्रयत्वमपि तल्लक्षणम् । किन्तु । सुखाश्रयत्वं दुःखाश्रयत्वञ्चेति लक्षणद्वये तात्पर्य्यम् । शरीरस्य तदाश्रयत्वमवच्छेदकतासम्बन्धेन हस्तादेरलक्ष्यत्वे त्वन्त्यावयवित्वेन विशेषणीयम् । स्वर्गिशरीरे नारकिशरीरे च यथाक्रमं सुखदुःखस्वीकारान्नाव्याप्तिः । न च तच्छून्यखण्डशरीरेऽव्याप्तिः । सुखाद्याश्रयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । तादृशजातिश्च मनुष्यत्वचैत्रत्वादिः । कल्पभेदेन नरसिंहशरीराणां भेदात् नरसिंहत्वजातिमादाय नरसिंहशरीरे लक्षणसमन्वय इति ॥ १ ॥ शृणाति । शीर्यते रोगादिना वा । शॄ० । कॄशॄपॄकटीतीरन् ॥ अर्द्धर्चादिः ॥

शरीरजः । पुं० रोगे ॥ कामे ॥ पुत्रे ॥ त्रि० देहजाते ॥ शरीरा

ण्याति । कनी० । पञ्चम्यामिति
ङ: ॥

शरीरभाक् । त्रि० देहभाजि । भजो
ण्वि: ।

शरीरभृत् । पुं० प्राणिनि ॥ शरीरं
बिभर्त्ति । भृञ: क्विप् ॥ वि
ष्णौ । ईश्वरे ॥ शरीरिणांश
रीराणिअन्नरूपेणपोषयन् । प्राण
रूपेणवाधारयन्० शरीरभृत् । स्व
मायया शरीराणिबिभर्त्ति वा । डु
भृञ्० । क्विपचेतिक्विप्तुक् ॥

शरीरयात्रा । स्त्री० वपुषःस्थितौ ॥

शरीरावरणम् । न० त्वचि । चर्म्म
णि ॥ कायवेष्टने ॥

शरीरी । पुं० जीवे । प्राणिनि ।
शरीरमस्यास्ति । अतइनिठनावि-
तीनि: ॥ घोवर्ज्ज ॥

शरु: । पुं० कोपे । क्रोधे ॥ वज्रे
॥ शरे । बाणे ॥ आयुधे ॥
शृणाति । शॄ० । शॄस्वृस्निही-
त्यु: ॥

शरेष्ट: । पुं० आम्रे ॥

शर्करक: । पुं० मधुजम्बीरे ॥

शर्करजा । स्त्री० सिताखण्डे ॥

शर्करा । स्त्री० खण्डविकृतौ । सि
तायाम् । शुक्लायाम् । चूरा०
इ० भा० प्र० ॥ मीनागडाम ।
सितोपलायाम् । चीनी० इ०
भा० प्र० ॥ उपलायाम् । अश्मरू
पायांमृदि ॥ मृत्तिकामिश्रशुष्कक्षुद्र
पाषाणेषु ॥ कर्परांशे ॥ मृत्क
पालखण्डे ॥ शर्करान्वितदेशे ॥
शकले ॥ रोगप्रभेदे ॥ यथा । प
च्यमानाश्मरीपित्ताच्छोष्यमाणाच
वायुना । विमुक्तकफसन्धाना क्षरन्ती
शर्करामता ॥ शृणाति० शीर्यतेवा
शॄ० । शॄ: करन् । शर्करास्त्य
त्र । देशेलुबिलचौचेतिमत्वर्थीय
स्याणोलुप् ॥

शर्कराचल: । पुं० दानार्थकृत्रिमे
शर्करामयेगिरिविशेषे ॥

शर्कराधेनु: । स्त्री० दानार्थशर्करा-
निर्मितायांधेनौ ॥

शर्करापुष्प: । पुं० अर्कद्रुमे ॥

शर्कराप्रभा । स्त्री० जिनामांनरक
विशेषे ॥ यथा । रत्नशर्करावालु
कापङ्कधूमतमप्रभा । महातमप्र
भावेत्यधोधोनरकभूमय इतिहेम० ॥

शर्करावान् । त्रि० सशर्करेदेशे ॥ श
र्करायाम् । शर्करिले । शार्करे
शर्करास्त्यत्र । देशेलुबिलचौचे
तिचान्मतुप् ॥

शर्करावती । स्त्री० नदीविशेषे ॥

शर्करासप्तमी । स्त्री० वैशाखशुक्लस
प्तम्याम् ॥

शर्करासव: । पुं० शर्करयाकृतेआ
सवविशेषे ॥

शर्करिल: । त्रि० शर्करावतिदेशे ॥

शर्करायाम् । शाकरे । शर्कराऽस्त्यस्य । देशे लुबिलचौ चेतीलच् ॥

शर्करी । स्त्री॰ शर्करायाम् ॥

शर्करोदकम् । न॰ शर्करान्वितपानीये । रस॰ रसवत॰ इ॰ भा॰ प्र॰ ॥ यथा ॥ शीतेन शीतलेनैव विलोलिता शुभ्रशर्करा । एलालवङ्गकर्पूरमरिचैश्च समन्विता ॥ शर्करोदकनाम्ना तत्प्रसिद्धं विदुषां मुखे । शर्करोदकमाख्यातं शुक्लं शिशिरं सरम् ॥ बल्यं रुच्यं लघु स्वादु वातपित्तास्रनाशनम् । मूर्च्छाच्छर्दितृषादाहज्वरशान्तिकरं परम् ॥

शर्द्धः । पुं॰ अपानशब्दे ॥ शर्द्धनम् । शृधु शब्दकुत्सायाम् । घञ् ॥

शर्द्धञ्जहः । पुं॰ माषे ॥ शर्द्धमपानशब्दं जहाति । ओहाक्॰ । वातशुनीतिलशर्द्धेष्वतिखश् । अरुर्द्विषदितिमुम् । जहातिरत्रान्तर्भावितण्यर्थः ॥

शर्द्धनम् । न॰ गुदशब्दे । पर्द्दे ॥

शर्म्मा । पुं॰ ब्राह्मणस्योपपदे ॥ न॰ सुखे । त्रि॰ तद्वति । शृणात्यशुभम् । शॄ॰ । सर्वधातुभ्यो मनिन् ॥

शर्म्मरः । पुं॰ वस्त्रविशेषे ॥

शर्म्मरा स्त्री॰ दारुहरिद्रायाम् ॥

शर्म्मिष्ठा । स्त्री॰ दानवेन्द्रवृषपर्वणो दुहितरि ॥

शर्य्या । स्त्री॰ रात्रौ ॥ इ॰ वाचस्पतिकोषः ॥

शर्य्यातिः । पुं॰ वैवस्वतमनोः पुत्रे ॥

शर्व्वः । पुं॰ ईश्वरे । ईशाने । शिवे ॥ शृणाति सर्वाः प्रजाः संहरति प्रलये संहारयति वा । शृणात्यसुरान् भक्तानां पापं वा । शॄ॰ । कॄगॄशॄदॄभ्यो वः ॥

शर्व्वरी । स्त्री॰ निशायाम् । यामिन्याम् ॥ स्त्रियाम् ॥ शृणाति चेष्टा । शॄ॰ । कॄगॄशॄवृञ्चतिभ्यः ष्वरच् । षित्वान् ङीष् ॥ वनिपितु॰ वनो र चेति ङीब्रौ ॥ हरिद्रायाम् ॥ वत्सरविशेषे ॥ तत्फलं यथा । क्वचिद्वर्षति पर्ज्जन्यो देशे संछन्नमण्डलः । दुर्भिक्षं शर्व्वरीवर्षे व्यवहारो विपर्य्ययः ॥ ३४ ॥

शर्व्वरीशः । पुं॰ निशापतौ । चन्द्रे ॥

शर्व्वला । स्त्री॰ तोमरास्त्रे । गँड़ासा॰ सबली॰ इ॰ भा॰ प्र॰ ॥ हस्तमध्ये सशल्यदण्डे । रायबांस॰ इ॰ गौ॰ भा॰ ॥

शर्व्वाणी । स्त्री॰ उमायाम् । कात्यायन्याम् । गौर्य्याम् ॥ शर्व्वस्य स्त्री । इन्द्रवरुणभवशर्व्वेत्यादिना ङीषानुकौ ॥ शर्व्वाणी मध्यमाभिधे । मध्यमे स्वरस्थाने इत्यर्थः ॥

शर्शरीकः । पुं॰ हिंस्रे ॥ खले । शृणाति । शॄ॰ । शॄपॄवॄञां द्वे च । अभ्यासस्येति॰ ईकन्॰ द्वित्वमभ्यासस्य रुक् ॥

शलः । पुं॰ भृङ्गिणि ॥ घोषप्रभेदे ॥ विधौ । ब्रह्मणि ॥ दीर्घायुधे । कुन्ते । विषाङ्कुरे ॥ उष्ट्रे ॥ शल्याख्यनृपे ॥ न॰ श्वाविल्लोम्नि शलल्याम् । शलति ॥ शलति । शल चलने । पचाद्यच् ॥

शलकः । पुं॰ मर्कटे । लूतायाम् । मकडो॰ मकडा॰ इ॰ भा॰ प्र॰ ॥

शलङ्गः । पुं॰ लोकपाले ॥ लवणविशेषे ॥

शलभः । पुं॰ कीटविशेषे ॥ पतङ्गे । ईतिविशेषे । टिड्डी॰ टीडी॰ इ॰ दे॰ भा॰ ॥ शलति । शल॰ । कृशृशलिकलिगर्दिभ्योऽभच् ।

शललम् । न॰ शल्ये । श्वाविल्लोम्नि । शलति । शलचलनसंवरणयोः । वृषादित्वात्कलच्चित् ॥

शलली । पुं॰ श्वाविधि ॥ शललमस्यास्ति । इनि. ॥

शलली । स्त्री॰ शलली ॥ गौरादित्वाज्जातित्वाद्वा ङीष ॥

शलाका । स्त्री॰ शल्ये ॥ मदनद्रुमे ॥ शारिकायाम् ॥ शल्ल्याम् कच्चपञ्जरादिकाष्ठ्याम् ॥ तिलि इ॰ भाषा॰ शरे ॥ चालिव्यकूर्चिकायाम् ॥ शलति । शल॰ L॰ बलाकादयश्चेति साधुः ॥ धातुमय्यामञ्जनकलिकायाम् । सलाईइ॰ भा॰ ॥

शलाकापुरुषः । पुं॰ जैनानां देवपुरुषेषु ॥ ते च त्रिषष्टिसङ्ख्यापरिमिताः ॥ तत्र द्वादशचक्रवर्त्तिनः । चतुर्विंशतिर्जिनाः । नव वासुदेवाः । नव बलदेवाः । नव प्रतिवासुदेवाः । इति ॥

शलाटः । पुं॰ शकटपरिमाणे ॥

शलाटुः । पुं॰ बिल्वे । मूलविशेषे ॥ त्रि॰ आमफले ॥ शलति । शलचलनसंवरणयोः । पचाद्यच् । अटति । अटगतौ । मृगय्वादित्वात्कुः । शलश्चासावटुश्च ॥

शलाभोलिः । पुं॰ उष्ट्रे । इ॰ हे॰ चन्द्र ॥

शलालु । न॰ सुगन्धिद्रव्यविशेषे ॥

शली । स्त्री॰ श्वाविधि ॥

शल्कम् । न॰ त्वचि । वल्कले ॥ शकले । खण्डे ॥ मत्स्यत्वचि ॥ शलति । शलचलने । इण्भीकेतिकन् ॥ शल्कैः काष्ठखण्डैरिति वेदभाष्यम् ॥

शल्कली । पुं॰ मत्स्ये । मीने ॥

शल्की । पुं॰ मीने ॥

शल्मलिः । स्त्री॰ शाल्मलितरौ ॥ शलति । शल॰ । क्विप् । मलते । मलधारणे । सर्वधातुभ्य इन् । शल्चासौ मलिश्च ॥ इ॰ द्वि॰ पः ॥

शल्मली । स्त्री॰ शाल्मलिद्रुमे ।

शल्यः । पुं॰ मदनद्रुमे । श्वाविधि ॥ नृपविशेषे । युधिष्ठिरमातुले ॥ सीम्नि । शलाकायाम् । बिल्ववृक्षे । मत्स्यविशेषे ॥ न॰ घुण्टे ॥ इषौ । शरे । तोमरे । कुन्ते ॥ वंशकम्बिकायाम् ॥ पापे । दुःखे । दुर्वाक्ये ॥ अस्थ्नि ॥ आयुर्वेदस्याङ्गविशेषे ॥ यथा सुश्रुतः । तत्र शल्यं नाम विविधतृणकाष्ठपाषाणपांशुलोहलोष्टास्थिबालनखपूयास्रावान्तर्गर्भशल्योद्धरणार्थं यन्त्रशस्त्रक्षाराग्निप्रणिधानव्रणविनिश्चयार्थञ्चेति ॥ पुं॰ न॰ शल्ली । तोमरे । सेल इ॰ भा॰ ॥ शलति । शलगतौ । अघ्न्यादित्वाद्यत् ॥ यद्वा । सान्तःसवर्णसीत्यादिनाशलेर्यः ॥

शल्यकः । पुं॰ मदनद्रुमे । राढे ॥ श्वाविधि स्थूललोमवति प्राणिविशेषे ॥ तन्मांसगुणास्तु । शल्यकः स्वादुकासास्रशोषदोषत्रयापहः । इति ॥

शल्यकण्टकः । पुं॰ शल्यके ॥

शल्यलोम । न॰ शलल्याम् ॥

शल्यहृत् । त्रि॰ व्रणचिकित्सके । शल्यहर्त्तरि ॥

शल्यारिः । पुं॰ धर्मपुत्रे । युधिष्ठिरे ॥

शल्लः । पुं॰ भेके ॥ न॰ त्वचि ॥

शल्लकः । पुं॰ शोणकवृक्षे ॥ न॰ त्वचि ॥

शल्लकी । स्त्री॰ श्वाविधि । शल्यमृगे । अस्या मांसगुणा यथा । शल्यमांसं गुरु स्निग्धं शीतलं कफपित्तजिदिति ॥ द्रुमविशेषे । गजभक्ष्यायाम् । सुवहायाम् अस्या गुणास्तु । शल्लकी तुवरा शीता पित्तश्लेष्मातिसारजित् । रक्तपित्तव्रणहरी पुष्टिकृत्समुदीरितेति ॥ सलति । षलगतौ । क्वुन् । पृषोदरादिः । गौरादिः ॥ सत्कृत्य लक्यते । लक आस्वादने । क्वुन् ।

शल्लकीद्रवः । [illegible]

शल्वः । पुं॰ [illegible]

शवः । पुं॰ कुणपे [illegible]
न॰ तोये [illegible]
पचाद्यच् ॥

शवकाम्यः । पुं॰ कुक्कुरे ।

शवयानम् । न॰ काष्ठमञ्चे । शववहनार्थखट्वायाम् ॥

शवरः । पुं॰ अरण्यवर्त्तिम्लेच्छविशेषे ॥ अप्सु । पानीये ॥ शङ्करे ॥ शास्त्रविशेषे ॥ हस्ते ॥ न॰ जले ॥ चिह्ने ॥ बौद्धानां व्रतविशेषे ॥ शवति । शव॰ बाकुलकादरः ॥ शवं राति शव रा॰ । कः ॥

शवरथः । पुं॰ शवयाने । अरथी॰ इ॰ भा॰ ॥

शवपादपः । पुं॰ लोध्रे ।

शबरलोध्र: । पुं॰ श्वेतलोध्रे ॥

शबरालय: । पुं॰ पक्कणे । भिल्लग्रामे । शबरगृहे । शवं राति गृह्णातीति शबरा: । तेषामालय: ॥

शबरावास: । पुं॰ शबरालये । शबराणामावास: ॥

शबरी । स्त्री॰ शबरभार्य्यायाम् ॥

शबल: । पुं॰ शबले चित्रे । कर्बुरे वर्णे ॥ त्रि॰ तद्वर्णयुक्ते ॥ पर्य्यौष्ठामध्यम् ॥

शबलिमा । पुं॰ विचित्रतायाम् । शबलस्य भाव: । पृथ्वादिभ्य इमनिच् ॥ वर्णवाचकत्वात् वर्णदृढादिभ्य इति वा॰ इमनिच् ॥

शबली । स्त्री॰ शबलवर्णायां गवि ॥ शबलयोगादन्यतो ङीष्

शव: । न॰ वले । शवयति । टु ओश्वि॰ । श्वे: संप्रसारणञ्चेत्यमुन् । शवसी॰ शवांसि॰ इत्यादि बोध्यम् ॥

शवसान: । पुं॰ पथि ॥ शवति॰ शूयते वा । शुगतौ । छन्दस्यसानच् शुजृभ्याम् ॥

शव्यम् । नं॰ शवकर्म्मणि ॥

शश: । पुं॰ बोले ॥ लोध्रे ॥ पशुविशेषे । शशके । लोमकर्णे । वनाखौ । सस्या॰ इ॰ भा॰ ॥ अस्य मांसगुणा यथा । शश: शीतो लघुर्ग्राहीरुक्ष: स्वादु: सदाहित: । वह्निकृत्कफपित्तघ्नो वातसाधारण: स्मृत: ॥ ज्वरातीसारशोषास्रश्वासामयहरश्च स: । अपि च । भिरंस्यञ्चक्तंपलमेवशशांसर्भिवृणा ज्येमकृतं सुपाकम् । ससैन्धवं चूर्णमद्दलवासं करोतिकोष्ठाग्निमतिप्रकामं ॥ शशादिमांसानि विचित्रप्रदेयानीत्याह । मार्गं मांसं तथा छागं शाशं समनुयुज्यते । एतानि हिप्रियाणि स्यु: प्रयोज्यानि वसुन्धरे । इत्येकादशीतत्त्वम् ॥ चतुर्विधपुरुषान्तर्गतपुरुषविशेषे । तल्लक्षणं यथा । मृदुवचनसुशील: कोमलाङ्ग: सुकेश: सकलगुणविधान: सत्यवादी शशोऽयमिति ॥ चन्द्रचिन्हे । शशति । शशप्लुतगतौ । अच् ॥

शशक: । पुं॰ वनाखौ । शशे ॥

शशघातक: । पुं॰ श्येने । वाजदू॰ भा॰ प्र॰ ॥

शशघ्नी । स्त्री॰ शकुन्याम् । शशं हन्ति । अमनुष्यकर्तृके च इति टक् । ङीप् ॥

शशधर: । पुं॰ विधौ । चन्द्रे ॥ यथा । विलोक्य वदनं प्रिय शशधरो ह्रियापाण्डुर: कुचौ कमलकोरक: स्फुटति वञ्चितासांप्रतम् । रदान्तुहिनकुन्दवद्दलानि दन्तच्छदं प्रियेकथयजायतां सपदितन्विमूक :

पिकः ॥ शशश्चधरोधारकः कर्पूरे ॥

शशपानतीर्थम् । न॰ तीर्थविशेषे ॥

शशप्लुतकम् । न॰ स्तनादिस्थनखाघाते ॥

शशभृत् । पुं॰ विधौ । चन्द्रे ॥ शशं बिभर्त्ति ; डुभृञ्॰ । क्विप् ॥

शशलोम । न॰ शशोर्णे ॥ शशस्यलोम ॥

शशबिन्दुः । पुं॰ वासुदेवे ॥ राजान्तरे । चित्ररथपुत्रे ॥ चन्द्रे ॥ शशश्चबिन्दुस्त्वम्लक्षणमस्य ॥

शशशिम्बिका । स्त्री॰ जीवन्त्याम् ॥

शशस्थली । स्त्री॰ गङ्गायमुनयोर्मध्यदेशे । अन्तर्वेदाम् ॥ दू॰ मुद्रितचि॰ शेषः ॥

शशाङ्कः । पुं॰ चन्द्रमसि । कर्पूरे ॥

शशाङ्कमूर्त्तिः । पुं॰ चन्द्रे ॥ शशाङ्कामूर्त्तिर्यस्या ॥

शशाण्डुली । स्त्री॰ कर्कटीप्रभेदे । बहुफलायाम् । तण्डुल्याम् । अस्याः पर्यायायथा । शशाण्डुलीबहुफलातण्डुलीर्ध्वसम्भवा । क्षुद्राम्लाशीमशफलाधूम्राहस्तफलातथा ॥ अस्याः गुणाः । शशाण्डुलीतिक्तकटुश्चकोमलाकडुम्लयुतामधुराकफापहा । पाकेतुसाम्लामधुराविदाहकृत्कफार्हा तुशुष्कारुचिकृच्चदीपनी ॥

शशादः । पुं॰ विकुक्षिसंज्ञके॰राजर्षिविशेषे ॥ श्येने ॥

शशादनः । पुं॰ श्येनपक्षिणि ॥ शशमत्ति । अद॰ ॥ ल्युः॰ ल्युट्॰युज्वा ॥

शशिकला । स्त्री॰ अतिशक्वरी १५ छन्दोविशेषे ॥ तदुक्तन्तु गुरुनिधनमनुलघुरिहशशिकला । यथा । मलयजतिलकसमुदितशशिकला॰ व्रजयुवतिलसदलिकगगनगता सरसिजनयनहृदयसलिलनिधिं व्यतनुतविततरभसपरितरलम् ॥ शशिनः षोडशांशे ॥

शशिकान्तः । पुं॰ चन्द्रकान्तमणौ ॥ न॰कुमुदे । कल्हारे । कैरवे ॥ त्रि॰ चन्द्रसमे ॥

शशिदेवः । पुं॰ रन्तिदेवे ॥

शशिध्वजः । पुं॰ भल्लाटपुरनृपे ॥ कल्किपुराणस्य २५ ऽध्यायप्रसिद्धे ॥

शशी । पुं॰ हिमांशौ । चन्द्रे । नक्षत्रेशे ॥ नक्षत्राणांमध्येशशीविष्णोर्विभूतिः ॥ सचजलमयः । यथा । सलिलमयेशशिनिरवेर्दीधितयोमूर्च्छितास्तमोनैशम् । क्षपयन्तिदर्पणोदरनिहिताइवमन्दिरस्यान्तरिति ॥ वर्णवृत्तप्रभेदे । नरेन्द्रोयदिस्यात् । शशीकथ्यतेतत् ॥ यथा । जनानन्दकन्दः प्रियस्याम्बुकुन्दः ॥ षण्मासस्यद्वितीयप्रभेदे॰ ॥ ऽऽ॰

॥ चर्ष्मवृक्षविशेषे ॥

शशिप्रभम् । न० मुक्तायाम् ॥ कुमुदे ॥ त्रि० चन्द्रसमदीप्तियुक्ते ॥

शशिप्रभा । स्त्री० ज्योत्स्नायाम् ॥

शशिभूषण :। पुं० चन्द्रशेखरे। शिवे ॥

शशिलेखा । स्त्री० चन्द्रमस : कलायाम् । इन्दुलेखायाम् ॥ गुडूच्याम् ॥ वाकुच्याम् । सोमराज्याम् ॥ चन्द्रलेखाभिधेवृत्ते ॥ रसालायाः प्रभेदे ॥ यथा । शर्करायुतभयुक्तेन शृतदुग्धघृतेनच । पटपूताशिखरिणी शशिलेखेति कीर्त्तिता ॥ शशिलेखाहिमावल्या रुच्या पुष्टिप्रदा लघु । वातपित्तहराश्लेष्ममहाद्यावविनाशिनी ॥

शशिलेखिका । स्त्री० शशिलेखायाम् ॥

शशिवदना । स्त्री० गायत्रीछन्द : ६ प्रभेदे ॥ शशिवदनाख्यौ ॥ यथा । शशिवदनानांव्रजतरुणीनाम् । अधरसुधोर्मिं मधुरिपुरैच्छत् ॥ चन्द्रसममुखायांवीविभिति ॥

शशिवाटिका । स्त्री० पुनर्नवायाम् ॥

शशिशेखर :। पुं० ईश्वरे । चन्द्रमौलौ सदाशिवे ॥ बुद्धभेदे । चक्रसंवरे । वज्रकपालिनि । वज्रटीके ॥

शशीार्थम् । न० शशलोमनि ॥ शशस्याऊर्णा शशीार्थम् । शशीार्थकारणंकरणमितिचन्द्रगोमिलिङ्गानुशा

सनात् ऊर्णत्वम् ॥

शश्वत् । अ० आत्मप्रश्ने मङ्गले ॥ पुराकल्पे ॥ सदार्थे । नित्ये । निरन्तरे ॥ आभीक्ष्ण्ये ॥ पुनरर्थे ॥ शश्वतिगमनं वा । शश० । बाहुलकात् वत् ॥ सहार्थे ॥

शष्कुल :। पुं० छित्तौ । करञ्जे ॥

शष्कुली । स्त्री० पिष्टविशेषे । सोहाली तिख्याते ॥ यथा । समितावाघृताक्तायाःलोपर्श्रीकृत्वाच वेलयेत् । आज्येतांभर्जयेत्सिद्धाशष्कुलीफेनिकागुणा ॥ कर्णरन्ध्रे ॥ यथाकर्णशष्कुल्यवच्छिन्नं नभएव श्रोत्रमिति ॥ सौरी० इ० भा० प्र० मत्स्ये ॥ तद्गुणायथा । शष्कुलीयाहिचोष्णामधुरा तुवरास्मृता ॥ गौरादित्वान्ङीष् ॥

शष्पम् । न० नवीनतृणे । बालतृणे ॥ पुं० प्रतिभाहानौ ॥ शस्यते० शुष्यतिवा । शसुहिंसायाम् ० शुषशोषणेवा । खष्पशिल्पशष्पेतिपो निपातनात् ० सत्वञ्च ॥

शसनम् । न० परम्परासे । यज्ञार्थपशुहनने ॥ शसु० । भावेल्युट् ॥

शस्तम् । न० श्व : श्रेयसि । शिवे । क्षेमे । त्रि० कल्याणयुक्ते ॥ स्तुते ॥ प्रशस्ते ॥ शस्यतेस्म । शंसुस्तुतौ । कर्मणिक्त : ॥

शस्तकम् । न० अङ्गुलित्राणे ॥

शस्तकीशक :। त्रि० प्रशस्तकोशवति

शस्ताङ्गः। त्रि० रम्यतनौ॥ शस्तान्यङ्गान्यस्य॥ पुं० अतीतकल्पाइन्द्रे॥

शस्त्रम्। न० लौहे॥ तीक्ष्णायसे। अस्त्रे। आयुधे॥ शस्त्रास्त्रवर्षुवाग्मुक्तिरित्यादौ शस्त्रास्त्रयोर्भेद उक्तः। तथाहि। येन करधृतेन हन्यते तच्छस्त्रं खड्गादि। येन प्रक्षिप्तेन हन्यते तदस्त्रं काण्डादि इत्यनयोर्भेदः। अपिच। अस्त्रं मन्त्राभिमन्त्रितम्। शस्त्रं तद्रहितमिति॥ शस्यतेऽनेन। शसु हिंसायाम्। दाम्नीतिष्ट्रन्। सर्वधातुभ्यष्ट्रन्वा॥ अमिचिमिदिशसिभ्यः क्त्रो वा॥ अप्रगीतऋग्जाति॥ होत्रादिना शंस्यमानऋगर्थः॥ अप्रगीतमन्त्रसाध्यायां स्तुतौ॥ अप्रगीतमन्त्रसाध्यगुणनिष्ठगुणाभिधानं शस्त्रमिति याज्ञिकानां व्यवहारः॥ पुं० खड्गे। तरवारौ॥

शस्त्रकम्। न० अयसि। लौहे॥ शस्यतेऽनेन। शसेः ष्ट्रन्। स्वार्थे कः॥

शस्त्रकर्म। न० वैद्यानां प्रधानकर्मविशेषे॥ तदष्टविधं भवति। यथा। छेद्यं•भेद्यं•लेख्यं•वेध्यं•मेष्यमाहार्यं• विस्राव्यं• सीव्यमिति भेदात्॥

शस्त्रकोशतरुः। पुं० महापिण्डीतरौ॥

शस्त्रजीवी। पुं० शस्त्राजीवे॥

शस्त्रधारणजीवकः। पुं० शस्त्राजीवे॥

शस्त्रपाणिः। पुं० अस्यादिशस्त्रहस्ते॥ आततायिविशेषे॥

शस्त्रभृत्। पुं० शस्त्रधारिणि॥

शस्त्रमार्जः। पुं० असिधावके। शाणाजीवे॥ शस्त्रं मार्ष्टि। मृजू शुद्धौ। कर्मण्यण्॥

शस्त्रशास्त्रम्। न० अथर्ववेदस्योपवेदे॥

शस्त्रहतः। त्रि० शस्त्राघातेन मृते॥

शस्त्रहस्तः। त्रि० शस्त्रपाणौ॥

शस्त्राजीवः। त्रि० काण्डपृष्ठे। आयुधीये। आयुधिके॥ शस्त्रमाजीवति उपजीवति। जीव०। कर्मण्यण्॥

शस्त्राभ्यासः। पुं० शस्त्रशिक्षायाम्॥

शस्त्रायसम्। न० पिण्डायसे। इस्पात इ० भा०॥

शस्त्री। त्रि० शस्त्रविशिष्टे॥

शस्त्री। स्त्री० छुरिकायाम्॥ ष्ट्रनः षित्वान्ङीष्॥

शस्यम्। न० वृक्षादिफले॥ शंस्यते। शसु०। तकिशसिचतीतियत्॥ तालव्यावपिदन्त्यास्यशस्यशूकरपांशवः॥ च। धान्ये॥ यथा। शस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते। आमं वितुषमित्युक्तं स्विन्नमन्नमुदाहृतमिति स्मृतिः॥

शस्यध्वंसी । पुं॰ तुन्नवृक्षे । नन्दीद्रु
मे ॥ त्रि॰ शस्यनाशके ॥

शस्यमञ्जरी । स्त्री॰ कणिशे । अभिन
वनिर्गतधान्यादिशीर्षके ॥ शस्य
स्यमञ्जरी ॥

शस्यशूकम् । न॰ यवाद्यग्रे । किंशा
रौ ॥ शस्यस्यशूकम् ॥

शस्यसंवरः । पुं॰ अश्वकर्णे । साल
वृक्षे ॥ शस्यैः संव्रियते । वृञ् ॰ ।
अप् ॥

शस्यसंवरणः । पुं॰ दीर्घपर्णे । अ
श्वकर्णे । जरणद्रुमे ॥

शस्यात् । त्रि॰ शस्यभक्षके ॥

शस्यारुः । पुं॰ शमीरे । अल्पशमीवृक्षे ॥

शांशपः । पुं॰ असने । शिंशपाया वि
कारः । अञ् । देविकाशिंशपेत्या
त्वम् ॥

शांशपायनः । पुं॰ मुनिविशेषे ॥

शाकः । पुं॰ द्वीपविशेषे । शाकेशाक
द्रुमस्तुङ्गः शाकसंज्ञानिबन्धनयु
क्तः ॥ शाकं शपत्रं महतिद्रुमे । क्र
कचपत्रे । खरपत्रे । श्रेष्ठकाष्ठे ।
स्थिरसारे । शक्तौ ॥ नृपविशेषे ॥
युधिष्ठिरविक्रमादित्यशालिवाहना
दिशकनरपतीनामतीताब्दे ॥ वर्षे
रे । शोयानाख्ये ॥ पुं॰ न॰ हरि
तके । शाकभाजे ॥ मण्डूकपर्णी
पालङ्क्याचिञ्चिकाचाप्यपोदका ।
चाङ्गेरीहिलमोचाचकलम्बीशाकजा

तयः । वास्तुके ॥ पत्रपुष्पादिषु ।
तत्रपत्रंनिम्बादेः । पुष्पंकोविदा
रादेः । आदिपदात् फलंवार्त्ताका
देः । मूलमूलकादेः । कन्दः
शूरणादेः । अङ्कुरोवंशादेः । आ
हच । मूलपत्रकरीराग्रफलकन्दा
धिरूढकम् । त्वक् पुष्पंकवकञ्चैव
शाकंदशविधंस्मृतम् ॥ अधिरूढकं
तालबीजाङ्कुरास्थिमज्जादीतिगौ
डाः । अन्येतुचर्मीभूतस्यफलमू
लादेः स्वेदान्नवोद्भिन्नाङ्कुरान्मन्य
न्ते ॥ शक्यते॰शक्नोत्यनेनवाभोक्तु
म् । शक् ॰ । घञ् ॥ यद्वा । श्य
ति । शोतनूकरणे । बाहुलकात्
कन् ॥ भावप्रकाशेतु॰षड्विधंशाक
मुक्तम् । यथा । पत्रपुष्पफलना
लंकन्दसंस्वेदजंतथा । शाकंषड्वि
धमुद्दिष्टंगुरुविद्याद्यथोत्तरम् । अ
थैतेषांगुणाः । प्रायः शाकानिस
र्वाणिविष्टम्भीनिगुरूणिच । रूक्षा
णिबहुवर्चांसिसृष्टविण्मारुतानिच
॥ शाकंभिनत्तिवपुरस्थिनिहन्तिने
त्रंवर्णंविनाशयतिरक्तमथापिशुक्र
म् । प्रज्ञाक्षयंप्रकुरुतेपलितञ्चनूनं
हन्तिस्मृतिंगतिमितिप्रवदन्तितज्
ज्ञाः ॥ शाकेषुसर्वेषुवसन्तिरोगा
स्तेहेतवोदेहविनाशनाय । तस्माद्बु
धः शाकविवर्जनन्तुकुर्यात् तथा
म्लेषुसएवदोषः ॥ अपिच । सामा

तीक्ष्णं व्यवायि सूक्ष्मञ्चाभिष्यन्दि कटुपाकि च ॥

शाकयोग्यम् । न॰ धान्याके ॥

शाकराट् । पुं॰ वास्तूके ॥

शाकराजः । पुं॰ वास्तूके

शाकरुण्डः । पुं॰ ग्रन्थिफले ॥

शाकलः । पुं॰ उदीच्यग्रामे ॥ वाहीकग्रामे ॥

शाकल्यः । पुं॰ ऋषिविशेषे ॥ शकलस्य गोत्रापत्यम् । गर्गादित्वात् यञ् ॥

शाकशालेयः । पुं॰ ब्रह्मयष्ट्याम् ॥

शाकविल्वः । ) पुं॰ वार्त्ताकौ ।
शाकविल्वकः । )

शाकवीरः । पुं॰ जीवशाके ॥ पुनर्नवायां ।

शाकवृक्षः । पुं॰ शाके । खरपत्रे । अर्जुनोपमे । क्रकचपत्रे ॥

शाकशाकटम् । न॰ शाकक्षेत्रे । शाकानां भवनं क्षेत्रम् । भवने क्षेत्रे शाकटशाकिनाविति शाकटः ॥

शाकशाकिनम् । न॰ शाकशाकटे ॥ शाकानां भवनं क्षेत्रम् । भवने क्षेत्रे शाकटशाकिनाविति शाकिनः ॥

शाकश्रेष्ठः । पुं॰ न॰ वास्तूकशाके ॥

शाकश्रेष्ठा । स्त्री॰ जीवन्त्याम् । वार्त्ताकौ ॥ डिण्डीशपे ॥

शाकाख्यम् । न॰ पत्रपुष्पादौ । यथा । मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् । त्वक्पुष्पं कवकञ्चेति शाकं दशविधं स्मृतम् ॥ पुं॰ शाकवृक्षे । अतिपत्रे । श्रेष्ठकाष्ठे । स्थिरसारे । गृहद्रुमे । सागौनवृ॰ गौ॰ भा॰ ॥

शाकाङ्गम् । न॰ मरिचे ॥

शाकाम्लम् । न॰ वृक्षाम्ले ॥

शाकाम्लभेदनम् । न॰ चुक्रे । काञ्जिकप्रभेदे ॥

शाकालावूः । स्त्री॰ राजतुम्ब्याम् ॥

शाकिनम् । न॰ मद्रशाकवति । मद्रशाकं शाकी॰ तद्वति ॥ मत्वर्थे पामादित्वान्नः । शाकोपलालीदद्रूणांक्षेत्रस्य ॥

शाकिनी । स्त्री॰ दुर्गाया अनुचरीविशेषे ॥ शाकयुक्तायां भूमौ ॥ यथा । शकटः शाकिनी गावो जालमस्यन्दनं वनम् । अनूपं पर्वतो राजा दुर्भिक्षे नव वृत्तयः ॥ शकटो धान्यादिवहनद्वारेणोपजीव्यः । पत्रपुष्पफलादिषड्विधशाकयोगात् शाकिनी॰ गृहवाटिका॰ शाकाद्याहरणेन । गावो । दुग्धादिना । जालं । मत्स्याद्याहरणेन अस्यन्दनं स्वस्थानाऽत्याग॰ ऋणादिलाभेन॰ व्ययाधिक्यनिवृत्त्या च । वनं फलपुष्पाद्याहरणेन । अनूपं बहूदकदे

श :० समृचालशाल्काद्याहरणे न । पर्वतीगैरिकमृदाद्याहरणेन । राजाभैषादिमेत्यर्थ : ॥

शाकी । पुं० मत्स्याकी ॥

शाकुन : । पुं० न० पशुपक्ष्यादिरूप शकुनद्वारामनुष्यशुभाशुभनिश्चाय कग्रन्थे । वसन्तराजादौ ॥

शाकुनि : । त्रि० पक्षिजीविनि ॥

शाकुनिक : । पुं० जीवान्तके । पक्षि हन्तरि । शकुनान् हन्ति । पक्षिम त्स्ये । स्वरूपपर्यायस्यापिग्रहणाट्ठक् ॥

शाकुनेय : । पुं० क्षुद्रोलूके । पिङ्गले । क्षुद्रपेचके । शकुनेरपत्यम् । शुभ्रादित्वाड्ढक् ॥

शाकुन्तलेय : । पुं० भरते । शकुन्तलाया अपत्यम् । स्त्रीभ्यं ढक् ॥

शाकुलिक : । पुं० मात्स्यिकविशेषे । शकुलान्हन्ति । पक्षिमत्स्ये ति ठक् ॥

शाक्कर : । पुं० अनडुहि ॥

शाक्त : । त्रि० सर्वदेवमय्या: शक्तेरुपासके । शक्तिर्देवतास्य । सास्यदेवतेत्यण् । यथा । शाक्ता एव द्विजा: सर्वेनशैवानचवैष्णवा : । उपासते यतोदेवीं गायत्रींपरमाक्षरीम् ॥ शक्त्युपासनानन्तर मन्योपासननिषेधोयथा । अस्याश्चाराधनंकृत्वानान्यस्याराधनंचरेत् । अन्यस्यस्मरणा द्वियोगिनीशापमाप्नुमेतिदिदिग बंधतत्त्वम् ॥ देवीभक्तापराधदु:ख दातृत्वमुक्तं मुण्डमालातन्त्रे । शाक्तान्हिंसन्तिगर्जन्तिनिन्दन्ति बहुजल्पका : । छिनत्तितेषांदेवी शीर्षाणिस्वरवक्त्रमेति । गर्जन्ति० कुप्यन्तियुध्यन्तीत्यर्थ : ॥

शाक्तिक : । त्रि० शक्त्युपजीविनि ॥ शक्त्याजीवति । वेतनादित्वाट्ठञ् ॥

शाक्तीक : । त्रि० शक्तिहेतिके । शक्तियोधिनि ॥ शक्ति : प्रहरणमस्य शक्तियष्ट्योरीकक् ॥

शाक्य : । पुं० बुद्धे ॥ शकोऽभिजनोऽस्य । शण्डिकादिभ्योञ्य: ॥ शाक्यमुनौ गौतमवत् ॥

शाक्यमुनि : । पुं० शौद्धोदनौ । मायादेवीसुते ॥ शकोऽभिजनोऽस्य । शण्डिकाभ्योञ्य : ॥ यथा । शाकवृक्षप्रतिच्छन्नं वासंयस्माच्चचक्रिरे । तस्मादिक्ष्वाकुवंशास्ते शाक्याइतिभुविश्रुता : इतिसुन्दरानन्दचरितागमे ॥ अयमर्थ : । केचनैक्ष्वाकुवंश्याराजपुत्रा : पित्रावनवासायदत्ताज्ञा : गौतमवंशस्यकपिलस्याश्रमे० शाकच्छन्नेवसतिंकृतवन्तइतिहेतोस्ते शाक्या : । शाकेभवा : । दिगादित्वाद्यत् । तदंशावतीर्णोमुनि : । शाक्यश्चासौमुनिश्चेति० शाक्यमुनि : ॥

शाक्यसिंहः । पुं॰ सर्व्वार्थसिद्धे । शाक्यमुनौ ॥ शाक्यः सिंहइव । उपमितंव्याघ्रेतिसमासः ॥

शाक्री । स्त्री॰ दुर्गायाम् ॥

शाखः । पुं॰ छित्तौ । कार्त्तिकेये ॥

शाखा । स्त्री॰ पक्षान्तरे ॥ बाहौ ॥ ग्रन्थभेदे ॥ अन्तिके ॥ द्रुमाङ्गे । लतायाम् ॥ वेदभागे । ऋग्वेदादिकमेकवेदाश्चत्वारः । तत्रैकविंशति शाखाऋचः । नवाधिकशतशाखा यजुषः । सहस्रशाखाः साम्नः । पञ्चाशच्छाखाअथर्व्वणः । अतोक्तं छन्दोगपरिशिष्टे । स्वशाखाश्रय मुत्सृज्य परशाखाश्रयस्तु यः । कर्त्तुमिच्छति दुर्मेधा मोघंतत्तस्ययत्कृतम् ॥ यन्नाम्नातंस्वशाखायां पारक्य मविरोधियत् । विद्वद्भिस्तदनुष्ठेय मग्निहोत्रादिकर्म्मवदिति ॥ बहल्पंवास्वगृह्योक्तं यस्ययत्कर्म्मकीर्त्तितम् । तस्यतावतिशास्त्रार्थे कृतेसर्व्वंकृतंभवेदिति तत्तात्पर्यविशेषः ॥ शाखति । शाखृ व्याप्तौ । पचाद्यच् । टाप् । यद्वा । शेतेऽस्यांपक्षी । शीङोह्रस्वश्चेत्यत॰ इत्याचयत श्चेतिदशपाद्यनुसारिण ॥

शाखाकण्टः । पुं॰ स्नुहीवृक्षे ॥

शाखानगरम् । न॰ यन्मूलनगरादन्यत्पुरं॰तस्मिन् । मुख्यपुराभ्यर्णपुरे । अभिव्यन्दिरमथ । यथा । आरभ्यमूलनगरादपरंनगरं हि यत् । तदभिव्यन्दिरमथ शाखानगरमित्यपीति शब्दरत्नावली ॥ तदुक्तमौ यस्यमूलनगरस्य शाखिनगरम् ॥

शाखापित्तम् । न॰ पाणिपादांसमूलदाहे ॥

शाखापुरम् । न॰ शाखानगरे ॥ शाखिपुरं ॥

शाखामृगः । पुं॰ कपौ । वलीमुखे । वानरे ॥ शाखाचारीमृगः पशुः । शाकपार्थिवादिः ॥

शाखामृगाधिपः । पुं॰ सुग्रीवे । शाखामृगाणामधिपः ॥

शाखाम्ला । स्त्री॰ वृक्षाम्लायाम् ॥

शाखारण्डः । पुं॰ स्वशाखांपरित्यज्यशाखान्तराध्ययनकर्त्तरि । अन्यशाखके । स्ववेदशाखामुत्सृज्यापरशाखाश्रयकर्म्मकारिणि ॥

शाखारथ्या । स्त्री॰ पीडावहस्तप्रस्थे पथि । यथा । धनूंषिचैवचत्वारि शाखारथ्यास्तुनिर्मिताः । त्रिकाराश्चोपरथ्यास्तु द्विकाराप्युपरथ्यका ॥ इतिदेवीपुराणम् ॥

शाखालः । पुं॰ वानीरवृक्षे ॥

शाखाशिखा । स्त्री॰ मूलादारभ्याग्रंयावद्गतायांलतायाम् । अवरोहे ॥

शाखिः । पुं॰ तुरुष्के । तुरकस्तान् ॰ वृ॰ भा॰ प्र॰ देशे ॥ शा

खृ॰ । इन् ॥

शाखी । पुं॰ पादपे ॥ वेदे ॥ तुरुष्काख्यजने ॥ राजभेदे ॥ शाखाऽस्यास्ति । ब्रीह्यादित्वादिनिः ॥ यथा । यवश्यं शाखति । शाखृ॰ । यावश्यकेतिर्णिनिः ॥

शाखोटः । पुं॰ सहोड़ा इ॰ भा॰ प्र॰ हर्षे । पीतफले ॥ यथास्यपर्य्यायगुणाः । शाखोटः पीतफलको भूतावासः खरच्छदः । शाखोटोरक्तपित्तार्शोवातश्लेष्मातिसारजिदिति ॥

शाखोटकः । पुं॰ शाखोटे ॥

शाङ्करः । पुं॰ बलीवर्द्दे ॥ न॰ छन्दोभेदे ॥ त्रि॰ शङ्करसम्बन्धिनि । माहेश्वरे ॥ शङ्करप्रोक्ते ॥ यथा । आगमोक्तविधिंहित्वाय: शाङ्करं कुरुते नरः । शाङ्करंतद्दिफलंतेपिपिद्भिर्नरकंव्रजेत् ॥ ततोयंशोणितसमं पिण्डोमलमयोभवेत् । तस्मान्मर्त्यः प्रयत्नेनशाङ्करमतमाश्रयेत् ॥ शङ्करस्यायम्॰ शङ्करेणप्रोक्तं वा । अण् ॥

शाङ्करिः । पुं॰ स्कन्दे ॥ गणेशे ॥

शाङ्करी । स्त्री॰ देवीविशेषे ॥ श्रीगिरीशाङ्करीस्मृतेतिदेवीशाङ्करीतुमशाकाली॰ इतिचदेवीगीता । अत्र शङ्करीशाङ्कर्योर्व्यत्ययेनपाठेगीतायांबोध्यः ॥

शाङ्कुची । स्त्री॰ शङ्कुयादसि ॥

शाङ्खिकः । पुं॰ काम्बविके । शङ्खवलयादिकारिजातिविशेषे ॥ शङ्खःशिल्पमस्य । शिल्पमितिठक् ॥

शाङ्गुष्ठा । स्त्री॰ गुञ्जायाम् ॥ इ॰र॰माला ॥

शाटः । पुं॰ वस्त्रविशेषे । शाटके ॥ शटैकर्म्मणिघञ् ॥

शाटकः । पुं॰ न॰ पटप्रभेदे ॥ यथा आजानुलम्बितमलीमसशाटकानां मिथ्यादपिप्रथमयाचितभाटकानाम् । पुत्रादपिप्रियतमैकवराटकानां बन्दिव: पततुमूर्ध्नि कराटकानाम् ॥ स्वार्थेकः ॥

शाटिका । स्त्री॰ शाट्याम् ॥

शाटी । स्त्री॰ शाटके । स्त्रीपरिधेयवस्त्रे । साड़ी॰ इ॰ भा॰ प्र॰ ॥ शाट्यते । शटश्लाघायांचुरादिः । सर्वधातुभ्यइन् । कृदिकारादितिङीष् ॥

शाट्यायनः । पुं॰ मुनिविशेषे ॥ न॰ प्रकृतकर्मवैगुण्यप्रशमनार्थहोमे ॥ नायंहोमः सर्वसम्मतः निर्मूलत्वात् । समूलत्वेशाखान्तरीयत्वमितिगौडाः ॥

शाठ्यम् । न॰ कुसृतौ । कपटे । व्याजे । निकृतौ । शठतायाम् ॥ शठति । शठकैतवे । पचाद्यच् । शठस्यकर्म । ब्राह्मणादित्वात्ष्यञ् ॥

यथा। शठनम्। ऋश्लीयं तु॥
शाण:। पुं॰ माषचतुष्टये। निष्के। टङ्के॥ खङ्गादितीक्ष्णीकारकयन्त्रे निकषे। कषे। कसौटी॰ इ॰ भा॰ प्र॰ पाषाणे॥ शण्यते। श ण् दाने। करणे घञ्। शिवा। शीतल्। कारणे। बाहुलका त्:॥ न॰ शणनिर्मितवस्त्रे॥
शाणकम्। न॰ शणपुष्पे॥ तच्छा कप्रकारो यथा। सुस्विन्नं शाणकं पुष्पं तक्रे तैले विपाचितम्। हिङ्गुना वासितं सम्यक् चूर्णेनावचूर्णितम्। शणपुष्पं सरं वल्यमस्त्रक्प्रदरनाशनम्। मधुरं रुचिरं पाके किञ्चिद्विष्टम्भकारकम्॥
शाणाजीव:। पुं॰ असिधावके। शस्त्रमार्जे॥
शाणि:। पुं॰ पट्टसूत्रे॥
शाणित:। त्रि॰ तेजिते। निशिते॥
शाणी। स्त्री॰ प्रावरणान्तरे। शण सूत्रमय्यां पट्टिकायाम्॥ यथा। शाणीप्राया शिवस्थाणी शमीप्रायाम हीरुहा:। शूद्रप्रायास्तथा वर्णाभ विष्यन्ति कलौ युगे॥ इ॰ वि॰ पु॰ शाणी॰ शणसूत्रमयी पट्टिका॰ तत्तुल्यानि वस्त्राणीति तट्टीका॥ छिद्रवस्त्रे॥ हस्तकटाद्यादिसूचनायाम्। सैन॰ इ॰ भा॰॥ शणस्य विकार:। तस्य विकार इत्यण्। टि टढेति ङीप्॥
शाण्डकी। स्त्री॰ मगधदेशस्थानस्था यां देवतायाम्॥
शाण्डिल्य:। पुं॰ गोत्रभक्तिसूत्रयो: कर्त्तरि मुनिविशेषे॥ शाण्डिल्यो मुनिसत्तमेषु मान्यो नीतवप्रकीर्त्तित:॥ पावकविशेषे॥ मालूरे। बिल्वहुमे॥ मगडले। अण्डिकाज्जायासकुन्तेष। सलिलस्यानिमग्निभक्ति भगिडश्रग्गडपिण्डितुण्डकुम्भि भूभ्यतूलत्। शाण्डिलश्चम् गर्गोक्तपत्यम्। गर्गादिभ्यो यञ्॥ शाण्डिल्यस्तु समान्यत्वाद्य॥
शाण्डिल्यविद्या। स्त्री॰ मनोमयात्मन उपासनायाम्॥ शाण्डिल्येन मुनिनादृष्टाविद्या॥
शातम्। न॰ सुखे॥ त्रि॰ दुर्बले। निशिते॥ सुखान्विते॥ शायतेस्म। शो॰। क्त:। शाच्छो रन्यतरस्यामिति पक्षे इत्वाभाव:॥ अतिदु:खदा। शायतेवाबाहुलकात्तन्॥
शातकर्णि:। पुं॰ मुनिविशेषे॥
शातकुम्भ:। पुं॰ अश्वमारके। करवीरे॥ न॰ काञ्चने॥ शतकुम्भपर्वते भवम्। अण्॥
शातकौम्भम्। न॰ काञ्चने। स्वर्णे॥ शतकुम्भे पर्वते भवम्। तत्र भव इत्यण्। अनुशतिकादीनाञ्चेत्युभय

पदत्वहिरितिस्वामी ॥

शातकौम्भास्वरभ् । न० सुवर्णरसाक्त वर्णे ॥

शातनम् । न० कार्श्ये ॥ विशीर्णने । यथा । वसन्ते सर्वसत्त्वानां जायते पत्रशातनम् । मोदमानाश्चरन्ति यथा : कविशशालिन : ॥ शद्लृशातने । णिच् । शदेरगतावितितत्त्वे ल्युट् ॥

शातपत्र : । पुं० शातपत्रकी ॥ शतपत्रमिव । शर्करादिभ्योऽण् ॥

शातपत्रक : । पुं० चन्द्रिकायाम् । ज्योत्स्नायाम् । प्रकाशे ॥ स्वार्थे संज्ञायां वा० कन् ॥ तू० श० चं० का ॥

शातभीरु : । पुं० मल्लिकाप्रभेदे ॥

शातमानम् । त्रि० शतमानेनक्रीते ॥

शातयिता । त्रि० हन्तरि ॥

शातला । स्त्री० चर्मकषायाम् । सीहुण्डप्रभेदे ॥ शातं सुखं लाति । ला० । क : ॥ शातलाकटुका पाके वातला शीतला लघु : । तिक्ता शोधककानाहपित्तोदावर्त्तरक्तजित् ॥

शातह्रदम् । न० विद्युत्सम्बन्धिनि ज्योतिषि ॥

शातित : । त्रि० छिन्ने ॥

शात्रव: । पुं० रिपौ । शत्रौ । स्वार्थेऽण् ॥ न० शत्रुसंहतौ ॥ शत्रुत्वे । अण् ।

शाद : । पुं० कर्दमे । शष्पाक्षे ॥ शष्पे । शीयन्तेऽस्मिन्ननेनवा । शद्लृ० । घञ् । यद्वा । शीयते० नश्यति । ज्वलितिकसन्तेभ्योण : ॥ यद्वा । श्यति । शो० । शाशपिभ्यां ददमाविति द : ॥ शद्यतेऽनेनवा । शद्लृ० । हलश्चेति भावे वा घञ् ॥

शादहरित : । त्रि० नवतृणप्रायदेशे । शाद्वले । शादैर्नवतृणैर्हरित: ॥

शादर : । त्रि० शाद्वले ॥ रलयोरभेद : ॥

शाद्वल : । त्रि० शादहरिते ॥ शादो बालतृणमस्मिन् । नडशादाड्ड्वलच् । शष्पवाचिन एव शादाड्ड्वलच् ० नतु पङ्कवाचिनोऽनभिधानात् ।

शानपाद : । पुं० पारिपात्रशैले ॥ चन्दनघर्षणपाषाणे ॥

शान्त : । पुं० अभियुक्ते । स्वामिनि ॥ रसविशेषे ॥ नयत्र दु:खं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा । रस : स शान्त : कथितो मुनीन्द्रै: सर्वेषु भावेषु समप्रमाण : ॥ त्रि० शमान्विते । श्रान्ते । संयतान्त:करणे । अन्तरिन्द्रियनिग्रहकर्त्तरि । प्रशान्तचित्ते । दान्ते । ० उपद्रवरहिते० सर्वामर्षोपशमरूपे० जात्यादिरहिते० अविकृते० निरस्त

समस्तोपाधिशून्यत्वाद्विचेपादिविकार
शून्ये • आत्मनि ॥ रागादिदोषरहि
ते । निर्विषयतयानिरुद्धेन्द्रियव्या
पारे • संस्कारमात्रशेषे • चित्तविचे
परहितेयतौ च, तृष्णारहिते ॥
सर्वविशेषप्रत्यस्तमितरूपे • अविक्रि
ये • सर्वान्तरे • सर्वबुद्धिप्रत्ययसाक्षि
णि • मुख्यआत्मनि । आकाशादि
पुरुष, तेषुसत्त्वप्रधानतया • केचिद्विशे
षा : शान्ता : सुखा : प्रकाशका :
लघवस्ते शान्ता : कथ्यन्ते ॥ शाम्य
तिस्म । शम० । यान्त : । क्त : ।
वादान्तशान्तेतिसाधु : ॥ निवृत्ते
॥ यथा • शान्तोरोग : ॥

शान्तनव :, पुं० भीष्मे ॥ शन्त
नोरपत्यम् । अण् ॥

शान्तनु :, पुं० कुरुवंशजेनृपविशेषे ।
प्रातीपे । प्रतीपभूपतनये ॥ यो
यंगङ्गायांभीष्मंजनयामास ॥ यंयं
कराभ्यांस्पृशतिजीर्णंयौवनमेष्यति
। शान्तिमाप्नोतिचैवाग्र्यांकर्मणा
तेनशान्तनु: ॥ ललितिकातीर्थे ।

शान्तम् । अ० वारणे ॥

शान्तमाना : । त्रि० नियतचित्ते ।
वशीकृतमनसि ॥

शान्ता । स्त्री० दुर्गायाम् ॥ सात्त्वि
क्यांमनसोवृत्तौ । आमलक्याम् ॥
शमीप्रभेदे । शुभायाम् । भद्रा
याम् । अपराजितायाम् ॥ श
मीवद्याशुषा : ॥

शान्तायन : पुं० अयायाम् ॥

शान्ति : । पुं० कृताईद्विशेषे ॥
जिनचक्रवर्त्तिविशेषे ॥ दशमम
न्वन्तरोयेन्द्रे ॥

शान्ति :, स्त्री० मङ्गले । भद्रे ॥
सम्पूजकानांकुलपालकानांयती-
न्द्रयोगीन्द्रतपोधनानाम् । देशस्य
राष्ट्रस्यकुलस्यराज्ञ : करोतुशान्तिं
भगवान्कुलेश : ॥ विषयेभ्यइन्द्रि
योपरतौ । शमथे । शमे । तृष्णा
क्षये ॥ तल्लक्षणंयथा । यत्किञ्चि
द्वस्तुसम्प्राप्यस्वल्पंवायदिवाबहु ।
यातुष्टिर्जायतेचित्ते शान्ति : साग
द्यतेबुधैरिति ॥ सुशीलस्यभार्या
याम् । यथा । शान्तिलक्ष्मीभा
र्येद्वेसुशीलस्यपूजिते । याभ्यां
विनाजगत्सर्वमुन्मत्तमिवनारदे
ति ॥ कामक्रोधाद्यभावे ॥ सर्व
संसारोपरतौ । मुक्तौ । सहेतुक
स्यसंसारस्योपशमे ॥ सर्वद्वन्द्वोपर-
तौ ॥ विषयभोगस्पृहानिवृत्तौ ।
अन्त : करणस्योपशमे ॥ सकार्या
विद्यानिवृत्तिरूपायांवेदान्तवाक्य
जन्यायां • ब्रह्मात्मैक्यसाक्षात्-
कृतौ ॥ सर्वलौकिकालौकिकक
र्मविक्षेपनिवृत्तौ ॥ बाधितानुवृ
त्त्याऽविद्याकार्यनिवृत्तौ । अविद्या
तत्कार्य्यनिवृत्तिरूपायांमुक्तौ ॥

दुर्गायाम् ॥ यथा । उत्पत्तिस्थिति नाशेषु रजआदिगुणामता । सर्वज्ञा सर्वेशत्वाच्छान्तित्वाच्छान्तिरुच्यते ॥ गोपीविशेषे ॥ अनर्थनिवृत्तौ ॥ धर्मद्वारायद्दौस्याद्दुःखप्राप्तिसूचितेविकानिष्टहेतुदुरितनिवृत्तौ ॥ यथाशस्त्रप्रहारार्णाकवचं विनिवारकम् । तथाद्दैवोपघातानांशान्तिर्भवतिवारणम् ॥ अपिच । रोगग्रहाद्यद्दौनां निरासः शान्तिरीरितेति ॥ शमनम् । शम० । स्त्रियांक्तिन् । अनुनासिकेतिदीर्घः ॥

शान्तिकामः । त्रि० शान्त्यभिलाषिणि ॥ शौकाम: शान्तिकामोवाग्रहयज्ञंसमाचरेत् । वृष्ट्यायुः पुष्टिकामोवातथैवाभिचरन्नपि ॥

शान्तियहम् । न० यत्रान्तेशान्त्यार्थे। शान्तिकुम्भजलैमस्नानगृहे ॥ आथर्वणे । द्रु० हे० मृ० ॥

शान्तिमार्गः । पुं० दुष्कर्मादिरहिते वर्त्मनि ॥

शाप: । पुं० आक्रोशे । दुर्द्रमनिष्टमेषामस्त्विलेवंरूपे० अभिशापे ॥ शापदानात्तपः क्षयः ॥ दिव्ये । शपथे ॥ शपनम् । शप० । घञ् ॥ निन्दायाम् ॥ मिथ्याभिशंसने ॥ अनिष्टाचरणे ॥

शापास्त्रः । पुं० मुनौ ॥

शाफरिकः । त्रि० मात्स्यिकविशेषे ॥

अपकरान्हन्ति । पक्षिमत्स्येतिठक् ॥

शाब्दः । त्रि० शब्दजन्ये ॥ शब्दसम्बन्धिनि ॥ शब्देजातः ० शब्देभवः ० शब्दस्यायंवा । अण् ॥

शाब्दबोधः । पुं० शब्दार्थज्ञाने ॥ न्यायमते० पदार्थज्ञानजन्यज्ञाने ॥ तत्रकरणंपदज्ञानं । तत्कारणंपदशक्तिज्ञानम् । कदाचित्तात्पर्यज्ञानम् । एवमाकाङ्क्षायोग्यतासत्तितात्पर्यज्ञानञ्च ॥ यथा । पदज्ञानन्तुकरणंद्वारंतत्रपदार्थधीः । शाब्दबोधः फलंतत्रशक्तिः धीः सहकारिणीति० भा० प० ॥ संसारमोहनाशायशाब्दबोधोनहिक्षमः । ननिवर्त्ततितिमिरंकदाचिद्दीपवार्त्तयेतिकुलार्णवे १ उल्लासः ॥

शाब्दिकः । पुं० वैयाकरणे ॥ शब्दंकरोति० प्रकृतिप्रत्ययविभागेनोत्पादयति० अर्थवार्थे०शब्ददर्दुरंकरोतीतिठक्०अभिधानस्याभाव्यात् । तेनेह । शब्दंकरोतिवैरः ॥ आदिशाब्दिकायथाकविकल्पद्रुमे । इन्द्रश्चन्द्रः काशकृत्स्नापिशलीशाकटायनः । पाणिन्यमरजैनेन्द्राजयन्त्यष्टादिशाब्दिकाः ॥ इति ॥

शाब्दीभावना । स्त्री० पुरुषप्रवृत्त्यनुकूलव्यापारविशेषे ॥ यथा । यजेत० इत्यत्रास्यंशब्दयम्० यजिधातुः प्र

त्ययस्य । तत्प्रत्ययेप्यस्त्यंशद्वयम् ।
आख्यातत्वं लिङ्त्वञ्च । तत्रा
ख्यातत्वं दशलकारेषु विद्यते । लिङ्
त्वञ्चैकस्मिँल्लिङ्येव । तत्राख्यातत्व
लिङ्त्वाभ्यां भावनैवोच्यते । सा हि
द्विधा । शाब्दीभावना । आर्थीभा
वना चेति । तत्र शाब्दीभावना लि
ङ्त्वांशेनोच्यते । लिङ्श्रवणे । अ
यं मां प्रवर्त्तयति । मत्प्रवृत्त्यनुकूलव्या
पारवानयमिति नियमेन प्रतीयमा
नत्वात् । यच्च यस्मात् प्रतीयते । त
त् । तस्य वाच्यम् । यथा गोत्वम्
। स च प्रवृत्त्यनुकूलो व्यापारविशेषो
लोके पुरुषनिष्ठोऽभिप्रायविशेषः ।
वेदे तु पुरुषाभावाल्लिङादिशब्दनिष्ठ
एव शाब्दीभावनेत्युपदिश्यते । सा
च शाब्दीभावना । अंशत्रयमपेक्षते ।
साध्यं । साधनं । मितिकर्त्तव्यताञ्च
। साध्यं स्वर्गादि । साधनं लिङादिज्ञा
नस्य करणत्वेनान्वयत्वम् । इतिकर्त्त
व्यता प्राशस्त्यज्ञानमितिकर्त्तव्यता
त्वेनान्वीयते । यथोक्तमेवाएतत् ।
यज्ज्ञायते यत् प्रयाजानुयाजादि
ति प्रयाजादिस्तुतिज्ञानम् । तथा
हि । भाव्याकाङ्क्षायां । किं भाव
येत् । स्वर्गं भावयेत् । करणाका
ङ्क्षायां केन भावयेत् । यागेन भाव
येत् । कथम्भावाकाङ्क्षायां यत्
सन्निधौ पठितमस्य यमायफलस्य क्रि



याजातं तदुपकार्याकाङ्क्षामामि
तिकर्त्तव्यतात्वेनान्वयमनुभवितुं
योग्यम् । तथा च । प्रयाजानुयाज
सहकृतेन दर्शपौर्णमासेन स्वर्गं भा
व्यः । इति ॥
शामनी । स्त्री । यवाख्यांदिशि ॥
शामिता । त्रि । वधकर्त्तरि ॥
शामित्रम् । न । वधरूपे शमितुः कर्म्म
णि ॥
शामित्रकर्म । न । पशुहिंसने । शमि
तुरिदं शामित्रम् । तच्च तत्कर्म चेति ॥
शामीलम् । न । भस्मनि । शमीभस्म
नि । शम्या विकारः । शम्याः ष्
लञ् । षित्वान्ङीष् । शामीली
स्रुक् ॥
शाम्बरी । स्त्री । मायायाम् । इन्द्रजा
लादौ ॥ शम्बरस्य दैत्यविशेषस्येय
म् । तस्येदमित्यण् । ङीप् ॥
शाम्भवः । पुं । गुग्गुलौ ॥ कर्पूरे ॥
विषमस्थाम् । विषप्रभेदे ॥ शम्भु
पुत्रे ॥ न । देवदारुणि ॥ त्रि । श
म्भुसम्बन्धिनि ॥ कौलिके । माहे
श्वरे ॥ पुं । शम्भुप्रोक्त आचारे ।
कुलाचारे ॥ यथा । अशाम्भवेन मा
र्गेण देवतास्थापनं चरेत् । न सान्नि
ध्यं भवेत्तत्र देवतायाः कथञ्चन ॥
इहामुत्रफलं नास्ति कायक्लेशो धनव्य
यः ॥ आगमोक्तविधिं हित्वा यः
श्राद्धं कुरुते नरः । श्राद्धं तद्विफलं

स्योपिपिपठिभिर्नरकं ब्रजेत् ॥ तत्तो यंश्रीयिसर्वपिण्डोमलमयीभवेत् । तस्मान्मत्यः प्रयत्नेन शाक्करंमत माश्रयेत् ॥ बहुनावक्रिमुक्त्तेनसत्यं सत्यं मयोच्यते । अशाभवंकृतंकर्म सर्वदेवनिरर्थकम् ॥ अस्तुताव नृपरोधर्म्मः पूर्वधर्मोपिनश्यति । शाक्भवाचारस्थोनयनरकान्नैवनि ष्कृतिः ॥ शम्भोरयम् • शम्भो रागतः शम्भुमाप्रोक्तत्वा ॥ अण् ॥

शाम्भवी । स्त्री• पार्वत्याम् ॥ कुलों मायाम् ॥ नीलदूर्वायाम् ॥

शायिका । स्त्री• शयने ॥ शीङोधा त्वर्थनिर्देशेण्वुल् । वृत्वम् ॥

शार : । पुं० समीरणे । वाते ॥ च चोपकरणे ॥ त्रि० शबले । कर्बुरे ॥ पीते ॥ शीर्यतेऽनेनशृणातिवा । शृहिंसायाम् । शृवायुवर्णनिवृ तेष्विति घञ् ॥ शृणवन्त्यनेनद्यूत कारा : परस्परम् । बाहुलकाद्घञ् ॥ शारोवर्णः । चित्रीकरणमिह धात्वर्थः ॥

शारङ्ग : । पुं० सारङ्गविहगे ॥ शारय ति • शीर्यतेवातपादिना । शृ० । तरत्यादिभ्यश्चेत्यङ्गच् ॥ शबले ॥ हरिणे ॥

शारङ्गी । स्त्री• वाद्ययन्त्रविशेषे ॥

शारद : । पुं• अब्दे । वत्सरे ॥ काशे ॥ बकुले ॥ पीतमुद्गे ॥ हरिन्मुद्गे ॥ रोगे ॥ न• सस्ये ॥ श्वेतपद्मे ॥ त्रि• शरज्जाते ॥ नवे । नूतने ॥ अप्रतिभे ॥ शालीने ॥ शृणाति । शृ• । शृदृभसोऽदिरिति • अदिः । प्रज्ञाद्यण् ॥ शरदिभवः । सन्धिवेलाद्यृत्वण् ॥ शरदिपुष्यति कालात्साधुपुष्प्यत्पच्यमानेष्विव्यण् ॥ शरदिपच्यन्तेशारदाः शाल यः ॥

शारदका : । पुं• भू•दर्भविशेषे ॥ मुद्गविशेषे । शरदिजाता : । संज्ञायांशरदोवुञ् ॥

शारदा । स्त्री• सरस्वत्याम् ॥ दुर्गायाम् ॥ शरत्कालेपुरायस्मात्सम्यग्विबोधितासुरैः । शारदासासमाख्याता पीठेलोकेचनामतः ॥ ब्राह्म्याम् ॥ शारिवायाम् ॥ शृणातिजाड्यम् । शृ• अदिः । अण् । टाप् ॥

शारदिक : । पुं• रोगे । शारदे ॥ वि भाषारोगातपयोरितिठञ् । पक्षे • शारदोरोगआतपोवा ॥ न• श रदिभवे• श्राद्धे ॥ श्राद्धेशरदइति ठञ् ॥

शारदी । स्त्री० तोयपिप्पल्याम् ॥ कोजागरपूर्णिमायाम् ॥ शरदिभवा । सन्धिवेलेत्यण् । ङीप् ॥ सप्तपर्णे ॥ शरदिपुष्प्यति । कालात्साधुपुष्प्यदित्यण् । ङीप् ॥

शारदीय : । पुं• दुर्गोत्सवे ॥ यथा ।

अदूरेजगदम्बाया: शारदीयोमहोत्स
व: ॥
शारदीयमहापूजा । स्त्री॰ शरत्कालि
कदुर्गामहापूजायाम् ॥
शारद्वत: । पुं॰ कृपे ॥
शारि: । पुं॰ अक्षोपकरणे । द्यूत
साधने । खेलन्याम् । शारे । गु
टिका॰ गोट॰ सारि॰ इ॰ भा॰
प्र॰ ॥ स्त्री॰ शकुनिकाप्रभेदे ॥ यु
द्धार्थगजपर्याणे ॥ व्यवहारान्तरे ॥
शृणाति । शॄ॰ । श्र: शकुनावित
॰इञ् ॥ कपटे ॥ बह्वादित्वात्प
क्षेङीषि॰ शारी ॥
शारिका । स्त्री॰ खगान्तरे । पीतपा
दायाम् । गोराख्याम् । मैना॰इ॰
भा॰ ॥ शृणातिदु:खंविरहिणीना
म् । शॄ॰ । ण्वुल् । प्रत्ययस्थादि
तीत्वम् ॥ वीणावादनदण्डे ॥ इ॰
हे॰न्द्र: ॥
शारीफलम् । न॰ अष्टापदे । शारिखे
लनाधारे । शारीणांखेलनाधरपट्टे
। चौपड॰ इ॰ भा॰ शारीणांफल
म्॰ पट्ट: ॥
शारिफलक: । पुं॰ न॰शारिफले ।
अक्षपीठिकायाम् ॥
शारिवा । स्त्री॰ गोप्याम् । श्यामा
याम् । अनन्तायाम् । उत्पलशा
रिवायाम् ॥ अस्यागुणा: । श्वेत
कृष्णप्रभेदेनशारिवाद्विविधास्मृता
॥ शारिवायुगलंस्वादुस्निग्धंशुक्रकरं
गुरु । अग्निमान्द्यारुचिश्वासकासा
मविषनाशनम् ॥ दोषत्रयासृप्रदर
ज्वरातीसारनाशनम् ॥ अपिच ।
एकंवाशारिवामूलंसर्वज्वरविशोध
नमिति ॥ शरणम् । शॄ॰ । कॄमॄ
त्यादिना॰ इण् । शारिरस्यस्या:
। अन्येभ्योपीतिव: ॥
शारिशृङ्खला । स्त्री॰ पाशकविशे
षे । पञ्चम्याम् ॥ यथा । चुञ्चुरी
तिक्रीडोद्यूतं॰ पञ्चमीशारिशृङ्
खला । नयपीठीचाष्टकाष्ठी॰नव:
स्याज्जयपुत्रक: ॥ एतेपाशकभेदा:
स्यु॰ जयकोलाहलोपिच । इति
शब्दरत्नावली ॥
शारी । स्त्री॰ शारिपदार्थे ॥ कुशाया
म् ॥
शारीर: । पुं॰ जीवे ॥ न॰ वृषे ॥ त्रि॰
देहजे ॥ शरीरेभव: शरीरेजाते
वा । अण् ॥ कर्मविशेषे । शरीर
स्थितिमात्रप्रयोजने॰ कौपीनाच्छा
दनादिग्रहणभिक्षाटनादिरूपेयति
स्यातिशास्त्राभ्यनुज्ञाते ॥ शारीरंके
वलंकर्मकुर्वन्नाप्नोतिकिल्विषमिति
भगवदुक्ते: ॥ शरीरप्रधानै: कर्त्रा
दिभि: साध्येचकर्मणिनतुकेवले
नशरीरेण॰ पञ्चैतेतस्यहेतव इत्यु
क्ते: ॥ शरीरमात्रसाध्येचकर्मणि
॥ तपोविशेषे ॥ यथा । देवद्विजगु

रुपाग्रपूजनं शौचमार्जवम् । ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते ॥

शारीरकः । पुं॰ जीवे ॥ शरीरमेव शरीरकम् । तत्र भवः । अण् ॥ शारीरकंभाष्यमिति त्वभेदोपचारात् ॥

शारीरकसूत्रम् । न॰ उत्तरमीमांसायाम् । अथातो ब्रह्मजिज्ञासेत्यादिव्यासप्रणीतेषु॰ जीवयाथात्म्यवादिषु वेदान्तार्थसङ्ग्रहवाक्येषु ॥ शारीरको जीवः समुच्यते याथातथ्येन निरूप्यते अस्मिन्निति व्याख्यानात् ॥

शारीरकीयः । पुं॰ ग्रन्थविशेषे ॥ शारीरकमधिकृत्य कृतो ग्रन्थः । अधिकृत्य कृते ग्रन्थ इत्यर्थे॰ वृद्धाच्छः ॥

शारुकः । त्रि॰ हिंसके ॥

शार्कः । पुं॰ शर्करायाम् ॥

शार्ककः । पुं॰ दुग्धफेने । शर्करापिण्डे ॥

शर्करः । पुं॰ दुग्धफेने । शर्करेव । शर्करादिभ्योऽण् । शर्करान्वितदेशे । शर्करायाम् । शर्करिले ॥ शर्करास्त्यत्र । देशे लुबिलचाविति चादण् ॥ त्रि॰ शर्करासम्बन्धिनि ॥

शार्कराक्ष्यः । पुं॰ जनाख्यर्षौ ॥ शर्कराक्षस्यापत्यम् । गोत्रापत्ये॰ गर्गादित्वाद्यञ् ॥

शार्ङ्गः । पुं॰ न॰ विष्णोर्धनुषि ॥ कार्मुकमात्रे ॥ शृङ्गस्य विकारः । अनुदात्तादेरञ् ॥ पुं पक्षिणि ॥ शृणाति । शॄ॰ । गणशकुनाविति गण्॰ तस्य नुट् । अपि वा ञिषतीति धातोर्व्वः ; त्रि॰ शृङ्गसम्बन्धिनि ॥ न॰ आर्द्रके ॥

शार्ङ्गधन्वा । पुं॰ विष्णौ ॥ इन्द्रियाद्यहङ्कारात्मकं॰ शार्ङ्गनामधनुर्यस्य । धनुषश्चेत्यनङ् ॥ यथा । भूतादिमिन्द्रियादिञ्च द्विधाहङ्कारमीश्वरः । बिभर्त्ति शङ्खरूपेण शार्ङ्गरूपेण च स्थितिमिति वि॰ पु॰ ॥

शार्ङ्गपाणिः । पुं॰ विष्णौ ॥ शार्ङ्गं पाणौ यस्य सः । प्रहरणार्थेभ्यः परे निष्ठासप्तम्याविति पाणेः परनिपातः ॥

शार्ङ्गी । पुं॰ विष्णौ ॥ शार्ङ्गमस्यास्ति । अत इनिठनाविति॰ इनिः । धन्विमात्रे ॥

शार्दूलः । पुं॰ व्याघ्रे ॥ पशुविशेषे । राक्षसे । उत्तरस्थितः सत्तमे ॥ यथा॰ राजशार्दूलः ॥ अग्नौ । चित्रके ॥ शारयति । शॄ॰ स्वार्थे णिच् : क्विप् । दूयते । दूङ् परितापे । अन्तर्भावितण्यर्थः । बाहुलकात्क्रक् । शार् चासौ दूलश्च । यद्वा । शृणाति । पिशादित्वात् दूलच् । बाहुलकाद्दुक् । सुचि : ॥

शार्दूलललितम् । न॰ धृति १८

छन्दःप्रभेदे ॥ तल्लक्षणं यथा । मः सौजः सततगाः सूर्य्याश्वैश्चतुर्भिः शार्दूललसितम् । यथा । कृत्वा कंसमृगे पराक्रमविधिं शार्दूललसितं यश्च क्षितिभारकारिषु सुराराति ष्वतिद्रतम् । सन्तोषं परमन्तु देवनिवहे त्रैलोक्यशरणं श्रेयो नः सततोऽत्वपारमहिमा लक्ष्मीप्रियतमः ॥

शार्दूलवाहनः । पुं॰ पञ्चविंशति पूर्वजिनान्तर्गतजिने ॥

शार्दूलविक्रीडितम् । न॰ अतिधृति १९ वृत्तप्रभेदे ॥ तल्लक्षणं यथा । सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ॥ यथा । गोविन्दं प्रणमोत्तमाङ्गरसनैस्त्वं चोपया हर्निशम् पाणी पूजयतं मनः स्मर पदे तस्यान्वयं गच्छतम् । एवं चेत्कुरुताखिलं मम हितं शीर्षादयस्तद् ध्रुवम् न प्रेत्य भवतां कृते भवमहाशार्दूलविक्रीडितम् ॥

शार्व्वरम् । न॰ अन्धतमसे । ध्वान्ते ॥ त्रि॰ घातुकी शर्व्वर्यांभवम् । तत्रभवइत्यण् । काणात्ठञ् चितः ॥ शर्व्वरीसम्बन्धिनि ॥

शार्व्वरी । स्त्री॰ शर्व्वर्याम् । रात्रौ ॥

शार्व्वी । स्त्री॰ ऐशान्यां दिशि ॥

शाल । पुं॰ मत्स्यविशेषे । गजके । गजाह॰ ह॰ प्र॰ । शालिवाहननृपे ॥ नद्रविशेषे ॥ सालवृक्षे ॥ शाडृते । शाड्श्लाघायाम् । कर्म्मणि॰ घञ् । डलयोरैक्यम् ॥ प्राकारे । शीतन्कर णे । बाहुलकात्कालन्वा ॥

शालग्रामः । पुं॰ हरिक्षेत्रे । गण्डकी शिलायाम् । विष्णवादिदेवानां प्रतिबिम्बरूपे पाषाणविशेषे । गण्डक्याश्चैकदेशे च शालग्रामस्थलं स्मृतम् । पाषाणं तद्भवं यत्तच्छालग्राममिति स्मृतम् ॥ शालवृक्षोपलक्षितो ग्रामः शालग्रामः शालग्रामेभवः । अण् ॥ अपि पापसमाचारो ब्रह्महत्यायुतोऽपि वा । शालग्रामशिलातोयं पीत्वा याति परां गतिम् ॥ तुलसीचन्दनं चक्रं शङ्खो घण्टा च चक्रकम् । शिलाताम्रस्य पात्रन्तु विष्णोर्नामपदामृतम् ॥ पदामृतं नवभिः पापराशिप्रदाहकम् । वदन्ति मुनयः शान्ताः सर्व्वशास्त्रार्थकोविदाः ॥ सर्व्वतीर्थपरिस्नानात्सर्व्वक्रतुसमर्च्चनात् पुण्यं भवति यद्राजन्बिन्दौ बिन्दौ तदद्भुतम् ॥ शालग्रामशिलायत्र पूज्यते पुरुषोत्तमः । तत्रैव योजनमात्रन्तु तीर्थकोटिसमन्वितम् ॥ शालग्रामाः समाः पूज्याः समेषु द्वितयं नहि । विषमा नैव पूज्याश्च विषमेषु त्रयं नहि ॥ द्वारावतीभ

वं चक्रांतथाबैगराङकोभवम् । उभयोः सङ्गमोयचतचगङ्गासमुद्रगा ॥ शालग्रामोहरेर्मूर्त्तिर्जगन्नाथश्चभारतम् । कलिर्दशहस्रान्तं ययुस्त्यक्त्वाहरेः पदम् ॥ विप्रक्षत्रियवैश्यानांशालग्रामशिलार्चने अधिकारीनशूद्राणांहरेरर्चार्चनेतथा ॥

शालग्रामगिरिः । पुं॰ शालग्रामोत्पादकपर्वते ॥

शालङ्कटङ्कटः । पुं॰ सुकेशिनिराक्षसे ॥

शालङ्कायनः । पुं॰ मुनिविशेषे ॥ नन्दिनि । शिवद्वारपाले ॥

शालङ्कायनकः । पुं॰ शालङ्कायनानविषयेदेशे । राजन्यादिभ्योवुञ् ॥

शालङ्कायनजीवसूः । स्त्री॰ व्यासमातरि ॥

शालङ्किः । पुं॰ मुनिविशेषे । पाणिनौ ॥

शालजः । पुं॰ गर्जकमत्स्ये । शालि ॥

शालनिर्यासः । पुं॰ धूनके । सर्ज्जरसे ॥

शालपर्णिका । स्त्री॰ शालपर्ण्याम् ॥

शालपर्णी । स्त्री॰ ओषधिविशेषे । विदारिगन्धायाम् । अंशुमत्याम् । स्थिरायाम् । शालपार्णी॰ इ॰ गौ॰ भा॰ ॥ अस्यागुणायथा । शालपर्णीगरच्छर्दिज्वरश्वासातिसारजित् । शोषदोषत्रयहरीबृंहण्युक्तारसायनी ॥ तिक्ताविषहरीस्वादुः क्षतकासकृमिप्रणुत् ॥ पाककर्म्मेतिङीप् ॥

शालभञ्जिका । स्त्री॰ शालभञ्ज्याम् ॥

शालभञ्जी । स्त्री॰ पञ्चालिकायाम् । दन्तकाष्ठादिनिर्मितपुत्रिकायाम् । वेश्यायां ॥

शालवः । पुं॰ लोध्रे ॥

शालवेष्टः । पुं॰ धूनके । शालस्यवेष्टोनिर्यासः ॥

शालसारः । पुं॰ तरौ । द्रुमे ॥ हिङ्गुनि ॥

शाला । स्त्री॰ गृहे ॥ गेहैकप्रदेशे । द्रुमस्कन्धशाखायाम् । स्कन्धात्प्रथमोत्पन्नप्रधानशाखायाम् ॥ शलन्त्यत्र । शलगतौ । हलश्चेति॰ घञ् ॥ यद्वा । शलति । शलचलने । ज्वलितीतिणः ॥ श्यति । शो॰ । बाहुलकात्॰ कालन्श ॥

शालाकटङ्कम् । न॰ चाणक्यमूलके ॥

शालाकी । पुं॰ अस्त्रवैद्ये ॥ नापिते ॥ शिलधारिणि ॥ इतिकश्चित् ॥

शालाक्यम् । न॰ आयुर्वेदस्याङ्गविशेषे ॥ यथाहसुश्रुतः । तत्र॰ शालाक्यंनाम॰ ऊर्द्ध्वजत्रुगतानांरोगाणां॰ श्रवणनयनवदनघ्राणादिसंश्रितानांव्याधीनामुपशमनार्थमिति ॥

शालाग्निः । पुं० आवसथ्याग्नौ ॥

शालाङ्की । स्त्री० पुत्तलिकायाम् । पञ्चालिकायाम् ॥ हे० म० र० को ॥

शालाजिरः । पुं० न० शरावे ॥

शालाञ्चिः । स्त्री० शाकविशेषे । शालिञ्चे ॥

शालातुरीयः । पुं० पाणिनीयमुनौ ॥ शलातुरोऽभिजनोऽस्य । तूदीशलातुरेतिछण् ॥

शालानी । विदार्याम् ॥

शालामृगः । शृगाले ॥

शालारम् । न० हस्तिनखे । पुरद्वारस्थमञ्चये ॥ सोपाने ॥ पक्षिपञ्जरे ॥

शालावृकः । पुं० शृगाले ॥ सारमेये ॥ वलीमुखे । मर्कटे । वानरे ॥ शालां वृणोति । वृञ् ० । सृवृभूशुषिमुषः कक् ॥ विडाले ॥

शालिः । पुं० गन्धोतौ । गन्धमार्जारे ॥ कलमादिधान्ये ॥ आदिशब्दात् राजशाल्याद्या बोद्धव्याः ॥ तेयथा । राजान्नषष्टिकसितेतररक्तमुण्डस्थूलाशुगन्धतिरियादिकशालिसंज्ञाः । ब्रीहिस्तथेति दशधा भुवि शालयस्तु तेषां क्रमेण गुणनामगणं ब्रवीमि ॥ इति राजनिर्घण्टः ॥ शाडते । शाडृ श्लाघ्ये । डलयोरैक्यम् ॥ इन् ॥ शाल्यते वा । शल चलने । ण्यन्तः । अच इः ॥ यद्वा । शृणाति । शॄ० । बाहुलकादिञ् शारिः । कपिलकादित्वात् लत्वम् ॥ शालयो द्विविधाः प्रोक्ता जलजाः स्थलजास्तथा । तत्र । कण्डनेन विना शुक्ला हैमनाः शालयः स्मृताः ॥ शालीनां नामान्याह । रक्तशालिः सकलमः पाण्डुकः शकुनाहृतः । सुगन्धकः कर्दमको महाशालिश्च दूषकः ॥ पुष्पाण्डकः पुण्डरीकस्तथा महिषमस्तकः । दीर्घशूकः काञ्चनको हायनो लोध्रपुष्पकः ॥ इत्याद्याः शालयः सन्ति बहवो बहुदेशजाः । ग्रन्थविस्तरभीतेस्ते समस्ता नात्र भाषिताः ॥ अथ गुणाः । शालयो मधुराः स्निग्धा बल्या बद्धाल्पवर्चसः । कषाया लघवो रुच्याः स्वर्या वृष्या बृंहणाः ॥ अल्पानिलकफाः शीताः पित्तघ्ना मूत्रलास्तथा । शालयो दग्धमृज्जाताः कषाया लघुपाकिनः ॥ सृष्टमूत्रपुरीषा रूक्षाः श्लेष्मापकर्षणाः । कैदारा वातपित्तघ्ना गुरवः कफशुक्रलाः । कषाया अल्पवर्चस्का मधुरा बलावहाः ॥ कैदाराः कृष्टवनजाः ॥ स्थलजाः स्वादवः पित्तकफघ्ना वातवह्निदाः । किञ्चित्सतिक्ताः कषाया विपाके कटुकाश्चापि ॥ स्थलजाः :

अकृष्टभूमिजाः स्वयंजाताः ॥ वापितामधुराहृष्यावल्याः पित्तप्रशमनाः । श्लेष्मलाश्चाल्पवर्चस्काः कषायागुरवोहिमाः ॥ वापिताः० कृष्टक्षेत्रे० अकृष्टक्षेत्रे वा ॥ वापितेभ्योगुणैः किञ्चिद्धीनाः प्रोक्तास्त्ववापिताः । कृष्टक्षेत्रे० अकृष्टक्षेत्रे वा । रोपितास्तुनवावृष्याः पुराणालघवः स्मृताः ॥ रोपितारोपिताभूयः शीघ्रपाकागुणाधिकाः ॥ छिन्नरूढाहिमारूक्षावल्याः पित्तकफापहाः ॥ बद्धविट्काः कषायाश्चलघवश्चाल्पतिक्तकाः ॥ रक्तशालिर्वरस्तेषुवल्योवर्ण्यस्त्रिदोषजित् । चक्षुष्योमूत्रलः स्वर्यः शुक्रलस्तृट्ज्वरापहः ॥ विषव्रणश्वासकासदाहनुद्वह्निपुष्टिदः । तस्मादल्पान्तरगुणाः शालयोमहदादयः ॥ रक्तशालिः दौदखानी० इतिमगधदेशेयस्यप्रसिद्धिः ॥ इतिभावप्रकाशः ॥

शालिकरः । पुं० षण्मासकृत्वयोद्धयप्रभेदे ०॥।॥०

शालिका । स्त्री० विदार्याम् ॥

शालिञ्चः । पुं० शाकविशेषे । दीपने ॥

शाली । त्रि० शोभायमाने ॥ शालते । श्लाघकत्थने । तच्छीलः । णिनिः ॥ पदान्तेयुक्तवाचकोयं । यथा । स्मितशाली ॥

शालिनी । स्त्री० त्रिष्टुप् ११ छन्दोभेदे ॥ तल्लक्षणंयथा । मात्तौगौ चेच्छालिनीवेदलोकैः ॥ यथा । यंद्रेहन्तिज्ञानवृद्धिं विधत्तेधर्मंधत्ते काममर्थंचसूते । मुक्तिंदत्ते सर्वदोपास्यमानापुंसांश्रद्धाशालिनीविष्णुभक्तिः ॥ स्वाधायाम् ॥

शालिनीकरणम् । न० न्यग्भावने । तिरस्कारइतियावत् ॥ इ० त्रि० शेषः ॥

शालिपर्णी । स्त्री० माषपर्ण्याम् ॥

शालिपिष्टम् । न० स्फाटिकोपले । धौतशिले ॥

शालिवाहनः । पुं० वर्त्तमानशककर्त्तरिनृपविशेषे ॥

शालिहोत्रः । पुं० अश्वे । मुद्गभुजि । घोटके ॥ मुनिविशेषे ॥

शाली । स्त्री० कृष्णजीरके ॥

शालीनः । त्रि० अधृष्टे । सलज्जे । शालाप्रवेशमर्हति । शालीनकौपीनेअधृष्टाकार्ययोरितिसाधुः ॥ शोभमाने ॥ यथा । वनचारिणशालीननयनाद्व्याचार्याः ॥

शालिना । स्त्री० मिश्रेयायाम ॥

शालीयः । त्रि० शालायाम्भवे ॥

शालुः । पुं० कषायद्रव्ये ॥ चौरकाख्यौषधौ ॥ मण्डूके । भेके ॥ न० शालूके ॥

शालुकम् । न० पद्मशूरणे । शालूके ॥

शालूकम् । न० सौगन्धिकादीनां

कन्दे । पङ्कशूरणे ॥ शालूकंशी तलंबर्ण्यंपित्तदाहासनुद्गुरु । दुर्ज रंस्वादुपाकस्तन्यानिलकफप्रदम् ॥ सङ्ग्राहिमधुरंरूक्षं भिषगाद्यम-पितद्गुणम् ॥ जातीफले ॥ शल्यते॰ शलतिवा । शलचलनसंव रणयो: । शलिमण्डिभ्यामूकण्॰ इतृधिबा ।

शालूकिनी । स्त्री॰ ग्रामविशेषे ॥ शालूकानिसन्त्यस्याः देशे । पुष्कराद्भ्योदेशइति॰ इनि : ॥ तीर्थविशेषे ॥

शालूर : । पुं॰ भवे । ददुरे ॥ शाडते । शाडगतौ । खर्जपिञ्जादिभ्यऊरोलचाविल्यूरः । डलयोरैक्यम् ॥ शालतेवा । शालकत्थने ॥ पूर्ववदूर : ॥

शालेय : । पुं॰ मिसी । मधुरायाम् ॥ त्रि॰ शाल्युद्भवक्षेत्रे । धान्यसामान्यस्यकलमादेर्श्चोत्पत्तियोग्ये च ॥ शालीनांभवनंक्षेत्रम् । व्रीहिशाल्योर्ढक् । तदस्यास्ति । चर्मादायण् ॥

शालेयधाराभृत् । पुं॰ गिरिविशेषे । शालेरमौ॰ इ॰ भा॰ प्र॰ । शालिवाहनजन्मस्थाने ॥

शालेया । स्त्री॰ मिश्रेयायाम् ॥

शाल्मल : । पुं॰ शाल्मलिद्रुमे ॥ शाल्मलिद्वीपे ॥

शाल्मलि : । पुं॰ स्त्री॰ पिच्छिलायाम् । पूरण्याम् । मोचायाम् । स्थिरायुषि । सेमल॰ सेंमर॰ इ॰भा॰ । षष्टिवर्षसहस्राणिवनेतिष्ठतिशाल्मलि: ॥ यस्यागुणायथा । शाल्मलि : शीतलास्वादुरसेपाकेरसायनी । श्लेष्मलास्निग्धवीर्याचबृंहणी रक्तपित्तजित् ॥ इति ॥ शालयति । शलचलनेणिजन्त : । क्विप् । मलते । मलधारणे । सर्वधातुभ्यइन् । शाल्चासौमलिश्च ॥ द्वीपविशेषे । सहस्रयोजनोन्नत : सूर्यद्युति शाल्मलिवृक्ष : शाल्मलिद्वीपेस्ति । यथा । शाल्मलिशाल्मलीवृक्षोहैम : साक्षिकीकभा : । प्रियोमरार्णा तल्कोतु: सतदाख्यानिबन्धनइति ॥

शाल्मलिक : । पुं॰ रोहितकवृक्षे । कूटशाल्मली ॥

शाल्मली । पुं॰ गरुडे ॥ इ॰ हा॰ को ॥

शाल्मलिनिर्यास : । पुं॰ मोचरसे ॥

शाल्मलिनी । स्त्री॰ शाल्मलीवृक्षे ॥

शाल्मलिपत्रक: । पुं॰ सप्तच्छदवृक्षे ॥

शाल्मलिस्थ : । पुं॰ गरुडे । शाल्मलिद्वीपस्थशाल्मलिवृक्षेतिष्ठति । ष्ठा॰ । क : ॥

शाल्मली । स्त्री॰ शाल्मलिवृक्षे ॥ कृदिकारादितिङीष् ॥

शाल्मलीकन्द : । पुं॰ शाल्मलिवृक्षमूले । बिजुलि । मलग ॥

शाल्मलीपुष्पम् । न० पिच्छिलाकुसुमे ॥ तच्छाकगुणाः । शाल्मलीपुष्पशाकन्तु घृतसैन्धवसाधितम् । प्रदरं नाशयत्येव दुःसाध्यञ्च न संशयः ॥ रसे पाके च मधुरं कषायं शीतलं गुरु । कफपित्तास्रजिद्ग्राहि शतलञ्च प्रकीर्त्तितम् ॥

शाल्मलीफलः । पुं० तेजःफलवृक्षे ।

शाल्मलीवेष्टः । पुं० पिच्छायाम् । मोचरसे । मोचस्रावे सेमरगोंद इति ख्याते ॥ शाल्मल्यावेष्टः ॥

शावः । पुं० अर्भके । शिशौ । त्रि० शवसम्बन्धिनि । शव्यते । शवगतौ । घञ् । शवस्यायम् । अण् ।

शावकः । पुं० शिशौ । बाले । शव्यते । शव० । घञ् स्वार्थे कन् ॥

शावरः । पुं० पापे ॥ अपराधे ॥ श्वेतलोध्रे । गालवे ॥ शबराणामयम् । तस्येदमित्यण् ॥ शवरस्वामिकृतभाष्ये ॥ न० तन्त्रविशेषे ॥ मन्त्रविशेषे ॥ त्रि० शबरसम्बन्धिनि ॥

शावरभेदाख्यम् । न० ताम्रे ॥

शावरी । स्त्री० शूकरशिम्ब्याम् ॥ ङीप् ॥

शावरोत्सवः । पुं० म्लेच्छकृतोत्सवे ॥ यथा । पूजयित्वा महाष्टम्यां नवम्यां बलिभिस्तथा । विसर्जयेद्दशम्यान्तु श्रवणे शावरोत्सवैरित्यादिकालिकापुराणम् ॥

शाश्वतः । पुं० वेदव्यासे । त्रि० नित्ये० अनाद्यनन्ते० सदैकरूपे० परमात्मनि ॥ शश्वत् सर्वदा भवति० नापचीयते नापचीयते च यो ह्य शाश्वतः सोऽपचीयतेऽपचीयते च० अयन्तु न तथा ॥ सतते । अनारते । सापेक्षनित्ये ॥ शश्वद्भवः । तत्र भव इत्यण् । अनित्योऽव्ययानां टिलोपो बहिषष्टिलोपविधानाज्ज्ञापकात् ॥ पारिभाषिकशाश्वतं यथा गारुडे । शाश्वतं देवपूजादि० विप्रदानञ्च शाश्वतम् । शाश्वतो सगुणा विद्या० सुहृन्मित्रञ्च शाश्वतमिति ॥

शाश्वतिकः । त्रि० नित्ये ॥ शश्वद्भवः । अध्यात्मादित्वाट्ठञ् । शाश्वतिक इति निर्देशान्न कादेशः ॥

शाष्कलः । त्रि० आमिषाशिनि ॥ शष्कलीमांसोपलक्षणम् । तामत्ति । शेषइत्यण् । पृषोदरादिः ॥

शाष्कुलिः । त्रि० मांसाशिनि ॥ शष्कुलीमांसोपलक्षणम् तामत्ति । शेषइत्यण् ॥

शाष्कुलिकम् । न० शष्कुलीवृन्दे । शष्कुलीनां समूहः । अचित्तहस्तिधेनोष्ठक् । त्रि० शष्कुलिप्रिये ॥ शष्कुल्यो भक्तिरस्य अचित्ताददेशका

लाट्ठच् ॥ शष्कुलीसदृशे ॥ शष्कुलीव । अङ्गुल्यादिभ्यष्ठच् ।

शासकः । त्रि० शासनकर्तरि । उपदेष्टरि । शास्तरि ॥ शास्ति । शासु० ण्वुल् ॥

शासनम् । न० राजदत्तोर्व्याम् ॥ लेखे । लिपौ । लेखायाम् ॥ आज्ञायाम् । प्रवर्त्तनायाम् ॥ शास्त्रे ॥ शास्तौ ॥ पत्रे ॥ श्रुतिरूपेश्वराज्ञावले ॥ शासु अनुशिष्टौ । ल्युट् ॥ त्रि० । शासयितरि ॥ णिजन्ताच्छासेर्नन्द्यादित्वाल्ल्युः ॥

शासनहरः । पुं० राजदूते ॥ आज्ञावाहके ॥

शासितः त्रि० कृतशासने ॥

शासिता । त्रि० शासनकर्तरि । उपदेष्टरि । शास्तरि ॥ ब्रह्मादिस्तम्बपर्य्यन्तस्य० चेतनाचेतनस्य० जगतो नियन्तर्य्यन्तर्यामिणि परमात्मनि ॥ योऽयमग्न्यादीनामौष्ण्यादिनियमो यश्चादित्यादीनां भ्रमणादिनियमो यच्च कर्मणां फलं प्रतिनियतमेतत् सर्वं परमात्माधीनमस्ति ॥

शास्तिः । स्त्री० आज्ञायाम् ॥ राजदण्डे । शासु० । बाहुलकात् क्तिप्रत्ययः ह्रस्वाभावश्च ।

शास्ता । पुं० उपाध्याये ॥ पितरि ॥ राजनि ॥ बुद्धे ॥ समन्तभद्रे । जिने ॥ त्रि० शासके । देशके । शासितरि ॥ शास्ति शिक्षयति इति० शास्ता । तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ इति तृन्० तृचौ । नप्त्रादिग्रहणस्य व्युत्पत्तिपक्षे नियमार्थत्वान्न दोषः । पिठात्० शास्तृशब्दः । बोधाता चावधाता च पौराणो जगतः पतौ वीणास्तारौ त्रिलोकेऽस्मिन् धर्माधर्मौ प्रकीर्त्तिताविति [illegible]पुराणे तु सबुल वचाविति तज्ज्वोध्यः ॥ प्रशासितरि । ईश्वरे ॥ सर्वेषां वर्णाश्रमाणां तत्तत्कर्मण्यधिकृतानां श्रुतिस्मृत्यादिभिरनुशिष्टं करोति ततथा । शासिर्यद्यपि सेट्कस्तथापि बहुलप्रयोगानुरोधादनित्यमागमशासनमिति न्यायात्० प्रसितस्कभितेत्यादिच्छन्दसि निपातनाद्वा इडभावः ॥

शास्त्रम् । न० । आज्ञायाम् । निदेशे । आगमे । वेदे । शिष्यते० अनुशिष्यतेऽपूर्वोऽर्थो बोध्यतेऽनेनेति शास्त्रं वेदः ॥ वेदोपजीविषु० स्मृतिपुराणागमादिषु ॥ एकप्रयोजनोपनिबद्धेऽशेषार्थप्रतिपादके ॥ छन्दोव्याकरणाभिधानकोशकलाचतुर्वर्गगजतुरगखङ्गादिलक्षणग्रन्थाः शास्त्राण्यभिधीयन्ते ॥ प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥

तच्छास्त्रं त्रिविधं प्रोक्तं सात्त्विकादि
विभेदतः। यथोक्तं देवीभागवते
। सात्त्विकं तच्च वेदान्तं मीमांसा रा
जसं मतम्। तामसं न्यायशास्त्रं
च हेतुवादाभियन्त्रितमिति ॥ त
थाध्यात्मशास्त्रातिरिक्तशास्त्रनिन्दा
यथा कुलार्णवे। षड्दर्शनमहा
कूपे पतिताः पशवः प्रिये। पर
मार्थं न जानन्ति पशुपाशनियन्त्रिताः
॥ वेदशास्त्रार्णवे घोरे उह्यमाना इत
स्ततः। षडूर्मिनिग्रहग्रस्तास्ति
ष्ठन्ति हि कुतार्किकाः ॥ वेदागम
पुराणज्ञः परमार्थं न वेत्ति यः।
विडम्बकस्य तस्यैव तत्सर्वं काकभा
षितम् ॥ इदं ज्ञानमिदं ज्ञेयमिति
चिन्तासमाकुलाः। पठन्त्यहर्निशं
देवि परतत्त्वपराङ्मुखाः ॥ वाक्य
च्छन्दोनिबन्धं च काव्यालङ्कारशो
भिताः। चिन्तया दुःखिता मू
ढास्तिष्ठन्ति व्याकुलेन्द्रियाः ॥ अ
न्यथा परमं तत्त्वं जनाः क्लिश्यन्ति
चान्यथा। अन्यथा शास्त्रसद्भावो व्या
ख्यां कुर्वन्ति चान्यथा ॥ कथयन्त्यु
न्मनीभावं स्वयं नानुभवन्ति च। अ
हङ्कारहताः केचिदुपदेशादिवर्जि
ताः ॥ पठन्ति वेदशास्त्राणि बोधय
न्ति परस्परम्। न जानन्ति परं तत्त्वं
दर्वी पाकरसं यथा ॥ शिरो वहति
पुष्पाणि गन्धं जानाति नासिका।



पठन्ति वेदशास्त्राणि दुर्लभो भावबो
धकः ॥ तत्त्वमात्मस्थमज्ञात्वा मू
ढः शास्त्रेषु मुह्यति। गोपः कक्ष
गते छागे कूपे पश्यति दुर्मतिः ॥
संसारमोहनाशाय शाब्दबोधो न हि
क्षमः। न निवर्तते तिमिरं कदा
चिद्दीपवार्तया ॥ प्रज्ञाहीनस्य पठ
नमन्धस्य दर्पणं यथा। देवि प्रज्ञा
वतः शास्त्रं तत्त्वज्ञानस्य साधनम्
अग्रतः पृष्ठतः केचित्पार्श्वयो
रिति केचन। तत्त्वमीदृक्तादृगि
ति विवदन्ति परस्परम् ॥ सद्विद्या
दानशौर्यादिगुणैर्विख्यातमानवः
। ईदृशस्तादृशश्चेति दूरस्थः कथ्यते
जनः ॥ प्रत्यक्षग्रहणं नास्ति वार्त
याग्रहणं प्रिये। एवं ये शास्त्रसम्मू
ढास्ते दूरस्थाः न संशयः ॥ इदं ज्ञा
नमिदं ज्ञेयं सर्वं तच्छ्रोतुमिच्छति।
दिव्यवर्षसहस्रायुः शास्त्रान्तं नैव
गच्छति ॥ वेदान्यनेकशास्त्राणि
चाल्पायुर्विघ्नकोटयः। तस्मात्
सारं विजानीयात्क्षीरं हंस इवाम्भ-
सः ॥ अभ्यस्य सर्वशास्त्राणि तत्त्वं
ज्ञात्वाथ बुद्धिमान्। पलालमिव
धान्यार्थी सर्वशास्त्राणि संत्यजेत् ॥
यथाऽमृतेन तृप्तस्य नाहारेण प्रयोजन
म्। तत्त्वज्ञस्य तथा देवि न शास्त्रे
ण प्रयोजनम्। न वेदाध्ययनान्मु
क्तिर्न शास्त्रपठनादपि। ज्ञानादेव

हि मुक्तिः स्यान्नान्यथा वीरवन्दिते ॥ आगमाः कारणं मुक्तेर्दर्शनानि च कारणम् । तथैव सर्वकर्माणि ज्ञानमेव हि कारणम् ॥ मुक्तिदा गुरुवागेका विद्याः सर्वा विडम्बनाः । काष्ठभारसहस्रेषु एकं सञ्जीवनं परम् ॥ अद्वैतं हि शिवप्रोक्तं क्रियायासविवर्ज्जितम् । गुरुवक्त्रेण लभ्येत नाधीतागमकोटिभिः ॥ आगमोत्थं विवेकोत्थं द्विधा ज्ञानं प्रचक्षते । शब्दब्रह्मागममयं परंब्रह्म विवेकजम् ॥ अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे । मम तत्त्वं न जानन्ति द्वैताद्वैतविवर्ज्जितम् ॥ द्वे पदे बन्धमोक्षाय निर्म्ममेति ममेति च । ममेति बध्यते जन्तुर्निर्म्ममेति विमुच्यते ॥ तत् कर्म यन्न बन्धाय सा विद्या या विमुक्तिदा । आयासायापरं कर्म विद्यान्या शिल्पनैपुणम् ॥ यावत्कर्म्माणि दीप्यन्ते यावत्संसारवासना । यावदिन्द्रियचापल्यं तावत्तत्त्वकथा कुतः ॥ यावत् प्रयत्नवेगोऽस्ति यावत्सङ्कल्पकल्पना । यावन्न मनसः स्थैर्य्यं तावत् तत्त्वकथा कुतः ॥ यावद्देहाभिमानश्च ममता यावदेव हि । यावन्न गुरुकारुण्यं तावत् तत्त्वकथा कुतः ॥ तावत् तपो व्रतं तीर्थं जपहोमार्च्चनादिकम् ।



वेदशास्त्रागमकथा यावत् तत्त्वं न विन्दति ॥ तस्मात् सर्वप्रयत्नेन सर्व्वावस्थासु सर्व्वदा । तत्त्वनिष्ठो भवेद्देवि यदीच्छेन्मोक्षमात्मनः ॥ धर्म्मज्ञानसुपुष्पस्य स्वर्गभोगफलस्य च । तापत्रयाग्निसन्तप्तश्छायां मोक्षतरोः श्रयेत् ॥ इति ॥ वह्निपुराणेऽपि । पुराणं भारतं वेदो धर्म्मशास्त्राणि यानि च । आयुषः क्षपणायैव धर्म्मं तत्त्वेन चाचरेत् ॥ पुत्त्रदारादिसंसारः पुंसां सम्मूढचेतसाम् । विदुषां शास्त्रसंसारः सद्योगाभ्यासविघ्नकृत् ॥ इदं ज्ञेयमिदं ज्ञेयं यः सर्व्वं ज्ञातुमिच्छति । अपि वर्षशतेनापि शास्त्रान्तं नाधिगच्छति ॥ विज्ञायाक्षरतन्मात्रं जीवितञ्चापि चञ्चलम् । विहाय शास्त्रजालानि पारलौकिकमाचरेत् । पण्डितोऽपि हि मूर्खोऽसौ शक्तियुक्तोऽप्यशक्तिकः ॥ यः संसारान्न चात्मानं समुत्तारयितुं क्षमः ॥ इति ॥ शैवपाशुपतादिशास्त्रोत्पत्तिर्यथागमस्वतन्त्रे ॥ प्रथमं हि मया प्रोक्तं शैवं पाशुपतादिकम् । मच्छक्त्यावेशितैर्विप्रैः सम्प्रोक्तानि ततः परम् ॥ कणादेन च सम्प्रोक्तं शास्त्रं वैशेषिकं महत् । गौतमेन तथा न्यायं साङ्ख्यन्तु कपिलेन हि ॥ धिषणेन तथा प्रोक्तं चार्व्वाकमतिगर्हितम् । दैत्यानां नाशनार्थाय विष्णु

च ॥

शास्त्री० । त्रि० शास्त्रज्ञानवति ॥ शास्त्रमस्त्यस्यास्मिन्वा । इनिः ॥

शास्त्रीयः । त्रि० शास्त्रेषप्रोक्ते ॥ वृद्धाच्छः ॥

शास्यः । त्रि० शासनयोग्ये । शासनीये ॥

शिंशपा । स्त्री० पिच्छिलायाम् । अगुरौ । सीसौं इ० प्र० द्रुमे ॥ गुणायथा । शिंशपाकटुकातिक्ता कषायाशोषहारिणी । उष्णवीर्या हरेन्मेदः कुष्ठश्वित्रवमिक्रमीन् ॥ वस्तिरुग्व्रणदाहास्रबलासान्गर्भपातिनीति० भा० प्र० ॥ शिंशपा वातनाशिनीतिराजवल्लभः ॥ शीघ्र० शीघ्रंशपाति । पा० । घातर्लिकः । पृषोदरादिः ॥ यद्वा । शिशिमित्यव्यक्तंशब्दं० शब्देनवा० शपति । शपआक्रोशे । पचाद्यच् ॥ शिंशाभिः शपतीतिवा । हैविकाशिंशपेतिनिर्देशाद्वाशब्दलोपः ॥

शिक्रुः । त्रि० अव्यवसायिनि ॥

शिक्यम् । न० काचे । दर्भमौञ्ज्यादिरसनारचितदुग्धदध्यादिद्रव्याधारविशेषे ॥ संन्यासिनांभिक्षादिपात्राधारभूते । छींका इ० भा० प्र० ॥ संसतेऽस्मात् । संसुध्वंसः पतने । स्रसेः शिकुट्किच्चेति० धातोः शिरादेशोयतप्रत्ययः कित्० तस्यकुडागमश्च ॥

शिक्या । स्त्री० शिक्ये । काचे ॥

शिक्यितः । त्रि० काचस्थे । शिक्यस्थापितवस्तुनि ॥ शिक्येधृतम् । प्रातिपदिकाद्धात्वर्थेबहुलमिष्ठवच्च । क्तः ॥

शिक्षकः त्रि० शिक्षाकारके शिक्षाभिज्ञे ॥ शिक्षामधीते० वेदवा । क्रमादिभ्योवुन् ॥

शिक्षणम् । न० विद्योपादाने ॥ शिक्षायाम् । शिक्षविद्योपादाने । ल्युट् ॥

शिक्षा । स्त्री० वेदाङ्गविशेषे । अकारादिवर्णानांस्थानप्रयत्नादिबोधके० अथशिक्षांप्रवक्ष्यामिपाणिनीयंमतंयथेत्यादिपाणिन्यादिमुनिप्रोक्ते-शास्त्रविशेषे ॥ शिक्षणे । योगमाकरणे ॥ शिक्ष्यतेस्थानादिकमनया । शिक्ष० । गुरोश्चहलः । टाप् ॥

शिक्षाकरः । पुं० वेदव्यासे । त्रि० शिक्षाकर्त्तरि । शिक्षके ॥

शिक्षाकारः । पुं० पाणिन्यादिमुनौ ।

शिक्षागुरुः । पुं० विद्यादातरिगुरौ ॥

शिक्षितः । त्रि० कुशले । विज्ञे बोधिते ॥ शिक्षासञ्जाताऽस्य । तारकादिस्यादितच् ॥ यद्वा । शक्षिविष्ट ।

शिख० । अकर्मकत्वात् कर्त्तरि क्तः ॥

शिखिताघर : । पुं० घघरमुखि । छा षे ॥

शिख्य : । त्रि० नियम्ये ॥

शिखण्ड : । पुं० बर्हे । मयूरपिच्छे । मोरपङ्ख इ० भा० ॥ चूडायाम् ॥ शिखिनाश्यन्ती । चमगत्यादिषु । अमन्ताड : । शकन्ध्वादि : ॥

शिखण्डक : । पुं० काकपक्षे । पट्टे इ० भा० । शिखायाम् । यथा । बालानाश्चिर : कार्य्यं शिखंमुण्ड मेवचेति ॥ पुं० न० केकिपुच्छे ॥

शिखण्डिक : । पुं० कुक्कुटे । शिखण्डोऽस्यास्ति । ठन् ॥

शिखण्डिका । स्त्री० शिखायाम् ॥

शिखण्डी । पुं० कलापे । बर्हे । मोरपङ्ख इ० भा० ॥ मयूरे । बर्हिणि । गाङ्गेयारौ । भीष्मरिपौ । द्रुपदराजपुत्रे ॥ कुक्कुटे । वाणे ॥ गोपवेशधरेविष्णौ ॥ शिखण्डोबर्हः कलापीलङ्करणमस्यास्मिन् वास्ति अतइनिठनाविति इनि : ॥

शिखण्डिनी । स्त्री० गुञ्जायाम् ॥ यूथिकायाम् ॥ द्रुपदराजकन्यायाम् ॥ मयूरपिच्छभूषणायाम् ॥ मयूरकलाध्वजे ॥ शिखण्डोऽस्यस्या : । इन्नन्तात् ङीप् ॥

शिखण्डी । स्त्री० गुञ्जायाम् ॥ यूथिकायाम् ॥ गौरादित्वात् ङीष् ॥

शिखर : । पुं० न० द्रुमाग्रे । शिरसि । अग्रे ॥ अद्रिशृङ्गे । कूटे । शृङ्गे ॥ पुलके ॥ कक्षे ॥ पक्वदाडिमबीजाभमाणिक्यशकले ॥ अग्रे ॥ कोटौ ॥ शिखाऽस्यास्ति । शिखायाः खलु खितिर : ॥ शिखरादित्वा । रा० । क : । अपीति खः ॥

शिखरवासिनी । स्त्री० उमायाम् । दुर्गायाम् ॥ सातिभन्तुसुप्रीतादेवीशिखरवासिनी । उग्रं चतपसालब्धो ययाप्पशुपति : पति : ॥

शिखरा । स्त्री० मूर्वायाम् ॥

शिखरिणी । स्त्री० रसालाप्रभेदे ॥ यथा । गव्यमावर्त्तितं दुग्धं निवर्तं दधिमाहिषम् । एकीकृत्यपटे घृष्टं शुभ्रशर्करयासमम् । एलालवङ्गकर्पूरमरीचैश्चसमन्वितम् । नाम्नाशिखरिणीकुर्याद्रुचिं सकलवल्लभा ॥ अत्यष्टि १७ प्रभेदे ॥ यथा । रसैरुद्रैश्छिन्नायमनसभलागः शिखरिणी ॥ यथा । ऋराद्रस्त्रभष्टेननुशिखरिणीदृश्यतिशिमी । विलीना : स्म : सत्यंनियतमभियंतदखिलै : । इतिप्रच्छन्नोमानुषितमिभतालापजनितं स्मितं बिभ्रद्देवोजगदवतुगोवर्द्धनधर : ॥ दृशिघ्यतिशिमीदृतिच्छेद । नारीरत्ने ॥ मल्लिकायाम् ॥ रोमावल्याम् ॥ नवमालिकायाम् ॥

द्राक्षाविशेषे ॥ मूर्वायाम् ॥
शिखरी । पुं० अपामार्गे । शैले । पर्वते । पादपे । द्रुमे ॥ कोट्टे ॥ कोयष्टौ ॥ वन्दाके ॥ कर्कटशृङ्ग्याम् ॥ कुन्दुरुसंज्ञकेनिर्यासे ॥ यावनाले । शिखरमस्त्यस्य । अतइनि : ॥
शिखलोहित : । पुं० कुकुरमुडा० इ० गो० दे० भा० प्र० ढचे ॥
शिखा । स्त्री० शाखायाम् ॥ बर्हिचूडायाम् । माङ्गलिक्याम् ॥ अग्रमात्रे ॥ शिरोमध्यस्थकेशेषु । चूडायाम् । केशपाश्यायाम् । चोटी० इ० भा० ॥ अग्निज्वालायाम् । ज्वाले । अर्चिषि ॥ प्रपदे ॥ प्रधाने । शिफायाम् । घृणौ । कामज्वरे ॥ मात्राछन्द : प्रभेदे । यथा । द्विजवरमिह द्विरसगुणितमुपनयतदनुशगणमपिनिधेहि खरगुणितमपरदलम पिकुरुवरफणिपतिमुखभणितरुचिरशिखिहि । यथा । बकुलवनमृदुपवनरयनिहतविरहिगतसुरभिरयमेति । दयिततमविरहिममहृदयमतिलपतिसखियदिहतविधुरयमुदेति ॥ शैले । गीडीजलाश्वेतिख: । [illegible] ॥
शिखा[illegible]न्दम् । न० शृङ्गवेरे । सलगम ० [illegible] भा० प्र० ।
शिखाजट : । पुं० ब्रह्मचारिविशेषे ॥

शिखैवजटाजातायस्य : ॥ अपरे० शिर : केशामुण्डितायस्यतथाविधोब्रह्मचारी० शिखाजटइत्युच्यते ॥
शिखाण्डक : । पुं० काकपक्षे ॥
शिखातरु : । पुं० दीपवृक्षे ॥ दीवट ० इ० भा० प्र० दीपाधारविशेषे ॥
शिखाधर : । पुं० मयूरे ॥ मञ्जुघोषे ।
शिखाधार : । पुं० मयूरे ॥
शिखामूलम् । न० शृङ्गवेरे ॥
शिखालु : । पुं० मयूरशिखायाम् ॥
शिखावान् । पुं० अग्नौ ॥ चित्रके ॥ केतुग्रहे ॥ त्रि० शिखायुक्ते ॥ शिखास्त्यस्यमतुप् ॥
शिखावती । स्त्री० मूर्वायाम् ॥
शिखावर : । पुं० पनसद्रुमे ॥
शिखावल: । पुं० शिखिनि । मयूरे ॥ शिखास्त्यस्य । दन्तशिखात्संज्ञायामितिवलच् ॥
शिखावला । स्त्री० मयूरशिखायाम् ॥
शिखावृद्धि : । स्त्री० कायिकावृद्धौ ॥
शिखावृक्ष : । पुं० शिखातरौ ॥
शिखिकण्ठम् । न० नीले । मयूरग्रीवे । तुल्याञ्जने ॥
शिखिग्रीवम् । न० तुत्थे ॥ शिखिनोग्रीवा । शिखिग्रीवाअस्यास्ति । तद्वर्णत्वात् ॥ अर्शआद्यच् ॥
शिखिध्वज : । पुं० कार्त्तिकेये ॥ शिखीमयूरोध्वजचिह्नमस्य ॥ धूमे ॥

शिखिनोध्वजः ॥

शिखी । पुं॰ अग्नौ वैश्वानरे ॥ चित्रकवृक्षे ॥ बलीवर्द्दे ॥ शरे ॥ केतुग्रहे ॥ द्रुमे ॥ मयूरे ॥ कुक्कुटे ॥ हये ॥ शिखाः सन्त्यस्य । शिखास्त्यस्यवा । इत्यभिधानात् वृ॰ नि॰ व्रीह्यादित्वाद्वा ॥ अजलोमनि ॥ सिताबरे ॥ मेथिकायाम् ॥ शुक्रशिम्ब्याम् ॥ त्रि॰ शिखायुक्ते ॥

शिखिनी । स्त्री॰ मयूर॰ शिखायाम् ॥

शिखिपुच्छम् । न॰ मयूरपिच्छे ॥

शिखिप्रियः । पुं॰ लघुबदरे ॥

शिखिमण्डलः । पुं॰ वरुणद्रुमे ॥

शिखिमूलम् । न॰ गृञ्जने ॥

शिखिमोदा । स्त्री॰ अजमोदायाम् ॥

शिखियूपः । पुं॰ शीकारीमृगे ॥

शिखिवर्द्धकः । पुं॰ कूष्माण्डे ॥

शिखिवाहनः । पुं॰ कार्त्तिकेये । महासेने ॥ शिखीमयूरोवाहनमस्य ॥

शिखिव्रतम् । न॰ व्रतविशेषे ।

शिग्रुः । पुं॰ शाकमात्रे ॥ शोभाञ्जने । अस्यपर्यायायथा । शोभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः । रक्तोसौमधुशिग्रुः स्यादिति ॥ अस्यगुणायथा । शिग्रुस्तुकटुकः पाके तीक्ष्णोष्णोमधुरोलघुः । दीपनोरोचनोरूक्षः क्षारस्तिक्तोविदाहकृत् ॥ संग्राही शुक्रलोहृद्यः पित्तरक्तप्र

कोपणः । चक्षुष्यः । कफवातघ्नोविद्रधिश्वयथुक्रमीन् । मेदोऽपचीविषप्लीहगुल्मगण्डव्रणान्हरेत् । श्वेतः प्रोक्तगुणोज्ञेयोविशेषाद्दाहकृद्भवेत् । प्लीहानंविद्रधिंहन्तिव्रणघ्नः पित्तरक्तहृत् ॥ मधुशिग्रुः प्रोक्तगुणोविशेषाद्दीपनः सरः । शिग्रुवल्कलपत्राणांस्वरसंपरमार्त्तिहृत् ॥ अपिच । लोलिम्बराजकविनावनितावतंसेशिग्रोरमुष्यकथितोस्तिकिमुपयोगः ; एतस्यपल्लवरसात्समधोः किमन्यद्दृष्टाधिमाधरणेमहिलायगण्ड्ये ॥ इति ॥ शिनोति । शिञ् निशाने । जम्बूादयश्चतिनिपातितः ॥ शोक्यतेवा । शीकृसेचने । बाहुलकाद्रक्॰ ह्रस्वो॰ गश्च ॥

शिग्रुकम् । न॰ बाह्लीकेप्रसिद्धेशाकविशेषे ॥

शिग्रुजम् । न॰ श्वेतमरिचे । शोभाञ्जनस्यबीजे ॥ अस्यगुणाः । चक्षुष्यंशिग्रुजंबीजंतीक्ष्णोष्णांविषनाशनम् । अवृष्यंकफवातघ्नंतन्नस्येनशिरोर्त्तिनुत् ॥ त्रि॰ शिग्रुभवे ॥ शिग्रौजायतेस्म । जनी॰ । डः ॥

शिग्रुपुष्पम् । न॰ शोभांजनकुसुमे । तस्यगुणाः । शिग्रोःपुष्पन्तुकटुकंतीक्ष्णोष्णंस्नायुशोथनुत् । क्रिमिहृत्कफवातघ्नंविद्रधिप्लीहगुल्म

जित् ॥ मधुशिग्रोस्त्वचि विहितं रक्तपित्तप्रसादनम् ॥

शिग्रुमूलम् । न० शोभाञ्जनजटायाम् ॥ अस्य गुणाः । धौतं कुञ्जरदन्तदोषिसदृशं सिन्धूत्थतैलामुरीराजीसङ्क्रमितं तथोत्तररसं मूलं नवं शिग्रुजम् । तस्याहो वदनाम्बुजे निविशते श्रीचन्द्रचूडप्रियापादाम्भोरुहरेणुरञ्जितशिरो यः प्रात्यिकालिपुमान् ॥ शिग्रुमूलन्तु वातघ्नं श्लेष्मशोफविनाशनम् । शमनं स्नायुरोगस्य पित्तकृत् कफनाशनम् ॥

शिग्रुबीजम् । न० शिग्रुजे ॥

शिङ्घाणम् । न० नासिकामले ॥ शिङ्घ्यते । शिघि घ्राणे । आणकौ लूधूशिङ्घिधाञ्भ्यः । पृषोदरादित्वात् पक्षे कलोपः । पुं० श्लेष्मणि ॥ न० काचपात्रे । लोहमले । मण्डूरे ॥

शिङ्घाणकः । पुं० श्लेष्मणि ॥ न० नासिकामले ॥ शिङ्घ्यते । शिघि० । आणकौ लूधूशिङ्घिधाञ्भ्यः ॥

शिङ्घिणी । स्त्री० नासिकायाम् ॥

शिङ्घितः । त्रि० घ्राते ॥

शिच् । स्त्री० शिक्ये ॥ स्निग्धाः सुशिग्भिरविदाहविशेषाः ॥ शिचः क्विप् ॥

शिञ्जा । स्त्री० भूषणशब्दे । धनुर्गुणे ॥ शिञ्जनम् । शिजि अव्यक्ते शब्दे ॥ गुरोश्चेत्यप्रत्ययः । टाप् ॥

शिञ्जितम् । न० भूषणध्वनौ । नूपुरशब्दे ॥ शिञ्जनम् । शिजि० । तालव्यादिः । भावे क्तः ॥ त्रि० शब्दायमाने । कर्त्तरि क्तः ॥

शिञ्जिनी । स्त्री० मौर्व्याम् । धनुर्गुणे ॥ शिङ्क्ते । शिजि० । आवश्यके णिनिः ॥

शिण्डाकी । स्त्री० खाद्यद्रव्यविशेषे राजिकायुक्तैः सर्षपस्वरसैर्मूलकद्रवैर्निष्पन्नशाकतुल्यपिष्टके ॥ यथा । शिण्डाकी राजिकायुक्तैः स्यान्मूलकदलद्रवैः । सर्षपस्वरसैर्वापि शालिपिष्टकसंयुतैः ॥ सहितेति शेषः । शिण्डाकी रोचनी गुर्वी पित्तश्लेष्मकरी स्मृता ॥ इति राजनिर्घण्टः ॥

शितः । त्रि० दुर्बले । कृशे ॥ तीक्ष्णे । निशिते ॥ शायते स्म । शो तनूकरणे । शोङ् गतौ वा । क्तः । शाच्छोरितीत्वम् ॥

शितद्रुः । स्त्री० शतद्रुनद्याम् ॥ चौरमोरटे ॥

शितशूकः । पुं० यवे । गोधूमे ॥ शितं शूकं यस्य ॥

शिताग्रः । पुं० कण्टके ॥

शितिः । पुं० भूर्जे ॥ त्रि० सिते । धवले ॥ असिते । श्यामले ॥ शोयते० शिनोति स्नावा । शिञ् निशा

ने । क्लिन् ० क्लिञ्वा । शते : सौ
त्रात् ० क्रमितमिशतिसम्भामत
इत्येति० इत्युसचक्ति ० चतद्दूटा
देशीया ॥

शितिकण्ठः । पुं० शम्भौ । हूशे । मिषे ॥ शितिः कालः कण्ठोऽस्य ॥ दात्यूहखगे ॥

शितिचरः । पुं० सुनिषण्णशाके ॥

शितिचारः । पुं० शाकविशेषे ॥

शितिच्छदः ) पुं० हंसे ॥
शितिपक्षः )

शितिसारः । पुं० तिन्दुके । स्फूर्जके । तेंदू० हि० प्र० इति ॥ शितिः कालः सारो मज्जा यस्य सः ॥

शितिसारकः । पुं० शितिसारे ॥

शिथिलम् । त्रि० श्लथे । ढीला हि० भा० । न० मन्दबन्धने ॥ श्लथबन्धे ॥ संयोगविशेषे ॥ श्रथमोचने । चक्रिरशिशिरशिथिलीतिकिरच० उपधायाह्रस्वम् ० रेफलोपः प्रत्ययरेफस्य लत्वञ्च निपात्यते ॥

शिथिलितः । त्रि० विश्लथिते ॥

शिनिः । पुं० सात्यकेः पितामहे० क्षत्रियविशेषे ॥

शिनिनप्ता । पुं० सात्यकौ ॥ शिनेर्नप्ता ॥

शिपिः । पुं० रश्मौ ॥ पशौ ॥ पा० ॥ बाहुलकात्किः ॥

शिपिविष्टः । पुं० खलतौ । खल्वाटे । दुश्चर्मणि । पिनाकिनि । शिवे ॥ विष्णौ ॥ यथा । शैत्याच्छयनयोगाच्च शीतवारि प्रवर्षते । तत्पानाद्रश्मयश्चैव शिपयो रश्मयो मताः । तेषु प्रवेशाद्विश्वेशः शिपिविष्ट इहोच्यते ॥ शिपिषु० रश्मिषु पशुषु वा विष्टः प्रतिष्ठितो यज्ञरूपेणेति तथा ॥

शिप्रः । पुं० कालिकापुराणप्रसिद्धे० सरोवरविशेषे ॥

शिप्रा । स्त्री० अवन्तिदेशप्रसिद्धपुण्यसरिद्विशेषे ॥

शिफा । स्त्री० वटादिद्रुमाणांजटायाम् । मूले ॥ सरिति ॥ मांसिकायाम् ॥ मातरि । शतपुष्पायाम् ॥ हरिद्रायाम् ॥ शेते । बाहुलकात्० शीङः फक् ह्रस्वश्च ॥

शिफाकः । पुं० पद्ममूले ॥

शिफाकन्दः । पुं० कारहाटे । पद्ममूले । शिफामूलतरुप्ररोहः तत्स्थितः कन्दो मूलम् ॥

शिफाधरः । पुं० ) शाखायाम् ॥
शिफाधरा । स्त्री० )

शिफारुहः । पुं० वटवृक्षे ॥

शिमृडी । स्त्री० क्षुपविशेषे । मतिदायाम् । द्रवन्त्याम् । वातघ्नाम् । गुच्छपुष्पायाम् ॥

शिम्बः । पुं० रक्तचक्रमर्दके ॥

शिम्बा । स्त्री० सम्याम् । बीजगुप्त्याम् । सेमफली० हि० भा० ॥

शिमीति । शिम ० । उल्कादय श्चेतिसाधुः ॥

शिम्बाभवः । पुं० शमीधान्ये ॥

शिम्बिः । स्त्री० शिम्बायाम् ॥ शिम्बी पुस्तकशिम्बीतिभेदाच्छिम्बिर्द्विधा मता ॥ शिम्बिद्वयन्तु मधुरं रसेपाके हिमं गुरु । बल्यं दाहकरं प्रोक्तं श्लेष्मलं वातपित्तजित् ॥ शिनोति । शिञ० । इन् ॥

शिम्बिकः । पुं० कृष्णमुद्गे ॥

शिम्बिका । स्त्री० शिम्बायाम् ॥

शिम्बिजः । त्रि० शमीधान्ये ॥

शिम्बिपर्णी । स्त्री० मुद्गपर्ण्याम् ॥

शिम्बी । स्त्री० मुद्गपर्ण्याम् ॥ शूकशिम्ब्याम् ॥ शिम्बायाम् ॥

शिम्बीफलम् । न० आढक्यां । पीतपुष्पे । काञ्चनपुष्पके ॥

शिरः । पुं० पिप्पलीमूले ॥ मस्तके । शिरसि । यथा । शिरोशाची शिरोऽहस्त्रीरजोवाचीरजस्तथेतिकोशान्तरम् । पिण्डं दद्याद्गयाशिरे इति वायवीये ॥ शृणातिघञर्थे कः ॥

शिरःफलः । पुं० नारिकेले ॥

शिरःशूलम् । न० मस्तकवेदनारोगे ॥ तदौषधं यथा । श्वेतापराजितामूलं पिप्पलीशुण्ठिसंयुतम् । [illegible]पिष्टं शिरोलेपाच्छिरःशूलविनाशनम् ॥

शिरजः । पुं० केशे ॥ चिकुरे ॥

शिरः । न० मस्तके । मूर्द्धि ॥ तद्रोगनाशकौषधं यथा । शिरोरोगहरं लेपात् गुञ्जामूलं सकाञ्जिकमिति ॥ सङ्गीतदामोदरे भङ्गहारवर्णने शिरसश्चतुर्द्दशभेदा उक्ताः । यथा । आकम्पितं कम्पितञ्च० धुतं० विधुतमेव च । परिवाहित० माधूत० मवधूतं० तथाञ्चितम् । आकुञ्चितं० परावृत्त० मुत्क्षिप्त० ञ्चाप्यधोगतम् । लोलितं० प्रक्तस्तेति० चतुर्द्दशविधं शिर इति ॥ प्रधाने ॥ सेनाग्रे ॥ शिखरे ॥ नगाग्रे ॥ वृक्षाग्रे ॥ श्रीयते० उष्णीषादिना । श्रिञ् सेवायाम् । श्रयतेः स्वाङ्गे शिरः किच्चेत्यसुन्० धातोः शिरादेशश्च ॥

शिरसिजः । पुं० कुन्तले ॥ वाले । केशे ॥ शिरसिजातः । सप्तम्यामितिङः । तत्पुरुषेकृतीति० हलदन्तादिति वाऽलुक् ॥

शिरस्कम् । न० शिरस्त्राणे ।

शिरस्त्रम् । न० शिरोरक्षणसंनाहे । शीर्षण्ये । शीर्षके । टोप० इ० भा० ॥ शिरः त्रायतेऽनेन । त्रै ङ पालने । आतद्रुतकः ॥

शिरस्त्राणम् । न० शिरस्त्रे ॥

शिरस्थः । पुं० शिरोऽयुक्तकचे । स्नानादिना० शिरसि केशे । श्री

र्षणे ॥ शिरसिभवः शिरसिष्ठितो वा । शरीरावयवाद्यत् ॥

शिरा । स्त्री० धमन्याम् । नाड्याम् ॥ शिनोति । शिञ० । बहुलमन्यत्रापीति रक् ॥

शिरापत्रः । पुं० हिन्तालवृक्षे ॥ कपित्थे ॥

शिरालम् । न० कर्मरङ्गे ॥ त्रि० शिरासन्तते ॥

शिरालकः । पुं० अस्थिभङ्गवृक्षे ॥

शिरावृत्तम् । न० सीसके ॥

शिरिः । पुं० शलभे । हिंस्रे ॥ हन्तरि ॥ शृणाति । शॄ० । कॄगॄशॄपॄकुटीत्यादिना इः ॥ खड्गे ॥ शरे ॥

शिरीषः । पुं० कपीतने । भण्डिले । सिरसइति भाषाख्याते । शिरीषो मधुरोऽनुष्णस्तिक्तश्च तुवरो लघुः । दोषशोथविसर्पघ्नः कासव्रणविषापहः ॥ शृणाति शीर्यते वा । शॄ० । शॄपॄभ्यां किच्चेति० ईषन् ॥

शिरीषपत्रिका । स्त्री० श्वेतकिणिह्याम् ॥

शिरोगृहम् । न० चन्द्रशालायाम् ॥ शिरसिगृहम् । इ० ह० न्द्रः ॥

शिरोधरा । स्त्री० ग्रीवायाम् । शिरसोधरा ॥ इ० हे० न्द्रः ॥

शिरोधानम् । न० उष्णीषके । उपधाने । गण्डौ । सिराहना० इ० भा० ॥ शिरोधीयतेऽत्र । डुधाञः करणाधिकरणयोश्चेत्यधिकरणे ल्युट् ॥

शिरोधिः । स्त्री० ग्रीवायाम् । शिरोधीयतेऽस्याम् । कर्मण्यधिकरणे चेति किः ॥

शिरोमणिः । पुं० स्त्री० शिरोधार्यरत्ने । चूडामणौ ॥ शिरसः मणिः ॥

शिरोमर्म्मा । पुं० शूकरे ॥

शिरोरत्नम् । न० शिरोमणौ ॥ शिरसोरत्नम् ॥

शिरोरुजा । स्त्री० सप्तपर्णवृक्षे । शिरोरोगे ॥

शिरोरुहः । पुं० केशे मूर्द्धजे । शिरसि रोहति । इगुपधेति रुहेः कः ॥

शिरोरोगः । पुं० शिरःपीडायां ॥

शिरोवल्ली । स्त्री० बर्हिचूडायाम् ॥

शिरोवृत्तम् । न० मरिचे ॥ श्रीदेवीभागवतैकादशस्कन्धे श्रीनारायणप्रोक्तव्रतविशेषे ॥

शिरोवृत्तफलः । पुं० रक्तापामार्गे ॥

शिरोवेष्टः । पुं० उष्णीषे । चोलीफडुके । इ० चि० शेत्रः ॥

शिरोवेष्टनम् । न० शिरोवेष्टे ॥

शिरोऽस्थि । न० मस्तकास्थनि । करोटी । शिरस्त्राणे ॥

शिरीषिका । स्त्री० वारिशिरीषिका

याम् ॥ यथा । त्रिदोषविषकुष्ठार्शो हरौवारिशिरीषिका ॥

शिल : । पुं• न• कणिशाद्यर्जने । लू नकेदारशेषधान्ये । मञ्जर्यात्मकानेकधान्योच्चयने ॥ शिलति । शि लउञ्छे । कोवञ्वा । संज्ञापूर्वकत्वान्नगुण : ॥

शिलक : । पुं० वेदप्रसिद्धे मुनिविशेषे ॥

शिलगर्भज : । पुं• पाषाणभेदने ॥

शिलहट्ट : । पुं० देशविशेषे ॥ यथा । गणेश्वरंसमाराध्यमहेशंदृष्ट्वाऽग्रगंशिवे । शिलहट्टाभिधोदेश : पर्वतेसिद्धतिप्रिये ॥

शिला । स्त्री• पाषाणे । प्रस्तरे ॥ मन : शिलायाम् ॥ द्वाराध : स्थितदारुणि ॥ स्तम्भशीर्षे । कर्पूरे । टाप् ॥

शिलाकर्णी । स्त्री• शल्लकीवृक्षे ॥

शिलाकुट्ट : ।
शिलाकुट्टक : । } पुं• पाषाणदारणे । टङ्के । शिलाश्टङ्• वृ• भा• प्र• ॥

शिलाजम् । न० शैलेये । लोहे ॥

शिलाजतु । न• पर्वतजातोपधातुविशेषे । सिलाजीत• वृ• भा• प्र• । अस्यपर्यायादयोयथा। गैरेयमर्थ्यं गिरिजमश्मजञ्चशिलाजतुस्त्वमर: । शिलाव्याधी ॥ निदाघघर्मसन्तप्ताधातुसारंधराधरा : । निर्यासवत्प्रमुञ्चन्तितच्छिलाजतुकीर्त्तितम् ॥ सौवर्णंराजतंताम्रमायसञ्चतुर्विधम् ॥ शिलाजत्वद्रिजतुचशैलनिर्यासइत्यपि । गैरेयमश्मजञ्चापिगिरिजंशैलधातुजम् । शिलाञ्जंकटुतिक्तोष्णंकटुपाकंरसायनम् । छेदियोगवहंश्लेष्मकफमेदोश्मशर्करा : ॥ मूत्रकृच्छ्रंक्षयंश्वासंवाताशोंसिपाण्डुताम् । अपस्मारंतथोन्मादंशोथकुष्ठोदरक्रमीन् ॥ सौवर्णन्तुजपापुष्पवर्णंभवतितद्रसात् । मधुरंकटुतिक्तोष्णंकटुपाकंरसायनम् ॥ छेदियोगवहञ्चैवशीतलंकटुपाकिच । राजतंपाण्डुरंशीतकटुकंस्वादुपाकिच । ताम्रंमयूरकण्ठाभंतीक्ष्णमुष्णञ्चजायते । लौहंजटायुपक्षाभंतत्तिक्तंलवणंभवेत् । विपाकेकटुकंशीतंसर्वश्रेष्ठमुदाहृतम् ॥ अस्यशोधनप्रकारोभावप्रकाशादितोऽवधेय : ॥ शिलायाजस्त्विव ॥ षष्ठीतत्पुरुष : ॥

शिलाञ्जनी । स्त्री० कालाञ्जनीवृक्षे ॥

शिलाटक : । पुं• अट्टे । अट्टालके ॥ विले । गर्ते ॥ वृ• मे• नी• शिलाटयोरितिमुद्रितहैमचन्द्रे पाठ : ॥

शिलाटिका । स्त्री• रक्तपुनर्नवायाम् ॥

शिलात्मज: । पुं॰ लौहे ॥

शिलात्मिका । स्त्री॰ मूषायां ॥

शिलाददु: । पुं॰ शैलेये । शिलाजतुनि ॥

शिलाधातु: । पुं॰ सितोपले । खव्याम् । सेलखडी॰ इ॰ भा॰ ॥ स्वर्णगैरिके । सोनागेरु॰ इ॰ भा॰ प्र॰ ॥

शिलापट्ट: । पुं॰ निघर्षणशिलायाम् । सिलट्ट॰ भा॰ ॥

शिलापुत्र: । पुं॰ घर्षशालि । सिलवट्टा॰ लोढा॰ इ॰ भा॰ प्र॰ ॥

शिलापुष्पम् । न॰ शैलेये । अश्मपुष्पे । शिलाजतुनि ॥

शिलाभवम् । न॰ शिलापुष्पे ॥

शिलाभेद: । पुं॰ पाषाणभेदनिष्ठ र्के ॥ पाषाणभेदकार्ये ॥

शिलारम्भा । स्त्री॰ काष्ठकदल्याम् ॥

शिलावल्का । स्त्री॰ औषधद्रव्यविशेषे । वल्कलायाम् । शैलगर्भायाम् । शिलाशाक॰ इ॰ भा॰ प्र॰ ॥

शिलाव्याधि: । पुं॰ शिलाजतुनि ॥

शिलासनम् । न॰ शैलेये । पाषाणरचितासने ॥

शिलासन्धि: । पुं॰ पर्वतगह्वरे । गुहायाम् ॥

शिलासारम् । न॰ लौहे ॥

शिलाह्वम् । न॰ शिलाजतुनि ॥

शिलि: पुं॰ भूर्जपत्रवृक्षे । स्त्री॰ द्वाराध: स्थितकाष्ठे ॥

शिलिन्ध्र: । पुं॰ मत्स्यविशेषे ॥ यथा । शिलिन्ध्र: श्लेष्मलो बल्यो विपाके मधुरो गुरु: । आमवातकरो हृद्यो वातपित्तहरो मत: । इ॰ रा॰ भ: ॥

शिली । स्त्री॰ गण्डूपद्याम् । स्तम्भशीर्षे । द्वाराध: स्थितदारुणि ॥ शिलति । शिल॰ । इगुपधेति क: । गौरादित्वात् ङीष् ॥

शिलीन्ध्र: । पुं॰ मत्स्यविशेषे । चित्रफले ॥ यथा । शिलीन्ध्र: श्लेष्मलो बल्यो विपाके मधुरो गुरु: । वातपित्तहरो हृद्य आमवातकरश्च स: ॥ तरुप्रभेदे ॥ न॰ कवके । छत्राके । कदलीपुष्पे ॥ विपुटाख्ये ॥

शिलीन्ध्रकम् । न॰ छिलीरे । गोमयच्छत्रिकायाम् ॥

शिलीन्ध्री । स्त्री॰ विहगीविशेषे ॥ गण्डूपद्याम् ॥ मृदि ॥

शिलीपद: । पुं॰ श्लीपदाभिधपादरोगे । पादवल्मीके । गोद॰ इ॰ गौ॰ भा॰ प्र॰ । पीलुपांव॰ इ॰ भा॰ ॥ अथ विप्रकृष्टनिदानं सामान्यलक्षणञ्चाह । पुराणोदकभूयिष्ठा: सर्वर्त्तुषु च शीतला: । ये देशास्तेषु जायन्ते श्लीपदानि विशेषत: ॥ य: सज्वरो वङ्क्षणतो भ-

शिल्पिका । स्त्री० तृणविशेषे ॥

शिल्पी । त्रि० कारौ । शिल्पविद्याव्यवसायिनि कारकर० इ० भा० प्र० ॥ यथा । तन्तुवायश्च नापितश्चैवारजकस्तथा । पञ्चमश्चर्म्मकारश्च कारवः शिल्पिनो मताः ॥ अपि च । मालाकारः कर्म्मकारः शङ्खकारः कुविन्दकः । कुम्भकारः कांसकारः षडेते शिल्पिनां वराः ॥ सूत्रधारश्चित्रकरः स्वर्णकारस्तथैव च । पतितास्ते ब्रह्मशापादयाज्या वर्णसङ्कराः ॥ शिल्पं क्रियाकौशलमस्त्यर्थे इनः । शिल्पिनो वर्णसङ्कराः ॥

शिल्पिनी । स्त्री० कोलदलौषधौ ।

शिल्पशाला । स्त्री० शिल्पशालायाम् । आवेशने ॥ शिल्पिनां शाला ॥

शिवः । पुं० शम्भौ । ईशे । पशुपतौ । शूलिनि । महेश्वरे । महादेवे । हरे । चन्द्रशेखरे । अप्रतिहतनिरतिशयसर्व्वार्थदृक्क्रियाशक्तौ ॥ नामस्मरणमात्रेणास्मत् पापावनः शिवः । परिशुद्धे परमानन्दबोधरूपे ॥ सर्व्वद्वैतोपशमत्वात् तुरीये ॥ मोक्षे ॥ वेदे ॥ कीले । कीलकये ॥ यागे ॥ गुग्गुलौ ॥ पुण्डरीकद्रुमे ॥ कृष्णधूस्तूरे । पारदे । देवे । सुरे ॥ विष्कम्भादिषु विंशतितमे योगे ॥ अवज्ञातस्य फलं यथा । महेशभक्तः श्रुतिपारदृश्वा जितेन्द्रियश्चाकृतनुर्म्महात्मा । शिवाभिधानः खलु योगराजः प्रसूतिकाले शरदिमानवानाम् ॥ आर्द्रानक्षत्रे ॥ अस्मात्प्रथमपर्याये । मनः० SSS० ॥ शेतेऽस्मिन् सर्व्वम् शेतेऽनेन वा । शीङ् स्वप्ने । सर्व्वनिघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अतन्त्रे । इति शीङो वन् ह्रस्वश्च निपात्यते ॥ न० कल्याणे । मङ्गले । क्षेमे ॥ जले । सुखे ॥ समुद्रलवणे ॥ सैन्धवे ॥ श्वेतटङ्कणे ॥ शिवं सुखं तदस्यास्ति अर्शआद्यच् ॥ शिवयति शिवं करोतीति णिजन्तात् पचाद्यच् ॥

शिवकः । पुं० कीलके । बन्धनकाष्ठे । खूंटा० इ० भा० ॥ गवां गात्रकण्डूयनार्थं गोष्ठे निखातस्तम्भे ० कूतसुभूतिः ॥ इति गावककाण्डम् । शेतेऽत्रा । शील्कर्म्मणि० शीङ् स्वप्ने । सर्व्वनिघृष्वेति साधुः । स्वार्थे कः ॥

शिवकरः । त्रि० मङ्गलकारके ॥ पुं० अतीतकल्पार्हद्भेदे ॥

शिवकीर्त्तनः । पुं० भृङ्गरीटे शिवगणे ॥ असुरद्विषि । हरौ ॥ शैवे ॥

शिवचर्चम् । न० । स्थापितशिलप

तः शतहस्तप्रमाणेन सिद्धस्थानि । तदुक्तं श्रीमहानिर्वाणे । यथा । लिङ्गरूपधरं शम्भुं परितो दिक्षु विदिक्षु च । शतहस्तप्रमाणेन शिवक्षेत्रं प्रकीर्त्तितम् ॥ अस्य माहात्म्यमपि । ईशस्य च महापुण्यं सर्वतीर्थोत्तमोत्तमम् । यत्रामरा विराजन्ते सर्वतीर्थानि सर्वदा ॥ अस्य माहा

[illegible]

सर्वपापनिर्मुक्तो यात्यन्ते शाङ्करालयम् ॥ अत्र यत् क्रियते कर्म स्वल्पं वा बहुलं तथा । प्रभावाद्धूर्जटेस्तस्य तत्तत्कोटिगुणं भवेत् ॥ यत्र तत्र कृतात् पापान् मुच्यते शिवसन्निधौ । शैवक्षेत्रे कृतं पापं वज्रलेपसमं प्रिये ॥ पुरश्चर्याजपं दानं श्राद्धं तर्पणमेव च । यत् करोति शिवक्षेत्रे तदनन्ताय कल्पते ॥ पुरश्चर्याशतं कृत्वा यद्दशाशिदिनेशयोः । यत् फलं तदवाप्नोति सकृज्जप्त्वा शिवान्तिके ॥ गयागङ्गाप्रयागेषु कोटिपिण्डप्रदो नरः । यत् प्राप्नोति तदत्रैव सकृत् पिण्डप्रदानतः ॥ अतिपातकिनो ये च महापातकिनश्च ये । शैवतीर्थे कृतश्राद्धास्तेऽपि यान्ति परङ्गतिम् ॥ लिङ्गरूपी जगन्नाथो देव्या श्रीदुर्गया सह । यत्रास्ति तत्र तिष्ठन्ति भुवनानि चतुर्द्दश ॥ स्थापिते शम्भुमाहात्म्यं किञ्चिदेतत्प्रकाशितम् । अनादिभूतभूतेशमहिमा वागगोचरः ॥ महापीठस्वरूपायां स्पृश्यास्पृश्यदूषणम् । विद्यते विद्यते नैव तल्लिङ्गरूपधरेश्वरे ॥ यथा चक्रार्च्चने देवि शोपितोऽपि न विद्यते । शिवक्षेत्रे महातीर्थे तथा जातिर्न कालिके ॥ बहुना किमिहोक्तेन नरश्रेष्ठ समुच्यते । प्रभावः शिवलिङ्गस्य न यावद्वक्तुमर्हति ॥ अयुक्तमपि तं लिङ्गं युक्तं वेदिकया प्रिये । साधकः पूजयेद्भक्त्या स्वाभीष्टफलसिद्धये इति ॥

शिवगतिः । पुं० भूतार्हद्विशेषे ॥

शिवघर्मजः । पुं० मङ्गलग्रहे ॥

शिवङ्करः । त्रि० मङ्गलकारिणि । शङ्करे ॥

शिवचतुर्द्दशी । स्त्री० चतुर्द्दशीकर्त्तव्यशिवव्रतविशेषे । फाल्गुनकृष्णचतुर्द्दश्याम् । शिवरात्रौ ॥

शिवज्ञा । स्त्री० शिवोपासिकायाम् । सुमङ्गलायाम् ॥

शिवज्ञानम् । न० शुभाशुभकालबोधकशास्त्रे ॥

शिवतातिः । स्त्री० कल्याणकारिण्याम् । चर्चेऽङ्कयोम् ॥

शिवदः । त्रि० परमसुखदे ॥

शिवदत्तम् न० विष्णुचक्रे । त्रि० शिवेन शिवाय वा दत्ते द्रव्यमात्रे ॥

शिवदारु । न० देवदारुवृक्षे ॥

शिवदूतिका । स्त्री० मातृकाविशेषे ॥

शिवदूती । स्त्री० भवान्याम् । दुर्गायाम् ॥ यतोनियुक्तो दौत्ये न तया देव्या शिवः स्वयं । शिवदूतीति लोकेऽस्मिंस्ततः साख्यातिमागता ॥ शिवेन दूतयति सन्देशं प्रापयतीत्यर्थे गौरादेराकृतिगणत्वान् ङीष् । बहुव्रीहौ तु टाप् स्यादित्याहुः । वस्तुतस्तु दुनोतेर्दुतनिष्पत्तौ दीर्घ इति निष्ठायां दीर्घे सत्यल्पसन्देशप्रापकत्वविवक्षायां कात्ल्याख्यायामिति । बहुव्रीहौ त्वप्रि ङीप् सम्भवति ॥ मातृभेदे । योगिनीविशेषे ॥

शिवद्रुमः । पुं० बिल्वे मालूरवृक्षे ॥

शिवदिष्टा । स्त्री० केतक्याम् ॥

शिवधातुः । पुं० पारदे ॥

शिवनाभिः । पुं० शि[illegible]

शिवपुराणम् । न० उपपुराणविशे[illegible]

शिवपुरी । स्त्री० काश्याम् ॥

शिवप्रियः । पुं० वकद्रुमे ॥ स्फटिके ॥ धत्तूरे ॥ धत्तूरधूर्त्ततरुणेन्दुनिवासयोग्यस्थानेऽपि शाश्वपतिनाविनिवेशितोसि । किंचौरवाणि विकस्मिततमः प्रयाति किंवाहि कणसति किंदूषदः स्रवन्ति ॥ न० रुद्राक्षे ॥ त्रि० शिवेष्टद्रव्ये ॥ शिवस्य प्रियः ॥

शिवप्रिया । स्त्री० उमायाम् ॥

शिवभट्टारकः । पुं० सर्वज्ञानामीशिते ॥

शिवमल्लकः । पुं० अर्जुनपादपे ॥

शिवमल्लिका । स्त्री० वसुके । वकवृक्षे ॥

शिवमल्ली । स्त्री० वकपुष्पे ॥ शिवप्रियामल्ली ॥

शिवरसः । पुं० अन्नोदके । त्रिरात्रस्थापितान्नाम्बुरसे ॥

शिवरात्रिः । स्त्री० शिवचतुर्दश्याम् ॥ अस्यामुपवासः प्रधानम् । यथा । न स्नानेन न वस्त्रेण न धूपेन न चार्च्चया । तुष्यामि न तथा पुष्पैर्यथा तत्रोपवासतः ॥ ततो रात्रौ प्रकर्त्तव्यं शिवप्रीणनतत्परैः । प्रहरे प्रहरे स्नानं पूजा चैव विशेषतः । शैवो वा वैष्णवो वापि यो वा स्यादन्यपूजकः । सर्वं पूजाफलं हन्ति शिवरात्रिबहिर्मुखः ॥ शिवरात्रिव्रते कालशुद्धिमाह । यथा । माघनिशीथानुगता चतुर्दशीपक्षेऽपरे या शिवरात्रिसंज्ञिका । भवेदुपोष्या सजयापि शाऽमया युता च रिक्तां प्रविहाय पारणा ॥ यदा निशीथद्वयगामिनी भवेच्चतुर्दशी सा परपूर्वगा क्रमात् । द्विरिच्छयत्वादुत मुक्तदयाक्षतो विधिया किल कालवेदिभिः ॥ इति ज्योतिषिंद्राभरणम् ॥ जयन्ती शिवरात्रिश्च कार्ये भद्रजयान्विते । कृत्वोपवासं तिथ्यन्ते तदा कुर्याच्च पारणम् ॥ तिथ्यन्तपारणं तु जयन्तीभाचपर

म् । चतुर्दश्यामिवपारणम् । यथा
क्रम् । ब्रह्माण्डोदरमध्येतुयानितो
र्थानिसन्तिवै । पूजितानिभवन्तो
हभूताश्चैपारणेकृतेइति ॥
शिवलिङ्गम् । न० महादेवस्यशिश्ने ॥
शिवलोकः । पुं० कैलासे ॥
शिववल्लभः । त्रि० शिवप्रिये ॥ शि
वस्यवल्लभः । शिवोवल्लभोस्यवा ॥
शिववल्लभा । स्त्री० शतपत्र्याम् ॥
शिवमल्लिका । स्त्री० लिङ्गिन्याम् ।
शिववल्ली : स्त्री० श्रीवल्ल्याम् ॥
लिङ्गिन्याम् ।
शिववाहनः । पुं० वृषभे ॥
शिववीजम् । न० पारदे ॥
शिवशेखरः । पुं० वकद्रुमे ॥ ध
त्तूरे ॥ शिवमस्तके ॥
शिवसायुज्यम् । न० शिवेनसहयोगे ॥
शिवसुन्दरी । स्त्री० भवगेहिन्याम्
। गौर्याम् ॥
शिवा । स्त्री० गौर्याम् । भवान्याम्
॥ यथा । शिवामुक्तिः समाख्याता
तायोगिनांशिवरूपिणी । शिवा
यथाजपेद्देवीशिवालोकेततः स्मृ
तेतिदेवीपुराणम् ॥ अपिच, शि
वाकल्याणरूपाचशिवदाचशिवप्रि
या । प्रियेदातरिवाशब्दः शिवातेन
प्रकीर्त्तितेतिब्र० वै०पुराणम् ॥ पु
नश्च । शवकल्याणवचनदूरेवोत्कृ
ष्टयाचकः । समूहवाचकश्चैववा

कारोदातृवाचकः । धर्मः सङ्
घोत्कृष्टदात्रीशिवातेनप्रकीर्त्तिता
। शवराशिमूर्त्तिमतीशिवातेन
प्रकीर्त्तितेतिब्र० वै० पु० ॥ आ
त्मानुभूतिमिच्छातोदृतभावविव
र्ज्जिताः । तेपिप्रेम्णाभजन्त्ये
नामित्यंसर्वोत्तमांशिवेत्युमासंहि
ता ॥ मुक्तौ ॥ फेरौ ॥ सल्लफला
याम् । झाटामलौषधौ ॥ अभ
यायाम् ॥ आमलक्याम् ॥ श
म्याम् ॥ हरिद्रायाम् ॥ दूर्वाया
म् । गोरोचनायाम् ॥ बुद्धिशक्ति
विशेषेतारायाम् ॥ शिवमस्त्यस्याः
शिवोस्तिभर्त्तत्वेनयस्याइतिवा ।
अर्शआद्यच् ॥ शिवः शिवोवा
देवताअस्तियस्याः अर्शआद्यच् ।
शकुनावेद्कत्वात् । शिवंकरोति
। तत्करोतीतिणिच् । पचाद्यच् ॥
शिवयतिवा ॥
शिवाक्षम् । न० रुद्राक्षे ॥
शिवघाटिका । स्त्री० वंशपत्र्याम् ॥
शिवात्मकम् । न० सैन्धवे ॥ त्रि०
शिवमये ॥
शिवानी । स्त्री० जयन्तीवृक्षे ॥ दु
र्गायाम् ॥
शिवापीडः । पुं० चन्द्रमसि ॥ व
कवृक्षे ॥ शिवस्याआपीडः ॥
शिवाप्रियः । पुं० छागे ॥
शिवाफला । स्त्री० शमीवृक्षे ॥

शिवारातिः । पुं॰ सारमेये ॥
शिवारुतम् । न॰ शृगालध्वानिनादे ॥
शिवालयः । पुं॰ हरमन्दिरे ॥ रक्ततुलस्याम् ॥ श्मशाने ॥
शिवालुः । पुं॰ शृगाले ॥
शिवास्मृतिः । स्त्री॰ जयन्तीवृक्षे ॥
शिवाह्लादः । पुं॰ बकवृक्षे ॥ शिवस्यानन्दे ॥
शिवाह्वयः । पुं॰ पारदे त्रि॰ शिवनामके ॥
शिशाह्वा । स्त्री॰ रुद्रजटायाम् ॥
शिविः । पुं॰ उशीनरदेशाधिपतौ भूपतिवरे औशीनरे । उदारो यं महीपतिर्येन स्वमांसं श्येनाय दत्त्वा॰ शरणागतः कपोतो रक्षितः ॥ भूर्जपत्रवृक्षे । व्याडे । हिंस्रपशौ ॥
शिविका । स्त्री॰ याप्ययाने । झम्पान॰ डोला॰ चौपाला॰ पालकी॰ इत्यादिभाषाप्रसिद्धवस्तुविधे । शिवीरथे ॥ शिवैव । शिवं करोति वा । तत्करोतीति ण्यन्तात्॰ ण्वुल् ॥
शिविरम् । न॰ युद्धवेश्मनि ॥ निवेशे । आगन्तुकसैन्यवसतौ ॥ सेनायावासस्थाने ॥ राजनिवेशे ॥ अथ शिविरलक्षणम् । श्रीभगवानुवाच । शिबिरं परिखायुक्तमुच्चैः प्राकारवेष्टितम् युक्तं द्वादशशास्त्रसिंहद्वारपुरस्कृतम् ॥ युक्तं चित्रैर्विचित्रैश्च कृत्रिमैस्तत्कपाटकैः । निषिद्धहस्त्यश्वप्रसिद्धैश्च पुरस्कृतम् ॥ सुतरां चान्द्रवेधं प्राङ् गणस्तथैव चेति । विशेषो ब्रह्मवैवर्ते द्रष्टव्यः कृष्णजन्मखण्डके १०२ अध्याये ॥ शव म्यच । गतौ । बाहुलकात् किरच्॰ अतद्भूत्वश्च ॥ यद्वा । शेरते राजशलान्यस्मिन् । शीङ् स्वप्ने । बाहुलकात् किरच् । शीङोवुगद्यस्वश्च ॥
शिवी । स्त्री॰ गौर्याम् ॥ पुं॰ ये गेङो ष ॥
शिवीरथः । पुं॰ शिविकायाम् ॥ ॰ शाली ॥
शिविष्टः । पुं॰ बकवृक्षे ॥ त्रि॰ शिवप्रिये ।
शिविष्टा । स्त्री॰ दूर्वायाम् ॥
शिशयिषुः । त्रि॰ शयितुमिच्छौ ॥ शेतेः सन्नन्तादुप्रत्ययः ॥
शिशिरः । पुं॰ हिमे । तुषारे ॥ द्वीपान्तरप्रसिद्धगिरिविशेषे ॥ पुं॰ न॰ ऋतुविशेषे । तपस्तपस्ययोः । माघफाल्गुनयोः । कम्पने । शीते । हिमकूटे ॥ अस्य गुणा यथा । शिशिरः शीतलोऽतीवरूक्षोवाताग्निवर्द्धनः । अपि च । शिशिरं शीतलं वृष्यं शीतवातप्रकोपणमिति ॥ अत्रजातफलम् । मिष्टान्नभोगी मधुरप्रगारीकलत्रपुत्रादियुतः सुधान्तः । क्रोधी सुधीश्चारुकलेवरश्च यःप्रसू

तिः शिशिराभिधाने । इति ॥ त्रि॰ शीतगुणयुक्ते ॥ यथा । सुशीमः शिशिरो जडः । तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः ॥ शशन्ति॰ धावन्ति यस्मिन्निलकामाः । अज गतौ । अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ॰ इति किरच्॰ शशेरुपधाया इत्वञ्च निपात्यते ॥

शिशुः । पुं॰ पोते । पाके । अर्भके । डिम्भे । पृथुके । शावके ॥ अस्य लक्षणाद्युक्तं ब्रह्मशातातपेन यथा । शिशोरभ्युक्षणं प्रोक्तं॰ बालस्याचमनं स्मृतम् । रजस्वलादिसंस्पर्शे स्नातव्यं तु कुमारकैः ॥ प्राक्चूडाकरणात्काल॰ प्रागन्नप्राशनाच्छिशुः [illegible] योयावन्मौ ञ्जी [illegible] ष्यति॰ गायत्र्यष्टवा । शो तनूकरणे । शः कित्सन्वच्च ॥

शिशुकः । पुं॰ संस्कृ॰ गौ॰ प्र॰ यादोविशेषे । उलूपिनि ॥ शिशुः शिशुमारः॰ तस्य प्रकृतिरिव । इवे प्रतिकृताविति कन् ॥ शिशुमारे । बालके ॥ वृक्षविशेषे ॥

शिशुगन्धा । स्त्री॰ मधुमल्ल्याम् ॥

शिशुचान्द्रायणम् । न॰ व्रतविशेषे ॥ यथा । चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः । चतुरोऽस्त-मिते सूर्ये शिशुचान्द्रायणं स्मृतम् ॥

शिशुता । स्त्री॰ शिशुत्वे ॥ शिशोर्भावः । तल् । टाप् ॥

शिशुत्वम् । न॰ शिशुतायाम् । शैशवे ॥ शिशोर्भावः ॥ तस्य भावस्त्वतलौ ॥

शिशुपालः । पुं॰ दमघोषसुते नृपतौ । चैद्ये । चेदिराजे ॥

शिशुपालकः । पुं॰ दमघोषसुते ॥ सत्कदम्बे । शिशून् पालयति । पाल॰ । कर्मण्यण् । स्वार्थे कः ॥ त्रि॰ बालकपालके ॥

शिशुपालहा । पुं॰ श्रीकृष्णे ॥

शिशुप्रियः । पुं॰ इक्षुपाके । गुडे ॥ त्रि॰ बालकाभीष्टवस्तुनि ॥

शिशुभावः । पुं॰ शिशुत्वे ॥ यथा । अये कस्यचिदस्ति कश्चिदभितः केनापि पूर्वं कृतः संसारः शिशुभावयौवनजराभावावतारादयम् । बालस्तं बहुमन्यतामसुलभं प्राप्तं युवा सेव्यतां वृद्धस्तं विषयाद्बहिष्कृतदृश व्यावृत्य किं पश्यति ॥

शिशुमारः । पुं॰ यादोविशेषे । सूंस॰ इ॰ भा॰ प्र॰ महोक्कासे । अस्य पर्याया यथा । जलकूर्मस्त्वम्बुकौशी वसाढ्यः शिशुकश्च सः इति त्रिकाण्डशेषः ॥ शिशून् मारयति मृङ् प्राणत्यागे । णिजन्तात् कर्मण्यण् ॥ तारात्मकाच्युते । तस्य विव-

रथं विष्णुपुराणे २ अंशे १२ अध्याये यथा। शिशुमारस्तु यः प्रोक्तः स ध्रुवो यत्र तिष्ठति। सन्निवेशञ्च तस्यापि शृणुष्व मुनिसत्तम॥ यदह्ना कुरुते पापं दृष्ट्वा तन्निशि मुच्यते। यावन्त्यश्चैव तारास्ताः शिशुमाराश्रिता दिवि॥ तावन्त्येव तु वर्षाणि जीवत्यभ्यधिकानि तु। उत्तानपादस्तस्याथ विज्ञेयो ह्युत्तरो हनुः॥ यज्ञोऽधरश्च विज्ञेयो धर्मो मूर्द्धानमाश्रितः। हृदि नारायणश्चास्ते अश्विनौ पूर्वपादयोः॥ वरुणश्चार्य्यमा चैव पश्चिमे तस्य सक्थिनी। शिश्नं संवत्सरस्तस्य मित्रोऽपानं समाश्रितः॥ पुच्छेऽग्निश्च महेन्द्रश्च कश्यपोऽथ ततो ध्रुवः। तारकाशिशुमारस्य नास्तमेति चतुष्टयम्॥ इत्येष सन्निवेशोऽयं पृथिव्यां ज्योतिषां तथा। द्वीपानामुदधीनाञ्च पर्वतानाञ्च कीर्त्तितः॥ वर्षाणाञ्च नदीनाञ्च ये च तेषु वसन्ति वै। तेषां स्वरूपमाख्यातं सङ्क्षेपः श्रूयतां पुनः॥ यदम्बु वैष्णवः कायस्ततो विप्र वसुन्धरा। पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता॥ ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च। नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य्य॥ ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्त्तिर्न तु वस्तुभूतः। ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि॥ यदा तु शुद्धं निजरूपि सर्व्वं कर्म्मक्षये ज्ञानमपास्तदोषम्। तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः॥ मृदो घटत्वं घटतः कपालिका कपालिकाचूर्णरजस्ततोऽणुः। जनैः स्वकर्म्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु॥ इति॥ अपि च। तारामयं भगवतः शिशुमाराकृति प्रभोः। दिवि रूपं हरेर्यत्तु तस्य पुच्छे स्थितो ध्रुवः॥ सैष भ्रमन् भ्रामयति चन्द्रसूर्य्यादिकान् ग्रहान्। भ्रमन्तमनु तं यान्ति नक्षत्राणि च चक्रवत्॥ सूर्य्याचन्द्रमसौ तारा नक्षत्राणि ग्रहैः सह। वातानीकमयैर्बन्धैर्ध्रुवे बद्धानि तानि वै॥ शिशुमाराकृति प्रोक्तं यद्रूपं ज्योतिषां दिवि। नारायणोऽयनं धाम्नां तस्याधारः स्वयं हृदि॥ इति॥

शिशुवाहकः। पुं॰ वनच्छागे। त्रि॰ बालकवोढरि॥

शिशुवाह्यकः। पुं॰ पडके। वनच्छागे॥

शिश्नः। पुं॰ मेढ्रे। मेहने। शेफसि॥ शशति। शश॰। शिनोतिवा। शिञ् निशाने। बाहुलकान्नक्। पृषोदरादिः॥

शिश्नकः। पुं॰ मेढ्रे॥ स्वार्थे कन्॥

शिश्विदानः। त्रि॰ अकृष्णकर्म्मणि।

। पुण्यकर्म्मणि ॥ शिश्विन्दे । श्वि
दिश्वैत्ये । बाहुलकाच्छिटः आनच्
। अनित्यत्वान्नुम् ॥ यद्वा । श्वे
तितुमिच्छति । श्वितावर्णे । श्वि
तेर्दश्चेत्यानच्॰ दः सनोलुक्च
॥ कृष्णाकर्म्मत्यमरपाठान्तरात् । पा
पाचारेपि ॥

शिष्टः । त्रि॰ आर्य्ये । साधुव्यवहा
रान्विते ॥ यथा । नपाणिपादचप
लोननेत्रचपलोर्यतः । नचवाक्च
पलश्चैवमितिशिष्टस्यलक्षणम् ॥
शान्ते । स्वच्छशान्ते । सत्कारणवा
दिनि । धर्म्मेणाधिगतोयैस्तुवेदः स
परिवृंहणः । तेशिष्टाब्राह्मणाज्ञेयाः
श्रुतिप्रत्यक्षहेतवः ॥ इत्यरिति ॥
शिष्यते । शिषलृ॰ । क्त॰ ॥

शिष्टसमाचारः । पुं॰ आर्यव्यवहारे ॥

शिष्टाचारः । पुं॰ सदाचारे । साधु
व्यवहारे ॥ यथा । दानंसत्यंतपोऽ
लोभोविद्येज्यापूजनंदमः । अष्टौ
तानिचरित्राणिशिष्टाचारस्यलक्षण
म् ॥ शिष्टाश्चाचरन्त्येनंमनुः
सप्तर्षयश्चये । मन्वन्तरेषुसर्वेषुशि
ष्टाचारस्ततः स्मृतः ॥ श्रुतिस्मृति
भ्यांविहितोधर्म्मोवर्णाश्रमात्मकः ।
शिष्टाचाराविरुद्धस्तुधर्मः ससाधुस
म्मतः ॥ शिष्टानामाचारः ॥

शिष्टबुद्धिः । त्रि॰ शास्त्राचार्यानुशि
ष्टमतौ ।

शिष्टापरिग्रहः । पुं॰ सत्कारवत्वादि
भिः केनाप्यंशेनागृहीते॰ मन्वा
दिवाक्ये ॥ शिष्टानामपरिग्रहोयस्मि
न् ॥

शिष्टिः । स्त्री॰ आज्ञायाम् । शासने
॥ शासनम् । शासु॰ । स्त्रियांक्ति
न्नाबादिभ्यः । शासइदङ्हलोः ॥

शिष्यः । पुं॰ छात्रे । अन्तेवासिनि
। शासनयोग्ये ॥ तल्लक्षणंयथा ।
वाङ्मनःकायवसुभिर्गुरुशुश्रूष
णेरतः । एतद्गुणोपेतः शि
ष्योभवतिनारद ॥ देवताचार्य्यशुश्रू
षांमनोवाक्कायकर्मभिः । शुद्ध
भावोमहोत्साहोबोद्धाशिष्यइतिस्मृ
तः ॥ अपिच । शान्तोविनीतः
शुद्धात्माश्रद्धावान्धारणक्षमः
। समर्थश्चकुलीनश्चप्राज्ञः सच्चरितो
व्रती ॥ एवमादिगुणैर्युक्तः शिष्यो
भवतिनान्यथेति ॥ शिष्यते । शा
सु॰ । एतिस्तुशास्वृदृजुषः क्यप् ।
शासइदङ्हलोः । शासिवसीति
षः ॥ पुत्रशिष्ययोस्तुल्यत्वंयथा ।
यथापुत्रस्तथाशिष्योनभेदः पुत्रशि
ष्ययोः । तर्पणेपिण्डदानेचपाल
नेपरिपोषणे ॥ यथानन्दातापुत्र
स्तथाशिष्यस्तुनिश्चितम् । इतीदंका
ण्वशाखायामुवाच कमलोद्भवः ॥

शीः । स्त्री॰ शान्तौ । शयने ॥

शीकरः । पुं॰ वातास्ताम्बुनि । वा

ताश्रितजले । अम्बुकणेषु ॥ शीकते । शीक सेचने । तालव्यादिः । कटच्छेररन्निति वाहुलकादरन् ॥ न० सरलद्रवे ॥

शीघ्रम् । न० उशीरे । नलदे । चक्राङ्गे ॥ त्वरिते । लघुनि । क्षिप्रे । अरे । द्रुते । सत्वरे । चपले । तूर्णे । अविलम्बिते । आशुनि ॥ तूर्णपर्यायैर्यं क्रियाविशेषणाद्‌द्रव्ये वर्त्तमानः क्लीवे । यथा० शीघ्रं जुहोति । सत्वगामी तु वाच्यलिङ्गः । यथा । कलौ शीघ्रा जरा० शीघ्रो मृत्युः शीघ्रं भयस्तथेति ॥ शिङ्घति० व्याप्नोति । शिघि आघ्राणे । शीघ्रादयश्चेति रगन्तो निपातितः ॥ त्रि० द्रुतगतौ ॥

शीघ्रगः । त्रि० नभस्वति । वायौ ॥ त्रि० त्वरितगामिनि ॥

शीघ्रगामी । त्रि० आशुगमनशीले । द्रुतगतौ ॥

शीघ्रचेतनः । पुं० शुनि । त्रि० त्वरितचेतनायुक्ते ॥

शीघ्रजन्मा । पुं० पूतिकरञ्जे ॥

शीघ्रपुष्पः । पुं० वकतरौ । अगस्त्यागे ॥

शीघ्रवेधी । पुं० लघुहस्ते । शिक्षितास्त्रे । आशुशरादिना लक्ष्यवेधकर्त्तरि ॥

शीघ्रा । स्त्री० उदुम्बरपर्य्यायम् । दन्त्याम् ॥

शीतः । पुं० वानीरे । वञ्जुले । वेतसवृक्षे । शीतमस्यास्ति । अर्श आद्यच् । शीतवीर्य्यत्वेपाद्दाहशमनात् ॥ बहुले । बहुवारके ॥ निम्बे ॥ पर्पटे । कर्पूरे ॥ अशनपर्य्यायम् ॥ नरकान्तरे । हिमर्त्तौ ॥ न० हिमगुणे ॥ जले ॥ त्वचे । दारचीनी० इ० भा० ॥ शीतं तुषारवानीरबहुवारद्रुमेषु चेत्यजयः ॥ त्रि० शीतले ॥ अलसे शीतस्पर्शे । शीतं विद्यतेऽस्य । अर्शआद्यच् । विशेष्यीभूतः शीतशब्दो नपुंसकम् । यस्मिन् द्रव्ये शीतः स्पर्शः जलादौ विशेषणीभूतस्तु शीतशब्दो विशेष्यनिघ्नः ॥ श्यायतइति शीतः । श्यैङ् गतौ । भावे क्तः । द्रवमूर्त्तिस्पर्शयोः श्य इति सम्प्रसारणम् । हलइति दीर्घः । श्ये स्पर्श इति पर्युदासान्न निष्ठानत्वम् ॥

शीतकः । पुं० शीतकाले ॥ ऋतावुष्णशीते० इ० यावादिषु पाठात् स्वार्थे कन् ॥ अशनपर्य्यायम् ॥ त्रि० सुस्थिते । सुस्थे ॥ अलसे । दीर्घसूत्रिणि । मन्दे ॥ शीतं करोति । शीतोष्णाभ्यां कारिणीति कन् । वृश्चिके ॥

शीतकरः । पुं० चन्द्रे ॥ त्रि० शीतलप्राणियुक्ते ॥ शीतकारिणि ॥

शीतकषाय: । पुं॰ हिमकषाये यथा । चतुःसंद्रव्यपलं सम्यक् षड्भिर्जलपलैः सृतम् । शर्वरीमुषित: स स्याद्धिम: शीतकषायक इति वैद्यकम् ॥

शीतकाल: । पुं॰ हिमर्तौ । मार्गपौषयो: । हेमन्ते । कूपोदकं वटच्छाया श्यामास्त्री इष्टकागृहम् । शीतकाले भवेदुष्णमुष्णकाले च शीतलम् । हेमन्तशिशिरर्त्वो: ॥

शीतकिरण: । पुं॰ हिमांशौ ॥ चन्द्रमसि ॥ यथा । कान्ते कीयमुदेति शीतकिरणो जात: कुतो वारिधौ कस्ते सुन्दरि सोदर: कारमहो देवं त्वदीये स्तने । धन्यात्वं युवतीसती कुलवती भ्रातापि धन्यस्तवइत्थं श्रीपरिहासकेलिकलया मुग्धो हरि: पातु व: ॥

शीतकुम्भ: । पुं॰ करवीरे ॥

शीतकुम्भी । स्त्री॰ जलजद्रव्यविशेषे । शिउलीछोप॰ इ॰ गौ॰ भा॰ प्र॰ । अस्या: पर्याया यथा । शीतली शीतकुम्भी च शुक्रपुष्पा जलोद्भवेति रत्नमाला ।

शीतकृच्छ्र: । पुं॰ व्रतविशेषे । यथा । त्र्यहं शीतं पिबेत्तोयं त्र्यहं शीतं पय: पिबेत् । त्र्यहं शीतं घृतं पीत्वा वायुभक्ष्य: परं त्र्यहमिति यमस्मृति: ॥

शीतचारम् । न॰ श्वेतटङ्कणे ॥

शीतगन्ध: । पुं॰ श्वेतचन्दने ॥

शीतगु: । पुं॰ चन्द्रे ॥

शीतचम्पक: । पुं॰ चातपर्णे । तपर्णे ॥ दिने ॥ दीपे ॥ दर्पणे ॥

शीतपर्णी । स्त्री॰ अर्कपुष्पिकायाम् । सूर्यवल्ल्याम् ॥

शीतपाकिनी । स्त्री॰ महासमङ्गायाम् ॥ काकोल्याम् ॥

शीतपाकी । स्त्री॰ वाट्यालके ॥ गुञ्जायाम् ॥ काकोल्याम् ॥

शीतपुष्प: । पुं॰ अर्कवर्ण॰ । शिरीषे ॥ न॰ परिपेले ॥ शैलेये ॥

शीतपुष्पक: । पुं॰ अर्कवृक्षे ॥ न॰ शैलेये ॥

शीतपुष्पा । स्त्री॰ अतिबलायाम् ॥

शीतप्रभ: । पुं॰ कर्पूरे । त्रि॰ शीतलप्रभायुक्ते ॥

शीतप्रिय: । पुं॰ पर्पटे ॥ त्रि॰ शीतलप्रीतियुक्ते ।

शीतफल: । पुं॰ उदुम्बरे ॥ बहुलशारे । शेलौ ॥ पीलौ ॥ शीतानि फलानि यस्य ॥

शीतबला । स्त्री॰ महासमङ्गायाम् ॥

शीतभानु: । पुं॰ चन्द्रे ॥ शीता भानव: किरणा यस्य स: ॥

शीतभीत: । त्रि॰ शीतार्त्ते ।

शीतभीरु: । स्त्री॰ मल्लिकायाम् ॥ शीतात् भीरु: ॥ त्रि॰ शीतभीते ॥

शीतभीरुक: । त्रि० शीतास

शीतभीरुका । स्त्री० मल्ल्याम् ॥

शीतमञ्जरी । स्त्री० शेफाल्याम् ॥

शीतमयूख: । पुं० चन्द्रे ॥ कर्पूरे ॥

शीतमरीचि: । पुं० इन्दौ । कर्पूरे ॥

शीतमूलकम् । न० उशीरे ॥

शीतरम्य: । पुं० प्रदीपे ॥ त्रि० शीतरमणीये ॥

शीतरश्मि: । पुं० चन्द्रे ॥ कर्पूरे ॥

शीतरस: । पुं० शीधुप्रभेदे ॥

शीतल: । पुं० अशनपर्ण्याम् ॥ अर्हद्विशेषे ॥ सुधांशौ । चन्द्रे ॥ व्रतविशेषे ॥ चम्पके ॥ बहुवारके ॥ धूनके । राले ॥ कर्पूरभेदे ॥ न० पुष्पकासीसे ॥ शैलजे ॥ मलयोद्भवे । चन्दने ॥ पद्मके ॥ मौक्तिके ॥ शैत्ये ॥ वीरणमूले ॥ त्रि० सुषीमे । शिशिरे ॥ शीतं गुणोऽस्यास्ति । सिध्मादित्वाल्लच् ॥ शीतं लातिवा । लाधादाने । आतडुतिक: ॥

शीतलक: । पुं० मरुवके ॥ न० सितोत्पले ॥

शीतलच्छद: । पुं० चम्पके ॥ शीतलपत्रे ॥

शीतलजलम् । न० उत्पले ॥ शिशिरोदके । शीताम्बुनि ॥ यथा मूर्च्छापित्तोष्णदाहेषु विषेरक्तेमदात्यये । भ्रमे श्रमे विदग्धेन्ने तमके वमथौ तथा । ऊर्द्ध्वगे रक्तपित्ते च शीतमम्भ: प्रशस्यते ॥ पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे । आध्माने स्तिमिते कोष्ठे सद्य: शुद्धौ नवज्वरे ॥ अरुचिग्रहणीगुल्मश्वासकासेषु विद्रधौ । हिक्कायां स्नेहपाने च शीताम्बु परिवर्ज्जयेत् ॥

शीतलत्वम् । न० शीतलतायाम् ॥ जडत्वे ॥

शीतलत्वकम् । न० शीतलत्वे ॥

शीतलप्रद: । पुं० चन्दने ॥ त्रि० हिमदातरि ॥

शीतवनम् । न० तीर्थविशेषे ॥

शीतलशातक: । पुं० असनपर्ण्याम् ॥

शीतला, स्त्री० शीतलीवृक्षे ॥ यथा । शीतला शीतली शीतकुम्भी पाण्डुरपुष्पकेति शब्दचन्द्रिका ॥ कुटुम्बिन्याम् । जलरुहायाम् ॥ वालुकायाम् ॥ आरामशीतलायाम् ॥ देवताविशेषे । विस्फोटकविशेषाधिष्ठात्र्याम् ॥ यथा । नमामि शीतलां देवीं रासभस्थां दिगम्बरीम् । मार्जनीकलशोपेतां सूर्पालङ्कृतमस्तकामिति स्कन्दपुराणम् ॥

शीतली, स्त्री० जलवृक्षविशेषे । शीतकुम्भ्याम् ॥ कालानुसारि

वायाम् ॥

शीतवल्क: । पुं॰ उदुम्बरे ॥

शीतवीर्य्यक: । पुं॰ प्लक्षवृक्षे । त्रि॰ शीतलवीर्य्ययुक्ते ॥

शीतशिव: । पुं॰ सक्तुफलावृक्षे ॥ मधुरिकौषधौ ॥ न॰ सैन्धवे लवणे । मागिमन्थे ॥ शैलेयनामगन्धद्रव्ये ॥ शीतमस्यास्ति अच् । शिवमस्यास्ति । अच् । शीतश्चासौ शिवश्च ॥

शीतशिवा । स्त्री॰ मिश्रेयायाम् । शमीवृक्षे ॥

शीतसह: । पुं॰ पीलुवृक्षे । नीलसिन्धुवारके ॥

शीतसहा । स्त्री॰ नीलसिन्धुवारे । वासन्त्याम् ॥

शीतहर: । पुं॰ कुचोपमणि ॥ शीतं हरति । हृञ्॰ । हरतेरनुद्यमनेऽजित्यच् । त्रि॰ शीतापहे ॥

शीता । स्त्री॰ रामपत्न्याम् । सीतायाम् ॥ यथा । शीताभ: सरितिलाङ्गलपद्धतौ च शीता दशाननरिपो: सहधर्म्मिणी च । शीतं स्मृतं हिमगुणो वतदन्वितेच शीतोऽलसे च बहुवाररतरौ च दृष्ट: ॥ इति तालव्यादौ धरणि: ॥ दूर्वायाम् ॥ शिल्पिन्यामोषधौ ॥ अतिवलायाम् । कुटुम्बिन्याम् । पथछायाम् ॥ कौमुद्याम् । ज्योत्स्नायाम् । शैतेम । गत्यर्थत्वादिना शीङ् क्त: । टाप् ॥

शीतांशु: । पुं॰ विधौ । चन्द्रे ॥ कर्पूरे ॥

शीतांशुतैलम् । न॰ कर्पूरतैले ॥

शीताङ्ग: । त्रि॰ शीतलाङ्गे ॥

शीताङ्गी । स्त्री॰ हंसपद्याम् । गोधापद्याम् ॥ शीतलाङ्ग्याम् ॥

शीताद: । पुं॰ दन्तरोगविशेषे ॥ तल्लिङ्गादि यथा । शोणितं दन्तवेष्टेभ्यो यस्याकस्मात् प्रवर्त्तते । दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥ दन्तमांसानि शीर्य्यन्ते पचन्ति च परस्परम् । शीतादो नाम स व्याधि: कफशोणितसम्भव: ॥ अस्यौषधं यथा । शीतादे हृतरक्ते तु तोयनागरसर्षपान् । निष्क्वाथ्य त्रिफलाक्वाथं कुर्य्याद्गण्डूषधारणम् ॥ कासीसलोध्रकृष्णामन:शिलासप्रियङ्गुतेजोह्वा । एतच्चूर्णं मधुयुक् शीतादे पूतिमांसहरम् ॥ तेजोह्वा॰ तेजस्वा । तैलं घृतं वाथवा तप्तं शीतादे सम्प्रशस्यते ॥ इ॰ भा॰ प्र॰ श: ॥

शीतार्त्त: । त्रि॰ शीतालौ ॥ शीतेन ऋत: ॥

शीतालु: । त्रि॰ शीतार्त्ते । शीतं न सहते । शीतोष्णतृप्रेभ्यस्तदसहन इत्यालु: ॥ शीतालुराच्छादके ॥

शीताश्ला । स्त्री॰ महासमङ्गायाम् ॥

शीताश्मा । पुं॰ चन्द्रकान्तमणौ ॥ शीतलपाषाणे ॥

शीतीभाव: । पुं॰ मोक्षे ॥ इ॰ त्रि॰

शिव : ॥

शीतोत्तमम् । न॰ जले ॥

शीत्कार : । पुं॰ वरस्त्रीणांरतिकाल ध्वनौ ॥ यथा । शीत्कारोरतनारा च : सुरतेवरयोषिताम् ॥

शीत्कृतम् । न॰ शीत्कारे ॥ इ॰ धर णि :

शीधु : । पुं॰ न॰ इक्षुरसे । मद्ये ॥ पुं॰ स्त्री॰ आसवे ॥ यथा । शीधु रिक्षुरसै : पक्वैरपक्वैरासवोभवेत् । इतिमाधव : ॥ अपिच । इक्षो : पक्वैरसै : सिद्ध : शीधु : • पक्वर ससम : । आमैस्तैरेवय: सिद्ध : स तु शीतरस : स्मृत: ॥ शीधु : पक्वर स : श्रेष्ठ : स्वराग्निबलवर्णकृत् । वातपित्तकरोहृद्य : स्नेहनोरोचनो हरेत् ॥ विबन्धमेद : शोफार्श : शोषोदरकफामयान् । तस्मादल्प गुण: शीतरस: संलेखनस्मृ : त : ॥ शेरतेऽनेन । शीङोधुक् ॥ धीय तेऽनेनेतिशीधुरितिमल्लिनाथ :

शीधुगन्ध : । पुं॰ बकुलवृक्षे ॥ मद्य गन्धे ॥ यथा । वेश्यावेश्मसुशीधुग न्धिललनावक्त्रासवामोदितैर्नीत्वानि र्भरमन्मथोत्सवरसैरुन्निद्रचन्द्रा : क्षपा : सर्वज्ञाइतिदीक्षिताइतिचि रात्प्राप्ताग्निहोत्राइतिब्रह्मज्ञाइति तापसाइतिदिवाधूर्तैर्जगद्वञ्च्यते ॥ इत्यंहिदाम्भिकाव्यवहरन्ति ॥

शीधुगन्धि : । त्रि॰ सुरागन्धयुक्ते ॥

शीधुप : । त्रि॰ मद्यपे । सुरापे ॥ शीधुंपिबति । पादाने । गापोष्टगि त्यत्र॰ पिबते : सुराशीध्वोरितिवा र्त्तिकात्टक् । स्त्रियांटित्वान्ङीपि • शीधुपी ॥

शीधुपुष्प : । पुं॰ कदम्बेबकुले ॥

शीधुपुष्पी । स्त्री॰ धातक्याम् ॥

शीधुरस : । पुं॰ आम्रे ॥

शीधुसंज्ञक : । पुं॰ बकुले ॥

शीन: । पुं॰ अजगरे । त्रि॰ मूर्खे । द्रवस्यायाः काठिन्येऽपि च घृता दौ ॥ श्यैङ्गतौ । क्त : । द्रव मूर्त्तिस्पर्शयो : श्यइतिसम्प्रसार णम् । श्योऽस्पर्शइतिनत्वम् : ॥

शीभर : । पुं॰ शीकरे ॥

शीर : । पुं॰ अजगरसर्पे । सूर्ये ॥ शेते । स्फायितञ्चीतिशीङोरक् ॥

शीर्णम् । न॰ स्थौणेये ॥ त्रि॰ त नौ । कृशे ॥ विशीर्णे ॥ शीर्यते स्म । शॄ॰ । क्त : । ऋतइद्धातो : । रदाभ्यामितिन : । णत्वम् ॥

शीर्णपत्र : । पुं॰ पट्टिकालोध्रे । कर्णि कारवृक्षे ॥ निम्बे ॥ न॰ विशी र्णपत्रे ॥

शीर्णपर्ण : । पुं॰ निम्बवृक्षे । न॰ विशीर्णपत्रे ॥

शीर्णपाद : । पुं॰ महिषध्वजे ॥ यमे ॥

शीर्षपुष्पिका । स्त्री० अवाक्पुष्प्याम् ॥

शीर्षमाला । स्त्री० पृश्निपर्ण्याम् ॥ विशीर्णायांमालायाम् ॥

शीर्षकलम् । न० गोडुम्बे । तरम्बुजे ॥

शीर्णाङ्घ्रि : । पुं० यमे ॥ त्रि० क्षुण्णपादे ॥

शीर्वि : । त्रि० हिंस्रे ॥ शृणाति शॄ० । जॄशॄस्तॄजागृभ्य : क्विन् ॥

शीर्षम् । न० कालागुरुणि ॥ मस्तके ॥ कुमारशीर्षयोरिनिज्ञापकात् । शिरस : शीर्षादेश : ॥

शीर्षक : । पुं० विधुन्तुदे । राहुग्रहे ॥ शीर्षस्यप्रतिकृति : इवेप्रतिकृताविति कन् न० शिरोस्थ्नि ॥ शिरोरक्षायासन्नाहे । शीर्षण्ये । शिरस्त्रे । टोपइतिभाषा ॥ शीर्षं कं सुखमस्मात् ॥ जयपराजयपत्रे ॥

शीर्षच्छेदिक : । त्रि० वध्ये ॥

शीर्षच्छेद्य : । त्रि० वध्ये ॥ शिरश्छेदं नित्यमर्हति । शीर्षच्छेदाद्यच्चेतियत् । प्रत्यययोगेनशिरस : शीर्षभावोनिपात्यते ॥

शीर्षण्य : । पुं० सुकेशे । विशदकचे ॥ शिरस्ये । स्नानादिनाभिशोऽसक्तकचे ॥ शिरसिभव : । शरीरावयवाद्यत् । येचतद्धितइत्यच० वाकेशेष्विति वचनात् । शिरस : शीर्षन्नादेश : ॥ न० शिरस्त्रे । शीर्षके ॥ शिरसेहितम् । यत् । येचतद्धितइतिशीर्षन्नादेश : । येचाभावेतिटिलोपाभाव : ॥

शीर्षरक्षम् । न० शिरस्त्राणे । शिरस्त्रे ॥

शीर्षा । स्त्री० उष्णिक्छन्द : ७ प्रभेदे ॥ यथा । उक्तावर्णा : सप्तार्णां० सर्वेदीर्घा : स्युर्यस्याम् । एषाशीर्षानिर्दिष्टाशेषाणांवर्णान्नादेष्टा ॥ यथा । दृष्ट : कृष्ण : कालिन्दी । तीरेगोपालानन्दी । वेणुक्वाणैरक्तानांचेतोहर्तागोपीनाम् ॥

शीर्षोदय : । पुं० राशिविशेषे ॥ यथा । मिथुनं केशरीकन्यातुलावृश्चिकभं तथा । कुम्भोथमीनएवैतेसप्तशीर्षोदया : स्मृता : ॥

शील : । पुं० न० स्वभावे । सहजधर्मविशेषे ॥ सद्वृत्ते । साधुवृत्ते । सच्चरित्रे । हारीतोक्ते । ब्रह्मण्यतादिरूपे ॥ तदाह० हारीत : । ब्रह्मण्यता० देवपितृभक्तता० सौम्यता० अपरोपतापिता० अनसूयुता० मृदुता० अपारुष्यम्० मैत्रता० प्रियवादित्वम्० कृतज्ञता० शरण्यता० कारुण्यताम्० प्रशान्तिश्चेतित्रयोदशविधं शीलम् ॥ चरित्रमात्रे ॥ सनम्० शीलयतीऽ

शुकपुष्पः । पुं॰ शिरीषवृक्षे ॥ न॰ स्थौणेये ॥

शुकप्रियः । पुं॰ शिरीषद्रुमे ॥ त्रि॰ शुकवल्लभे ॥

शुकप्रिया । स्त्री॰ जम्ब्वाम् । शिरीषे ॥

शुकफलः । पुं॰ अर्कवृक्षे ॥

शुकबर्हः । पुं॰ न॰ स्थौणेये । ग्रन्थिपर्णे । गन्धद्रव्यविशेषे ॥

शुकबर्हकम् । न॰ ग्रन्थिपर्णे ॥

शुकम् । न॰ शेष्ये ॥

शुकवल्लभः । पुं॰ दाड़िमे । त्रि॰ शुकप्रियवस्तुनि ॥

शुकाख्या । स्त्री॰ शुकशिम्बायाम् ॥

शुकादनः । पुं॰ दाड़िमे ॥

शुकानना । स्त्री॰ शुकशिम्बायाम् ॥

शुकी । स्त्री॰ कश्यपस्य पत्नीप्रभेदे । शुकी शुकानजनयदुलूकीप्रत्युलूकिकानिति गारुडम् ॥

शुकोदरम् । न॰ तालीशपत्रे ॥ कीरजठरे

शुक्तः । त्रि॰ अम्ले ॥ यथा । यन्मस्त्वाऽऽदिशुचौभाण्डे सगुडक्षौद्रकाञ्जिकम् । धान्यराशौ त्रिरात्रिस्थं शुक्तं चुक्रं तदुच्यते ॥ इति ॥ स्वभावतो मधुरादिरसानि कालवशेनोदकवासादिना चाम्लत्वमिता-नि शुक्तानीति मन्वर्थमुक्तावल्यां कुल्लूकभट्टः । पूते । भटिते । राढा॰ इ॰ भा॰ शाच्यतेस्म शुचिरपूतीभावेन : द्रव्यद्रव्यविशेषे ॥ यथा । कन्दमूलफलादीनि सस्नेहलवणानि च । यत्र द्रव्येऽभिषूयन्ते तच्छुक्तमभिधीयते ॥ शुक्तं कफघ्नं तीक्ष्णोष्णं रोचनं पाचनं लघु । पाण्डुक्रिमिहरं रूक्षं भेदनं रक्तपित्तकृत् ॥ निष्ठुरे । कर्कशे ॥ काञ्जिके । मांसे ॥

शुक्ता । स्त्री॰ चुक्रिकायाम् ॥

शुक्तिः । स्त्री॰ कपालशकले । शङ्खे । शङ्खनखे । नख्याम् । अश्वावर्त्ते । यथा । अश्वस्याः शुक्तयस्तिस्रः जङ्घेरोमाजयाश्च इति ॥ दुर्नामनि । अर्शोरोगे । मुक्तास्फोटे । सोपी॰ इ॰ भा॰ प्र॰ । दृग्व्याधिविशेषे । कर्षद्वयोन्मिते । चतुस्तोलकपरिमाणे । अष्टमिकायाम् । शुच्यति शोचति शोकतिवा । शुचअभिषवे शुचशोके । शुकगतौवा । क्तिच् ॥

शुक्तिका । स्त्री॰ चुक्रिकायाम् । शुक्तौ । मुक्तास्फोटे ॥

शुक्तिजम् । न॰ मौक्तिके ॥

शुक्तिमान् । पुं॰ कुलपर्वतविशेषे । ऋषिकुल्याकुमाराद्याः शुक्तिमत्पादसम्भवः ॥

शुक्तिवीजम् । न॰ मौक्तिके ॥

शुक्रः । पुं॰ दैत्यगुरौ । काव्ये । उशनसि । भार्गवे । अग्नौ । सिते । ज्येष्ठमासे । धातौ । चित्रकवृक्षे ॥

न०। मज्जजातधातौ। तत्पर्याया यथा। शुक्रं० तेजोरेतसी च० बीजवीर्येन्द्रियाणि चेति॥ नेत्ररोगविशेषे॥ शुक्रवर्णे। शुभ्रे। त्रि० तद्वर्णविशिष्टे॥ शोचयति। ऋज्रेन्द्रेतिनिपातनात् कुत्वं चेत्यस्य कः • रन् प्रत्ययश्च॥ शोचतीति शुक्रः। शुचशोके। पूर्ववत्॥ शोचत्यनेन वा॥ विरहिणः शोचन्त्यस्मिन् • शुक्रो ज्येष्ठमासः॥

शुक्रकरः। पुं० मज्जनि॥ त्रि० वीर्यकारके॥

शुक्रगृहम्। न० वृषतुलयोः॥

शुक्रभुक्.ग्.। पुं० मयूरे।

शुक्रभूः। स्त्री० मज्जनि। त्रि० वीर्योत्पन्ने॥

शुक्रलः। त्रि० बहुवीर्यवति॥ वीर्यदे॥

शुक्रला। स्त्री० उच्चटायाम्॥

शुक्रवारः। पुं० षष्ठवारे। शुक्रग्रहभोग्यदिने॥

शुक्रशिष्यः। पुं० दितिसुते। असुरे॥ शुक्रस्य शिष्यः॥

शुक्राङ्गः। पुं० मयूरे।

शुक्रास्तः। पुं० नष्टभृगौ। अनया चाग्न्यादिनिषिद्धो यथाह रुद्राजमार्तण्डे-। यात्राविवाहव्रतबन्धवेश्मप्रासादचूडाकरणं हितेज्यौ॥ नष्टे भृगौ नोपदिशन्ति राज्ञां देवप्रतिष्ठामपि कर्णवेधमिति॥

शुक्रियम्। न० शुक्रदेवते। हविषि॥ शुक्रो देवताऽस्य। शुक्राद्घन्॥

शुक्लः। पुं० विष्कम्भादियोगान्तर्गतयोगविशेषे॥ वर्णविशेषे। तत्पर्याया यथा। शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः। अवदातः सितो गौरोऽवलक्षो धवलोऽर्जुन इति॥ वत्सरविशेषे॥ तत्फलं यथा। रोगा बहुविधास्तत्र मनुष्या वाजिकुञ्जराः। सर्व एव प्रपश्यन्ति शुक्ले वर्षे रामने॥ इति॥ शुक्लेरण्डे॥

शुक्लम्। न० रजते। रूप्ये॥ नयनोत्थे॥ नेत्ररोगविशेषे॥ यथा। सुखं तं मृदुशुक्लाख्यं शुक्लं तद्दहते चिरात्॥ चिकित्साऽस्य यथा भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यत् दीयते अचिरेणैव तद्वारि तिमिराण्यपि हन्ति॥ स्नानं कृत्वा तिलैर्वापि चक्षुष्यमनिलापहम्। आमलैः सततं स्नानं परं दृष्टिबलावहम्॥ शुण्ठीनिम्बदलैः पिण्डी सुखोष्णा स्वल्पसैन्धवा। धार्या नेत्रेऽनिलश्लेष्मशोथकण्डूव्यथाहरी॥ त्रिफलापिण्डिका नेत्रे वातपित्तकफापहेति॥ शु[illegible]णि॥ देवयानमार्गे॥ त्रि० शुभ्रवर्णयुक्ते॥ शुक्लो गुणोऽस्याऽस्ति० अस्मिन् वा। मतुप्। गुणवचनेभ्यो मतुपो लुगिष्ट इति लुक्॥

शोचतिवा । शुच० । स्फायितञ्चीत्यादिना रन् ॥ निपातनात्कुत्वेच ऋज्र: । पक्षे रेफस्य ल: ॥

शुक्लक: । पुं० शुक्ले ॥ शुक्लपक्षे ॥

शुक्लकण्ठ: । पुं० दात्यूहे ॥ त्रि० श्वेतगलयुक्ते ॥

शुक्लकन्द: । पुं० महिषकन्दे ॥ श्वेतमूले ॥

शुक्लकन्दा । स्त्री० अतिविषायाम् ॥

शुक्लकर्म्म । त्रि० अकृष्णकर्म्मणि ॥

शुक्लकुष्ठम् । न० श्वेतकुष्ठे ॥

शुक्लकूष्माण्डम् । न० शुभाशुभे ॥

शुक्लक्षीरा । स्त्री० काकोल्याम् ॥

शुक्लदुग्ध: । पुं० शृङ्गाटके ॥

शुक्लधातु: । पुं० कठिन्याम् ॥ शुक्लस्यासौधातुश्च ॥

[illegible] । पुं० सितपक्षे । विषुमस्याख्यत्वात्शुक्लत्वस्य दर्शकालक्रिया: प्रवृत्ते ॥ तत्र [illegible] सितस्त्वा पूर्वकाले [illegible] शुचि: [illegible] [illegible] शुक्लप्रतिपदा [illegible] दर्शातिथ्यात्मका । यथा [illegible] भौमासि शुक्ल कृष्णौ क्रमेणहि । चन्द्रवृद्धिकर: शुक्ल: कलाश्चन्द्रक्षयात्मका: ॥ पञ्चत्यादास्तु तिथय: क्रमात पञ्चदशस्मृता: । दर्शान्ता: कृष्णपक्षे ता: पूर्णिमान्ताश्च शुक्लके ॥

शुक्लपुष्प: । पुं० कुब्जकवृक्षे । अतिच्छत्रे । कुन्दपुष्पवृक्षे ॥ मरुवके ॥ त्रि० श्वेतकुसुमयुक्ते ।

शुक्लपुष्पा । स्त्री० नागदन्त्याम् ॥ शीतकुम्भ्याम् ॥

शुक्लपुष्पी । स्त्री० नागदन्त्याम् ॥

शुक्लपृष्ठ: ) । पुं० निसिन्धुके ।

शुक्लपृष्ठक: ) । पुं० सिन्धुवारे ॥

शुक्लबल: । पुं० जिनविशेषे ॥

शुक्लरोहित: । पुं० श्वेतरोहितवृक्षे ॥

शुक्लला । स्त्री० उच्चटायां ॥

शुक्लवर्ग: । पुं० श्वेतवर्णसजातीयद्रव्ये । शुङ्गशुक्तिकपर्द्दकादौ ॥

शुक्लवायस: । पुं० बके । दीर्घजङ्घे । वकोटे ॥

शुक्लशाल: । पुं० अद्रिनिम्बे ॥ हृ० रा० भट्ट: ॥

शुक्ला । स्त्री० शारदायाम् । सरस्वत्याम् । वाग्देवतायाम् ॥ शुक्लां ब्रह्मविचारसारपरमामाद्यांजगद्व्यापिनींवीणापुस्तकधारिणीमभयदांजाड्यान्धकारापहाम् । हस्तेस्फाटिकमालिकांविदधतींपद्मासनेसंस्थितांवन्देतांपरमेश्वरींभगवतींबुद्धिप्रदांशारदाम् ॥ गतिविशेषे । ज्ञानप्रकाशमयत्वादर्च्चिरादिगतौ । शास्त्रमार्गस्थेनागमप्रसिद्धेदेवयानमार्गे ॥ स्नुह्याम् ॥ काकोल्याम् ॥

विदार्य्याम् । शुभ्रवर्णायाम् ॥ टाप् ॥

शुक्लाङ्गी । स्त्री० शेफालिकायाम् ॥

शुक्लापाङ्गः । पुं० मयूरे । त्रि० शुक्लवर्णनेत्रान्ते ॥

शुक्लार्ज्जकः । पुं० सितपर्णासे । वर्व्वराप्रभेदे ॥

शुक्लार्म्मम् । न० चक्षूरोगविशेषे ॥ सुश्वेतंमृदुशुक्लार्म्मशुक्लंतद्वर्द्धतेचिरात् ॥

शुक्लिमा । पुं० शुक्लत्वे ॥

शुक्लोपलः । पुं० श्वेतपाषाणे ॥

शुक्लोपला । स्त्री० शर्करायाम् ॥

शुक्षिः । पुं० वायौ ॥ तेजसि ॥ चित्रे ॥ शुष्यति । शुषशोषणे । प्लुषिकुषिशुषिभ्यः क्सः ॥

शुङ्गः । पुं० न० वटे । आम्रातके ॥ पर्क्याम् । अङ्कुरे । कार्य्ये ॥

शुङ्गा । स्त्री० प्लक्षवृक्षे ॥ नवपल्लवकोश्याम् ॥

शुङ्गाकर्म्म । न० पुंसवनसंस्कारविशेषे ॥

शुङ्गी । पुं० प्लक्षवृक्षे ॥ वटद्रुमे ॥

शुक् । स्त्री० शोके ॥ शोचनम् । शुचशोके । सम्पदादित्वात्क्विप् ॥ वशंप्राप्ते मृत्योः पितरितनयेवासुहृदिवा० शुचासन्तप्यन्ते भृशमुदरतो-ऽन्जडधियः । असारेसंसारेविरसपरिणामेतुविदुषांवियोगोवैराग्यंद्रढयतिवितन्वन्शमसुखम् ॥

शुचा । स्त्री० शोके ॥

शुचिः । पुं० ग्रीष्मे ॥ अग्नौ ॥ सौराग्नौ ॥ यथा । पावकः पवमानश्च शुचिरग्निश्चतेत्रयः । निर्मथ्यः पवमानः स्याद्वैद्युतः पावकः स्मृतः । यश्चासौतपतेसूर्य्यः शुचिरग्निस्त्वसौस्मृतः । तेषान्तुसन्ततावन्ये चत्वारिंशच्चपञ्च च । पावकःपवमानश्चशुचिस्तेषांपितात्रयः । एतेषेकोनपञ्चाशद्वह्नयः परिकीर्त्तिताः ॥ इ० कौर्म्मे १२ अध्यायः ॥ चित्रके ॥ शृङ्गाररसे ॥ उत्तमयुवप्रकृतिकत्वेन० जुगुप्साराहित्यात्० शुचिः शृङ्गाररसः ॥ आषाढेमासि ॥ शुचिंपवित्रंकरोति० शुचयति । तत्करोतीतिण्यन्तादचुः ॥ यद्वा । शोचति । अन्तर्भावितण्यर्थोऽच्छुचेरगुपधात्किदितीन् ॥ शोचंतिविरहिणोऽस्मिन्नितिवा । शोचत्यनेनवा ॥ विदुषि ॥ शोचतिजनक्लिश्यमानम् ॥ उपदाशुद्धमन्त्रिणि ॥ ज्येष्ठमासि ॥ स्त्री० कश्यपपत्न्यास्ताम्रायाः सुतायाम् ॥ त्रि० धवले ॥ शुद्धे ॥ यथा । आसनंशयनंयानंजायापत्यकमण्डलुम् । आत्मनः शुचिरेतानिपरेषामशुचीनि तु ॥ स्वभावतः संस्कारतश्चशुद्धे ॥ बाह्याभ्यन्तरशौचसम्पन्ने ॥ ये

शिखापिण्डनेदि पलाद्यिका: । विहतायाः पलेन कमलशाण्डिका भवेत् ॥ हन्त्यशीतिवातरोगान् च त्वारिंशच्च पित्तजान् । विंशतिश्लेष्मसम्भूतानष्टौ च पिच्चरोद्भवान् ॥ हृगमृषभवान् रोगानन्यानपि निवारयेत् । महौषधप्रसादेन परमः सुन्दरो भवेत् । इति पाकावली ॥

शुण्ठाम् ।) न० शुण्ठाश्च: ।) पुं० शुण्ठाम् ।

शुण्ड: । पुं० मदनिर्झरे ॥

शुण्डक । पुं० मण्डहारके ॥ युद्धघोषे ॥

शुण्डरोह: । पुं० भूतृणे ॥

शुण्डा । स्त्री० मद्यपानालये ॥ जलहस्तिन्याम् । वेश्यायाम् ॥ हस्तिहस्ते । सुरायाम् । नलिन्याम् । शुन्धति शुं गच्छति । अमन् ड: ॥

शुण्डापानम् । न० मद्यस्थाने ।

शुण्डार: । पुं० शौण्डिके । स्वल्पशुण्डायाम् । ह्रस्वा शुण्डा । कुटीशमीशुण्डाभ्यो र: ॥

शुण्डाल: । पुं० हस्तिनि ॥

शुण्डी । पुं० शौण्डिके ॥

शुण्डिमूषिका ।) शुण्डिमूषी ।) स्त्री० छुच्छुन्दर्याम् ॥ इ० रा० नि० वट० ॥

शुण्डी । स्त्री० हस्तिशुण्डावर्षे ॥

शुतुद्रि: । स्त्री० शतद्रुसरिति ॥ शु पूजितं तुदति । तुद० । इगुपधात् किदितीन् । बाहुलकात् कुक् ॥

शुद्धि । अ० शुक्लपक्षे ॥

शुद्धम् । न० मरिचे सैन्धवे ॥

शुद्ध: । त्रि० पूते । पवित्रे । अशुद्धिविरहिते ॥ निर्मले । निर्लेपे ॥ निर्दोषे ॥ शुक्ले ॥ रागान्तरामिश्रितरागे ॥ प्रसन्ने ॥ नित्यनिरस्तसमस्तदोषपरसंविद्रूपे ॥ शुध्यति शुध्यतेऽनेन वा । शुध शौचे । क्त: । प्रशस्ता शुद्धिरस्य वा । अर्शआदित्वाच् ॥ यहरहित भवमे ॥ रागाद्यशुद्धिरहितेपरमात्मनि ॥

शुद्धचैतन्यम् । न० सर्वधर्मातीते ।

शुद्धजङ्घ: । पुं० शुक्लवर्णे । गर्दभे ॥

शुद्धदत् । त्रि० शुक्लदन्तयुक्ते । शुद्धदन्ते । शुद्धा दन्ता यस्य स: ॥ अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्चेति पक्षे दन्तस्य दत्रादेश: ॥

शुद्धमति: । स्त्री० पवित्रमतौ । सुमतौ त्रि० सुमतिविशिष्टे ॥ पवित्रबुद्धियुक्ते ॥ शुद्धा मतिर्यस्य ॥

शुद्धमन्तर्यस: । पुं० चतुर्विंशतिभूतार्हदन्तर्गतजिनविशेषे ॥

शुद्धमांसम् । न० मांसव्यञ्जन

विशेषे । सुधवांस० इ० भा० ॥ यथा । पाकपात्रे घृतं दद्यात्तैलं वा तदभावतः । तत्र हिङ्गुहरिद्राञ्च भर्जयेत् तदनन्तरम् ॥ छागादेर स्थिरहितं मांसं तत्खण्डितं भृशम् । धौतं निर्गालितं तस्मिन् घृते तत्तु नियोजयेत् । सिद्धयोग्यं जलं दत्त्वा लवणं चापचेत्ततः । सिद्धे जलेन सम्यग्वेसवारं परिक्षिपेत् ॥ द्रव्याणि वेसवारस्य नागवल्लिदलानि हि तण्डुलाश्चलवङ्गानि मरिचानि समासतः ॥ अनेन विधिना सिद्धं शुद्धमांसमिति स्मृतम् । शुद्धमांसं परं वृष्यं बल्यं रुच्यं स्वृंहणम् ॥ त्रिदोषशमनं श्रेष्ठं दीपनं धातुवर्द्धनम् इति भावप्रकाशः ॥

शुद्धवती । स्त्री० वरुणस्य पुर्य्याम् ॥ यथा । शुद्धवत्यम्बुनाथस्य स्फटिकोपलनिर्म्मिता । पाण्डुराभ्रोपमैर्यादः सेविता भाति धामभिः तिमिङ्गिलेन्द्रसंहिता ॥

शुद्धवल्कका । स्त्री० गुडूच्याम् ॥

शुद्धसत्त्वम् । न० रजस्तमोभ्यामस्पृष्टे त्रिगुणायामायायांशभूते० वि मलसत्त्वगुणे ॥ त्रि० शुद्धान्तःकरणे ॥ शुद्धं रागादिकषायरहितं सत्त्वमन्तःकरणं यस्य ।

शुद्धान्तः । पुं० भूभुजांस्त्र्यागारे । अन्तःपुरे अवरोधने ॥ स्मा र्त्तवृहत्कक्षान्तरे । राजधानीस्थान विशेषे वासगृहाख्ये० इति स्वामी ॥ राजयोषिति ॥ शुद्धोऽन्तोऽस्य । रक्षकाः शुद्धा अन्ते समीपेऽस्य वा ॥ अशौचान्ते ॥

शुद्धान्तपालकः । पुं० अन्तःपुररक्षके । गृहदौवारिके । कञ्चुकिरक्षके ॥ रातिहिण्डके ॥ तल्लक्षणं यथा । शुद्धः कुलोद्गतः सूक्ष्म पितृपैतामहः शुचिः । राज्ञामन्तःपुराध्यक्षो विनीतश्च तथेष्यते ॥ इ० मत्स्यपु० ॥

शुद्धान्ता । स्त्री० राजयोषिति ॥

शुद्धापह्नुतिः । स्त्री० अलङ्कारविशेषे ॥ यथा ॥ शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः । नायं सुधांशुः किन्तर्हि व्योमगङ्गासरोरुहम् । इति ॥

शुद्धिः । स्त्री० । मार्ज्जनायाम् ॥ दोषनिरासे ॥ वैदिककर्म्मार्हत्वप्रयोजकसंस्कारविशेषे ॥ कलिकल्मषदीनानां द्विजादीनां सुरेश्वरि । मेध्याऽमेध्यविचाराणां न शुद्धिः श्रौतकर्म्मणा ॥ न संहिताद्यैः स्मृतिभिरिष्टसिद्धिर्नृणां भवेत् । विनाह्यागममार्गेण कलौ नास्ति गतिः प्रिये ॥ कलावागममुल्लङ्घ्य योऽन्यमार्गे प्रवर्त्तते । न तस्य गतिरस्तीति सत्यं सत्यं न संशयः ॥ दुर्गायाम् ॥

यथा । स्मरणाच्चित्तनाशादपि शोध्य तैसहि पातकात् । तेनशुद्धिसमा ख्याता देवीतद्गतनौ स्थितेति ॥ शुधे. स्थिर्याक्तिन् ॥ देवतायैसुराप्रदाने द्रव्यान्तरसंज्ञायाम् ॥ यथा । मांसं मीनश्चमुद्राश्च फलमूलानियानिच । सुधादाने देवतायै सं स्रषां शुद्धिरी रितेति ॥

शुद्धिलाभः । पुं॰ प्रायश्चित्ते ॥

शुद्धोदनः । पुं॰ नृपविशेषे ॥ शुद्धौ दनोऽस्य । शाकम्वादिः ॥ शुद्धो दनोयतोभुङ्क्ते न्यायवच्छुद्धमोदनम् ॥

शुद्धोदनसुतः । पुं॰ शाक्यमुनौ ॥

शुनः । पुं॰ वायौ ॥ कुक्कुरे ॥ यथाश्वावस्पतिः । कुक्कुरस्तुशुनिः श्वाजः कपिलोमण्डलः शुनक इति ॥

शुनःशेपः । ) पुं॰
शुनःशेफः । ) न॰ मुनिविशेषे । ऋचीकमुनिपुत्रे । आजीगर्त्ते ॥

शुनकः । पुं॰ कुक्कुरे । शुनति । शुनगतौ । क्वुन्शिल्पिसंज्ञयोरपू र्वस्यापि ॥

शुनकचञ्चुका । स्त्री॰ क्षुद्रचञ्चुक्षुपे ॥

शुनकचिल्ली । स्त्री॰ शाकविशेषे । श्वानचिल्लिकायां ॥

शुनाशीरः । पुं॰ इन्द्रे ॥ शुनोवायुः । शीरः सूर्यः । तावस्यस्तः । यः याच् । अन्येषामपीतिदीर्घः ॥ शुनाशीरोपितालव्यः शुनासीरोपिदन्त्यकः । तालव्यादिर्दन्त्यमध्यः शुनासीरश्चदृश्यते । इतिभरतः ।

शुनासीरः । पुं॰ इन्द्रे । पुरुहूते । पुरन्दरे । शुइत्यव्ययस्यपूजार्थत्वात् । शोभनंनासीरंसेनाविशेषो यस्यसः ॥ यद्वा । शुनोवायुः सीरश्चादित्यः । शुनश्चसीरश्च ति । देवताद्वन्द्वेचेत्यानङ् इतिहर्षितकारः । दन्त्यतृतीयपाठोबहुसम्मतः ॥

शुनासीरीयम् । न॰ शुनासीर्ये ॥ शुनासीरौदेवताऽस्येत्यर्थे॰ द्यावापृथिव्यादिनाछः ॥

शुनासीर्यम् । न॰ शुनासीरीये॰ हविरादौ । शुनासीरौदेवतास्येत्यर्थे॰ द्यावापृथिवीशुनासीरमरुत्व दग्नीषोमवास्तोष्पतिगृहमेधाच्छचेति॰ यत् ॥

शुनिः । पुं॰ कुक्कुरे । सारमेये ।

शुनी । स्त्री॰ कुक्कुर्याम् । अश्मानमत्र शुनीत्यमत्र । कुष्माण्डाम् । गौरादित्वान्ङीष् ॥

शुनीरः । पुं॰ कुक्कुरीसमूहे । इति॰ वि॰ शेषः ॥

शुन्ध्युः । पुं॰ अग्नौ । शुन्धति । शुन्धशुद्धौ । यजिमनिशुन्धिदसिजनिभ्योयुच् ॥

शुन्यम् । न० शून्ये ॥ शुने हितम् । गवादिषु शुनः सम्प्रसारणं वाच्दीर्घत्वमितियत् ॥ शुनीमांसम्रूहे ॥

शुभः । पुं० विष्कम्भादिषु० योगविशेषे ॥ तज्जातोत्पन्नस्य फलं यथा । शुभप्रसूत : शुभकृन्नराणां शुभोदयेष्टी विदुषां समाजे । करोति नित्यं शुभकर्म्मचौसाम शोभाधिकः शोभनवेशधारी ति ॥ छागे ॥ शुभहिंसायाम् । इगुपधेतिकः ॥ न० कल्याणे । क्षेमे । भद्रे । मङ्गले ॥ मौक्तिके ॥ पद्मकाष्ठे ॥ इष्टफले ॥ परमानन्दरूपत्वेन मङ्गलानां मङ्गले ०मोक्षसुखे ॥ त्रि० सुखरूपे ॥ क्षेमशालिनि ॥ स्वसम्बारिपूर्णे ॥ प्रशस्ते ॥ शोभने । शुभशोभायाम् । इगुपधज्ञाप्रीकिरः कः ॥

शुभंयुः । त्रि० शुभान्विते ॥ शुभमस्यास्ति । शुभमितिमान्तमव्ययम् । अहंशुभमोर्युस् ॥

शुभकृत् । पुं० प्रभवादिवत्सरान्तर्गतवत्सरविशेषे । यथा । सुवर्णरूप्यधान्यानि जगत्सर्वं सुशोभनम् । ब्राह्मणाश्चणिजस्तुष्टाः सुभिक्षे : शुभकृतिप्रिये ॥ ३६ ॥ त्रि० शुभकारके ॥

शुभगन्धकम् । न० बोले । त्रि० मङ्गलगन्धयुक्ते ॥

शुभग्रहः । पुं० सौम्यग्रहे ॥ चन्द्राधिकः शशीचैवगुरुः शुक्रस्तथैव च । पापाऽयुतो बुधश्चैव प्रोक्ताश्चैते शुभग्रहाः ॥

शुभङ्करः । त्रि० क्षेमङ्करे । धर्मकारि ॥

शुभङ्करी । स्त्री० पार्वत्याम् ॥

शुभदः । पुं० अश्वत्थवृक्षे । त्रि० शुभदातरि ॥

शुभदन्ती । स्त्री० सुदन्त्याम् । सुदन्तस्त्रियाम् । पुष्पदन्तेभयोषिति । शुभाः शोभनादन्ताअस्याः । नासिकोदरौष्ठेतिङीष् ॥

शुभपत्रिका । स्त्री० शालपर्ण्याम् ॥ मङ्गलपत्रिकायाम् ॥

शुभम् । अ० क्षेमे । भद्रे ॥

शुभवासनः । पुं० मुखवासकारगन्धे । मुखवासने ॥

शुभस्थली । स्त्री० यज्ञभूमौ । भद्रभूमौ ॥

शुभा । स्त्री० वंशरोचनायाम् ॥ गोरोचनायाम् ॥ प्रियङ्गौ ॥ शम्याम् ॥ श्वेतदूर्वायाम् ॥ देवसभायाम् ॥ उमासखीविशेषे ॥ मङ्गलजनिकायाम् ॥ छाग्याम् ॥ टाप् ॥

शुभाङ्गः । त्रि० मङ्गलावयवयुक्ते । सुन्दरावयविनि ॥ शुभानि सलक्षणलक्षितान्यङ्गान्यस्य ॥

शुभाङ्गी । स्त्री० कुबेरपत्न्याम् । कामदेवपत्न्याम् ॥ मङ्गलावयवयुक्ता

याम् ॥

शुभाचारः । त्रि॰ शोभनाचारवति ॥

शुभाचारा । स्त्री॰ उमासखीभेदे ॥

शुभाञ्जनः । पुं॰ शिग्रौ ॥

शुभात्मिका । स्त्री॰ कन्यायाम् । शुभोक्तौ ॥

शुभान्वितः । त्रि॰ मङ्गलयुक्ते । शुभंयौ ॥ शुभेनान्वितः कर्तृकारणइतिसमासः ॥

शुभ्रः । पुं॰ चन्दने ॥ शुक्लवर्णे ॥ शोभते । शुभदीप्तौ । स्फायितञ्चीतिरक् ॥ न॰ अभ्रके ॥ रूप्ये ॥ कासीसे ॥ गडलवणे ॥ शाकम्भरीये ॥ त्रि॰ उद्दीप्ते । शुक्लगुणयुक्ते ॥

शुभ्रदन् । त्रि॰ शुभ्रदन्ते ॥ शुभ्रा दन्ता यस्य सः । अयान्तशुद्धशुभ्रेतिदन्तस्य दत्रादेशः ॥

शुभ्रदन्तः त्रि॰ शुभ्रदति ॥

शुभ्रदन्ती । स्त्री॰ पुष्पदन्तभार्यायाम् ॥ शुभ्रौ दन्तौ अस्याः सा । नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्चेतिङीष् ॥

शुभ्ररश्मिः । पुं॰ चन्द्रे ॥

शुभ्रा । स्त्री॰ गङ्गायाम् ॥ वंशरोचनायाम् ॥ स्फट्याम् ॥

शुभ्रांशुः । पुं॰ सुधांशौ । ओषधीशे । चन्द्रे ॥ शुभ्रा अंशवो यस्य ॥ कर्पूरे ॥

शुभ्रालुः । पुं॰ महिषकन्दे ॥

शुम्भिः । पुं॰ ब्रह्मणि । कमलासने ॥ दुर्गनीये ॥ शोभते । शुभ्रशोभनार्थे । अन्दिगन्दिशुम्भिभ्य इन् ॥

शुम्भः । पुं॰ कश्यपाद्दित्यामुत्पन्ने निशुम्भनमुचिभ्यां ज्येष्ठे शिवाल्लब्धप्राप्तवरे असुरराजे ॥ यथा । कश्यपस्य दितिर्नाम भार्यासीद्दक्षसत्तम । तस्याः पुत्रत्रयं जज्ञे सहस्रनागबलाधिकम् । ज्येष्ठः शुम्भ इति ख्यातो निशुम्भश्चापरोऽसुरः ॥ तृतीयो नमुचिर्नाम महाबलपराक्रमः । इति वामनपुराणम् ॥

शुम्भघातिनी । शुम्भनिबर्हिणी । } स्त्री॰ महासरस्वत्याम् ॥

शुम्भपुरम् । न॰ एकचक्रे । हरिगृहे । शम्भलइत्यधुनाप्रसिद्धे पुरश्रेष्ठे ॥

शुम्भपुरी । स्त्री॰ शुम्भासुरनगर्य्याम् । शुंभपुरे ॥

शुम्भमथनी । शुम्भमर्दिनी } स्त्री॰ दुर्गायाम् । महासरस्वत्यां ॥

शुम्भा । स्त्री॰ शोभायाम् ॥ शुम्भति शुभ शुम्भ शोभायाम् । भवायच् ॥

शुल्कः । पुं॰ न॰ घट्टादिदेये राजनिमित्तकरराजभागे । राजाभिषेकोपाराजभागः शुल्कः इत्युक्तेः । स्थलजलपथादिना वाणिज्याकारि

यमेवं शस्तथापर : । एतैशुषिरभेदास्तु कथिता: पूर्वसूरिभिरिति ॥ विवरे ॥ त्रि० सरन्ध्रे । रन्ध्रान्विते । शुषिश्छिद्रमस्यास्मिन् वाऽस्ति । अषशुषीति र : ॥ यद्वा । शुष्यति । शुष० इषिमदिमुदीति किरच् । शुष्कपीलुन्ये ॥

शुषिरा । स्त्री० नलीनामगन्धद्रव्ये ॥ शुषिराविद्रुमलताकपोताङ्घ्रिर्नटीनलीत्यमर : ॥ शुषिरमस्त्यस्य अस्यांवा । अर्श आद्यच् ॥

शुषिल : । पुं० समीरणे । वायौ ।

शुष्क : । त्रि० नीरसे ॥ शुषित : । शुष : क्त इति० निष्ठातकारस्य ककार: ॥ यद्वा । शुष्यति । शुष० । स्थभूशुषिमुषिभ्य : कक् ॥

शुष्कतर्क : । पुं० दुस्तर्के । अनुग्राहकमानहीनतया० निरालम्बने० ऽर्द्धवैनाशिकादिकल्पितेऽनुमाने ॥

शुष्कपत्रम् । न० नीरसदले ॥ आतपादिशोषितपट्टशाके । नालिता० शुक्ता० इ० गौ० दे० भा० प्र० । अस्यगुणायथा । शुष्कपत्रं पर्यामिश्रं पित्तघ्नं ज्वरापहम् । तच्छुष्कपत्रं जलदोषनाशनं विशेषत : पित्तकफज्वरापहम् । जलस्थतस्यापिच पित्तहारकं सुरोचनं व्यञ्जनयोगकारकमिति राजवल्लभ: ॥

शुष्कमत्स्य : । पुं० आतपादिनानीरसे मीने ॥ शुष्कमत्स्यानवल्या : स्युर्दुर्जराविड्विबन्धना : ॥

शुष्कमांसम् । न० आतपादिनाशनान्ते पिशिते । उत्तप्ते । वल्लूरे ॥ यथा । वृद्धानां शोषकं मांसं० बालाबलनं लघु । त्रिदोषकृद्ध्यालघु ष्टं शुष्कं मूलकारं गुरु ॥

शुष्करेवती । स्त्री० मातृकाविशेषे ॥

शुष्कल : । त्रि० आमिषे ॥ शुष्कमांसस्यापशिके । पिशिताशिनि ॥ शुष्कलीमस्ति । शेषइल्यण् । संज्ञापूर्वकत्वान्न वृद्ध्यभाव : ॥

शुष्कली । स्त्री० शुष्कमांसे ॥ मांसमात्रे ॥

शुष्कवृक्ष : । पुं० पाण्डुतरौ । धवे ॥

शुष्कव्रण : । पुं० किणे ॥

शुष्काङ्ग । पुं० धवद्वृक्षे ॥ त्रि० निस्नेहावयवे ।

शुष्काङ्गी । स्त्री० गोधायाम् ।

शुष्कार्द्रम् न० शुण्ठ्याम् ॥

शुष्ण : । पुं० सूर्ये ॥ वह्नौ ॥ शुष्यत्यनेन । शुष० । तृषिशुषिरसिभ्य : कित् नः ॥

शुष्म : । पुं० सूर्य्ये ॥ अग्नौ ॥ अर्चिषि ॥ न० तेजसि ॥ ओजसि । बले ॥ शुष्यति जलम्० शुषिरन्तर्भावितण्यर्थात्० अविसिवि

सिग्रुषिभ्य : किदितिमन्प्रत्ययः शुष्यत्यनेनवा । शुष० ॥

शुष्मा । पुं० अग्नौ । चित्रकवृक्षे ॥ सूर्ये । न० तेजसि ॥ शुष्यत्यनेन । शुष० । अन्येभ्योऽपीतिमनिन् । संज्ञापूर्वकत्वान्नगुणः ॥ शोषयतिवा । बाहुलकात्साधुः ॥

शुष्मी । त्रि० बलिष्ठे । मत्ते ॥ अस्त्यर्थेइनिः ॥

शूक । पुं० शूके । श्वच्छातीच्छायां । किंशारीरन्यस्मिन् । श्वच्छातीच्छायां । ससादेरन्यवंशस्त्रिका-दिकण्टके ॥ श्यति, शोतनूकरणो । उलूकादयश्चेतिसाधुः ॥ दयायाम् । न० शूकतृणे ॥

शूककः । पुं० प्रारूटे । यवे । रसे

शूककीटः । पुं० वृश्चिके ॥ शूकवान् कीटः । शूकयुक्तः कीटः । शाकपार्थिवादिः ॥ उर्णादिभचकः कीटविशेषोवृश्चिकः शूककीटस्य० भ्रमरप्रभेदोयम् ॥

शूककीटकः । पुं० शूककीटे ॥

शूकतृणम् । न० तृणविशेषे । शूके । शूकाढ्ये । कनिष्ठके ॥ इ० रा० गटः ॥

शूकधान्यम् । न० यवगोधूमादौ ॥ शूकस्यधान्यम् ।

शूकपिण्डिका । ) शूकपिण्डी । ) स्त्री० शूकशिम्ब्याम् ॥

शूकरः । पुं० कूलचरविशेषे । वराहे क्रोडे ॥ शूकोऽस्यास्ति० खररोमत्वात् । रः ॥ यद्वा । शूकंराति । रा० घातइतिकः ॥ यद्वा । शू० इति ध्वनिंकरोति । अच्० टाबा ॥ शालिविशेषे ॥

शूकरकन्दः । पुं० वाराहीकन्दे ॥

शूकरपादिका । स्त्री० कोलशिम्ब्याम् । सुवरासेमइतिभाषाप्रसिद्धायाम् ॥

शूकरमुखम् । न० नरकविशेषे ॥

शूकराक्रान्ता । स्त्री० वराहक्रान्तायाम् ॥

शूकरी । स्त्री० शूकरस्त्रियाम् । जातेरितिङीष् ॥ छन्दसाशुचिशूकपस्य चसुखेदुःखेचनास्त्यन्तरंखेच्छाकामनयोस्तयोरपिसुधाविष्ठाचकाम्याधमम् । रम्भाचाशुचिशूकरीचपरमप्रेमास्पदंमृत्युतः सन्त्रासोपि समः स्वकर्मगतिभिश्चान्योन्यभावः समः ॥ वराहक्रान्तायाम् ॥

शूकरेष्टः । पुं० कशेरुणि ॥ त्रि० सूकरप्रियवस्तुनि ॥

शूकलः । पुं० दुर्विनीताश्वे ॥

शूकवान् । त्रि० शूकयुक्ते ॥

शूकवती । स्त्री० कपिकच्छ्वाम् ॥

शूकशिम्बा । ) स्त्री०
शूकशिम्बिः । ) पुं०  कपिकच्छ्वाम् ॥
शूकशिम्बिका । ) स्त्री०
शूकशिम्बी । )

। कौषद्व॰ भा॰ ॥ शूकायुक्ताशिम्बा ॰ शिम्बि : शिम्बिका॰ शिम्बीवा॥

शूकसिम्बा । } स्त्री॰
शूकसिम्बिः । } पुं॰ कपिकच्छ्वाम् ।
शूकसिम्बी । } स्त्री॰

मर्कव्याम् । कौष॰ भा॰ प्र॰ ॥

शूका । स्त्री॰ शूकशिम्बायाम् ॥

शूकाव्यम् । न॰ शूकतृणे ॥

शूकापट्टः । पुं॰ तृणग्राहिणि । तृणमणौ । कपूरंद्व॰ भा॰ प्र॰ ॥ द्व॰ ह॰ णी ॥

शूतिपर्णः । पुं॰ आरग्वधे ॥

शूद्रः । पुं॰ अवरवर्णे । वृषले । जघन्यजे । अस्यान्नादिग्रहणं वैदिकब्राह्मणेन न कर्त्तव्यमित्याह नारायणः । शूद्रान्नं शूद्रसम्पर्कं शूद्रेण च सहासनम् । तेयाम्नि नरकं घोरं यावच्चन्द्रदिवाकराविति ॥ अस्योत्पत्तिरग्निपुराणे जातिमालायामुक्ता । तथाहि । आदौ प्रजापतेर्जातामुखाद्विप्राः सदारकाः । बाह्वोश्च क्षत्रियाजाताजङ्घयोर्वैश्याविजज्ञिरे ॥ पादाच्छूद्रश्चसम्भूतस्त्रिवर्णस्यचसेवकः । भीमनामासुतस्तस्यप्रदीपस्तस्यपुत्रकः । कायस्थस्तस्य-पुत्रोऽभूद्भूर्त्तलिपिकारकः । कायस्थस्यत्रयःपुत्राविख्याताजगतीतले ॥ चित्रगुप्तश्चित्रसेनोविचित्रश्चतथैव च । चित्रगुप्तोगतः स्वर्गेविचित्रो

नागसन्निधौ ॥ चित्रसेनः पृथिव्यां वै इतिशूद्रः प्रपद्यतइति ॥ शोचति । शुचशोके । शुचेर्दश्चेतिरक्॰ दीर्घश्च ॥ अपशूद्राधिकरणे शूद्रेतिश्रुतौ तु॰ रुद्धेर्धात्॰ योगएवपुरस्कृतः तथाचोक्तरतन्त्रे भगवान्व्यासः । शुगस्यतदनादरश्रवणात्॰ तदाद्रवणात्सूच्यतेहि ॥ १ । ३ । ३४ । अस्यार्थः । छान्दोग्येचतुर्थप्रपाठके॰ शिष्यम्प्रतिशूद्रेतिसम्बोधनाच्छूद्रे धिकारइतिचेन्न । शुगस्येति । जानश्रुतेः हंसैरपत्नकृत्यनादरतो जानश्रुतिः॰ तदनादरश्रवणाद्याशुक्॰ तया॰ आशीघ्रं॰ रैक्वगुरुंप्रद्रवणात्सशूद्रः । एतद्विहन्तं॰ शूद्रेतिसम्बोध्य॰ सर्वज्ञत्वख्यापनाय रैक्वेणसूच्यते ॥

शूद्रकः । पुं॰ अतिकुत्सितेशूद्रे ॥ कुत्सार्थेकन् ॥

शूद्रकर्म्म । न॰ द्विजपरिचर्य्यायाम् ॥ यथाहभगवान् । परिचर्य्यात्मकं कर्म्मशूद्रस्यापिस्वभावजम् इति । स्वभावजं रजउपसर्जनतमोगुणस्वभावात्जातम् कालिदासोपि । द्विजातिसेवाऽवनिदेवताचयाधर्म्मोविधिः शूद्रनिसर्गकर्म्म च । स्वभावकर्म्मप्रतिज्ञायशेन्ययास्वयञ्चरेत्सोन्त्यजकर्म्मनर्म्मभागिति ॥ शूद्रस्यकर्म्म ॥ अत्रनिषिद्धानिकर्म्मा

ऽपियथा। शूद्राणाञ्चमश्चाराऽहत्थे
वधनसञ्चयः। शुश्रूषोः कृतका
र्य्यस्य कृतसम्मानकर्म्मणः॥ अभ्य
नुज्ञातराजस्य शूद्रस्य जगतीपते।
अल्पान्तरगतस्यापि दशधर्म्मगतस्य
च॥ आश्रमा विहिताः सर्व्वे वर्ज
यित्वा निराशिषमिति पाद्मे स्वर्गख
ण्डः॥

शूद्रकृत्यम्। न॰ शूद्रकर्त्तव्यकर्म्म
णि॥

शूद्रधर्म्मः। पुं॰ शूद्रस्य शास्त्रवि
हिताचारे॥ सच वर्णाश्रमशब्दे द्र
ष्टव्यः॥

शूद्रप्रियः। पुं॰ पलाण्डौ॥ त्रि॰
तदिष्टद्रव्ये॥

शूद्रप्रेष्यः। पुं॰ शूद्रस्य परिचारके
ब्राह्मणादौ।

शूद्रयाजकः। पुं॰ शूद्रसम्बन्धियज्ञा
दावृत्विजि॥ शूद्रस्य याजकः॥

शूद्रासनम्। न॰ पट्टे। मकुलौ।
शूद्रसाधिकारे॥ स्मृति॰ त्रि॰
शिपः॥

शूद्रशिष्यः। त्रि॰ शूद्राद्व्याकरणा
द्यध्ययनकारिणि।

शूद्रा। स्त्री॰ शूद्रजातौ। अन्यभार्य्या
यामपि शूद्रजातीयायाम्॥ शूद्रीशू
द्रस्य भार्य्या स्यात्॰ शूद्रा तज्जातिरे
व चेत्यमरः॥ शूद्राणामशत्पूर्व्वा
जातिरितिटाप्॥

शूद्रान्नम्। न॰ शूद्रस्वामिकान्ने।
यथा। शूद्रान्नेनतुभुक्तेनउदरस्थे
नयोमृतः। सवै खरत्वमुष्ट्रत्वं शूद्र
त्वञ्चाधिगच्छति॥

शूद्राभार्य्यः। पुं॰ शूद्रास्वामिनि॥
शूद्राभार्य्यायस्य सः॥

शूद्रार्त्ता। स्त्री॰ प्रियङ्गुवृक्षे॥

शूद्रावेदी पुं॰ सवर्णापरिणीयकृत
शूद्राविवाहे॥ शूद्रांविन्दति॰प
रिणयति, विदेर्णिजिः॥ शू
द्रावेदीपतत्यत्रेरुतथ्यतनयस्य च।
शौनकस्य सुतोत्पत्त्या तदपत्यतयाभृ
गोः॥ अपिच॥ शूद्राशयनमारो
प्य ब्राह्मणो यात्यधोगतिम्। जनयि
त्वा सुतं तस्यां ब्राह्मण्यादेव हीयते॥

शूद्री। स्त्री॰ शूद्रस्य भार्य्यायाम्।
भिन्नजातीयायाम् शूद्रभार्य्यायाम्
॥ शूद्रस्य स्त्री। पुं॰ योगादाख्या
यामितिङीष्॥

शूनः। } वि॰ शोथिनि, स्फीते।
शूनवान्। }

वर्द्धिते। उत्श्वीयतेस्म। क्रमेण
श्वयतेः॰ क्तक्तवतू। यजादित्वा
त् सम्प्रसारणे॰ पूर्व्वरूपे ओदितश्चे
ति नत्वे हलइति दीर्घः॥

शूमाघः। त्रि॰। उच्छ्रताघे॥

शून्यम्। न आकाशे॥ विन्दौ॥
त्रि॰ निर्जनेदेशादौ॥ तुच्छे। रि
क्ते। स॰ना॰ रीता॰ दू॰ भा॰॥

अविद्यजीवनं शून्यं दिक्शून्या चेदबान्धवा। पुत्रहीनं गृहं शून्यं सर्वशून्या दरिद्रता॥ खपुष्पादिवदत्यन्ताभावरूपे। यथा। मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः। एष वन्ध्यासुतो याति शशशृङ्गधनुर्द्धरः॥ शुने हितम्। शुनः सम्प्रसारणं वा च दीर्घत्वमिति यत्॥

शून्यकम्। न॰ शून्यार्थे। त्रि॰ तुच्छे॥ शून्यरिक्तइतियावादिषु पाठात् कन्। स्वार्थे को वा॥

शून्यता। स्त्री॰ चित्तस्य दोषे। रागद्वेषादितीव्रवासनया चित्तस्य स्तब्धीभाविकषाये। शून्यतायाम्॥ ध्यानं चिन्ताहितानां: शून्यताश्वासतापकृत्॥ शून्यस्य भावः तल्॥

शून्यतिथिः। स्त्री॰ तिथिविशेषे॥ यथा। अष्टमी नवमी चैव पक्षयोरुभयोरपि। माधवे द्वादशी त्याज्या पक्षयोरुभयोस्तथा। ज्येष्ठे त्रयोदशी निन्द्या सिते॰ कृष्णे चतुर्द्दशी। आषाढे कृष्णपक्षस्य षष्ठी॰ शुक्ले च सप्तमी। द्वितीया च तृतीया च श्रावणे सितकृष्णयोः। प्रथमा च द्वितीया च नभस्ये मासि निन्दिता॥ दशम्येकादशी निन्द्या॰ मासीषे शुक्लकृष्णयोः। ऊर्ज्जे चतुर्द्दशी शुक्ला कृष्णपक्षे तु पञ्चमी॥ सप्तमी चाष्टमी सौम्ये पक्षयोरुभयोरपि। पौषे पक्षद्वये चैव चतुर्थी पञ्चमी तथा॥ माघे तु पञ्चमी षष्ठी कृष्णे शुक्ले यथाक्रमम्। तृतीया च चतुर्थी च फाल्गुने सितकृष्णयोः॥ तिथयो मासशून्याख्या वित्तवंशविनाशिकाः। आसु श्राद्धं प्रकुर्वीत नैव मङ्गलमाचरेदिति वशिष्ठः॥

शून्यनक्षत्रम्। न॰ शून्यभे॥ यथा। अश्विनी रोहिणी चैव शून्यभे परिकीर्त्तिते। चित्रास्वाती च वैशाखे॰ ज्येष्ठे विश्वं ज्यतारके॥ भगवासवमाषाढे॰ श्रावणे हरिविश्वभे। नभस्ये वारुणान्त्यञ्च मजपादश्वयुज्यपि॥ कार्त्तिके पितृवह्न्यृक्षे सौम्ये चित्रादिदैवते। पौषेद्रास्वकरार्द्राः सार्माघे मूलस्वविष्णुभम्॥ तपस्ये शक्रभरणी शून्यभान्याहुरग्रजाः। एषु यत् कृतं कर्म धनैः सह विनश्यति॥

शून्यभम्। न॰ शून्यनक्षत्रे॥

शून्यमध्यः। पुं॰ नले। पोटगले॥

शून्यराशिः। पुं॰ मासविशेषगतराशिविशेषे। यथा। घटमत्स्यवृषायुग्म मेष कन्याः सवृश्चिकाः। तुलाचापकुलीराख्या मृगसंज्ञाश्च राशयः॥ चैत्रादौ राशिशून्याख्या वित्तवंशविनाशदाः॥

शून्यलग्नम् । न० दग्धलग्ने ॥ यथा । पञ्चादितस्त्वोजतिथौ घटेणौ मृगेन्द्रनक्रौ मिथुनाङ्गने च । चापेन्दुभे कर्कहरी हयान्त्यै गोन्त्यौ च नेष्टे तिथिशून्यलग्ने • तस्यां तस्यां तिथौ • द्वे द्वे लग्ने नेष्टे • निषिद्धे ॥

शून्यवादी । पुं० माध्यमिके । सौगते ॥ अस्य मतं यथा । विज्ञानं क्षणिकं नात्मा विद्युदभ्रनिमेषवत् । अनन्यस्यानुपलब्धत्वाच्छून्यं माध्यमिका जगुरिति । अस्यापवादो यथा । अभावो येन भावेन ज्ञायते शून्यवादिना तस्य भावस्य सद्भावो वादकेन निवार्यते ॥ अपि च । शून्यस्यापि हि शून्यत्वं तत्साक्षिणि सतोच्यते । असाक्षिकं चेत्तत्तत्सिद्धं साक्षिवत्स्यात् स्वयम्प्रभमिति ॥ शून्यं वदत्यवश्यम् । आवश्यके णिनिः ॥

शून्यवृत्तिः । स्त्री० अभाववृत्तौ ॥

शून्यशून्यः । त्रि० शून्यप्रकारे । अनर्थप्राये ॥ प्रकारे गुणवचनस्येति द्विर्भावः ॥

शून्या । स्त्री० नल्याम् ॥ तूलिकायाम् ॥ महाकण्टकिन्याम् । नागथूहर• नागफणाथूहर• इ• भा• ॥ वन्ध्यायाम् ॥

शून्यालयः । पुं० निर्जनमन्दिरे ॥

शूरः । पुं० भटे । वीरे युद्धकर्मण्युत्साहवति ॥ यादवे । वसुदेवस्य पितरि ॥ सूर्ये ॥ शूरवति । शूरवीरविक्रान्तौ । पचाद्यच् ॥ यद्वा । शवति । शुः सौत्रो गत्यर्थः । शुसिचिमीनां दीर्घश्चेति क्रन् ॥ सिंहे ॥ शूकरे ॥ कुक्कुरे ॥ चित्रकव्याघ्रे ॥ चित्रकवृक्षे ॥ साले ॥ उष्ट्रे । लकुचे ॥ मसूरे ॥ रगणे ऽ । ऽ ॥

शूरकः । पुं० कोकिलाक्षे ॥

शूरणः । पुं० अर्शोघ्ने । कन्दे ॥ अस्य गुणा यथा । शूरणो दीपनो रूक्षः कषायः कण्डुकृत्कटुः । विष्टम्भी विशदो रुच्यः कफार्शः कृन्तनो लघुः ॥ विशेषादर्शसे पथ्यः प्लीहगुल्मविनाशनः । सर्वेषां कन्दशाकानां शूरणः श्रेष्ठ उच्यते ॥ दद्रूणां रक्तपित्तानां कुष्ठानां न हितो हि सः । सन्धानयोगसम्प्राप्तः शूरणो गुणकृत्परः ॥ शूयते । शूरी हिंसायाम् । बहुलमन्यत्रापीति युच् । कर्त्तरि ल्युड्वा ॥

शूरणोद्भुजः । पुं० हरिद्रपक्षिणि ॥

शूरदेवः । पुं० भाव्यर्हद्विशेषे ॥

शूरसेनः । पुं० चन्द्रवंशीये नृपतिविशेषे ॥ शूराः सेना यस्य सः ॥ शूराणां सेना सा यस्यां सा ॥ पुं० भूम्नि० मथुरादेशेषु ॥

शूर्प्प : । पुं॰ द्रोणद्वयात्मकपरिमाणे ॥ पुं॰ न॰ प्रस्फोटने । सूप॰ इ॰ भा॰ ॥ शूर्पयति । शूर्प्प तेऽनेनवा । शूर्पमाने । पचाद्यच्॰ पुंसीति घोवा ॥ यद्वा । शृणाति । शॄ॰ । सुशॄभ्यांनिच्चेतिप : । बाहुलकादुत्वम्॰ रपरत्वम्॰ हलिचेतिदीर्घ : ॥ न॰ शोणितभाजने ॥

शूर्प्पक : । पुं॰ कामदेवारातावसुरविशेषे ।

शूर्प्पकर्ण : । पुं॰ गजे । नागे । गणेशे । विघ्नराजे ॥ शूर्पाविवकर्णौ यस्य ॥

शूर्प्पकाराति : ।
शूर्प्पकारि : । } पुं॰ कामदेवे ।

शूर्प्पणखा । स्त्री॰ रावणभगिन्याम् ॥ शूर्प्पाणीवनखानियस्या : । पूर्वपदात्संज्ञायामितिणत्वम् । नखमुखात्संज्ञायामितिनङीष् । केवलयौगिकत्वे तु ङीष् ॥

शूर्प्पणखी । स्त्री॰ रावणस्वसरि ॥ शूर्पेशोणितभाजनम्॰ नखविदूषयद्गतिधातु : । शूर्पेण॰ शोणितभाजनेनयज्ञादिक्रियानखयतिदूषयतीतिशूर्पणखी ॥ यद्वा । शूर्पाकाराणिनखानियस्या : साङीष् ।

शूर्प्पपर्णी । स्त्री॰ मुद्गपर्ण्याम् ॥

शूर्प्पवात : । पुं॰ सूर्पवायौ । फुल्लफाले ॥

शूर्प्पश्रुति : । पुं॰ हस्तिनि ॥ इ॰ हा॰ ली ॥

शूर्प्पी । स्त्री॰ शूर्पणखायाम् ॥ गौरादित्वान्ङीष् ॥ क्षुद्रसूर्पे ॥

शूर्म्म : । पुं॰
शूर्म्मि : । स्त्री॰
शूर्म्मिका । स्त्री॰
शूर्म्मी । } शूर्म्मिकायाम् । लौहप्रतिमायाम् ॥

शूल : । पुं॰ न॰ आयुधविशेषे वर्छा॰ भाला॰ इ॰ भा॰ प्र॰ । मृत्यौ ॥ केतने ॥ विष्कम्भादिषु नवमयोगे॰ तत्रजातस्यफलंयथा । भीतोदरिद्रोदयिताप्रियस्यशूलोद्भवः शूलकृतस्वधर्म्मो : । विद्याभवाभ्यां रहितोयशूलीकरोतिलोकेनहितं कदाचित् ॥ सुतीक्ष्णे ॥ वधहेतावय . कीलके ॥ व्यथायाम् ॥ विक्रेतव्ये ॥ यथा । अट्टशूलाजनपदा : शिवशूलाश्चतुष्पथा : । प्रमदाः केशशूलिन्योभविष्यन्तिकलौयुगे ॥ इतिमहाभारतेवादिपर्व ॥ रोगविशेषे ॥ अस्यदानादिकं भावप्रकाशे॰ शूलाधिकारेद्रष्टव्यम् ॥ रात्र्यह्नोरादिमध्यान्तेपुनस्त्वन्त्यादिमध्यत । मध्येचान्तेतथादौचदोषेनाल्पातिशूलकृत् ॥ भुक्तेजीर्यतिजीर्णेऽन्ने जीर्णेभुक्तेचजीर्यति । जीर्णेजीर्यतिभुक्ते दोषेनाल्पा

तिरुक्क्रमात् ॥ ‡ दोषैर्वातपित्तकफैः शूलरुक्शूलाख्योरोगः । रात्रिवासरयोर्दिनरात्र्योरादिमध्यान्तेषु भागेषु वातेनशूलरुक् नभवतिशमंप्राप्नोति । अल्पाभवति ईषत्प्रादुर्भवति । अतिभवतिअत्यन्तंभवति ।। रात्र्यह्नोरन्त्यादिमध्यतःअंत्यादिमध्येषु पित्तेनशूलरुक् नअल्पाअत्यन्तञ्चभवति ।। तयोरेवमध्येचान्त्ये चादौ चकफेनशूलरोगोनाल्पातिभवतीत्यर्थः । । भुक्तइति । अन्ने भुक्ते अभ्यवहृतेसतिजीर्यतिपाकंगच्छति : जीर्णे पाकंगतेअन्ने इति॰ सर्वत्रसम्बध्यते । तेनायमर्थः । भुक्ते अन्ने वातशूलरुक् नभवति शान्तोभवतीत्यर्थः : जीर्यतिच अल्पाभवति । जीर्णे चातिभवति ॥ पित्तशूलरुक् ॰जीर्णेऽन्नेन । भुक्तेऽल्पा । जीर्यतिअतिभवति श्लेष्मशूलरुक्जीर्णेऽन्नेन । जीर्यति अल्पा । भुक्तेऽतिभवति ॥ शूलति । शूलरुजायाम् । इगुपधेति कः ॥

शूलग्रन्थिः । स्त्री॰ मालादूर्वायाम् ॥
शूलघातनम् । न॰ मंडूरे ॥
शूलघ्नः । पुं॰ तुम्बुरुवृक्षे । तीक्ष्णफले ॥ त्रि॰ शूलघातके ॥
शूलद्विट् । पुं॰ हिङ्गुनि ॥
शूलधन्वा । पुं॰ शम्भौ । शिवे ॥

शूलधरः । पुं॰ शिवे ॥ त्रि॰ शूलधारिणि ॥
शूलधरा । स्त्री॰ दुर्गायाम् ॥
शूलधारी । पुं॰ शूलिनि ॥
शूलधारिणी स्त्री॰ दुर्गायाम् ॥
शूलधृक् । पुं॰ शिवे ॥ स्त्री॰ दुर्गायाम् ॥
शूलनाशनम् । न॰ सौवर्चलेलवणे ॥
शूलपत्री । स्त्री॰ गौडदेशेशूलीतिख्यातेतृणे ॥
शूलपाणिः । पुं॰ ईश्वरे । शिवे ॥ शूलंपाणौयस्यसः । प्रहरणार्थेभ्यः परेनिष्ठासप्तम्यौभवतः ॥
शूलप्रोतः । पुं॰ नरकविशेषे ॥
शूलभृत् । पुं॰ शङ्करे ॥
शूलशत्रुः । पुं॰ एरण्डवृक्षे ॥
शूलहन्त्री । स्त्री॰ यवान्याम् ॥
शूलहृत् । पुं॰ सूपधूपने । हिङ्गुनि ॥
शूला । स्त्री॰ पण्ययोषिति ॥ दुष्टवधार्थकीलके ॥
शूलाकृतम् । त्रि॰ शूलविद्धपक्वमांसादौ । भटित्रे । शूल्ये । शूला॰ डु॰ भा॰ प्र॰ ॥ शूलेनकृतम् । शूलात्पाकइतिडाच् ॥
शूलिकः । पुं॰ शशके ॥ न॰ शूल्ये अङ्गारपरिपाचितेमांसे ॥
शूली । पुं॰ शिवे । महेश्वरे ॥ यथा

। शूलं शूली चक्रमादाय चक्री पाशं पाशी वज्रमादाय वज्री धावत्यग्रे पृष्ठतः पार्श्वतो वा दुर्गां दुर्गाद्रिनो रक्षणाय ॥ त्रि० शूलरोगयुक्ते ॥ यथा । वर्जयेद्विदलं शूली कुष्ठी मांसं क्षयी स्त्रियमिति ॥ शूलमस्यास्ति । इनिः ॥

शूलिकः । पुं० भाण्डीरवृक्षे ॥

शूलिनी । स्त्री० दुर्गायाम् ॥

शूली । स्त्री० तृणप्रभेदे । शूलपत्याम् । धूम्रमूलिकायाम् ।

शूलोत्खा । स्त्री० सोमराज्याम् ॥

शूल्यम् । त्रि० शूलके । लौहशलाकया पक्वमांसे । शूलाकृते ॥ शूले संस्कृतं मांसम् । तत्र संस्कृतमित्यर्थे • शूलोखाद्यत् ॥ तत्पाकप्रकारो यथा । कालखण्डानि मांसानि ग्रथितानि शलाकया । घृतं सलवणं दत्त्वा निर्धूमे दहने पचेत् ॥ तत्तु शूल्यमिति प्रोक्तं पाककर्मविचक्षणैः । शूल्यं शल्यं सुधातुल्यं रुच्यं वह्निकरं लघु । कफवातहरं बल्यं किञ्चित्पित्तकरं हितम् ॥ अन्योऽपि । अङ्गारकर्परेऽभ्यासु शूल्यमन्ये पुटे यथा । भर्जनं विविधं प्रोक्तं सूपकारविशारदैः ॥ जलेन सेचयेत् पूर्वं प्रोतं शूलेऽन्तरान्तरम् । दद्यादार्द्रहिङ्गुलवणौ लिप्तं सङ्गारपाचितम् ॥ तच्छूल्यन्तु सुधातुल्यं रुच्यं वह्निप्रदं लघु । तदे

वाङ्गारसमन्तुप्रपक्वं वारशातनम् ॥

शूल्यकम् । त्रि० शूलविद्धपक्वमांसे । भट्टिः ॥ शूल्यमेव । कन् ॥

शृगालः । पुं० शिवायाम् । भूरिमाये । गोमायौ । मृगधूर्त्तके ॥ सियाल० इ० भा० ॥ सृजतिमायाम् । सृज० । बाहुलकात् कालन् । न्यङ्क्वादिः । पृषोदरादिः ॥ असृग्गालातिवा । पृषोदरादिः ॥ सृगं भिन्दिपालमनसालिवा । पूर्ववत् ॥ तालव्यादिः । तालव्यापिदन्त्याश्च शशस्वशस्वलशूकराः । रशनापि च जिह्वायां शृगालः कलशोऽपि चेति शब्दभेदात् ॥ दैत्यभेदे ॥ वासुदेवे ॥ खले ॥ निष्ठुरे ॥ भीरौ ॥

शृगालकण्टकः । पुं० सियालकांटा इ० भा० प्र० क्षुपे ॥

शृगालकोलिः । पुं० क्षुद्रबदर्याम् । गोपघोण्टायाम् । झडबेरो० इ० भा० ॥

शृगालघण्टी । स्त्री० कोकिलाक्षे ॥

शृगालजम्बूः । स्त्री० गोडिम्बे ॥ घोण्टाफले ॥

शृगालविन्ना । स्त्री० पृश्निपर्ण्याम् ॥

शृगालिका । स्त्री० शृगालयोषिति । शिवायाम् । लोमालिकायाम् । दीर्घजिह्वायाम् । लोमडी० इ० भा० प्र० ॥ भासात्पलायने । विद्रुतौ । भाजड० इ० भा० प्र० ॥

शृगाली । स्त्री० विद्रवे । डमरे । भीत्यापलायने ॥ कोकिलाक्षे ॥ विदार्याम् । सिराला० इ० भा० ॥

शृङ्खल: । त्रि० पुंस्कटीवस्त्रबन्धे । कोंधनी० इ० भा० प्र० ॥ पुंस्कटीभूषणे । तगडी० इ० भा० प्र० ॥ निगडे । पुरुषप्रचारनिरोधके । लौहरज्जौ । वेडी० इ० भा० प्र० ॥ बन्धने ॥ शृङ्गे : खलति । खल सञ्चये । अच् । पृषोदरादि: ॥

शृङ्खलक: । पुं० दारुविकारशृङ्खलाप्रायबन्धनयुक्ते० करभे । करभा: स्यु: शृङ्खलकादारवै: पादबन्धनैरित्यमर: । शृङ्खलं बन्धनमस्य । शृङ्खलमस्त्रबन्धनं करभं इति कन् उष्ट्रे ॥

शृङ्खला । स्त्री० पुंस्कटीवस्त्रबन्धे ॥ निगडे ॥ कपाटादिबन्धयोग्यवस्तुनि । सङ्कल० सांकर० इ० भा० प्र० ॥ परम्परायाम् । परिपाट्याम् ॥ शृङ्गं प्राधान्यं खलति । खल० । अन्तर्भावितण्यर्थ: । अच् । पृषोदरादि: ॥ शृङ्गात् प्राधान्यात् ० खलत्येन । पुंसोऽपि : । भिदाद्यङ् वा । पृषोदरादि: ॥ कोकिलाक्षे ॥

शृङ्गली । )
शृङ्गलोक्षा । ) स्त्री० कोकिलाक्षे ॥

शृङ्ग: । पुं० कूर्चशीर्षकवृक्षे । जीवकौषधौ । मुनिविशेषे ॥ न० प्रभुत्वे ॥ शिखरे । कूटे । पर्वतोपरिभागे ॥ चिह्ने । क्रीडाम्बुयन्त्रे ॥ विषाणे ॥ उत्कर्षे ॥ पर्वतसमभूभागे । सानौ ॥ महिषादिशृङ्गनिर्मितवाद्यविशेषे ॥ यथा । क्वचिद्विनाशायमनोदधद्व्रजात् प्रात: समुत्थायवयस्यवत्सपान् । प्रबोधयन् शृङ्गरवेणचारुणाविनिर्गतोवत्सपुरस्सरोहरि: ॥ शृणाति । शॄ० । शृणातेर्ह्रस्वश्चेति० गन्नुट् च ॥ कामोद्रेके ॥

शृङ्गक: । पुं० जीवकवृक्षे ॥ विषविशेषे ॥ परीक्षास्ययथा । यस्मिन् गोशृङ्गकेविद्धेदुग्धं भवतिलोहितम् । सशृङ्गकइतिप्रोक्तोद्रव्यतत्त्वविशारदैरिति ॥

शृङ्गकन्द: । पुं० शृङ्गाटके ॥

शृङ्गज: । त्रि० शृङ्गजाते ॥ न० अगुरौ ॥

शृङ्गमूल: । पुं० शृङ्गाटके ॥

शृङ्गरोही । पुं० चम्पके ॥

शृङ्गला । स्त्री० अजशृङ्ग्याम् ॥

शृङ्गवान् । पुं० इलावृतस्योत्तरवर्त्ति सहस्रयोजनविस्तीर्णे पूर्वतोदीर्घे कुरुवर्षमर्यादागिरौ ॥

शृङ्गवेरम् । न० आर्द्रके ॥ शुण्ठ्याम् ॥ शृङ्गमिववेरं शरीरमस्य ॥ राममित्रनिषादाधिपतेर्गुहस्य पुरे ॥

शृङ्गवेरकम् । न० आर्द्रके ॥
शृङ्गवेरपुरम् । न० तीर्थविशेषे ॥ श्च वरामेगङ्गामुत्तीर्य्य : ॥
शृङ्गवेराभमूलक : । पुं० गुन्द्रायाम् । गोंदपटेरा० इ० भा० प्र० ॥
शृङ्गाट : । पुं० अम्बुकण्टके खादुकण्टके ॥ कामाख्यादेशस्थे पर्वतविशेषे ॥ द्वीपवत्या : पूर्वतस्तुशृङ्गाटेनामपर्वत : ॥ न० चतुष्पथे ॥
शृङ्गाटक : । पुं० वारिकण्टके ॥
शृङ्गाटकम् । न० चतुष्पथे ॥ वारिकण्टके । सिँघाड़ा० इ० प्र० जलजलताफले ॥ गुणायथा । शृङ्गाटकंहिमंस्वादुगुरुवृष्यंकषायकम् । ग्राहिशुक्रानिलश्लेष्मप्रदंपित्तास्रदाहनुत् ॥ मांसशृङ्गाटके ॥ शृङ्गंप्राधान्यमटति । अट० । कर्मण्यण् । संज्ञायांकन् ॥
शृङ्गाटी । स्त्री० जीवन्त्याम् ॥
शृङ्गार : । पुं० सुरते ॥ गजभूषणे । राजमण्डने ॥ मण्डने ॥ नाट्यरसे ॥ तल्लक्षणंयथा । पुंस : स्त्रियां स्त्रिया : पुंसिसंयोगंप्रतियास्पृहास । शृङ्गारइतिख्यातोरतिक्रीडादिकारणम् ॥ अपिच । शृङ्गंहिमन्मथोद्भेदस्तदागमनहेतुक : । उत्तमप्रकृतिप्रायोरस : शृङ्गारइष्यते० इति ॥ शृङ्गमप्राधान्यमियर्ति । ऋ० । कर्मण्यण् । यद्वा । शृङ्गारम्भङ्गाराविति० शृणातेरारन्० नुम्० गुक्० ह्रस्वश्च ॥ न० लवङ्गे ॥ नागसम्भवे ॥ चूर्णे ॥ कालागुरुणि ॥
शृङ्गारक : । पुं० शृङ्गारे ॥ स्वार्थेक : ॥ न० सिन्दूरे ॥ त्रि० शृङ्गारति ॥ शृङ्गमस्त्यस्य । शृङ्गवन्द्वाभ्यामारकन् ॥
शृङ्गारभूषणम् । न० सिन्दूरे ॥
शृङ्गारयोनि : । पुं० कामदेवे ॥
शृङ्गारित : । त्रि० मण्डिते । अलङ्कृते । सिंगारा० इ० भा० ॥ शृङ्गारोमण्डनंसञ्जातमस्य । तारकादित्वादितच् ॥
शृङ्गारी । पुं० गजे । द्विपे ॥ पूगे । क्रमुके ॥ पद्मरागे । माणिक्ये ॥ त्रि० सशृङ्गारे ॥ सुवेषे ॥ शृङ्गारोस्त्यस्मिन्नर्थे । अतइनिठनाविति० इनि : ॥
शृङ्गि : । स्त्री० मत्स्यविशेषे । शृङ्ग्याम् ॥
शृङ्गिक : । पुं० न० विषभेदे ॥
शृङ्गिका । स्त्री० अतिविषायाम् ॥
शृङ्गिण : । पुं० मेषे ॥ शृङ्गमस्त्यस्य । ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः इति० शृङ्गादिनच् निपात्यते ॥
शृङ्गिणी । स्त्री० माहिष्याम् । सौरभेय्याम् । गवि ॥ शृङ्गमस्त्यस्या : । अतइनि : ॥

शृङ्गी । पुं॰ नागे । हस्तिनि । वृक्षे ॥ पर्वते ॥ वर्षपर्वतविशेषे ॥ शमीकर्षितनये ॥ वटे ॥ प्रलयाम्भसि शृङ्गवतिमत्स्यविशेषस्वरूपेश्वरौ ॥ अतिशय : शृङ्गी स्त्यस्य । इनिः ॥ त्रि॰ शृङ्गयुक्ते ॥

शृङ्गी । स्त्री॰ विषायाम् । अतिविषायाम् ॥ कुण्डलादिभूषणानां स्वर्णे । मीनविशेषे । मद्गुरस्त्रियाम् । सींगीमछ्ली॰ इ॰ भा॰ प्र॰ ॥ अस्या गुणा यथा । शृङ्गीतु वातश्लेष्मघ्नी स्निग्धाम्लपित्तकोपनी । रसे तिक्ता कषाया च बल्या वीरुच्छ्यास्मृत बुधैरिति ॥ ऋषभौषधे । जीवकौषधे ॥ अजशृङ्ग्याम् । यथा गुणाः । शृङ्गीकषायातिक्तोष्णा कफवातक्षयज्वरान् । श्वासोर्द्ध्ववाततृट्कासहिक्कारुचिवमीर्हरेत् ॥ शृणाति । शॄ॰ । शृणातेर्ह्रस्वश्चेति॰ गन्॰ ह्रस्वत्वं॰ नुडागमश्च । पुंयोगादिति॰ जातेरितिवा ङीष् । गौरादित्वाद्वा ॥

शृङ्गीकनकम् । न॰ कुण्डलोज्ज्वलस्वर्णे ॥ शृङ्गिणामीश॰ शृङ्गीकनति । कनीदीप्तौ । कुन् ।

शृणि : । पुं॰ स्त्री॰ अङ्कुशे । आंकस॰ इ॰ भा॰ प्र॰ ॥ शृणाति । शृ॰ । शृणातेर्बाहुलकात्सिर्निरिति कश्चित् ॥ दन्त्यादिरेवसाधुः ॥

शृत : । त्रि॰ क्षीरहविषोः पाके ॥ श्रायतेस्म । श्रापाके । शृतं पाके॰ इतिसाधुः । अनेनश्रातिश्रायत्योरद्भ्यादिभ्यां क्षीरकर्मकत्वात्कर्तरिक्ते शृभावो निपात्यते॰ क्षीरहविषोः पाके । यथा॰ शृतं क्षीरं॰ स्वयमेव विक्लिन्नं पक्वं वेत्यर्थः । शृतं हविः स्वयमेव ॥ क्षीराज्यपयसां पाके ॥ क्वथिते ॥ इतिरत्नमालाशब्दचन्द्रिकात्र ॥ यथा । जलजलजजलवाहवेगाविश्वौषधशिशिरैः शिशिरं जलं शृतंयदितिसोलिम्मराज : ॥

शृदर : । पुं॰ भुजङ्गमे ॥ शृणाति । शॄ॰ । कृदरादयश्चेत्यदरप्रत्ययान्तो निपातित : ॥

शृधु : । पुं॰ गुदे । शर्द्धते । शृधुशब्दकुत्सायाम् । नृतिशृध्योः कुः ॥

शेखर : । पुं॰ आपीडे । शिखाविन्यस्तमालायाम् ॥ शिरोभूषणे ॥ न॰ लवङ्गे ॥ शिग्रुमूले ॥ शिङ्खति । शिखिगतौ । बाहुलकादरः । आगमशास्त्रस्यानित्यत्वान्ननुम् ॥ पञ्चमांशिकस्यपञ्चमेप्रभेदे॰ । ५०।०४

शेखरित : । त्रि॰ मुकुटवत्कृते ॥

शेखरी । स्त्री॰ वन्दायाम् ॥

शेप : । पुं॰ शिश्ने । शेफसि ॥ शेते रेतः यातो । शीङ्स्वप्ने । बाहुलकात्पप्रत्ययः ॥

शेप : । न॰ शिश्ने ॥ शेतेरेतः पातो ।

वङ्शीङ्भ्यांरूपसागमौ : फुट्चेत्यसुन् ॥

शेपाल : । पुं॰ न॰ शैवाले ॥ इ॰ श॰ र॰ लौ ॥

शेफ : । पुं॰ मेढ्रे । शिश्ने ॥ शेते रेत : पातानन्तरम् । बाहुलकात् फप्रत्यय : ॥

शेफ : । पुं॰ मेढ्रे । शिश्ने ॥ शेतेरेत : पाते । शीङ्॰ । वङ्शीङ्भ्यांरूपसांगयो : फुट्चेत्यसुन् । चत्रपक्षेऽद्वितीयेप्यागमे ॥

शेफसी । स्त्री॰ शिश्ने ॥

शेफालि : । स्त्री॰ शेफालिकायाम् ॥

शेफालिका । स्त्री॰ सुवहायाम् । निर्गुण्डाम् ॥ नीलिकायाम् । हारशृङ्गार॰ पारिजाता॰ इ॰ भा॰ प्र॰ पुष्पवृक्षे । शितली॰ गौ॰ दे॰ भा॰ प्र॰ ॥ चत्वारि शेफालिकामात्रे । शियलीतिख्याततनीलपुष्पायांशेफालिकायामिति केचित् । शेफालिकाद्दिद्वयंशेफालिकामात्रे॰ निर्गुण्ड्यादिद्वयंनीलपुष्पशेफालिकायामितिकेचित् । न्यबारीतिख्यातेपुष्पविशेषे॰ इतिचान्ये ॥ शब्दरत्नावल्युक्ता : पर्यायास्तु । शेफाली॰ मल्लिका॰ रजनीहासा॰ निशिपुष्पिका॰ सा शुक्ला चेत्॰ श्वेतसुरसा॰ भूतवेशीति ॥ राजनिघण्टोक्तास्तु । शुक्लाङ्गीशीतमञ्जरी॰ विजया॰ वातारि:॰ भूतकेशीति ॥ शेतेइ तिशे : ॰ शीङोविच् । शयंफालयति । विफलाविशरणे । अण् । स्वार्थेकन्कृत्वा ॥ शेफालिकाया : पुष्पम् ॥ शेफालिका । पुष्पमूलिषुवहुलमिति॰ चनुदात्तादेरञोऽचाञ्लुप् । लुपियुक्तवत् ॥ शेरतेशेफाअलयोऽस्याम् । वा । ङीष् । सुर्वेकन् ॥

शेफाली । स्त्री॰ निर्गुण्डाम् । शेफालिकायाम् । न्यबारीतिख्यातेपुष्पवृक्षे । हारशृङ्गार॰ इ॰ च॰ भा॰ प्र॰ ॥ शेरतेशेफाअलयोऽस्याम् । वाङीष् ॥ नीलसिन्दुवारे । संभालू॰ इ॰ भा॰ ॥

शेमुषी । स्त्री॰ बुद्धौ । प्रज्ञायाम् । मतौ ॥ शेतेइतिशे : । शीङोविच् । शे :॰ मोह :॰ तंमुष्णातीति॰ शेमुषी । मुषस्तेये । मूलविभुजादित्वात्क : । गौरादित्वात्ङीष् ॥

शेयाल : । पुं॰ जलनील्याम् । शैवले । जलेशेते॰ तिष्ठति । शीङो वालन् ॥ बाहुलकादस्यय : ॥

शेलु : । पुं॰ श्लेष्मातकी । बहुवारके । लसोडा इ॰ भा॰ प्र॰ ॥ शिलति । शिल॰ । बाहुलकादु: ॥

शेव : । पुं॰ चण्डे ॥ शिश्ने ॥ त्रि॰ उन्नते ॥ शेते । इणशीभ्यां

शैवावस्था । स्त्री॰ वार्द्धक्ये ॥

शैथित : । त्रि॰ उर्वरिते ॥

शैच : । पुं॰ प्रथमारब्धवेदे । प्राथमकल्पिके ॥ शिक्षामधीते । तद्वेत्तद्धीत इत्यण् ॥ शिक्षायाश्चयम्॰ तत्र भवोवा ॥ यद्वा । शिक्षांलभते । शैक्षत्यण् ॥ यद्वा । शिक्षाशीलमस्य । छत्रादिभ्योण् ॥

शैख : । पुं॰ सङ्कीर्णजातिविशेषे । । भूर्जकण्टके ॥

शैखरिक : । पुं॰ अपामार्गे ॥ शिखरेप्रायेणभवति । अध्यात्मादित्वाट्ठञ् ॥

शैखरेय : । पुं॰ अपामार्गे ॥

शैत्यम् । न॰ शीतत्वे ॥ भावेष्यञ् ॥ शैत्यं हियत्सा प्रकृतिर्जलस्य ॥

शैथिल्यम् । न॰ शिथिलतायाम् ॥ अनुद्यमे ॥ भावेष्यञ् ॥

शैनेय : । पुं॰ शिनेर्नप्तरि । सात्यकौ । श्रीकृष्णसारथौ ॥ शिनेर्गोत्रापत्यम् । इतश्चानिञइतिढक् ॥

शैर्षच्छेदिक : । त्रि॰ शीर्षच्छेद्ये ॥ शिरच्छेदंनित्यमर्हति । शीर्षच्छेदाद्यच्चेतिठञ्॰ प्रत्यययोगेनशिरस : शीर्षभावश्च ॥

शैल : । पुं॰ महीध्रे । अचले । शिलोच्चये ॥ प्रचुरा : शिला : सन्त्यत्र । ज्योत्स्नादित्वादण् ॥ न॰ शैलेये ॥ तार्क्ष्यशैले । रसाञ्जने ॥ शिलाजतुनि ॥

शैलकम् । न॰ शैलजे ॥

शैलगन्धम् । न॰ शाबरचन्दने ॥

शैलगर्भा । स्त्री॰ शिलावल्कायाम् ॥

शैलगर्भाह्वा । स्त्री॰ शिलावल्कायाम् ॥ इ॰ रा॰ नि॰ गण : ॥

शैलजम् । न॰ शैलेये । सुगन्धिद्रव्यविशेषे ॥ शैलेजातम् । जनौ॰ । सप्तम्यांजनेर्ड : ॥ त्रि॰ पर्वतोत्पन्नेवस्तुनि ॥

शैलजा । स्त्री॰ गिरिजायाम् । पार्वत्याम् ॥ शैलाज्जाता । जनौ॰ । पञ्चम्यामितिड : ॥ गजपिप्पल्याम् ॥ सैंहल्याम् ॥

शैलधन्वा । पुं॰ शम्भौ । शिवे ॥ इ॰ त्रि॰ शेष : ॥

शैलधर : । पुं॰ गिरिधरे । श्रीकृष्णे ॥ इतिधनञ्जय : ॥

शैलधातुजम् । न॰ शिलाजतुनि ॥

शैलनिर्यास : । पुं॰ अश्मजे । शिलाजतुनि ॥ शैलस्यनिर्यासइव ॥

शैलपत्र : । पुं॰ बिल्ववृक्षे ॥

शैलपीलु : । पुं॰ अक्षोटे ॥

शैलभित्ति : । स्त्री॰ टङ्के ॥

शैलराज : । पुं॰ मेरुपर्वते ॥ हिमालये ॥ शैलानांराजा । टच् ॥

शैलराजतनया । स्त्री॰ पार्वत्याम् ॥

शैलराजसुता । स्त्री॰ पार्वत्याम् ।

दुर्गायाम् ॥ यथा । स्वरूपापर भावत्वाद्दुरूपा क्रियात्मिका । आताशैलेन्द्रगेहे सा शैलराजसुतात-त: ॥ इति देवीपुराणे ४५ अ० ॥

शैलवल्कला । स्त्री० शिलावल्कलायाम् ॥

शैलबीज: । पुं० भल्लातकवृक्षे ॥

शैलशिविरम् । न० वार्द्धौ । धरणीध्रे । समुद्रे ॥

शैलसुता । स्त्री० अम्बिकायाम् । पार्वत्याम् ॥ ज्योतिष्मत्याम् ॥

शैलाख्यम् । न० शैलजे ॥

शैलाग्रम् । न० शिखरे । शैलशृङ्गे ॥

शैलाजम् । न० शैलेये ॥ इ० रा० शट: ॥

शैलाट: । पुं० देवले ॥ सिंहे ॥ शुक्लकाचे ॥ किराते ॥ इ० मे० कर: ॥

शैलादि: । पुं० नन्दिनि । शिवगणविशेषे ॥

शैलापगा । स्त्री० क्षुद्रनद्याम् ॥

शैलाली । पुं० नटे ॥ शिलालिना प्रोक्तं नटसूत्रमधीते । पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोरिति णिनि: ॥

शैलिक्य: । पुं० सर्वलिङ्गिनि ॥ शिलिकस्य भाव: कर्मवा ष्यञ् ॥

शैली । स्त्री० सङ्केते ॥ प्रत्यभि: परिभाषा शैली सङ्केतसमयव्यवहारा-र्थ इति चिकाण्डशेष: ॥ समवधानपूर्विकार्यप्रवृत्तौ ॥ यथा ब्राह्मणै: सह ब्राह्मणा भोज्यन्ते ऋषिभि: सह ऋषिय इति ॥ शीलमेव । ष्यञ् ङीप् ॥

शैलूष: । पुं० बिल्वे । तालूरवृक्षे ॥ नटे ॥ शिलूषस्यापत्यम् । अण् । शैलूषइवेति० नानरूपत्वात् ॥

शैलूषिक: । पुं० नटवृत्त्यन्वेषिणि ॥

शैलूषिकी । स्त्री० शैलूषिकजातिस्त्रियाम् ॥

शैलेन्द्र: । पुं० हिमाचले ॥

शैलेन्द्रस्थ: । पुं० भूर्जवृक्षे ॥

शैलेय: । पुं० मधुपे । भ्रमरे ॥ सिंहे. न० तालपर्ण्याम् । सैन्धवे । शैलजे शैलजातगन्धद्रव्ये । छरीला० इ० भा० प्र० ॥ अस्य पर्यायादयो यथा । शैलेयन्तु शिलापुष्पं वृद्धं कालानुसार्यकम् ॥ शैलेयं शीतलं हृद्यं कफपित्तहरं लघु । कण्डूकुष्ठाश्मरीदाहविषहृद्गुदरक्तहृदिति ॥ त्रि० शिलातुल्ये ॥ शिलायामुत्पन्ने ॥ शिलायां भव: । नद्यादिभ्यश्चेति ढक् ॥ शिलेव । शिलाया इति योगविभागेन ढञ् वा ॥ ङीपि शैलेयी ॥

शैलेयी । स्त्री० पार्वत्याम् ॥

शैलोदा । स्त्री० निम्नगान्तरे ॥

शैलोद्भवा । स्त्री० क्षुद्रपाषाणभेदायाम् ॥ अम्बिकायाम् ॥

शैव: । त्रि० शिवोपासके । औष्ठ्यौतसिके ॥ न० शिवप्रोक्ते मार्गे ॥ यथा । नपादुकापरोमन्त्रो नदेव: श्रीगुरो: पर: । नहि शैवात्परोमार्गोनपुण्यंकुलपूजनात् ॥ आचारविशेषे ॥ यथा । अष्टाङ्गयोगसंयुक्तोयत्रोद्दिष्टोविधानत: यावद्ध्यानंसमाधिस्थतावच्छैव: प्रचक्ष्यते ॥ विवाहविशेषे ॥ यथा । शैवोविवाहोद्विविध: कुलचक्रे विधीयते । चक्रस्यनियमेनैकोद्वितीयोजीवनावधि: ॥ अपिच । परिणीतानरमिताकन्या वाविधवाभवेत् ॥ साप्युद्वाह्यापुन: पित्राशैवधर्म्मेष्वयंविधि: ॥ शिवस्यायम् । तस्येदमित्यण् ॥ शिवे ॥ स्वार्थेऽण् ॥ वसुके । वकवृक्षे ॥ धत्तूरे ॥ देशविशेषे ॥ शिवीनांविषयोदेश: । विषयोदेशइत्यण् ॥ न० शिवपुराणे ॥ शैवाले ॥ त्रि० शिवसंबन्धिनि ॥

शैवल: पुं० शैवाले ॥ न० पद्मकाष्ठे ॥ जलेशेतेतिष्ठति । शीङो धुक्लुकृवलञ्वालनङ्इतिवलच् ॥

शैवावधूत: । पुं० अवधूतविशेषे ॥ सचोक्त: श्रीमहानिर्वाणेसदाशिवेन । पूर्णाभिषेकविधिनासंस्कृतायेचमानवा: । शैवावधूतास्तेज्ञेया: पूजनीया: कुलार्च्चितैरिति ॥

शैवलिनी । स्त्री० तरङ्गिण्याम् ॥ तटिन्याम् । नद्याम् ॥ शैवलमस्त्यस्याम् । अतइनिठनावितीनि: । ऋन्नेभ्योङीप् ॥

शैवालम् । न० जलनील्याम् । शैवाले ॥ शैवालंतुवरंतिक्तंमधुरंशीतलंलघु । स्निग्धंदाहतृषापित्तरक्तज्वरहरंपरम् ॥

शैवालिनी । स्त्री० नद्याम् ॥

शैवी । स्त्री० शैवविवाहेनोद्वाहितायाम् ॥

शैव्य: । पुं० श्रीकृष्णरथस्याश्वविशेषे ॥ यथा । तुरगा: शैव्यसुग्रीवमेघपुष्पवलाहका: ॥ पाण्डवानांसेनापतिविशेषे ॥

शैशवम् । न० शिशुत्वे । बाल्ये ॥ शिशोर्भाव: कर्म्मवा । इगन्ताञ्चलघुपूर्व्वादित्यण् ॥

शैशिर: । पुं० श्यामचटके ॥ दन्तरोगविशेषे ॥ त्रि० शिशिरसम्बन्धिनि ॥

शैशुमारम् । न० शिशुमाराकारे ज्योतिश्चक्रे ॥

शोक: । पुं० मन्यौ । शुचि । व्या

कुलतायाम् । इष्टवियोगानुचिन्तने । इष्टवियोगनिमित्तेमनसः सन्तापे । इष्टवियोगेनलाभानर्हताज्ञाने ॥ सत्वानुचिन्तनम्० यतः । शोचमानास्तुसन्धेक्षाबान्धवाः : सुहृदस्तथा । पातयन्तिगतंस्वर्गाद् शुपातेनराघव ॥ भूरिद्युम्नोगत : स्वर्गंपुण्येनपतितः पु म : । शोचितोवन्धुवर्गैस्तस्मात्तत्त्वंपरित्यज ॥ इतिवह्निपुराणे रामंप्रतिवशिष्ठोक्तिः ॥ विवेकिनांचित्ततुनास्त्येवशोकावकाश : । यतः । पान्थानामिववर्त्मनि० क्षितिरुहांनद्यामिव० भ्राम्यतां० मेघानामिवपुष्करे० जलनिधौसांयात्रिकाणामिव । संयोगः पितृमातृबन्धुतनयभ्रातृप्रियाणांयदासिद्धौ० दूरवियोगएव० विदुषांशोकोदयः कस्तदा ॥ शोचनम् । शुचशोके । घञ् ॥ संसारे ॥ स्वसंसृष्टंपुरुषंशोचयतीतिशोकस्तस्मैमूलः संसारः । उक्तञ्चश्रीविद्यारण्यगुरुभिः । शोकंतरतिचात्मविदिति ॥

शोकनाशन : । पुं० अशोकवृक्षे ॥ शोकंनाशयति । णशअदर्शने । नन्द्यादित्वाल्ल्युः ॥ परमात्मनि ॥ स्वाभेदसाक्षात्कारेणसंसारिणां संसारशोकंनाशयति ॥

शोकहारी । पुं० वनवर्बरिकायाम् ॥

शोकातिग : । त्रि० मानसैदुःखैर्वर्जिते ॥ शोकमतीत्यगच्छतीतितथा ॥

शोकापनुद : । पुं० पुत्रे । शोकमपनुदति । णुदप्रेरणे । तुन्दशोकयोः परिमृजापनुदोरितिसुखस्याहरणे क : ॥

शोकारि : । पुं० कदम्बवृक्षे ॥

शोकार्त्त : त्रि० शोकाकुले ॥

शोचनम् । न० शुचि । शौचे ॥ त्रि० शोकशीले । शोचति० तच्छील : । शुचशोके । जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः । इतियुच् ॥

शोचना । स्त्री० शोकोत्पादनायाम् ॥

शोचनीय : । त्रि० शोच्ये । शोचितुं योग्ये । यथा । बाल्यभावेनपठन्ति विद्यांयेयौवनस्थाश्चधनानदाराः : । तेशोचनीयाइहजीवलोकेमनुष्यरूपेणमृगाश्चरन्तीति ॥

शोचिष्केश : । पुं० अग्नौ । वह्नौ ॥ शोचींषिज्वालाः केशाइवास्य । नित्यंसमासेऽनुत्तरपदस्थस्येतिषत्वम् । चित्रकवृक्षे ॥

शोचिः । न० रोचिषि । प्रभायाम् ॥ शुच्यति० पूतीभवत्यनेन । शु शुचिरपूतीभावे । अर्चिशुचिहुसृपिछादिछर्दिभ्यः इसि : ॥

शोच्य: । त्रि० तपस्विनि । सापराधे ॥

अनुकम्प्य ॥

शोच्यकः । त्रि॰ क्षुद्रे ॥

शोठः । त्रि॰ मूर्खे ॥ अलसे ॥ धूर्ते । नीचे ॥ पापरते ॥

शोणः । पुं॰ कृशानौ । अग्नौ श्योनाके ॥ लोहिताश्वे ॥ नदविशेषे । हिरण्यवाही ॥ योयममरकण्टकदेशात् पाटलिपुत्रे गङ्गायां मिलितः ॥ समुद्रविशेषे ॥ रक्ताब्धौ ॥ लवणाम्बुधेः पारस्थे रक्तजलेऽगाधेशीघ्रगामिनिप्रसिद्धोपान्तवर्त्तिनि नदविशेषे ॥ अनुत्कटरक्ते । कोकनदवर्णे ॥ श्योनाकप्रभेदे ॥ न॰ सिन्दूरे ॥ रुधिरे ॥ त्रि॰ कोकनदच्छाये । कोकनदवर्णवति ॥ शोणति । शोणुवर्णगत्योः । पचाद्यच् ॥ रक्तवर्णे ॥

शोणकः । पुं॰ श्योनाकतरौ । सोनापाठा॰ इ॰ भा॰ प्र॰ ॥ स्वार्थे कः ॥

शोणज्योतीरथीसङ्गमः । पुं॰ तीर्थविशेषे ॥

शोणझिण्टिका । स्त्री॰ रक्तसैरेये ॥

शोणझिण्टी । स्त्री॰ कुरुवके ॥ कण्टकिन्याम् ॥

शोणपत्रः । पुं॰ रक्तपुनर्नवायाम् ॥

शोणपद्मम् । } न॰ } रक्तपद्मे ॥
शोणपद्मकम् । }

शोणपुष्पः । } पुं॰ } कुद्दाले ।
शोणपुष्पकः । }

कोविदारे ॥ शोणानि॰ तद्वर्णानि पुष्पाण्यस्य ॥

शोणपुष्पी । स्त्री॰ सिन्दूरपुष्प्याम् ॥

शोणप्रभवः । पुं॰ तीर्थविशेषे ॥

शोणरत्नम् । न॰ पद्मरागमणौ ॥ माणिक्ये ॥ शोणञ्चतद्रत्नञ्च ।

शोणा । स्त्री॰ शोणवर्णयुक्तायाम् । शोण्याम् ॥ शोणात् प्राचामित्यन्येषां मते टाप् ॥

शोणाकः । पुं॰ श्योनाकवृक्षे । शुकनासे ।

शोणितम् । न॰ रुधिरे । रक्ते ॥ कुङ्कुमे ॥ शोणतिस्म । शोणु॰ । गत्यर्थेति क्तः ॥

शोणितचन्दनम् । न॰ रक्तचन्दने ॥

शोणितपुरम् । न॰ वाणासुरपुरे सराहण॰ इ॰ भा॰ प्र॰ । शोणितसंज्ञकं पुरम् ॥

शोणितह्वम् । न॰ कुङ्कुमे ॥

शोणितोत्पलम् । न॰ रक्तोत्पले ॥

शोणी । स्त्री॰ रक्तायाम् । रक्तोत्पलवर्णायाम् स्त्रियाम् । शोणात् प्राचामिति वा ङीप् ॥

शोणोपलः । पुं॰ माणिक्ये ॥

शोथः । पुं॰ शोफे । श्वयथौ, त्वग्विवर्द्धने ॥ शवति । शवगतौ । बाहुलकात्॰ थः । च्छ्वोरित्यूठ् ।

घाहुणः । संज्ञापूर्वकत्वादेत्वे धत्वठ्खितिमदृद्धिः यद्वा । शव ति । शुगतौ । पूर्ववत्‌ । थः । ऊर्द्धगामीनरंध्रद्वयामधोगामीमुखा त् स्रिथम । उभयोर्वस्तिसन्धात्‌ : श्रोणि इतिनसंशयः ॥

शोथकः । पुं० शोथे ॥

शोथकृत्‌ । त्रि० शोफकारिणि ॥

शोथघ्नः । त्रि० शोथनाशके ॥

शोथघ्नी । स्त्री० रक्तपुनर्नवायाम्‌ ॥ पुनर्नवायाम्‌ ॥ शोथं हन्ति । घ अमनुष्यकर्तृकेचेतिटक्‌ । ङी प्‌ ॥ शालपर्ण्याम्‌ ॥

शोथजित्‌ । पुं० भल्लातके ॥ पुनर्नवा याम्‌ ॥ त्रि० शोफहारके ॥

शोथहृत्‌ । पुं० भल्लातके ॥

शोधः । पुं० शोधने ॥

शोधकः । त्रि० शुद्धिकारके ॥ न० कतके ॥

शोधनः । पुं० निम्बे ॥ निम्बूके ॥ न० शुद्धौ । शोधे ॥ मलापनयने ॥ विष्ठायाम्‌ ॥ काशीसे ॥ धा तुनिर्दोषीकरणे ॥ अपामार्गरिक्त करणे ॥ लिखितपत्रादेः प्रमाणी करणे ॥ विरुद्धलिखितशुद्ध्‌ धीकरणे ॥ ऋणशोधने । त्रि० शुद्धिसाधने । शुद्धिकारके ॥

शोधनी । स्त्री० सम्मार्जन्याम्‌ । सी० हली० चु० भा० ॥ शोध्यतेऽनया

। शुधशौचे । करणेल्युट्‌ । ङीप्‌ ॥ ताम्रवल्ल्याम्‌ ॥ नील्याम्‌ ॥

शोधनीयः । त्रि० शोधितव्ये । शो ध्ये ॥

शोधनीबीजम्‌ । न० जयपाले । म लद्रावणि ॥

शोधितः । त्रि० सम्मृष्टे । मक्षिका द्यपनयनेनकृतशोधनेव्यञ्जनादौ ॥ यथा । व्यञ्जने केशकीटादियुक्ते स म्मृष्टशोधितेइतिशब्दरत्नावली । अ पनीतमले । निर्णिक्ते । मृष्टे । धौते ॥ शोध्यतेस्म । शुध० । व्य क्तः कर्त्तरिक्तः ॥

शोफः । पुं० शोथे ॥ श्वयति । श्व० । बाहुलकात्‌फः । ऊठित्यूठ् । घाहुणः । संज्ञापूर्वकत्वादेत्वे धत्वठ्खितिमदृद्धिः ॥ यद्वाशवति । शु० । पूर्ववत्‌फः ॥

शोफकृत्‌ । त्रि० शोथकृति ॥

शोफघ्नी । स्त्री० रक्तपुनर्नवायाम्‌ ॥ शालपर्ण्याम्‌ ॥

शोफनाशनः । पुं० नीलवृक्षे ॥ त्रि० शोथनाशके ॥

शोफहृत्‌ । पुं० भल्लातके ॥ त्रि० शोथहारके ॥

शोभनः । पुं० ग्रहे ॥ विष्कम्भादि द्विषुपञ्चमेयोगे ॥ तत्रजातफलं यथा । स्याच्छोभनः शोभनयोगजन्मादक्षोविपक्षप्रतिलब्धवित्तः ।

सदुत्तर श्चारुवपुः सुधीरम. सम्मानयुक्तामनुज : प्रवीण : ॥ शोभनकृतिवत्सरे ॥ तत्फलं यथा । सुभिक्षं क्षेमसारोग्यं हृष्टा गोब्राह्मणाः प्रिये । सुस्थिताः शोभने वर्षे प्रजाः सर्वाः सुलोचने ॥ ३७ ॥ न० वारिजे । पद्मे ॥ त्रि० सुन्दरे । सुषमे । मनो...... ॥ भते । शुभदीप्तौ । अनुदात्त तद्यात्मयुच् । शोभयति । नन्द्यादित्वा ......॥

शोभनकः । पुं० शिग्रौ ।

शोभनकृत् । पुं० शोभनेवर्षे ॥ त्रि० शोभनकारके ॥

शोभना । स्त्री० गोरोचनायाम् । हरिद्रायाम् ॥ इ० रा० वट ।

शोभनीय: । त्रि० शोभितव्ये ॥

शोभमान : । त्रि० विराजमाने ॥ यथा । मणि : शाणोल्लीढ • समरविजयी हेतिदलितो • मदक्षीणोनाग : शरदिसरित : श्यानपुलिना : । कलाशेषश्चन्द्र : सुरतमृदिताबालवनितातनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाइति ॥

शोभा । स्त्री० कान्तौ । द्युतौ ॥ तल्लक्षणं यथा । साशोभारूप भोगाद्यैर्यत्स्यादङ्गविभूषणम् । शोभैवकान्तिराख्याता मन्मथाप्यायनोज्ज्वलेति । इच्छायाम् ॥ गोपीविशेषे ॥ गोरोचनायाम् ॥ हरिद्रायाम् ॥ कृतिच्छन्द : २० प्रभेदे ॥ यथा । रसाश्वाश्वै : शोभानयुगलजठरामेघविस्फूर्जिता चेत् ॥ यथा । सपीयूषैरिन्दीवरकृत्तुल्यजलतरलकिसलयाश्रिस्निग्धशाखा ...... यामप्राशोभामौलेर्मिलदलिपटलै : कृष्णसाकापिवल्ली ॥ शोभते । शुभशुम्भशोभायाम् । पचाद्यच् ॥

शोभाञ्जन : । पुं० शिग्रौ । तीक्ष्णगन्धके । अक्षीवे । मोचके । सहिजनो० संभना० इ० भा० प्र० ॥ शोभाञ्जन : कटुस्तीक्ष्ण : शोथविद्रधिगुल्मनुत् ॥ शोभामनक्ति । अञ्जूव्यक्तिम्रक्षणकान्तिगतिषु । कर्त्तरिल्युट् । बहुलमन्यत्रापीतियुच्वा ॥

शोभित : । त्रि० शोभायुक्ते ॥

शोभनी । स्त्री० शोभनीयायाम् ॥

शोली । स्त्री० वनहरिद्रायाम् ॥

शोष : । पुं० शोषणं ॥ यक्ष्मणि ॥ संशोषणाद्रसादीनां शोषइत्यभिधीयते ॥ अस्यौषधं यथा । वचा त्रिकटुकं दन्ती वकारक्षं देवदारु च । मञ्जिष्ठा त्रिफला श्वेता शिरीषो रज-

नीहयम् ॥ प्रियङ्गुनिम्बविकट, गोमूत्रेणावघर्षितम् । नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा ॥ ज्वरस्मारविषोन्मादशोषालक्ष्मीज्वरापहम् । भूतेभ्यश्चभयंहन्तिराजद्वारेचशासनमिति ॥ रवेः पार्श्वगे ॥ शोषयति । शुषशोषणे पचाद्यच् ॥

शोषकः । त्रि॰ शोषणकर्त्तरि ॥

शोषणः । पुं॰ कामास्त्रविशेषे ॥ श्योनाके ॥ न॰ रसाकर्षणे । रसादाने । शोषे ॥ त्रि॰ शोषके ॥

शोषसम्भवम् । न॰ पिप्पलीमूले ॥

शोषापहा । स्त्री॰ क्षीतनके ॥

शोषितः । त्रि॰ जारिते ॥ यथा । समुद्रः शोषितो येन तमगस्तिं नमाम्यहम् ॥

शौकम् । न॰ शुकगणे ॥ शुकानां समूहः । खण्डिकादित्वादञ् ॥ शुकस्यावयवो विकारो वा । प्राणिरजतादिभ्योऽञ् ॥ स्त्रीणां करणान्तरे ॥

शौकरम् । )
शौकरवम् । ) न॰ तीर्थविशेषे ॥

शौक्तिकम् । )
शौक्तिकेयम् । न॰ ) मुक्तायाम् ।
शौक्तेयम् । )

मौक्तिके । शुक्तिसम्भवे ॥

शौक्लाम् । न॰ शुक्लतायाम् ॥

शौङ्गः । पुं॰ भारद्वाजे ॥ शुङ्गस्यापत्यम् । विकर्णशुङ्गेत्यादिनाऽण् ॥

शौचम् । न॰ बाह्याभ्यन्तरभेदभिन्ने पावित्र्यजनककर्मणि । शुचितायाम् । तदुक्तं श्रीमहानिर्वाणतन्त्रे । शौचन्तु द्विविधं देवि बाह्याभ्यन्तरभेदतः । ब्रह्मण्यात्मार्पणं यत्तच्छौचमान्तरिकं स्मृतम् ॥ अद्भिर्वा भस्मना वापि मलानामपकर्षणम् । देहशुद्धिर्भवेद्येन बहिः शौचं तदुच्यते ॥ गङ्गानद्योह्रदा वाप्यस्तथा कूपाश्च पुष्कराः । सर्वं पवित्रजननं स्वर्णदीक्रमतः प्रिये ॥ भस्माप्ययाग्निकं श्रेष्ठं मृत्स्नाशुमलवर्ज्जिता । वासोऽजिनतृणादीनि मृद्भ्यानीह सुव्रते ॥ किमत्र बहुनोक्तेन शौचाशौचविधौ शिवे । मनः पूतं भवेद्येन गृहस्थस्तत्सदाचरेत् ॥ निद्रान्ते मैथुनस्यान्ते त्यागान्ते मलमूत्रयोः । भोजनान्ते मलैस्पृष्टे बहिः शौचं विधीयते॰ इति ॥ अवशस्तमाने प्रबलिकलौ ॥ शौचेऽथवा सदा कार्यः शौचमूलो द्विजः स्मृतः । शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः ॥ मृज्जलादिभिः कायादिक्षालनं हितमितमेध्याशनादि च॰ बाह्यम् । मैत्र्यादिभिर्मदमानादिचित्तमलक्षालनमान्तरम् ॥ कायमलानां मृज्जलाभ्य

चालनं वाह्यम् । मनोमलानांरागद्वेषादीनांविषयदोषदर्शनरूपप्रतिपक्षभावनयाऽपनयनमाभ्यन्तरमितिविवेक : ॥ ऐश्वर्य्यधर्म्मेतुचर्य्यप्रयोगादौमायाऽनृतादिराहित्यं मनुस्मृत्यलादिजनितं ग्राह्यं ॥ सर्वेषामेवशौचानामर्थशौचंपरंस्मृतम् । योर्थेशुचिर्हिसशुचिर्नमृद्वारिशुचि: शुचिरितिमनु : ॥ आह्निकेशौचविधिर्यथोक्त : । गन्धलेपक्षयकरंशौचंकुर्यादतन्द्रितइति । एतत्सर्व्वसाधारणम् । गृहस्थस्यतु, एकालिङ्गेगुदेतिस्रोदशवामकरेतथा । उभयो: सप्तदातव्या मृद: शुद्धिमभीप्सता ॥ पादयो: षट्प्रकीर्त्तिता इतिच ॥ तृतीयभोषभिन्नस्यकुर्याद्द्विचतुर्गुणम् । यद्दिवाविहितंशौचंतदर्द्धंनिशिकीर्त्तितम् ॥ तदर्द्धमातुरेप्रोक्तमातुरस्यार्द्धमध्वनि । स्त्रीशूद्रवालवृद्धानामर्द्धमेनसिसूत्रवत् ॥ शौचविद्विधि र्हस्त: नाध : शौचेनियोजयेत् । तथैववामहस्तेननाभेरूर्द्धंनशोधयेदिति ॥ मूत्रकरणेशौचन्तुएकालिङ्गकरेतिस्रउभयोर्मृद्द्वयंस्मृतमिति ॥ अशुद्धतानिरसनेनशुद्धेरापादकत्वस्याक्षस्वरूपम् । यथा । अभक्ष्यपरिहारस्तुसंसर्गश्चाप्यनिन्दितै : । स्वधर्मेचव्यवस्थानं शौचमेतत्प्रकीर्त्तितमिति ॥ सत्यंशौचंमन : शौचंशौचमिन्द्रियनिग्रह : । सर्वभूतदयाशौचंजलशौचन्तुपञ्चमम् ॥ यस्यसत्यञ्चशौचञ्चतस्यस्वर्गोनदुर्लभ : ॥ शुचि : कर्मभावोवा । इगन्ताच्चलघुपूर्वादित्यण् । गोकुलिकन्दुशालायांतेजयन्त्रे चयन्त्रयो : । अशौचांस्त्रानिशौचानिस्त्रीपुवालातुरेषुच । अत्यन्तमलिनोदेहोदेहोचात्यन्तनिर्मल : । प्रसङ्गोदमितिस्नानंशौचमेतत् प्रचक्षते ॥

शौचपर : । त्रि॰ वाह्याभ्यन्तरशौचयुक्ते ॥

शौचिक : । पुं॰ वर्णसङ्करविशेषे ॥ यथा । कैवर्त्तस्यचकन्यायांशौण्डिकादेवशौचकइतिपराशरपद्धति : ॥

शौचेय : । पुं॰ रजके । इ॰ श॰र॰ लौ ॥

शौटीर : । पुं॰ वीरे ॥ त्यागिनि ॥ शौटतिशौट्टगर्वे । कृशौण्डकीटौपटिशौटिभ्यईरन् ॥

शौटीर्य्यम् । न॰ वीर्य्ये । गर्वे ॥ तदेतद्दतिशौटीर्यमौड्लोमेनमृष्यतीतिकल्पतरु : ॥ शौटीरस्यभाव : । वाह्मणादित्वात्ष्यञ् ॥

शौण्ड : । त्रि॰ मत्ते । मदिरामत्ते ॥ प्रगल्भे ॥ विख्याते ॥ शुण्डायांपानागारेभव : । तत्रभवइत्यण् ॥

शौण्डिकः । पुं॰ जातिविशेषे । आसुतीवले । मण्डहारके । सुंडी॰ कलवार॰ इ॰ भा॰ प्र॰ ॥ अस्योत्पत्तिर्यथा । तैलिगान्धिककन्यायां कैवर्त्तादेव शौण्डिकः । कैवर्त्तस्य च कन्यायां शौण्डिकादेव सौविकः ॥ ब्र॰ प॰ पु॰ ॥ शुण्डा सुरा॰ पण्यमस्य । तदस्य पण्यमिति ठक् । शुण्डिकादागतो वा । शुण्डिकादिभ्योऽण् ॥

शौण्डी । पुं॰ शौण्डिके ॥

शौण्डी । स्त्री॰ [illegible]याम् ॥ चव्ये । कटभ्याम् । मधुरेणौ ॥ शुण्डायां मद्यपानगृहे भवा । तत्र भव इत्यण् । ङीप् ॥

शौण्डीरः । त्रि॰ शूरे । अहङ्कारिणि ॥ शौटति । शौट॰ । औणादिक ईरन् । पृषोदरादित्वान्नुम्॰ टस्य डश्च ॥

शौण्डीर्य्यम् । न॰ पौरुषे । शौर्य्ये । भावे॰ ष्यञ् ।

शौद्रः । पुं॰ द्वादशविधपुत्रान्तर्गतपुत्रविशेषे । पारशवे । त्रि॰ शूद्रसम्बन्धिनि ॥

शौद्धोदनिः । पुं॰ शाक्यवंशजमुनिविशेषे । सर्वार्थसिद्धे । गौतमे । मायादेवीसुते ॥ शुद्धोदननृपतिविशेषस्यापत्यम् । अत इञ् ॥

शौधिका । स्त्री॰ रक्तकाञ्जिके॰ हे॰ चन्द्रः ॥

शौनः । त्रि॰ पशुघातिनि ॥

शौनकः । पुं॰ ऋषिविशेषे । यतिध्वनि ॥ शुनकस्यापत्यम् । बिदाद्यञ् । कापेयमुनिविशेषे ॥

शौभः । पुं॰ निलिम्पे । देवे । सुरे ॥ गुवाके । न॰ व्योमपुरे । हरिश्चन्द्रपुरे । हरचँदावली॰ इ॰ भा॰ प्र॰ ॥ त्रि॰ शुभान्विते ॥

शौभाञ्जनः । पुं॰ शिग्रौ ॥ शोभाञ्जन एव । प्रज्ञाद्यण् ॥ अस्य शाकप्रकारस्तु । शिग्रुमूलफलपुष्पकं शृतं तैलपक्वमुदकेऽप्यधिश्रितम् । हिङ्गसैन्धवरजोयुतं हि तज्जायते सपदि दीपनमग्नेः ॥ शिग्रुकः कटुतीक्ष्णोष्णः स्नायुशोथसमीरजित् । कृमिहृत्कासदोषघ्नस्तथा तिल्लीहगुल्महा ।

शौभाञ्जनफलम् । न॰ शिग्रुफले ॥ सौभाञ्जनफलं स्वादु कषायं कफपित्तनुत् । शूलकुष्ठक्षयश्वासगुल्महृद्दीपनं परम् ॥

शौभिकः । त्रि॰ इन्द्रजालिके । कुहककारिणि ॥ इ॰ हारावली ॥

शौरिः । पुं॰ वसुदेवे । वासुदेवे ॥ श्रीकृष्णे ॥ शूरस्यापत्यम्॰ वंशजत्वात् । वृष्णित्वेन ऋष्यन्धकवृष्णीत्यणाभावः । तथापि बाह्वादित्वादिञ् ॥ शनैश्चरे ॥

शौर्य्यम् । न॰ आरभट्याम् ॥ बले ।

शस्त्री ॥ शुरस्यकर्म भावोवा । ष्य
ञ् ॥ उत्साहि ॥
शौल्क : । पुं॰ शुल्कसम्बन्धिनि ॥
शौल्कशालिक : । पुं॰ शुल्कशालाया
मवज्ञाये ॥ अवक्रायदूरिठक् ॥
शौल्किक : । त्रि॰ शुल्काध्यक्षे ॥
शौल्किकेय : । पुं॰ विषप्रभेदे ॥ शु
ल्किकदेशेभव : । इतिकुक्षीतियो
गविभागाट्ठञ् ॥
शौल्किक : । पुं॰ कंसकारे । ताम्रकु
ट्टके । कसेरा॰ इ॰ भा॰ प्र॰ ॥ शु
ल्कघट्टनं शिल्पमस्य । शिल्पमिति
ठक् ॥
शौव : । पुं॰ श्वभिर्दृष्टे सामविशेषे ॥
दृष्टं सामेत्यण् ॥ न॰ शुनांसमूहे
॥ खण्डिकादित्वादञ् ॥
शौवस्तिकम् । त्रि॰ भाविदिनस्थायि
नि द्रव्ये । श्वस्तने ॥ श्वोभवम् ।
श्वसस्तुट्चेति॰ ठक् । ऐजागम: ॥
शौवापदम् । त्रि॰ श्वापदे । श्वापद
सम्बन्धिनि ॥ श्वापदस्येदम् । अण्
। पदान्तस्यान्यतरस्यामितिपक्षे॰
ऐच् ॥
शौषिर : । पुं॰ दन्तरोगविशेषे । य
था । श्वयथुर्दन्तमूलेषुरुजावान्
कफरक्तज : । लालास्रावीसविज्ञे
य : शौषिरोनामनामत : ॥ ४ ॥
शौष्कल : । पुं॰ शुष्कमांसस्यापणिके
त्रि॰ पिशिताशिनि ॥ शुष्कलीशु

ष्कमांसं॰ मांसमात्रंवाऽस्ति । शि
खादित्वाण् ॥
श्च्योत : । पुं॰ प्रापारे । क्षरणे ॥
श्च्योतनम् । श्च्युतिर्क्षरणे ।
घञ् ॥
श्च्योतन् । त्रि॰ क्षरति ॥
श्म । न॰ मान्त : ॰ मुखे ॥
श्मशानम् । न॰ प्रेतदाहभूमौ । श
वस्थाने । पितृवने ॥ शवा : शेरते
ऽत्र॰ शवानांशयनंवा । पृषोदरा
दित्वात्साधु ॥ श्मशब्देनशव : प्रो
क्त : शानंशयनमुच्यते । निर्वचन्ति
श्मशानार्थं मुनेशब्दार्थकोविदा: ॥
श्मशानकाली । स्त्री॰ कालीविशेषे ॥
श्मशानवासी । पुं॰ शिवे ॥ त्रि॰ श्म
शानवासकर्त्तरि ॥ श्मशानेवस्तुंशी
लंयस्य । वस॰ । सुप्यजातौणिनि: ॥
श्मशानवासिनी । स्त्री॰ कालिकाया
म् ॥
श्मशानवेश्मा । पुं॰ गिरिशे । शम्भौ ॥
श्मशानालयवासिनी । स्त्री॰ कालि
कायाम् ॥ श्मशानालयेवस्तुंशील
मस्या : । णिनि : । ङीप् ॥
श्मश्रु । न॰ पुंमुखलोमहृद्दाढी इ॰
॰ भा॰ केशश्मश्रुणोरयतामग्राभ
वतिसन्ततिरितिदानधर्मेभारतम्
॥ श्म॰ मुखंश्रयति । श्रिञ्॰ । श्म
निश्रयतेर्डुन् ॥ यद्वा । श्मनिमुखे
श्रूयते॰ उपलभ्यते । श्रु॰ । [illegible]

द्रादित्वात्तृ : । क्विब्वा आगमशास्त्रस्यानित्यत्वान्नतुक् ॥

श्मश्रुमुखी । स्त्री० श्मश्रुयोषिति । पीटायाम् ॥

श्मश्रुल: । त्रि० प्रवृद्धमुखरोमवति । सिध्मादित्वाल्लच् ।

श्माशानिक : । पुं० पितृवनेपाठादिकर्त्तरि । मशानिका० इ० भा० प्र० । श्मशानेऽधीते । अध्यायिन्यदेशकालादित्तिठक् ।

श्यान : त्रि० शीतात्सङ्कुचिते । सङ्कुचितमात्रे ॥ श्यायतेस्म । श्यैङ्गतौ । क्त : । संयोगादेरातोधातोर्य्यण्वतइतिनिष्ठानत्वम् ॥

श्याम: । पुं० प्रयागस्थवटे । वारिदे॥ वृद्धदारके । पिके । कोकिले ॥ कृष्णवर्णे ॥ हरिद्वर्णे ॥ श्यामाके ॥ पीलुवृक्षे ॥ धत्तूरे ॥ दमनकवृक्षे ॥ गन्धतृणे ॥ न० मरिचे ॥ सिन्धूलवणे ॥ त्रि० कृष्णवर्णविशिष्टे ॥ हरिद्वर्णवति ॥ श्यायतेमनोऽस्मात् । श्यैङ् ० । इषियुधीन्धिदसिश्याधूसूभ्योमगितिमक् ॥ पुं ० ऋषभादिजाति० तमालदलनिभे० चन्दनविशेषे ॥ श्रीकृष्णे ॥

श्यामक : । पुं० श्यामाके । सांवकइतिभाषाप्रसिद्धान्ने ॥ न० रोहिषतृणे ॥ श्यामं वर्णमश्चति । श्यामक० । कर्मण्यण् । शकन्ध्वादि: ॥

श्यामकण्ठ : । पुं० मयूरे ॥ शिवे ॥ पक्षिविशेषे ॥

श्यामकन्दा । स्त्री० अतिविषायाम् ॥

श्यामकाण्डा । )
श्यामग्रन्थि : । ) स्त्री० गण्डदूर्वायाम् ॥ गण्डाल्याम् । मीननेत्रायाम् ॥

श्यामपत्र : । )
श्यामपत्रक : ) पुं० तमालपादपे ॥

श्यामल : । पुं० पिप्पले । कृष्णे । श्यामे ॥ नीलमार्कवे । त्रि० कृष्णवर्णविशिष्टे । सिध्मादित्वाल्लच् ॥

श्यामलचूडा । स्त्री० गुञ्जायाम् ॥

श्यामलता । स्त्री० शारिवायामोषधौ ॥ श्यामलिन्नि ॥

श्यामला । स्त्री० पार्वत्याम् । कस्तूर्य्याम् ॥ अश्वगन्धायाम् ॥ जम्ब्वाम् ॥ कटभ्याम् ॥

श्यामलिका । स्त्री० नील्याम् ॥

श्यामलिन्न : । पुं० कृष्णे ॥

श्यामवल्क : । पुं० शिरीषे ।

श्यामसुन्दर : । पुं० श्रीकृष्णे ॥

श्यामशालि : । पुं० कृष्णशालौ ॥

श्यामा । स्त्री० कालिकायाम् । दुर्गायाम् । पार्वत्याम् ॥ श्यामायाउत्पत्तिर्यथा । तत : साकालिकादेवीयोगनिद्राजगन्मयी । पूर्वत्वक्सतीरूपाजन्मार्थेमेनकांययौ ॥ समयस्यानुरूपेणमेनकाजठरेशिवा

। सम्भूयचसमुत्पन्नासालक्ष्मीरिव सागरात् ॥ वसन्तसमयेदेवीमवर्म्या मृगयोगतः । चर्द्धरात्रौसमुत्पन्नाग र्भवसशिमण्डलात् ॥ ततस्तस्मान्तु जातायांप्रसन्नाश्चाभवन्दिशः । सा नुकूलोववौवायुर्गम्भीरोगन्धिलः शुभः ॥ बभूवपुष्पवृष्टिश्चतोयवृष्टिः परातथा । जज्वलुश्चाग्नयः शा न्ताजगर्जुश्चघनाघनम् ॥ तस्यान्तु जायमानायांसर्वेश्वाश्रमपद्यत । तान्तुदृष्ट्वायथाजातांनीलोत्पलदला नुगाम् ॥ श्यामांसामेनकादेवीमु दमावातिहर्षिता । देवाश्चहर्षम तुलंप्रापुस्तत्रमुहुर्मुहुः ॥ तुष्टुवु स्तामप्सरसोगन्धर्वाश्चाप्सरोगणाः । तान्तुनीलोत्पलदलश्यामांहिमव तः सुताम् ॥ कालीतिनाम्नाहिमवा नाजुहावक्रतेदिने । बान्धवास्तुस्व सन्तानांनाम्नांतांपार्वतीतिच ॥ का लीतिचतथानाम्नाकीर्त्तितागिरिन न्दिनीतिकालिकापुराणे ४० अ ध्यायः ॥ शारिवौषधी ॥ कृष्णश्वे ताशारिवायासाश्यामेतिनिगद्यते ॥ अप्रसूताङ्गनायाम् ॥ नारीविशे षे । यौवनमध्यस्थायाम् ॥ अस्याल क्षणंयथा । स्निग्धनखनयनदशना निरनुशयामानिनीस्थिरस्नेहा । सु स्पर्शशिशिरमांसलवराङ्गनासाम ताश्यामेति ॥ छायायाम् । भाषा नुरूपायाम् ॥ प्रियङ्गौ ॥ वागुजौ । सोमलतायाम् ॥ यमुनायाम् ॥ त्रियामायाम् ॥ कृष्णत्रिवृत्तिकौष धौ ॥ यथा । श्यामात्रिवृत्ततोहौ नगुणातीव्रविरेचिका । मूर्च्छादा हमदभ्रान्तिकण्ठोत्कर्षणकारिणी ॥ नौलिकायाम् ॥ गुग्गुलौ ॥ गु न्द्रायाम् । गुडूच्याम् ॥ कस्तूर्या म् ॥ वटपत्र्याम् ॥ वन्ध्यायाम् । रोचनायाम् ॥ नौलपुनर्नवायाम् ॥ पिप्पल्याम् । कृष्णायाम् ॥ ह रिद्रायाम् ॥ नौलगव्याम् ॥ नौल दूर्वायाम् ॥ स्त्रियाम् ॥ पद्मवौजे ॥ शिंशपायाम् ॥ पक्षिविशेषे । वा राह्याम् । पाण्डविकायाम् । श कुन्याम् । पौतक्याम् । कालिका याम् । शितिसिम्बिन्याम् ॥ श्या मोवर्णोऽस्त्यस्याः । अर्श आद्यच् ॥ मगन्ताट्टाप् ॥

श्यामाकः । पुं० तृणधान्यभेदे । श्या मके । श्यामेचिवौजे । ऋषिप्रिये । राजधान्ये । सांवां० सांवक० इ० भा० प्र० ॥ श्यामाकः शोष णोरूक्षोवातलः कफपित्तहृत् ॥ श्यायते । श्यैङ० । पिनाकादय श्चेतिसाधुः ॥ यद्वा । श्यामंवर्णं म० अकति । अक० । कर्मण्यण् ॥

श्यामाङ्गः । पुं० बुधग्रहे ॥ त्रि० श्या

मशरीरे ॥

श्यामाङ्गी । स्त्री० मेचाङ्ग्याम् । कृष्णकलेवरायाम् ॥

श्यामाद्नी । स्त्री० लाङ्गल्यां ॥

श्यामाम्ली । स्त्री० दीर्घशाखिकायाम् । नीलाम्ल्याम् ॥

श्यामायमानः । त्रि० योऽश्यामश्च भवति तत्र । लोहितादिडाज्भ्यः क्यष् । वाक्यषइत्यात्मनेपदेशानच् । मानेमुक् ॥

श्यामित : । त्रि० श्यामले ॥

श्यामैककर्ण : । पुं० श्वेतहयविशेषे ।

श्याल : । पुं० पत्नीसहोदरे । वाकीरे । साला० इ० भा० प्र० ॥ श्यायते । बाहुलकात्० श्यैङ : कालन् ॥ उच्छिष्टमधुरक्तवाची श्याशब्द : । श्यालाति । मातीनुपेति कइतिमुकुट : ॥

श्यालक: । पुं० श्याले ॥ स्वार्थेक : ॥

श्यालिका । स्त्री० केलिकुञ्चिकायाम् । पत्नीभगिन्याम् । साली० इ० भा० प्र० ॥

श्याली । स्त्री० श्यालिकायाम् ॥

श्याव : । पुं० कपिशे । कृष्णपीतमिश्रितवर्णे ॥ धूम्रे । शुक्लानुविद्धेकृष्णवर्णे ॥ श्यावर्णे० इतिभावप्रकाश : ॥ मुद्गाभवर्णेइतिभट्टोत्पल: ॥ त्रि० तद्वर्णवति । श्यायते । कृगृशृदृभ्योवइति० बाहुलकात्०

श्यैङोव : ॥

श्यावदन् । त्रि० श्यावदन्ते । कृष्णपीतमिश्रितवर्णदन्तयुक्ते ॥ श्यावादन्तायस्यस : । विभाषाश्यावारोकाभ्यामितिपक्षेदन्तस्यदत्रादेश : ॥

श्यावदन्त : । त्रि० जन्मनैवकृष्णदन्ते ॥ श्यावादन्तायस्य । विभाषाश्यावारोकाभ्यामितिपक्षेदत्रादेशाभाव : ॥

श्यावदन्तक : । त्रि० श्यावदन्ते ॥ प्रधानदन्तद्वयमध्यस्थसूक्ष्मदन्तविशिष्टे ॥ प्रधानदन्तोपरिदन्तान्तरयुक्ते ॥ मनुविष्णु : । अथनरकानुभूतदुःखानांतिर्यक्त्वमुत्तीर्णानांमानुष्येलक्षणानिभवन्ति । कुष्ठ्यतिपातकी० ब्रह्महायक्ष्मी० सुराप: श्यावदन्तक : ० सुवर्णहारीकुनखी० गुरुतल्पगोदुश्चर्मेत्यादि ॥ दन्तरोगविशेषे । यथा । योऽसृङ्मिश्रेणपित्तेनदग्धोदन्तस्त्वशेषत : । श्यावतांनीलतांवापिगत : सश्यावदन्तक : । १८ ॥ स्वार्थेक : ॥

श्यैत : । पुं० शुक्लवर्णे । श्वेते । पाण्डुरे ॥ त्रि० तद्वर्णयुक्ते ॥ श्यायते । इण्श्याभ्यामितन्निति० श्यैङ्इतन् ॥

श्यैतकोलक : । पुं० मत्स्यविशेषे । शफरे । पुंटी० इ० गौ० भा० प्र० ॥

श्येनः । पुं॰ पक्षिविशेषे । शशाद
ने । पत्रिणि । बाज॰ इ॰ प्र॰
। महाकाया मन्दवेगः श्येनकूत
व्याख्यातारः ॥ श्यायते । श्यैङ्॰
। श्यास्त्याहृञविभ्यइनच् । पाण्डु
रे । शुक्ले ॥ त्रि॰ तद्वति ॥

श्येनघण्टा । स्त्री॰ दन्तीवृक्षे । एरण्ड
फलायाम् ॥

श्येनचित् । पुं॰ आहवनीयधारणा
र्थे॰ इष्टकानिर्मितस्थलविशेषे ।
श्येन इवचितः । चिञ्॰ । कर्म्मण्य
ग्न्याख्यायामितिक्विप् ॥

श्येनजीवी । पुं॰ क्रयविक्रयादिना
श्येनैर्जीवति॰ तस्मिन् ॥

श्येनी । स्त्री॰ शुक्लवर्णायाम् । व
र्णादनुदात्तात्तोपधात्तोनइति॰ ङी
प्॰ तकारस्यनकारादेशश्च ॥
त्रिष्टुप्छन्दः ११ प्रभेदे ॥ यथा
। श्येन्युदीरितारजौरलौगुरुः ॥
यत्कीर्त्तिरिन्दुकुन्दचन्दनश्येन
शेषशैलपावनीसदा । जह्नवीव
विश्ववन्द्यविभ्रमा तं भजामि भावग
म्यमच्युतम् ॥ श्येनयोषिति ।

श्येनीपुत्रः । पुं॰ जटायुषि । स
म्पातेरनुजे । दशरथराजसखे ॥

श्यैनम्पाता । स्त्री॰ मृगयायाम् ॥ प
तनम्पातः । श्येनस्यपातः ।
कर्त्तृषष्ठ्यासमासः । श्येनपातो
ऽस्यांवर्त्तते । घञः साऽस्यांक्रिये
तिञः । श्येनतिलस्यपातेञे॰
इतिमुमागमः ॥

श्योनाकः । पुं॰ श्योनाकद्रुमे ।
सोनागाछ इ॰ गौ॰ भा॰ प्र॰ ॥
अस्यपर्य्याया यथा । मण्डूकपर्ण
पत्रोर्णनटकट्वङ्गटुण्टुकाः । श्यो
नाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः
॥ शोणकश्चारलुश्चेति । सोनापा
टा॰ इ॰ भा॰ प्र॰ । अस्यगुणा
यथा । श्योनाको दीपनः पाके
कटुकस्तुवरो हिमः । ग्राही तिक्तो
निलश्लेष्मपित्तकासामनाशनः ॥
टुण्टुकस्य फलं बालं हृद्यं वातकफा
पहम् । हृद्यं कषायं मधुरं रोचनं ल
घु दीपनम् । गुल्मार्शः क्रिमिहृत्
प्रौढं गुरुवातप्रकोपणम् ॥ श्यायते
। श्यैङ्गतौ । पिनाकादौ निपा
तितः ॥

श्रत् । अ॰ श्रद्धायाम् ॥

श्रथनम् । न॰ वधे ॥ यत्ने ॥ पुनः
पुनर्हर्षणे ॥ बन्धने ॥ मोचने ॥
शिथिलीकरणे ॥

श्रद्दधानः । त्रि॰ श्रद्धायुक्ते । श्रद्धा
वति । यथा । श्रद्दधानः शुभां वि
द्यामाददीतावरादपि । अन्त्यादपि
परं धर्म्मं स्त्रीरत्नं दुष्कुलादपीति ।
श्रत्॰ श्रद्धांदधतेर्विभाषा ॥

श्रद्धा । स्त्री॰ सम्प्रत्यये । आदरे ।
आस्तिक्यबुद्धौ । शास्त्रार्थप्रत्यये ॥

गुरुवेदान्तादिवाक्येषु विश्वासे । गुरुवेदान्तादिवाक्येषु इदमित्थमेवेति प्रमारूपायामास्तिक्यबुद्धौ । शास्त्राचार्योपदिष्टेऽर्थेऽननुभूतेऽप्येवमेवैतदिति विश्वासे ॥ निगमाचार्यवाक्येषु भक्तिः श्रद्धेति विश्रुतेति पूज्यपादोक्तिः ॥ प्रत्यये । धर्मकार्येषु दृढश्रद्धेत्युदाहृता । नाश्रद्दधानस्य धर्मकृत्ये प्रयोजनमिति स्मृतिः ॥ इयं वैराग्यस्य पत्नी । वैराग्यस्य च द्वे भार्ये श्रद्धाभक्तिश्चेत्युक्तः ॥ श्रद्धानम् । डुधाञ्० । श्रदन्तरोरुपसर्गवद्वृत्तिर्वाच्या । आतश्चोपसर्गे इत्यङ् । टाप् ॥ इच्छायाम् । काङ्क्षायाम् । स्पृहायाम् ॥ चेतसः प्रसाद इति पातञ्जलभाष्यम् ॥ श्रद्धा त्रिविधा । सात्त्विक्यादिभेदात् । यथा हि । श्रीभगवानुवाच । त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत । श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः । यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः । प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जना इति ॥

श्रद्धालुः । स्त्री० दोहदवत्याम् ॥ श्रद्दधाति । डुधाञ्० । स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् इत्यालुच् । श्रद्धतेतच्छीला वा ॥ त्रि० श्रद्धायुक्ते ॥

श्रद्धावान् । त्रि० श्राद्धे । अतिशयेन श्रद्दधाने । श्रद्धासमन्विते ॥ श्रद्धास्त्यस्यास्मिन् वा । मतुप् ॥

श्रद्धाविरहितः । त्रि० ऋत्विग्द्वेषादिना श्रद्धारहिते । अश्रद्दधाने ॥

श्रद्धेयः । त्रि० विश्वसनीये । श्रद्धातुमर्हे । आगमोपपत्तिभ्यां हि निश्चितोऽर्थः श्रद्धेयो भवत्यव्यभिचारादिति पूज्यपादाः ॥

श्रन्थः । पुं० श्रन्थने ॥

श्रन्थनम् । न० ग्रन्थने । गुम्फे ॥ यथा । सन्दर्भो रचना गुम्फः श्रन्थनं ग्रन्थनं समा इति हेमः ॥

श्रन्थितः । त्रि० ग्रन्थिते । गुम्फिते ॥ कृतवधे ॥

श्रपितः । त्रि० पक्वे । घृतदुग्धजलभिन्नपक्वद्रव्ये ॥ यथा । निष्पक्वं क्वथिते पक्वं त्वाज्यं क्षीरं पयः शृतम् । अन्यत्तु श्रपितं श्राणं समुद्गोद्धृते समे इति जटाधरः ॥ श्रा पाके क्तः ॥

श्रपिता । स्त्री० काञ्जिके ॥ इति केचित् ॥

श्रमः । पुं० अभ्यासे । अभ्यसने ॥ शस्त्राभ्यासे । खुरल्याम् । परिश्रमे ॥ यत्नातिशये ॥ क्लमे । परिश्र

मे । आयासे । व्यायामे ॥ तपसि ॥ खेदे । गमनादिप्रयुक्तखेदादौ । श्रम : खेदोऽध्वरत्यादेरितिलक्षणम् ॥ आम्यत्यनेन । श्रमुतपसिखेदे । घञ् । नोदात्तोपदेशस्येतिवृद्ध्य भाव : ॥

श्रमण : । पुं॰ तपस्विनि । श्रमण : परिव्राड्कितिपूज्यपादा : ॥ बुद्ध भिक्षुके । निर्ग्रन्थे । यतौ । जति॰ ॰ दू॰ भा॰ प्र॰ । न॰ श्रमे । त्रि॰ निन्द्यजीविनि ॥ तपस्विनि ॥ श्रा म्यति । श्रमु॰ । ल्यु : ॥

श्रमणा । स्त्री॰ सुदर्शनायाम् । मांस्याम् । मुण्डीर्याम् । शबरीभेदे ॥

श्रमणी । स्त्री॰ चतुर्थाश्रमप्राप्तायाम् । तपस्विन्याम् ॥

श्रमवारि । न॰ आयासेनस्वेदबिन्दौ ॥

श्रमी त्रि॰ श्रमयुक्ते ॥

श्रय : । पुं॰ श्रयणे । आये । श्रयण म् । श्रिञ्सेवायाम् । एरच् ॥

श्रयणम् । न॰ आये । आश्रये ॥ श्रिञो ल्युट् ॥

श्रव : । पुं॰ कर्णे । श्रवणे । श्रूयतेऽ नेनश्रवणंवा । श्रुश्रवणे । ऋदोर प् ॥

श्रवण : । पुं॰ नक्षत्रविशेषे । श्रवणाया म् । न॰ श्रुतौ । श्रोत्रकर्मणि । श्रु तिस्मृतीतिहासपुराणेभ्यश्चतात्प ... ारणे । तदर्थनिर्द्धारणानु कूलन्यायविचारे ॥ षड्विधलिङ्गैरशे षवेदान्तानामद्वितीयेवस्तुनि ... पर्य वधारणे । वेदान्तानामशेषाणामा दिमध्यावसानत : । ब्रह्मात्मन्येव तात्पर्यमितिधी : श्रवणंभवेदित्यु क्त : ॥ आचार्यमुखादेवश्रवणंस फलंभवेत् ॥ कर्णेन्द्रियेणसगुणस्य निगुणस्यवाशब्दस्यज्ञाने । सुनना॰ इ॰ भा॰ प्र॰ । पुं॰ न॰ कर्णे । कान॰ इ॰ भा॰ प्र॰ । कर्णपुंन पुंसकयो : । श्रवणावनिलश्चेति दर्शनात् । नस्त्रियांश्रवण : कर्ण इ तिलिङ्गसमास्यभिधानाच्च ॥ श्रूयतेऽ नेन । करणे ल्युट् ॥

श्रवणद्वादशी । स्त्री॰ श्रवणानक्षत्रयुक्ता यांभाद्रशुक्लाद्वादश्याम् ॥

श्रवणशीर्षिका । स्त्री॰ श्रावणीवृक्षे । मुण्डीर्याम् ॥

श्रवणा । स्त्री॰ द्वाविंशतितमेनक्षत्रे ॥ तत्रजातस्यफलंयथा । शास्त्रानुरक्तो बहुपुत्रमित : सत्पुत्रभक्तिर्विजि तारिवर्ग : । चेज्जन्मकालेश्रवणा स्थितस्यप्रेमोपराश्रवणप्रवीण : ॥ श्रावणपूर्णिमायाम् । श्रावण्याम् ॥ श्रवणेनयुक्तापौर्णमासी । नक्ष त्रेणेत्यण् । तस्य॰ लुवविशेषइति लुप् । टाप् । मुण्डीरीवृक्षे ॥

श्रवणाह्वा । स्त्री॰ मुण्डीरिकायाम् ।

श्रव : । न॰ यशसि ॥ कर्णे ॥ श्रूयते

ऽनेनवा । असु० । सर्व्वधातुभ्योऽसुन् ॥

श्रवाय्यः । पुं० यज्ञपशौ ॥ शृणोति । श्रु० । श्रुदक्षिस्पृहिगृहिभ्य आय्यः ॥ श्रवाय्यः० श्रवणीयइतिवेदभाष्यम् । अस्मिन्नर्थे० वाच्यलिङ्गः ॥

श्रविष्ठा । स्त्री० धनिष्ठानक्षत्रे ॥ श्रवणं श्रवः । ऋदोरप् । प्रसिद्धः श्रवोऽस्त्यस्याः । मतुप् । अतिशयेन श्रववती । अतिशयेनतमबिष्ठनाविति इष्ठन् । विन्मतुपोर्लुगितिमतुपो लुक् ॥

श्रविष्ठाजः । पुं० बुधग्रहे ॥ त्रि० तज्जातमात्रे ॥

श्रव्यम् । न० सुन्दरवाक्ये ॥

श्राणम् । त्रि० । पक्के ॥ श्राति । श्रा पाके । क्तः । संयोगादेरातोधातोर्यण्वतइति० तस्य नः ॥ अपिते ॥

श्राणा । स्त्री० । उष्णिकायाम् । यवागाम् ॥ श्रायतेस्म । श्रा० । कर्म्मणि क्तः । संयोगादेरितिनिष्ठानत्वम् ॥ पक्वायाम् ॥

श्राद्धम् । न० शास्त्रोक्तविधानेनपितॄणांकर्म्मणि ॥ तल्लक्षणं यथा । संस्कृतव्यञ्जनाद्यञ्चपयोदधिघृतान्वितम् । श्रद्धयादीयतेयस्मात्श्राद्धंतेन निगद्यते० इतिब्रह्मवचनात्० श्रद्धयाऽन्नादेर्दानं श्राद्धमितिवैदिकप्रयोगाधीनयौगिकमितिश्राद्धतत्त्वम् ॥ वेदबोधितपात्रालम्भनपूर्व्वकप्रमीतदेवताकत्यागविशेषः । सम्बोधनपदोपनीतान्० पित्रादीन्० चतुर्थ्यन्तपदेनोद्दिश्य० हविस्त्यागः ॥ तच्च श्राद्धं द्वादशविधम्भवतिविश्वामित्रोक्तेः । तथाहि । नित्यंनैमित्तिकं काम्यंवृद्धिश्राद्धंसपिण्डनम् । पार्व्वणञ्चेतिविज्ञेयं गोष्ठ्यांशुद्ध्यर्थमष्टमम् ॥ कर्म्माङ्गंनवमंप्रोक्तंदैविकंदशमंस्मृतम् ॥ यात्रार्थैकादशंप्रोक्तंपुष्ट्यर्थंद्वादशंस्मृतमिति ॥ विवृतञ्चैतद्भविष्यपुराणे यथा । अहन्यहनियच्छ्राद्धंतन्नित्यमभिधीयते । वैश्वदेवविहीनंतदशक्तावुदकेनतु ॥ एकोद्दिष्टन्तुयच्छ्राद्धंतन्नैमित्तिकमुच्यते । तदप्यदैवंकर्त्तव्यमयुग्मानाशयेद्द्विजान् ॥ कामायविहितंकाम्यमभिप्रेतार्थसिद्धये । पार्व्वणेनविधानेनतदप्युक्तंखगाधिप ॥ वृद्धौयत्क्रियतेश्राद्धंवृद्धिश्राद्धंतदुच्यते । सर्व्वंप्रदक्षिणंकार्य्यंपूर्व्वाह्णेतूपवीतिना ॥ गन्धोदकतिलैर्युक्तंकुर्यात्पात्रचतुष्टयम् । अर्घ्यार्थंपितृपात्रेषुप्रेतपात्रंप्रसेचयेत् । येसमानाइतिद्वाभ्यामेतज्ज्ञेयंसपिण्डनम् । नित्येनतुल्यंशेषंस्यादेकोद्दिष्टंस्त्रियाअपि ॥ अमावास्यांयत्क्रियतेतत्पार्व्वणमुदाहृ

तम्। क्रियतेवापवर्जितंतत्पा
र्वणमितिस्थितिः॥ गोष्ठ्यायत्
क्रियतेश्राद्धंगोष्ठीश्राद्धंतदुच्यते
। बहूनांविदुषांसम्पत्सुखार्थंपि
तृतृप्तये॥ क्रियतेशुद्धयेयत्तुब्रा
ह्मणानान्तुभोजनम्। शुद्ध्यर्थमि
तितत्प्रोक्तंवैनतेयमनीषिभिः॥
निषेककालेसोमेचसीमन्तोन्नयनेत
था। ज्ञेयंपुंसवनेचैवश्राद्धंकर्मा
ङ्गमेवच॥ देवानुद्दिश्ययच्छ्राद्धंतद्दै
विकमिहोच्यते। हविष्येणविशि
ष्टेनसप्तम्यादिषुयत्नतः॥ गच्छन्
देशान्तरंयत्तुश्राद्धंकुर्याच्चसर्पिषा।
यात्रार्थमितितत्प्रोक्तंप्रवेशेचनसंश
यः॥ शरीरोपचयेश्राद्धमर्थोप
चयएवच। पुष्ट्यर्थमेतद्विज्ञेयमौप
चयिकमुच्यते॰ इति॥ पञ्चविध
मपिवृहस्पतिवचनात्तद्यथा। नि
त्यंनैमित्तकंकाम्यंवृद्धिश्राद्धंतथैव
च। पार्वणञ्चेतिमनुनाश्राद्धंपञ्च
विधंस्मृतमिति॥ श्रद्धाचास्ति।
प्रज्ञाश्रद्धार्चाभ्योणइतिणः॥ य
द्वा। श्रद्धाप्रयोजनमस्य। चूडा
दिभ्यउपसंख्यानमित्यण्॥ कलाव
स्यानुष्ठानमागमोक्तविधिनैवकार्यं
म्। यथाहभगवान्सदाशिवः।
आगमोक्तविधिंहित्वायःश्राद्धं
कुरुतेनरः। श्राद्धंतद्विफलंसोपि
पितृभिर्नरकंव्रजेत्। ततस्तोयंशो
णितसमंपिण्डोमलमयोभवेत्। त
स्मान्मर्त्यःप्रयत्नेनशाङ्करंमतमा
श्रयेत्इति॥ त्रि॰ श्रद्धान्विते॥
श्राद्धदेवः। पुं॰ अन्तके। धर्मराजे
। यमे॥ श्राद्धस्यदेवः॰ अंशभा
क्त्वात्॰ पितृपतित्वाद्वा॥
श्राद्धप्रदेशः। पुं॰ स्वर्गस्तीर्थादिषु॥
श्राद्धशाकम्। न॰ कालशाके॥
श्राद्धिकः। त्रि॰ श्राद्धिनि। अद्य
तनएवश्राद्धान्नभोजिनि। श्राद्ध
शब्दःकर्मनामधेयंतत्साधनेद्रव्ये
लक्षणयावर्त्तते। श्राद्धंभुक्तमनेन
। श्राद्धमनेनभुक्तमितिठनाविति
ठन्॥ श्राद्धसम्बन्धिद्रव्ये॥
श्राद्धी। त्रि॰ श्राद्धिके॥ श्राद्धम
नेनभुक्तमितीनिः॥
श्रान्तः। पुं॰ यतौ। शान्ते॥ त्रि॰
क्लान्ते। श्रमयुक्ते॥ श्राम्यतेःक्तः॥
श्रान्तकथः। त्रि॰ निवृत्तसंलापे॥
श्रान्तसंवाहनम्। न॰ श्रमान्वितस्या
सनादिप्रदानद्वाराश्रमोपशमने॥
श्रामः। पुं॰ मासे॥ मण्डपे॥ का
ले॥
श्रामणेरः। पुं॰ जिनभिक्षोःशिष्ये
। चेलुके। महापासके॥
श्रायः। पुं॰ आश्रये। श्रयणे॥ श्रय
णम्। श्रिञ्सेवायाम्। श्रिणीभु
वोनुपसर्गइतिघञ्॥ त्रि॰ श्रीदे
वताकेहविरादौ॥ श्रीर्देवताऽस्य

। अण् ॥

श्रावः । पुं॰ श्रवणे ॥

श्रावकः । पुं॰ शाक्यमुनेः शिष्ये ॥ काके । वायसे ॥ दूरध्वनौ । त्रि॰ श्रावयितरि ॥ श्रावयति । श्रु॰ । णवुल् ॥

श्रावणः । पुं॰ मासविशेषे । नभसि । श्रावणिके ॥ श्रवणापौर्णमास्यस्मिन् । सास्मिन्पौर्णमासीत्यर्थे विभाषाफाल्गुनीतिपाक्षिकोऽण् ॥ शब्दे ॥ श्रवणेन गृह्यते । शेषद्धत्यण् ॥ पाषण्डे ॥ इ॰ मेदिनिकरः ॥

श्रावणा । स्त्री॰ दृश्यालोचने ॥

श्रावणिकः । पुं॰ नभोमासि । श्रावणे ॥ श्रवणापौर्णमास्यस्मिन्नस्ति । विभाषाफाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यष्ठतिठक् ॥

श्रावणी । स्त्री॰ श्रवणायाम् । श्रावणमासस्यपूर्णिमायाम् ॥ अस्यामृषितर्पणं भवति । तत्रकालादिकमाहकालिदासः । पूर्वास्तकालसमयाप्युतशारदान्तायापूर्णिमानभसिसङ्गवगातुतस्याम् । शिष्यायुतोत्तरस्थितामुनितर्पणं स्यात्तत्सङ्क्रमो भवति वायव्यांतदानं ॥ केचित्ससमिच्छन्तितदैवतर्पणं श्रुतौ बहवस्ते श्रुतिशाखिनोयतः । स्यात्सङ्क्रमेवास्तिसर्वशाखिनांतर्पणं श्रावणशुक्लपञ्चमी । स्यात्सत्त्वास्तेवमुपाकृतौस्यात्पूर्वान्विता वापि च पाकयज्ञे । तथासितापञ्चदशीसमुक्तातथाष्टकैतत्समयाभिरूपैः ॥ ज्यो॰ २१ अध्यायः । ४६ ४८ । श्रवणेनयुक्तापौर्णमासी । नक्षत्रेत्यण् ; ङीप् । मुंडोर्याम् ॥

श्रावस्ती । स्त्री॰ देशविशेषे । धर्मपत्तने ॥

श्राविष्ठीयः । त्रि॰ श्रविष्ठायांजाते छण्प्रत्ययः ॥

श्राव्यम् । त्रि॰ श्रुतिपथमधुरे ॥

श्रितः । त्रि॰ आश्रिते ॥ संलग्ने ॥ श्रयति । श्रिञ्॰ । गत्यर्थाकर्मकेतिकर्त्तरिक्तः ॥

श्रितवान् । त्रि॰ श्रिते ॥ श्रिञः क्तवतु ॥

श्रीः । पुं॰ सोमेश्वरमतेषड्रागान्तर्गतप्रथमरागे ॥ हनुमद्भरतयोर्मते पञ्चमरागे ॥

श्रीः । स्त्री॰ वेशरचनायाम् ॥ शोभायाम् ॥ भारत्याम् । सरस्वत्याम् ॥ लवङ्गे ॥ सरलद्रुमे ॥ लक्ष्म्याम् । पद्मालयायाम् । पद्मायाम् । कमलायाम् । हरिप्रियायाम् ॥ त्रिवर्गसम्पत्तौ ॥ विधायाम् ॥ उपकरणे ॥ विभूतौ ॥ नात्मानमवमन्येतपूर्वाभिरसमृद्धिभिः । आमृत्योः श्रियमन्विच्छेन्नैनांमन्येतदुर्लभाम् ॥ म

ती ॥ विल्वद्रुमे ॥ अंगुली ॥ अधिकारे ॥ प्रभायाम् ॥ कीर्त्तौ ॥ वृद्धौ ॥ सिद्धौ ॥ ब्रह्मा मातरि ॥ तारायाम् । बुद्धदेव्याम् ॥ श्रयतिहरिम्० श्रयन्त्येतामितिवा । श्रिञ्० । क्विब्वचीति० क्विप्दीर्घौ ॥ कर्त्तरि विहितस्य क्विपः कर्मण्यसम्भवः कृदिकारादितिङीष् तुन० कृत्प्रत्ययोयदुकारइतिव्याख्यानात् । कृदन्तं यदिकारान्तमितिपक्षे पि० कारग्रहणं तत्सामर्थ्यादिवर्णग्रहणात् । दुर्घटस्तु० ङीषि० श्रीमितापि रक्षितइच्छतीत्याह ॥ विद्याशक्तौ ॥ श्रयतिपारतन्त्र्यांश्चिदात्मानमिति श्रीः ॥ राजलक्ष्म्याम् ॥ शरीरशोभायाम् । सर्वोत्कृष्टत्वेनात्मत्वाश्रयतयास्वीक्रियतेप्रलयसुषुप्त्यादौसर्वभूतैरिता क्या० जीवत्वोपाधिभूयामामविद्यायाम् ॥ देवादिनाम्नः पूर्वंश्रीशब्दप्रयोगः कर्त्तव्यइत्याह । देवंगुरुंगुरुस्थानंक्षेत्रंक्षेत्राधिदेवताम् । सिद्धंसिद्धाधिकारांश्चश्रीपूर्वंसमुदीरयेदिति प्रयोगसारः ॥ स्वर्गगामित्वादिनासिद्धोऽधिकारोयेषांनराणामित्यनेन० जीवतांश्रीशब्दादित्वं मानोनतुमृतानांतथेताधुनिकशिष्टानामाचारः ॥ पञ्चश्रीशब्दः नप्रमाणंयथा । षड्गुरोः स्वामिनः पञ्चद्वेभृत्येचतुरोरिपौ । श्री शब्दानांत्रयंमित्रएकंकंपुत्रभार्ययोरिति ॥ उक्तथायां १ ह्रती ॥ ग. श्रीः । यथा । श्रीस्ते । साम्राम् ॥

श्रीकण्ठः । पुं० नीलकण्ठे । शिवे ॥ कालकूटविषधारणात्० श्रीः शोभाकण्ठे यस्य सः । धृतंकण्ठे विषं येनेतराः श्रीकण्ठनामभेति नीलकण्ठस्तत्र ः ॥ कुरुजाङ्गलदेशे ॥

श्रीकण्ठपदलाञ्छनः । पुं० मालतीमाधवनाटककर्त्तरि० भवभूतिकवौ ॥

श्रीकण्ठसखः । पुं० कुवेरे ॥ इ० ह० युधः ॥

श्रीकन्दा ; स्त्री० वन्ध्याकर्कोटक्याम् ॥

श्रीकरः । पुं० विष्णौ ॥ स्मरतांशृण्वतांस्तुवतांकीर्त्तयतामर्च्चयतांभक्तानांश्रियंमोक्षसाम्राज्यलक्ष्मींकरोति । कृञोहेतुताच्छील्यानुलोम्येष्विति कृञट ः ॥ न० रक्तोत्पले ॥ त्रि० श्रीकारके ॥ करोति । डुकृञ्० । अच् ॥ श्रियः करः ॥

श्रीकरणम् । न० लेखन्याम् ॥

श्रीकरी । स्त्री० शक्तिविशेषे ॥

श्रीकान्त:। पुं॰ विष्णौ॥

श्रीकारी। पुं॰ मृगविशेषे। वेगि हरिणे॥ इ॰ रा॰ नि॰ घट:॥

श्रीकुञ्जम्। न॰ सरस्वत्यास्तीर्थे॥

श्रीखण्ड:। पुं॰ न॰ चन्दने। इ॰ ति॰ शेष:॥

श्रीगर्भ:। पुं॰ विष्णौ॥ श्रीर्विभूति: गर्भो यस्य॥ खड्गे॥

श्रीग्रह:। पुं॰ पक्षिणां पानीयशालायाम्। शकुनिप्रपायाम्॥

श्रीघन:। पुं॰ सर्वज्ञे। बुद्धे। जिने। मुनीन्द्रे॥ श्रिया॰ ज्ञानपुण्यसम्भारेण॰ बुद्ध्या वा॰ घन: पूर्ण: क्षुभ्नादित्वान्नणत्वम्॥ न॰ दधि॥

श्रीज:। पुं॰ कामदेवे॥

श्रीताल:। पुं॰ तालवृक्षसदृशवृक्षविशेषे। मृदुताले। विशालपत्रे। मसीलेख्यदले॥

श्रीतीर्थम्। न॰ तीर्थविशेषे॥

श्रीद:। पुं॰ पुण्यजनेश्वरे। कुबेरे॥ श्रियं ददाति॰ ददाति वा। देशोदाशी वा॰ आतदूतिक:॥ त्रि॰ श्रीप्रदे। शोभादातरि॥

श्रीदेवी। स्त्री॰ तीर्थविशेषे॥

श्रीधर:। पुं॰ विष्णौ॥ श्रिया: वक्षसि धरो धारक:॥ भूताष्टमे दे॥ शालग्रामविशेषे। यथा। अतिचुद्रं द्विचक्रन्तु वनमालाविभूषितम्। श्रीधरं देवि विज्ञेयं श्रीप्रदं गृहिणां सदा॥

श्रीनगरम्। न॰ श्रीविद्यास्थाने॥

श्रीनन्दन:। पुं॰ कामदेवे॥

श्रीनिकेतन:। पुं॰ विष्णौ॥

श्रीनिवास:। पुं॰ विष्णौ। नारायणे॥ श्रियो निवास:। नित्यत्वेन॰ अपायं विना॰ श्रीर्वसत्यत्रावाय स्ववक्षसि अनपायिनि श्रीर्वसति॰ सहत्यर्थ:। यथा। श्रियो निवासो यस्योर: पानपात्रं मुखं दृशाम्। बाहवो लोकपालानां सारङ्गानां पदाम्बुजमिति॥ यद्वा श्रीशब्देन श्रीमन्तो लक्ष्यन्ते। श्रीमत्सु नित्यं निवासोऽस्य। यतो लक्ष्मीस्ततो हरिरित्युक्तं॥

श्रीपति:। पुं॰ पुरुषोत्तमे। विष्णौ॥ अमृतमथने सर्वान् सुरासुरान् देवांश्च विहाय विष्णुमेव पतित्वेन वृतवतीति विष्णुपुराणप्रसिद्धे॥ श्रिय: पति:॥ नृपतौ। पृथिवीनाथे॥

श्रीपथ:। पुं॰ राजमार्गे॥ इ॰ हे॰ चन्द्र:॥

श्रीपर्णम्। न॰ अग्निमन्थे॥ अब्जे। पद्मे। श्री: पर्णे॰ पर्णसुखास्य। अर्श आद्यच्॥

श्रीपर्णिका। स्त्री॰ कट्फले। कायफल॰ इ॰ प्र॰॥ काश्मर्याम्।

गम्भार्याम् ॥ स्वार्थे कन् । ह्रस्वः ॥

श्रीपर्णी । स्त्री० काश्मर्याम् । गम्भार्याम् ॥ हठे । कुम्भ्याम् । वारिपर्ण्याम् ॥ श्रीयुक्तानि पर्णान्यस्याः । श्रीपर्णे सुखस्थावा । पाककर्णपर्णेत्यादिना ङीष् ॥ कट्फले ॥ शाल्मली ॥

श्रीपर्वतः । पुं० श्रीशैले ॥ तीर्थविशेषे ॥

श्रीपिष्टः । पुं० सरलद्रुमरसे । सरलद्रवे ॥ श्रियः सरलद्रुमस्य पिष्टः । तच्चूर्णेन जनितत्वात् ॥

श्रीपुत्रः । पुं० अश्वे ॥ कामदेवे ॥

श्रीपुष्पम् । न० लवङ्गे ॥ पद्मकाष्ठे ॥

श्रीप्रसूनम् । न० लवङ्गे ॥

श्रीफलः । पुं० विल्वे । मालूरे ॥ श्रीप्रदं श्रीप्रियं वा फलमस्य । शाकपार्थिवादिः । श्रीफलस्तुवरस्तिक्तो ग्राही रूक्षोऽग्निपित्तकृत् । वातश्लेष्महरो बल्यो लघुरुष्णश्च पाचनः । राजादनवृक्षे ॥

श्रीफला । स्त्री० आमलक्याम् ॥ नील्याम् ॥ क्षुद्रकारवेल्ल्याम् ॥

श्रीफलिका । स्त्री० आमलक्याम् ॥ क्षुद्रकारवेल्ल्याम् ॥ महानीलीवृक्षे ॥

श्रीफली । स्त्री० धात्र्याम् । आमलक्याम् ॥ नीलिकायाम् ॥

श्रीवल्ली । स्त्री० कट्फलायाम् ॥

श्रीभद्रः । पुं० चित्रगुप्तसुतकायस्थजातिविशेषे ॥

श्रीभद्रा । स्त्री० भद्रमुस्तके ॥

श्रीभागवतम् । न० पुराणार्के । महापुराणान्तर्गतपुराणविशेषे ॥

श्रीभ्राता । पुं० घोटके ॥ विधौ । चन्द्रे ॥ समुद्रोत्पन्नत्वात् ॥

श्रीमान् । पुं० तिलकवृक्षे । चुक्रे ॥ अश्वत्थवृक्षे ॥ शिवे ॥ विष्णौ ॥ कुवेरे ॥ इन्द्रे ॥ त्रि० मनोज्ञे ॥ धनिके । श्रीले ॥ सर्वातिशयितश्रियि । अखण्डितैश्वर्यसम्पन्ने । महाराजचक्रवर्त्तिनि ॥ श्रीः लक्ष्मीः सम्पत् शोभा कान्तिर्वा सास्यास्मिन् वास्ति । तदस्यास्त्यस्मिन्निति मतुप् । ऋचो यजूंषि सामानि साक्षाच्छ्रीरमृतासताम् । तया युक्ता महात्मानः श्रीमन्तः शास्त्रसम्मताः ॥

श्रीमतिः । स्त्री० राधायाम् ॥

श्रीमती । स्त्री० श्रीयुक्तायाम् ॥ योषितामभिधानस्य पूर्वमेतत् प्रयोजयेत् ॥

श्रीमदः । पुं० धनमदे । सर्वमदाधमे ॥ यथा । नह्यन्यो जुषतो जोष्यान् बुद्धिभ्रंशो रजोगुणः । श्रीमदादाभिजात्यादिर्यत्र स्त्रीद्यूतमासवः ॥ हन्यन्ते पशवो यत्र निर्दयैरजितात्मभिः । मन्यमानैरिमं देहमजरामृ

स्नु॰ मङ्गलम् ॥

श्रीमलापहा । स्त्री॰ भूम्यपवायाम् ॥ गृध्रपवार्यां ॥

श्रीमस्तकः । पुं॰ रसोने ॥ दू॰ वि॰ शेषः ॥

श्रीमुखः । पुं॰ सप्तमेवत्सरे ॥ तत्फलंयथा । सुभिक्षं चेममारोग्यं वर्षाकालं सुशोभनम् । सस्यवृद्धिं विजानीयात् श्रीमुखेसुरवन्दिते ॥ ७ ॥ न॰ शोभिताननं ॥

श्रीमूर्त्तिः । स्त्री॰ देवताविग्रहे ॥ विष्णुप्रतिमायाम् ॥

श्रीयुक्तः । श्रीयुतः । त्रि॰ लक्ष्मीविशिष्टे । श्रीमति ॥

श्रीरङ्गः । पुं॰ पुण्यक्षेत्रविशेषे ॥ श्रीरङ्गाख्यं महापुण्यं यत्रसन्निहितोहरिरितितन्त्रम् ॥

श्रीरसः । पुं॰ सरलरसे । श्रीवेष्टे ॥

श्रीरागः । पुं॰ षड्रागान्तर्गततृतीयरागे ॥

श्रीरामः । पुं॰ दशरथात्मजे ॥

श्रीलः । त्रि॰ श्रीमति । लक्ष्मीवति ॥ लक्ष्मणे । श्रियायुक्ते ॥ श्रीरस्यास्ति । सिध्मादित्वाल्लच् ॥ श्रियंलातिलाला॰ आदाने । आतोनुपसर्गे कः ॥

श्रीलता । स्त्री॰ महाज्योतिष्मत्याम् ॥

श्रीवत्सः । पुं॰ विष्णोश्चिह्नविशेषे । भृगुपददुर्वाससः पदाघातरूपेरेखाविशेषे ॥ महापुरुषलक्षणभूते॰ वक्षस्थस्वेतवर्णदक्षिणावर्त्तरोमावर्त्तविशेषेवा ॥ प्रदक्षिणावर्त्तविचित्ररोमश्रीवत्ससच्चिह्नविभूषिताङ्गमिति गरुडपुराणात् ॥ वदतिमहत्वम् । वद्व्यक्तायांवाचि । वृतृवदिहनिकमिकषिभ्यः सः इतिसः । श्रीयुक्तोवत्सः ॥ विष्णौ । कृष्णे । गृहविशेषे ॥ सुरङ्गाप्रभेदे ॥ अर्हतोध्वजे ॥

श्रीवत्सकी । पुं॰ उन्नतवक्षावर्त्तहये ॥

श्रीवत्सभृत् । पुं॰ हरौ । विष्णौ ॥

श्रीवत्सलाञ्छनः । पुं॰ विष्णौ । श्रीवत्सोमहापुरुषलक्षणभूतश्वेतरोमावर्त्तविशेषोलाञ्छनं चिह्नमस्येतिविग्रहः ॥

श्रीवत्साङ्कः । पुं॰ विष्णौ ॥

श्रीवराहः । पुं॰ आदिवराहे । विष्णौ ॥

श्रीवल्लभः । पुं॰ परमात्मनि ॥ श्रियाः विद्याशक्तेर्वल्लभस्तदाकारे ॥

श्रीवाटी । स्त्री॰ नागवल्लीभेदे ॥

श्रीवारकः । पुं॰ शाकविशेषे । सितावरे । सूच्याह्वे । सूचीपत्रके । सिराला॰ सिरयारा॰ सिरियारी॰ इ॰ भा॰ प्र॰ ॥ तच्छाकप्रकारोयथा । श्रीवारकंदलंग्राह्यमारनालेसुसाधितम् । पीडितांशोषितं तैलेकासमर्दसमन्वितम् । वातपित्त

रावस्थाविवस्थाध्मानमाशिनी । क
फहृत्म्न्मूत्रकृच्छ्रघ्नीभेदिनीसारसाय
नी ॥ सा॰ श्रीवालीत्यर्थ: ॥

श्रीवाली । स्त्री॰ श्रीवारसे॰ शाकवि
शेषे ॥

श्रीवास: । पुं॰ विष्णौ । नारायणे ॥
श्रियोवास: । अस्यवसि॰ श्रीर
नपायिनी॰ वसतीत्यर्थ: ॥ शिवे ।
हरे ॥ पद्मनि । वृक्षधूपे । सरलद्र
वे । श्रीवेष्टे ॥ अस्यगुणा: । श्रीवा
सोमधुरस्तिक्त: स्निग्धोष्णस्तुवर:
सर: । पित्तलोवातमूर्द्धाक्षिस्वररो
गकफापह: । रक्षोघ्नोस्वेददौर्गं
ध्ययूकाकण्डूव्रणप्रणुत् ॥

श्रीवासक: । पुं॰ चित्रगुप्तात्मजैकाय
स्थजातिविशेषे ॥

श्रीविद्या । स्त्री॰ महाविद्याविशेषे ।
परदेवतायाम् । त्रिपुरसुन्दर्याम् ॥

श्रीवृक्ष: । पुं॰ बिल्ववृक्षे ॥ अश्वत्थ
वृक्षे ॥ श्रीप्रद: ॰ श्रीप्रियोवावृक्षो
स्य । शाकपार्थिवादि: ॥

श्रीवत्सक: । पुं॰ अश्वस्यवत्सावर्त्ते ॥

श्रीवत्सकी । पुं॰ श्रीवत्सकावर्त्तविशि
ष्टेऽश्वे ॥ तल्लक्षणंयथा । यस्योभवा
वर्त्तचतुष्टयस्यकण्ठेभवेद्यस्यवरोच
माम: । श्रीवत्सकीनामहय: सभ
र्त्तु: श्रीपुत्रपौत्रादिविवर्द्धयेश्चादि
ति ॥ श्रीवत्सकीवश्यसिवेद्रोमावर्त्ती
सुखिपिवेतितुवेजयन्ती ॥

श्रीवेष्ट: । पुं॰ सरलद्रवस्थारसे । वृक्ष
धूपे । श्रीवासे । तस्यगुणायथा ।
श्रीवेष्ट: कटुकस्तिक्तकषाय: श्ले
ष्मपित्तजित् । योनिदोषरुजाक्षीणं
व्रणघ्नाध्मानदोषनुत् ॥ श्रीसंज्ञक:
॰ श्रियोवावेष्टोनिर्यास: ॥

श्रीश: । पुं॰ विष्णौ । श्रीरामे ॥ श्रि
यईश: ॥

श्रीशैल: । पुं॰ भारतवर्षस्थपर्वत
विशेषे ॥ सिद्धिंतत्राविधमनोविल
यांसमर्थांश्रीशैलशृङ्गकुहरेषुकदोप
लभ्यं । गात्रंयथामरलता: परिवे
ष्टयन्तिकर्णेयथाविरचयन्तिखगाश्च
नीडम् ॥ इतियोगतारावली ॥

श्रीसंज्ञम् । न॰ लवङ्गे ॥ श्रिय: संज्ञा
सञ्ज्ञायस्य ॥

श्रीहरि: । पुं॰ परमात्मनि ॥ श्रियं
जीवस्योपाधिभूतामविद्यांहरति॰
आत्मज्ञानप्रदानेननाशयति॰ इति
श्रीहरि: ॥ श्रियंदधाने । विष्णौ ॥

श्रीहस्तिनी । स्त्री॰ भूरुण्ड्याम् । हाती
सूंडा॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥
श्रियाहस्त: ॰ श्रीहस्त: । सविद्य
तेयस्या: । अतइनि: ॥ यद्वा । ह
स्तंग्रहणातिहस्तयति । अवश्यंश्रि
यंहस्तयति । आवश्यकेतिणिनि: ॥

श्रुग्निका । } स्त्री॰ { सज्जिकाक्षारे ॥
श्रुघ्नी ।

श्रुतम् । न॰ शास्त्रे ॥ शास्त्रविचारे ।

वेदे। श्रवणे। सुगना॰ ह॰ भा॰ ॥ त्रि॰ विश्रुते। आकर्णिते। श्रवणगोचरे॥ श्रूयते॰ श्रवणं वा। श्रुश्रूषणे। क्तः॥ अशाविवा। श्रु॰। क्तः॥

श्रुतकीर्त्तिः। पुं॰ देवर्षौ॥ स्त्री॰ जनकभ्रातुः कुशध्वजस्य कन्यायाम्॥ त्रि॰ कीर्त्तियुक्ते॥

श्रुतदेवी। स्त्री॰ सरस्वत्यां॥

श्रुतर्षिः। पुं॰ सुश्रुताद्यृषिषु॥ सुश्रुताद्याः श्रुतर्षय इति त्रिकाण्डशेषः॥

श्रुतश्रवाः। त्रि॰ आकर्णितयशसि॥

श्रुतश्रवा। स्त्री॰ श्रीकृष्णस्य पितृष्वसरि। शिशुपालमातरि॥

श्रुतश्रवोनुजः। पुं॰ शनैश्चरग्रहे॥

श्रुतश्रेणी। स्त्री॰ द्रवन्त्यां॥

श्रुतादानम्। न॰ ब्रह्मवादे॥ ह॰ हा॰ ली॰॥

श्रुताध्ययनसम्पन्नः। त्रि॰ धर्मशास्त्रज्ञे॥ यथा। श्रुताध्ययनसम्पन्नाः कुलीनाः सत्यवादिनः। राज्ञा सभासदः कार्याः शत्रौ मित्रे च ये समाः॥

श्रुतान्वितः। त्रि॰ शास्त्रज्ञे॥

श्रुतार्थः। पुं॰ शाब्दबोधविषयीभूतार्थे। श्रवणमात्रबोध्येर्थे॥ यथा। श्रुतार्थस्यपरित्यागादश्रुतार्थस्य कल्पनात्। प्राप्तस्यबाधादित्येवं परिसङ्ख्यात्रिदोषिकेति॥



श्रुतायुः। पुं॰ सूर्यवंशीयनृपतिविशेषे॥

श्रुतिः। स्त्री॰ वेदे। आम्नाये। वेदाख्यपरदेवतायाम्॥ विनियोगविधेः सहकारिभूतेप्रमाणविशेषे॥ तत्रनिरपेक्षोरवः श्रुतिः। साच त्रिविधा। विधात्री॰ अभिधात्री॰ विनियोक्त्रीच, तत्राद्यालिङ्गाद्यात्मिका॰ द्वितीयाव्रीह्यादिश्रुतिः॰ यस्यशब्दस्यश्रवणादेवसम्बन्धः प्रतीयतेसाविनियोक्त्री। साऽपि त्रिविधा। विभक्तिरूपा॰ एकाभिधानरूपा॰ एकरूपाचेति। तत्रविभक्तिश्रुत्याङ्गत्वम्॰ यथाव्रीहिभिर्यजेतेति॰ तृतीयाश्रुत्या॰ व्रीहीणांयागाङ्गत्वम्॰ तदपिपुरोडाशप्रकृतितया॰ अरुणयाएकहायन्यागवासोमंक्रीणातीत्यस्मिन्वाक्ये चारुण्यस्यापितृतीयाश्रुत्याक्रयाङ्गत्वम्॰ तदपिगोरूपद्रव्यपरिच्छेदद्वारा॰ नतुसाक्षादमूर्त्तत्वात्। व्रीहीन्प्रोक्षतीतिप्रोक्षणस्यव्रीह्यङ्गत्वं द्वितीयाश्रुत्या॰ तच्चप्रोक्षणं॰ नव्रीहिस्वरूपार्थं तस्यतेनविनाप्युपपत्तेः। किन्त्वपूर्वसाधनत्वप्रयुक्तम्॰ व्रीहीन्प्रोक्ष्ययागानुष्ठानेऽपूर्वानुपपत्तेः। एवंसर्वत्राङ्गेषु॰ अपूर्वप्रयुक्तमङ्गत्वंबोध्यम्। एवमिमामपभ्रम् शन् रसनामृतस्येत्यत्राभिधानीया

दत्त॰ इत्यत्र॰ द्वितीयाश्रुत्या॰ मन्त्रस्याश्वाभिधान्यङ्गत्वम् । यदाहवनीये जुहोतीत्याहवनीयस्य होमाङ्गत्वं सप्तमीश्रुत्या । एवमन्योऽपि विभक्तिश्रुत्या विनियोगो ज्ञेयः । पशुना यजेतेत्यत्र एकत्वपुंस्त्वयोः समानाभिधानश्रुत्या कारकाङ्गत्वम् । यजेतेत्याख्यातेनाऽभिहितसङ्ख्याया भावनाङ्गत्वम् समानाभिधानश्रुतेरेव पदश्रुत्या च यागाङ्गत्वम्॰ न चामूर्त्तायास्तस्याः कथं भावनाङ्गत्वम्॰ कर्त्तृपरिच्छेदद्वारा तदुपपत्तेः । कर्त्ता चात्रोपलभ्यः॰ आख्यातेन हि भावनोच्यते॰ सा च कर्त्तारं विनाऽनुपपन्नेति तमाक्षिपति । सेयं श्रुतिर्लिङ्गादिभ्यः प्रबला॰ लिङ्गादिषु न प्रत्यक्षो विनियोजकः शब्दोऽस्ति॰ किन्तु कल्प्यः । यावच्च तैर्विनियोजकः शब्दः कल्प्यते॰ तावत् प्रत्यक्षया श्रुत्या विनियोगस्य क्लृप्तत्वेन॰ तेषां कल्पकत्वशक्तेर्व्याहतत्वात् । अत एवैन्द्र्या लिङ्गेनेन्द्रोपस्थानार्थत्वम्॰ किन्त्वैन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र॰ गार्हपत्यमिति द्वितीयाश्रुत्या॰ गार्हपत्योपस्थानार्थत्वम् ॥ अत्र देवीगीतायां देवीवाक्यं यथा । सर्वज्ञायाः सर्वशक्तेर्मे कोवेदः समुत्थितः । अज्ञानस्य ममाभावादप्रमाणानपश्रुतिरिति सर्वज्ञात्-



सर्वशक्तेश्च मत्त इति पाठे तु मत्तो मत्स्वरूपादित्यर्थः ॥ प्रयोगविध्युपयोगिनि प्रमाणविशेषे ॥ तत्र क्रमपरं वचनं श्रुतिः । तच्च द्विविधम् । केवलक्रमपरम्॰ तद्विशिष्टपदार्थक्रमपरञ्च । तत्र वेदं कृत्वा वेदिं करोतीति केवलक्रमपरम्॰ वेदिकरणादेर्वचनान्तरप्राप्तत्वात् । वषट्कर्त्तुः प्रथमभक्ष इति तु क्रमविशिष्टपदार्थपरम्॰ एकप्रसरताभङ्गभयेन भक्षानुवादेन क्रममात्रस्य विधातुमशक्यत्वात् । सेयं श्रुतिरितरप्रमाणापेक्षया बलवती॰ तेषाञ्च वचनकल्पनद्वारा क्रमप्रमाणत्वात् । अत एवाश्विनग्रहस्य पाठक्रमात् तृतीयस्थानेऽग्रहणप्रसक्तावाश्विनो दशमो गृह्यत इति वचनाद्दशमस्थाने ग्रहणमित्युक्तम् । कर्णे । अस्य पर्यायाः । कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः ॥ अस्य शुभाशुभलक्षणं यथा । रक्ताल्पपरुषस्थूलकर्णाः स्युः पापमृत्यवः । निर्मांसैश्चिपिटैर्भोगाः कृपणाः स्वल्पकर्मकाः ॥ शङ्कुकर्णाश्च राजानो रोमकर्णाः शतायुषः । हस्वत्कर्णाश्च राजानो धनिनः परिकीर्त्तिताः ॥ श्रवणे । वाक्यजनितवाक्यार्थविज्ञाने । मनननिदिध्यासनसहकृतश्रवणज्ञाने ॥ श्रोत्रकर्मणि ॥

वार्त्तायाम् ॥ अभ्यासे ॥ षड्जादिस्वरारम्भकःशब्दविशेषे ॥ तदुक्तम् । प्रथमश्रवणाच्छब्दः श्रूयतेह्रस्वमात्रकः । साश्रुतिः सम्परिज्ञे यास्वरावयवलक्षणेति ॥ श्रवणे ॥ श्रूयते । स्त्रियांक्तिन्निति कर्मणिक्तिन् ॥ श्रूयतेधर्मोऽनयेति वा । श्रुयजीषिस्तुभ्यः करणइति क्तिन् ॥

श्रुतिकटः । पुं० प्रायश्चित्ते ॥ सर्पे ॥ पापशोधने । प्रायश्चित्ते ॥ इ० मेदिनिहेमचन्द्रौ ॥

श्रुतिकटुः । पुं० कठोरशब्दे ॥

श्रुतिजीविका । स्त्री० स्मृतौ ॥

श्रुतितत्पर । त्रि० वेदाभ्यासरते ॥ सकर्णे ॥

श्रुतिधरः । त्रि० श्रुतमात्रेणधारके ॥ तदौषधमुक्तंगारुडे यथा । हरिद्राच । हस्तिकर्णश्चवेमूलंगृहीत्वाचूर्णयेद्बरः । सर्वरोगविनिर्मुक्तश्चूर्णंपलशतंशिव ॥ सक्षीरं भक्षितंकुर्यात्मन्त्रेणानेनवृषध्वज । नरंश्रुतिधरंशूरंमृगेन्द्रगतिविक्रमम्पद्मगौरप्रतीकाशंयुक्तंदशशतायुषा । षोडशाब्दाकृतिंविप्रसततंदुग्धभोजितम् । मधुसर्पिःसमायुक्तंजगधमायुष्करंभवेत् । तज्जग्धंमधुनासार्द्धंदशवर्षसहस्रिणम् । कुर्यान्नरंश्रुतिधरंप्रमदाजनवल्लभ-

मिति ॥ १८१ अध्यायः ॥

श्रुतिवर्ज्जितः । त्रि० वधिरे ॥ नास्तिके ॥ श्रुतिभ्यां० श्रुत्यावावर्ज्जितः ॥

श्रुतिवेधः । पुं० कर्णवेधे ॥

श्रुतिस्फोटा । स्त्री० कर्णस्फोटायाम् । विपुटायांलतायाम् ॥

श्रुत्युपनिषत्कः । त्रि० ज्ञानिनि ॥

श्रेटौ । स्त्री० लीलावत्युक्ताङ्कविशेषे ॥

श्रेणिः । पुं० स्त्री० वीथ्याम् । आली । एकजाती ॥ समानशिल्पिसंहतौ । कारुसंहतौ । एकेनशिल्पेनपण्येनवायेजीवन्ति० तेषांसमूहे ॥ श्रयति० श्रीयतेवा । श्रिञ्० । वह्निश्रीत्यादिनानिः ॥ एकमुख्येसजातिसमूहे ॥ सेकपात्रे ॥

श्रेणिकः । पुं० मगधदेशीयनृपतिविशेषे ॥ इतिहेमचन्द्रः ॥

श्रेणी । स्त्री० श्रेणिशब्दार्थे ॥

श्रेणीधर्मः । पुं० वणिगादीनांधर्मे ॥

श्रेयः । न० मुक्तौ । निर्वाणे । निःश्रेयसे । वेदबोधितेपरमपुरुषार्थे । स्वरूपावस्थाने । अनपायिसुखावाप्तिलक्षणे । आगमज्ञापितेहिते ॥ यथा । वृद्धेवनरकव्याधेश्चिकित्सांनकरोतियः । गत्वानिरौषधंदेशंव्याधिस्थः किंकरिष्यति ॥ यावत्तिष्ठतिदेशीयतावत्तत्त्वंसमभ्यसेत् । सन्दीप्तेभवनेकोनुकूपंखनतिपार्वे

ति । व्याघ्रीवास्ते जरा चायुर्याति भिन्नघटाम्बुवत् । निघ्नन्ति रिपुवद्रोगास्तस्माच्छ्रेयः समाचरेत् ॥ यावन्नाश्रयते दुःखं यावन्नायान्ति चापदः । यावन्नेन्द्रियवैकल्यं तावच्छ्रेयः समाचरेत् ॥ कालो न ज्ञायते नानाकार्यैः संसारसम्भवैः । सुखदुःखैर्जनो हन्त न वेत्ति हितमात्मनः ॥ इति कुलार्णवे प्रथमोल्लासः ॥ कल्याणे । मङ्गले । शुभे ॥ धर्मे । । वेदविहितैः प्राणिनामभ्युदयनिःश्रेयससाधने॰ प्रवृत्तिनिवृत्तिलक्षणे । पुण्ये ॥ त्रि॰ अतिप्रशस्ते । शस्ते ॥ इदमनयोरतिशयेन प्रशस्तम् । द्विवचनेतीयसुन् । प्रशस्यस्य श्रः । विद्याद्यधिके ॥ धर्मार्थावुच्यते श्रेयः॰ कामार्थौ॰ धर्म एव च । अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः ॥ अयमुपदेशो बुभूत्सून् प्रति बोध्यः ॥

श्रेयसी । स्त्री॰ करिपिप्पल्याम् ॥ अभयायाम् ॥ पाठायाम् । शठाम्बायाम् ॥ श्रेष्ठायाम् ॥ उगित्वान्ङीप् ॥

श्रेयांसः । पुं॰ व्रतार्हद्विशेषे ॥

श्रेष्ठः । पुं॰ कुबेरे । धनदे ॥ विप्रे ॥ नृपे ॥ मुख्यप्राणे । न॰ गोदुग्धे । गव्ये ॥ त्रि॰ अग्र्ये । वरे । पुष्कले । सत्तमे । अतिशोभने ॥ अयमेषामतिशयेन प्रशस्यः । अतिशायने तमबिष्ठनाविति ष्ठन् । प्रशस्यस्य श्रः ॥ प्रधानभूते ॥ ज्येष्ठे ॥ वृद्धे ॥

श्रेष्ठकाष्ठः । पुं॰ शाकवृक्षे ॥

श्रेष्ठता । स्त्री॰ श्रेष्ठत्वे ॥

श्रेष्ठा । स्त्री॰ स्थलपद्मिन्याम् । उत्तमार्थानार्थम् ॥ ज्येष्ठानक्षत्रे ॥

श्रेष्ठाम्लम् । न॰ वृक्षाम्ले ॥

श्रेष्ठी । पुं॰ कुलोत्तमशिल्पिनि ॥

श्रोणः । त्रि॰ जङ्घाहीने पङ्गौ ॥ श्रोणति । श्रोणृ सङ्घाते । पचाद्यच् ॥ यद्वा । शृणोति । श्रु॰ । बाहुलकान्नः ॥

श्रोणिः । स्त्री॰ कट्याम् ॥ श्रोणति । श्रोणृ॰ । इन् ॥ यद्वा । श्रूयते पुम्भिः । श्रु॰ । वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् इति निः ॥ पथि ॥

श्रोणीफलम् । न॰ कटौ ॥

श्रोणीफलकम् । न॰ कटिपार्श्वे । कटे ॥ श्रोणिः फलकमिव॰ चर्माकारत्वात् ॥

श्रोणिबिम्बम् । न॰ कटिसूत्रे ॥

श्रोणिसूत्रम् । न॰ खड्गबन्धनसूत्रे । परतला॰ इ॰ भा॰ प्र॰ ॥

श्रोणी । स्त्री॰ कट्याम् ॥ पथि ॥ कृदिकारादिति पक्षे ङीष् ॥

श्रोतव्यः । त्रि श्रवणीये । श्रोतुं योग्ये । श्रोतव्यः श्रुतिवाक्येभ्यो म

काव्यश्चोपपत्तिभिः ॥

श्रोत्रः । न० कर्णे ॥

श्रोता । त्रि० श्रवणकर्त्तरि । योह्यर्थं सम्यगवबुध्यते स एव श्रोता भवति ॥ यथा । वक्तुरेव हि तज्जाड्यं श्रोता यत्र न बुध्यते । इति ॥ अपि च । बोधविहीने श्रोतरि वक्तुर्वाक्यं प्रयाति वैफल्यम् । नयनविहीने भर्त्तरि लावण्यमिव खञ्जनाक्षीणामिति ॥ शृणोति । श्रु० । तृच् ॥

श्रोत्रम् । न० श्रुतौ । कर्णे । शब्दग्रहणलिङ्ग इन्द्रियविशेषे । शब्दाभिव्यञ्जकेन्द्रिये ॥ शृणोत्यनेनेति श्रोत्रम् । शब्दस्य श्रवणं प्रति करणम् । श्रूयतेऽनेन वा । श्रु० । हुयामाश्रुभसिभ्यस्त्रन्निति त्रन् ॥ कर्णशष्कुल्यवच्छिन्नं नभ एव श्रोत्रम् ॥

श्रोत्रियः । पुं० छान्दसे । अधीतवेदे ॥ विद्याचारवति । स्नातके ॥ छन्दोऽधीते । श्रोत्रियंश्छन्दोऽधीत इति । छन्दः शब्दस्य श्रोत्रभावो घन्प्रत्ययश्छन्दोऽध्यायिनि निपात्यते ॥ छन्दोमात्राध्यायिनि ॥ श्रोत्रियलक्षणं यथा । जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते । विद्याभ्यासी भवेद्विप्रः श्रोत्रियस्त्रिभिरेव हि ॥ इति पाद्मे उत्तरखण्डे ११६ अध्यायः ॥ अपि च । एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य च । षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित् ॥ इति दानकमलाकरः ॥

श्रोत्रियता । स्त्री० श्रौत्रे । श्रोत्रियत्वे ॥

श्रोत्रियत्वम् । न० श्रौत्रे । वेदवेदाङ्गपारगत्वे । वेदान्तार्थपारगत्वे ॥ श्रोत्रियस्वभावः । स्वः श्रोत्रियो कामराहित्यात्सर्वानन्दाः सहस्थिताः । सोऽश्नुते सकलान्कामान्सहेति प्राह तित्तिरिः ॥

श्रौतम् । न० अग्नित्रये । गार्हपत्याहवनीयदक्षिणाग्निषु । त्रि० वेदसम्बन्धे ॥ श्रुतौ भवम् । श्रुतेरिदमित्याद्यर्थेषु वा । शैषिकोऽण् । श्रुतिविहितधर्मादौ ॥ यथा । धर्मज्ञैर्विहितो धर्मः श्रौतः स्मार्त्तो द्विधा द्विजैः । दानाग्निहोत्रसम्बन्धमिज्या श्रौतस्य लक्षणम् ॥ स्मार्त्तो वर्णाश्रमाचारो यमैश्च नियमैर्युतः । पूर्वेभ्यो वेदयित्वेह श्रौतं सप्तर्षयोऽब्रुवन् ॥ ऋचो यजूंषि सामानि ब्रह्मणोऽङ्गानि सा श्रुतिः । मन्वन्तरस्यातीतस्य स्मृत्वा तन्मनुरब्रवीत् ॥ ततः स्मार्त्तः स्मृतो धर्मो वर्णाश्रमविभागशः । एवं वै द्विविधो धर्मः शिष्टाचारः स उच्यते । विज्ञेयः श्रवणाच्छ्रौतः स्मरणात्स्मार्त्त उच्यते ॥ इज्या वेदात्मकः

श्रौत : स्मार्त्तीश्चर्णाश्रमात्मकइति मात्स्ये १२॰ अध्याय : ॥

श्रौतयज्ञ : । पुं॰ अग्निष्टोमादर्शपौर्णमासादौ ॥ सुत्याप्रोक्त : श्रौत: । अण् । सचासौयज्ञश्च ॥

श्रौतसंस्कृति : । स्त्री॰ वेदोक्तसंस्क्रियायाम् । यथा । गृहस्थस्यक्रिया: सर्वाआगमोक्ता: कलौशिवे । नान्यमार्गै: क्रियासिद्धि: कदापिगृहमेधिनाम् ॥ भैचकुर्य्यागमेदैर्विवेदोक्तं दण्डधारणम् । कलौनास्त्येवतत्त्वज्ञे यतस्तच्छ्रौतसंस्कृतिरिति म॰ नि॰ तन्त्रम् ॥

श्रौत्रम् । न॰ श्रोत्रियतायाम् । श्रोत्रियस्यकर्मभावोवा । युवादित्वादण्॰ श्रोत्रियस्ययलोपश्च ॥ श्रोत्राणांसमूहे ॥ भिक्षादण् ॥

श्रौषट् । अ॰ देवहविर्दाने ॥ श्रूयतेऽनेन । श्रु॰ । बाहुलकात्॰ डौषट् ॥

श्लक्ष्ण : । त्रि॰ स्तोके । अस्यपर्य्यायायथा । स्तोकाल्पक्षुल्लका: सूक्ष्मंश्लक्ष्णंदभ्रंकृशंतनु । स्त्रियांमात्रात्रुटि॰ पुंसिलवलेशकणाणव : ॥ इति ॥ मनोहरे ॥ सुखस्पर्शे । अपरुषे । स्निग्धे ॥ श्लिष्यति॰ श्लिष्यतिवा । श्लिषआलिङ्गने । श्लिषेरच्चोपधाया इतिक्स्न : ॥

श्लक्ष्णकम् । न॰ पूगफले ॥

श्लक्ष्णतीक्ष्णाग्रम् । न॰ शृङ्गे । शृङ्गी ॥ श्लक्ष्णंकृशञ्चतत्तीक्ष्णञ्च॰ तच्चतदग्रञ्च ॥

श्लक्ष्णत्वक् । पुं॰ अश्मन्तकवृक्षे ॥ सुन्दरवल्कले ॥

श्लक्ष्णभूमि : । स्त्री॰ कृष्णमृदि ॥

श्लथ : । त्रि॰ शैथिल्याढ्ये । शिथिले ॥

श्लाघनम् । न॰ अभिनन्दने ॥

श्लाघा । स्त्री॰ अभिलाषे । इच्छायाम् ॥ उपास्तौ । परिचर्य्यायाम् ॥ प्रशंसायाम् । अविद्यमानगुणसम्बन्धख्यापने ॥

श्लाघिष्ठ : । त्रि॰ श्लाघ्यतमे ॥

श्लाघ्य : । त्रि॰ प्रशंस्ये । श्लाघनीये । स्तुत्ये ॥ आशास्ये ॥

श्लिकु : । पुं॰ सेवके । भृत्ये ॥ श्लिष्यति॰ यावत्कार्य्यंलगतिव्याप्रियते । श्लिषआलिङ्गने । श्लिषे : कचेति कु : कस्यान्तादेश : ॥ षिङ्गे ॥ न॰ ज्योति : शास्त्रे ॥

श्लिषा । स्त्री॰ आलिङ्गने ॥

श्लिष्ट : । त्रि॰ सम्पृक्ते । गत्यर्थाऽकर्म्मकेति॰ श्लिषि : क्त : ॥ श्लेषयुक्तशब्दादौ । भिन्नार्थैकरूपान्वितवाक्ये ॥ तल्लक्षणं यथा । श्लिष्टमिष्टमविस्पष्टमेकरूपान्वितं वच इति ॥

श्लीपदम् । न॰ पादरुग्भिदि । पादवल्मीके ॥ अस्यनिदानन्तु । य : सज्वरोवङ्क्षणयोर्भृशार्त्ति : शो

शोन्तर्णापादगत : क्रमेण । तच्छ्रीपदंख्यातकरकर्णनेत्रशिश्नोष्ठनासास्वपिकेचिदाहु : ॥ पुराणोदकभूयिष्ठा : सर्वर्त्तुषु च शीतला : । ये देशास्तेषु जायन्ते श्लीपदानि विशेषत : । इति ॥ विशेषतइत्युक्तेरन्यत्रापिभवतीतिबोध्यते ॥

श्लीपदप्रभव : । पुं॰ आम्रवृक्षे ॥

श्लीपदापह : । पुं॰ पुत्रजीववृक्षे ॥

श्लीपदी । त्रि॰ व्याधिनास्थूलचरणे ।

श्लील: । त्रि॰ लक्ष्मीवति । श्रीले ॥ श्रियंलाति । ला॰ । क : । कपिलकादित्वाल्लत्वम् ॥

श्लेष : । पुं॰ संयोगे । सम्बौ ॥ शब्दालङ्कारविशेषे । तस्य लक्षणादयो यथा । वाच्यभेदेनभिन्नायद्युगपद्भाषणस्पृश : । श्लिष्यन्तिशब्दा : श्लेषोसावक्षरादिभिरष्टधा । अर्थभेदेन शब्दभेदइतिदर्शने॰ काव्यमार्गेस्वरोनगण्यतइतिचमये॰ वाच्यभेदेन भिन्नाअपिशब्दायद्युगपदुच्चारणेन श्लिष्यन्ति॰ भिन्नस्वरूपमपह्नुवते॰ सश्लेष : । सवर्णपदलिङ्गभाषाप्रकृतिप्रत्ययविभक्तिवचनानांभेदादष्टधा । क्रमेणोदाहरणम् । अलङ्कार : शङ्काकरनरकपालं परिजनो विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवया : । अवस्थेयं स्थाणोरपि भवति सर्वामरगुरोर्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥ विधौचन्द्रे एव॰ विधौ दैवे वक्रे कुटिलेएव॰ वक्रे प्रतिकूले॰ मूर्ध्नि मस्तके स्थितवति सति सर्वामरगुरोर्महादेवस्यापीयमवस्थाभवति॰ अमीमानुषावयंपुन : केकस्यांगणनायामित्यर्थ : । अत्रविधावित्युभयो॰ वर्णयो : श्लेष : ॥ पृथुकार्त्तस्वरपात्रं भूषितनि : शेषपरिजनं देव । विलसत्करेणुगहनं सम्प्रति सममावयो : सदनम् ॥ भक्तिप्रह्वविलोकनप्रणयिनी । नीलोत्पलस्पर्धिनी । ध्यानालम्बनताम् । समाधिनिरतैर्नीते हितप्राप्तये । लावण्यैकमहानिधौ रसिकतां लक्ष्मीदृशो स्तन्वती युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे तनुर्वा हरे : । एषवचनश्लेषोपि ॥ महदे सुरसन्धम्मे तमव समासङ्गमागमाहरणे । हरबहुसरणं तं चित्तमोहमवसरउमे सहसा ॥ अयं सर्वाणि शास्त्राणि हृदिज्ञेषु च वक्ष्यति । सामर्थ्यकृदमित्राणांमित्राणांच नृपात्मज : ॥ रजनिरमणमौलै : पादपद्मावलोकक्षणसमयपराप्तापूर्वसम्पत्सहस्रम् । प्रथमनिबहमध्ये जातुचित्तप्रमाद्दहमुचितरुचि : स्यां नन्दितासातथामे ॥ सर्वस्वंहरसर्वस्यत्वंभवच्छेदतत्पर : । नयोपकार

साम्मुख्यमायासितनुवर्त्तनम् । भेदाभावात्प्रकृत्यादेर्भेदोऽपिनवमोभवेत् । नवमोऽपीत्यपिभिन्नक्रमः ॥ उदाहरणम् । योऽसकृत्परगोत्राणांपक्षच्छेदक्षणक्षमः । शतकोटिदतांबिभ्रद्विबुधेन्द्रः सराजते ॥ अत्रप्रकरणादिनियमाभावात् द्वावप्यर्थौशाच्यौ ॥ अर्थालङ्कारविशेषे ॥ तल्लक्षणादयोयथा । श्लेषः सवाक्यएकस्मिन्यत्रानेकार्थताभवेत् ॥ एकार्थप्रतिपादकानामेवशब्दानांयत्रानेकोऽर्थः सश्लेषः । उदाहरणम् । उदयमयतेदिङ्मालिन्यंनिराकुरुतेतराम् नयतिनिधनंनिद्रामुद्रांप्रवर्त्तयतिक्रियाः । रचयतितरांस्वैराचारप्रवर्त्तनकर्त्तनम् बत बत लसत्तेजःपुञ्जोविभातिविभाकरः ॥ अत्राभिधायानियन्त्रणात् द्वावप्यर्कभूपौवाच्यौ ॥ श्लेषणम् । श्लिष । घञ् ॥ ऐक्ये ॥ श्लिष्यति । श्याद्यर्थेतिणः ॥

श्लेषणम् । न० एकीभवने ॥

श्लेष्मकः । पुं० कफे ॥

श्लेष्मकरः । त्रि० कफवर्द्धकद्रव्येषु ॥ तानियथा । भोजनानन्तरंस्नानंजलपानंतृषांविना । तिलतैलंस्निग्धतैलंस्निग्धामामलकीद्रवम् ॥ पर्युषितान्नंतक्रञ्चपक्वंरम्भाफलंदधि । माध्वीशर्करातोयंसुस्निग्धस्थलसेवनम् ॥ नारिकेलोदकंरूक्षस्नानंपर्युषितंजलम् । तरमुज्ञापक्वफलंसुपक्वंकर्कटीफलम् ॥ वातस्नानञ्चवर्षासुमूलकंश्लेष्मकारणम् । तज्जलंब्रह्मरन्ध्रेचमहद्वीर्यविनाशनमिति० ब्र० वै० १६ अध्यायः ॥

श्लेष्मघना । स्त्री० मल्ल्याम् ॥ केतक्याम् ॥

श्लेष्मघ्नः । त्रि० श्लेष्मनाशके । न० मधुनि ॥ श्लेष्माणांहन्ति । हन० । अमनुष्येतिटक ।

श्लेष्मघ्ना । स्त्री० मल्लिकायाम् ॥ कम्पिल्लके ॥ इ० हे० न्द्रः ॥

श्लेष्मघ्नी । स्त्री० मल्लिकायाम् ॥ ज्योतिष्मत्याम् ॥ टित्वान्ङीष् ॥ त्रिकटुनि । व्योषे । इ० मे० करः ॥

श्लेष्मणः । पुं० श्लेष्मले । बहुवारके ॥ सन्धिस्थकफे । त्रि० श्लेष्मवति । श्लेष्मास्त्यस्य । पामादित्वान्नः ॥

श्लेष्मणा । स्त्री० वृक्षभेदे । तपर्य्याम् । गुरुस्कन्धे ।

श्लेष्मा । पुं० कफे ॥ तत्प्रकोपहेतुर्यथा । गुरुमधुररसातिस्निग्धदुग्धेक्षुभक्ष्यद्रवदधिदिननिद्रापूपसर्पिःप्रपूरैः । तुहिनपतनकाले श्लेष्मणः सम्प्रकोपः प्रभवति

दिवसादौ भुक्तमात्रे वसन्ते ॥ तल्लक्षणं यथा । स्तैमित्यं मधुरास्यता शिशिरता शौक्ल्यं प्रसेकोमलप्राचुर्य्यं स्थिरता रसञ्चलक्षणः कण्डूरतिस्वल्पता । आलस्यं चिरकारिता कठिनता शोथारुचिः स्निग्धता तन्द्रा तृप्त्युपदेहकासगुरुता एताः कफोत्था रुजः ॥ तत्प्रशमताकारणं यथा । गुरुशीतमृदुस्निग्धं मधुरस्थिरपिच्छिलाः । श्लेष्मणः प्रशमं यान्ति विपरीतगुणैर्गुणाः ॥ रूक्षक्षारकषायतिक्तकटुकव्यायामनिष्ठीवनस्त्रीसेवाधुनियुद्धजागररतिक्रीडापदाघातनम् । धूमात्युष्णशिरोविरेकवमनं स्वेदोपनाहादिकं पानाहारविहारभेषजमिदं श्लेष्माणमुग्रं जयेत् ॥ श्लिष० । सर्व्वधातुभ्यो मनिन् ॥

श्लेष्मलः । पुं० शेलौ । श्लेष्मातके ॥ त्रि० श्लेष्मयुक्ते । कफिनि ॥ श्लेष्मा अस्ति । सिध्मादिभ्यश्चेति पक्षे लच् ॥

श्लेष्मवान् । त्रि० श्लेष्मले ॥ लजभावे मतुप् ॥

श्लेष्महः । पुं० कट्फलवृक्षे ॥

श्लेष्महरः । त्रि० श्लेष्महरद्रव्येषु ॥ तानि यथा । बह्निस्वेदं भृष्टभङ्गं पक्वतैलं विशोषकम् । भ्रमणं शुष्कभक्ष्यं च शुष्कपक्वहरीतकी । पिण्डारकमपक्वं च रम्भाफलमपक्वकम् । शिखवारं सिन्धुवारमनाहारमपानकम् ॥ सघृतं रोचनाचूर्णं सघृतं शुक्लशर्करम् । मरीचं पिप्पलीं शुष्कमार्द्रकं जीरकं मधु ॥ द्रव्याण्येतानि गन्धर्व्व सद्यः श्लेष्महराणि चेति ब्र० वै० १६ऽध्यायः ॥

श्लेष्मातः । पुं० श्लेष्मातके । बहुवारके ॥

श्लेष्मातकः । पुं० शेलौ । शैलै । बहुवारके । लसोड़ा० इ० भा० प्र० ॥ श्लेष्माणमतति । अत सातत्यगमने । कुन्शिल्पिसंज्ञयोरपूर्व्वस्यापि ॥

श्लैष्मिकः । त्रि० कफजे ॥ श्लेष्मणः शमनं कोपनं वा । वातपित्तश्लेष्मभ्यः शमनकोपनयोरिति ठञ् । कफशमने ॥

श्लोकः । पुं० पद्ये । अनुष्टुप्प्रभेदे ॥ यथा । पञ्चमो लो गुरुः षष्ठः सप्तमस्तु समे लघुः । पादे द्विविषमे गश्चेच्छ्लोकोऽनुष्टुप् च कीर्त्तितः ॥ क्वचित् पादे तु विषमे पञ्चमाद्यास्त्रयोऽपि लाः । तत्रापि सर्व्वगाः श्लोके क्वचित् केवलपञ्चमः ॥ यशसि ॥ यथा । पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः । पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्द्दनः ॥ वेदमन्त्रे ॥ सङ्घाते ॥ श्लोक्य

ते ॥ श्लोकसङ्घाते । घञ् ॥

श्लोककारः । पुं० वाल्मीकिमुनौ । श्लोककृति ॥ श्लोकं करोतिकर्मण्यण् ॥

श्लोक्यः । त्रि० पुण्यकीर्त्यर्हे ॥

श्वःकार्य्यम् । न० आगामिन्यह्नि कर्त्तव्ये ॥ यथा । श्वः कार्य्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ॥ नहि मृत्युः प्रतीक्षेत कृतं वाप्यथवाकृतम् ॥ इति कुलार्णवतन्त्रम् ॥

श्वःश्रेयसम् । न० शिवे । भद्रे । कल्याणे । मङ्गले । शुभे । प्रशस्ते अर्थे परपदस्यास्य श्वःशब्दः कालवाच्यपि । अभिधत्ते स्वभावेन नैमी मङ्गलार्थकाविति पाणिनीयमतदर्पणः ॥ परमात्मनि । परानन्दे । धर्मणि । शान्ते । सुखे ॥ श्वः आगामी श्रेयोऽत्र । श्वसीवसीयः श्रेयसश्चेत्यच् समासान्तः ॥ श्वः श्रेय इति विग्रहे मयूरव्यंसकादित्वात्समासः ॥

श्वगणः । पुं० कुक्कुरसमूहे ॥

श्वगणी । त्रि० शुनां पोषके ॥ श्वगणो ऽस्यस्तीनिः ॥

श्वग्राही । त्रि० शुनां पोषके ॥ शुनां ग्राही ॥

श्वचक्रम् । न० कुक्कुरचेष्टायाम् ॥ पश्य वाराह्याम् ॥

श्वदंष्ट्रकः । पुं० गोक्षुरे ॥

श्वदंष्ट्रा । स्त्री० गोकण्टके । गोक्षुरके शुनोदंष्ट्रेव ॥

श्वधूर्त्तः । पुं० शृगाले ॥

श्वा । पुं० ग्राममृगे । अस्य पर्याया यथा । कौलेयकः सारमेयः कुक्कुरो मृगदंशकः । शुनको भषकः श्वा श्यादिति ॥ शुनो लक्षणं यथा । पादाः पञ्चनखास्त्रयोऽग्रचरणः षड्भिर्नखैर्दक्षिणस्ताम्रौष्ठाग्रनखो मृगेश्वरगतिर्जिघ्रन्भुवं याति च । लाङ्गूलं ससटं दृगृक्षसदृशी कर्णौ च लम्बौ मृदू यस्य स्यात् स करोति पोष्टुरचिरात्पुष्टां श्रियं वै गृहे ॥ इति वाराही ॥ अस्य परीक्षा तु मृगयार्थं शाकुनार्थं कौतुकार्थमपीक्षिता । श्वानः पोष्यास्ततस्तेषां मनवच्म्यालक्षणम् ॥ गुणजातिप्रभेदेन शुनो भेदा ह्यनेकशः । सात्त्विका राजसाश्चैव तामसाश्च विधा मताः ॥ अश्रान्ताश्च परिक्षीणाः पवित्राः स्वल्पभोजिनः । श्वानस्ते सात्त्विकाः प्रोक्ता दृश्यन्ते च क्वचित्क्वचित् ॥ १ ॥ कृशा बहुभुजो दीर्घा गुरुवक्षस्तनूदराः । जाङ्गलस्था जाङ्गिकाश्च शुनस्ते राजसा मताः ॥ २ ॥ अल्पश्रमेणैव श्रान्ता लम्बजिह्वा गुरूदराः । श्वानस्ते तामसा ज्ञेयाः सन्ध्यावनसमाश्रयाः ॥ ३ ॥ ब्रह्मादिजातिभेदेन चतुर्द्धा सर्व एव हि । शुभ्रा दीर्घास्तन्वकर्णा लघुपुच्छास्तनूदराः

पास्तथा । वध्यवासांसि गृह्णीयुः शय्याश्चाभरणानि चेति मनुः ॥ चण्डालः श्वपचः क्षत्तासूतो वैदेहकस्तथा । मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः ॥ इत्यङ्गिराः ॥ श्वपचः डोम० डुमडा० इ० भा० प्र० ॥ श्वानं पचति । डुपचष्० । पचाद्यच् ॥

श्वपदम् । न० कुक्कुरपादे ॥

श्वपाकः । पुं० निषादे । चण्डाले ॥ तस्योत्पत्तिर्यथा । क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्त्यते० इति मनुः । शूद्रेण वैश्यायां जातः क्षत्ता ० क्षत्रियेण शूद्रायां जाता उग्रा० तेन तस्यां जातः श्वपाक इत्युच्यत इति कुल्लूकभट्टः ॥

श्वफलः । पुं० बीजपूरे ॥

श्वफल्कः । पुं० वृष्णिपुत्रे । अक्रूरपितरि ॥

श्वफल्कपुत्रः । पुं० अक्रूराख्ययादवे ॥

श्वभीरुः । पुं० फेरौ । शृगाले ॥

श्वभ्रम् । न० भूच्छिद्रे । तत्पर्याया यथा । कुहरं शुषिरं विवरं बिलम् । छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषिरिति ॥ श्वभ्रयति । श्वभ्रगतौ । अन्तः । पचाद्यच् ॥ शुभ्राभगमभ्रं व्योमाचवा ॥ विदीर्णभूभागे ॥

श्वयथुः । पुं० शोथे । त्वग्विवर्द्धने श्वयति० श्वयनमनेनवा । टुओश्विगतिवृद्ध्योः । ट्वितोऽथुच् ॥

श्वयीचिः । पुं० चन्द्रे ॥ व्याधौ ॥ श्वयति । टुओश्वि० । श्वयते श्छिदितीईचिः । गुणायादेशौ ॥

श्ववृत्तिः । स्त्री० सेवायाम् । चाकरी० इ० भा० प्र० ॥ सेवा तु दीनदृष्टिसंदर्शनस्वामितर्जननीचक्रियादिधर्मयोगात् श्वनो वृत्तिरिव । श्वनइव वृत्तिर्वा । सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेदिति मनुः ॥

श्वव्याघ्रः । पुं० श्वापदे । व्याघ्रादिहिंस्रपशौ ॥

श्वशुरः । पुं० पूज्ये ॥ पतिपत्न्योः पितरि ॥ पत्युः पिता पत्न्याः श्वशुरः० पत्न्याः पिता पत्युः श्वशुरः ॥ शुक्लाश्वयें० पूजायां वा । शुचम्सृते० चाश्यतेवा । अशूव्याप्तौ० संघातेच । आवशिराप्नावित्युरन् ॥

श्वशुरा । स्त्री० ब्राह्म्याम् ॥

श्वशुरौ । पुं० २ सहोक्त्या० श्वश्रूश्वशुरयोः । श्वश्रूश्च श्वशुरश्च तौ । श्वशुरः श्वश्र्वेति पाणिन्येकशेषः ॥

श्वशुर्य्यः । पुं० देवरे । श्याले ॥ श्वशुरस्यापत्यम् । राजश्वशुराद्यत् ॥

श्वश्रूः । स्त्री॰ सास्तुधियि । श्वशुरभार्य्यायाम् । पतिपत्न्योः प्रसूम् । पत्युर्मातापत्न्याः श्वश्रूः॰ पत्न्याः मातापत्युः श्वश्रूः । श्वशुरस्य स्त्री॰ श्वशुरस्योकाराकारलोपश्चेत्यूङ् । पुंयोगलक्षणस्य ङीषोऽपवादः ॥

श्वश्रूश्वशुरौ । पुं॰ २ सश्रूश्च श्वशुरश्च ॥ श्वश्रूश्च श्वशुरश्च तौ । श्वश्रूः पूर्वजपत्नी च मातृतुल्या प्रकीर्त्तितेति श्वश्र्वा अभ्यर्हितत्वात् पूर्वनिपातः ॥

श्वः । अ॰ अनागतदिने । आगामि अह्नः पृषोदरादिः । एषमो ह्यः श्वसोऽन्यतरस्यामिति निर्द्देशस्यात्रानुकूलः ॥

श्वसनः । पुं॰ स्पर्शने । वायौ ॥ मदनद्रुमे । मयनफलेतिप्रसिद्धे ॥ न॰ श्वसिते । श्वासे ॥ श्वसित्यनेन । श्वसप्राणने । ल्युट् ॥ निजर्त्तेविश्वसिति । नन्द्यादित्वाल्ल्युर्वा ।

श्वसना । स्त्री॰ श्वासोच्छ्वासवत्यायां धमन्याम् ॥

श्वसनाशनः । पुं॰ सर्पे ॥ श्वसनोऽशनं यस्य सः ॥

श्वसनेश्वरः । पुं॰ अर्ज्जुनद्रुमे ॥

श्वसनोत्सुकः । पुं॰ अहौ । सर्पे ॥

श्वसितम् । न॰ श्वासे ॥ उच्छ्वासमारुते । फूत्कारे ॥ श्वसिति । श्वस॰



। क्तः ॥

श्वसुनः । पुं॰ चतमे । कुबरौधा॰ हु॰ भा॰ प्र॰ ह्वर्ष ॥

श्वस्तनः । त्रि॰ श्वोभवे वस्तुनि ॥ एषमो ह्यः श्वसोऽन्यतरस्यामिति॰ त्यब भावे च्यु ल्यौ॰ तुट् च ॥ न॰ भविष्यत्काले । इति राजनिर्घण्टः ।

श्वस्त्यः । त्रि॰ श्वोभवे । श्वस्तने । एषमो ह्यः श्वसोऽन्यतरस्यामिति त्यप् ॥

श्वानम् । न॰ शुनां समूहे । खण्डिकादित्वादञ् ॥ पुं॰ कुक्कुरे ॥ शू॰ श॰ र॰ लौ ।

श्वानकः । पुं॰ शुनि ॥

श्वानचिल्लिका । स्त्री॰ शाकविशेषे । शुनकचिल्ल्याम् ॥

श्वानलोमापहः । पुं॰ तीर्थविशेषे ॥

श्वानी । स्त्री॰ शुन्याम् ॥

श्वापदः । पुं॰ व्याघ्रादिहिंस्रपशौ ॥ व्याघ्रादयो वनचराः पशवः श्वापदा मताः ॥ शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु शो दीर्घ्यो वाच्य इति दीर्घः ॥ त्रि॰ शौवापदे ॥ श्वापदस्येदम् । श्वापदस्यान्यतरस्यामिति पाक्षिकऐच् निषेधः ॥

श्वावित्॰ त् । पुं॰ शल्यपशौ । सा उ॰ दु॰ प्र॰ सूक्ष्मलोमवति ॥ श्वानं विध्यति । व्यध॰ । क्विप् । नहि वृतीति दीर्घः ॥

श्वाश्व : । पुं॰ भैरवे ॥

श्वास : । पुं॰ श्वसिते । प्राणिनां वायोरन्तः प्रवेशने । समाध्यङ्गे रेचकविरोधिनि । प्राणवायौ ॥ श्वसिति । श्वस॰ । श्वाद्येतिण : ॥ रोगविशेषे ॥ पिशुनो नरकः क्रान्तो जायते श्वासकासवान् । घृतं तेन प्रदातव्यं सहस्रपलसम्मितम् मतिमाता तत्पीयकर्म विपाकः ॥ अस्यौषधं यथा विभीतकस्य चूर्णं मधु श्वासनाशनम् ॥ पिप्पली त्रिफलाचूर्णं मधुसैन्धवसंयुतम् । सर्वरोगज्वरश्वासशोषपीनसहृद्रोगविदिति गारुडे १८८ अध्यायः ॥ घ्राणे ॥ हारीट्घाटने ॥

श्वासकास : । पुं॰ श्वासयुक्तकासरोगे । श्वासजनककासे ॥ यथा । कासवृद्ध्याभवेच्छ्वासः पूर्वैर्वा दोषकोपनैरिति गरुडपुराणम् ॥

श्वासकुठार । पुं॰ । श्वासरोगस्यौषधविशेषे ॥ यथा । रसोगन्धो विषञ्चापि टङ्कणञ्च मनः शिला । एतानि कर्षमात्राणि मरिचञ्चाष्टकर्षकम् ॥ कटुत्रयं कर्षयुग्मं पृथक् चूर्णानि : क्षिपेत् । रसः श्वासकुठारोयं सर्वश्वासनिवारण इति भावप्रकाश : ॥

श्वासप्रश्वासधारणम् । न॰ प्राणायामे ॥ श्वासप्रश्वासयोर्धारणं यस्मिन् तत् ॥

श्वासहेतिः । पुं॰ निद्रायाम् । स्वापे ॥

श्वासारि : । पुं॰ पुष्करमूले ॥

श्वासी । पुं॰ वायौ । त्रि॰ श्वासरोगिणि ॥

श्वित्रम् । न॰ श्वेतकुष्ठे । कुष्ठे ॥ श्वित्रति । श्वितावर्णे । स्फायितञ्चीतिरक् ॥ अस्यौषधन्तु । धात्रीखदिरयोः क्वाथं पीत्वा वज्रासुसंयुतम् । शङ्खेन्दुधवलं श्वित्रं हन्ति तूर्णं न संशयः ॥

श्वित्रघ्नी । स्त्री॰ पीतपर्ण्याम् । विकुटी॰ इति॰ गौ॰ भा॰ प्र॰ ॥

श्वित्री । त्रि॰ श्वेतकुष्ठवति । श्वित्रमस्यास्मिन्नस्ति । अतइनिठनाविति इनि : ॥

श्वेत : । पुं॰ शुभ्रवर्णे । सपेद॰ इ॰ भा॰ ॥ द्वीपविशेषे । श्वेतद्वीपे ॥ अद्रिविशेषे । इलावृतस्योत्तरे हिमवत्स्थयोजनविस्तीर्णः प्रागायतो हिरण्मयवर्षमर्यादागिरौ ॥ वानरविशेषे ॥ यथा रामायणे ॥ श्वेतोरजतसङ्काशचपलो भीमविक्रमः । बुद्धिमान्वानरवरस्त्रिपुलोकेषु विश्रुत इति ॥ कपर्द्दिके ॥ शुक्रग्रहे ॥ शङ्खे ॥ श्वेताभ्रे ॥ शिवावतारविशेषे ॥ न॰ रूप्ये । त्रि॰ शुक्लवर्णविशिष्टे ॥ श्वेतते । श्विता॰ । पचाद्यच् ॥

श्वेतकः । पुं॰ वराटके ॥ न॰ रूप्ये ॥

श्वेतआटकारी । स्त्री० नाकुल्याम् । आटरुषार्त्ताख्यां ॥

श्वेतकन्दा । स्त्री० अतिविषायाम् ।

श्वेतकिणिही । स्त्री० गिरिकर्णिकायाम् । शिरीषपर्ण्याम् । विषघ्निकायाम् । श्वेतापामार्गे च ॥

श्वेतकुञ्जरः । पुं० ऐरावते ॥ शुक्लगजे ॥ श्वेतश्चासौ कुञ्जरश्च ॥

श्वेतकुशः । पुं० तृणविशेषे ॥ सितदर्भे । ह्रस्वकुशे । पूते । यज्ञभूषणे । सूचीमुखे । पुण्यतृणे । बर्हिषि ॥

श्वेतकुष्ठम् । न० शुक्लकुष्ठे ॥ अस्यौषधं यथा । सोमराजबीजानि नवनीतयुतानि समधुमाखादितानि स्युः शुक्लकुष्ठहराणिवै ॥

श्वेतकेतुः । पुं० उद्दालकऋषेस्तनये । श्रुतिप्रसिद्ध आरुणेयमुनौ ॥ केतुग्रहविशेषे ॥ बुद्धे ॥

श्वेतकेशः । पुं० रक्तशिग्रौ ॥ शुक्लकचे ॥

श्वेतकोलः । पुं० शफरमत्स्ये ॥

श्वेतखदिरः । पुं० शुक्लखदिरे । सोमवृक्षे । कदरे ।

श्वेतगजः । पुं० इन्द्रहस्तिनि । ऐरावणे । अभ्रमातङ्गे । चतुर्दन्ते ॥

श्वेतगरुत् । पुं० हंसे ॥ श्वेता गरुतोऽस्य ॥

श्वेतगुञ्जा । स्त्री० चूडालायाम् । श्वेतकाम्बोज्याम् । काकादन्याम् ॥

श्वेतचन्दनम् । न० शुक्लचन्दने ॥

श्वेतचिल्ली । स्त्री० शाकभेदे । वास्तुक्याम् । सुपथ्यायाम् । श्वेतचिल्लिकायाम् । ज्वरघ्न्याम् । चूद्रवास्तुक्याम् । अधुना० इ० भा० प्र० ॥ अस्यागुणायथा । श्वेतचिल्लीमधुराक्षाराशिशिरावसा । त्रिदोषशमनीपथ्याज्वरदोषविनाशिनी ॥

श्वेतच्छदः । पुं० हंसे ॥ श्वेताच्छदायस्य । गन्धपत्रे । वायु० इ० भा० ॥

श्वेतजीरकः । पुं० अजाज्याम् । गौरजीरके ॥

श्वेतटङ्कणम् । न० क्षारविशेषे द्रावकाख्ये । मालतीतीरसम्भवे ॥

श्वेतदूर्वा । स्त्री० पाण्डुरदूर्वायाम् । अस्याः पर्यायास्तु । गोलोमीशतवीर्याचगण्डालीशकुलाक्षकाइति गुणास्तु । श्वेतदूर्वाकषायासातुस्वादीव्रण्याचजीवनी । तिक्ताहिमाविसर्पासष्टपित्तकफदाहनुत्० इति ॥

श्वेतद्युतिः । पुं० इन्दौ । चन्द्रे ॥

श्वेतद्वीपः । पुं० मक्रहस्तिनि । हस्तिमल्ले । चतुर्दन्ते । ऐरावणे ॥

श्वेतद्वीप : । पुं॰ विष्णोर्धामविशेषे ॥ यत्रानिरुद्धमूर्त्तिर्भगवानास्ते ॥

श्वेतधातु : । पुं॰ खटिकायाम् ॥ शुक्लवर्णधातुमात्रे ॥

श्वेतधामा । पुं॰ इन्दौ । घनसारे च अब्धिफेने ॥

श्वेतनील : । पुं॰ अम्बुदे । मेघे ॥ शुक्लनीलवर्णे ॥

श्वेतपत्र : । पुं॰ हंसे ॥ न॰ शुभ्रपर्णे ॥

श्वेतपत्ररथ : पुं॰ सृष्टिब्रह्मणि । विधातरि ॥ श्वेतपत्रोहंसोरथोवाहनंयस्य ॥

श्वेतपद्मम् । न॰ पुण्डरीके । सिताम्भोजे । शंभुवल्लभे ॥

श्वेतपर्णा । स्त्री॰ कुम्भिकायाम् । वारिपर्ण्याम् ॥

श्वेतपर्णास : पुं॰ श्वेततुलस्याम् अर्जके । गन्धपत्रे ॥

श्वेतपाटला । स्त्री॰ शुक्लपाटलायाम् ॥

श्वेतपिङ्ग : । पुं॰ सिंहे ॥ इ॰ हि॰ न्द्र : ॥

श्वेतपिङ्गल : । पुं॰ सिंहे ॥ त्रि॰ शुक्लकपिलवर्णयुक्ते ॥

श्वेतपिण्डीतक : । पुं॰ महापिण्डीतके ॥

श्वेतपुष्प : । पुं॰ सिन्धुवारवृक्षे ॥

श्वेतार्के । श्वेतकरवीरे ॥ वरुणद्रुमे । न॰ शुक्लवर्णकुसुमे ॥

श्वेतपुष्पक : । पुं॰ करवीरवृक्षे ॥

श्वेतपुष्पा । स्त्री॰ मृगद्न्याम् । श्वेतघोषा॰ इ॰ गौ॰ भा॰ प्र॰ ॥ नागदन्त्याम् । मृगेर्वारौ ॥ श्वेतानिपुष्पाणियस्या : ॥

श्वेतपुष्पिका । स्त्री॰ महाशणपुष्पिकायाम् ॥ पुत्रदात्र्याम् ॥ इ॰ रा॰ गट : ॥

श्वेतप्रसूनक : । पुं॰ वृक्षविशेषे । वरुणद्रुमे ॥

श्वेतभण्डा । स्त्री॰ श्वेतापराजितायाम् ॥

श्वेतमन्दारक : । पुं॰ पृथ्वीकुरङ्के । दीर्घायुष्ये । श्वेतआकड॰ भा॰ प्र॰ ।

श्वेतमरिचम् । न॰ शियुबीजे ॥ श्वेतं मरिचमिव ॥ शुक्लमरिचे ॥

श्वेतरक्त : । पुं॰ पाटलवर्णे । श्वेतयुक्तोरक्त : ॥

श्वेतरञ्जनम् । न॰ सीसके ॥

श्वेतरथ : । पुं॰ दैत्यगुरौ । शुक्रे ॥ श्वेतोरथोऽस्य ॥ शुक्लवर्णस्यन्दने ॥

श्वेतराजी । स्त्री॰ चिचिंडे । सुदीर्घफले ॥

श्वेतरोचि : । पुं॰ चन्द्रे ॥

श्वेतरोहित : । पुं॰ सितपुष्पे । सि

ताम्बूले । श्वेतरोहिता॰ इ॰ भा॰ प्र॰ वृक्षे ॥

श्वेतलोध्र : । पुं॰ पट्टिकालोध्रे ॥

श्वेतवचा । स्त्री॰ अतिविषायाम् ॥ वचाप्रभेदे । मेध्यायाम् । हैमवत्याम् । साक्तावच॰ इ॰ भा॰ प्र॰ ॥

श्वेतवल्कल : । पुं॰ उदुम्बरवृक्षे ॥ शुक्लत्वचि ॥

श्वेतवाजी । पुं॰ चन्द्रे ॥ पार्थे । अर्जुने ॥ कर्के । शुक्लाश्वे ॥

श्वेतवासा : । पुं॰ शुक्लवस्त्रधारिसन्न्यासिनि ॥ इ॰ हलायुध : ॥ त्रि॰ परिहितशुक्लवसने ॥

श्वेतवा॰ पु॰ इन्द्रे ॥ श्वेताएनंवहन्ति । दष॰ श्वेतन्नोहधतेवा । मन्त्रे श्वेतवहेतिनिगवमोविषये॰ श्वेतवहादीनांडसपदस्येति॰ यवपदत्वंततश्चवनोपशादेडस् । श्वेतवाश्चौ॰ श्वेतवाह॰ श्वेतवोभ्यामित्यादि ॥

श्वेतवाहन : । पुं॰ चन्द्रे । शशिनि ॥ धनञ्जये । अर्जुने ॥ मकरे ॥

श्वेतवाहो । पुं॰ अर्जुने । पार्थे ॥

श्वेतवृन्ता । स्त्री॰ वनतिक्तायाम् । विसर्पिण्याम् । गिरिजायाम् ॥

श्वेतवृहती । स्त्री॰ क्षुद्रवार्ताक्याम् । श्वेतफलायाम् ॥

श्वेतवृक्ष : । पु॰ वरुणद्रुमे ॥

श्वेतशरपुङ्खा । स्त्री॰ क्षुपविशेषे । सितसायकायाम् । सितपुङ्खायाम् ॥

श्वेतशिग्रु : । पुं॰ शुक्लशोभाञ्जने सतीक्ष्णे । मधुशिग्रुके ॥

श्वेतशिंशपा । स्त्री॰ शुक्लशिंशपावृक्षे ॥

श्वेतशिम्बिक : । पुं॰ निष्पावे । भटवांस॰ इ॰ भा॰ प्र॰ ॥

श्वेतशृङ्ग: । पुं॰ यवे ॥

श्वेतशूरण : । पुं॰ वनशूरणे ॥

श्वेतसर्प : । पुं॰ शुक्लवर्णभुजगे । वरुणवृक्षे ॥

श्वेतसर्षप : । पुं॰ गौरसर्षपे ॥

श्वेतसार : । पुं॰ कट्फले । खदिरे ॥

श्वेतसुरसा । स्त्री॰ श्वेतपुष्पशेफालिकायाम् । भूतवेश्याम् ॥ शीभनोरसोऽस्या : । श्वेताचासौसुरसाच ॥ श्वेततुलस्याम् ॥

श्वेतस्पन्दा । स्त्री॰ विष्णुक्रान्ताभेदे ॥

श्वेतहय : । पुं॰ उच्चै : श्रवसि । इषणभवे ॥ अर्जुने । पार्थे ॥ चन्द्रे ॥ शुक्लवर्णाश्वे । कर्के ॥

श्वेतहस्ती । पुं॰ ऐरावते । शुक्लगजे ॥

श्वेता । स्त्री॰ वराटिकायाम् ॥ काष्ठपाटलायाम् ॥ शङ्खिन्याम् ॥ अपराजितायाम् ॥ स्फट्याम् ॥ अतिविषायाम् ॥ श्वेतदूर्वायाम् ॥

श्वेतकण्टकार्य्याम् । पाषाणभेद्याम् ॥ श्वेतदूर्व्वायाम् । शिलावल्कलायाम् ॥ वंशरोचनायाम् ॥ शर्करायाम् ॥ लताविशेषे । छुरिकापत्रिकायाम् । पर्व्वमूलायाम् ॥ अतिप्रियायाम् ॥ गुणास्तु । श्वेतातिमधुराशीतास्तन्यदारुचिकारिका ।

श्वेताचिह्नत् । स्त्री॰ शुक्लचिह्नतायाम् । विभाण्डाम् ॥

श्वेताम्लि: । स्त्री॰ क्षुपविशेषे । अम्लिकायाम् पिष्टोडाम् ॥

श्वेतार्क: । पुं॰ शुक्लार्कवृक्षे । तपने । शर्करापुष्पे । वृत्तमल्लिकायाम् ॥ अस्यगुणा । श्वेतार्क: कटुकस्तिक्तउष्णोमलविशोधन: । मूत्रकृच्छ्रास्रशोफार्त्तिव्रणदोषविनाशनइति ॥

श्वेतावर: । पुं॰ सितावरशाके ॥

श्वेताश्व: । पुं॰ अर्ज्जुने ॥ सहदेवपाण्डवे ॥

श्वेताह्वा । स्त्री॰ सितपाटलायाम् ॥

श्वेतेक्षु: । पुं॰ सितेक्षौ । वंशपत्रके । पाण्डुरेक्षौ ॥ अस्यगुणा: । श्वेतेक्षु: कठिनोरुच्योगुरुश्लेष्मकफमूत्रकृत् । दीपन: पित्तदाहघ्नो विपाकेवातलस्तथेति ॥

श्वेतोदर: । पुं॰ कुवेरे ॥ त्रि॰ चि

काण्डशेष: ॥

श्वोवसीयसम् । न॰ कल्याणे । मङ्गले ॥ वसुशब्द: प्रशंसावाची॰ ईयसुन्नन्त: । श्वस्शब्दउत्तरपदार्थप्रशंसामाशीर्व्विषयमाह । श्वोवसीयइतिविग्रहे॰ मयूरव्यंसकादित्वात्समास: । श्वोवसीय: श्रेयस्तुल्यच्समासान्त: अर्थपरपदस्याश्व: शब्द: कालवाच्यपि । अभिधत्तेस्वभावेनतेनेमौमङ्गलार्थकाविति पाणिनीयमतदर्पण: । श्वोवसीयसन्ते भूयात् ॥

### षकाराक्षरस्य प्रारम्भ:

ष: । पुं॰ षकारे ॥ कचे ॥ त्रि॰ विज्ञे । निपुणे ॥ श्रेष्ठे ॥

षट्क: । पुं॰ षण्मासङ्घे ॥ सङ्ख्याया: संज्ञासङ्घसूत्राध्ययनेष्वितिकन् ॥ षष्ठेनरूपेणगृह्णातीत्यर्थे तु॰ तावतिथेनगृह्णातीतिकन्वक्तव्य: पूरणप्रत्ययस्यचनित्यंलुक् । षष्ठेनरूपेणगृह्णाति॰ षट्कोदेवदत्त: ॥

षट्कट् । न॰ षडूषणे ॥

षट्कर्ण: । पुं॰ कर्णवेधश्रोनयोर पत्ययोर्विंशमनयोस्तृतीयस्यापत्यस्यसम्भावनायाम् ॥

षट्कर्म्मा । पुं॰ यागादिभिर्युते ब्राह्मणे ॥ षट्कर्म्माण्यध्ययनादीन्यस्य । तानियथा । इज्याध्ययन

दानानि याजनाध्यापने तथा । प्रतिग्रहश्चेत्युक्ताः षट्कर्मा विप्र उच्यत इति ॥ बहुपोष्यवर्गे गृहस्थब्राह्मणे ॥ ऋतायाचितभैक्ष्यकृषिवाणिज्यकुसीदानि षट्कर्माण्यस्य ॥ न० षण्णां कर्मणां समाहारे । अध्यापनादिषट्सु कर्मसु ॥ यथा । अध्यापनमध्ययनं यजनं याजनं तथा । दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मन इति ॥ शान्त्यादिषट्सु कर्मसु ॥ तानि यथा । शान्तिवश्यस्तम्भनानि विद्वेषोच्चाटने तथा । मारणान्तानि शंसन्ति षट्कर्माणि मनीषिण इति ॥ त्रि० षट्कर्मकर्त्तरि ॥

षट्काष्टकम् । न० विवाहादिविचारे दोषविशेषे ॥ यथा । यदि कन्याष्टमे भर्त्ता भर्त्तुः षष्ठे च कन्यका । षट्काष्टकं विजानीयात् वर्ज्जितं विद्वैरपि ॥

षट्कूटा । स्त्री० भैरवीदेवताविशेषे ॥

षट्कोणम् । न० वज्रे ॥ षडस्रे । लग्नात् षष्ठगृहे ॥

षट्कोशः । पुं० न० षड्भ्यः कोषेभ्य उत्पन्ने वपुषि ॥ यथाहुः । पितृभ्यामशितादन्नात् षट्कोषं जायते वपुः । स्नायवोऽस्थीनि मज्जा च जायन्ते पितृतस्तथा । त्वङ्मांसशोणितमिति मातृतश्च भवन्ति हि ॥

षट्चक्रम् । न० शरीरस्थपद्माकारषट्प्रकारचक्रे ॥

षट्चरणः । पुं० भ्रमरे ॥ यूकायाम् ॥

षट्तिली । पुं० माघशुक्लैकादश्यां भैम्यामुपवासं कृत्वा द्वादश्यां षट्तिलाचारविशिष्टे ॥ यथा । मृगशीर्षे शशधरे माघे मासि प्रजायते । एकादश्यां सिते पक्षे सोपवासो जितेन्द्रियः ॥ द्वादश्यां षट्तिलाचारं कृत्वा पापात् प्रमुच्यते । तिलस्नायी तिलोद्वर्त्ती तिलहोमी तिलोदकी ॥ तिलस्य दाता भोक्ता च षट्तिली नावसीदतीति ॥

षट्त्रिंशत् । स्त्री० सङ्ख्याविशेषे । छत्तीस० इ० भा० प्र० त्रि० । सङ्ख्येये ॥ यथा षट्त्रिंशदुपचाराः ॥

षट्त्रिंशत्तत्त्वम् । न० शैवशास्त्रप्रसिद्धतत्त्वसमूहे ॥ यथा । प्राणापानसमानाश्चोदानव्यानौ च वायवः । भूतैश्च पञ्चभिः सार्द्धं चतुर्दशभिरिन्द्रियैः ॥ चतुर्विंशतितत्त्वानि साङ्ख्यशास्त्रविदो विदुः । महान्कालः प्रधानञ्च मायाविद्या च पूरुषः इति पौराणिकाः प्राहुस्त्रिंशत्तत्त्वानि तैः सह । बिन्दुनादौ शक्तिशिवौ शान्तातीतौ परं ततः ॥ षट्त्रिंशत्तत्त्वमित्युक्तं शैवागमविशारदैरिति मानसोल्लासः ॥

षट्पदः । पुं० भ्रमरे ॥ षट् पदानि यस्य ॥ यूकायाम् ॥ न० मात्रा

वृत्तान्तरे । यथा । षट्कलमादौ तदनु चतुस्तुरगं परिसन्तनु । द्विविधि कलं कलय चतुष्पदमेवं सन्तनु ॥ छन्दः षट्पदनाम भवति फणिनायकगीतं । कृते विरतिमुपैति नृपतिसुखकरमुपनीतम् । उल्लालयुगलमन्ते भवेदष्टाविंशतिकलमिदम् । शृणु पञ्चदशे विरतिस्थितं पठ नेपण्डितजनविहितम् ॥ तथा । वामकरोदरकलितकमलसोदरकृतवदना । गुरुपुरतोपितवेवनामजल्पति गुरुमदना । भवदभिलषणविशेषरभसपरिशोषितदिवसा । मुग्धतिचन्द्रभयेन रजनिमधिशौवितमपि सा । मिलदहिविनिहितभवदभिसरणार्थकृतरङ्गमनङ्गमरति । भवदीयविलोकनमन्तरानमनोरथमुपमनुभवति ।

षट्पदप्रियः । पुं॰ नागकेशरवृक्षे ॥ न॰ रक्तोत्पले ॥

षट्पदा । स्त्री॰ यूकायाम् ॥

षट्पदातिथिः । पुं॰ चाम्रवृक्षे ॥

षट्पदानन्दः । पुं॰ पुष्पवृक्षविशेषे । किङ्किराते । पीतभद्रे ॥

षट्पदानन्दवर्द्धनः । पुं॰ किङ्किराते । अशोकपादपे ।

षट्पदी । स्त्री॰ यूकायाम् । द्र॰ हेमचन्द्रः ॥

षट्पदेष्टः । पुं॰ नीपे । कदम्बे ॥

षट्प्रज्ञः । पुं॰ कामकेलौ । कामुके पिङ्गे ॥ धर्मादिशास्त्रविज्ञे ॥ यथा । धर्मार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि । षट्सु प्रज्ञास्ति यस्योच्चैः स षट्प्रज्ञ इति स्मृतः ॥ द्र॰ त्रिकाण्डशेषः ॥

षडः । पुं॰ पेयान्तरे । भेदे ॥

षडंशः । त्रि॰ षष्ठांशे ॥ सङ्ख्याशब्दस्य वृत्तिविषये पूरणार्थत्वम् ॥

षडङ्गः । पुं॰ वेदे ॥ षट् शिक्षादीन्यङ्गान्यस्य । चतुरगे चतुरके । न॰ शिक्षादिवेदाङ्गेषु ॥ यथा । शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं तथा । छन्दश्चेति षडङ्गानि वेदानां वैदिका विदुः ॥ छन्दः पादौ तु वेदस्य हस्तौ कल्पस्तु कथ्यते । ज्योतिषामयनं नेत्रं निरुक्तं श्रोत्रमुच्यते ॥ शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् । तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ द्र॰ स्मृतिः ॥ शरीरस्य षडवयवे । यथा । जङ्घे बाहू शिरो मध्यं षडङ्गमिदमुच्यते । इति ॥ ह्रदादिषु ॥ छिन्नरस्य शिखा चैव कवचं नयनत्रयम् । करतलकरपृष्ठौ च षडङ्गं न्याससत्कर्मणि ॥ गव्यान्तरेषु ॥ यथा ॥ गोमूत्रं गोमयं क्षीरं सर्पिर्दधि च रोचना । षडङ्गमेतन्माङ्गल्यं पवित्रं सर्वदा गवामिति स्मृतिः ॥

षडङ्गजित् । पुं॰ जनार्द्दने ॥ वि॰ षडङ्गजेतरि ॥

षडङ्गधूपः । पुं॰ । देवदेयधूमविशेषे ॥ यथा । गुग्गुल्वगुरुश्चोशीरशर्करामधुचन्दनैः । धूपयेदाज्यसंमिश्रैर्नीचैर्देवमुद्देशिक इति ॥

षडङ्गवित् । पुं॰ शिक्षादिवेदाङ्गज्ञे । पङ्क्तिपावनब्राह्मणे ॥ षडङ्गानि॰ शिक्षादीनि यो व्याचष्टे सः ॥

षडभिज्ञः । पुं॰ अद्वयवादिनि । सर्व्वज्ञे । बुद्धे ॥ दिव्यं चक्षुः श्रोत्रं॰ परचित्तज्ञानं॰ पूर्व्वनिवासानुस्मृतिः॰ आत्मज्ञानं॰ वियद्गमनं॰ कायव्यूहादिसिद्धिश्चेति षट् अभिज्ञा ज्ञानानि यस्य सः । षट्सु॰ दानशीलक्षान्तिवीर्य्यध्यानप्रज्ञासु॰ अभिज्ञा॰ आद्यं ज्ञानमस्येति वा ॥

षडशीतिः । स्त्री॰ अर्कसङ्क्रान्तिविशेषे ॥ यथा । षडशीतिर्भवेच्चापनृयुक्कन्याझषेषु चेति ॥ षडधिकाऽशीतिसङ्ख्यायाम् ॥

षडशीतिचक्रम् । न॰ मिथुनकन्याधनुर्मीनराशिस्थरवेः शुभाऽशुभफलज्ञानार्थं नक्षत्राङ्कनराकारचक्रे ॥ यथा । मुखे वेकं करे वेदाः पादयुग्मे द्वयं द्वयम् । क्रोडे बाणास्तथा वेदाः करे सव्येतरेऽपि च । द्वयं द्वयं तथा नेत्रे मस्तके त्रितयं तथा । द्वयमेव तथा गुह्ये षडशीत्यां समे स्थिते ॥ मुखे दुःखं करे लाभः पादयोर्भ्रमणं हृदि । कान्ता स्याद्बन्धनं वामेहस्ते स्यात्स्वीयमेनृणाम् ॥ सम्मानं नेत्रयोः स्वेवमपमानञ्च मस्तके । गुह्ये च वै भवेन्मृत्युः षडशीतिफलश्रुतिरिति ॥

षडष्टकम् । न॰ षट्काष्टयोगे ॥ स तु वरकन्ययोः स्वस्वराश्यपेक्षया परस्परषष्ठाष्टमराशिसम्बन्धः । स च मित्रारिभेदेन द्विविधः । तत्र मित्रषडष्टकं यथा । मकरसमेतं मिथुनं । कन्याकलसौ मृगेन्द्रमीनौ च । वृषभतुलेऽलिमेषौ कर्कटधनुषौ च मित्रविधौ ॥ षडष्टकाविति शेषः ॥ अरिषडष्टकमाह । मकरः करिकुलरिपुणा कन्या मेषेण सह झषस्तुलया । कर्किघटौ वृषधनुषौ अलिकमिथुने च वैरिविधौ ॥ यदि कन्याष्टमे भर्त्ता भर्त्तुः षष्ठे च कन्यका । षडष्टकं विजानीयात् वर्ज्जितं विदुषैरपि ॥

षडाननः । पुं॰ कार्त्तिकेये । महासेने । स्कन्दे । गुहे ॥ कृत्तिकानामग्निपत्नीनां षण्णां स्तनपानार्थं षट् आननानि यस्य सः ॥

षडूषणम् । न॰ । मिश्रितकटुषट्कद्रव्ये । यथा । पञ्चकोलं समरिचं षडूषणमुदाहृतम् । पञ्चकोलगुणं तत्तु रूक्षमुष्णं विषापहमिति भाव

प्रकाशः ॥

षड्गया । स्त्री॰ षड्विधगयायाम् ॥ यथा । गयागजो गयादित्यो गायत्री च गदाधरः । गया गयासुरश्चैव षड्गया मुक्तिदायिकेति वायुपुराणे गयापद्धतिः ॥

षड्गवम् । न॰ गोषट्कयुक्तहलादौ ॥ यथा । अष्टागवं धर्महलं षड्गवं जीविकार्थिनाम् । चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम् ॥ षण्णां गवां समाहारः । गोरतद्धितलुकीति समासान्तष्टच् ॥

षड्गुणरहितः । पुं॰ मधुरादिषड्गुणरहिते परमात्मनि ॥

षड्गुणेशः । पुं॰ षडिन्द्रियनियन्तरि ॥

षड्ग्रन्थः । पुं॰ महाकरञ्जपादपे । षट् ग्रन्थयो यस्य । अच्प्रत्यन्ववपूर्वादित्यत्राजिति योगविभागादच् ॥ षट्ग्रन्थायस्य वा ॥

षड्ग्रन्था । स्त्री॰ वचायाम् ॥ षट् ग्रन्थाः ग्रन्थयो यस्याः सा ॥ शट्याम् ॥ शुक्लवचायाम् ॥

षड्ग्रन्थिः । पुं॰ षट्पर्व्वणि ॥ स्त्री॰ वचायाम् ॥ न॰ पिप्पलीमूले ।

षड्ग्रन्थिका । स्त्री॰ शट्याम् । गन्धमूल्याम् । षट् बहवो ग्रन्थयो यस्याः । स्वार्थे कन् ॥

षड्जः । पुं॰ तन्त्रीसमुत्थिते कण्ठोत्थिते च स्वरविशेषे ॥ षड्भ्यः स्थानेभ्यो जातः । पञ्चम्यामिति डः ॥ यथा । नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च संस्पृशन् । षड्भ्यः सञ्जायते यस्मात्तस्मात् षड्ज इति स्मृतः ॥ मयूरस्वरतुल्योऽयम् । यथा । षड्जं रौति मयूरो हि गावो नर्दन्ति चर्षभम् । अजाविरौति गान्धारं क्रौञ्चो नदति मध्यमम् ॥ तानसेनमते सप्तस्वराणां मध्ये प्रथमस्वरोऽयम् ॥

षड्धा । अ॰ षट्प्रकारे ॥ सङ्ख्याया विधार्थे धा ॥

षड्विधः । त्रि॰ षट्प्रकारे ॥ षट् विधाः प्रकारा यस्य ॥

षड्भावविरहितः । त्रि॰ अस्तीत्यादिशरीरधर्मरहिते परमात्मनि ॥ अस्तीत्यादयो यथा । अस्ति जायते वर्द्धते विपरिणमते अपक्षीयते विनश्यतीति ॥

षड्भुजः । त्रि॰ षड्हस्तयुक्ते ॥

षड्भुजा । स्त्री॰ चण्डिकायाम् ॥ रुद्रचण्डायाम् ॥ चण्डवत्याम् ॥ न॰ षड्रेखाभिधफललताविशेषे । मधुफलायाम् । इन्द्रवारुण्याम् । तिक्तफलायाम् । खरबूजा॰ इ॰ भा॰ प्र॰ ॥ अस्याः फलगुणा यथा । तिक्तं बाल्ये तदनु मधुरं किञ्चि

द्भक्षपाकैर्निष्पक्वं चैतत्तदमृतसमं-तर्प्यं वा शुष्टिदायि । हृष्यं दाहश्रमविषमनं मूत्रशुद्धिं विधत्ते पित्तोन्मादापहरं कफदं षड्भुजं वीर्यकारीति राजनिर्घण्ट : ॥

षड्रस : । पुं॰ मधुरादिषट्प्रकाररसे ॥ यथा । मधुरो लवणस्तिक्त: कषायोऽम्ल: कटुस्तथा । सप्तमीति रसनीयत्वादन्नाद्ये षड्मी रसा : ॥ एषां नामलक्षणं यथा । मधुरं गौल्यमित्याहुरिक्षुवादौ स च लक्ष्यते । लवणस्तु पटु : प्रोक्त : सैन्धवादौ स दृश्यते ॥ तिक्तस्तु पिचुमर्दादौ व्यक्तमास्वाद्यते रस : । कषायस्तु वरस्तु का : स च पूगीफलादिषु ॥ कटुस्तु क्षारसंज्ञ : स्यान्मरिचादौ स चेष्यते । इति राजनिर्घण्ट : ॥

षड्राश्रम् । न॰ षड्हे ॥

षड्रेखा । स्त्री॰ षड्भुजायाम् ॥ खर्जूरे ॥

षड्लवणम् । न॰ सपञ्चलवणं मृत्तालवणं । मृत्ताोपेतपञ्चलवणं ॥

षड्वक्त्र : । पुं॰ कार्त्तिकेये ॥

षड्वर्ग : । पुं॰ लग्नहोरादिषु ॥ यथा । त्रिंशद्भागात्मकं लग्नं होरा तस्यार्द्धमुच्यते । लग्नत्रिभागो द्रेक्काणो नवभागो नवांशक : ॥ द्वादशांशो द्वादशांशस्त्रिंशांशस्त्रिंशदंशका : । षड्वर्गा : कथिता ह्येते तेषां क्रममुदीरितम् ॥ षण्णां वर्ग : ॥ षडिन्द्रियसुखे ॥

षड्वर्ष : । त्रि॰ षड्वर्षाभिभूते॰ बालके ॥ तद्धितार्थेति समास : । चित्तवतिनित्यमिति ख्ठञो स्तद्धितयोर्लुक् ॥

षड्वाद : । पुं॰ भ्रमरे ॥

षड्विन्दु : । पुं॰ हरौ । विष्णौ ॥ कीटविशेषे ॥ शिरोरोगापहे॰ पक्वतैलविशेषे ॥ यथा । एरण्डमूलं तगरं शताह्वा जीवन्तिका सैन्धवरास्निके च । भृङ्गं विडङ्गं मधुयष्टिका च विश्वौषधं कृष्णतिलस्य तैलम् ॥ अजापयस्तैलविमिश्रतश्चतुर्गुणे भृङ्गरसे विपक्वम् । षड्विन्दवो नासिकयो : प्रदेया : सर्वान्निहन्यु : शिरसो विकारान् ॥ च्युतांश्च केशान् पलितांश्च दन्तान्निर्बध्यमूलान् सुदृढीकरोति । सुपर्णगृध्रप्रतिमञ्च चक्षु : कुर्वन्ति वाह्वोरधिकं बलञ्च । जीवन्तिका च हरीतकीशाकविशेष : । इति भावप्रकाश : ॥

षड्विन्ध्या । स्त्री॰ तैलिन्याम् ॥

षण्ड : । पुं॰ गोपतौ । वृषभे ॥ समूहे ॥ पुं॰ न॰ कदम्बे । पद्मादिकदम्बे । पद्मकुमुदादिसङ्घाते ॥ सनोति । षणुदाने । अमन्ताड्ड : । बाहुलकात् सत्वाभाव : ॥

षण्डाली । स्त्री॰ सरस्याम् । कामुकस्त्रियाम् । तैलमाने । छटांक॰ इ॰ भा॰ प्र॰ । इति हेमचन्द्रो मेदिनिकरश्च ॥

षण्ढः । पुं॰ षण्डशब्दार्थे । शाम्यति शिश्नाभावात् । शमउपशमे । शमेढः । बाहुलकात्षः । यद्वा । सनति । षमष्टमवैकल्ये । अनिर्दत्यादिना षमेर्ढः । बाहुलकात्सत्वाभावः ॥ अस्य दर्शने सूर्यदर्शनम्॰ स्पर्शनम्॰ स्पर्शने तु स्नानं सूर्यविलोकनञ्च प्रायश्चित्तम् ॥

षण्मुखः । पुं॰ कार्त्तिकेये । स्कन्दे । षट् मुखान्यस्य ॥

षण्मुखा । स्त्री॰ षट्भुजायाम् । खरबूजा॰ इ॰ भा॰ ॥

षट् । त्रि॰ सङ्ख्यान्तरे । छ छै॰ इ॰ भा॰ । सङ्ख्येये ।

षष्टिः । स्त्री॰ सङ्ख्यान्तरे साठ॰ इ॰ भा॰ । सङ्ख्येये । षट् दशतः परिमाणमस्य । प्रकृतेः षष्भावस्ति प्रत्ययोऽपदत्वञ्च॰ पङ्क्तिविंशतित्रिंशत्चत्वारिंशत् पञ्चाशत्षष्टीति निपातनात् ॥

षष्टिकः । पुं॰ न॰ यौष्मके॰ धान्यविशेषे । साठी॰ इ॰ भा॰ प्र॰ । षष्टिकाह्विधान्यविशेषाः षष्टिकाः षष्टिरात्रेणपच्यन्त इति तृतीयान्तात्कन्॰ रात्रशब्दलोपश्च निपात्यते । धान्यविशेष एवायं साधुर्न मुद्गेषु॰ तेपि षष्टिरात्रेण पच्यन्ते ॥ अस्य लक्षणगुणाश्च यथा । गर्भस्था एव ये पाकं यान्ति ते षष्टिका मताः ॥ षष्टिकः शतपुष्पश्च प्रमोदकमुकुन्दकौ । महाषष्टिक इत्याद्याः षष्टिकाः समुदाहृताः ॥ एतेपि ब्रीहयः प्रोक्ता ब्रीहिलक्षणदर्शनात् ॥ षष्टिका मधुराः शीता लघवो बद्धवर्चसः । वातपित्तप्रशमनाः शालीनां सदृशा गुणैः । तत्र॰ साठोगुणाः षष्टिकायाम् ॥ अपिच । गौरो नील षष्टिकोऽयं द्विधा स्यादाद्योऽत्र शीतलो दोषहारी । बल्यः पथ्यो दीपनो वीर्यवृद्धिं दत्ते तस्मात्किञ्चिदूनो द्वितीयः ॥

षष्टिका । स्त्री॰ साठीति प्रसिद्धधान्ये । अस्याः गुणाः । षष्टिका प्रवरा तेषां लघ्वी स्निग्धा त्रिदोषजित् । स्वाद्वी मृद्वी ग्राहिणी च बलदा ज्वरहारिणीति ॥ रक्तशालिगुणैस्तुल्या ततः स्वल्पगुणाः परे ॥ तेषां षष्टिकशतपुष्पादीनाम् । परे॰ षष्टिकशतपुष्पादयः ॥ शरदि षष्टिकाभिः पार्वणं नित्यमिति वाचस्पतिमिश्रः ॥

षष्टिक्यम् । न॰ षष्टिकधान्योत्पत्त्युचितभूमौ ॥ षष्टिकानां भवनं क्षेत्रम् । यवयवकषष्टिकाद्यदिति यत् ॥

षष्टिज: । पुं॰ षष्टिकधान्ये
षष्टितम: । त्रि॰ षष्टे: पूरणे ॥
षष्टिदुर्गा । स्त्री॰ स्कन्दभार्यायाम् ॥ तिथिभेदे ॥
षष्टिधा । अ॰ षष्टिप्रकारे ॥
षष्टिमत्त: । पुं॰ गजे ॥ षष्टिवर्षप र्यन्तंवय: पूर्ण्ंहिस्थित्वा॰षष्टिमत्तो हस्तीतिसारस्वताभिधानम् ॥
षष्टिलता । स्त्री॰ भ्रमरमार्याम् ॥
षष्टिहायन: । पुं॰ गजे । हस्तिनि ॥ धान्यविशेषे ॥ त्रि॰ षष्टिसङ्ख्यक वत्सरवयोयुक्ते ॥
षष्ठ: । त्रि॰ षण्णांपूरणे ॥ तस्यपूरणे डट् । षट्कतिकतिपयचतुरां थुक् ॥
षष्ठान्नकालिक: । त्रि॰ तृतीयदिनभोजिनि ॥ न॰ द्विदिनानन्तरभुक्ते ॥ यथा । द्व्यन्तरेत्यन्तरेभुक्तमाहु: षष्ठान्नकालिकम् ॥
षष्ठिका । स्त्री॰ षष्ठ्याम् ॥
षष्ठी । स्त्री॰ कात्यायन्याम् । गौर्याम् ॥ मातृकाविशेषे ॥ साचप्रकृते: षष्ठीकला॰स्कन्दभार्याच ॥ यथा । प्रकृतेरितिसम्बन्धे॰प्रधानांशस्वरूपा यादेवसेनाचनारद । मातृकासुपूज्यतमासाषष्ठीचप्रकीर्त्तिता ॥ पुत्रपौत्रादिदात्रीचधात्रीत्रिजगतांसती । षष्ठांशरूपाप्रकृतेस्तेनषष्ठीप्रकीर्त्तितेतिश्रीदेवीभागवतम् ॥
तिथिविशेषे । गुहतिथौ ॥ षण्णांपूरणम् । ङस्॰ थोस्॰ आम्॰ इतिविभक्तौ ॥ अथाशसम्बन्धोर्थ: सचराजपुरुषौपगवादिशब्दानांप्रवृत्तौनिमित्तम् गोमान्धनवानित्यादौनांचप्रवृत्तिनिमित्तम्॰ अपत्याप त्यवत्सम्बन्धादे: शब्दप्रवृत्तिनिमित्तत्वात् ॥ एतत्प्रत्ययान्तत्वटित्वात ङीप् ॥षष्ठ्यांतिथावुत्पन्नस्यफलं यथा । विद्वान्वरिष्ठश्चतुर: सुकीर्त्ति: प्रलम्बबाहुर्बहुकीर्णगात्र: । सत्यप्रतिष्ठोधनपुत्रयुक्त: षष्ठीप्रसूतोमनुजश्चिरायुरिति ॥
षष्ठीदण्डकपाठ: । पुं॰ । ग्रन्थविशेषे ॥ यतेकमतंषष्ठ्यर्थाउक्ता: ॥
षाट्कौशिक: । पुं॰ स्थूलदेहे ॥ यथा । मज्जास्थिस्नायव: शुक्राद्रक्तात्त्वङ्मांसशोणितम् । इतिषाट्कौशिकोनामदेहोभवतिदेहिनाम् ॥
षाडव: । पुं॰ गाने । रागस्यजातिविशेषे । सचषट्स्वरमिलितरागरागिण्यौ । यथा । औडव: पञ्चभि: प्रोक्त: स्वरै: षड्भिस्तु षाडव: । सम्पूर्ण: सप्तभिर्ज्ञेय एवंरागस्त्रिधामत: ॥ रसविशेषे ॥ सचरसविशेषउक्त: सूदशास्त्रे । यथा । सितामध्वादिमधुरेद्राक्षादाडिमजीरस: । विरलश्चेत्कृतोरा

गः सान्द्रश्चैतत्षाडवः स्मृतः ॥
इति ॥ अपिच । षाडवामधुराम्ला
दिरससंयोगपाचितादिति । गुडा
म्बुप्रभृतयः षाडवादित्यर्थः ॥

षाड्वर्गिकः । पुं॰ इन्द्रियषड्वर्गविषये ।

षाड्गुण्यम् । न॰ राज्ञां राज्यकरणोपा
येषु षट्सु ॥ यथा । सन्धानासनम
॰ सन्धिं कृत्वाऽवस्थानम् १ यात्रा
सन्धानम् २ । विगृह्यासनम् ॰
वैरं कृत्वाऽवस्थानम् ३ । यात्रां
सम्परिगृह्यासनम् ॰ शत्रोर्भयप्रद
र्शनार्थं यानं प्रदर्श्य स्वस्थानेऽवस्था
नम् ४ द्वैधीभावः ॰ उभयत्र स
न्धीकरणम् ५ । अन्येषां संश्रयः
॰ दुर्गादिमहाराजस्य वाश्रयः ६
इति महाभारते राजधर्मः ॥ सन्धि
र्नाविग्रहो यानमासनं द्वैधमाश्रय इ
त्यमरः ॥ षड्गुणा एव । चतुर्वर्णा
दित्वात्स्वार्थे ष्यञ् ॥

षाण्मातुरः । पुं॰ शक्तिधरे । कार्त्ति
केये ॥ षण्णां मातॄणामपत्यम् । मा
तुरुत्सङ्ख्यासम्भद्रपूर्वाया इत्यणि
॰ उत्वं रपरत्वञ्च ॥

षाष्ठः । त्रि॰ षष्ठे ॥

षिड्गः । पुं॰ कामकेलौ । कामुके ।
नागरे । विटे । लुञ्चा॰ इ॰ भा॰ ॥
सेटति॰ षिध्यतेवा । षिटचनादरे
। बाहुकादिन्॰ सत्वाभावश्च ॥

षुः । पुं॰ गर्भविमोचने ॥



षोडन् । त्रि॰ षड्दन्तयुक्ते ॥ षट् द
न्ता अस्य । वयसिदन्तस्येति दत्रादे
शः । ततः षत्वं दतृदशधासूत्त
रपदादेष्टुत्वञ्च॰ धासुवेतिवाच्यम् ॥

षोडशः । त्रि॰ षोडशानाम्पूरणे ।
तस्यपूरणे डट् ॥

षोडश । पुं॰ नित्यंबहुवचनान्तः । ए
काधिकपञ्चदशसङ्ख्यायाम् ॥ ग
र्भाधानादिसंस्कारेषु ॥ ते यथा ।
गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा
। जातकर्माभिधानञ्च निष्क्रमः प्रा
शनन्ततः ॥ चूडोपनयनं वेदव्रता
नाञ्च चतुष्टयम् ॥ गोदानं मेखल
न्तोषोविवाहः षोडशक्रमात् ॥ ष
ट् चदशचषडधिकादशवा । षत्व
त्वं दतृदशधासूत्तरपदादेष्टुत्वञ्च॰
धासुवेतिवाच्यम् ॥ त्रि॰ सङ्
ख्येये ॥

षोडशकः । पुं॰ षोडशसङ्ख्यापरि
मितगणविशेषे ॥ यथा । षोडशक
स्तुविकारइति । पञ्चभूतानि॰ ए
कादशेन्द्रियाणि चेत्येतानि विकारप
दवाच्यानि ॥

षोडशकला । स्त्री॰ चन्द्रमण्डलस्य
षडधिकदशभागेषु ॥ यथा । अमृ
तामानदापूषातुष्टिः पुष्टीरतिधृ
तिः । शशिनीचन्द्रिकाकान्तिर्ज्यो
त्स्ना श्रीः प्रीतिरङ्गदा ॥ पूर्णापू
र्णामृताकामदायिन्यः शशिनः

कला: ॥

षोडशदानम् । न० श्राद्धादौ षोडशप्रकारदेयद्रव्ये ॥ तत्क्रममाहुः साम्प्रदायिकाः । भूम्यासनं जलं वस्त्रं प्रदीपोऽन्नं ततः परम् । ताम्बूलच्छत्रगन्धाश्च माल्यं फलमतः परम् ॥ शय्या च पादुका गावः काञ्चनं रजतन्तथा । दानमेतत् षोडशकं प्रेतमुद्दिश्य दीयते ॥ तत् षोडशषोडशकैरेको दानसागरो भवति ॥

षोडशभुजा । स्त्री० षोडशहस्तयुक्तायां दुर्गायां ॥

षोडशमातृकाः । स्त्री० गौर्यादिषु ॥ यथा । गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा शान्तिः पुष्टिर्धृतिः क्षमा ॥ आत्मनो देवता चैव तथैव कुलदेवता ॥

षोडशर्त्विक्क्रतुः । पुं० षोडशर्त्विक्साध्ये ज्योतिष्टोमयागे द्वादशाहसाध्यसत्रयागे च ॥ तत्रर्त्विजां नामानि यथा । ब्रह्मा १ ब्राह्मणाच्छंसी २ आग्नीध्रः ३ पोता ४ एते सार्ववेदीयाः ॥ होता ५ मैत्रावरुणः ६ अच्छावाकः ७ ग्रावस्तोता ८ एते ऋग्वेदिनः ॥ अध्वर्युः ९ प्रतिप्रस्थाता १० नेष्टा ११ उन्नेता १२ एते याजुषाः ॥ उद्गाता १३ प्रस्तोता १४ प्रतिहर्त्ता १५ सुब्रह्मण्यः १६ एते सामगाः ॥ ज्योतिष्टोमे द्वादशशतगोदक्षिणाविभागः षोडशर्त्विजाम् । तद्विकृतीभूते सत्रात्मके द्वादशाहसाध्ये शतेनार्द्धिनो दीयन्तेत्यादिदर्शनेन निर्णीयते । तत्र विभागं मनुराह । सर्वेषामर्द्धिनो मुख्यास्तदर्द्धेनार्द्धिनोऽपरे । तृतीयिनस्तृतीयांशाश्चतुर्थांशैश्च पादिनः ॥ दक्षिणागोशतविभागाय श्रौतकात्यायनोपि । अथ द्वादश द्वादशाद्येभ्यः षट् षट् द्वितीयेभ्यश्चतस्रश्चतस्रस्तृतीयेभ्यस्तिस्रस्तिस्र इतरेभ्यः । इत्यत्र षोडशर्त्विजां चतुरश्चतुरः कृत्वा चत्वारो वर्गा इति मलमासतत्त्वम् ॥

षोडशांशुः । पुं० शुक्रग्रहे ॥ षोडश अंशवोऽस्य ॥

षोडशाङ्गः । पुं० धूपविशेषे ॥ यथा । गुग्गुलुं सरलं दारुपद्मं मलयसम्भवम् । कौबेरमगुरुं कुष्ठं गुडं सर्जरसं घनम् ॥ हरीतकीं नखीं लाक्षां जटामांसीं च शैलजम् । षोडशाङ्गं विदुर्धूपं दैवपित्र्ये च कर्मणि ॥ त्रि० षोडशावयववति ॥

षोडशाङ्घ्रिः । पुं० कर्कटे ॥

षोडशारम् । न० षोडशदलपद्मे ॥

षोडशार्चिः । पुं० शुक्रग्रहे ॥

षोडशावर्त्तः । पुं० शङ्खे ॥

षोडशिकाम्रम् । न० पलपरिमाणे ॥

षोडशी । पुं० यज्ञपात्रविशेषे ॥ सती

मकपाचविशेषे ॥ समयाध्युषिते
सूर्ये षोडशिनः स्तोत्रमुपाकरोति ॥
षोडशी । स्त्री० दशमहाविद्यान्तर्गत
महाविद्याविशेषे ॥ यथा । काली
तारामहाविद्याषोडशीभुवनेश्वरी।
भैरवीछिन्नमस्ताचविद्याधूमावती
तथा ॥ बगलासिद्धविद्याचमातङ्गी
कमलात्मिका । एतादशमहाविद्याः
सिद्धविद्याः प्रकीर्त्तिताः ॥ जनवि
मतिपिण्डदानक्रियायाम् ॥ षोड
शानांपूरणी । डट् । ङीप् ॥
षोढा । अ० षड्धा । षट्प्रकारे ॥
षोढाषट्धावाकुरु । सङ्ख्यायाविधार्थेधा । षषउत्वंदतदशधासूत्त
रपदादेष्टुत्वञ्च०धासुवेतिवाच्यम् ॥
ष्ठीवनम् । ) न० फुत्कृत्यश्लेष्मणः
ष्ठेवनम् । )
प्रक्षेपे ॥ ष्ठिवुनिरसने । ल्युट् ।
ष्ठिवुसिव्योर्ल्युटिदीर्घोवेतिस्वामी॥
ष्ठ्यूतम् । त्रि० ष्ठीवने ॥ ष्ठिवु० । क
र्मणिक्तः । च्छ्वोःशूठ् ॥ *

सकारवर्णप्रारम्भः

सः । पुं० सकारे । ईश्वरे ॥ सर्पे ॥ प
क्षिणि ॥ विष्णौ ॥ सगणे० ॥ ऽपुं०॥
संयः । पुं० कङ्काले ॥ इ० श० च०
का ॥
संयत् । पुं० स्त्री०युद्धे । पापेऽधर्मे।
समितौ ॥ संयतनम्० संयमनंवा
। यतीप्रयत्ने० यमउपरमेवा । स

म्पदादित्वात्क्विप् । गमादीनामि
तिमलोपः । तुक् ॥
संयतः । त्रि० बद्धे ॥ संयम्यतिस्म
। यम० । क्तः ॥ कृतसंयमे ॥
संयतेन्द्रियः । त्रि० वशीकृतेन्द्रिये ॥
संयतानिविषयेभ्योनिवर्त्तितानि०
इन्द्रियाणियेनसः ॥
संयत्तः । त्रि० उद्युक्ते ॥
संयद्वरः । पुं० नृपे । संयच्छति ।
यम० । क्विबरच्छत्वरेतिष्वरच् ।
निपातनान्मस्यदः ॥
संयन्ता । त्रि० संयमनकर्त्तरि । नि
यन्तरि ॥ संयच्छति । यम० । स
म्पूर्वः । तृच् ॥
संयमः । पुं० व्रताद्यङ्गपूर्वदिनकर्त्त
व्याचारे । नियामे । नियमे । यामे
। यमे । संयामे । संयमने ॥ धार
णाध्यानसमाधिरितित्रयमेकविषयं
० संयमशब्देनोच्यते । त्रयमेकत्र
संयमइतिपतञ्जलिः ॥ सर्ववर्णा
नुष्ठेयः सकलपुरुषार्थोपयुक्तोयंसं
यमः । तथाचमनुः । इन्द्रियाणां
विचरतांविषयेष्वपहारिषु । संय
मेयत्नमातिष्ठेद्विद्वान्यन्तेववाजि
नामिति ॥ विद्वान्० विषयेषुवर्त्त
मानानामिन्द्रियाणांजयित्वादिदो
षानुज्ञानन्नित्यर्थः ॥ धर्माधर्मफल
दानेनानुग्रहेनिग्रहेच ॥ संयमनम्
। यमः समुपनिविषुचेतिपक्षेऽप्

॥ संयते ॥

संयमकः । वि॰ नियन्तरि ॥ संयमिनि ॥

संयमनः । पुं॰ यमलोके ॥ न॰ बन्धने ॥ व्रते ॥

संयमनी । स्त्री॰ यमस्यपुर्य्याम् ॥ यथा नारसिंहेनृगेन्द्रसंहितायाम् ॥ मृत्योः संयमनीतुङ्गलोहप्राकारमण्डला । कालपाशपिनद्धाधिष्ठितमारीभिर्वृता ॥ कालपाशादिजुष्टा॰ ऽत्युन्नतायसप्राकारसमूहा॰ संयमनी नामदक्षिणस्यांयाम्यपुरीत्यर्थः ॥

संयमितः । वि॰ जातसंयमे ॥ तारकादित्वादितच् ॥ यमिते ॥

संयमी । पुं॰ मुनौ ॥ वि॰ संयमवति ॥ स्थितप्रज्ञे ॥ यानिशासर्वभूतानांतस्यांजागर्त्तिसंयमी ॥ संयमोऽस्यास्ति । इनिः ॥

संयाता । स्त्री॰ सम्भूयगन्तायाम् । पितेनद्वीपान्तरगमने ॥ समुदितागमने ॥

संयामः । पुं॰ संयमे ॥ संयमनम् । यमः समुपनिविषुचेतिपक्षे घञ् ॥ संयमे ॥

संयावः । पुं॰ घृतक्षीरगुडगोधूमचूर्णसिद्धे भोज्यविशेषे ॥ यथा । संयावस्तुघृतक्षीरगुडगोधूमपाकजइति ॥ पिष्टकविशेषे । पेराक॰ पिराकी॰ इ॰ भा॰ प्र॰ ॥ यथा । पयंस्यःसाज्यसमितानिर्मिताघृतभर्जिता ः । कुट्टिताश्चोलिताः शुभाः शर्कराभिर्विमर्दिताः ॥ तत्र चूर्णंक्षिपेदेलालवङ्गमरिचानिच । नालिकेरंसकर्पूरंचारबीजान्यनेकशः ॥ घृतान्नसमितापुष्टैःटिकारचितास्ततः । तस्यांतत्पूरणंन्यस्यकुर्यान्मुद्रांदृढांसुधीः ॥ सर्पिषिप्रचुरेतान्तुसुपचेन्निपुणोजनः । प्रकारस्त्वैः प्रकारोयंसंयावइतिकीर्त्तितः ॥ मठकेनसमोज्ञेयः संयावोपिगुणैर्जनैः ॥ लोके॰ गंभाइतिप्रसिद्धोयम् ॥ संयूयतेमिश्रीक्रियतेगुडादिभिः । यु॰ । समियुद्रुदुवइतिघञ् ॥

संयुक्तः । वि॰ संलग्ने । संयोगाश्रये ॥ सम्यग्युक्तः ॥

संयुक्तसमवायः । पुं॰ सन्निकर्षे ॥ यथा॰ घटरूपप्रत्यक्षे संयुक्तसमवायः सन्निकर्षः । चक्षुः संयुक्तेघटेरूपस्यसमवायात् ॥

संयुक्तसमवेतसमवायः । पुं॰ सन्निकर्षविशेषे ॥ यथा॰ रूपत्वसामान्यप्रत्यक्षे॰ संयुक्तसमवेतसमवायः सन्निकर्षः । चक्षुः संयुक्तघटेरूपंसमवेतम्॰ तत्ररूपत्वस्यसमवायात् ॥

संयुगः । पुं॰ युद्धे । योधने । जन्योरर्थे ॥ संयोजनम् । युजिर्॰ । घञ् । रथदुगेतिनिर्देशाद्गुणा

भावः। प्रतिजनादिषु संयुगशब्द पाठात्॥

संयुक्। त्रि० गुणवति। सम्बन्धिनि॥ संयुज्यते। युज०। क्विप्चेति क्विप्॥

संयुतः। त्रि०। संयुक्ते। बद्धे॥

संयोगः। पुं० प्रश्लेषे। इमौ संयुक्ताविति व्यवहारहेतौ० नवद्रव्यवर्त्तिनि॥ मेलने। सम्बन्धे॥ सन्निकर्षभेदे॥ चक्षुषा घटप्रत्यक्षजनने संयोगसन्निकर्षः॥ संबन्धमात्रे॥ संयुज्यतेऽनेन। युजिर्०। घञ्॥ न्यायमते संयोगो गुणपदार्थः। स चाप्राप्तवस्तुद्वयस्य प्राप्तिरूपः सम्बन्धविशेषः। स त्रिविधो यथा। एककर्मजन्यः। यथा पर्वते पक्षिसंयोगः। १। उभयकर्मजन्यः। यथा मेषद्वयसंयोगः। २। संयोगजन्यसंयोगः। यथा कपालतरुसंयोगजन्यतरुकुम्भसंयोगः। ३। कर्मजन्यसंयोगोऽपि द्विविधः। अभिघातः० तस्माच्छब्दो जायते। १। नोदनः० तस्माच्छब्दो न जायते। २॥ अत्र प्रमाणम्। अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः। कीर्त्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः॥ तथोभयोः कर्मजन्यो भवेत् संयोगजोऽपरः। आदिमः श्यनशैलादिसंयोगः परिकीर्त्तितः॥ मेषयोः सन्निपातो यः स द्वितीय उदाहृतः। कपालतरुसंयोगात् संयोगस्तरुकुम्भयोः॥ द्वितीयः स्यात् कर्मजोऽपि द्विधैव परिकीर्त्तितः। अभिघातो नोदनञ्च शब्दहेतुरिहादिमः॥ शब्दाहेतुर्द्वितीयः स्यादिति भाषापरिच्छेदः॥ उदयात् पूर्वं दशम्याः शेषे॥ यथा। उदयात् प्राक् दशम्यास्तु शेषः संयोग इष्यते। उपरिष्टात् प्रविशस्तु तस्मात् तां परिवर्ज्जयेत्॥ सन्निधौ॥

संयोगपृथक्त्वम्। न० न्यायविशेषे। यथा। एकस्य कर्म्मणो नित्यत्वकाम्यत्वाभ्यां द्विरूप्याङ्गीकारे० नित्यानित्यसंयोगविरोधः। नैवम्० संयोगपृथक्त्वन्यायात्। स च न्यायश्चतुर्थाध्याये उक्तः। यथा। खादिरे पशुं बध्नाति० खादिरं वीर्य्यकामस्य यूपं कुर्वीतेति श्रूयते। अत्र संशयः। किं काम्यस्यैव खादिरता नित्येऽपि स्यादुत नेति। तत्र फलार्थत्वेनानित्यतया० नित्यप्रयोगाङ्गतानयुक्ता। यत्तु नित्ये खादिरत्वश्रवणं० तत् काम्यस्यैव पशुबन्धनाय यूपाश्रयज्ञापनार्थं मतान्तरे नित्ये खादिरतेति प्राप्ते० राद्धान्तः। चतुर्थाध्यायसूत्रम्। एकस्य तूभयत्वे संयोगपृथक्त्वमिति। अतः संयोगः सम्बन्धमा

वम्‌० पृथक्‌त्वंभेद : । एकस्यस्वा दिरस्वकत्वर्थत्वपुरुषार्थत्वरूपोभयात्मकत्वेवाक्यद्वयेनचक्रतुशेषत्वफलशेषत्वलक्षणसंयोगभेदावगमान्ननित्यानित्यसंयोगविरोध : । तथा श्रयत्नानार्थमित्यवाक्यं० सन्निधानादेवाश्रयलाभात्‌ । अतउभयार्थात्वादिरतेति ।एवंदध्नाजुहोति० दध्नेन्द्रियकामस्येत्यादावुभयार्थतेव । दधित्वस्यद्वैधाश्रवणादितिप्रायश्चित्ततत्वम्‌ ॥

संयोगित : । त्रि० आत्तसंयोगे ॥ तार

संयोगी । त्रि० संयोगविसिष्टे ॥ कादित्वादितच्‌ ॥

संयोजनम्‌ । न० संयोगे ॥ रतिलक्षे । मिथुनवे । मैथुने ।। इ० हारावली ॥

संयोजित : । त्रि० पदार्थान्तरेणसंयुक्तीकृतपदार्थे । उपाहिते । मेलिते ॥ संयोज्यतेस्म युजिर्‌० । यन्त : । क्त : ॥

संरब्ध : । त्रि० संलग्ने । कुपिते ॥

संरम्भ : । पु० आटोपे ॥ उत्साहे ॥ यथा । कार्यारम्भेषु संरम्भःस्थेयउत्साहइष्यते ॥ कोपे ; क्रोधे ॥ यथा । प्रणिपातप्रतीकार : संरम्भोहिमहात्मनाम्‌ ॥ संरम्भणम्‌ । रभराभस्ये । घञ्‌ । रभेरशलुटो रितिनुम्‌ ॥

संरम्भी । त्रि० क्षुभिते । संरम्भयुक्ते ।

संराद्धि : । स्त्री० निष्पत्तौ ॥

संराधनम्‌ । न० समाध्यादौ । भक्तिध्यानप्रणिधानाद्यनुष्ठाने ॥ संराध्यतेऽनेन । राध ० । भावकरणादौल्युट्‌ ॥

संराव : । पु० आरवे । आरावे । शब्दमात्रे ॥ संरवणम्‌ । रुशब्दे । उपसर्गेरुवइतिभावेघञ्‌ ॥

संरावी । त्रि० प्रशस्तशब्दविशिष्टे ॥

संरुद्ध : । त्रि० प्रतिबद्धे ॥ चिरगयावृतिख्याते ॥

संरूढ : । त्रि० प्रौढे ॥ अङ्कुरिते ॥ सम्यग्वाद्वैरिगत्यर्थेतिक्त: । ढत्वधत्वष्टुत्वढलोपदीर्घा : ॥

संरोध : पु० क्षेपे ॥ रोधे ॥ संरोधनम्‌ । रुधिर्‌ । घञ्‌ ॥

संलग्न : । त्रि० संयुक्ते ॥ सम्यक्‌लग्न : ॥

संलय: । पु० निद्रायाम्‌ । शयने ॥ सम्यक्‌लीयतेऽत्र । लीङ्‌श्लेषणे । एरच्‌ ॥ प्रलये ॥

संलाप : । पु० प्रीत्यामिथोभाषणे । अन्योन्यप्रीतिभाषणे ॥ संलपनम । लप० । घञ्‌ ॥ आलापएकेनापिक्रियते०संलापस्तुपरस्परभाषणमेवेतिभेद : ॥ उक्तिप्रत्युक्तिमद्वाक्यंसंलापइतिकीर्त्यते ॥ इत्युज्ज्वलनीलमणि : ॥

संव : । पु० शम्बे । वज्रे । कुलि

शि। संवयति। वय॰। अच्॥

संवत्। अ॰ वर्षे। वत्सरे॥ संवय ति। वयगतौ। क्विप्। यलोपः। तुक्॥

संवत्सरः। पुं॰ वत्सरे। अब्दे॥ सम्यग्वसन्त्यत्र ऋतवोमासादयश्च। वसनिवासे। संपूर्वाच्चित्सिरप्रत्ययः। सच्चार्द्धधातुकमितिसञ्ज्ञतः। संवत्सरपरिवत्सरेडावत्सरानुवत्स रोद्वावत्सरेषुप्रथमवत्सरे॥ तत्र यदाशुक्लप्रतिपदिसङ्क्रान्तिर्भवति॰ तदासौरचान्द्रयोर्मासयोर्युगपदुप क्रमोभवति॰ ससंवत्सरः। त तः सौरमानेन॰ वर्षेषड्दिना निवर्द्धन्ते॰ चान्द्रमानेन॰ ह्रस न्तीतिद्वादशदिनव्यवधानादुभयोर यएवाङ्कोवैभवति। एवंपञ्चवर्षा णिगच्छन्ति। तन्मध्येद्वौमलमासौ भवतः षष्ठः संवत्सरोभवति। तदेवचान्तरभेदेन॰ संवत्सरादिप ञ्चकंसमामनन्ति॥ एषामुद्धारस्तु। शकाब्दात्पञ्चभिः शेषात्सम्व त्सरादिवत्सराः। सम्परीदानुपू र्वाश्चतथोद्वापूर्वकामता॰ इति। कालात्मशास्त्रेविष्णौ॥

संवत्सरमुखी। स्त्री॰ ज्यैष्ठशुक्लदश म्याम्। दशहरायाम्॥ यथा। ज्यैष्ठस्यशुक्लदशमीसंवत्सरमुखी-स्मृता। तस्यांस्नानंप्रकुर्वीतदान

ञ्चैवविशेषतः। इतिब्रह्मपुराण म्॥

संवत्सरा। स्त्री॰ दुर्गायाम्॥

संवद्। अ॰ वर्षे॥ संवदतिभाषा न्। वद॰ क्विप्॥

संवदनम्। न॰ संवादे॥ समालो चे॥ वशीकृतौ॥

संवननम्। न॰ वशक्रियायाम्। व शीकरणे॥ सम्पूर्वोवनुयाचने वशीकरणार्थः। ल्युट्॥

संवरः। पुं॰ अनेकान्तवादिनांसप्त पदार्थान्तर्गतपदार्थविशेषे॥ य थो। इन्द्रियसंयमरूपप्रतिष्ठंध्यान म्॰ आस्रवनिरोधात्मकत्वात्॰सं वृणोत्यास्रवमितिसंवरश्चतुर्थः। वङ्वञ्भ्यां॰ वश्च॰ इत्यादिना कर्मण्यप्॥

संवरणम्। न॰ गोपने॥ सम्यक् वरण वेष्टनम्॥ आवरणे॥

संवर्गः। पुं॰ प्राणे॥ वायौ॥ संवर्जनादर्थात्सङ्ग्रहणात्॰ स ङ्ग्रसनाद्वाऽग्न्यादीनां॰ वायुः संवर्गः। संवृङ्क्ते। वृजि॰। घञ्। कुत्वम्॥

संवर्गविद्या। स्त्री॰ वायूपासनवि द्यायाम्॥ संवर्गस्यविद्या॥

संवर्त्तः। पुं॰ प्रलये॥ संवर्त्तेतेज गदत्र। वृतु॰। हलश्चेतिघञ्॥ मुनिविशेषे॥ श्रुत्यादिप्रसिद्धेपर

मरुंसेऽग्रेरवतारे ॥ अघट्टने । क र्षफले ॥ योगविशेषे ॥ यथा । स प्तमीरविवारेषप्रतिपद्धवासरे । संवर्त्तसंज्ञकोयोगोगर्हितः शुभ कर्मसु ॥ मेघाधिपविशेषे । संवर्त्त श्वपुष्करः ॥
संवर्त्तकः । पुं॰ कालाग्निरुद्रे ॥ ब लदेवस्यलाङ्गले ॥ और्वे । वाडवा ग्नौ ॥ त्रि॰ प्रवर्त्तके ॥ संवर्त्तय ति । वृतु॰ ण्वुल् ॥
संवर्त्तकी । पुं॰ बलदेवे । अच्यु ताऽग्रजे ॥ वृ॰ त्रि॰ शेषः ॥
संवर्त्तवापी । स्त्री॰ तीर्थविशेषे ॥
संवर्त्तिः । स्त्री॰ पद्मादिनवपत्रे । संवर्त्तिकायाम् ॥ संवर्त्तते । वृतु ॰ । इपिधिरुहिवर्त्तिविदिच्छि दि कीर्त्तिभ्यश्चेतीन् ॥
संवर्त्तिका । स्त्री॰ पद्मादीनांनवद ले ॥ पद्मस्यकेसरसमीपस्थदले ॥ संवर्त्तिरेव । स्वार्थेकन् ॥ गुणा स्तु । संवर्त्तिकाहिमातिक्ताकषाया दाहतृट्प्रणुत् । मूत्रकृच्छ्रगुदव्या धिरक्तपित्तविनाशिनी ॥
संवर्द्धकः । पुं॰ संवर्द्धनकारिणि ॥
संवर्द्धनम् । न॰ सम्यग्वृद्धौ ॥ सं वर्द्धनेतच्छीलः । ऋधुवृधौ । अ नुदात्तश्चेतियुच् ॥ संदीपने ॥
संवर्द्धितः । त्रि॰ पुष्टे ॥ सम्यग्वृ द्धिविशिष्टे ॥

संवलनम् । न॰ मिश्रणे ॥
संवलितः । त्रि॰ मिलिते । मिश्रि ते । एकत्रीकृते ॥
संवसथः । पुं॰ ग्रामे ॥ संवसन्त्यत्र । वस॰ । उपसर्गेवसइत्यथच् ॥
संवहः । पुं॰ सप्तवाय्वन्तर्गतप्रथ मवायौ ॥ सतदूहवायोरुपरिष्ठ इतिसिद्धान्तशिरोमणिः ॥ वा योश्चतुर्थस्कन्धे ॥ यथा । धवन्तो नयउग्रभीमः स्वे पथसांक्षयः । ध्रुभियुगमीथवाभेध्यश्चतुर्थः सं वहोगणः ॥ ४ ॥
संवाटिका । स्त्री॰ शृङ्गाटके ॥
संवाता । पुं॰ संवहतरि ॥ वाते गत्यर्थाच्छतप्रत्ययः ॥
संवादः । पुं॰ परस्परवचनाविरो धे ॥ वाचिके । सन्देशवाक्ये । समाचारे ॥ संवदनम् । वद॰ । घञ् ॥
संवादिनी । स्त्री॰ सहग्रामः ॥ य था । षड्जसंवादिनीतिरघुः ॥
संवार्य्यः । त्रि॰ संवरणीये ॥
संवासः । पुं॰ गृहे ॥ पुरवासि नांविहारार्थपुरमध्येवहिर्वाऽनावृ तस्थाने । सन्निवेशे । निकर्ष णे ॥
संवाहकः । पुं॰ अङ्गविमर्द्दके ॥
संवाहनम् । न॰ भारादेर्वाहने ॥ अङ्गमर्द्दने । पादमर्द्दनादौ ॥ वह

प्रापणे । स्वार्थेऽव्ययात्ल्युट् । वाहनमाहितादितिनिपातनाद्दीर्घ इत्येके ॥

संवाहितः । त्रि० सञ्चारिते ॥

संविग्नः । त्रि० उद्विग्ने । सम्भ्रान्ते ॥ ओविजीभयचलनयोः संपूर्वः । क्तः । ओदितश्चेति नः । श्वीदितइतिनेट् ॥

संवित्तिः । स्त्री० प्रतिपत्तौ ॥ ज्ञानावबोधे ॥ विद्ज्ञाने । स्त्रियांक्तिन् ॥

संवित्० द० स्त्री० ज्ञाने । सम्भाषायाम् ॥ क्रियाकारे । आजौ । सङ्ग्रामे । नाम्नि ॥ अङ्गीकारे ॥ प्रतिज्ञायाम् ॥ आचारे । तोषणे ॥ संयमे ॥ सङ्केते । यथा । प्रवृत्तौचनिवृत्तौचसंविदः स्यापयेद्रणेइति । कृतव्यवस्थायाम् ॥ यथा । संविदश्चव्यतिक्रमइति ॥ मनीषायाम् ॥ संवेदनम्० संविद्यतेऽनयावा । विद्ज्ञाने० विद चेतनादौवा । सम्पदादित्वात्क्विप् ॥

संविदितः । त्रि० अङ्गीकृते । अङ्गीकृते । संविद्यतेस्म । विद्ज्ञाने । क्तः ॥

संविधा । स्त्री० भोग्यवस्तुनि । सामग्र्याम् ॥ संविधीयतेऽनया । संविपूर्वात्धाञ्धातश्चोपसर्गइ-तिकः ॥

संविधानम् । न० उत्पादने ॥

संविभागः । पुं० विभज्यप्रतिपादने ॥

संविद्यतीर्थम् । न० तीर्थविशेषे ॥

संविषा । स्त्री० अतिविषायां ॥

संवीक्षणम् । न० अन्वेषणे । अपहृतवस्तुनस्तात्पर्येणान्वेषणे । सम्यक्तात्पर्येणविविधप्रकारैरीक्षणम् ॥

संवीतः । त्रि० रुद्धे । आवृते । वस्त्रादिनावेष्टिते । संवीयतेस्म । व्येञ्संवरणे । क्तः ॥

संवीताङ्गः । त्रि० आच्छादितदेहे ॥

संवृतः । त्रि० सङ्कुचिते । यथा । नासंवृतमुखः कुर्याद्धास्यंजृम्भांतथाक्षुतमिति । निगूढे । गुप्ते । संवेष्टिते । सम्पूर्वाद्वृञः क्तः ॥

संवृतिः । स्त्री० वागिन्द्रियप्रयुक्तव्यवहारे ॥ गोपने ॥ संवरणम् । वृञ० क्तिन् ॥

संवृत्तः । त्रि० सञ्जाते । सम्यक्प्रवृत्ते ॥ सम्पूर्वाद्वर्त्ततेः क्तः ॥ पुं० वरुणे ॥

संवृत्तिः । स्त्री० संवरणे ॥ अविद्याविषयेलौकिकेव्यवहारे । लौकिक्यांबुद्धौ ॥ अविद्यायाम् ॥ संव्रियते० आच्छाद्यतेतत्त्वंयया । विभ्रमे ॥ संवर्त्तनम् । वृतु०

क्तिन् ॥

संवेगः । पुं॰ सम्भ्रमे । हर्षादिना कर्मसु त्वरणे ॥ अद्भुतपरक्रमादिदर्शनात्सत्वरतायाम् ॥ संवेजनम् । ओविजी॰ घञ् । सम्यग्वेगे ॥

संवेदः । पुं॰ वेदने । अनुभवे ॥ विदज्ञाने । सम्पूर्वः । घञ् ॥

संवेदनम् । न॰ संवेदे ॥

संवेद्यः । त्रि॰ ज्ञेये ॥

संवेशः । पुं॰ स्वापे । निद्रायाम् ॥ स्त्रीरतिबन्धे ॥ पीठे ॥ संवेशनम् । विश॰ । घञ् ॥

संवेशनम् । न॰ मैथुने ॥ उपभोगस्थाने ॥

संव्यानम् । न॰ उत्तरीयवस्त्रे । अंशुके । वस्त्रे ॥ संवीयतेऽनेन । व्येञ् संवरणे । ल्युट् ॥

संशप्तकः । पुं॰ समयात् सङ्ग्रामादनिवर्त्तिनि ॥ समयात्॰ कुलाचाराच्छपथाद्वा॰ सङ्ग्रामादनिवर्त्तिनोऽपराङ्मुखाअपलायमानाश्चाक्रोशन्ति॰ तेसंशप्तकाः कथ्यंते ॥ नारायणस्यसेनाविशेषे ॥ शपनम् । शपआक्रोशे । भावेक्तः । संशप्तं शपथं करोति । तत्करोतीति णिच् । ण्वुल्॰ कन्वा ॥ सम्यक्॰ शप्तं सत्यं यस्येतिवा ॥

संशमः । पुं॰ निरवशेषनाशे ॥ संशमनम् । शम॰ भावेघञ् ॥

संशमनम् । न॰ शमने । यथा । नशोधयतियद्दोषान्समान्नोदीरयत्यपि । समीकरोतिसंवृद्धांस्तत्संशमनमुच्यते ॥ नशोधयति॰नो धर्धोमार्गाभ्यांपातयति । नोदीरयति॰नवर्द्धयति ॥ वृ॰भा॰प्र॰श : ॥

संशयः । पुं॰ सन्देहे । द्वापरे ॥ अस्यलक्षणं यथा । एकस्मिन्धर्मिणिविरुद्धनानाधर्मवैशिष्ट्यज्ञानं॰ संशयइति । यथास्थाणुर्वापुरुषोवेति ॥ विचिकित्सायाम् ॥ योग : साधनीयेनवेत्युभयकोटिस्पृशिविज्ञाने ॥ अतद्रूपप्रतिष्ठत्वेन विपर्ययान्तर्गतोपिसन्नुभयकोटिस्पर्शित्वैककोटिस्पर्शित्वरूपावान्तरविशेषविवक्षयाचविपर्ययाद्भेदो॰ विदृधव्यः ॥ प्रतिबन्धके ॥ संशयंलक्षयतिगोतमः । समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यानुपलब्ध्यव्यवस्थातश्चविशेषापेक्षोविमर्शः संशयः । १ । २३ । संशयइतिलक्ष्यनिर्देशः विमर्शइत्यत्रविशब्दोविरोधार्थः । मृशिर्ज्ञानार्थः एकस्मिन्धर्मिणीतिपूरणीयम् । तेन॰एकधर्मिणिविरोधेन भावाभावप्रकारकंज्ञानम् संशयः । तत्कारणमुक्तेनविशेषलक्षणान्या

ष्ट॰ समानेत्यादि । उपपत्तिर्ज्ञानम् । तथाच॰ समानस्य विरुद्धकोटिद्वयसाधारणधर्मस्य ज्ञानादित्यर्थः । तथाच साधारणधर्मवद्धर्मिज्ञानजन्योऽसाधारणधर्मवद्धर्मिज्ञानजन्यश्चेत्यर्थः । विप्रतिपत्तिर्विरुद्धकोटिद्वयोपस्थापकः शब्दस्तस्मादित्यर्थः । यद्यपि शब्दस्य न संशायकत्वम्॰ तथापि शब्दात् कोटिद्वयोपस्थितौ मानसः संशय इति वदन्ति उपलब्धेर्ज्ञानस्य॰ अनुपलब्धेर्व्यतिरेकज्ञानस्य याऽव्यवस्था सद्विषयकत्वानिर्धारणं प्रामाण्यसंशय इति फलितोऽर्थः ॥ अन्ये तु उपलब्ध्यव्यवस्था प्रामाण्यसंशयः । अनुपलब्धिरुपलब्धिभ्रमत्वम्॰ तदव्यवस्था तत्संशय इत्याहुः । वस्तुतस्तु प्रामाण्यसंशयस्य न संशयहेतुत्वम्॰ किन्तु गृहीताप्रामाण्यकज्ञानस्य विरोधितया सति प्रामाण्यसंशये तज्ज्ञानस्याविरोधितया साधारणधर्मदर्शनादित एव संशयोत्पत्तिरिति । उपलब्धीत्यादिकं तु दृष्टस्थले संशयो भवतीत्येतावन्मात्रपरम् । चकारोऽव्याप्यसंशयस्य व्यापकसंशयहेतुत्वं समुच्चिनोतीति वदन्ति । विशेषापेक्ष कोटिस्मरणसापेक्ष । वस्तुतस्तु संशयधारावाहिकत्वं स्यादत आह । विशेषेति । विशिष्यं विशेषदर्शनम्॰ षपेक्षते निवर्त्तकत्वेन॰ तथाच॰ विशेषदर्शननिवर्त्त्यत्वकथनमेव विशेषदर्शनजन्यसंशय इत्युक्तम् ॥ १।२३ ॥ संशयनम् । शीङ् एरच् ॥

संशयात्मा । त्रि॰ इदमेवं भवति न वेति सर्वत्र संशयाक्रान्तचित्ते । संशये॰ आत्मा मनो यस्य सः । संशयात्मा विनश्यति ।

संशयानः । त्रि॰ संशयापन्ने । संशययुक्ते ॥

संशयापन्नः । त्रि॰ संशयिनि ॥

संशयापन्नमानसः । त्रि॰ सन्देहके । संशयिते । सांशयिके ॥ संशयमापन्नं मानसं यस्य॰ यस्मिन् विषये वा ॥

संशयालुः । त्रि॰ संशयितरि ॥

संशयितः । त्रि॰ सन्देहविषये । विचिकित्सिते ॥

संशयिता । त्रि॰ सन्देहाश्रये । संशयकर्त्तरि । यथाहुः । अस्ति स्वर्ग इत्यस्मिन्नर्थे कश्चित् संशयः पुंसः । अत्रापि संशयश्चेत् संशयिता यः सएवभासित्वम् । ४ ।

संशितः । त्रि॰ सम्यक् सम्पादिते ॥ संशितं व्रतम् । सम्यक् सम्पादितमित्यर्थः ॥ व्रतविषयकयत्नवति ॥ संशितो ब्राह्मणः । व्रतविषयकयत्नवानित्यर्थः ॥ सम्यक् शायते स्म

। शीतनूकरणे । क्तः । शाच्छोरन्यतरस्यामित्यत्र॰ श्यतेरित्वम्॰ । व्रतेनित्यमिति॰ नित्यमित्वम् व्यवस्थितविभाषात्वात्॰ व्रतविषयेश्यतेर्नित्यमित्वम् । सुनिशिते ॥ सम्यक्तनूकृते । सूक्ष्मे ॥

संशितव्रतः । त्रि॰ व्रतयत्ने ॥ सम्यक्शितानितीक्ष्णीकृतानि॰ अतिदृढानिव्रतानियस्यसतथा । श्यतेरित्वंव्रतेनित्यम् ॥

संशुद्धः । त्रि॰ सम्यक्शुद्धिविशिष्टे ॥

संशुद्धिः । स्त्री॰ सम्मार्जने । शरीरादिमार्जने । शौचे ॥

संशुष्कः । त्रि॰ आतपादिनासंशोषितवस्तुनि ॥

संशोकः । पुं॰ औष्ण्ये ॥

संशोकजः । त्रि॰ स्वेदजे ॥ औष्ण्याज्जायमानेयूकादौ ॥ तेषांस्वाण्डजेऽन्तर्भावः ॥ यद्वा । औष्ण्याद्भूमिमुद्भिद्यजातेमशकादौ । तेषामुद्भिज्जेऽन्तर्भावः । तथाचसंशोकजौनाण्डजोद्भिज्जाभ्यामतिरिच्यते ॥

संशोधनम् । न॰ संशुद्धौ ॥ स्यान्दूषितंयेदूर्द्धमधोवादोषसञ्चयम् । संशोधनंतद्देहस्याहिंश्दालीफलंयथा ॥

संशोधितः । त्रि॰ शुद्धीकृतवस्तुनि ॥

संश्चत् । न॰ कुहके । इन्द्रजाले । मायायाम् ॥ संश्चिनोति । चिञ् चयने । संश्चत्वत्पद्वेहदित्युणतिः । निपातनात्॰ सुट्चकारलोपश्च ॥

संश्यानः । त्रि॰ शीतेनसङ्कुचिते ॥

संश्रयः । पुं॰ राज्ञामाश्रयाख्येगुणे । अरिणापीड्यमानस्यबलवदाश्रयणे ॥ आख्यायाम् ॥ नवमेनन्दनोद्देशेनचैत्ररथसंश्रये॰ इतिरामायणेदर्शनात् ॥ आश्रये ॥ वले ॥

संश्रवः । पुं॰ अङ्गीकृतौ । प्रतिज्ञाने ॥ सम्पूर्वाच्छृणोतेः॰ ऋदोरप् ॥

संश्रितः । त्रि॰ अनुजीविनि । आश्रिते ॥

संश्रुतः । त्रि॰ अङ्गीकृते ॥ संश्रूयतेस्म । श्रुश्रवणे । क्तः ॥

संश्लिष्टः । त्रि॰ आश्लिष्टे । मिलिते ॥

संश्लेषः । पुं॰ उपगूहने ॥ संश्लेषणम् । श्लिषआलिङ्गने । घञ् ॥

संश्चत् । न॰ संश्चति । मायायाम् ॥ संश्चत्त्वत्पद्वेहदित्यत्र॰ सुभूतिचन्द्रः सम्पूर्वाच्छ्युतेः संश्चदित्याह । संश्चत्कुहकेस्त्रियंसंश्चत्तत्रैवतेसमे । इत्युणादिकोषश्च ॥

संसक्तः । त्रि॰ अन्योन्यश्लिष्टे । अव्यवहिते । संलग्ने ॥ संसज्यतेस्म । षञ्जसङ्गे । क्तः ॥ लौहदारुमयैःपाशैर्दृढंवद्धोविमुच्यते । स्त्रीधना

दिषु संसक्तोमुच्यतेनकदाचन ॥
संसक्तिः । स्त्री॰ संश्लेषे ॥
संसत्·द् । स्त्री॰ परिषदि । सभायाम् ॥ संसीदन्त्यस्याम् । षद्लृविशरणादौ । सम्पदादित्वात् क्विप् ॥
संसरणम् । न॰ असम्बाधचमूगतौ । रथादीनामसम्बाधगमने ॥ घण्टापथे । नगरस्योपनिर्गमे ॥ संसारे ॥ रणारम्भे ॥ समारम्भे ॥ प्राणिजन्मनि । पुनःपुनर्योनिसम्बन्धे ॥ गतौ । सम्यक् सरन्त्यनेन॰ सम्भूयसरन्त्यनेनाचवा । सृगतौ । करणादौल्युट् । वाहुलकाद्वाल्युट् । युवुतुयुक्तः । घञ्लुडपवादत्वात् ॥
संसर्गः । पुं॰ सङ्गे । सङ्गमे । समवायादिसम्बन्धे ॥ संसर्जनम्॰ समृज्यतेवा । सृज॰ । घञ् ॥
संसर्गाभावः । पुं॰ सम्बन्धरहितत्वे ॥ न्यायमतेषभावपदार्थविशेषः । सतुभेदभिन्नाभावः । सचत्रिविधः । प्रागभावः १ ध्वंसः २ अत्यन्ताभावः ३ इतिभेदात् । यथा । अभावस्तुद्विधासंसर्गान्योन्याभावभेदतः । प्रागभावस्तथाध्वंसोप्यत्यन्ताभावएवच । एवंत्रैविध्यमापन्नः संसर्गाभावइष्यते । इ॰ भा॰ प॰ ॥ भेदत्वंतादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । विनाश्यभावत्वंप्रागभावत्वम् १ जन्याभावत्वम्ध्वंसत्वम् २ नित्यसंसर्गाभावत्वम्ध्वंसत्वम् २ नित्यसंसर्गाभावत्वमत्यन्ताभावत्वम् ३ । इतिसिद्धान्तमुक्तावली ॥
संसर्गी । त्रि॰ संसर्गविशिष्टे ॥ मत्वर्थीयइनिः ॥ सङ्गिन ॥ सम्पूर्वात्सृजेः॰सम्पृचानुरुधेतिघिनुण् ॥
संसर्पः । पुं॰ मासविशेषे ॥ यथा । यद्यावर्षमासोभवति॰ तदाक्षयमासस्यपूर्वोसरावधिमासौभवतः । तत्रपूर्वस्मिन्नधिमासे ॥ सचमलमासः किन्तुशुद्धतुल्यः । उत्तरएवासंक्रान्तोमलमासः । तथाच आचार्यः । एकस्मिन्नपिवर्षेचेद्द्वौमासावधिमासकौ । पूर्वोमासः प्रशस्तःस्यादपरस्तुमलिम्लुचइति ॥ संसर्पणे ॥
संसर्पणम् । न॰ सम्यक्प्रकारेणगमने ॥
संसर्पी । त्रि॰ संसर्पविशिष्टे । सम्यग्गमनशीले ॥
संसारः । पुं॰ मृषाज्ञानसम्भूतवासनायाम् ॥ यथा । संसारमिथ्याधीप्रभवावासनेति ॥ भवे । स्थूलसूक्ष्मोपनिवद्धशरीरपरिग्रहे । जन्ममरणालक्षणे । प्रमःतताप्रमुखैरनर्थैरनुत्पादितानर्थे । अविद्यायाम् ॥ यथा शङ्कराचार्यैः । संसारः स्वप्रतुल्योहिरागद्वेषादिसङ्कुलः । स

कालिसत्यव्रतातिप्रश्नाधेऽसत्यवद्भवेदिति ॥ अपिच । अयमतिचारितया कृतयासंसारोभातिरमणीयः । अपुमः परमार्थदृशानकिमपिसारोगरमणीयदृतिमिल्हणमिश्रः ॥ दुःखे ॥ कृच्छ्रेणामेध्यमध्येनियमिततनुभिः स्थोयतेगर्भवासे • कान्ताविश्लेषदुःखव्यतिकरविषयो यौवनेचोपभोगः । वामाक्षीणाम वज्ञाविहसितवसतिर्वृद्धभावोप्यसाधुः संसारेरेमनुष्याः वदतयदिसुखंस्वल्पमप्यस्तिकिञ्चित् ॥ संसरति कालान्तरम् । सृ॰ । घञ् • ॥ संसरणम् • . वा ॥ दुःखमूलंहिसंसारः सयस्यास्तिसदुःखितः । त्यागः कृतोयेनससुखीनापरः प्रिये ॥ प्रभवंसर्वदुःखानामालयं सकलापदाम् । आश्रयंसर्व्वपापानांसंसारंवर्जयेत्प्रिये ॥ अनध्यन्धनघोरमखीकृतमहाविषम् । अयस्कखंडनंदेविसंसारः सकचेतसाम् ॥ आदिमध्यावसानेषु दुःखंसर्वमिदंयतः । तस्मात्सन्त्यज्यसंसारंतत्त्वनिष्ठः सुखीभवेत् ॥ कुलार्णवे १ उल्लासः ॥

संसारगुरुः । पुं॰ प्रद्युम्ने । कामदेवे । मनोजन्मनि । रूपास्त्रे ॥ संसारस्यगुरुः ॥

संसारबन्धनिर्मुक्तिः । स्त्री॰ नाना योनिसम्बन्धनिवृत्तौ ॥ संसारएव बन्धः • तस्मान्नितरांमुक्तिः ॥

संसारमार्गः । पुं॰ मिथ्याज्ञाने ॥ भगे । योनौ ॥

संसारबीजम् । न॰ कामकर्मप्रवृत्तिकारणे • अज्ञाने ॥

संसारवृक्षः । पुं॰ अव्यक्तादिस्थावरान्ते द्रुमसदृशे ॥ यथा । कदलीस्तम्भवन्निःसारोऽनेकशतपाखण्डबुद्धिविकल्पास्पदस्तत्त्वजिज्ञासुभिर्निर्द्धारितेदंतत्त्वो• वेदान्तनिर्द्धारितपरब्रह्ममूलसारो• ऽविद्याकामकर्माव्यक्तबीजप्रभवो• ऽपरब्रह्मविज्ञानक्रियाशक्तिद्वयात्मकहिरण्यगर्भाङ्कुरः • सर्वप्राणिलिङ्गभेदस्कन्धः • तत्तृष्णाजलावसेकोद्भूतदर्पो• बुद्धीन्द्रियविषयप्रवालाङ्कुरः • श्रुतिस्मृतिन्यायविद्योपदेशपलाशो• यज्ञदानतपआद्यनेकक्रियासुपुष्पः सुखदुःखवेदनानेकरसः • प्राण्युपजीव्यानन्तफलस्तत्तृष्णासलिलावसेकप्ररूढजडीकृतदृढबद्धमूलः सत्यनामादिसप्तलोकब्रह्मादिभूतपक्षिकृतनीडः • प्राणिसुखदुःखोद्भूतहर्षशोकजातनृत्यगीतवादित्रक्ष्वेडितास्फोटितहसिताकृष्टरुदितहाहामुञ्चमुञ्चेत्याद्यनेकशब्दकृततुमुलीभूतमहारवो• वेदान्तविहितब्रह्मात्मदर्शनासङ्गशस्त्रकृतो

वन्दे इत्येष संसारवृक्षो निरूपितो वेदान्तेष्वाचार्यैः । तथोक्तं श्रीकृष्णमिश्रैः । अमुष्य संसारतरोरबोधमूलस्योन्मूलविनाशनाय । विष्णीश्वराराधनबीजजाततत्त्वप्रबोधान्न परोऽभ्युपाय इति ॥

संसारहृत् । पुं० आत्मबोधे ॥

संसारहेतुः । पुं० आत्मनोऽविद्यायाम् ॥

संसारी । पुं० संसारविशिष्टप्राणिनि । भोक्तरि । संसारोऽस्यास्ति । इनिः । कर्तृत्वादिधर्मवति ॥

संसिद्धिः । स्त्री० सम्यक्सिद्धौ । प्रकृतौ । स्वभावे । मदोद्यायां स्त्रियाम् । मुक्तौ । मोक्षे । देहेन्द्रियसङ्घातस्याऽशुद्धिक्षयेण सम्यग्ज्ञानोत्पत्तियोग्यतायाम् । श्रवणादिसाध्यायां ज्ञाननिष्ठायाम् । फले । साङ्गयोगमनुष्ठाय परिसमापनं संसिद्धिरिति योगिनः । संसेधनम् । षिधु संराद्धौ । क्तिन् ॥

संसृतिः । स्त्री० संसारे । प्रवाहे । संसरणं । सृ० । क्तिन् ॥

संसृष्टः । त्रि० संसर्गे । वमनादिना संशुद्धे । विभागानन्तरं प्रीत्या पुनः संमिलितधने । यथा । विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः । पितृव्येणाथवा प्रीत्या स तु संसृष्ट उच्यते । इति वृहस्पतिः । संसर्जनम् । सृज० । क्तः ॥

संसृष्टिः । स्त्री० काव्यालङ्कारविशेषे । यथा । सैषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः । एतेषां शब्दार्थालङ्काराणां यथासम्भवमन्योन्यनिरपेक्षतया यदिह शब्दभाग एव अर्थविषय एव उभयत्रापि वाऽवस्थानं सैकार्थसमवायस्वभावसंसृष्टिः । तत्र शब्दालङ्कारसंसृष्टिर्यथा । वदनसौरभलोभपरिभ्रमद्भ्रमरसम्भ्रमसम्भृतशोभया । चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशान्यया ॥ अर्थालङ्कारसंसृष्टिर्यथा । लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः । असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ पूर्वत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः । उत्तरत्र तु तथाविधौ उपमोत्प्रेक्षे । शब्दार्थालङ्कारयोः संसृष्टिर्यथा । सो णत्थि एत्थ गामे जो एअं महमहन्तलावण्णम् । तरुणाणं हिअअलुडिं परिसंपतीं णिवारेइ स नास्ति अत्र ग्रामे य एतां स्फुरल्लावण्याम् । तरुणानां हृदयलुण्ठनं परिसङ्क्रामतीं निवारयतीति संस्कृतम् । हृदयलुण्ठनमिति रूपकम् । आयुर्घृतमितिवत् । पूर्वार्द्धे तु अनुप्रासः । एवं शब्दार्थालङ्कारयोः संसृष्टिरियम् । अत्रानुप्रा

सोरूपकस्यान्योन्यानपेक्षे । संसर्ग स्यतयोरेकवाक्ये छन्दसिवासमवेतत्वात् ॥

संसृष्टी । त्रि॰ संसृष्टत्वविशिष्टे ॥

संसेवनम् । न॰ सम्यगन्नादीनांउपभोगे ॥ तत्वनिघण्ट्वादिप्रोक्तव्यतिरिक्तानांद्रव्याणांभक्षणं निषेधति । अज्ञातजातिगुणरूपविधानकानामन्नादिवीजरसपुष्पफलौषधानाम् । संसेवनंसकृतसौख्ययशोभिवृद्ध्यै निःसंशयं नरवरोविदधीतनाच ॥

संस्कारः । पुं॰ अनुभवे । मानसकर्म्मणि । वासनायाम् ॥ प्रतियत्ने । उत्कृष्टगुणाधाने । संस्क्रियते॰ अनेन ॰श्रौतेनस्मार्त्तेनवाकर्मणापुरुषइतिसंस्कारः । स्वीयस्वीयजातौसामान्यविशेषविहितवैदिकस्मार्तकनुष्ठानद्वाराऽदृष्टविशेषाधायकइतियावत् । तत्प्रत्यययोःतदर्थोक्तिरिदिनशुद्ध्यादिरपिसंस्कारशब्देनोच्यते ॥ अतोक्तंश्रीमहानिर्वाणतन्त्रे । संस्कारेणविनादेविदेहशुद्धिर्नजायते । नासंस्कृतोधिकारीस्याद्दैवेपित्र्ये चकर्म्मणि ॥ अतोविप्रादिभिर्वर्णैः स्वस्ववर्णोक्तसंस्क्रियाः । कर्तव्याः सर्वथायत्नैरिहामुत्रहितेप्सुभिः ॥ तेचदशषोडशाष्टचत्वारिंशद्भेदभिन्नाः प्रोक्तायथा । जीवसेकः पुंसवनं सीमन्तोन्नयनंतथा । जातनामौनिष्क्रमणमन्नाशनमतःपरम् ॥ चूडोपनयनोद्वाहाः संस्काराः कथितादश । शूद्राणांशूद्रभिन्नानामुपवीतंनविद्यते ॥ तेषांनवैवसंस्काराद्विजातीनांदशस्मृताः ॥ नित्यानिसर्वकर्माणितथानैमित्तिकानिच । काम्यान्यपिवरारोहेकुर्यात्संस्कारवानपि ॥ षोडशयथा । गर्भाधानंपुंसवनं सीमन्तोन्नयनंततः । जातकर्माभिधानञ्चनिष्क्रमः प्राशनंतथा ॥ चूडोपनयनंवेदव्रतानाञ्चचतुष्टयम् । गोदानंमेखलीन्मोक्षोविवाहः षोडशक्रमात् ॥ अष्टचत्वारिंशद्यथा । गर्भाधानमथापिपुंसवनकंसीमन्तजातक्रियानामान्नाद्वनचौलकोपनयनश्रौतव्रतान्यप्यथ । चत्वारिस्नपनंविवाहकरणं पञ्चाभियज्ञाअपिसंस्थाः सप्तचसप्तसप्तइतितेसंस्कारजाअप्यमी । देवताप्रतिष्ठायांषट्संस्कारायथा । जातनामौनिष्क्रमणमन्नप्राशनमेवच । चूडोपनयनञ्चेतेषट्संस्काराः शिवोदिताइतिमहानिर्वाणतन्त्रम् ॥ संस्क्रियतेऽनेन । करणेघञ् ॥ व्युत्पत्तौ ॥ न्यायमतेगुणविशेषे ॥ सचत्रिविधः वेगाख्यसंस्कारः १ अयंमूर्तपदार्थस्थायी॰ क्वचिद्वेगजन्य ॰क्वचित्कर्मजन्यश्च । स्थितिस्थापकसंस्कारः२

अथ पृथिवीगुणः० केषाञ्चिन्मते पृथिव्यादिचतुष्पदार्थानां गुणः० अयमतीन्द्रियः स्पन्दनकारणञ्च । भावनाख्यसंस्कारः ३ अयमात्मनोऽतीन्द्रियगुणः० उपेक्षानात्मकनिश्चयजन्यः० अयं स्मरणप्रत्यभिज्ञयोः कारणञ्च ॥ यथाह विश्वनाथतर्कालङ्कारः । संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने । मूर्त्तमात्रे तु वेगः स्यात् कर्म्मजो वेगजः क्वचित् ॥ स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि । ० अतीन्द्रियः सविज्ञेयः क्वचित्स्पन्देऽपि कारणम् ॥ भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः । उपेक्षाऽनात्मकस्तस्य निश्चयः कारणं भवेत् ॥ स्मरणे प्रत्यभिज्ञायामप्यसौ कारणं भवेदिति ॥ अथ जातकर्म्मादिक्रियाकलापः समग्रः उक्तकालक्रमेण शरीरसंस्कारार्थं स्त्रीणामपि भवति । तथाच मनुः । अमन्त्रिका तु कार्य्येयं स्त्रीणामावृदशेषतः । संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥ वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः । पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रियेति ॥ आवृत्० जातकर्म्मादिक्रियाकलापः । गृहकृत्यमेव सायंप्रातः समिद्धोमादिरूपोऽग्निपरिचर्य्येत्यर्थः ॥

संस्कारजः । त्रि० संस्कारात्जाते ।

संस्कारवर्ज्जितः । पुं० व्रात्ये ॥ त्रि० गर्भाधानादिसंस्कारविधुरे ॥

संस्कारस्कन्धः । पुं० वासनाप्रपञ्चे । रूपविज्ञानवेदनासंज्ञास्कन्धानां वासनायाम् ॥ रागद्वेषाभिनिवेशेषु । रागादयः क्लेशाः० उपक्लेशास्तु मदमानादयो० धर्म्माधर्म्मौ चेति वाचस्पतिमिश्राः ॥

संस्कारहीनः । पुं० व्रात्ये ॥ त्रि० गर्भाधानादिसंस्कारवर्ज्जिते ॥ संस्कारैरुपनयनादिभिर्गर्भाधानादिभिर्वा० हीनः ॥

संस्कार्य्यः । पुं० कर्म्मणि० व्रीह्यादौ ॥ त्रि० संस्कारार्हे ॥

संस्कृतम् । न० लक्षणोपेते । पाणिन्यादिव्याकरणबोधिते । गीर्वाणवाण्याम् ॥ संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः ॥ त्रि० कृत्रिमे ॥ शस्ते ॥ भूषिते । संस्क्रियतेऽस्म । क्तः ॥ व्युत्पन्ने । अपनीतमले । शोधिते । कृतसंस्कारे ॥ पक्के ॥

संस्कृतात्मा । पुं० दीक्षयादीक्षिते ॥

संस्कृतिः । स्त्री० संस्क्रियायाम् ॥ संस्करणम् । डुकृञ्० । क्तिन् ।

संस्क्रिया । स्त्री० संस्कृतौ । शवदाहादिक्रियायाम् ॥ मलापनयने ॥ संस्कारायकरणम् । डुकृञ्० । कृञः शचेतिशः । रिङ् इयङ् ॥ टाप्

योऽविप्रभिन्नश्च स्वस्ववर्णाश्रमसंस्क्रियाम्। शैवेनवर्त्म नाकुर्यादेषधर्मः कलौयुगे।

संस्तरः। पुं० प्रस्तरे। पल्लवादिरचितशय्यायाम्। सांथरा० इ० भा० प्र०॥ अध्वरे। यज्ञे॥ संस्तीर्यते। स्तृञ् आच्छादने। ऋदोरप्॥

संस्तवः। पुं० परिचये। सङ्गतिस्तवने। संस्तवनम्। ष्टुञ् स्तुतौ। ऋदोरप्॥ सम्यक् स्तुतौ॥

संस्तवानः। त्रि० वाग्मिनि॥ संस्तौति। ष्टुञ्०। सम्यानश्च स्तुवश्च ल्वामच्॥

संस्तावः। पुं० क्रतुषुद्विजन्मनांस्तुतिभूमौ। यज्ञे छन्दोगैः क्रियमाणायाः स्तुतेर्भूमौ। यत्र स्तावकद्विजावस्थानभूमौ॥ समेत्यस्तुवन्त्यत्र। ष्टुञ्०। यज्ञे सम्स्तुवः इति अधिकरणे ल्युटोपवादो घञ्॥ संस्तवनं वा॥

संस्तुतः। त्रि० सम्यक् स्तुतिविषयीभूते। संस्तूयतेस्म। ष्टुञ्०। क्तः। सदृशत्वेननिरूपिते॥ परिचिते॥

संस्त्यानम्। न० संहतौ। उपचये॥

संस्त्यायः। पुं० सन्निवेशे॥ संस्थाने॥ विस्तृतौ। सङ्घाते॥ संस्त्यायन्ति। स्त्यै ष्ट्यै शब्दसङ्घातयोः। घञ्। आतोयुक्॥ गृहे। यथा। संस्त्यायान् प्रविशेयुरिति॥

संस्थः। पुं० चरे॥ निजराष्ट्रकेचरे॥ क्रतुभेदे॥ सन्तिष्ठतेऽनेन। ष्ठा०। अङ्॥ त्रि० अवस्थिते॥

संस्था। स्त्री० स्थितौ॥ सादृश्ये॥ नाशे॥ न्याय्यपथस्थितौ। मर्यादायाम्॥ सन्तिष्ठतेऽनया। सम्यगवस्थानं वा। ष्ठा० आतश्चोपसर्गे इत्यङ्॥ व्यवस्थायाम्। समाप्तौ॥ व्यक्तौ॥ प्रलयचतुष्टये। यथा। नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः। संस्थेति कविभिः प्रोक्तश्चतुर्धास्य स्वभावतः इति पुराणम्॥

संस्थानम्। न० आकृतौ॥ मृतौ॥ सन्निवेशे॥ चतुष्पथे॥ संस्थीयतेऽनेन वा० संस्थितिर्वा। ष्ठा०। भावाधिकरणादौ ल्युट्। चिह्ने॥ त्रि० शिवादौ॥ समीचीनं स्थानमस्य॥

संस्थापनम्। न० स्थिरीकरणे॥

संस्थितः। त्रि० मृते॥ व्यवस्थिते। सम्यक् स्थिते। उत्थिते। सन्तिष्ठतेस्म। ष्ठा० गत्यर्थाकर्मकेति क्तः॥

संस्थितिः। स्त्री० तत्त्वे। संस्थाने॥ मृत्यौ॥

संस्पर्शः। पुं० स्पर्शे। त्वगिन्द्रियग्राह्यगुणविशेषे। यथा। आलापाद्गात्रसंस्पर्शात्० निःश्वा

सात्सहमेत्यनात् । सहशय्यासना
ध्यायात्पापंसङ्क्रमतेनृणामिति-
छागलेय: ॥ सम्प्रयोगे । सम्ब
न्धे ॥ संस्पर्शनम् । स्पृशसंस्प
र्शने : अकर्त्तरिचकारकेसंज्ञाया
मितिघञ् ॥

संस्पर्शज: । त्रि० विषयेन्द्रियसं
बन्धाज्जातेभोगे । येहिसंस्पर्शजा
भोगादुःखयोनयएवते । आद्यन्तवन्तः
कौन्तेयनतेषुरमतेबुध: ॥

संस्पर्शा । स्त्री० जनकायाम् । जनी
नामगन्धद्रव्ये । स्पृशति । संस्पृ
श्यतेवा । स्पृश० । पदरुजेति
घञ्० पचाद्यच्० कर्मणिघञ्
वा० ॥

संस्फाल: । पुं० मेषे ॥

संस्फुट: । त्रि० फुल्ले । विकसिते
॥ स्फुटति । स्फुटविकसने । इ
गुपधेतिक: ॥

संस्फेट: । पुं० युद्धे । रणे ॥
संस्फेटनम् । स्फिटअनादरे ।
घञ् ॥

संस्फोट: । पुं० युद्धे ॥ संस्फोट
नम् । स्फुटिर्० । घञ् ॥

संस्मरणम् । न० संस्कारजन्यज्ञाने ।
संस्मृतौ

संस्मृति: । स्त्री० संस्मरणे ॥ स्त्रि
यांक्तिन् ॥

संस्वेदजम् । न० स्वेदजेशाकविशे
षे ॥ तथाहि । उक्तंसंस्वेदजं
शाकंभूमिच्छत्रंशिलीन्ध्रकम् । श्वि
तिगोमयकाष्ठपुक्कसादिषु तदुद्भवे-
सर्वेसंस्वेदजाः शीतादोषलाः पि
च्छिलाश्चते । गुरवश्छर्दतीसारज्व
रश्लेष्मामयप्रदा: ॥ श्वेताः शुचि
स्थलीकाष्ठवंशगोव्रजसम्भवाः । ना
तिदोषकरास्तेस्युः शेषास्तेभ्यो
विगर्हिताः ॥ त्रि० भूव: शरी
रस्थस्वेदात्प्रजातेदंशमश-
कादिरूपेभूतग्रामे ॥

संहत: । त्रि० सङ्गते । मिलिते
दृढे ॥ दृढसन्धौ । संहन्यतेस्म
। क्त: ॥

संहतजानु: । त्रि० सज्ञौ । संह
तजानुके ॥

संहतजानुक: । त्रि० सज्ञौ ॥
संहतेमिलितेजानुनीयस्य: ॥

संहतल: । पुं० मिलितपाणिद्वये
। प्रतले । संहतले । विस्तृता
ङ्गुल्योर्मिलितयोर्मिदक्षिणयोःपा
ण्योः ॥ संहतसङ्घट्टनाति ।
ला० । आतोनुपसर्गइतिक: ॥

संहति: । स्त्री० समूहे । वृन्दे ।
निकुरम्बे । कदम्बे ॥ अल्पानाम
पिवस्तूनां संहति:कार्यसाधिका ।
तृणैर्गुणत्वमापन्नैर्बध्यन्तेमत्तद-
न्तिन: ॥ संहति: श्रेयसीपुंसां
स्वकुलैरल्पकैरपि । तुषेणापिप

रित्यक्ताः नप्ररोहन्मितण्डुलाः॥

घनतायाम्। संहन्यते। कर्म्मणि क्तिन्॥ घाते॥

संहननम्। न॰ कलेवरे। गात्रे। शरीरे॥ संहन्ति॰ संहन्यतेवा। हन॰। कृत्यल्युटइतिल्युट्॥ यद्वा। संहन्यन्तेऽस्मिन्भूतानि। करणेतिल्युट्॥ दृढाङ्गत्वे॥

संहननाङ्गः। त्रि॰ कठिनावयवे॥ संहन्यतेनिबिडीभवन्ति॰ अङ्गानि यस्यसः॥

संहर्षः। पुं॰ स्पर्द्धायाम्॥ मुदि। सुखे॥ घर्षणे। घृष्टौ॥ प्रभञ्जने। पवने। संहर्षणम्। हृषतुष्टौ। घञ्॥

संहारः। पुं॰ प्रलये॥ सङ्कोचने सङ्क्षेपे॥ नरकविशेषे॥ हर संहारः। हृञोभावेघञ्। सम्यक्हारोऽत्र॥ यद्वा। संह्रियतेऽनेन। अध्यायन्यायेतिघञन्तःसाधुः॥ असिताङ्गादिभैरवात्मक भैरवविशेषे॥

संहारमुद्रा। स्त्री॰ विसर्ज्जनमुद्रायाम्॥

संहितः। त्रि॰ सहिते॥ योजिते॥ सन्धीयतेस्म। डुधाञः क्तः। दधातेर्हिः॥ मिलिते॥

संहितपुष्पिका। स्त्री॰ मिश्रेयायाम्॥

संहिता। स्त्री॰ मन्वादिप्रणीतधर्म्मशास्त्रे॥ पुराणसंहितासु॥ पञ्चसंहितायथा। ब्रह्मणश्चशिवस्यापिप्रह्लादस्यतथैवच। गौतमस्यकुमारस्यसंहिताः परिकीर्त्तिताः॥ चतस्रोयथा। ब्राह्मीभागवतीशैवीवैष्णवीचप्रकीर्त्तिताः। चतस्रः संहिताः पुण्याधर्म्मकामार्थमोक्षदाः॥ षट्संहितायथा। आद्या सनत्कुमारोक्ताद्वितीयासूतसंहिता। तृतीयाशाङ्करीविप्राश्चतुर्थी वैष्णवीमता॥ तत्परासंहिताब्राह्मीसौरान्यासंहितामतेति॥ सन्धीवर्णानामतिशयितसन्निधौ। वर्णसंयोगे॥ वेदैकदेशे॥ सम्पूर्वाद्दधातेः कर्म्मणिक्तः। दधातेर्हिः॥

संहूतिः। स्त्री॰ बहुभिर्विहिताह्वाने॥ समाह्वानम्। सम्पूर्वात्॰ ह्वेञः स्त्रियांक्तिन्। वचिस्वपीति सम्प्रसारणम्॥

संहृतः। त्रि॰ कृतसंहारेसङ्क्षिप्ते॥

संहृतिः। स्त्री॰ संहारे॥

संहृष्टः। त्रि॰ प्रहर्षिते॥

सकटः। पुं॰ शाखोटवृक्षे॥

सकटाक्षः। पुं॰ धराक्षे॥ त्रि॰ कटाक्षसहिते॥

सकण्टकः। पुं॰ शैवाले। पूतौ

कारङ्गे ॥ त्रि॰ कण्टकयुक्ते ॥

सकर : । त्रि॰ सहस्ते ॥ राजस्व विशिष्टे ॥ शुण्डयुक्ते ॥ सकिरणे ॥ करेणसहवर्त्ततेय : स: ॥

सकरुण : । त्रि॰ सदये । करुणा विशिष्टे ॥

सकर्ण : । त्रि॰ श्रवणशीले । श्रुतितत्परे ॥ सावधाने ॥

सकर्म्मक : । पुं॰ कर्मयुक्तपचत्यादि धातुषु ॥

सकल : । पुं॰ सगुणेशिवे ॥ यथा शारदातिलके । निर्गुण : सगुणश्चेतिशिवोज्ञेय : सनातन : । निर्गुण : प्रकृतेरन्य : सगुण : सकल : स्मृतस्त्विति ॥ कलाप्रकृतिस्तयासहवर्त्तते ॥ त्रि॰ सम्पूर्णे । सर्वस्मिन् ॥ कलाभियुक्ते । कलाभि : परिपूर्णे ॥

सकलप्रिय : । पुं॰ चणके ॥ त्रि॰ सर्वेषांप्रीतिविषये ॥

सकलाज्ञानम् । न॰ समष्ट्यज्ञाने ॥

सकषाय : । त्रि॰ सरागे ॥ कषाये कामक्रोधादिमलेनसहवर्त्तमाने ॥ कषायविशिष्टे । कसैला॰ इ॰ भा॰ प्र॰ ॥

सकाम : । त्रि॰ कामनाविशिष्टे । कामिनि ॥ पुंसोयाविषयापेक्षा सकामइतिभण्यते । तेनयुक्तोदीनमना : सकाम : प्रोच्यतेबुधै: ॥ सकामाश्चैवनिष्कामाद्विविधाभुवि मानवा : । कामिनांफलमित्युक्तं चयिष्णुस्वप्नराज्यवत् । निष्कामाणान्तुनिर्वाणंपुनरावृत्तिवर्ज्जितम् ॥ सहकामेनवर्त्तते । सहभ्रम: ॥

सकाश : । पुं॰ समीपे ॥ त्रि॰ काशयुक्ते ॥

सकुरुण्ड : । पुं॰ साकुरुण्डवृक्षे ॥

सकुल : । त्रि॰ कुलान्विते ॥

सकुल्य : । त्रि॰ सगोत्रे । सप्तमपुरुषानन्तरंदशमपुरुषपर्य्यन्तस्थिते ॥ दशाहेनसपिण्डास्तुशुध्यन्तिप्रेतसूतके ॥ त्रिरात्रेणसकुल्यास्तु॰ स्नात्वाशुध्यन्तिगोत्रजा : ॥ दायाधिकारिसकुल्यास्तु॰ पञ्चमपुरुषावधय : । यथाहबौधायन : । प्रपितामह॰ पितामह॰ पिता॰ स्वयं॰ सोदर्य्यभ्रातर : सवर्णाया: पुत्र॰ पौत्र॰ प्रपौत्रा॰ एतानविभक्तदायादान्सपिण्डानाचक्षते । विभक्तदायादान्सकुल्यानाचक्षते सत्स्वङ्गजेषुतद्गामीह्यर्थोभवतीति ।

सकृत् । अ॰ सहार्थे । एकवारे॥ एकवारम् । एकस्यसकृच्चेतिसुच् । संयोगान्तस्येतिसुचोलोप : । सकृद्गौर्निपततिसकृत्कन्याप्रदीयते । सकृदाहददानीतित्रीण्येतानिसतांसकृत् ॥

सकृत्प्रज । पुं॰ काके । वायसे ॥

सकृत्प्रजायस्नस : ॥ सिंहे ॥

सकृत्फला । स्त्री॰ कदल्याम् ॥ सकृत्फलान्यस्या : ॥

सकृद्गर्भ : । पुं॰ खिसरे । खच्चर॰ द्र॰ भा॰ प्र॰ ॥

सकृद्विभात : । त्रि॰ एकदैवसकृत्सा ऽभिव्यक्ते ॥ सदैवविभाते । सद्रा भारूपे ॥

सकृद्वीर : । पुं॰ एकवीरवृक्षे ॥

सक्त : । त्रि॰ अशिरते । लग्ने ॥ अभिनिवेशिनलंग्ने । कर्तृत्वाभिमानेनफलाभिसन्धिनाचकर्म्मण्य-भिनिविष्टे ॥ सज्यतेस्म । सञ्ज सङ्गे । क्त : ।

सक्तचेता : । त्रि॰ आसक्तचित्ते ॥ यथा । अवध्यबन्धनंघोरमस्वीकृत महाविषम् । अगम्यखण्डनंदेवि संसार : सक्तचेतसाम् ॥

सक्ति : । स्त्री॰ सङ्गे ॥ षञ्जे : क्तिन् ॥

सक्तव : । पुं॰ न॰ भृष्टयवचूर्णे । भृष्टयवादिचूर्णे । सत्तू॰ द्र॰ भा॰ प्र॰ ॥ सचते । षचसेचने । सितनिगमिमसिसच्यविधाञ् क्रुशिभ्यस्तुन् ॥ अस्यलक्षणादयो यथा । धान्यानिभ्राष्टभृष्टानियन्त्रपिष्टानिसक्तव : ॥ तत्रयवसक्तवो यथा । यवजा : सक्तव : शीतादीपना : लघव : सरा : । कफपित्त हरा रूक्षा लेखनाश्चप्रकीर्त्तिता : ॥ तेशीतावलदाह्रष्या वृष्याभेदनास्तथा । तर्पणामधुरारुच्या : परिणामेबलावहा ॥ कफपित्तश्रमक्षुत्तृट्व्रणनेत्रामयापहा : । प्रशस्ताघर्मदाहाढ्यव्यायामार्त्तशरीरिणाम् ॥ चणकायवसक्तवस्तु । निस्तुषैश्चणकैर्भृष्टैस्तुर्यांशैश्चयवै : कृता : । सक्तव : शर्करासर्पिर्युक्तायीष्मे तिपूजिता : । शालिसक्तवोयथा । सक्तव : शालिसम्भूताबह्निदालघवोहिमा : । मधुराग्राहिणोरुच्या : पथ्यायवलशुक्रदा : नभुक्त्वानरदैश्छित्वा ननिशायांनचाबहून् । नजलान्तरितान्नद्भि : सक्तूनद्यान्नकेवलान् ॥ पृथक्‌-पानंपुनर्दानंसामिषंपयसानिशि । दन्तच्छेदनमुष्णञ्चसप्तसक्तुषुवर्जयेत् ॥ अर्द्धर्चादि : ॥

सक्तुक : । पुं॰ विषप्रभेदे ॥ यद्ग्रन्थि : सक्तुकेनैवपूर्णमध्य : संसक्तुक : ॥

सक्तुफला । स्त्री॰ समीवृक्षे ॥ सक्तुवत्फलमस्या : । अजादित्वात्टाप् ॥

सक्थि । न॰ जानूर्द्ध्वभागे । ऊरौ । साथल॰ द्र॰ भा॰ ॥ मजति॰ सज्यतेवा । सञ्जसङ्गे । असिसञ्जिभ्यांक्थिन् ॥

सक्रियम्। न॰ व्यक्ते। परिस्पन्दवति॥ तथाहि। बुद्ध्यादयउपात्तमुपात्तं देहंत्यजन्ति॰ देहान्तरञ्चोपाददतइतितेषांपरिस्पन्दः। शरीरपृथिव्यादीनाञ्चपरिस्पन्दः प्रसिद्धएव॥ त्रि॰ क्रियासहिते॥

सक्षणः। त्रि॰ कृतावसरे॥

सक्षत्रम्। अ॰ क्षत्रियाणांयोग्येक्षत्रत्वे॥ क्षत्रियाणांसम्पत्तिः अव्ययंविभक्तीतिसम्पत्तावव्ययीभावः। सम्पत्तिश्चसमृद्धमानोत्तरपदस्यायोग्यप्रवृत्तिनिमित्तम्॥

सक्षम:। त्रि॰ क्षमतायुक्ते॥ क्षमाविशिष्टे॥

सक्षार:। त्रि॰ लवणयुक्ते॥

सखा। पुं॰ मित्रे। सुहृदि। वयस्ये। समवयसि। स्निग्धे। अस्थितेप्रतिविधस्थितेवैवप्रवर्त्तनम्। व्यसनेचापरित्यागश्चिविधंसखिलक्षणम्॥ अपिच। सत्यागासहनोबन्धुः सदैवानुगतः सुहृत्। एकक्रियोभवेन्मित्रंसमप्राणः सखाभवेदिति॥ समानः ख्यायतेलोकैः। ख्याप्रकथने। समानेख्यः सचोदात्तइतीण्॰ सत्त्वडित्॰ यलोपः॰ समानस्यतूदात्तः सद्भ्यादेशश्च॥ सहाये। अमात्यादौ॥

सखिता।) स्त्री॰
सखित्वम्।) न॰ सख्ये.

सखी। स्त्री॰ आली। वयस्यायाम्॥ सख्यशिश्वीतिङीष्॥

सख्यम्। न॰ मैत्र्ये। मित्रतायाम्। साप्तपदीने। सौहार्दे॥ दशाब्दाख्यंपौरसख्यंपञ्चाब्दाख्यंकलाभृताम्। त्र्यब्दपूर्वंश्रोत्रियाणांस्वल्पेनापिस्वयोनिषु॥ इतिमनुः॥ सख्युर्भावः कर्मवा। सख्युर्यः। सख्येनिषिध्यायथा। कृतमेरेशठैस्तव्यैकामुकैर्वगतघृणैः। निर्लज्जेनैवकर्तव्यंसख्यंमतिमतासदेति॥ हिताशंसने॥

सगद्गदः। पुं॰ भयेनहर्षेणवाश्रुपूर्णनेत्रत्वे। सति॰ कफरुद्धकण्ठनत्वायोर्वाचामन्दत्वंसकम्पादिविकारस्तस्मिन्॥ त्रि॰ तद्वति॥

सगन्धः। पुं॰ अंशके। ज्ञातौ दायादे॥ त्रि॰ गन्धयुक्ते॥

सगरः। पुं॰ अयोध्याधिपतौ॰ वाहुराजपुत्रे॰ सूर्यवंशीयेन्नृपतिवरे॥ नामनिदानन्तु। सपत्न्यातुगरस्तस्यैदत्तोगर्भजिघांसया। गरेणसहतेनैवजातस्तत्सगरोऽभवदिति॥ अर्हद्भेदे॥ त्रि॰ गरसहिते। सविषे॥

सगर्भः। पुं॰ सोदरे॥ समानोगर्भोयस्यसः। सगर्भेतिनिर्देशात्समानस्यसः॥ अभ्यन्तरितसूक्ष्मपत्रादियुक्तकुशादौ॥

सगर्भा । स्त्री० गर्भवत्याम् ॥

सगर्भ्यः । पुं० सहोदरे ॥ समानेग र्भेभवः । सगर्भसयूथेतियत् । स गर्भेतिनिर्द्देशात्सः ॥ यद्वा । स हतुल्येगर्भेकुक्षौभवः ॥

सगुणः । पुं० गन्धादिविशिष्टे ॥ वि द्यादियुक्ते ॥ यथा । सगुणोनिर्गु णोवापिसन्त्याज्योबलवत्तरः । तुषेणा पिपरिभ्रष्टस्तण्डुलोनाङ्कुरायते ॥ मायाशवलितमञ्च सवशक्तियुक्तेब्र ह्मणि ॥

सगुणा । स्त्री० दुर्गायाम् ॥ गुणव त्याम् ॥

सगोत्रम् । न० गोत्रे । कुले ॥ पुं० सप्तमादूर्द्धपुरुषे ॥ त्रि० अभिन्नगो त्रे । ज्ञातौ ॥ समानंगोत्रंकुलमस्य ज्योतिर्जनपदेतिसमानस्यसः ॥

सग्धिः । स्त्री० सहभोजने ॥ अदनम् । अद० । स्त्रियांक्तिन् । बहुलंछं दसीतिघस् । घसिभसोर्हलिच्छप धालोपः । झलोझलीतिसलोपः । झषस्तथोर्द्धोधः । झलांजशझशीति घस्यगः । समानाग्धिः । समान स्यच्छन्दसीतिसभावः ॥ सहग्धि र्वा । सहस्यसः संज्ञायाम् ॥

सङ्कटः । त्रि० सम्बाधे । सङ्कीर्णे । अल्पावकाशे । वर्त्मादौ । सम्यक्कक टति० आवृणोति । कटेवर्षावरण योः । पचाद्यच् ॥ यद्वा सम्बाधा र्थात्सम्प्रोदश्चकटच् ॥ सम्प्रोदश्चेति कटच् ॥ न० दुःखे ॥

सङ्कटा । स्त्री० देवीविशेषे ॥ योगिनी प्रभेदे ॥

सङ्कटाक्षः । पुं० धवहक्षे ॥

सङ्कथनम् । न० सम्यग्भाषणे ॥

सङ्कथा । स्त्री० परस्परभाषणे । सम्भा षणे । मिथः प्रेमगोष्ठ्याम् ॥

सङ्करः । पुं० सम्मार्जन्यादिक्षिप्तधूल्या दौ । अवकरे । सङ्कारे ॥ सङ्कीर्य ते । कृविक्षेपे । सायांवा । ऋट दोरप् ॥ व्यामिश्रत्वे । मिश्रित त्वे ॥ परस्परात्यन्ताभावसमाना धिकरणयोरेकाधिकरण्ये ॥ यथा मूर्त्तत्वमनसिवर्त्तते० भूतत्वंना स्ति । आकाशेभूतत्वंवर्त्ततेमूर्त त्वंनास्ति । पृथिव्यांभूतत्वंनास्ति । पृथिव्यांभूतत्वंवर्त्तते० मूर्त्तत्व ञ्चास्तीतिजातिसाङ्कर्यमिति ॥ सा मान्यजातौ । वर्णसङ्करजातौ ॥ अ लङ्कारविशेषे ॥ यथा । अविश्रान्ति जुषामात्मन्यङ्गाङ्गित्वन्तुसङ्करः । एतएवालङ्कारायवात्मन्यनासादि तस्वतन्त्रभावाः परस्परमनुग्राह्या नुग्राहकतांदधति० सएषांसङ्कीर्यमा णस्वरूपत्वात्सङ्करः । उदाहरण म् यथा । आत्तेसीमन्तरत्नेमर कतिनिहतेहेमताटङ्कपत्रेलुप्तायांमेख लायांभटितिमणितुलाकोटियुग्मेग

ह्वीते । शोणं विम्बौष्ठकान्त्या त्वदरि
मृगदृशामित्वरीणामरण्ये राजन् गु
ञ्जाफलानां स्रजमिति शबरा नैव हा
रं हरन्ति ॥ अत्र तद्गुणमपेक्ष्य भ्रा
न्तिमतः प्रादुर्भूतं तदाश्रयेण च तद्गु
णः सचेतसां प्रभूतचमत्कृतिनिमि
त्तमित्यनयोरङ्गाङ्गिभावः । अस्या
न्ये भेदाः काव्यप्रकाशादिषु द्रष्ट
व्याः ॥
सङ्करी । स्त्री० सङ्कार्याम् ।
सङ्करीकरणम् । न० नवविधपापान्त
र्गतपापविशेषे । यथा विष्णुः ।
अथ पुरुषस्य कामक्रोधलोभाख्यं रिपु
त्रयं भवति० परिग्रहप्रसङ्गेनयि विशे
षाद्गृहाश्रमिणः । तेनायमाक्रान्तो
ऽतिपातकमहापातकानुपातकोप
पातकेषु वर्त्तते० जातिभ्रंशकरेषु०
सङ्करीकरणेषु० अपात्रीकरणेषु०
मलावहेषु० प्रकीर्णकेषु० । तद्यथा
। खराश्वोष्ट्रमृगेभानामजाविकवध
स्तथा । सङ्करीकरणं ज्ञेयं मीनाहि
महिषस्य चेति मनुः ॥ गर्दभतुरगो
ष्ट्रमृगहस्तिच्छागमेषमत्स्यसर्पमहिषा
णामप्रत्येकं वधः सङ्करीकरणं ज्ञे
यमिति कुल्लूकभट्टः ॥
सङ्कर्षकः । त्रि० सङ्कर्षणकर्त्तरि ॥
सङ्कर्षणः । पुं० सीरपाणौ । बलभ
द्रे ॥ सम्यक् कर्षति शत्रुशरीरमा
युधैः । कृषविलेखने । नन्द्यादि



त्वाल्ल्युः ॥ सम्यक् कृष्यते वा । क
र्मणि ल्युट् ॥ गर्भस्य सम्यक् कर्ष
णाद्वा । यथोक्तं हरिवंशे । गर्भसं
कर्षणात्सोऽपि सङ्कर्षणः स्मृत
इति । अहङ्काराधिष्ठातरि ॥ द्वयोर्द्व
योः सम्यक् कर्षणमेकीकरणं येन
न० अन्यत्र स्थितस्यान्यत्र नयने ॥ आ
कर्षणे ॥ सम्यक् प्रकारेण कर्षणम् ॥
सङ्कलनम् । न० क्रमादुत्क्रमतो वाऽ
ङ्कयोगे । जोड़देना० इ० भा० प्र०
कलशब्दसङ्ख्यानयोः । सम्पूर्वः
। ल्युट् ॥
सङ्कलितः । त्रि० सङ्कृते । सङ्गृहीते
एकत्रीकृते । अङ्कान्तरेणैकीकृता
ङ्के । जोड़दिया अङ्क इति भाषा ॥
सङ्कल्यते स्म । कलसङ्ख्याने । क्तः
॥ पुञ्जीकृतधान्यादौ ।
सङ्कल्पः । पुं० मानसकर्म्मणि । इद
महं कुर्यामिति मनसो व्यापारे । इ
दङ्करिष्यामीत्यादिलक्षणेऽन्तःक
रणपरिणामे ॥ इदं नीलमिदं पीत
मिति विषयविवेचने । इष्टसाधन
ताज्ञाने । समीचीनत्वेन भावने ॥
अहङ्करोमीति कर्त्तृत्वाभिमाने ॥ दु
ष्टेष्वपि विषयेषु० अशोभनत्वादर्श
नेन शोभनाध्यासे । अनेन कर्म्मणे
दमिष्टफलं साध्यते० इत्येवं विषया
यां बुद्धौ ॥ तिथ्याद्युल्लेखपूर्वकनाम
गोत्राद्युच्चारणपूर्वकवाक्यविशेषे ।

काम्ये कर्मणि सर्व्वत्र बुधः सङ्कल्पमाचरेत् । विधिवाक्यानुसारेण सम्पूर्णमुक्तनायोद्धत्यागमोक्षिः ॥ यथा । स्मृत्वा विष्णुं तत् सदिति मासपक्षतिथींस्ततः । समुल्लिख्य निमित्तानि सङ्कल्पं रचयेत् सुधीः ॥ अत्र हारीतः । मनसा सङ्कल्पयति । वाचाऽभिलपति । कर्मणा चोपपादयतीति ॥ सङ्कल्पेन विना राजन् यत् किञ्चित् कुरुते नरः । फलञ्चाल्पाल्पकं तस्य धर्मस्यार्द्धक्षयो भवेत् ॥ सङ्कल्पनम् । क्लृप् सामर्थ्ये । भावे घञ् ॥ इच्छायाम् ॥ कामहेतौ ॥ सङ्कल्पमूलः कामो वै यज्ञाः सङ्कल्पसम्भवाः । व्रतानि यमधर्माश्च सर्वे सङ्कल्पजाः स्मृताः ॥ काम जानामि ते मूलं सङ्कल्पात् किल जायसे । न त्वां सङ्कल्पयिष्यामि समूलो न भविष्यसि ॥

सङ्कल्पजन्मा । पुं० मदने । कामदेवे ॥

सङ्कल्पसम्भवः । )
सङ्कल्पमूलः । ) पुं० कामदेवे ॥
सङ्कल्पयोनिः । )

संकसुकः । त्रि० अस्थिरे । चलस्वभावे ॥ दुर्जने ॥ संकसति । कषगतौ । सविकसउकन् । सम्यक्कान्तिनयन्त्वञ्जनाञ्चल्यादौ ॥

संकारः । पुं० अग्निचटत्कारे ॥ सम्मार्जन्यवपुञ्जिते । अवकरे । सङ्कीर्य्यते । कृविक्षेपे हिंसायां वा । कर्मणि घञ् ॥

संकारी । स्त्री० नवदूषितकन्यायाम् । भुक्तकन्यायाम् । इति मेदिनिहेमचन्द्रौ ॥

संकाशः । पुं० अन्तिके ॥ त्रि० उत्तरपदस्थस्तुल्यार्थे ॥ यथा । पद्मसंकाशः ॥ यथा वा । सम्पदः स्वप्नसंकाशा यौवनं कुसुमोपमम् । तडिच्चपलमायुष्यं कस्य स्यात् जानतो धृतिरिति ॥ संकाशते । काशृ दीप्तौ । पचाद्यच् ॥

संकिलः । पुं० अग्निकुक्कुटे । दहनोल्कायाम् ॥

संकीर्णः । पुं० अम्बष्ठादिचण्डालपर्य्यन्तमिश्रितजातौ । तथाऽमरः । आचण्डालात्तु संकीर्णा अम्बष्ठकरणादयः । शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्द्विजन्मनोः ॥ शूद्राक्षत्रिययोरुग्रो मागधः क्षत्रियाविशोः । माहिष्योऽर्य्याक्षत्रिययोः क्षत्तार्य्याशूद्रयोः सुतः ॥ ब्राह्मण्यां क्षत्रियात् सूतः तस्यां वैदेहको विशः । रथकारस्तु माहिष्यात् करण्यां यस्य सम्भवः ॥ स्याच्चण्डालस्तु जनितो ब्राह्मण्यां वृषलेन यः । इति ॥ मिश्रितरागे ॥ नानाजातीयवर्णे ॥ त्रि० निचिते ॥ अशुद्धे ॥ जनादिभिर्व्याप्ते । सं

कुले । आकीर्णे ॥ संकीर्यतेऽस्म । कृ विक्षेपे । क्तः ऋत इद्धातोः । रदाभ्यामिति नत्वम् ॥ संकटे ॥ परस्परविजातीये ॥

संकीर्त्तनम् । न० सम्यगुक्तौ । सम्यक् प्रकारेण देवतादिनामोच्चारणे ॥ यथा । शमायालं जलं वह्नेस्तमसो भास्करोदयः । शान्तिः कलेरघौघस्य नामसंकीर्त्तनं हरेरिति ॥ नामसंकीर्त्तनं नित्यं क्षुत्प्रस्खलितादिषु । वियोगं शीघ्रमाप्नोति सर्वानर्थैर्न संशयः । सम्यक्कीर्त्तनम् ॥

सङ्कीर्त्तितः । त्रि० सम्यगुच्चरिते ॥

सङ्कुचितः । त्रि० सङ्कोचयुक्ते । निद्राणे । मीलिते । मुद्रिते ॥ यथा । नरा सङ्कुचितः पन्था येन श्रा लोकं तो गतः । समयेऽतिष्ठ सुग्रीव मा वालिपथमन्वगाः ॥ सङ्कुचति । कुचसङ्कोचने । रुचिवचिकुचिकुटिभ्यः कितच् ॥

सङ्कुलम् । न० परस्परपराहतवाक्ये । क्लिष्टे । मातामेवन्ध्येति विरुद्धार्थवचने । यथा । यावज्जीवमहं मौनी ब्रह्मचारी पितामम । माता च मम वन्ध्यासीत् स्मराभो जुपमो भवान् । इति ॥ संकीलति । कुलसंस्त्याने । इगुपधत्वात् कः ॥ युद्धे ॥ त्रि० जनादिभिर्निरवकाशे । व्याप्ते । आकीर्णे । सङ्कीर्णे । अविस्पष्टवाचि ॥

सङ्कृतिः । स्त्री० चतुर्विंशत्यक्षरायां वृत्तौ ॥

सङ्केतः । पुं० स्वाभिप्रायव्यञ्जकचेष्टाविशेषे । प्रश्नमौ । परिभाषायाम् । शैल्याम् । समये । आकारे ॥ न्यायमते० सङ्केतार्थो यथा । सङ्केतो लक्षणा चार्थे पदवृत्तिः । वृत्त्या पदप्रतिपाद्योर्थः एव पदार्थ इत्यभिधीयते । इदं पदमिममर्थं बोधयत्विति० अस्माच्छब्दादयमर्थो बोद्धव्य इतीच्छा० सङ्केतरूपा वृत्तिः । तत्राधुनिकसङ्केतः परिभाषा । तयार्थबोधकं पदं पारिभाषिकम् । यथाशास्त्रकारादिसङ्केतितनदीवृद्ध्यादिपदम् । ईश्वरसङ्केतः शक्तिः० तयार्थबोधकं पदं वाचकम् । यथा गोत्वादिविशिष्टबोधकगवादिपदम् । तत्रो योर्थो गवादिर्वाच्यः स एव मुख्यार्थ इत्युच्यते । इति शक्तिवादे गदाधरी टीका । सङ्केतनम् । कितनिवासे । घञ् ॥

सङ्केतनिकेतनम् । न० प्रियमेलनार्थावधारितस्थाने ॥

सङ्कोचः । पुं० मीनविशेषे ॥ बन्धे ॥ बहुविषयत्व शाक्यार्थादेरल्पविषय

यस्यापने ॥ यथा । सामान्यशब्दार्थस्य विशेषनिष्ठत्वं सङ्कोचः ॥ न॰ कुंकुमे ॥ सङ्कोचति॰ सङ्कुच्यते वा । यथा । सङ्कोचयति सङ्कोच्यते वा कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । अच्॰ घञ् वा । सङ्कुचतीति विग्रहे न सम्यङ् । कुच सङ्कोचन इत्यस्य कुटादित्वे न गुणाभावप्रसङ्गात् ॥

सङ्कोचनी । स्त्री॰ लज्जालुलतायाम् ॥

सङ्कोचपिशुनम् । न॰ कुंकुमे ॥

सङ्क्रन्दनः । पुं॰ दुश्चवने । इन्द्रे ॥ सम्यक् क्रन्दयति । अरिक्रदिधाह्वानेरोदनेच । ल्युः ॥ न॰ रोदने ॥

सङ्क्रमः । पुं॰ क्रमणे । जलोपरिगमनार्थं काष्ठपाषाणादिभिर्निर्मिते॰ मार्गे ॥ सङ्क्रमस्त्वा प्रोच्यत्वामिलोकानां संक्रमं यथा । दद्यात्सोऽस्ति तथा स्वर्गे संक्रमो मे प्रदीयताम् । भानोराश्यन्तरप्रवेशे । संक्रमणे ॥ त्रुटिः सहस्रभागो यः स कालो रविसंक्रमः पुं॰ न॰ दुर्गसञ्चरे । दुर्गद्वारे फलकादिभिर्निर्मितसञ्चारमार्गे । संक्रमणम् । क्रमु॰ । घञ् । नोदात्तोपदेशस्य मान्तस्यानाचमेरिति न वृद्धिः ॥

संक्रमणम् । न॰ संक्रान्तौ । सम्पूर्वात् क्रामेर्ल्युट् ॥ गमने ॥

संक्रान्तः । त्रि॰ ससक्ते ॥ संक्रान्तिविशिष्टे ॥ क्रमागतधनादौ ॥ प्राप्ते ॥ गते ॥

संक्रान्तिः । स्त्री॰ राश्यन्तरसंयोगानुकूलव्यापारे । सूर्यादीनां राशितोऽपरराशौ संक्रमणे ॥ तत्र संज्ञाविशेषा यथा । अयने द्वे विषुवे द्वे च तस्रः षडशीतयः । चतस्रो विष्णुपद्यस्तु संक्रान्त्यो द्वादश स्मृताः ॥ अपि च । वृषालिघटसिंहेषु विष्णुपद्यर्कसंक्रमे । षडशीतिर्भवेस्त्रापनृयुक्कन्याझषेषु च ॥ विषुवन्तु समाख्यातं तुलामेषाभयोस्तथा । याम्यायनं कर्कटे स्यान्मकरे चोत्तरायणम् । संक्रमणम् । क्रमु॰ । स्त्रियां क्तिन् । अनुनासिकस्येति दीर्घः ॥

संक्रामः । पुं॰ दुर्गसञ्चरे ॥

संक्लेदः । पुं॰ आर्द्रीभावे ॥

संक्लेशः । पुं॰ दुःखे ॥ संक्लेशनम् । क्लिशू विबाधायाम् । घञ् ॥

संक्षयः । पुं॰ प्रलये ॥ नाशे ॥

संक्षिप्तः । त्रि॰ संहृते ॥ कृतसंक्षेपे । संक्षेपयुक्ते ॥

संक्षुब्धः । त्रि॰ आकुले ॥ आकुलीभूते ॥

संक्षेपः । पुं॰ सङ्ग्रहे । स्वल्पे । समासे ॥ स्तोकेन भूयसोऽभिधा

ने ॥ सङ्ख्यिप्यतेसङ्घेपणं वा । क्षिप० । घञ् ॥
सङ्घेपणम् । न० विस्तृतानांसंक्षेपणे । समसने सम्पूर्णात्क्षिपे ल्युट् ॥
सङ्घेपयोग : । पुं० ध्यानयोगभ्रमुख्यानीयेयोगे ॥ यमाञ्चार्जुनायश्री भगवान् । यथा । स्पर्शान्कृत्वाब हिर्वाह्यांश्चक्षुश्चैवान्तरेभ्रुवोः । प्राणापानौसमौकृत्वानासाभ्यन्तरचारिणौ ॥ यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः । विगतेच्छाभयक्रोधोय : सदामुक्तएवस : ॥
सङ्घेप्ता । पुं० हरौ ॥ त्रि० सङ्घेपकारके ॥ विस्तृतं सूक्ष्मरूपेणसङ्क्षिपति । क्षिपप्रेरणे । तृच् ॥
सङ्क्षोभ : । पुं० सञ्चलने । चाञ्चल्ये ॥
सङ्ख्यम् । न० मृधे । आस्कन्दने । युद्धे ॥ सङ्ख्यानम् । चक्षिङ्० ख्याप्रकथनेवा : भावेकोबाहुलकात् ॥ त्रि० सङ्ख्येये ॥
सङ्ख्या । स्त्री० विमर्षे । चर्चायाम् । विचारणायाम् । विचारे ॥ सम्यक् विवेकेनात्मकथने ॥ सम्यगात्मबुद्धौ ॥ एकद्व्यादौ ॥ यथाऽमरसिंह : । सङ्ख्या : सङ्ख्येये ह्यादशत्रिषु । विंशत्याद्या : सदैकत्वेसर्वा : सङ्ख्येयसङ्ख्ययोः । सङ्ख्यार्थे द्विबहुत्वेस्तस्तासुचानवतेः स्त्रिय : ॥ पङ्क्ते : शतसहस्रादिक्रमाद्दशगुणोत्तरमिति ॥ अस्यार्थः । आदश० दशशब्दमभिव्याप्य । आङ्मर्यादाभिविध्योरित्यव्ययीभाव : । नपुंसकादन्यतरस्यामितिपक्षे टच् न । एकादिकाअदशपर्यन्ता : ० सङ्ख्या : सङ्ख्येये० त्रिलिङ्गाः । तेनसङ्ख्यासङ्ख्येययो : सामानाधिकरण्येनवृत्ति : । यथा० एक : पट : ० एकाशाटी० एकं वस्त्रम् । हिशब्दोऽवधारणे० सङ्ख्येयएव० नतुसङ्ख्यायामित्यर्थः । तेन० एकोविप्रइत्यादिभवतिनतुविप्रस्यैकइत्यादि । किन्तु । द्व्येकयोर्द्विवचनैकवचनइतिसूत्रे० द्व्येकयोरितिनिर्देशात्सङ्ख्यामात्रेपिसम्भव : । तेनघटानांपञ्चत्वपित्याद्यितिसुभूति : । वार्ताकुरेषाशुक्सप्रयुक्तेति वैयाकरणसङ्गच्छते । विंशतिराद्या यासांता : सङ्ख्या : ० सङ्ख्येयसङ्ख्यायोर्वर्त्तंते० एकवचनान्ताश्च० यथाविंशतिर्गाव: ० गवांविंशति : । विंशत्यादीनांयदासङ्ख्यार्थः तदाद्विवचनबहुवचनेअपिस्त : । यथाहे विंशतौ० गाव : ० गवांवातिस्रोविंशतयइति । तासुविंशत्यानवतिमभिव्याप्यस्त्रीलिङ्गा : ।

भिन्नलिङ्गेनापिसमानाधिकरण्ये
स्त्रीलिङ्गा : । यथाविंशत्यापुरुषै :
कृतम्० विंशति : कुण्डानीति ।
पङ्क्तेर्दशगुणोत्तरंक्रमात्० शतस
हस्रादिविज्ञेयम् । यथा० एकंद
शगुणितंपङ्क्तिरुच्यते० दशपङ्क्तय :
शतम्० दशशतानिसहस्रम्० दश
सहस्राण्ययुतमित्यादिज्ञेयम् ॥ य
थाहिलीलावत्याम् ॥ एकदशशत
सहस्रायुतलक्षप्रयुतकोटय: क्रमश:
। अर्बुदमब्जंखर्वनिखर्वमहापद्मश
ङ्कवस्तस्मात् ॥ जलधिश्चान्त्यंमध्यं
परार्द्धमितिदशगुणोत्तरासंज्ञा । स
ङ्ख्यायास्थानानांव्यवहारार्थंकृता
पूर्वैरिति ॥ विष्णुपुराणेश्रीपराश
रउवाच । स्थानात्स्थानंदशगुण
मेकस्माद्गण्यतेद्विज । ततोऽष्टादश
मेभागेपरार्द्धमभिधीयते ॥ परार्द्धद्वि
गुणंयत्तुप्राकृत : प्रलयोद्विज । त
दाऽव्यक्तेऽखिलंव्यक्तंसहेतौलयमे
तिवै ॥ इति ॥ न्यायमतेतु । अ
पेक्षाबुद्धिजन्यव्यवहारैककारणत्वम् । एक
त्वंनित्यवस्तुनिनित्यमन्यत्रानित्यम्
द्वित्वादिपरार्द्धपर्य्यन्तमपेक्षाबुद्धिजा
यते । एवमपेक्षाबुद्धिनाशेतेषांना
श: । पर्य्याप्तिसम्बन्धेनानेकाश्रयेति
च्छन्ति ॥ सङ्ख्यानम् । सङ्ख्याय
तेऽनयावा । चक्षिङ् : ख्याञ् ।
…मश्चेत्यङ् ॥

सङ्ख्यात : । त्रि० कृतसङ्ख्ये ।
गणिते । सङ्ख्यायतेस्म । ख्या०
। क्त: । चक्षिङादेशोवा । ख्याते ॥
सङ्ख्यानम् । न० सङ्ख्यायाम् ।
प्रकाशे ॥
सङ्ख्यावान् । पुं० पण्डिते । सुधि
यि ॥ सङ्ख्याविचारणाऽस्त्यस्य
। मतुप् ॥ त्रि० सङ्ख्यायुक्ते ॥
सङ्ख्येय : । त्रि० सङ्ख्यायोग्ये
। गणनीये । गण्ये ॥ सङ्ख्यातुं
योग्य : । ख्या० । यत् । ईत् ॥
सङ्ग : । पुं० सङ्गमे । मेलने ॥ सङ्गदो
षोयथा । निस्सङ्गएवमोक्ष : स्याद्दो
षा : सर्वेपिसङ्गजा : । सङ्गात्पत
त्यधोज्ञानीचावश्यंकिमुताल्पवित्
॥ सङ्ग : सर्वात्मनात्याज्य : सचेत्
त्यक्तुमशक्यते । ससद्भि : सहक
र्त्तव्य: सन्त : सङ्गस्यभेषजम् । स
त्सङ्गश्चविवेकश्चनिर्मलंनयनद्वयम्
। यस्यनास्तिनर : सोऽन्ध : कथंन
स्यादमार्गग : ॥ इतिश्रीकुलार्णव
तन्त्रम् ॥ सद्भि : सङ्गंप्रकुर्वीतसि
द्धिकाम : सदानर : । नासद्भिरिह
लोकायपरलोकायवाहितमितिगरु
डपुराणम् ॥ विष्णुपुराणमपिय
था । मत्स्यस्यसङ्गादभवच्चयोमेसुता
दिरागोमुषितोस्मितेन । नि : स
ङ्गतामुक्तिपदंयतीनांसङ्गादशेषा :
प्रभवन्तिदोषा : । इति ॥ रागे ॥

फलाभिलाषे । आसङ्गे : अत्यन्त सुखहेतुरेवेत्येवं शोभनाध्यासलक्षणे प्रीतिविशेषे ॥ अभिनिवेशे । अहमेव करोमीति कर्तृत्वरूपे । कर्तृत्वाभिनिवेशे ॥ सञ्जनम् । षञ्ज सङ्गे । घञ् ॥ सङ्गोऽप्रवृत्तिरिति वैद्याः । यथा । वातमूत्रपुरीषाणां सङ्गोध्मानं क्लमो रुजा । जठरे वातजाद्यान्ये रोगाः स्युर्वातनिग्रहात् ॥ रुजा जठरे० इति सम्बन्धः ॥ प्रतिबन्धे ॥

सङ्गणिका । स्त्री० अप्रतिरूपकथायाम् ॥ इ० त्रि० शेषसङ्कीर्णवर्गः ॥

सङ्गतम् । न० सौहृदे ॥ सुखजनके । क्तौ । हृदयङ्गमे युक्तियुक्तवाक्ये । सङ्गतियुक्ते ॥ सत्सङ्गे योगजीफले ॥ त्रि० सङ्गते ॥ युक्ते ॥ उपसन्ने ॥ सङ्गच्छते स्म । गत्यर्थेति कर्त्तरि क्तः ॥

सङ्गतिः । स्त्री० सङ्गमे ॥ ज्ञाने ॥ उपोद्घातादिषट्के ॥ यथा । स प्रसङ्गउपोद्घातो हेतुताऽवसरस्तथा । निर्वाहकैक्यकार्यत्वे षोढा सङ्गतिरिष्यते ॥ संश्लेषे ॥ सङ्घट्टने ॥ सम्पूर्वाद्गमेः क्तिन् ॥

सङ्गतिका । स्त्री० वर्णवृत्तान्तरे ॥ यथा । सगणं पुरः कुरुशोभितं जगणद्वयं गुरुसङ्गतम् । फणिराजवक्त्रनिवेदिताभवतीह सङ्गतिका हि सा ॥ यथा । अवधेहि किञ्चिदनुत्तरं प्रवदामि सेन्द्रपसत्वरम् । तव दिव्यकीर्त्तिविलासिनी प्रतिभिन्नगेहनिवासिनी ॥

सङ्गमः । पुं० सङ्गे । मेलके ॥ नद्यादिमेलके ॥ स्त्रीपुंसयोर्मिथुनीभावे ॥ यथा । विदग्धस्य विदग्धेन सङ्गमो गुणवान् भवेत् । विदग्धायाद्दूतिका ॥ स च प्रथममध्यमोत्तमभेदात् त्रिविधः । यथाह व्यासः । त्रिविधं तत् समाख्यातं प्रथमं मध्यमोत्तमम् । अदेशकालभाषाभिर्निर्जने च परस्त्रियाः ॥ कटाक्षावेक्षणं हास्यं प्रथमं साहसं स्मृतम् । १ । प्रेरणं गन्धमाल्यानां धूपभूषणवाससाम् । प्रलोभनञ्चान्नपानैर्मध्यमं साहसं स्मृतम् । २ । सहासनं विविक्तेषु परस्परसमाश्रयः । केशाकेशिग्रहश्चैव सम्यक् संग्रहणं स्मृतमिति मिताक्षरा ॥ सङ्गमनम् । ग्रहवृद्धिति गमेरप् ॥

संगरः । पुं० युद्धे । समरे ॥ आपदि ॥ क्रियाकारे ॥ संविदि । विषे ॥ अङ्गीकारे ॥ न० । शम्याः फले । सांगर० इ० भा० प्र० ॥ संगरणम् । संगीर्यते वा० अनेन वा । गॄ शब्दे । ऋदोरप् । पुंसीति घो वा ॥ प्रतिज्ञायाम् ॥ यथा । सत्यसंगरः ॥

संगरहितः । त्रि० निःसंगे ॥ अ

इमेश्मशायाश्चिकाद्वृत्याद्यभिमान
रूपोहङ्कारापरपर्यायोराजसोगर्व
विशेष : संग : तेनशून्ये । संगेन
रहित :॥

संगव : । पुं॰ पञ्चधाविभक्तदिनस्यद्वि
तीयांशे । प्रात : कालात्परंस्य
न्मुहूर्त्तत्रये ॥ यथा । प्रात : का
लो मुहूर्त्तांस्त्रीन्संगवस्तावदेवतु ।
मध्याह्न॰ त्रिमुहूर्त्त : स्यादपरा
ह्णस्तत : परम् । सायाह्नस्त्रिमुहू
र्त्त : स्याच्छ्राद्धंतत्रनकारयेदिति
॥ मत्स्य ॥

संगवर्ज्जित : । त्रि॰ नि : संगे स
न्यासिनि ॥ संगैर्वर्ज्जित : ॥ बा
ह्यवस्तुस्पृहाहीने ।

संगविवर्ज्जित : । त्रि॰ चेतनाचेतन
सर्वविषयशोभनाध्यासरहिते ॥

संगी । त्रि॰ सक्ते । संगविशिष्टे ॥
यथा । आमृत्युतोनैवमनोरथाना
मन्तोस्तिविज्ञातमिदंमयाद्य । म
नोरथासक्तिपरस्यचित्तंनजायतेवै
परमार्थसंगि ॥

संगीतम् । न॰ तौर्यत्रिके । प्रेक्षणा
र्थनृत्यगीतवाद्ये । यथा । गीतवा
द्यनृत्यत्रयंनाम्यंतौर्यत्रिकमिदंत्रयम्
। संगीतंप्रेक्षणार्थेऽस्मिन्शास्त्रो
क्तेनाट्यधर्मिकेतिहेमचन्द्र : ॥ अ
पिच । तालवाद्यानुगंगीतंनटीभि
र्यत्प्रगीयते । नृत्यस्यानुगतंरंगेत
त्संगीतकमुच्यते ॥

संगीतशास्त्रम् । न॰ नृत्यगीतवाद्या
नांशिक्षाशास्त्रे । तत्तु॰ सोमेश्वर
भरतहनुमत्कल्लिनाथमतभेदाच्च
तुर्विधम् । अधुनातुहनुमन्मतंप्र
चलितमस्ति । तस्याध्याया : सप्त
। स्वराध्यायोरागाध्यायस्तालाध्या
योनृत्याध्यायोभावाध्याय : कोका
ध्यायोहस्ताध्यायश्चेति ॥ अस्यमुहू
र्त्तमाहकालिदास : । हरिर्भेचति
ष्येभगर्क्षेहरिभेहरिभेचमैत्रेथवाश्रवे
हरिभे । हरिभेश्रविष्ठाद्वयेन्त्येसद
ङ्घ्रिकिलारभ्यमेदायसङ्गीतशास्त्रम्
। इति ॥ इतोमृगश्चचित्राचमूल
श्रवणातथा । पञ्चानांहरिभानां
हिमर्थावोध्यामनीषिभि : ॥

संगीति : । स्त्री॰ आलापे ॥ संगी
ते ॥

संगीर्ण : । त्रि॰ संविदिते । संश्रुते
। उरीकृते । अङ्गीकृते ॥ सङ्गीर्य
तेस्म । गृनिगरणे । क्त : ॥

सङ्गुप्त : । पुं॰ बुद्धभेदे ॥ त्रि॰ संगो
पनाश्रये ॥

संगूढ : । त्रि॰ सङ्कलिते । रेखादिना
पुञ्जीकृतधान्यादौ । संगुह्यतेस्म ।
गुहू॰ । क्त : ॥

संगृहीत : । त्रि॰ एकत्रीकृते । सङ्क
लिते ॥

संगोपनम् । न॰ सम्यग्गोपने ॥

संग्रहः । पुं॰ समाहृतौ । एककर्तृकाणामनेककर्तृकाणां वा एकाभिप्रायाणां वाक्यानां संग्रहणे । इह दुद्रङ्गे ॥ ग्रहे ॥ सङ्क्षेपे । विस्तृतार्थानां समासेन निबन्धने । अर्जने । संग्रहणम् । ग्रहवृद्दनिश्चिगमश्चेत्यप् ॥ सङ्क्षेपेण गृह्यन्ते नानास्थानेषु विप्रकीर्णा अर्था बुद्ध्यन्तेऽस्मिन्निति॰ बाहुलकादधिकरणेऽप् वा ॥ परमात्मनि । विष्णौ ॥ संगृह्णाति प्रलये सर्वं जगत् स्वात्मन्युपसंहरतीति संपूर्वाद्ग्रहेः पचाद्यच् ॥ ग्रन्थविशेषे ॥ इति कैयटः । सचलक्षश्लोकसङ्ख्यो व्याडिकृतो ग्रन्थ इति प्रसिद्धिरिति विवरणम् ॥

संग्रहणम् । न॰ संग्रहे तीर्थारण्यादिनिर्जनदेशे परस्त्रिया सह सम्भाषणादौ । सङ्ग्रहणदण्डे । यथा । परस्त्रियं योऽभिवदेत्तीर्थेऽरण्ये वनेऽपि वा । नदीनां वापि सम्भेदे स संग्रहणमाप्नुयात् ॥ उपचारक्रिया केलिः स्पर्शो भूषणवाससाम् । सह खट्वासनञ्चैव सर्वं संग्रहणं स्मृतम् ॥ स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तथा । परस्परस्यानुमते सर्वं संग्रहणं स्मृतम् ॥ सम्यक् गृह्यते ज्ञायते येन परस्त्रीभोगाभिलाषः इति॰ सम्पूर्वात् ग्रहेर्ल्युट् ॥

संग्रहणी । स्त्री॰ ग्रहणीरोगभेदे । यथा । अन्त्यधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता । अपक्वं धारयेत् तत्र पक्वं त्यजति चाप्यधः स्वस्थायाः स्वरूपम् । सुश्रुतोऽपि । षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता । आमपक्वाशयान्तःस्था ग्रहणी साभिधीयते ॥ अस्याः प्रभेदः संग्रहणी । यथा । द्रवं घनं सितं स्निग्धं सकटीवेदनं शकृत् । आमं बहुसपैच्छिल्यं सशब्दं मन्दवेदनम् ॥ पक्षान्मासाद्दशाहाद्वा नित्यं वापि विमुञ्चति । अन्त्रकूजनमालस्यं दौर्बल्यं सदनं भवेत् । दिवा प्रकोपो भवति रात्रौ शान्तिं च गच्छति । दुर्विज्ञेया दुर्निवारा चिरकालानुबन्धिनी । सा भवेदामवातेन तेन संग्रहणी मतेति ॥

संग्रहभोजनम् । न॰ चन्द्रसूर्योपरागकालभोजने ॥

संग्रामः । पुं॰ युद्धे ॥ संग्रामणम् । संग्राम युद्धे । अदन्तः चुर॰ ॥ सङ्कसते । ग्रसु अदने । ग्रसेरा चेति मन्‌वा ॥

सङ्ग्रामपटहः । पुं॰ रणतूर्ये ॥ शृङ्गादिरणवाद्ये ॥

सङ्ग्राहः । पुं॰ फलकमुष्टौ फलकग्रहणस्थाने ॥ मुष्टिबन्धनक्रियायाम् । मुष्टिबन्धे ॥ यथा । चर्ममध्यसङ्ग्राहः ॥ सङ्ग्रह

याम् । गुह्यपादांमे : समिम्, हाविति गुह्यैर्घञ् ॥

सङ्घाटी । पुं० कुटजवृक्षे ॥

सङ्घ : । पुं० चये : समूहे ॥ सजातीयानांविजातीयानाञ्चजन्तूनांवृन्दे । यथापक्षिसङ्घोभिक्षुसङ्घो वणिक्सङ्घ : ॥ संहन्यते० परिच्छिद्यतेऽनेनसंहननंवा । सङ्घोद्घोगणप्रशंसयोरितिटिलोपोऽप्रत्ययोघत्वञ्चनिपात्यते ॥

सङ्घचारी । पुं० मत्स्ये ॥ त्रि० वहुभि : सहगामिनी ॥

सङ्घजीवी । पुं० भ्रातीमे ॥

सङ्घटनम् । न० योजनायाम् ॥

सङ्घट्ट : । पुं० अन्योन्यविमर्द्दे । घटने ॥

सङ्घट्टनम् । न० सङ्घट्टे ॥ मेलने ॥ घटने ॥

सङ्घट्टना । स्त्री० संघट्टने ॥

संघट्टा । स्त्री० लतायाम् ॥

संघट्टित : । त्रि० निचिते ॥

संघट्टी । त्रि० पद्मभवे । पद्मो० दू० पद्मका० दू० भा० ॥

संघतिथ : । पुं० संघानांपूरणे ॥ बहुपूगगणसङ्घस्येति डट्० तिथुगागमविधानात्० सङ्घस्य संख्यात्वे पिडट् ॥

संघपुष्पी । स्त्री० शङ्खपुष्प्याम् । धातक्याम् ॥

संघर्ष : । पुं० स्पर्द्धायाम् । पराभिभवेच्छायाम् ॥ संघर्षणे ॥ द्वयसंघर्षस्तटस्थपीडाकर : । यथावृषभकलहाद्वृक्षपादभङ्गः० ॥ वृषुसङ्घर्षे । घञ् ॥ संसर्पे ॥

संघाटिका । स्त्री० युग्मे ॥ कुट्टन्याम् ॥ जलकण्टके ॥ घ्राणे ॥

संघात : । पुं० घाते ॥ संहतौ । सङ्घे । यथा । सङ्घाता : खप्रभृतसर्वेभृत्यागमविदामुपदेश : ॥ अप्रत्तावयवेसमूहे ॥ श्लिष्टावयवत्वे । पञ्चभूतपरिणामे । सेन्द्रियशरीरे ॥ नरकविशेषे ॥ सम्यक्घातोऽव० सम्यक्घातयन्त्यवेतिवा । यद्वा । संहन्यन्तेऽव । हन्तेर्घञ् । हनस्तोचिण्णलो : । हेर्हन्तेरितिघ : ॥ कफे ॥

संघातपत्रिका । स्त्री० शतपुष्पायाम् ॥

संघातवाद : । पुं० लोकायतिकानांनास्तिकानांवादे ॥ सयथा । अनादौर्वाणिक्षेलोकेनेश्वरादिरपेच्यते । प्रत्यक्षसङ्घातभेदशक्तिभि: सर्वसिद्धित : ॥ यथौषधानांसङ्घातेमादेरागेरसायनम् । तथैवभूतसङ्घातेचैतन्यञ्चान्यजीवतीति ॥

सङ्कुचित : । त्रि० सङ्कुष्टे । सङ्कु

ष्यतेस्म । घुषिर् विशब्दने । क्तः कृष्यमत्वरसङ्घुषास्वनामितिपक्षे इट् ॥

सङ्घुष्टः । त्रि० सङ्घुषिते । संश ब्दिते । सम्यग्घोषणाश्रये ॥ स ङ्घुष्यतेस्म । घुषिर्० कृष्यमत्वर सङ्घुषास्वनामितिपक्षे इडभावः ॥

सचलः । त्रि० अचलभिन्ने । अस्थिरे ॥

सचिः । स्त्री० शच्याम् ॥ सर्वेन्द्रि येषुसचते । षचसमवाये । सर्व धातुभ्यइन् ॥

सचिक्कणः । त्रि० क्लिन्ननेत्रे ॥

सचिवः । पुं० अमात्ये । मन्त्रिविशे षे ॥ कार्यसहायाः सचिवाबुद्धि सहायास्तुमन्त्रिणः प्रोक्ताइतिभेदः ॥ अथसचिवाः तेषभेदा७८अध्याये ५४८ श्लोकेद्रष्टव्याः । सहाये । चेटे । सचनम् । सच० । सर्वधा तुभ्यइन् । सचिंवाति । वा० आ तोनुपसर्गेकः ॥

सचिवामयः । पुं० विसर्परोगे ॥

सची । स्त्री० इन्द्राण्याम् ॥ कृदिका रादितिङीष् ॥

सचीनन्दनः । पुं० जयन्ते । गौडदे शीयस्वकलौवैष्णवविशेषधर्मप्रव- र्त्तकेचैतन्यदेवे ॥ यथाशाकेमुनि व्योमयुगेन्दुगण्ये १४०७ पुण्ये तिथौफाल्गुनपौर्णमास्याम् । श्रै लोक्यभाग्योदयपुण्यकीर्त्तिर्देवः सचीनन्दनआविरासीत्इतिचैत न्यचन्द्रोदयनाटकम् ॥

सचेतनः । त्रि० सप्राणे ॥

सचेताः । त्रि० अव्याकुलचित्ते ॥ प्र सन्नचित्ते ॥

सचेष्टः । त्रि० चेष्टयासहवर्त्तमाने ॥

सच्चारा । स्त्री० हरिद्रायाम् ॥

सच्चित् । न० ब्रह्मणि ॥

सच्चिदानन्दम् । न० ब्रह्मणि । नित्यज्ञानसुखस्वरूपे ॥ त्रि० सा कारदेवविशेषणे ॥

सच्चिदानन्दलक्षणम् । त्रि० पर मात्मनि ॥ सच्चिदानन्दैः० अनृ तजडदुःखप्रतियोगिभिर्लक्ष्यते० विरुद्धधर्मत्यागलक्षणयाभागलक्ष णयाज्ञायते० इतिसच्चिदानन्दल क्षणम् ॥ यद्वा । सन्तौसर्वदास्था यिनौयौचिदानन्दौज्ञानानन्दौतौ लक्षणंस्वरूपमस्य ॥

सच्छाकम् । न० आर्द्रके ॥

सजम्बालः । त्रि० पङ्किले । पङ्कवि शिष्टे । जम्बालेनपङ्केनसहेति विग्रहः ॥

सजातिः । पुं० समानजातिस्त्री पुंसयोः पुत्रे ॥ यथा । सवर्णेभ्यः सवर्णासुजायन्तेहिसजातयः । अ निन्द्येषुविवाहेषुपुत्राः सन्तान वर्द्धनाः ॥ त्रि० समानजातौ ॥

सजातीयः । त्रि० समानजातीये ॥

जातीभवोजातीय :। समानस्ये
तियोगविभागात्सादेश : ॥
सजु : । अ॰ सहार्थे ॥
सजुः । स्त्री॰ प्रीतियुक्तायाम् । सेवा
युक्तायाम् । जोषणम्॰ जुष्
जुषप्रीतिसेवनयोः । भावेक्विप् । स
हजुषावर्त्तते॰ यासा॰ सजुः ।
बहुव्रीहौसहस्यसभाव :। ससजु
षोरु :। र्वोरितिदीर्घः ॥
सज्ज :। त्रि॰ सन्नद्धे । वर्म्मिते ।
बद्धसन्नाहे ॥ सज्जास्त्यस्य । षस्ज
गतौ । अच् ॥ सम्भृते ॥
सज्जन :। पुं॰ महाकुले । कुली
ने । आर्य्ये । अस्यलक्षणं यथा ।
निजाचारग्राहिण्येयेकुर्वन्तोविट्स
न्ततम् । पापाभिलाषरहिता: स
ज्जनास्तेप्रकीर्त्तिताइति । क्रि
यायोगसारे १६ऽध्याय : । न॰
उपरक्षणे । सैन्यरक्षणायनियुक्त
प्रहरिकादौ । गुल्मे । घट्टे ।
त्रि॰ कुलीने । सति । सत्त्वा
सौजन्यं सज्जन्तेऽनेन॰ सत्॰
शोभनम्जन्यतेवाऽनेन । षस्जग
तौ॰ जनीप्रादुर्भावेवा । ल्युट् ।
महात्मनि ॥
सज्जना । स्त्री॰ पल्याणाद्यारोपणे
नैभसज्जीकरणे । कल्पनायाम् ।
षस्जगतौ । ण्यन्त : ण्यासश्रन्थोति
युच् । सज्जत्वेनगज॰ तज्जनग्
त्वेनञ : ॥
सञ्ज्ञा । स्त्री॰ वेणि । सन्नाहे । साज
ना॰ इ॰ भा॰ प्र॰ ॥
सञ्जित :। त्रि॰ वशीकृते ॥ भूषिते
। कृतसज्जे ॥ वर्म्मिते । सन्नद्धे ॥
षस्ज॰ । क्त : ॥
सञ्च :। पुं॰ पुस्तकलेखनार्थपत्रचये
। सांची॰ इ॰ भा॰ ॥ यथा । श्री
ताडीपत्रजिसञ्चे समेपत्रसुसञ्चिते ।
त्रिभिश्चकीविपाञ्चे चचर्म्मणासम्पुटी
कृते । रक्तेनचाथकृष्णेनमसूर्द्धन्याव
र्त्तितेनच । दृढसूत्रसुबद्धेनपत्रंवि
धक्रुतेनच ॥ यस्तुवादशसाहस्रीसं
हितामुपलेखयेत् । ददातिचाभियु
क्तायसयातिपरमाङ्गतिमितिदेवीपु
राणेविद्यादानमाहात्म्यफलनामा
ध्याय : ॥
सञ्चत् । पुं॰ प्रतारके ॥
सञ्चय :। पुं॰ समूहे । निवहे ॥ स
ञ्चीयते । चिञ्॰ । एरच् ॥
सञ्चयनम् । न॰ सञ्चये ॥
संचयी । त्रि॰ संचयशीले । सङ्ग्रह
कर्त्तरि ॥ सञ्चयोऽस्यास्ति । इनि :
॥ संचयीनावसीदति ॥
संचर :। पुं॰ सेतौ । मार्गे ॥ देहे
॥ संचरन्त्यनेन । गोचरसंचरेति
साधु : ॥
संचलनम् । न॰ कम्पने ॥
संचाय्य :। पुं॰ क्रतौ । यज्ञे ॥ सं

चीयतेऽसौ । सम्पूर्वाच्चिनोतेः॰
क्तीक् स्वदपाव्यसञ्चाय्यादितिस
द्याय्ये।निपात्यते ।

सञ्चारः। पुं॰ निर्गमे । सञ्चरण
म्॰ सञ्चरत्यनेनवा । चरगतौ
। घञ् । गमने ॥ यथा । सञ्चारो
निगमान्तर्वीथिष्विति ॥ चकुटी
भयसञ्चाराः प्रचाराजनिधाभिके॰
हतिच ।

संचारजीवी। त्रि॰ चरवाधिनि ॥

संचारिका। स्त्री॰ युगले ॥ कुट्
न्याम् । दूत्याम् ॥ घ्राणे । संच
रति॰ संचारयतिवा । चर॰ ।
ण्वुल् ॥

संचारिणी। स्त्री॰ गोधापद्याम् ॥
संचरणशीलायाम् ॥

संचारी। पुं॰ धूपे । वायौ ।
भावविशेषे ॥

संचारितः। त्रि॰ संचालिते ॥

संचाली। स्त्री॰ गुञ्जायाम् ॥ य
था । संचालीप्रोच्यतेगुञ्जासाति
कोरूपकंभवेत् ॥

संचितः। त्रि॰ रचिते ॥ संभृते
। सम्पादिते । भाविदेहारम्भके
कर्मविशेषे ॥

संचितकर्म। न॰ ज्ञानोत्पत्तेः
प्रागुत्पन्ने॰ अनारब्धफलकर्मणि
॥ संचितंचतत्कर्मच ॥

संचिता। स्त्री॰ मूषिकपर्ण्याम् ।
मूषीकर्ण्याम् ॥

संचिन्तितः। त्रि॰ सङ्कल्पेनहृते ।

संचिन्वीनः। त्रि॰ संचयंकुर्वा
णे ॥ संचिन्वानकमेवमंकामाना
मविश्रमकम् । इचीवेरणमाला
द्यस्त्वरादायगच्छति ॥

संचेयः। त्रि॰ संचयनीये । संचे
तव्ये ॥

सञ्छन्नः। त्रि॰ आच्छादिते ॥

सञ्जः। पुं॰ विधौ । ब्रह्मणि ॥ रु
द्रे । शिवे ।

सञ्जननः। त्रि॰ उत्पादके ।

सञ्जयः। त्रि॰ रागद्वेषादिदोषाणां
सम्यक्जेतरि ।

सञ्जवनम्। न॰ अन्योन्याभिमुख
शालाचतुष्टयगृहे । चतुःशाले
। सञ्जवन्त्यत्र । जुगतौसौत्रः।
अधिकरणेल्युट् ॥

सञ्ज्ञा। स्त्री॰ चेतनायाम् ॥ छायायाम् ।

सञ्ज्वरः। त्रि॰ संतप्ते । सञ्ज्व
रोऽस्यजातः ।

सञ्जिहानः। त्रि॰ परित्यजति ।

सञ्जीवनम्। न॰ सञ्चरणेसम्यक्प्र
कारेणप्राणधारणे ।

सञ्जीवनी। स्त्री॰ चुद्रक्षुपविशेष
अमृतस्रवायाम् । रुदन्तिकायाम्
ग्रावायोगान्तरे ॥ यथा । उत्पन्नो
वगतश्चन्द्रोहस्तोयत्रविशुद्धः ।
सञ्जीवनीसमाख्योयंमृत्युयोगाप

हारकः ॥

संज्ञम्। न॰ पीतकाष्ठे ॥ त्रि॰ स
ङ्गजानुके। संहतजानुके ॥ सं
ज्ञावति।

संज्ञपनम्। न॰ मारणे ॥ मारण
तोरणनिगामनेषुज्ञा। ज्ञपमिच्चे
तिवा। भावेल्युट् ॥

संज्ञप्ति। स्त्री॰ मारणे ॥ विज्ञप्ती ॥

संज्ञा। स्त्री॰ नामनि ॥ ययाप्रत्या
य्यतेसासंज्ञेतिमहाभाष्यम्। प
र्यायमितियावत्। नाचसंज्ञिनं
बोधयति ॥ गायत्र्याम् ॥ चेतना
याम्। बुद्धौ। रविपत्न्यामिति ॥ ह
स्ताद्यैरर्थस्य सूचनायाम् ॥ संज्ञा
नम्। ज्ञानबोधने। चातश्चोप
सर्गेइत्यङ् ॥ सम्यग्ज्ञायतेइति
कर्मणिवाङ् ॥ सङ्केते ॥

संज्ञास्कन्धः। पुं॰ नामप्रपञ्चे। दे
वदत्तादिनामधेये ॥ सविकल्पके
॥ सविकल्पप्रत्ययः॰ संज्ञासंसर्ग
योग्यप्रतिभासः। यथा। डित्थः॰
कुण्डली॰ गौरो॰ ब्राह्मणोगच्छ
तीत्येवंजातीयकइतिवाचस्पतिमि
श्राः। सविकल्पप्रत्ययइत्यनेन॰
विज्ञानस्कन्धोनिर्विकल्पइतिभेदः
स्कन्धयोर्ध्वनितइतिकल्पतरुः।
गौरश्वइत्यादिशब्दसञ्जल्पितप्रत्यय
इत्यानन्दगिरयः। गौरश्वइत्यादि
शब्दादिविशिष्टवस्तुविषयकसविक
ल्पप्रत्ययइतिवृत्तिकाराः ॥

संज्ञी। त्रि॰ संज्ञावति ॥ संज्ञया
यः प्रतीयतेससंज्ञीतिमहाभाष्य-
ष्ठत्। संज्ञास्यास्ति। व्रीह्यादि
त्वादिनिः ॥

संज्ञुः। त्रि॰ संहतजानुके ॥ संह
तेसंलग्नेजानुनीयस्य। प्रसम्भ्यां
जानुनोर्ज्ञुः ॥

सञ्ज्वरः। पुं॰ अग्निजतापे। सन्तापे
॥ संज्वरयति। ज्वररोगे। ण्यन्ता
त्॰ पचाद्यच् ॥

सटम्। न॰ व्रतिनः शिखायाम्-

सटा। स्त्री॰। जटायाम् ॥
यथा। जटाजटिर्जटीजूटीजुटक
लुसटंसटा। कोटीरंजूटकंहस्तंशि
खायांव्रतिनामपीतिशब्दरत्नावली
॥ सटति। षटअवयवे। अच् ॥
केसरे ॥

सटाङ्कः। पुं॰ सिंहे ॥ व्रतिनि ॥ स
टायुक्तशिरस्कयस्य ॥

सटिः।
सटिका। स्त्री॰ } गन्धाम्। गन्धप
सटी।

लाश्याम्। वनचादा॰ वन्यहरिद्रा॰
इ॰ गौ॰ भा॰ प्र॰ ॥

सणः। पुं॰ शणे ॥

सण्डिशः। पुं॰ सन्दंशे ॥

सण्डीनम्। न॰ खगगतिक्रिया
याम्। पक्षिणोगत्यादीपतने ॥

सत्कर्म्म । न॰ वेदविहितक्रियायाम् ॥ सत्कर्मयोग्योनकमोनेवाप : शौचकारणम् । यस्मिन्ननुदितेत स्मैनमोदिवाकरभास्वते । इतिविष्णु पुराणम् ॥

सत्काकुमार : । पुं॰ रक्तकाञ्चने ॥

सत्काण्ड : । पुं॰ चिल्ले ।

सत्कार : । पुं॰ अत्यादरे ॥ साधु रयंतपस्वीव्रजमवश्यंवन्द्यमाना यांस्तुतौ ॥ कौमुद्यादिषु ॥ यथा । तस्मादेता : सदापूज्या : भूषणा च्छादनाशनै : । भूतकामेर्नरैर्नित्यंसत्कारेषूत्सवेषुचेति । प ता : ॰ नार्य : ॥ पूजायाम् ।

सत्कृत : । त्रि॰ कृतसत्कारे । पूजिते ॥ अर्चिते ॥

सत्कृति : । स्त्री॰ सत्क्रियायाम् । स त्कारे ॥

सत्क्रिया । स्त्री॰ सत्कारे । आदर स्यक्रियायाम् ॥ अवदाहादिक्रिया याम् । संस्क्रियायाम् ॥

सत्तम : । त्रि॰ पूज्यतमे । साधीयसि । उत्त मे । अतिशोभने । अयमेषामतिशयेनस न्। अतिशायनेतमबिष्ठनाविति तमप् ।

सत्ता । स्त्री॰ सजातीयविजातीयस्व गतभेदरहितानुभूतौ । विद्यमान तायाम् । साधुतायाम् । [illegible] विधिषि । इतिभाषापरिच्छेदः ॥ भावेतल् ॥

सत्तामात्रम् । त्रि॰ केवलपरमात्मस्व स्वरूपे ॥

सत्य : । पुं॰ श्रीरामे । दशमुखान्तके । विष्णौ ॥ यथा । श्रीरामेप्यश्वरीवि ष्णु : सत्य : सहस्रधीरणे । सत्या यामभवत्सत्य : सत्यरूपोजनार्द्द नइतिकौर्मे ४८ऽध्याय : । अश्व त्थवृक्षे । नान्दीमुखश्राद्धदेवे । य था । इष्टिश्राद्धेक्रतुर्दक्ष : ॰ सत्यो नान्दीमुखेवसु : । नैमित्तिकेकाल कामौ॰ काम्येचधुरिलोचनाविति ॥ तपोलोकादूर्द्ध्वतनेलोके । सत्य लोके ॥ यथोक्तं मृगेन्द्रसंहितायाम् । तत्र : सत्याधिप : स्थानंसत्य लोक : स्वयम्भुव : । कामातिश यसम्पन्न : कोटयोनवसप्त च । सा वित्रीमूर्त्तिमत्यास्तेयत्रवेदाश्चसा नुगा : ॥ ततस्तपोलोकानन्तरम् ॰ सत्यस्यचबुद्धित्वात् ॰ प्राप्तकल्पाधि पत्यस्यब्रह्मण : स्थानम् ॰ इत्यर्थ : । न॰ कृतयुगे ॥ शपथे ॥ यथोक्तं श्रीमहानिर्वाणे । सत्यंब्रवीमिस हलप्यस्पृष्ट्वाकौलगुरुं हिजम् । ग ङ्गातोयंदेवमूर्त्तिंकुलशास्त्रंकुला मृतम् । देवीनिर्माल्यमथवाकथनं शपथोभवेत् । तथानृतंवदन्म र्त्य : कल्पान्तंनरकंव्रजेत् ॥ अपा यनिकार्याद्यौगीवाशास्त्र्यौ पिता । तत्कार्यं सर्वामपूर्ये : स्वीकृतं

अपथेन वा ॥ स्वीकारोऽलङ्कनाच्च
दृश्यं तु पक्षमेकमभोजनैः । अमेध्या
पितमुखाङ्घ्य इदशाहं काथाशनैः
॥ कुलधर्मोऽपि सत्येन विधिना चेन्न
सेवितः । मोक्षाय श्रेयसे न स्यात्
कौलपापाय केवलम् ॥ इति ॥ त
थ्ये । अव्यभिचारिणि । अनृतवि
रोधिनि । यथादृष्टार्थभाषणे । प्र
माणेनावबुद्धस्यार्थस्य तथैव भाष
णे । यथा च । यथाऽतिष्ठन्ति पुण्यानि
सत्यमाश्रित्य पार्वति । तथाऽनृ
तं समाश्रित्य पातकान्यखिलान्यपि
॥ अतः सत्यविहीनस्य सर्वपापा
श्रयस्य च ताडनाद्दमनाद्राजा न
पापार्हः शिवाज्ञया ॥ अथ लक्ष
णमुक्तं पाद्मे क्रियायोगसारे । यथा
र्थकथनं यच्च सर्वलोकसुखप्रदम् ॥
तत् सत्यमिति विज्ञेयं असत्यं तद्वि
पर्ययमिति ॥ तस्याकारास्त्रयोदश
महाभारते राजधर्मे यथा । सत्यञ्च स
मता चैव दमश्चैव न संशयः । अमा
त्सर्यं क्षमा चैव ह्रीस्तितिक्षानसूय
ता ॥ त्यागो ध्यानमथार्यत्वं धृति
श्च सततं दया । अहिंसा चैव राजे
न्द्र सत्याकारास्त्रयोदश ॥ इति ॥ सत्य
प्रशंसा यथा । नहि सत्यात् परो ध
र्मो नानृतात् पातकं परम् । नहि मा
तुः परो बन्धुर्न गुरुर्मन्त्रदात् प
रः ॥ इति ब्र० वै० पु० ॥ अपि च

महानिर्वाणतन्त्रे । प्रकृष्टेऽवके कलौ
दिवसे धर्माद्दुर्बलाः । सत्यस्य
त्य वा सत्यमावं तस्मात् सत्यमयो भवे
त् ॥ सत्यधर्मं समाश्रित्य यत्कर्म कु
रुते नरः । तदेव सकलं कर्म सत्यं
जानीहि सुव्रते ॥ नहि सत्यात् प
रो धर्मो न पापमनृतात् परम् । तस्मा
त् सर्वात्मना मर्त्यः सत्यमेकं समाश्र
येत् ॥ सत्यहीना वृथा पूजा सत्य
हीनो वृथा जपः । सत्यहीनं तपो
व्यर्थमूषरे वपनं यथा ॥ सत्यरूपं प
रम्ब्रह्म सत्यं हि परमं तपः । सत्य
मूलाः क्रियाः सर्वाः सत्यात्
परतरं नहि ॥ अतएव मया प्रोक्तं
दुष्कृते प्रबले कलौ । कुलाचारोऽपि
सत्येन कर्त्तव्योऽत्यन्तभावतः ॥ गो
पनाद्धीयते सत्यं नगुप्तिरनृतं वि-
ना । तस्मात्प्रकाशतः कुर्य्यात्
कौलिकः कुलसाधनम् । कुल
धर्मस्य गुप्त्यर्थं नानृतं तस्मात् जुगुप्
सितम् । यदुक्तं कुलतन्त्रे पुनश्चास्तं
प्रबले कलौ ॥ कृते धर्मश्चतुष्पाद
स्त्रेतायां पादहीनकः । द्विपादो
द्वापरे देवि पादमात्रं कलौ युगे ॥ त
थापि सत्यं बलवत् तपः खञ्जं दया
पि च । सत्यपादे कलौ देवि धर्मलोपः
प्रजायते । तस्मात् सत्यं समाश्रि
त्य सर्वकर्माणि साधयेत् ॥ कुलाचा
रं विना यत्र नास्त्युपायः कलिज्वरि

। नवानृतप्रविशश्चेत्कुतोनिश्रेय संभवेत् ॥ इति ॥ अश्वमेधसहस्र स्य सत्यस्य तुलया धृतम् । अश्वमेध सहस्राद्धि सत्यमेकं विशिष्यते ॥ अ नृतभाषणरूपवाग्व्यापारनिरोधि, अनर्थाननुबन्धियथाभूतार्थवचने । प्रियहितयथार्थभाषणे ॥ अबा धिततात्पर्यविषयेतत्त्वावेदकेवेदा ख्ये प्रमाणे ॥ तदुपजीविनिपु राणादौ ॥ प्रमाणमूलेऽबाधितार्थे वाक्ये ॥ सिद्धान्ते ॥ भूतपञ्च के ॥ सच्छब्देनपृथिव्यप्तेजांसि । त्यशब्देनवाय्वाकाशौ । सच्चत्य च्च अनयोः समाहारः ॥ मम दर्शने । परमार्थरूपे । अद्वैत वस्तुनि परमब्रह्मणि ॥ द्वैताद्वै तयोः प्रमाणभूतवेदप्रतिपाद्यत्वा त्कस्यसत्यत्वंकस्यासत्यत्वमित्या काङ्क्षायामाहाचार्यः अद्वैतमे वसत्यं तस्मिन् द्वैतं नसत्य मध्यस्तम् । रजतमिव शुक्तिका याम् मृगतृष्णायामिवोदक स्फुरणम् । आरोपितं यदधिष्ठा नं अद्वैतं वस्त्ववस्तुनिद्वैते । युक्तं मेव तदाख्यात सत्ये अ ध्यासो भवत्यसत्यानाम् ॥ यत्रारोपण मुभयोः सत्यतिरि क्तकस्यचिद्भावः । आरोपणं नशून्ये तस्मात् द्वैतसत्यताया या ॥ एवमुक्तेऽद्वैतेश्रुतिरेवप्रमा णमित्याह । प्रत्यक्षाद्यनवगतं श्रुत्याप्रतिपादनीयमद्वैतम् । द्वै तं नप्रतिपाद्यम् तद्धिस्वयमेवलो कसिद्धत्वात् ॥ ५४ ॥ इति ॥ भूतपञ्चके । सच्छब्देनपृथिव्यप्ते जांसि । त्यच्छब्देनवाय्वाकाशौ । सच्चत्यच्चसत्यमितिव्याख्यानात् ॥ व्याकालितत : पूर्वमूर्तमप्यक रूपकम् । सत्त्वमरिनाशं वसत्यं त दवस्तु कथ्यते ॥ त्रि० तथ्यवति ॥ अ बाध्ये ॥ सतिसत्सु वासाधुः तत्सा धुरितियत् ॥ पारमार्थिके । यथा । सत्यस्यसत्यः परमेश्वरः । स त्यस्यभूतपञ्चकस्यसत्यः पारमा र्थिकोनाशेप्यशिष्यमाणरूपः ॥

सत्यकामः । पुं० जाबालर्षौ ॥ ईश्वरे ॥ सत्याअवितथाःकामायस्यसः ॥

सत्यगङ्गा । स्त्री० कामरूपदेशप्रसिद्धायांनद्यां ॥

सत्यंकारः । पुं० अवश्यमयैतत्कर्तव्यमितिसत्यकरणे । सत्यापने ॥ सत्यस्यकरणम् । भावेघञ् । कारेसत्यागदस्येतिमुम् । समयकरणे ॥

सत्यंकारकृतः । त्रि० अवश्यमयैतत्कर्तव्यमितिसत्यंकृत्वागृहीतं तस्मिन् । पयानो साङ्० भा० प्र० ॥

सत्यतपा : । पुं॰ मुनिविशेषे ॥
सत्यधृति : । पुं॰ ऋषिविशेषे ॥ त्रि॰ अवितथधैर्ये ॥ सत्याअवितथविषयाधृतिर्यस्य ॥
सत्यनारायण : । पुं॰ स्कन्दपुराणप्रसिद्धेदेवताविशेषमूर्तिकशिवे ॥
सत्यपर : । पुं॰ परमेश्वरे ॥ सत्यंपरंश्रेष्ठंप्राप्तिसाधनंयस्मिन्स : ॥
सत्यफल : । पुं॰ बिल्वद्रुमे ॥
सत्यभामा । स्त्री॰ श्रीकृष्णस्याष्टमहिष्यन्तर्गतमहिषीविशेषे ॥ दुर्गायाम् ॥
सत्यभारत : । पुं॰ कृष्णद्वैपायने । वेदव्यासे
सत्यम् । अ॰ अङ्गीकारे ॥ प्रश्ने ॥ अभ्युपगमे ॥ प्रतिबोधे ॥ सत्ये ॥
सत्यरथा । स्त्री॰ त्रय्यारुणस्य पत्न्याम् ॥
सत्यवन्त : । पुं॰ पौलुषिनाम्निमुनिविशेषे ॥
सत्ययुगम् । न॰ चतुर्युगानांप्रथमयुगे । कृते ॥ यथा । कृतंस्यात्युगंत्रेतायां॰ द्वापरंचस्मृतौ । कलिश्च भरत : कामंयुगमितिविकाण्डशेष : ॥
सत्ययोनि : । पुं॰ परमेश्वरे ॥ सत्यस्यभूतपञ्चकस्ययोनि:कारणम् ॥

सत्ययौवन : । पुं॰ विद्याधरे ॥
सत्यरत : । पुं॰ सत्यव्रतराजपुत्रे ॥ व्यासे ॥ त्रि॰ सत्यभाषिणि ॥ सत्येरत : ॥
सत्यलोक : । पुं॰ सप्तलोकान्तर्गतलोकविशेषे ॥ यथा । षड्गुणेनतपोलोकात्सत्यलोकोविराजते । अपुनर्मारकायत्रब्रह्मलोकोहिसस्मृत : ॥ अनलोकापिलय वर्गस्य गुणेन । द्वादशलोकोव्युच्छायेनतपोलोकान्नरं सत्यलोक : । अपुनर्मारका: । पुनर्मृत्युशून्या : ॥
सतावर्च : । पुं॰ ऋषौ ॥ त्रि॰ सततागादिनि ॥
सततावान् । पुं॰ नृपान्तरे ॥ त्रि॰ सततावाचि ॥ सत्यमस्यास्मिन् मतुप् । मादुपधायाइतिमतोर्वत्वम् : ॥
सत्यवती । स्त्री॰ व्यासमातरि । कालिन्द्याम् ॥ नारदस्यपत्न्याम् ॥ ऋचीकमुनेर्भार्यायाम् ॥ सत्यविशिष्टायाम् ॥ उगित्वान्ङीप् ॥
सत्यवतीसुत : । पुं॰ व्यासे ॥
सत्यवाक् । पुं॰ ऋषौ ॥ काके ॥ त्रि॰ सत्यवादिनि ॥ सत्यावागस्य ॥
सत्यवाक्य : । पुं॰ भगवतीपुराणप्रसिद्धे मुनिविशेषे ॥ त्रि॰ सर्वास्ववस्थास्वपिसत्यवचने ॥ सत्यंवाक्यमस्य ।

सत्यवादी । त्रि॰ यथार्थवक्तरि । सत्योद्ये ॥

सत्यवृत्तः । त्रि॰ अकपटचरिते ॥

सत्यव्रतः । पुं॰ ईश्वरे । सत्यं व्रतं सङ्कल्पोऽस्य ॥ सूर्य्यवंशीयस्य त्र्य्यारुणस्यात्मजे राजर्षिविशेषे । योऽसौ त्रिशङ्कुसंज्ञामवाप ॥ त्रि॰ सत्यसङ्कल्पे ॥

सत्यसङ्कल्पः । त्रि॰ अमोघवाञ्छिते । ईश्वरे ॥ सत्याः सङ्कल्पा यस्य ।

सत्यसङ्गरः । पुं॰ त्रिशिरसि । श्रीदे । कुवेरे ॥ कूटास्त्रवर्ज्जितेशूराणां युद्धे ॥ त्रि॰ सत्यप्रतिज्ञे ॥

सत्यसन्धः । पुं॰ कैकेयीतनये । भरते । जनमेजये ॥ त्रि॰ सत्यप्रतिज्ञे ॥ सत्या सन्धा प्रतिज्ञा यस्य ॥

सत्यसन्धा । स्त्री॰ द्रौपद्याम् ॥

सत्या । स्त्री॰ दुर्गायाम् ॥ जनकात्मजायाम् । सीतायाम् ॥ व्यासमातरि । सत्यवत्याम् ॥ सत्यभामायाम् ॥ विनापिप्रत्ययमित्युत्तरपदलोपः ॥ सत्यभामिव्याम् । अविनाशिन्यां ॥

सत्याकृतिः । स्त्री॰ सत्यापने । मयैतदवश्यं कर्त्तव्यमिति तथ्यकरणे । सत्यक्रिया॰ साङ्॰ भा॰ प्रसिद्ध निश्चये ॥ सत्यस्यकरणं । स्त्रियांक्तिन् । सत्यादशपथे॰ कृतिडाच् ॥

सत्याग्निः । पुं॰ अगस्त्यमुनौ । चाण्डालमाग्नौ ॥

सत्यानृतम् । न॰ वाणिज्ये ॥ सत्यसहितमनृतम् । शाकपार्थिवादिः ॥

सत्यापनम् । न॰ सत्यङ्कारे । सत्याकृतौ ॥ सत्यस्यकरणम् । सत्यापपाशेतिणिजापुकौ । भावेल्युट् ॥

सत्योद्यम् । न॰ सत्यवचो । सत्यस्यवदने ॥ वदः सुपिक्यप्चेतिक्यप् ॥

सत्त्रम् । न॰ क्रतौ । यज्ञे ॥ सदादाने ॥ आच्छादने ॥ अरण्ये ॥ कैतवे ॥ यज्ञविशेषे । गवायनादिक्रतुविशेषे ॥ यत्रयजमाना एवसमाना ऋत्विगादिरूपेण॰ कर्म्म कुर्वन्ति॰ तस्मिन् यज्ञे सदन्विणे सततान्नदाने ॥ धने ॥ गृहे ॥ कर्म्मणि ॥ सीदन्त्यत्राऽनेनवा । षद्लृविशरणगत्यवसादनेषु । ष्ट्रन् ॥ गृधुभीत्यादिनाबोधः ॥ सतः साधून् त्रायतेवा । त्रैङ्पालने । आतोनुपसर्गेकइतिकः । नपुंसकत्वात्सत्रमिति ॥

सत्त्रम् । अ॰ सहार्थे । सहत्रायते । त्रैङ्पालने । अम् । यरोहित्वम् ॥

सत्त्रशाला । स्त्री॰ प्रतिश्रये । अन्नदानाद्युद्वसिते ॥

सत्त्रा । अ॰ सहार्थे ॥ सत्राकालवेगाहस्याम् ॥ सहत्रायते । त्रैङ्॰ । क्विप् ॥

सत्राजित् । पुं॰ कृष्णस्यश्वशुरे ॥

सत्त्रायणम् । न० बहुयजमानके० वैदिकेकर्म्मणि ॥

सत्त्रि : । पुं० गजे । हस्तिनि ॥ अब्दे । मेघे ॥ त्रि० जयशीले ॥

सत्त्रिजातकम् । न० व्यञ्जनविशेषे ॥ यथा । मांसं बहुघृतेभृष्टं सिक्ताचोष्णाम्बुनामुहुः । जीरकाद्यैसमायुक्तं परिशुष्कं तदुच्यते ॥ तदेवघृततक्राढ्यं प्रदिग्धं सत्त्रिजातकम् ॥

सत्त्री । पुं० गृहपतौ । सदान्नादिदानकर्त्तरिगृहस्थे ॥ नाशौचं सत्त्रिणांसत्रे० नकारूणांस्वकर्मणि ॥ ऋत्विजि ॥ सत्त्रं० यज्ञस्तन्नमस्यास्ति । अतइनिठनावितीनिः ॥

सत्त्व : । पुं० न० जन्तौ ॥ न० प्रकृतेर्गुणविशेषे । प्रीत्यात्मकेसत्त्वगुणे ॥ येतुप्रीतिर्नदुःखाभावादतिरिच्यते० एवंदुःखमपिनप्रीत्यभावादन्यदितिमन्यन्ते० तान्प्रत्यात्मग्रहणम् । नेतरेतराभावाः सुखादयः ० अपितुभावाः ० आत्मशब्दस्यभाववचनत्वात्० प्रीतिरात्माभावोयेषांतेप्रीत्यात्मानः । भावरूपताचैषांगुणानामनुभवसिद्धा० परस्पराभावात्मकत्वेतुपरस्पराश्रयापत्तेरेकस्याप्यसिद्धेरुभयासिद्धिरितिभावः । सत्त्वंलघुप्रकाशकमिष्टंसाङ्ख्याचार्य्यैः । यत्सुखहेतुस्तत्सुखात्मकंसत्त्वम् ॥ चेतोधर्मविशेषे ॥ यस्मिन्सतिनकुतश्चिद्भयमुत्पद्यतेनकस्यामप्यवस्थायाम्विषादःसमुपजायतेतत्सत्त्वमितिव्याख्यातारः । तथाहि । एकाकिनीवनवासिनिराजलक्ष्म्यनीतिशास्त्रे । सत्त्वोच्छ्रितेमृगपतौ० राजतिगिरः परिगमन्ति ॥ पिशाचादौ ॥ बले । पराक्रमे ॥ द्रव्ये ॥ स्वभावे ॥ आत्मत्वे ॥ व्यवसाये । असुषु । प्राणेषु ॥ चित्ते ॥ रसे ॥ आयुषि ॥ धने ॥ वित्ते ॥ यथा । अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम् । सामानाधिकरण्यंहितेजस्तिमिरयोः कुतइति ॥ जीवात्मनि ॥ अन्तःकरणे ॥ निर्विकारमनसि ॥ यथा । व्यसनेऽभ्युदयेवापियस्याविकारेसदामनः । ततुसत्त्वमितिप्रोक्तमिति ॥ उत्साहशक्तौ ॥ चित्तधैर्य्ये ॥ सतोभावः । तस्यभावस्त्वतलौ । सीदन्त्यस्मिन्गुणाद्याः । षद्लृ० । अन्येभ्योपिदृश्यन्तइतित्वन्त्रा ॥

सत्त्वतनु : । पुं० वासुदेवे ॥

सत्त्वरम् । न० शीघ्रे । अविलम्बिते ॥ त्रि० तद्वति ॥ सहत्वरयावर्त्तते । सहस्य सः ॥ अविलम्बितेक्रियाविशेषणत्वाद्द्रव्येवर्त्तमानंक्लीवम् । द्रव्येतुत्रिलिङ्गं ॥

सत्त्वविशाल : । पुं० भुवः प्रभृतिस

स्यात्लोके । त्रि॰ सत्त्वबहुले । ऊर्ज्जसत्त्वविशाल:॥ सत्त्वेन विशाल: ॥

सत्त्वसंशुद्धि : । स्त्री॰ अन्त : करणस्य निर्म्मलतायाम् । श्रवणादिपरिपाकेणान्त : करणस्यासम्भावनाविपरीतभावनादिमलराहित्ये सम्यक्शुद्धि : संशुद्धि : सत्त्वस्य संशुद्धि : । तस्या : सम्यग्भगवत्तत्त्वस्फूर्त्तियोग्यता ॥

सत्त्वसङ्क्षय : । पुं॰ चित्तभङ्गे ॥ प्रारब्धकार्यासिद्ध्यादिविषादः : सत्त्वसङ्क्षय : ॥

सत्त्वसमाविष्ट : । त्रि॰ सत्त्वेनात्मना॰ आत्मविवेकज्ञानहेतुनाचित्तगतेनातिशयेन॰ सम्यग्ज्ञानप्रतिबन्धकरजस्तमोमलराहित्येन॰ आसमन्तात्फलाव्यभिचारेण॰ आविष्टे व्याप्ते ।

सत्त्वसम्पन्न : । त्रि॰ सद्भावापन्ने ।

सत्त्वस्थ : । त्रि॰ सत्त्ववृत्तिप्रधाने ॥ पुं॰ विष्णौ ॥ सत्त्वं सत्त्वगुणं प्रकाशात्मकमधितिष्ठतिपालनोपाधितयाविष्णुरूपेणेतिसत्त्वस्थोविष्णु: । यद्वासत्त्वेषुसर्वप्राणिषुक्षेत्ररूपेणान्तर्यामिरूपेणचतिष्ठतीतिसत्त्वस्थ : । छा॰ । सुपिस्थइतिक : ॥

सत्पथम् । न॰ संवर्त्तिकायाम् ॥

सत्पथ : । पुं॰ अर्च्चितेऽध्वनि । सं

सामीप्यार्थ । सन्महदितितत्पुरुष : । समासान्तष्टच् ॥

सत्पुत्र : । पुं॰ सद्पत्ये ॥ सत्पुत्रेणातुजातेनयेयोपित्रिदिवंययौ । पुन्नाम्नोनरकात्त्रात : सतेनसुमहात्मना ॥

सत्पुरुष : । पुं॰ पूज्यमानपुरुषे ॥

सत्प्रतिग्रह : । पुं॰ साधुजनदत्तद्रव्यग्रहणे ॥ सद्भ्य : साधुभ्य : प्रतिग्रहोदानग्रहणम् । यथा । सप्तवित्तागमाधर्म्यादायोलाभ : क्रियोजय : । प्रयोग : कर्म्मयोगश्चसत्प्रतिग्रहएवचेतिमनु : ॥

सत्प्रतिपक्ष : । पुं॰ तुल्यब्यक्तौ । प्रतियोगिनि ॥ न्यायमते॰ साध्याभावसाधकं हेत्वन्तरं यस्यतस्मिन् ॥ यथा । शब्दोनित्य : श्रवणत्वात् शब्दवत् शब्दोऽनित्य: कार्य्यत्वात् घटवदिति ॥ यद्वा । ह्रदोवह्निमान्धूमात्॰ इत्यादौवह्न्यभावव्याप्यवद्भ्रदादिरिति ॥

सत्फल : । पुं॰ दाडिमवृक्षे ॥ शोभनफलवतिवृक्षे ॥

सत्सङ्ग : । पुं॰ साधुसङ्गमे । सधर्म्मवर्त्तिजनसमागमे । यथोक्तंकुलार्णवे । सत्सङ्गश्चविवेकश्चनिर्म्मलंनयनद्वयम् । यस्यनास्तिनर : सोन्ध : कथंनस्यादमार्गगइति ॥

सत्सार : । पुं॰ खादिरे । खदिरसा

रे । वचविशेषे ॥
सयुत्कारम् । न० अम्बूकृते ॥ युत्का रेणसहवस्त्रमाने ॥
सदंशक : । पुं० कर्कटे । कुलीरे ॥ त्रि० दंशयुक्ते ॥
सदंशवदन : । पुं० कङ्कपक्षिणि । रयालङ्कारणे । आमिषप्रिये ॥
सदञ्जनम् । न० कुसुमाञ्जने ॥
सदनम् । न० वस्ये । भवने । गृहे ॥ सीदत्यव । षद्लृ० । अधिकरणे ल्युट् ॥ तोये । जले ॥ ग्लानौ ॥ यथा । दौर्बल्यंसदनं कार्श्यं कुचिशूलमथारुचिमिति ॥
सदव्यय : । त्रि० विनाशापचयोपलचितसर्वविकारशून्ये । सं चासौ अव्ययश्चेतिकर्मधारय : ॥
सदश्व : । पुं० दान्ताश्वे ॥
सद : । स्त्री० न० सभायाम् ॥ सीदन्त्यस्याम् । षद्लृ० । असुन् ॥
सदसदात्मकम् । न० स्वरूपपररूपाभ्यांनिरूपणीयेसर्वस्मिन्जगति । जगद्धि द्व्यवहारदृष्ट्यासत् परमार्थदृष्ट्यैनासत् । ततस्वरूपम् ॥ सदसतीआत्मास्वरूपंयस्यतत् ॥
सदसद्भ्रामनिर्वचनीयम् । न० अज्ञानखोतकृष्टलक्षणे ॥ नैदमसदमवि०अज्ञानखसत्वे चिदात्मवद्वाधाभावप्रसङ्गात् । असत्वेच०वन्ध्यासुतादिवदपरोक्षप्रतिभासानुपपत्ते : बाध्यप्रतीत्योश्चाज्ञानेप्रसिद्धत्वाद्यतांतस्यानिर्वचनीयत्वम् ॥
सदसद्योनि : । स्त्री० धर्माधर्ममिश्रस्वाद्ब्राह्मणादिमनुष्येषु ॥ तेषुहिराजसंमिश्रंफलंभुज्यते ॥ सदसतोर्योनि : ॥
सदसद्वादी । पुं० अकलङ्कवितयप्रभृतिषु० अर्हत्सु ॥
सदसद्विकारम् । न० जगति ॥ सत् आकाशवायुरूपममूर्तंभूतद्वयम्० असत् तेजोजलभूमिरूपंमूर्तंभूतत्रयम् । तयोर्विकारं तत्परिणामरूपंयत्तत् ॥
सदस्पति : । पुं० सभाधिपतौ ॥ सदस : पति : ॥
सदस्य : । पुं० विधिदर्शिनि । सभायामन्यूनाधिकविचारके० ऋत्विग्विशेषे ॥ सदसिसाधु : । तवसाधुरितियत् ॥ सभ्ये ॥ सदसियज्ञसभायामृत्विग्भ्योऽन्ये मिलितायेब्राह्मणास्तेसदस्या : ॥
सदा । अ० सर्वकाले । सर्वदार्थे ॥ सर्वस्मिन्काले सर्वकान्यकिंयत्द : कालेदा । सर्वस्सोन्यतरस्यांदि ॥
सदाकार : । पुं० आत्मनि ॥ अस्तीत्येतन्मात्रव्यवहारकारणभूतआकारोयस्यस : ॥
सदागति : । पुं० वाते । वायौ ॥

सदागतिरस्य ॥ साक्षि ॥ निर्वाणे ॥ सदीश्वरे ॥ सूर्य्ये ॥

सदाचार : । पुं॰ प्रात : कृत्यादि नियमाचरणेनसाधुव्यवहारे । शिष्टाचारे ॥ यथमनु : । तस्मिन् देशेयआचार : पारम्पर्यक्रमागत : वर्णानांसान्तरालानांससदाचारउच्यते ॥ तस्मिन्देशे॰ ब्रह्मावर्तदेशे ॥ सतामाचार : ॥ सदाचार वतापुंसाजितौलोकावुभावपि । विशेष: कालिकापुराणादौ द्रष्टव्य : ॥ त्रि॰ तद्वति ॥

सदाचारवान् । त्रि॰ सदाचारविशिष्टे । सदाचारिणि ॥

सदातन : । पुं॰ विष्णौ ॥ त्रि॰ नित्ये ॥ सदाभव : । सायञ्चिरमित्यादिना॰ ट्युट्युलौतुट्च ॥

सदातोया । स्त्री॰ एलापर्ण्याम् ॥ सदानीरायांसरिति ॥

सदादान : । पुं॰ श्वेतमातङ्गे । ऐरावते । हेरम्बे । लम्बोदरे ॥ गन्धहस्तिनि । मत्तगजे ॥ न॰ नित्यदाने ॥ त्रि॰ सर्वदादानशीले ॥ सदादानंयस्य ॥

सदाम : । पुं॰ समदे ॥

सदानन : । त्रि॰ शोभनवदने । सतृष्णाननंयस्य ॥

सदानन्द : । पुं॰ सदाशिवे ॥ सदा आनन्द : सन्॰ सर्वदास्थायीवा आनन्दोयस्य । सत : साधूनत्यानन्दयतीतितथा ॥ त्रि॰ सततसुखादयुक्ते ॥ यथा । ममानन्दे सदानन्द : सदानन्दोभविष्यति । ममानंदेनिरानन्दोनिरानन्दोभविष्यतीतिपुराणे भगवतीवाक्यम् ॥

सदानर्त्त : । पुं॰ खञ्जनखगे ॥

सदानीरवहा । स्त्री॰ करतोयायाम् ॥

सदानीरा । स्त्री॰ करतोयायांसरिति ॥ गौरीविवाहसमये॰ शङ्करकरगलितसम्प्रदानतोयप्रभवत्वात्॰ सदानीरंयस्या: परमपावनत्वात् । तथाचास्मृति : । प्रथमेकर्कटे देवीत्र्यहंगङ्गारजस्वला । सर्वारक्तवहानद्य:करतोयाम्बुवाहिनीति ॥

सदापुष्प : । पुं॰ नारिकेलवृक्षे ॥ श्वेतार्के ॥ न॰ कुन्दे । माध्ये ॥

सदापुष्पी । स्त्री॰ रक्तार्के । आदित्यपुष्पिकायाम् ॥

सदाप्रद : । त्रि॰ सततदातरि ॥

सदाप्रसून : । पुं॰ अर्कवृक्षे ॥ रोहितके ॥ कुन्दवृक्षे ॥

सदाफल : । पुं॰ स्कन्धफले ॥ उदुम्बरे । नारिकेले ॥ बिल्वे ॥ सदाफलानियस्मिन् ॥

सदाफला । स्त्री॰ विसन्धिपुष्पवृक्षे ॥ वार्त्ताकुविशेषे । सदाबेङ्गन॰ इ॰ भा॰ ॥ सदाफलानिदीयन्ते

रक्तपित्तप्रसादनी । कण्डूकच्छूह रीचैव० वार्ताकीगुणवत्तरेतिराज वल्लभः ॥

सदाभद्रा । स्त्री० गम्भार्याम् । भद्र पर्ण्याम् ॥

सदामुदितम् । न० दानपदवाच्या यांपञ्चम्यांसिद्धौ ॥ त्रि० सर्वदा हृष्टे ॥

सदायोगः । पुं० स्वस्वरूपाविर्भावे ॥

सदायोगी । पुं० विष्णौ ॥ शिवे ॥ सदाविर्भूतस्वरूपे ॥ सदायोगो स्त्यस्य । इनिः ॥ अन्येषांचित्त वृत्तिनिरोधरूपयोगश्चात्स्वरूपा- विर्भावः । ईश्वरस्यतुस्वरूपानाव रणात्स्वरूपयाथात्म्याविर्भावः सर्वदास्तीत्यर्थः ॥

सदाशयः । त्रि० साधुभिप्राये ॥ सत्आशयोयस्य ॥

सदाशिवः । पुं० महादेवे । शम्भौ ॥ सदासर्वदा० शिवंकल्याणंय स्य० यस्माद्वा ॥

सदृक्षः । त्रि० सदृशे ॥ समानमात्म नापश्यति० समानइवपश्यतिवा । दृशिर्प्रेक्षणे । त्यदादिष्वित्यच० क्सोपिवाच्यइतिक्सः । दृक्षेचेति समानस्यसादेशः । रूढिरियंना वयवार्थोग्राह्यः ॥

सदृक् । त्रि० सदृशे ॥ समानमा त्मनापश्यति० समानइवपश्यति वा । दृशिर्० । त्यदादिष्विति० क्विन् । दृग्दृशवतुष्वितिसभावः रूढिशब्दोयमितिनावदर्शनक्रिया पेक्षास्ति ॥

सदृशः । त्रि० तुल्ये । समे । सदृशि ॥ समानमात्मना० समानइववाप श्यति । दृशिर्० । त्यदादिष्वि तिकञ् । दृग्दृशवतुष्वितिसभा वः । रूढिरियमितिनावदर्शनक्रि यापेक्षास्ति ॥ उचिते ॥

सदृशस्पन्दनमस्य । न० निष्पन्दे ॥

सदेशः । त्रि० निकटे ॥ देशान्विते ॥ समानोदेशोस्य ॥

सद्गतिः । पुं० ईश्वरे ॥ सन्ति ब्रह्मवादिनः सन्तः० तैर्गम्यते प्राप्यतेइतितथा ॥ स्त्री० शोभन गतौ ॥ [illegible] ॥ स तोगतिर्बुद्धिरस्य ॥ सतामस्तिब्र ह्मेतिविदुषांगतिः प्राप्यंस्थानंस द्गतिः ॥

सद्गुरुः । पुं० कौले ॥ यथोक्तंमहा निर्वाणे । शाक्तःशाक्तोगुरुःश स्तः शैवेशैवोगुरुर्मतः । वैष्णवे वैष्णवः सौरेसौरोगुरुरुदाहृतः ॥ गाणपेगाणपश्चैवकौलःसर्वत्रसद्गु रुः । अतःसर्वात्मनाधीमान्कौ लाद्दीक्षांसमाचरेदिति ॥

सद्भावः । पुं० अविद्यमानत्वशङ्कायां विद्यमानत्वे । सतः सन्भावस्यो

भावोधर्म्म : सत्त्वप्रमेयत्वादिस्तस्मिन् ॥ अस्तित्वे । देवदत्तस्यपुत्रादिकमस्तीत्यस्मिन्नर्थे ॥

सद्भूत : । त्रि॰ सत्ये ॥

सद्म । न॰ वेश्मनि । निकेतने । गृहे ॥ तोये । पानीये । नीरे ॥ सीदन्त्यत्र । षद्लृविशरणगत्यवसादनेषु : मनिन् ॥

सद्य : कृतम् । न॰ नामनि ॥ त्रि॰ तत्कालकृते ॥

सद्य : प्राणकर: । त्रि॰ तत्क्षणात्बलकारकद्रव्यादौ ॥ यथा । सद्योमांसं नवान्नञ्चबालास्त्रीक्षीरभोजनम् । घृतमुष्णोदकञ्चैवसद्य : प्राणकराणिषट् ॥

सद्य : प्राणहर : । त्रि॰ तत्क्षणात्बलायुषोर्नाशकद्रव्यादौ ॥ यथा । शुष्कंमांसं स्त्रियोवृद्धाबालार्कस्तरुणंदधि । प्रभातेमैथुनं निद्रासद्य: प्राणहराणिषट् ॥

सद्य:शुद्धि: । स्त्री॰ सद्य : शौचे ॥ यथा । देशान्तरमृतेबालेसद्य : शुद्धिर्यतोमृते ॥ इ॰ गारुडे १०७ अध्याय : ॥

सद्य : शोथा । स्त्री॰ कपिकच्छ्वाम् ॥

सद्य : शौच : । पुं॰ कार्व्वादिषु ॥ ते यथा । कारव : शिल्पिनोवैद्या : दासीदासस्तथैवच । राजानोराजभृत्याश्चसद्य : शौचा : प्रकीर्त्तिताः ॥ शिशोर्गरुडकूर्म्मपुराणशुद्धिविवेकादौद्रष्टव्य : ॥

सद्य : । अ॰ तत्क्षणे । सपद्येत्यर्थे । समानेऽहनि॰इत्यस्मिन्नर्थे॰सद्य: परुत्परार्य्यैषमइत्यादिनासमानस्यसभावोऽद्यस्चाहनिनिपात्यते ॥ यथा । सद्योबलहरानारीसद्योबलकरंपय: । स्त्रियंगच्छेत्पय:पीत्वातास्वल्पकापुमान् : पिबेदिति ॥

सदास्क : । त्रि॰ नवीने । नूतने ॥

सद्योजात : । पुं॰ शिवे ॥ मत्स्ये ॥ त्रि॰ तत्क्षणोत्पन्ने ॥

सद्योनि : । पुं॰ देवे । सुरे ॥ सात्त्विकीऽफलभुजि ॥ सतोयोनि: ॥

सद्योभावी । पुं॰ तर्णके । गोवत्से ॥ त्रि॰ तत्क्षणभवनयोग्ये ।

सद्रूप : । त्रि॰ अशाध्यस्वरूपे । सर्वदास्थायिस्वरूपे ॥ सत्सदास्थायीरूपंयस्य ॥

सद्वक्ता । पुं॰ सत्कथके । सद्वा:सौवक्ताच ॥

सद्वृत्तम् । न॰ सच्चरित्रे । साधुस्वभावे ॥ त्रि॰ तद्युक्ते ॥ यथा । नासमञ्जसशीलैस्तुसहासीतकदाचन । सद्वृत्तसंनिकर्षोहिक्षणार्द्धमपिशस्यते ॥

सद्वृत्ति : । स्त्री॰ शास्त्राविरुद्धजीवने ॥ प्रमाणान्तरशाधायेयायांब्रह्माकारायांवृत्तौ ॥ सतीचासौवृत्तिश्च

सतिसर्व्वदास्मायिनिवर्त्तिर्वा ॥

सद्वृत्तिभाक् । त्रि॰ सद्वृत्तिविशिष्टे ॥ यथा । पथ्याशिनां शीलवतां नराणां सद्वृत्तिभाजां विजितेन्द्रियाणाम् । एवंविधानामिदमायुरर्चिन्त्यं सदात्रद्धर्म्मुनिप्रसाद: ॥

सधर्म्मचारिणी । स्त्री॰ गृहिण्याम् ॥

सधर्म्मा । त्रि॰ तुल्ये ॥ समानोधर्म्मो यस्य स: ॥ धर्म्मादनिच् केवलात् ॥

सधर्म्मिणी । स्त्री॰ समानधर्म्मवत्याम् भार्य्यायाम् । पत्न्याम् ॥ सहधर्म्मोऽस्त्यस्या: । कर्म्मसु पत्न्या सहाधिकारात् । धर्म्मशीलवर्णान्ताच्चेति॰ इनि: । वोपसर्ज्जनस्येति स: ॥

सधर्म्मी । त्रि॰ समानधर्म्मचारिणि ॥

सधवा । स्त्री॰ पतिवत्याम् ॥

सधि: । पुं॰ अग्नौ ॥ सहधारणे । सहस्थितौ ॥ धानं धि: । सह धि: सधि: ॥

सध्रि: । पुं॰ वृषभे ॥ सहते । षह॰ । सहेर्धश्चेतीसन् ॥

सध्रीची । स्त्री॰ सख्याम् ॥

सध्रीचीन: । त्रि॰ समीचीने ॥ विभाषाञ्चेरदिक्स्त्रियामिति॰ ख: । सहस्य सध्रि: ॥

सध्र्यङ् । त्रि॰ सहचरे । सहगच्छति । सहाञ्चति । ऋत्विगादिनाक्विन् । सहस्य सध्रि: । अनिदितामिति नलोप: ॥

सन: । पुं॰ घण्टापाटलिवृक्षे ॥ पुं॰ क्ली॰ हस्तिकर्णास्फालने ॥ दाने । सनोतिषणुदाने । प॰ अच् ॥ त्रि॰ चखण्डिते ॥

सनक: । पुं॰ विष्णो: पारिषदभेदे । ब्रह्मण: सुते । मुनिविशेषे ॥

सनत् । अ॰ नित्यार्थे ॥

सनत् । पुं॰ ब्रह्मणि । द्रुहिणे ॥

सनत्कुमार: । पुं॰ वैद्यकसंहिताप्रणेतरि ब्रह्मण: पुत्रे । वेधसे ॥ सनत् नित्यं कुमार: ॥ यद्वा । सनत् ब्रह्मा तस्य कुमारोऽपत्यम् ॥ तत्र भक्तारणमुक्तं हरिवंशे । यथोत्पन्नस्तथैवाहं कुमार इति विद्धि माम । तस्मात् सनत्कुमारेति नामप्रतिष्ठितम् । इति । जिनानां द्वादशसार्वभौमान्तर्गतसार्वभौमविशेषे ॥ न॰ उपपुराणविशेषे ॥

सनन्द: । पुं॰ सनन्दने । ब्रह्मण: पुत्रे । स यथा । सनकश्च सनन्दश्च सनातनमथात्मभू: । सनत्कुमारश्च मुनीन् निष्क्रियान् ऊर्द्ध्वरेतस: ॥ असृजद्दितसम्बन्ध: ॥

सनन्दन: । पुं॰ ब्रह्मणश्चतुर्थपुत्रे ॥ यथा । धर्म्मस्य भार्य्याऽहिंसाख्या तस्यां पुत्रचतुष्टयम् । सम्प्राप्तं मुनिशार्दूल योगशास्त्रविचारकम् ॥ ज्येष्ठ: सनत्कुमारोऽभूत् द्वितीयश्च सनातन: । तृतीय: सन

कोमामचतुर्थखसनन्दनइति ॥ सनत्कुमारे ॥

सनपर्णी । स्त्री० असनपर्ण्याम् ।

सना । अ० नित्ये ॥ सनति । षणसम्भक्तौ । आप्रत्ययः ।

सनाखल: । पुं० सनखले ॥ यथा । महेन्द्रभीमविमलकुरुक्षेत्रगयाः खलाः । सनापदोत्तराः साहश्चाः सनखलाः खग ।

सनात् । अ० नित्यार्थे ।

सनातन: । पुं० अच्युते । विष्णौ ॥ शिवे ॥ अजे । वेधसि ॥ पितृणामतिथौ ॥ दिव्यमनुष्ये । ब्रह्मणः पुत्रे । मुनिविशेषे ॥ परम्पराप्राप्ते० उपाधिपरिच्छेदेपिवस्तुतः परमात्मस्वरूपत्वान्नित्ये० आत्मज्ञानंविनाछेत्तुमशक्येसंसारवृक्षे ॥ वि० स्थिरे । मुनिस्थजे । सर्वदैकरूपे । अविनाशिनि । ध्रुवे ॥ सनाभव: । सायञ्चिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौतुट्‌च् ॥ अनादिपरम्परागते । चिरन्तने ॥

सनातनी । स्त्री० लक्ष्म्याम् ॥ सरस्वत्याम् ॥ दुर्गायाम् । भवान्याम् ॥ निर्वचनन्तु । सर्वकालेसनाप्रोक्ता विद्यमानेतनोतिच । सर्वत्रसर्वकालेषुविद्यमानासनातनीति ॥ अपिच । नित्यवस्तुनित्यस्वभावस्यसनातनः । सदानित्यानिर्गुणायाकीर्तितासासनातनीति ॥ टित्वान्ङीप् ॥

सनात्कुमार: । पुं० ब्रह्मणः पुत्रे० सनत्कुमारे ॥ सनात्० नित्यंकुमारः ॥

सनाथ: । त्रि० सस्वामिके । नाथवति ॥

सनाथा । सनाथिका । स्त्री० पतिवत्याम् । जीवद्भर्तृकायाम् ॥

सनाभ: । पुं० सोदरेभ्रातरि ॥

सनाभि: । पुं० ज्ञातौ । सपिण्डे ॥ सहोदरे । समानोनाभिर्मूलपुरुषोऽस्य । ज्योतिर्जनपदेतिसमानस्य स: ॥ वि० तुल्ये । सदृशे ॥

सनामक: । पुं० शोभाञ्जने ॥ वि० समाननामवति ॥

सनि: । स्त्री० भक्तौ । दाने ॥ सनोति । षणुदाने । खनिकष्यज्यादिना० इन् ॥ सननं वा ॥ अध्येषणायाम् । गुर्वादिप्रार्थनयाक्वचिदर्थेनियोजने ॥ यथा । हेस्वामिन्ममाभिषेकं कुरु । अपिच । त्वाढिनायकुलाचारनलिनीकुलवल्लभ । त्वत्पादाम्भोरुहच्छायांदेहिमूर्ध्नि कृपानिधे० इति ॥

सनित: । त्रि० प्रतिपन्ने ॥

सनिष्ठीवम् । न० सनिष्ठीवमवचसि । सनिष्ठीवे । निष्ठीवनम् । ष्ठिवुनिरसने । घञ् । लघूपधगुण: । ष्ट

षाद्रादित्वादीकार : । सहनिष्ठीवेन० सन्नेष्मकणादिनिर्गमनेनवर्त्ततेइतिसनिष्ठीवम् ॥ त्रि० तद्वति ॥
सनिष्ठेवम् । न० सश्लेष्मवचसि । अव्यक्तोक्तौ ॥ निष्ठेवनम्० निष्ठेव : । ष्ठिवु० । घञ् । लघूपधगुण : । सहनिष्ठेवेनश्लेष्मकणादिनिर्गमनेनवर्त्ततइतिसनिष्ठेवम् ॥ अव्यक्तंसनिष्ठेवमित्यमर : ॥ त्रि० तद्वति ॥
सनी । स्त्री० सनिशब्दार्थे ॥
सनीड : । त्रि० निकटे । समीपे । उपकण्ठे ॥ समानंनीडंवासस्थानमस्य । सहनीडमेतिवा ॥
सनुतर् । अ० अन्तर्द्धाने ॥
सन्तत : । पुं० ज्वरविशेषे ॥ तल्लक्षणंयथा । सप्ताहंवाद्शाहंवाद्वादशाहमथापिवा । सन्तत्यायोऽविसर्गीस्यात्सन्तत : सनिगद्यतइति ॥ विकल्पोवातिकादिभेदात् । सन्तत्यानैरन्तर्येण । अविसर्गीअपरित्यागी ॥ न० सततं ॥ त्रि० तद्वति ॥ व्याप्ते ॥ विस्तीर्णे ॥ सन्तन्यतेस्म । तनु० । क्त : । अनुदात्तोपदेशेतिनलोप : । समोवाहिततततयोरितिपक्षेमलोपाभाव : ॥
सन्ततम् । अ० सातत्ये ॥
सन्तताभ्यास : । पुं० स्वाध्याये ॥
सन्तति : । स्त्री० गोत्रे । अभिजने । सन्ताने ॥ पङ्क्तौ । पुत्रपौत्रादौ । पारम्पर्ये ॥ विस्तारे ॥ तनये ॥ दुहितरि ॥ सन्तन्यते । तनोतेश्चिर्यांक्तिन् । पारम्पर्ये ॥
सन्ताप : त्रि० अध्वगमनादिनाश्रान्ते । तत्पर्यायायथा । सन्तापितस्तुसन्तप्तोधूपितधूपायितौचदूनश्चेति ॥ सन्तप्यतेस्म । तपसन्तापे । क्त : । अकर्मकत्वात्कर्त्तरिवाक्त : ॥ परमोद्विग्ने ॥ अग्निजतापयुक्ते ॥
सन्तमसम् । न० विष्वग्ध्वान्ते । व्यापकान्धकारे ॥ समन्तात्सर्वत : ० तम : । अवसमन्धेभ्यस्तमसइत्यच् ॥
सन्तरणम् । न० तरणे । पारगमने । प्लवनपूर्वकदेशान्तरगमने ॥
सन्तर्हनम् । न० दृढसंश्लेषे ॥
सन्तर्पणम् । न० प्रीणने । तृप्तौ ॥ द्राक्षादाडिमखर्जूरीकदलीशर्करालाजाचूर्णमध्वाज्यसम्मिलिते ॥ त्रि० तृप्तिकारके ।
सन्तर्प्पित : त्रि० सम्यक्प्रीणिते
सन्तान : पुं० सन्ततौ । विस्तारे ॥ गोत्रे । वंशे । अन्ववाये ॥ अपत्ये ॥ सन्तन्यते । तनुविस्तारे ॥ घञ् ॥ सुरद्रुमे । कल्पवृक्षे ॥ सम्यक्तनोतिपुष्पाणिस्वलितीति स्तं०तनोतेरुपसङ्ख्यानात् : ॥ सम्यक्तन्यन्तेपुष्पाण्यस्मिन्नित्यधि

कारणे इवर्षे तिघञ् वा ॥

सन्तानिका । स्त्री॰ मर्कटजालके ॥ छुरिकाफले । फेने ॥ क्षीरादिसारे । मलाइ॰ इ॰ भा॰ ॥ सन्तानिकागुरुः शीतावृष्यापित्तास्त्रवातनुत् । तर्पणीवृंहणीस्निग्धावलासवलशुक्रदा ॥

सन्तापः । पुं॰ अग्निजतापे । सञ्ज्वरे ॥ सन्तापयति । तपसन्तापे । णिच्‌ तः । पचाद्यच्‌ ॥ सम्यगुत्तापे । शौष्ये ॥

सन्तापनः । पुं॰ स्मरशरगविशेषे ॥ त्रि॰ सम्यक्‌तापकारके ॥

सन्तापितः । त्रि॰ अध्वादिनाश्रान्ते । सन्तप्ते ॥ सन्ताप्यतेस्म । तपदाहेचुरादिः । क्तः । अकर्मकत्वात्‌ कर्त्तरिवाक्तः ॥

सन्तारः । पुं॰ सन्तरणे ॥

सन्तिः । स्त्री॰ दाने ॥ अवसाने ॥ पुं॰ भृत्ये ॥

सन्तुष्टः । त्रि॰ उत्पन्नालम्प्रत्यये । निवृत्तस्पृहे । सन्तोषयुक्ते । यथा । अप्राप्तेऽपिरित्यज्यसम्प्राप्तेसमतांगतः । अदृष्टखेदाखेदोयः सन्तुष्टइतिकथ्यतइति ॥ असन्तुष्टाद्विजानष्टाः सन्तुष्टाश्चमहीभुजः । सलज्जागणिकानष्टानिर्लज्जाश्चकुलाङ्गना ॥ पुं॰ अश्वखरणी । खच्चरइ॰ भा॰ प्रसिद्ध ॥

सन्तृप्तः । त्रि॰ विद्धे । व्याप्ते ॥

सन्तोषः । पुं॰ विद्यमानभोगोपकरणादधिकस्यानुपादित्सारूपायांचित्तवृत्तौ । मानमने । यदृच्छालाभसन्तुष्टौमलाभेचाविषादे । अलम्बुद्धौ । यथासम्भवभृत्यात्मवान्धवाद्यधारणावश्यकपञ्चयज्ञाद्यनुष्ठानमात्रोचितधनानधिकायांस्पृहायाम्‌ ॥ सन्तोषामृततृप्तानांयत्सुखंशान्तचेतसाम्‌ । कुतस्तद्धनलुब्धानामितश्चेतश्चधावताम्‌ ॥ धृतौ । स्वास्थ्ये ॥

सन्त्रासः । पुं॰ साध्वसे । भये ॥

सन्दंशः । पुं॰ कङ्कमुखे । संदशतीति ध्यालेलोहयन्त्रविशेषे । एकाङ्गानुवादेनविधीयमानयोरप्यङ्गयोरन्तरालेविहितत्वंसन्दंशः ॥ नरकविशेषे ॥

सन्दंशिका । स्त्री॰ सुचुल्याम्‌ ॥ लौहयन्त्रविशेषे । कातारि॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

सन्दर्भः । पुं॰ प्रबन्धे । रचनायाम्‌ । ग्रन्थने ॥ प्रकरणे ॥

सन्दर्शनम्‌ । न॰ साक्षात्कारे । संदृश्यते । दृशिर्‌॰ । ल्युट्‌ ॥ सम्यक्प्रकारेणदर्शनंवा ॥

सन्दष्टः । त्रि॰ सम्यक्प्रकारेणदष्टे

सन्दानम्‌ । न॰ दामनि । देहमकालेपादबन्धनरज्जौ ॥ सन्दीयते

सम्पूर्वाद्दाण्बन्धनइत्यस्मात्ल्युट् ॥ पुं॰ गजस्याष्ठीवतोऽधोभागे ॥

सन्दानिका । स्त्री॰ अरिखदिरे । विट्खदिरे ॥

सन्दानित: । त्रि॰ बद्धे ॥ सन्दान्यतेस्म ॥ दामखण्डने । क्त: ॥

सन्दानिनी । स्त्री॰ गोगृहे ॥

सन्द्राव: । पुं॰ पलायने । प्रद्रावे ॥ सन्द्रवणम् । द्रुगतौ । समियुद्रुदुवइतिघञ् ॥

सन्द्राह: । पुं॰ मुखतात्वोष्ठदाहे ॥

सन्दिग्ध: । त्रि॰ संशयग्रस्ते । संशययुक्ते ॥ सन्दिह्यतेस्म । दिह॰ । क्त: ॥

सन्दिग्धमति: । त्रि॰ सन्देहविषयीभूतबुद्धियुक्ते ॥

सन्दिग्धार्थ: । पुं॰ सन्देहविषयीभूतार्थे ॥ त्रि॰ तद्विशिष्टे ॥

सन्दित: । त्रि॰ बद्धे । अस्यपर्याया: । बद्धसन्दानितंमूतमुद्दितंसन्दितंसितमिति ॥ सन्दीयतेस्म । दो अवखण्डने । क्त: ॥ सन्द्यतेस्म॰ षा ॥ ग्रथिते ॥

सन्दिष्टम् । न॰ वार्त्तायाम् । सन्देशे ॥ त्रि॰ व्याहृते । उक्ते । कथिते ॥

सन्दिष्टार्थ: । त्रि॰ सन्देशहरे ॥ ह॰ कश्चित् ॥

संदिहान: । त्रि॰ सांशयिके ॥ यथा । सन्दिहान: सांशयिक: संशयापन्नमानस: ॥

सन्दिह्यमान: । त्रि॰ संशयविषयीभूते । सांशयिके ॥

सन्दी । स्त्री॰ खट्वायाम् ॥ निषद्याखट्विकासन्दीतित्रिकाण्डशेष: ॥

सन्दीप्त: । त्रि॰ प्रज्वलिते । जलउठा॰ इ॰ भा॰ ॥ यथायावत्तिष्ठतिदेहोऽयंतावत्तत्त्वंसमभ्यसेत् । सन्दीप्तेभवनेकोनुकूपंखनतिपार्वति ॥ सन्दीप्यतेस्म । दीपीदीप्तौ । क्त: । ईदित्वान्नेट् ॥

सन्दीप्य: । पुं॰ मयूरशिखावृक्षे ॥

सन्दृश: । त्रि॰ सन्दर्शनविषये ॥ नसन्दृशेतिष्ठतिरूपमस्य ॥

सन्देश: । पुं॰ संवादे । संदेसा॰ इ॰ भा॰ ॥ घोटकस्यद्वयोरपिद्रष्टापास्योर्मध्यवर्त्तिनौद्वौद्वौदन्तौ सन्देशावुच्येते ॥ सन्दिश्यते । दिश॰ । हलश्चेतिघञ् ॥

सन्देशवाक् । स्त्री॰ वाचिके । परेणोक्तार्थस्यपरम्प्रत्युक्तौ ॥ सन्दिश्यतेइतिसंदेश: । संदेशार्थ: । तस्यवाक् ॥ सन्दिष्टोर्थोययोच्यते सा ॥

सन्देशहर: । पुं॰ दूते ॥ संदेशंवाचिकंहरति । हृञ्॰ । हरतेरनुद्यमनेऽच् ॥

संदेशहारकः । पुं॰ दूते ॥ संदेशहारकः ॥

सन्देहः । पुं॰ विचिकित्सायाम् । संशये । हृदयशङ्कौ । यथा । व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति ; न हि संदेहमात्रादलक्षणता भवति । पुनः प्रमाणान्तरेण निश्चयोत्पादादिति ।

संदेहनम् । दिहउपचये । भावेघञ् । देहमध्यभागे ॥ सन्दिह्यते॰ उपचीयते इतिवा । पृथिव्यादिभूतैरुपचितेशरीरे । अलङ्कारविशेषे । यथा । विषयोविषयीयत्रसादृश्यात्कविसम्मतात् । संदेहगोचरीस्यात्संदेहालङ्कृतिस्त्विति ॥

सन्दोहः । पुं॰ निकरे । समूहे ॥ सन्दुह्यते । दुहप्रपूरणे । घञ् ॥

सन्द्रावः । पुं॰ पलायने । अस्यपर्यायायथा । प्रद्रावोद्रावसन्द्रावसन्दावाविद्रवोद्रवः । अपक्रमोपयानम्चेति ॥ सन्द्रवणम् । द्रुगतौ । समियुद्रुदुवइतिघञ् ॥

सन्धा । स्त्री॰ स्थितौ ॥ प्रतिज्ञायाम् ॥ सन्धाने ॥ सन्धानम्॰ अवधा । डुधाञ्॰ । आतश्चोपसर्गइत्यङ् ॥

सन्धाता । पुं॰ शिवरो ॥ कर्मफलैः पुरुषान्सन्दधाति । डुधाञ्॰ । तृच् । सम्यक्संयोजयतिकर्मफलैः पुरुषान्वा । त्रि॰ सन्धानकर्त्तरि ॥

सन्धानम् । न॰ अभिषवे । सुराकरणे । सुरोत्पत्तिप्रकारे । मद्यसन्धान॰ इ॰ भा॰ ॥ सङ्घट्टने । शिथिलस्यवस्तुसयोजने । जोडजोडना॰ इ॰ भा॰ । सन्धीयते : डुधाञ्॰ । ल्युट् ॥ काञ्जिके ॥ मदिरायाम् ॥ अवदंशे ॥ सौराष्ट्रे ॥ धनुषिशरयोजने ॥ यथा । तदाशुकृतसन्धानंप्रतिसंहरसायकम् । आर्त्तत्राणायवः शस्त्रंनप्रहर्त्तुमनागसि ॥

सन्धानितः । त्रि॰ सन्धानविशिष्टे । सङ्घट्टिते ॥ कृतच ॥

सन्धानी । स्त्री॰ स्वर्णरूप्यान्यसद्मनि । कुप्यशालायाम् ॥ संधाने । संधिकायाम् ॥

संधार्य्यः । त्रि॰ अनुष्ठेये ॥

संधिः । पुं॰ राज्ञांषड्गुणान्तर्गतगुणविशेषे । स्वर्णादिदानेनवन्ध्वादिभिः प्रीत्युत्पादनाम्नैकरणे । पणबंधेनकार्य्ये । अरिविजिगीषोर्व्यवस्थाकरणरूपे॰ ऐक्यसंधौ ॥ उभयोर्मेलने ॥ यथा । अभीष्टदृष्टिंपरिज्ञायक्षयंस्वस्यनिरीक्ष्यच । स्वामिनेकथयेत्संधिंमन्त्रीहितकरप्रभो ॥ तथाचोक्तं रामा

यथेमाल्यवता । यथा । ततस्तु सु
महाप्राज्ञो माल्यवान्नाम राक्षसः ।
रावणस्य वचः श्रुत्वा मातुः पैता
महोऽब्रवीत् ॥ विद्यास्वभिविनी
तो यो राजा राजन्नयानुगः । स
शास्ति चिरमैश्वर्य्यमरींश्च कुरुते वशे
॥ सन्दधानो हि कालेन विगृह्णं
श्चारिभिः सह । स्वपक्षवर्द्धनं कुर्व्व
न् महदैश्वर्य्यमश्नुते ॥ हीयमा
नेन कर्त्तव्यो राज्ञा सन्धिः समेन
च । न शत्रुमवमन्येत ज्यायान् कु
र्व्वीत विग्रहम् ॥ अधिकबलस्तु शत्रुं
नावमन्येत नोपेक्षेत० किन्तु तेन
सह विग्रहं कुर्व्वीत । हीयमानः स
मश्च सन्धिं कुर्य्यादित्यर्थः ॥ तन्म
ह्यं रोचते सन्धिः सह रामेण रावण
। यदर्थमभियुक्ताः स्म सा च तस्मै
प्रदीयताम् ॥ तस्य देवर्षयः स
र्व्वे गन्धर्व्वाश्च जयैषिणः । विरोधं
मा गमस्तेन सन्धिस्तेन च रोच्यतामि
ति सन्धीयते पूर्व्वोत्तररूपेऽस्मिन्निति
सन्धिः संयोगे । ग्रन्थि । सन्धा
ने ॥ सन्धानम् । भावे कि: ॥
पर्व्वसन्धौ ॥ सन्धीयते दानादिना
ऽस्मिन् । डुधाञ्० । उपसर्गे
घोः किः ॥ सुरुङ्गायाम् ॥ भ
गे ॥ योनौ । सङ्घट्टने । एकप
र्य्यन्तजीविनां सङ्गे । सावकाशे ॥
रूपकाणां मुखाद्यङ्गे । नाट्याङ्गे ॥

यथा । मुखं प्रतिमुखं गर्भोऽवमर्शोउ
पसंहृतिरिति सन्धयः ॥ इति भेदे ॥
व्याकरणे तु० वर्णद्वयमेलने । सं
हितायाम् ॥ तल्लक्षणम् यथा
अर्द्धमात्रोच्चारणकालेनाव्यवहितयो
र्वर्णयोर्द्रुततरोच्चारणं सन्धिरिति ।
सन्धिविधायकसूत्रविहितकार्य्ये वा ॥

सन्धिका । स्त्री० अभिषवे । मद्यस
न्धाने ॥

सन्धिचौरः । पुं० चौरविशेषे । कु
म्भिले । हारके ॥

सन्धिजा । स्त्री० पुष्पविशेषवृक्षे ॥
त्रिसन्धौ ॥

सन्धिजीवकः । त्रि० कुसृत्याविभवा
न्वेषिणि । पार्श्वके ॥

सन्धितः । त्रि० संधियुक्ते मिलिते ॥

सन्धित्सुः । त्रि० सन्धातुमिच्छौ ।
दधातेः सन्नन्तादुप्रत्ययः ॥

सन्धिनालः । पुं सुगंधिद्रव्यविशेषे ।
नखे । शङ्खे ॥

सन्धिनी । स्त्री० कृतमैथुनायां गवि
। वृषभाक्रान्तायाम् ॥ अकालदु
ग्धीस्तायाम् । दोहकालेऽस्याः ।
ब्रीह्यादित्वादिनिः । अवश्यं सन्ध
त्ते वा । आवश्यके णिनि

सन्धिपूजा । स्त्री० शारदीयमहापू
जाङ्गतत्तृतीयपूजायाम् ॥ यथा
। अष्टमीनवमीसन्धौ तृतीया खलु कथ्य
ते । तत्र पूज्या त्वहं पुत्र योगिनीग

असंयुता ॥ अपिच । अष्टम्यांसं धिवेगेसकलपरिजनैः पूजयेत्स त्वभावैरिति ॥
संधिबंधः । पुं० भूमिचम्पके ॥
संधिबंधनम् । न० शिरायाम् ॥
संधिला । स्त्री० सुरङ्गायाम् । गूढमार्गे । सुरङ्ग० इ० भा० प्र० ॥ नद्याम् ॥ मन्दिरे । शोकसि ॥
संधिवल्ली । स्त्री० चिसन्धिपुष्पे ॥
संधिवेला । स्त्री० कालविशेषे । अहोरात्राद्रिमेलनकालरूपे ॥
संधिहारकः । पुं० कुम्भिले । संधिचौरे ॥
संधुक्षिकः । त्रि० प्रदीप्ते ॥
सन्ध्यम् । न० स्वप्नस्थाने ॥ संध्यं स्वप्नस्थानमितिवेदेदर्शनात् ॥
सन्ध्या । स्त्री० पितृप्रसूम् ॥ नदीविशेषे ॥ युगसन्धौ ॥ चिन्तायाम् संश्रवे ॥ सीम्नि ॥ संधाने ॥ कुसुमान्तरे ॥ दुर्गायाम् ॥ अहोरात्रसंधौ ॥ यथा । अहोरात्रस्ययः संधिः सूर्यनक्षत्रवर्जितः । सा तुसंध्यासमाख्याताऋषिभिस्तत्वदर्शिभिरिति ॥ कालभार्यायाम् । यथाकालस्यतिस्रोभार्याश्चसंध्यारात्रिदिनानिच । याभिर्विनाविधाताचसङ्ख्यांकर्तुंनशक्यतइति ॥ संध्यारात्रिवहिनानामपिकालाधीनत्वात्स्त्रीसदृशत्वात्स्त्रीत्वम् ॥ प्रातर्मध्याह्नसायाह्नरूपकालविशेषे ॥ त्रिकालविहितकर्मविशेषे ॥ अतोऽस्मन्हानिर्वाणतन्त्रे । संध्यात्वैकालिकीकार्यावैदिकीतान्त्रिकीक्रमात् । उपासनायाभेदेनपूजांकुर्याद्यथाविधि ॥ ब्रह्ममन्त्रोपासकानांगायत्रींजपनात्प्रिये । ध्यानाद्ब्रह्मेतितद्वाच्यंसंध्याभवतिवैदिकी ॥ अन्यांवैदिकीसंध्यासूर्योपस्थानपूर्वकम् । अर्घ्यदानंदिनेशायगायत्रीजपनंतथा ॥ अष्टोत्तरसहस्रंवाशतंवादशधापिवा । जपान्तेनियमोभद्रेसर्वताह्निककर्मणि ॥ शूद्रसामान्यजातीनामधिकारोस्तिकेवलम् । आगमोक्तविधौदेविसर्वसिद्धिस्ततोभवेत् ॥ प्रातःसूर्योदयःकाले मध्याह्नस्तदनन्तरम् । सायंसूर्यास्तसमयस्त्रिकालानामयंक्रमः । इति ॥ तत्काले० उपास्या० अपिदेवता० संध्या । तथाचयाज्ञवल्क्यः । संधौसंध्यामुपासीत नास्तगेनोद्गतेरवाविति ॥ उपासनोपक्रममोहसंवर्तः । प्रातःसंध्यां सनक्षत्रामुपासीतयथाविधि । सादित्यांपश्चिमांसंध्यामर्द्धास्तमितभास्करामिति ॥ गायत्रीमभ्यसेत्तावद्यावदादित्यदर्शनमेतत्त्वनुदितहोमीतरविषयम् । सन्ध्याकर्मा॰

सानितुस्वयंहिमोविधीयतइतिदक्षो क्तेः ॥ मध्याह्नसन्ध्यायाअष्टम मुहूर्त्तकालमाहस्मृतिः । पूर्वा परेतथासन्ध्ये सवर्णं प्रकीर्त्तिते । समसूर्य्येपिमध्याह्नेमुहूर्त्तः सप्त मोपरीति ॥ विशेषमाहव्यासः गायत्रीनामपूर्वाह्णे० सावित्री मध्यमेदिने । सरस्वतीचसायाह्ने सैवसन्ध्यात्रिषुस्मृता प्रतिग्रहान्न दोषाच्चपातकादुपपातकात् । गा यत्रीप्रोच्यतेतस्मात्गायन्तंत्रायते यतः ॥ सवितृद्योतनात्सैवसावि त्रीपरिकीर्त्तिता । जगतः प्रसवि त्रीत्वाद्वाग्रूपत्वात्सरस्वतीति ॥ एतत्सन्ध्यात्रयंप्रोक्तंब्राह्मण्यंय द्धिष्ठितम् । यस्यनास्त्यादरस्तत्र नसब्राह्मणउच्यतइति । सन्ध्याही नोऽशुचिर्नित्यमनर्हः सर्वकर्म स्वितिचस्मृतिः । सन्ध्याहीनः शूद्रवद्व्यवहर्त्तव्यः । यथाहमनु । नतिष्ठतितुयः पूर्वांनोपास्ते यस्तु पश्चिमाम् । सशूद्रवद्बहिष्कार्यः स र्वस्माद्द्विजकर्मणइतिचमेनेवप्र त्यवायेनसन्ध्योपासनस्यनित्यतो क्ता । नित्यत्वेपिसर्वदापेक्षितपाप क्षयस्यफलत्वमविरुद्धमितिकुल्लूक भट्टोगौडः । अत्रशातातपः । अ नभ्याग्नुषट्प्रोक्ताकच्छिशातातपा दिनः । आद्योराजभृतस्तेषांद्वि

तीयः क्रयविक्रयी ॥ तृतीयोब हुयाज्यः स्याच्चतुर्थोग्रामयाजकः । पञ्चमस्तुभृतस्तेषांग्रामस्यनगरस्यच ॥ अनादित्यान्तुयः पूर्वांसादित्यां चैवपश्चिमाम् । नोपासीतद्विजः सन्ध्यांसषष्ठोऽब्राह्मणः स्मृतः ॥ राजभृतोराजसेवकः । ग्रामादेर्भृ तोभरणीयः ॥ जननमरणाशौचेत न्निषेधोयथा । सन्ध्यांपञ्चमहाय ज्ञंनैत्यिकंस्मृतिकर्मच । तन्म ध्येहापयेत्तेषांदशाहान्तेपुनः क्रि या ॥ सायंसन्ध्यानिषेधकालो यथा । सङ्क्रान्त्योपक्षयोरन्तेद्वाद श्यांश्राद्धवासरे । सायंसन्ध्यांन कुर्वीतकृतेचपितृहाभवेत् ॥ इ ति ॥ तत्कालेशयनादिनिषेधो यथा । स्वप्नमध्ययनंस्नानमुद्वर्त्तं भोजनंगतिम् ॥ उभयोःसन्ध्ययो र्नित्यंमाध्याह्नेचैववर्ज्जयेदिति ॥ अत्राशुभफलमाहशातातपः । अ न्ततंमद्यगन्धञ्चदिवामैथुनमेवच । पुनातिवृषलस्यान्नंबहिः सन्ध्याह्यु पासिता । गृहेषुप्राकृतीसन्ध्यागो ष्ठेशतगुणास्मृता । नदीषुशतसा हस्रीह्यनन्ताशिवसन्निधौ । प्राकृ तोएकगुणा ॥ कालपरिमाणमाह याज्ञवल्क्यः । ह्रासवृद्धीतुसततं दिवसानांयथाक्रमम् । सन्ध्यामु हूर्त्तमात्रंतुह्रासेवृद्धौचसासमेति ॥

समाप्तिकालं चाह । जपन्नासीतसा
वित्रींप्रत्यगातारकोदयात् । सन्ध्यां
प्राक् प्रातरेवं हि तिष्ठेदासूर्य्यदर्श
नात् ॥ प्रत्यक् पश्चिमाभिमुखः ।
प्राक् पूर्वाभिमुखः । आसीतेति
सायं जपेआसीतेत्यर्थः । तिष्ठे
दितिप्रातर्जपेऽर्द्धत्वार्थम् । मध्या
ह्नसन्ध्याजपेप्येवं ज्ञेयम् ॥ सम्यग् ध्या
यन्त्यस्याम् । ध्यैचिन्तायाम् । आ
तश्चोपसर्गेकृत्यङ् ॥ यद्वा । सन्द
धाति । डुधाञ् । अन्नादित्वात्
क । आतोलोपः । तीर्थविशेषे ।
सन्ध्यांशः । पुं० युगसन्धौ ॥ पश्चात्स्य
विवरणंयुगे ॥
सन्ध्याकालः । पुं० मुहूर्त्तमात्रे ॥ स
न्ध्याकालेप्रणवव्याहृतित्रयोपेतांसा
वित्रींब्राह्मणादिर्जपेत् ॥ सन्ध्या
याः कालः ॥ आहारंमैथुनंनिद्रां
सन्ध्याकालेविवर्जयेत् । कर्मचा
ध्ययनंशापितथादानप्रतिग्रहौ ॥
सन्ध्याचलः । पुं० शैलविशेषे । स
न्ध्यांवशिष्ठः कृतवान्. तत्रयस्मा
द्विधेः सुतः । अतः सन्ध्याचलं
नामतस्मगायंतिदेवताः ॥ सचद
क्षिणस्यांकाष्ठायांचोभकाख्यशैला
दैशान्यांवर्त्तते ॥
सन्ध्यानाटी । पुं० शंभौ । शिवे ॥
सन्ध्यापुष्पी । स्त्री० जात्याम् । माल
त्याम् । सुमनायाम् ।

सन्ध्याबलः । पुं० राक्षसे ॥
सन्ध्याबलिः । पुं० शिवालयेतस्थ
वृषे ॥ येशिवायतनेतिष्ठन्तिसन्ध्या
बलयोवृषाः ॥
सन्ध्याभ्रम् । न० स्वर्णगैरिके ॥ सान्ध्य
मेघे ॥
सन्ध्यारागः । पुं० लोहिते । न० सि
न्दूरे ॥
सन्ध्यारामः । पुं० विधातरि ॥
सन्ध्यालक्षणम् । न० सन्ध्यास्वरूपे ।
यथा । अर्द्धास्तमितानुदितात्सूर्या
दस्पष्टभंनभोयावत् । तावत्सन्ध्या
कालश्चिह्नैरेतैः फलंवाच्यम् ॥
चिह्नानिफलानिच. वाराहीसंहि
तायामद्रष्टव्यानि ॥
सन्ध्योपासनम् । न० संध्यायांब्रह्म
णोऽभिन्नायागायत्र्याध्याने ॥ यथा
। नभिन्नांप्रतिपद्येतगायत्रींब्रह्मणा
सह । साऽहमस्मीत्युपासीतविधि
नायेनकेनचिदितिव्यासः ॥ सन्ध्या
याः सन्ध्याकालाधिष्ठात्र्यागायत्री
देव्याउपासनंध्यानम् ॥ यथा ।
ब्रह्मणोपासितासन्ध्याविष्णुनाशङ्क
रेणच । कस्तांनोपासयेद्देवींसिद्धि
कामोद्विजोत्तमः श्रुतियाज्ञवल्क्येन
देवीत्वेनकीर्त्तनात्सन्ध्याख्यायाः
देव्याः प्राणायामादिनोपासनमा
राधनमित्यर्थः ॥ यद्वा । संध्यै
तिप्राणायामादिकर्मनामउपासनं

सिद्धनमनुष्ठानमितियावदित्यर्थः ॥

सन्नः । पुं० पियालवृक्षे ॥ त्रि० अवसादसंयुते ॥ शीर्णे ॥

सन्नकः । पुं० पियालवृक्षे ॥

सन्नकद्रुः । पुं० पियालवृक्षे । चार इ० भा० प्र० ॥ सन्नोलीनः कद्रुः पिङ्गलवर्णोऽस्य ॥

सन्नतः । त्रि० सम्यक्प्रह्वीभूताङ्गे ॥ संनमति स्म । णम० । क्तः ॥

सन्नतिः । स्त्री० ध्वनौ शब्दे ॥ प्रणतौ ॥ नम्रतायाम् ॥ यथा । हरिवंशे । यतश्चोक्तः स्थितस्तत्र । यत्र श्रीस्तत्र सन्नतिः । सन्नतिश्चैव यत्र श्रीः सन्नित्यं कृष्णे महात्मनि ॥ सम्यक् ० नतिः ॥ आनुकूल्ये ॥

सन्नद्धः । त्रि० युद्धाय सज्जे । धृतसन्नाहे । तत्पर्यायो यथा । सन्नद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः । इति ॥ व्यूहरचनया स्थिते ॥ सन्नह्यति० सन्नह्यते स्म वा । णहबन्धने । अकर्म्मकत्वात्० कर्त्तरि० कर्मणि वा क्तः । मन्त्रादिसंयुते ॥ सञ्जाते ॥ यथा । लतेव सन्नद्धमनोज्ञपल्लवेति रघुः ॥

सन्नद्रुः । पुं० पियाले ॥

सन्नयः । पुं० समवाये । समूहे । पृष्ठगामिबले । अनुसैन्ये ॥ सन्नयनम् सन्नीयते वा । सन्नयति वा । णीञ् प्रापणे । एरच् । पश्चाद्बलः ॥

सन्नहनम् । न० कवचादिधारणे ॥

सन्नाहः । पुं० कवचे । वर्म्मणि ॥ संवर्म्मयति० सन्नह्यत्यात्मनेऽस्मात्तो स्यमो । सन्दंशते० दंशयते० सन्नाहोपद्रपस्तकम् ॥

सन्नाह्यः । पुं० सन्नाहयोग्ये ॥ युद्धार्हगजे ॥

संनिकर्षः । पुं० संनिधाने । समीपे । निकटे ॥ अतिशयितसंनिधौ ॥ स्वस्थाने ॥ न्यायमतेन० विषयेन्द्रियसम्बन्धे ॥ स च ज्ञानस्य कारणम् ॥ संनिकर्षणम् । कृष० । घञ् ॥

संनिकर्षणम् । न० संनिधौ । संनिकर्षे ॥ कृष० ल्युट् ॥

संनिकृष्टः । त्रि० समीपे । संनिकृष्यते स्म । कृष० क्तः ॥

संनिभम् । न० संनिधाने । संनिधौ ॥

संनिधानम् । न० संनिधौ । निकटे ॥ आश्रये ॥ यथाऽऽवासोऽसन्निधानमिति ॥ न० लयस्थाने ॥ सम्यङ् निधीयतेऽस्मिन् । ल्युट् ॥

सन्निधिः । पुं० संनिधाने । अन्तिके ॥ इन्द्रियगोचरे । प्रत्यक्षे ॥ वाक्यार्थज्ञानहेतौ । पदानामविलम्बेनोच्चारणे ॥ प्रहरे प्रहरेऽसंनिहितोच्चारितानि० गामानयेत्यादिपदानि नप्रमाणम्० सांनिध्याभावात् ।

संनिधानम् । ल्यु धाञ० । उपसर्गयो : क्ति : ॥

संनिपतनम् । न० सम्यङ्निपाते ॥

संनिपात : । पुं० सङ्गमे । मेलने ॥ तालविशेषे ॥ यथा । एकएवगुरुर्यत्रसंनिपात : स उच्यतइति ॥ त्रिदोषजनितव्याधौ ॥ यथा । वृद्धैकैद्वयै : षट् एकहीनमध्याधिकैश्चषट् । समैश्चैको विकारास्ते संनिपातास्त्रयोदश० इतिचरकोक्तत्रयोदशसंनिपाता उक्ता : । तेयथा वातोल्बण : १ । पित्तोल्बण : २ । कफोल्बण : ३ । वातपित्तोल्बण : ४ । वातश्लेष्मोल्बण : ५ । पित्तश्लेष्मोल्बण : ६ । एवंषट् । अधिकवातोमध्यपित्तोहीनकफ : १ । अधिकवातोमध्यकफोहीनपित्त : २ अधिकपित्तोमध्यवातोहीनकफ : ३ । अधिकपित्तोमध्यकफोहीनवात: ४ । अधिककफोमध्यवातोहीनपित्त : ५ । अधिककफोमध्यपित्तोहीनवातश्चेतिषट् ६ । समैर्वातपित्तकफैस्त्र्युल्बण एक : १ । एवंत्रयोदशसंनिपाता : ॥ संनिपतनम् । पत्लृ० । घञ् ॥ समूहे ॥

संनिपातज्वर : । पुं० त्रिदोषज्वरे ॥ त्रिदोषजनकैर्वातपित्तश्लेष्मामगेहगा : । वह्निर्निरस्यकोष्ठाग्निंरमणा ज्वरकारिण : ॥ अवाह । संनिपातज्वरकालस्यकथितेदोमविद्यते । चिकित्साक्रियतेयस्तं तस्मात्कोपित प्रतापशान् ॥ त्रिदोषाजगरग्रस्तं मोचयेद्यस्तु वैद्यराट् । आत्मापितस्य दातव्य : किंपुन : कनकादय इतिलोलिम्बराज : ॥

संनिपातनुत् । संनिपातारिपु : । पुं० नेपालनिम्बे । हर्णनिम्बे । ज्वरान्तके ॥

संनिबद्ध : । त्रि० संयोजिते । सम्यग्बन्धनयुक्ते ॥ संनिपूर्वोबधे : क्त : ॥

संनिभ : । त्रि० सदृशे ॥ संनिभाति । भा० । आतश्चोपसर्ग इतिक : ॥

संनिरोध : । पुं० लये ॥

संनिवाय : । पुं० समुदाये ॥

संनिविष्ट: । त्रि० स्थिते ॥ उपविष्टे ॥

संनिविष्टोद्भव : । पुं० उपविष्टस्याग्निभावे ॥

संनिवृत्त : । त्रि० प्रत्यागते ॥

संनिवृत्ति : । स्त्री० सम्यङ्निवर्त्तने ॥

संनिवेश : । पुं० पुरादौगृहादिरचनापरिच्छिन्नप्रदेशे । निकर्षणे ॥ पुरादेर्बहिर्विहारभूमौ ॥ नगरादिबहि : स्वैरविहारचारुभूमिषु । तत्रहथं निगदितं संनिवेशोनिकर्षणमितिशब्दरत्नावली । संनिविशन्तेऽत्र : विश० । हलश्चेतिघञ्

। सम्यङ्निवेशने । रचनायाम् ॥

संनिहितम् । न॰ कुरुक्षेत्रे॰ सरोविशेषे । त्रि॰ समीपस्थे । निकटे ॥

संनिहितातीर्थम् । न॰ तीर्थविशेषे ॥

संनीतिः । स्त्री॰ सम्यङ्न्याये ॥ सम्प्रापणे ॥

सन्मानम् । न॰ आदरे ॥ यथा । असन्मानात्तपोवृद्धिः सन्मानात्तु तपः क्षयः । अर्चितः पूजितो विप्रो दुग्धा गौरिव गच्छतीति ॥ अपि च । तथाचरेत वै योगी सतां धर्ममनुस्मरन् । जना यथाऽवमन्येरन् गच्छेरन्नैव सङ्गतिमिति ॥ सन्नतन्मानश्च ॥ महतां धने ॥ यथा । संसारे पुनिमग्नानां स्वस्मिन्पूज्यत्वमानिनाम् । ईश्वरात्कामकामानां सन्मानं महतां धनं ॥

सन्मार्गः । पुं॰ सदाचारे । श्रुत्यनुसारिस्मृत्युक्तेऽर्थे ॥ वेदमार्गे ॥ सतांस्वतः प्रमाणभूतानामप्रामाण्यकारणरहितानांवेदानांमार्गः॰ ब्रह्मपरत्वम् ॥

सन्न्यस्तः । त्रि॰ सम्यक्त्यागविशिष्टे॰ संन्यासिनि ॥ सम्यङ्न्यस्तानि॰ आत्मातिरिक्तानि येन । सम्यक्त्यक्ते । समर्पिते ।

सन्न्यासः । पुं॰ त्यागे । सर्वकर्मतत्फलपरित्यागे । सर्वकर्मणांभगवतिसमर्पणे । सफलकाम्यकर्मत्यागे । अत्यन्तिकत्यागरूपे चतुर्थाश्रमे ॥ यथा । यदा मनसि वैराग्यं जायते सर्ववस्तुषु । तदैव सन्न्यसेद्विद्वानन्यथा पतितो भवेत् ॥ अपि च । चित्तशुद्धिकर्महेतुत्वात्तत्त्यागो ज्ञानसाधनम् । एषणात्रयसन्न्यासो वित्तत्यागेन लक्ष्यते ॥ ज्ञानस्य हेतुः सन्न्यास इति शास्त्रे षुडिण्डिमः ॥ स च त्रिविधो यथा । सन्न्यासस्त्रिविधः प्रोक्तो विद्वद्विविदिषाश्रमैरिति । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्तीति श्रुतौ॰ ब्राह्मणादुक्तश्च॰ ब्राह्मणः प्रव्रजेद्गृहादित्यत्र च॰ ब्राह्मणशब्दस्त्रैवर्णिकपरः । तेन॰ ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेद्गृहादिति स्मृतेरविरोधः । तत्रैव निर्णयश्चाचार्याणाम् । यश्चतुर्थाश्रमरूपं दण्डधारणादिलिङ्गधारणं तत्तु विप्राणामेव । यस्तु सर्वकर्मत्यागलक्षणस्तत्फलत्यागरूपो वा सन्न्यासः स तु त्रैवर्णिकसाधारण इति ॥ एतदेव स्पष्टमुक्तं श्रीमहानिर्वाणतन्त्रे । चत्वारः क्षत्रियाश्च आश्रमा अपि सुव्रते । आचाराश्चापि वर्णानामाश्रमाणां पृथक्पृथक् ॥ कृतादौ कलिकाले तु वर्णाः पञ्च प्रकीर्त्तिताः । ब्राह्मणः क्षत्रियो वैश्यः शूद्रः सामान्य एव च ।

सुखरकरेषुचोत्तरास् ॥ नीरिक्ते स्थिरसदने • कन्याराशिवर्त्तिनि स्थिरराश्यु दयेसतीत्यर्थ : ॥

सन्न्यासी । पुं • चतुर्थाश्रमिणि । अवधूते । अस्यपर्य्याययथा ! भिक्षुः परिव्राट् कर्मन्दीपाराशर्य्यपिमस्करीति ॥ ज्ञानसन्न्यासिनः केचिद्वेदसन्न्यासिनोऽपरे । कर्मसन्न्यासिनस्त्वन्येत्रिविधाः परिकीर्त्तिताः ॥ यः सर्वसङ्गनिर्मुक्तोनिर्द्वन्द्वश्चैवनिर्भयः । प्रोच्यतेज्ञानसन्न्यासी •स्वात्मन्येवव्यवस्थितः ॥ वेदमेवाभ्यसेन्नित्यं निराशीर्निष्परिग्रहः । प्रोच्यतेवेदसन्न्यासीमुमुक्षुर्विजितेन्द्रियः ॥ यस्त्वग्नीनात्मसात्कृत्वाब्रह्मार्पणपरोद्विजः ज्ञेयः सकर्मसन्न्यासीमहायज्ञपरायणः ॥ त्रयाणामपिचैतेषांज्ञानीत्वभ्यधिकोमतः । नतस्यविद्यतेकर्मनलिङ्गंवाविपश्चितः ॥ युगभेदेसन्न्यासिनांनामान्यु पाधयश्चयथा । आदौवेदाभ्याचार्योब्रह्मा । द्वितीयाचार्योविष्णुः । तृतीयाचार्योरुद्रः । चतुर्थाचार्योवशिष्ठ. पञ्चमाचार्यः शक्तिः । षष्ठः पराशरः । सप्तमोव्यासः । अष्टमः शुकः । नवमोगौडः दशमोगोविन्द एकादश श्रीशङ्कराचार्यः ॥ सत्ययुगे • आचार्यत्रयं ब्रह्मविष्णुरुद्राः । त्रेतायामाचार्यत्रयं वशिष्ठशक्तिपराशराः द्वापरआचार्यद्वयं व्यासशुकौ । कलावाचार्यत्रयं गौडगोविन्दशङ्कराचार्य्याः ॥ शङ्कराचार्यस्यचत्वारशिष्याःस्वरूपाचार्यः पद्मपादाचार्यःत्रोटकाचार्यः • पृथ्वीधराचार्य श्चेति । अथदशनामानि । स्वरूपाचार्यस्यशिष्यौतीर्थाश्रमौ । पद्माचार्यस्यवनारण्यौ । त्रोटकाचार्यशिष्याः • गिरिपर्वतसागराः । पृथ्वीधराचार्यस्यशिष्यत्रयं • सरस्वतीभारतीपुरीचेतिशङ्कराचार्यरचितसप्तमसूत्रम् ॥ अपिच । तीर्थाश्रमवनारण्यगिरिपर्वतसागराः । सरस्वतीभारतीचपुरीतिदशकीर्त्तिताः ॥ तेषांलक्षणानियथा । त्रिवेणीसङ्गमेतीर्थे तत्त्वमस्यादिलक्षणे । स्नायात तत्त्वार्थभावेनतीर्थनामासउच्यते ॥ १ ॥ आश्रमग्रहणे प्रौढ़ आशापाशविवर्जितः । यातायातविनिर्मुक्तएतदाश्रमलक्षणम् ॥ २ ॥ सुरम्येनिर्झरेदेशेवनेवासंकरोतियः । आशापाशविनिर्मुक्तोवननामासउच्यते ॥ ३ ॥ अरण्येसंस्थितोनित्यमानन्दनन्दनेवने । त्यक्तासर्वमिदंविश्वमारण्यलक्षणंकिल ॥ ४ ॥ वासोगिरिवरेनित्यंगीताभ्यासेहितत्परः । गम्भीराचलबुद्धिश्चगिरिनामासउच्यते ॥ ५ ॥

वसति पर्व्वतमूर्द्धिषु प्रौढो यो ध्यानधारणात् । सारात् सारं विजानाति पर्व्वतः परिकीर्त्तितः ॥ ६ ॥ वसति सागरगम्भीरो वनरत्नपरिग्रहः । मर्य्यादां नैव लङ्घेत सागरः परिकीर्त्तितः ॥ ७ ॥ स्वरज्ञानवशो नित्यं स्वरशास्त्रैकशीश्वरः । संसारसागरे साराभिज्ञो यो हि सरस्वती ॥ ८ ॥ विद्याभारेण सम्पूर्णः सर्व्वभारं परित्यजेत् । दुःखभारं न जानाति भारती परिकीर्त्तितः ॥ ९ ॥ ज्ञानतत्त्वेन सम्पूर्णः पूर्णतत्त्वपदे स्थितः । परब्रह्मरतो नित्यं पुरी नामा स उच्यते ॥ १० ॥ इति तत्र शङ्करविजये श्रीविद्यारण्यस्वामिनः ॥ अस्य धर्म्माचरणादिकं मनुस्मृतौ ब्रह्मवैवर्त्तगरुडकूर्म्मपुराणादिषु द्रष्टव्यम् । विधानन्तु श्रीमहानिर्व्वाणतन्त्रे श्रीमदाशिवेनोक्तं तत् ततोऽवगन्तव्यम् ॥ सन्न्यासेऽस्यास्ति । यतद्धुनिः ॥ अस्यान्त्येष्टिविधिमाह शौनकः । सर्व्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कार्य्यं नैव पिण्डोदकक्रिया ॥ निदध्यात् प्रणवेनैव बिले भिक्षोः कलेवरम् । प्रोक्षणं खननञ्चैव सर्व्वं तेनैव कारयेत् इति ॥

सन्मुखः । त्रि० अभिमुखे ॥

सपक्षः । त्रि० निश्चितसाध्यवति । साध्यवत्त्वनिश्चयविषये । यथा धूमवत्त्वे० महानसम् ॥ अनुकूले । समानः पक्षः० इति विग्रहे० समानस्येति योगविभागात् समादेशः ॥ यद्वा । सशब्दः सदृशवचनः । तेनास्वपदविग्रहो बहुव्रीहिः० समानः पक्षोऽस्य० इति सपक्षः ॥

सपणः । पुं० कलहे ॥ पणेन सह वर्त्तमाने० व्यवहारविशेषे ॥ यथा यद्यहमत्र पराजितो भवामि० तदा शतं दास्यामीति ॥

सपत्त्राकरणम् । न० अत्यन्तपीडने ॥ सपत्त्रनिष्पत्त्रादतिव्यथने इति डाच् ॥

सपत्त्राकृतः । पुं० हतमृगादौ ॥ त्रि० अत्यन्तपीडिते ॥

सपत्त्राकृतिः । स्त्री० अत्यन्तदुःखे । निष्पत्त्राकृतौ ॥

सपत्नः । पुं० शत्रौ ॥ सपत्नीव व्यन् सपत्न इति निर्द्देशादकारः । इवार्थे अन् प्रत्ययो वा ।

सपत्नारिः । पुं० वेष्टवंशे ॥ शत्रोः शत्रौ ॥ सपत्नस्य अरिः ॥

सपत्नी । स्त्री० समानपतिकायाम् ॥ समानः एकः पतिर्य्यस्याः० इति विग्रहे० सपत्न्यादिषु समानस्य सभावो निपात्यते । नित्यं सपत्न्यादिष्विति ङीप् ॥

सपत्नीकः । पुं० पत्नीसहिते ॥ सह पत्न्या वर्त्तते इति तथा नद्यृतश्चेति

तेनमातामहादीनामेकपिण्डसंवन्धे पिनसपिण्डता ॥ सपिंडस्यभावः । तल् । टाप् ॥

सपिण्डीकरणम् । न० श्राद्धविशेषे । प्रेतपिण्डस्य पितृपिण्डेनसहमिश्रीकरणे ॥ तच्चपूर्णेसंवत्सरेसपिण्डीकरणमितिमुख्यकल्पः • तदशक्तौनवमेमासे तदशक्तौषष्ठेमासः । तत्राप्यसक्तौत्रिपक्षः । तत्राप्यशक्तावशौचापगमेप्रथममासस्यद्वादशभिदिनैर्वाद्वादशमासिकानिश्राद्धानिनिर्वर्त्यतयोदशाहः सपिण्डीकरणकालः ॥ सपिण्डीकरणविषयेकूर्मपुराणंयथा । सपिण्डीकरणंप्रोक्तंपूर्णेसम्वत्सरेपुनः । कुर्याच्चत्वारिपात्राणिप्रेतादीनांद्विजोत्तमाः ॥ प्रेतार्थपितृपात्रेषुपात्रमासेचयेत्ततः ये समानाइतिद्वाभ्यांपिण्डानप्येवमेवहि ॥ सपिण्डीकरणंश्राद्धंदेवपूर्वंविधीयते । पितृनावाहयेदत्रपृथक्पिण्डंचनिर्दिशेत् ॥ येसपिण्डीकृताः प्रेतानतेषांस्यात्पृथक्क्रिया । यस्तुकुर्यात्पृथक्पिण्डंपितृहासोपिजायते॰इति ।

सपीतकः । पुं॰ राजकोषातक्याम् ॥

सपीतिः । स्त्री॰ आत्मीयेनजनेनसहमिलित्वैककालकृतेपाने । तुल्यपाने । पानम् । पापानेक्तियांक्तिन् । घुमास्थेतीत्वम् । समानापीतिः । समानस्यच्छन्दसीतिसभावः । सपीतिर्वा । सहस्यसः संज्ञायाम् ॥

सपीतिका । स्त्री॰ हस्तिघोषायाम् ॥

सपुत्रः । त्रि॰ पुत्रेणसहवर्त्तमाने ॥

सप्तकः । पुं॰ सप्तसङ्ख्यायाम् ॥ त्रि॰ सप्तसङ्ख्याविशिष्टे ॥ सप्तभिः क्रीतेवस्तुनि ॥ सङ्ख्यायाअतिशदन्तायाः कन्नित्यार्हीयेष्वर्थेषुकन् ॥

सप्तकी । स्त्री॰ मेखलायाम् । काञ्च्याम् । कटिभूषणे ॥ सपति । षपसमवाये । बाहुलकात्तन् । स्वार्थेकन् ॥ यद्वा । सप्तभिरनेकाभिः किङ्किणीभिर्वा॰ सप्तस्वरान्वा॰ कायति । कैशब्दे । आतोनुपसर्गेकः । गौरादित्वान्ङीष् ॥

सप्तगङ्गम् । न॰ तीर्थविशेषे ॥

सप्तगोदावरम् । न॰ सप्तानांगोदावरीणांसमाहारे ॥ तीर्थविशेषे ॥

सप्तच्छदः । पुं॰ सप्तपर्णवृक्षे । काण्डेकाण्डेसप्तच्छदाअस्य । सङ्ख्याशब्दस्यवृत्तिविषयेवीप्सार्थत्वम् ॥ न॰ तस्यपुष्पे ॥

सप्तजिह्वः । पुं॰ अनले । अग्नौ ॥ सप्तकाल्यादयोजिह्वाआहुतिग्रसनार्थं यस्यसः । तायथा । कालीकरालीचमनोजवाचसुलोहिताचैवसुधूम्रवर्णा । स्फुलिङ्गिनीविश्वरुचीचदेवीलेलायमानेतिचसप्तजिह्वाः इति

मुण्डकम् ॥ उत्तरार्द्धे॰ उद्याप्रदी प्तावश्लपीटयोमि:सप्त वञ्झीला: कथि तार्घजिह्वा:॰इतिपाठान्तरमन्यच॥

सप्तज्वाल:। पुं॰ वह्नौ॥

सप्ततन्तु:। पुं॰ यज्ञे। सवे। अध्वरे। सप्तभिश्छन्दोभिरग्निजिह्वाभिर्वा॰ तन्यते। तनु॰। सितनिगमीतितुन्॥ यद्वा। सप्तजिह्वाश्छन्दांसिवा॰ तन्यन्तेऽत्र॥ सप्ततन्तव: संस्थायस्यवा॥

सप्तति:। स्त्री॰ दशाधिकषष्टिसङ्ख्यायाम ७०। सप्तन्॰ स्॰ भा॰ प्र॰ ॥ सङ्ख्येये॥ सप्तदशत: परिमाणमस्य। पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतमितिनिपातनान्प्रकृतेसप्तभावस्तिप्रत्ययश्च॥

सप्ततितम:। त्रि॰। सप्तते: पूरणे॥ तस्यपूरणेडट्। विंशत्यादिभ्यस्तमडन्यतरस्यामितिडटस्तमडागम:॥

सप्तदश:। त्रि॰सप्तदशानांपूरणे॥डट्॥

सप्तदश। त्रि॰। सङ्ख्याभेदे। सप्ताधिकदशसु १७॥ सङ्ख्येये॥

सप्तदशावयम्। न॰ लिङ्गशरीरे॥ सप्तदशावयवायस्य:। तेयथा। ज्ञानेन्द्रियपञ्चकम्॰ बुद्धिमनसी कर्मेन्द्रियपञ्चकम्प्राणादिपञ्चवायवइति॥

सप्तदीधिति:। पुं॰। सप्तदीधिती। वह्नौ॥

सप्तद्वीपपति:। पुं॰। सप्तद्वीपानामधिपती॥ द्वीपास्तु॰ जम्बूशाककुशक्रौञ्चदयोद्वीपशब्दे द्रष्टव्या:॥

सप्तद्वीपा स्त्री॰। वसुमत्याम्। भूमौ॥ यथा। मनो: स्वायम्भुवस्यासन्दशपुत्रास्तुतत्समा:। यैरियंपृथिवीसर्वासप्तद्वीपासपत्तना॥ ससमुद्राकरवतीप्रतिवर्षंनिवेशितेति॥ अस्या: परिमाणमुक्तंशैवतन्त्रे। कोटिद्वयंत्रिपञ्चाशल्लक्षाणितत: परम्। पञ्चाशत्सहस्राणि सप्तद्वीपाससागरा॥ ततोहिमयीभूमिर्द्दशकोट्योवरानने। देवानांक्रीडनार्थायलोकालोकस्तत: परमिति॥सप्तद्वीपायस्यांसा॥

सप्तधा। अ॰ सप्तप्रकारे॥

सप्तधातु:। पुं॰ शरीरे। सप्तधातवस्त्वगादयोयस्मिन्॥

सप्त। त्रि॰ सङ्ख्याविशेषे। सातइतिभा॰ प्र॰॥ सङ्ख्येये। यथासप्तसमुद्रा:॥ सपति। षपसमवाये। सप्यशूभ्यांतुट्चेतिकनिन्॥

सप्तनाडीचक्रम्। न॰ वृष्ट्यादेर्ज्ञानार्थं यवनचार्योक्तसप्तनाडिकसर्पाकारचक्रे॥

सप्तनामा। स्त्री॰ आदित्यभक्ता

याम् ॥

सप्तपत्रः । पुं० सप्तच्छदे ॥ मुद्गरवृक्षे । सप्तसप्तपत्रा यस्य ॥

सप्तपदार्थवादः । पुं० आर्हतानां वादे । यथा । जीवाजीवात्मकं विश्वं चेतनः स्वशरीरवत् । परिणामावयवान् जीवः षड्विधः स्मृतः ॥ महीधरादिरेकः स्यात् पञ्चधा चास्रवादिकः । आस्रवः संवरो निर्जरो बन्धो मोक्ष एव च ॥ इन्द्रियाणां विषयकादिः केशलुञ्चादिभिस्तपः । जन्मान्यूर्ध्वगतिश्चेति पञ्चानामर्थ उच्यते ॥ स्यादस्तीत्यादिना सप्तभङ्गीन्यायेन वादिनः । सप्तैवक्रमशोऽपास्तमतथं साधयेत्सुधीरिति ॥

सप्तपदी । स्त्री० विवाहाङ्गसप्तपदीगमने । सप्तानां पदानां समाहारः । द्विगोरिति ङीप् ॥

सप्तपर्णः पुं० छातवनीति ख्याते वृक्षे । पर्यायास्तु । सप्तपर्णो विशालत्वक् शारदो विषमच्छद इति ॥ सप्तपर्णो व्रणश्लेष्मवातकुष्ठासृजन्तुजित् ॥ दीपनः श्वासगुल्मघ्नः स्निग्धोष्णस्तुवरः सरः इति गुणाः ॥ काण्डे काण्डे सप्त सप्त पर्णान्यस्य । क्वचित् सङ्ख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वमिति कैयटादिव्याख्यानात् ॥ न० मिष्टान्नविशेषे ॥ यथा । द्राक्षादाडिमखर्जूरमृदितान्नं सशर्करम् । लाजचूर्णं समध्वाज्यं सप्तपर्णमुदाहृतम् ॥

सप्तपर्णी । स्त्री० लज्जालौ ॥

सप्तपलाशः । पुं० सप्तपर्णद्रुमे ॥ सप्तसप्तपलाशानि पत्राणि यस्य ॥ न० सप्तपर्णपुष्पे ॥

सप्तपातालम् । न० सप्तसङ्ख्याकाधोभुवने ॥ यथा । अतलं वितलञ्चैव नितलञ्च गभस्तिमत् । महाख्यं सुतलञ्चाग्र्यं पातालं सप्तमं विदुरिति ॥ नामान्तराण्यपि यथा । आभासं परतलाख्यं वितलं च गभस्तिमत् । महातलं रसाकञ्च पातालं सप्तमं भुवः इति ॥ एतेषामधिपा यथा । सप्तस्वेतेषु दैत्येन्द्रभुजङ्गप्रवराः । सप्तसप्त समाख्यातास्तानप्यथ निबोध मे ॥ दैत्याः शङ्कुश्रुतिः पूर्वं प्रह्लादः शिशुपालकः कर्कन्धुको हिरण्याक्षो वृद्धो भौवलिस्तथा ॥ काद्रवेयाः कुटिलको वासुकिः कम्बलस्तथा । कर्कोटकोऽथ कालाङ्कोदर्शस्तक्षकस्तथा ॥ विकटाद्योऽहिताश्चैव मारव्यो विकटाननः करालो भीमनिर्ह्रादः पिङ्गलश्चेति राक्षसाः इति ॥

सप्तपुत्रसूः । स्त्री० सप्तवत्सकरायाम् । सप्तपुत्रायाम् ॥

सप्तप्राणा : । पुं॰ ब॰ सप्तेन्द्रियेषु ॥ यथा । अन्तः करणत्वान्मनस एकत्वेन॰ पञ्चकर्मेन्द्रियाणामेकत्वसङ्ख्ययाचद्वे॰ पञ्चबुद्धीन्द्रियाणि॰ सङ्कलनया सप्तेन्द्रियाणि॰ सप्तप्राणपदवाच्यानि भवन्तीति ॥ शीर्षण्येषु सप्तप्राणेषु ॥

सप्तभङ्गी । स्त्री॰ अनेकान्तवादिनां न्यायविशेषे ॥ देहग्रहणात् पूर्वंजीव : किमस्ति॰ उत नेति ? पर्यनुयुङ्क्ते॰ तम्प्रति॰ अनेकान्तवादिभ्युपगन्तव्य : । इयथा । स्यादस्ति॰ स्यान्नास्ति॰ स्यादस्तिचनास्तिच॰ स्यादवक्तव्य :॰ स्यादस्तिचावक्तव्यश्च॰ स्यान्नास्तिचावक्तव्यश्च॰ स्यादस्तिचनास्तिचावक्तव्यश्चेति । अवश्यं यदात्पर्यनुयोक्तव्यंतत्तत्सदसत्त्वयासमाधेयम् । तत्र वाच्यतयाऽवाच्यतयापिचविरोधस्थानिस्त्तु घटनीय : । इति सप्तभङ्गीसोयवत्म्याख्यतामतैर्यमिहकिन्तु ॥ यतस्यादस्तिस्यान्नास्तिस्यादितिपदुर्गालिभिर्भ्रास्यति जगत्सर्वमिति ॥

सप्तभद्र : । पुं॰ शिरीषवृक्षे ॥

सप्तभूरादय : । पुं॰ ब॰ प्राणिनां कर्मज्ञानफलोपभोगस्थानविशेषेषु॰ यथापाठक्रममुपर्युपरिवर्त्तमानेषु॰ भूर्भुव : स्वर्महर्जनतप : सत्येषु ॥

सप्तम : । त्रि॰ सप्तानांपूरणे ॥ डट् । तस्यमडागम : ॥

सप्तमी । स्त्री॰ तिथिविशेषे । सांतं॰ कृ॰ भा॰ प्र॰ ॥ तत्रोत्पन्नजनस्य फलंयथा । कान्ताप्रजोदैरिकुलैर्भाविशिष्टोविशालनेत्र : प्रथितप्रभाव : । देवद्विजार्चारसिकोमहात्मा स्यात्सप्तमीजः किलटविप्तदृत्ती ॥ व्रतादौषष्ठीयुताग्राह्या ॥ ङि॰ चोस्॰ मुप॰ इतिविकी ॥ टित्वान्ङीप् ॥

सप्तरक्तम् । न॰ शरीरस्थरक्तवर्णविशिष्टेषु सप्तावयवेषु ॥ तच्चसमुद्रवाक्यंयथा । पाणिपादतलौरक्तौ नेत्रान्तरनखानिच । तालुकाधरजिह्वाश्चसप्तरक्तं प्रशस्यतइति ॥

सप्तर्षय : । पुं॰ ब॰ मरीच्यादिमुनिषु॰ चित्रशिखण्डिषु । यथोक्तं पाद्मेमृगखण्डे । सप्तर्षिमण्डलंतस्माद्ध्रुवस्यैवसर्वतोपरि । तत्रसप्तर्षय : सन्तिविनियुक्ता : प्रजासृजा ॥ मरीचिरत्रि : पुलह : पुलस्त्य : क्रतुरङ्गिरा : । वशिष्ठश्चमहाभाग । ब्रह्मणोमानसा : सुता : ॥ सप्तब्रह्माणइत्येवेउच्यन्तेब्रह्मवादिभि : । सम्भूतिरनसूयाचक्षमाप्रीतिश्चसन्नतिः ॥ अरुन्धतिस्तथालज्जातत्पत्न्योलोकमातर : । एतासांतपसा

वैतद्धार्येतेभुवनत्रयम्॥सन्ध्यात्रयमु पासीनागायत्रीजपतत्परा : । त स्मिंल्लोकेवसन्त्येतेब्राह्मणाब्रह्मवा दिनइतिपाद्मे ११ऽध्याय : ॥

सप्तला । स्त्री॰ नवमालिकायाम् ॥ सप्तलाति । ला॰ । आतोनुपेति क : ॥ चर्मकषायाम् । सातला याम् ॥ गुञ्जायाम् ॥ पाटलाया म् ॥

सप्तवाहन : । पुं॰ आदित्ये ॥ सप्ता श्वावाहनान्यस्य । सप्तनामकएको श्वोवाहनमस्यवा ॥ एकोश्वोवह तिसप्तनामेतिश्रुते : ॥ वहति॰ आदित्यरथम् ॥

सप्तशती । स्त्री॰ सप्तशतिकायाम् ॥ सप्तशतमन्त्रात्मकदेवीमाहात्म्ये ॥ गीतायाम् ॥ सप्तानांशतानांसमा हार : । द्विगोरितिङीप् ॥

सप्तशलाक : । पुं॰ विवाहोपयोगि वेधविशेषे ॥ यथा । ऊर्ध्वगा : सप्तरेखास्तुतिर्यक्सप्तविलिख्यच कृत्तिकादिषतु : सप्तकक्षाणिता सुसंलिखेत् ॥ चन्द्ररेखाग्रेनक्षत्रं यत्रतिष्ठतिवैतदा । वेध : सप्त शलाकाख्योविवाहेतत्रवर्ज्ययेत् ॥ यद्रेखायांचन्द्रस्तिष्ठतिसाचन्द्ररेखा ॰ तत्रस्थितंयन्नक्षत्रंतस्मिन्यदिसू र्यादीनामन्यतमोग्रह : कश्चिद्ग्रहस्ति ष्ठति॰ तदासप्तशलाकाख्योवेध :

स्यात्॰ तत्रविवाहंवर्ज्ययेदिति ॥ यथा : शशीसप्तशलाकभिन्न : पा पै : पापैरथवाविवाहे । रक्तांशुकेनै वतुरोदमानाश्मशानभूमिंप्रमदाप्र यातीतिफलं ॥

सप्तशिरा । स्त्री॰ नागवल्ल्याम् ॥ ताम्बूल्याम् ॥

सप्तशृङ्ग : । पुं॰ हिमाचले ॥ सप्त शृङ्गवति । दक्षिणदेशप्रसिद्धेगि रिविशेषे ॥ तत्प्रसिद्धेऽम्बिका स्थाने ॥

सप्तसप्ति : । पुं॰ दिवाकरे । सूर्ये ॥ सप्तगायत्र्यादीनिछन्दांसि॰ सप्त- योऽश्वा॰ यस्यस : ॥ यथा । हया श्वसप्तछन्दांसितेषांनामानिमेशृणु । गायत्रीचबृहत्युष्णिग्जगतीत्रिष्टुवे वच । अनुष्टुप्पङ्क्तिरेतानिच्छन्दां सिहरयेरवेरितिविष्णुपुराणम् । सप्ताश्वरूपाच्छन्दांसिवहन्तेवातरं हसइतिमत्स्यपुराणञ्च ॥

सप्तसमिध : । स्त्री॰ बहुवचनान्त :॰ सप्तप्राणानांसप्तसुविषयेषु ॥ विष येषुसमिध्यन्तेप्राणा : ।

सप्तसागर : । पुं॰ महादानविशेषे ॥

सप्तसारस्वतम् । न॰ तीर्थविशेषे ॥

सप्तसू : । स्त्री॰ सुतवस्करायाम् । सप्तपुत्रप्रसूतायाम् ॥

सप्तसोत : । न॰ तीर्थप्रभेदे । दक्षि णेनहिमवतश्चपौणामाश्रमे ॥ यथा

स्रोतोभिः सप्तभिर्यथैवस्वर्धुनीसप्त धाव्यधात् । सप्तानांप्रीतयेमांस्नास प्तस्रोतः प्रचक्षते ॥

सप्तांशुपुंगवः । पुं० शनिग्रहे ॥

सप्तार्चिः । पुं० दमुनसि । शुक्रे । अग्नौ । वैश्वानरे ॥ सप्तअर्चिषोयस्य ॥ चित्रकवृक्षे ॥ शनिग्रहे ॥ त्रि० क्रूरचक्षुषि ॥ सप्तार्चिषिः॰सप्तसप्तानांदीप्तयः स्वविषयानुद्योतनानीत्यर्थः ॥

सप्तावर्त्तः । पुं० तीर्थविशेषे ॥

सप्ताश्वः । पुं० हरिदश्वे । उष्णरश्मौ । सूरे । सूर्ये ॥ सप्तअश्वाः सन्त्यस्य ॥ अर्कवृक्षे ॥

सप्ताश्ववाहनः । पुं० सूर्ये ॥

सप्तिः । पुं० घोटके । पीतौ । तुरगे ॥ सपतिसेनायांसमवैति । षपसमवाये । क्तिच् । बाहुलकात् तिर्वा ॥

सप्तेन्द्रियम् । न० सप्तप्राणेषु ॥

सप्तोपघातः । पुं० व० सप्तसङ्ख्यकोपधातुषु ॥ यथा । माक्षिकं तुल्यकाभ्रे चनीलाञ्जनशिलाऽऽलकाः । रसकश्चेतिविज्ञेयाएतेसप्तोपधातवः ॥ शरीरस्यसप्तधातुभवसप्तोपधातुषु ॥ यथा । स्तन्यंरजश्चनारीणांकालेभवतिगच्छति । शुद्धमांसभवः स्नेहःसा वसा परिकीर्तिता ॥ स्वेदोदन्तास्तथाकेशा

तथैवौजश्चसप्तमम् इतिधातुभवाज्ञेयाएतेसप्तोपधातवइति ॥

सफलः । त्रि० फलिते । फलवति ॥

सबलः । त्रि० सैन्ययुक्ते ॥ सामर्थ्यवति ॥ बलेनसहवर्त्ततेइति ॥

सबलिः । पुं० दिनावसाने । उषसि । विकाले ॥ त्रि० बलिसहिते ॥

सबाधः । त्रि० पीडायुक्ते ॥ निषेधयुक्ते ॥ बाधया॰ बाधेनचसहवर्त्तमानः ॥

सब्रह्मचारी । पुं० समानवेदव्रताचारिणि । यथाऽमरः । एकब्रह्मव्रताचारामिथ सब्रह्मचारिणइति ।ब्रह्मवेदस्तदध्ययनार्थं व्रतमप्युपचाराद्ब्रह्म॰ एकस्मिन्ब्रह्मणिव्रताचरणं येषां तेमिथः परस्परं॰ सब्रह्मचारिणोभवन्तीत्यर्थः ॥ समानं ब्रह्मचरति । व्रतइतिणिनिः । चरणेब्रह्मचारिणीति॰ समानस्य सः ॥ समानेब्रह्मणिचरतिवा ॥

सभर्त्तृका । स्त्री० पतिवत्याम् ॥ सहभर्त्तास्तियस्याः । कप् ॥

सभा । स्त्री० गोष्ठ्याम् । समज्यापरिषद्गोष्ठीसभासमितिसंसदः । आस्थानीक्लीबमास्थानंस्त्रीनपुंसकयोः सदः ॰ इत्यमरः ॥ सहभान्तियस्यांवा । भादीप्तौ । सुपीतिकः । अन्यत्रापीतिडोवा । भिदाद्यङ्वा ॥ समानोभोयस्यामितिवा ।

समानस्येतियोगविभागात्॰ सभा यामितिनिर्देशाद्वासमानस्यसादेशः । अस्यालक्षणंयथा । यस्मिन्देशे निषीदन्तिविप्रावेदविदस्त्रयः । राज्ञश्चाधिकृतोविद्वान्ब्रह्मणस्तांसभां विदुरितिमनुः ॥ चत्वारोवेदधर्म्मज्ञाः पर्षत्त्रैविद्यमेववा । साब्रूते यंसधर्मःस्यादेकोवाध्यात्मवित्तमः ॰ इतियाज्ञवल्क्यः ॥ विद्वत्संहतौ ॰ भाः प्रकाशस्तयासहवर्त्तते॰ इत्यर्थः ॥ ग्रामनगरादौनियतजनसमूहस्थाने ॥ सामाजिके । सभ्ये ॥ द्यूते ॥ मन्दिरे । राज्ञोऽमात्यादिदर्शनगृहे ॥ अनुविधेयस्येयः सभ्यपुरुषवतीजनतासभा । अनुविधेयोराजादिः ॰ स्थेयानमध्यस्थः ॥

सभागः । त्रि॰ सभाकृते ॥ अन्यैः पूज्यमाने ॥ भजनंभागः ॰ पूजा॰ सेवा । सहभागेनवर्त्तमानः ॥ भागसहिते ॥

सभाजनः । पुं॰ सभ्ये ॥ न॰ गमनागमनादिसमयेसुहृदादेरालिङ्गनादिव्यवहारस्वागतादिनानन्दोत्पादने । आनन्दने । आप्रच्छने ॥ सभाज प्रीतिसेवनयोः । ल्युट् ॥

सभाजितः । त्रि॰ पूजिते ॥

सभाज्यः । त्रि॰ पूज्ये । भजनीये ॥

सभापतिः । पुं॰ सभाधिपतौ ॥ यथा । श्रीमदाम्रपुरेसाम्बाद्वरनामासभापतिरिति ॥

सभारचना । स्त्री॰ राजमन्दिरनिर्मितौ ॥ यथा । चापाकृतिन्यस्तनृपासनोदरा सती तिर्य्यग्णा नृपगौरवोचिता । निशान्तवीरैर्विदधीत मन्त्रिणा नरैरनूचानरसामरैः सभा ॥

सभासत्॰द् । पुं॰ सभास्तारे । सभ्ये । सामाजिके । सभासदानाह । श्रुताध्ययनसम्पन्नाः कुलीनाः सत्यवादिनः । राज्ञःसभासदः कार्य्याः शत्रौमित्रेचयेसमाइतियाज्ञवल्क्याः ॥ श्रुताध्ययनसम्पन्नाः ॰ धर्मशास्त्रज्ञाः । कुलीनाः ॰ साङ्कर्य्यदोषशून्यमातापितृवंशपरम्पराकाः ॥ सभायामधिकृतत्वेनलोकानांधर्म्माधर्म्मावलोकनार्थंसीदतिउपविशति । षद्लृ॰ । सत्सूद्विषेतिक्विप् ॥ समाङ्विशाकः : सामान्यः सब्राह्मणपुरोहितः । ससभ्यः प्रेक्षकोराजास्वर्गेतिष्ठतिधर्मतः ॥ तत्रब्राह्मणाअनियुक्ताः ॰ सभ्यास्तुनियुक्ताइतिभेदः । तत्रनियुक्तानांयथावस्थितार्थकथनेपियदिराजान्यथाकरोतितदाऽसौनिवारणीयोन्यथादोषः । यथाहकात्यायनः । अन्यायेनापितंयान्तंयेनुयान्तिसभासदः । तेपितद्भागिनस्तस्माद्बोध

नीय : सतैर्नृपइति ॥

सभास्तार : । पुं॰ सभासदि । सभांस्तृणाति । स्तृञ् आच्छादने । कर्मण्यण् ॥

सभिक : । पुं॰ द्यूतकारके । प्रतिभूत्वादिनाद्यूतप्रयोजके ॥ सभाद्यूतमाश्रयत्वेनास्यास्ति । व्रीह्यादित्वाट्ठन् ॥

सभोचित : । पुं॰ पण्डिते ॥ त्रि॰ सभायोग्ये ॥

सभ्य : । पुं॰ सभासदि ॥ यथा । सभ्येनावश्यवक्तव्यं धर्मार्थसहितं वच : । शृणोतियदिनोराजास्यात्सभ्यस्तदाऽनृण : इति ॥ भीताप्रमोदाद्यर्थयाज्ञिके : प्रचितेऽग्नि विशेषे ॥ सभायांसाधु : । सभायाय : ॥ कुलीने ॥ साधौ ॥ त्रि॰ प्रत्ययिते । विश्वासपात्रे ॥ सभासम्बन्धिनि ॥

सम् । अ॰ शोभनार्थे ॥ समार्थे ॥ सङ्गार्थे ॥ प्रकृष्टार्थे ॥ सर्वतोभावे ॥ समुच्चये ॥

सम : । त्रि॰ समाने । तुल्यार्थे ॥ साध्वर्थे ॥ सर्वशब्दार्थे ॥ रागद्वेषादिरहिते ॥ समं तं । अमनेक्रय्ये । पचाद्यच् । सर्वार्थे सर्वनामसंज्ञा ॥ अवर्क्र ॥ निपातानुपदयोरनारम्भात् । सर्वेषुभूतेष्वात्मौपम्येनसर्वत्रसुखंदुःखञ्च



पश्यतितस्मिन् ॥ न॰ सम्पूर्णे । सत्ताप्रकाशाभ्यांसर्वाभिन्ने॰ निर्विशेषे॰ सर्वविकारशून्ये॰ कूटस्थे॰ नित्ये॰ एकस्मिन्॰ सर्वत्रैकरूपे॰ प्रतिदेहमेकस्मिन्॰ ब्रह्मणि ॥ समग्रमाने ॥ सङ्गमर्थे ॥ अलङ्कारविशेषे ॥ यथा । समंयोग्यतयायोगोयदिसम्भावितःक्वचित् । इदमनयोः श्लाघ्यमितियोग्यतया सम्बन्धस्यनियतविषयमध्यवसानस्य तत्तदासमम् । ततसद्योगेऽसद्योगेच । उदाहरणम् : धातु : शिल्पातिशयनिकषस्थानमेष : मृगाक्षी रूपेदेवोप्ययमनुपमोदत्तपत्र : स्मरस्य । जातंदैवात्सदृशमनयो : सङ्गतंयत्तदेतच्छृङ्गारस्योपनतमधुनाराज्यमेकातपत्रम् ॥ यथावा । चित्रंचित्रंबतबतमहच्चित्रमेतद्विचित्रंजातोदैवादुचितरचनासंविधाताविधाता । यन्निम्बानांपरिणतफलस्फीतिरास्वादनीयायश्चैतस्या: कवलनकलाकोविद : काकलोक: ॥ नक्षत्रविशेषाणांसंज्ञायाम् ॥ यथा । समंमृदुक्षिप्रध्रुवश्रवोऽग्निमघाश्विपूर्वात्रयभमितिपक्षदक्षभक्षेषु ॥ पुं॰ विष्णौ ॥ समाश्रयासदृशसर्वतेजूतितया । सर्वकालेषुसर्वविकाररहितत्वाद्वा । राशिविशेषाणांसंज्ञाविशेषे ॥ यथा ।

क्रूरोऽथसौम्यः । पुरुषोऽङ्गनाच । ओजोऽथयुग्मं विषमः समश्च । चरस्थिरद्व्यात्मकनामधेयामेषादयोमीक्रमशः प्रदिष्टाः ॥ मानस्यप्रकारविशेषे ॥ सतुयदागीतवाद्ययोस्तालोगानकाल्पनपादादिवालनश्च । एकदासमभावेनपततितदाभवतीतिसङ्गीतशास्त्रम् ॥

समकक्षः । वि० तुल्ये । समे ॥

समकन्या । स्त्री० विवाहोपयुक्तायाम् ॥ द्वितिधनञ्जयः ॥

समकोलः । पुं० चक्रभर्त्रे । दिरसने । सर्पे ॥ द्र० त्रि० शेषः ॥

समक्षम् । अ० चक्षोः समीपे ॥ चक्षोसमीपं योग्यं वा । अव्ययं विभक्तीतिसमीपे० यथार्थे वाऽव्ययीभावः । प्रतिपरोनिटच् ॥

समगन्धकः । पुं० कृत्रकधूपे ॥

समगन्धिकम् । न० उशीरे ॥

समग्रः । त्रि० समस्मिन् । सर्वस्मिन् । विश्वस्मिन् । अशेषे । सम्पूर्णे ॥ सङ्गतमग्रमस्य ॥ समं यसते वा । अन्येभ्योपीतियसेड्ः ॥ शोभनाग्रके ॥ सम्रायेणफलेनविद्यते यत्तत ॥

समङ्कः । पुं० मूषके ॥ सम्यक्प्रकारेणछिद्रादिकरणेन० अङ्कयति० चिह्नयतिवस्त्रादिकम् । अङ्क० । अच् ॥

समङ्गा । स्त्री० मञ्जीठङ्ग० प्र० ओषधौ । पर्यायास्तु । मञ्जिष्ठाविकसाजिङ्गीसमङ्गाकालमेषिका । मण्डूकपर्णीभण्डीरीभण्डीयोजनवल्ल्यपीति ॥ लज्जालौ । नमस्कार्याम् । गण्डकार्याम् ॥ समन्तात्‌ङ्गति । अगि० । पचाद्यच् ॥

समचित्तः । त्रि० हर्षविषादशून्यमनसि । आत्मविदि ॥ समं चित्तं यस्य सः ॥ एकविषयकान्तः करणवति ॥

समजः । पुं० पशूनांवृन्दे ॥ सं बीयतेऽनया । अज० । समुदोरजः पशुष्विरूयप् ॥ मूर्खसंहतौ ॥ न० विपिने ॥

समज्ञा । स्त्री० यशसि । कीर्तौ ॥ समैः सर्वैर्ज्ञायते । ज्ञा० । घञर्थेकः ॥

समज्या । स्त्री० परिषदि । सभायाम् ॥ समजन्त्यस्याम् । अज० । संज्ञायांसमजेतिक्यप् । अजेः क्यपिवी भावेन ॥

समञ्जसम् । न० उचिते । न्याये ॥ सम्यगञ्जोऽत्र । अचप्रत्यन्ववेत्यचाऽजातियोगविभागाद्च ॥ यद्वा । सङ्गतमञ्जसात्स्वमत्र । ऋलोनपुंसकेकृतिक्स्वत्वम् । त्रि० समीचीने ॥ अभ्यस्ते ॥ अविरुद्धे । युक्ते ॥ न्याय्ये । स्वच्छबाधे ॥

समष्ठ :। पुं० शाकभेदे। गण्डीरे॥
समता। स्त्री० साम्ये। समत्वे॥ समत्वमाराधनमच्युतस्येतिप्रह्लादवचनम्॥ समवर्त्तित्वे। मध्यस्थत्वे॥ चित्तस्यरागद्वेषादिरहितावस्थायाम्। तल्॥
समतिसृष्ट :। त्रि० अनुज्ञाते॥
समतीत :। त्रि० चिरविनष्टे॥
समत्रयम्। न० समभागागुरुगुडशुण्ठीहरीतकीषु॥
समदर्शनम्। न० समाभदृष्टौ॥
समदर्शी। त्रि० सम्यग्दर्शिनि। ज्ञानिनि। सदृशरूपवस्तुदर्शनशीले। पण्डिते॥ समं ब्रह्मद्रष्टुंशीलंयस्य। णिनि :॥
समदृक्। पुं० ज्ञानिनि। ब्रह्मात्मैक्यज्ञानवति॥ समं ब्रह्मपश्यति। दृशिर्०। क्विप्॥ अहौवाहारेवाकुसुमशयनेवाद्दृषदिवामणौवालोष्टेवाबलवतिरिपौवासुहृदिवा। तृणेवास्त्रैणेवाममसमदृशोयान्तुदिवसा: क्वचित्पुण्यारण्येशिवशिवशिवेतिप्रलपत :॥
समदृष्टि :। स्त्री० सर्वत्रतुल्यदर्शने॥ यथा। दु:खेसुखेवाविषमेन्द्रियादृष्टिर्वर्त्ततेसदा। तथागमोवमित्रेचसमदृष्टिस्सास्मृतेतिपद्मपुराणे क्रियायोगसारे १६ऽध्याय :॥
समधिक :। त्रि० अधिके। अतिरिक्ते। सम्यगधिक :॥
समधिगत :। त्रि० प्राप्ते। अधिगते॥ सम्यगधिगत :॥ अधिगतपरमार्थान्पण्डितान्मावमंस्थास्तृणमिवलघुलक्ष्मीर्नैवतान्संरुणद्धि। अभिनवमदलेखाश्यामगण्डस्थलानांनभवतिबिसतन्तुर्वारणंवारणानां॥
समधुर :। त्रि० मधुररसयुक्ते॥ समानभारे॥ मधुरेणसहविद्यते॥ समाधूर्भारोयस्यस:। ऋक्पूरित्य:॥
समन्त :। पुं० समन्ततीर्थे॥ सीमनि॥
समन्तत :। अ० चतुर्दिगभिव्याप्ते। परित :। सर्वत :। विष्वक्०॥ समन्तात्। आद्यादित्वात्तसि:॥
समन्तदुग्धा। स्त्री० स्नुहीद्रुमे। सीहुण्डे॥ समन्ताद्दुग्धमस्या :॥
समन्तपञ्चकम्। न० कुरुक्षेत्रे॥
समन्तभद्र :। पुं० सुगते। बुद्धे। समन्तंभद्रंयस्य स :। समन्तात्सर्वत :पुण्यसम्भारतो० ज्ञानसम्भारतश्चभद्र :श्रेष्ठ :। पञ्चमीतियोगविभागात्समास:। पृषोदरादि:॥
समन्तभुक्। पुं० अनले। अग्नौ॥
समन्तात्। अ० समन्ततीर्थे॥
समन्यु :। त्रि० सक्रोधे॥
समन्वय:। पुं० लिङ्गै:शास्त्रतात्पर्यसम्बन्धे॥ भिन्नानांसरूपतायाम्॥

सम्यगन्वय : ॥
समन्वारम्भणम् । न॰ समनुगमने ॥
समन्वित : । वि॰ सम्यगन्विते । संयुक्ते ॥
समन्विततय : । पुं॰ एकताले ॥ सम्यक् अन्वितोलयैर्नृत्यगीतवाद्यार्थासाम्यंथस : ॥ सम्यगन्वितोलयोमध्यमलयोयस्मिन् ॥
समपद : । पुं॰ रतिबन्धविशेषे ॥ यथा । योषित् पादौ हृदिस्थाप्य कराभ्यांपीडयेत् स्तनौ । यथेष्टंताडयेद्योनिंबन्ध : समपद : स्मृतइति ॥ न॰ युद्धकालेधन्विनांपादन्यासविशेषे । धन्विनांपादयोस्तुल्यरूपतयाधारणे ॥ धन्विनांस्थाने ॥
समपर्य्यासनम् । न॰ परिवर्त्तने ॥
समपादम् । न॰ धन्विनांपादयोस्तुल्यरूपतयाधारणे ॥
समबुद्धि : । त्रि॰ सर्वत्ररागद्वेषशून्ये ॥ क : कोद्दक् कर्मा॰ तुल्यव्यापृतबुद्धौ ॥
समभिव्याहार : । पुं॰ सहिते ॥
समभिव्याहृत : । त्रि॰ सहोच्चरिते ॥ सहिते ॥
समभिहार : । पुं॰ पाभीक्ष्ण्ये । पौन : पुन्ये ॥ भृशार्थे ॥ समभिहरणम् । हृञ्॰ । घञ् ॥ सम्यगभिहारोवा ॥ विप्रकीर्णानांद्रव्याणांराशीभावे । शिषशिषिवाचकपदयो : सहोच्चारणे ॥
समभूमि : । स्त्री॰ समानस्थाने । भागे ॥
समम् । अ॰ सहार्थे । सार्द्धम् । सत्रम् ॥ समति । षम॰ । अम् ॥
समय : । पुं॰ काले । दिष्टे । अनेहसि ॥ सम्यगेति । इण् गतौ । पचाद्यच् ॥ कार्यकाले ॥ समयेहिसर्वमुपकारिकृतम् । सर्वंसमयेकृतमुपकार्यंभवति ॥ शपथे ॥ आचारे ॥ सिद्धान्ते ॥ धियि । संविदि ॥ क्रियाकारे ॥ निर्देशे ॥ सङ्केते ॥ भाषायाम् ॥ सम्पदि ॥ नियमे ॥ अवसरे ॥ समयनम्॰ समीयन्तेऽनेनवा॰ समेतिवा । इण्॰ इगतौवा । एरच्॰ पुंसीतिघोवा । पचाद्यज्वा ॥ सङ्गमे ॥
समयकार : । पुं॰ सङ्केते ॥
समयज्ञ : । त्रि॰ कालज्ञे ॥ समयंजानाति । ज्ञा॰ । क : ॥
समयभेदी । त्रि॰ संविद्व्यतिक्रमकारिणि ॥
समया । अ॰ अन्तिके । निकटे ॥ मध्ये ॥ समेति॰ समयनंवा । इण्॰ । आः समिण् निकषिभ्याम् ॥ कालविज्ञापने ॥
समयाचार : । पुं॰ समयोचिताचरणे ॥ तन्त्रविशेषे ॥

समयाध्युषित : । पुं॰ सूर्यनक्षत्र वर्जितेकाले ॥ समयः अध्युषितो यस्मिन् ॥

समयी । पुं॰ भगवत्याचरणभक्तिभावप्रतिपादकशास्त्रनिष्ठे ॥

समर : । पुं॰ न॰ युद्धे । रणे ॥ समरणम् । ऋगतौ॰ भ्वादि: । ऋदोरप् ॥

समरभ : । पुं॰ रतिबन्धविशेषे ॥ यथा । स्वजङ्घाद्वयसंयुक्तं कृत्वायोषित्पदद्वयम् । स्तनौधृत्वारमेत् कामीबन्ध : समरभ : स्मृतइति ॥

समरविजया । स्त्री॰ यात्राप्रभेदे ॥ समरविजयायात्रायायोगविलग्नस्थितौ शवेयोगेषु ॥ स्थितौश्चयेगेषु॰ राजयोगेषु । सालग्नग्रहबलवशेनमनवधेतिया यात्रांद्रष्टव्या ॥

समर्थ : । त्रि॰ हिते ॥ शक्ते । शक्तिसम्पन्ने ॥ संबद्धे । उपायकुशले । समर्थयते॰ समर्थ्यतेवा । अर्थउपयाञ्चायाम् । पचाद्यच॰ अच्वा ॥ सम्बद्धार्थे ॥

समर्थता । स्त्री॰ सामर्थ्ये ॥

समर्थनम् । न॰ अनुचितोचितनिश्चये ॥ सम्प्रधारणायाम् ॥ अर्थयते: सम्पूर्वात्॰ ल्युट् ॥ चोद्यपरिहारे ॥

समर्थना । स्त्री॰ समर्थने ॥ युच् ॥

समर्पयिता । त्रि॰ प्रतिपादयितरि ॥

समर्थित : । त्रि॰ कृतसमाधाने ॥

समर्द्धक : । त्रि॰ वरदातरि । वरदे । इष्टार्थप्रदेदेवतादौ ॥ समृध्नोति । ऋधुवृद्धौ । ण्वुल् ॥

समर्पणम् । न॰ सम्यगर्पणे । आदरेणार्पणे । सौंपना॰ इ॰ भा॰ प्र॰ ॥

समर्प्पित : । त्रि॰ कृतसमर्पणे ॥ सम्प्रोते । सम्प्रवेशिते ॥ स्थापिते ॥

समर्य्याद : । पुं॰ समीपे ॥ त्रि॰ मर्य्यादासहिते ॥ समानामर्य्यादास्य । सहमर्य्यादयेतिवा ॥ हेमचन्द्रस्तु । समर्य्यादंमर्य्यादासहितेपिच । मुख्यानुयायिनिशिष्टेप्रकृतस्यानुवर्त्तने । देशेप्याद्ये॰ इत्याह ॥

समल : । त्रि॰ मलिने । आविले ॥

समवतार : । पुं॰ तीर्थे ॥

समवर्त्ती । पुं॰ परेतराजि । धर्मराजे । पितृपतौ । यमे ॥ त्रि॰ तुल्यवर्त्तनशीले ॥ समंवर्त्तितुंशीलमस्य । सुप्यजातौणिनिस्ताच्छील्ये : ॥

समवसर्ग्या । स्त्री॰ रज्जाम् ॥ समवस्रज्यते । सृज॰ । समवपूर्वाद्दितियत् । पनीरितिकुत्वम् ॥

समवस्थित : । त्रि॰ अविनाशिनि । जन्मादिविनाशान्तभावविकारशून्यतया॰ सम्यक्तयाऽवस्थिते ॥

समवाकार : । पुं॰ नाटकभेदे ॥

समवाय : । पुं॰ समूहे ॥ कस्याश्चि

न्क्रियायांमिलने ॥ सम्बन्धविशेषे ॥ यथा । घटादीनांकपाला दौद्रव्येषुगुणकर्मणो:। तेषुजातेश्चसम्बन्ध: समवाय: प्रकीर्त्तित: ॥ अवयवावयविनो: गुणगुणिनो: क्रियाक्रियावतो: जातिव्यक्त्यो: नित्यद्रव्यविशेषयोश्च य: सम्बन्ध: स समवायइत्यर्थ: ॥ यथावा। श्रोत्रेण शब्दसाक्षात्कारे समवाय: सन्निकर्ष: कर्णविवरवर्त्याकाशस्य श्रोत्रत्वात् शब्दस्याकाशगुणत्वात् गुणगुणिनोश्चसमवायात् । स चांशश्चसम्बन्ध: । समएकएव ॥ समवायते । अय० । घञ् ॥

समवायिकारणम् । न० उपादानकारणे ॥ यत्समवेतंकार्यमुत्पद्यते तत्समवायिकारणम् । यथातन्तव: पटस्य पटश्चस्वगतरूपादे: । यथावा परमाणुर्द्व्यणुकस्य कपालश्चघटस्य । सर्वसमवायिकारणंद्रव्यमेव: समवायेस्वयमुत्तुनि: । तत्कारणत्वम् ॥

समवेत: । वि० मिलिते । सङ्गते ॥ समवायसम्बन्धेनवृत्तौ ॥ यथा । यत्समवेतंकार्यंभवतिज्ञेयन्तुसमवायिजनकंतत् ॥

समवेतसमवाय: । पुं० सन्निकर्षविशेषे ॥ यथा । शब्दत्वसाक्षात्कारेसमवेतसमवाय: सन्निकर्ष: श्रोत्रसमवेतेशब्दे शब्दत्वस्यसमवायात् ॥

समसुपान: । त्रि० सम्यक्प्रकारेणव्याप्तिविशिष्टे ॥

समष्टि: । स्त्री० सामान्ये । समस्तव्याप्तौ ॥ यथा । समस्तत्वेनसंव्याप्ति: समष्टिरितिकीर्त्तितेति अपिच । समष्टिरीश: सर्वेषांस्वात्मतादात्म्यवेदनात् । तदभावात् तदन्येतुज्ञायंतेव्यष्टिसंज्ञयेति । सङ्गते ॥

समष्ठिल: । पुं० क्षुपविशेषे । भण्डीरे । नद्याम्रे । धान्यगन्धे । कोकाये । कण्टकिफले । उपदंशे । कोकुर्ख० दू० भा० ॥

समष्ठिला । स्त्री० गण्डीरे । गण्डदूर्वा० दू० प्र० शाके ॥ सम्यग ष्ठिलावीजंयस्या: ॥

समष्ट्यज्ञानम् । न० सकलाज्ञाने ॥

समष्ठल: । पुं० समष्ठिले ॥

समष्ठिला । स्त्री० समष्ठिलायाम् ॥ समेतिष्ठति । मिथिलादयश्चेति साधु: ॥

समष्ठीला । स्त्री० समष्ठिलायाम् ॥

समसनम् । न० समासेनादानामैक्यसाधने । अनेकपदस्यएकपदीभवने ॥ सङ्क्षेपणे ॥ अवसुक्षेपणे । सम्पूर्वाल्ल्युट् ॥

समसुप्ति: । स्त्री० कल्पान्ते । महा

प्रलये । तुल्यगमने ॥

समस्त: । त्रि॰ सर्वावयवविशिष्टे । सकले । समस्मिन् । पूर्णे ॥ समस्यतेस्म । अस॰ । क्त: ॥ सी मकरणे ॥ सङ्क्षे ॥ पुञ्जीकृते । नि:क्षिप्ते ॥

समस्थ: । त्रि॰ धनधान्यादियुक्ततया सम्यगवस्थिते ॥ समेतिष्ठति । छा॰ । सुपिस्थइतिक: ॥ समभावेन स्थिते । समाने ॥

समस्थली । स्त्री॰ गङ्गायमुनयोर्मध्यस्थभूम्याम् ॥ अन्तर्वेदि समस्थलीतिहेमचन्द्र: ॥

समस्या । स्त्री॰ श्लोकस्यैकेनपादेन॰ शेषाणांत्रिभिरपि पूरणीयायां समासार्थायाम् ॥ समसनमस्यांक्रियतेऽस्यांप याम् । असु॰ । क्यप्॰ संज्ञापूर्वक त्वाद्वृद्ध्यभाव: ॥ सुमेरोर्मौक्तिकतया ख्यातिपदिवचकाननगरै: । इमर नारायणयोरक्षेत्राद्रुद्रादस्तीदृत: ॥

समा । स्त्री॰ अलङ्कारभेदे ॥ सासमालङ्कृतिर्योगोयद्वस्तेोरनुरूपयो रितिलक्षणात् ॥

समा: । स्त्री॰ शरदि । संवत्सरे । वत्सरे । हायने ॥ समन्ति॰ विक्लवं कुर्वन्तिसर्वम् । षमष्टमवैक्लव्ये । पचाद्यच्॰ टाप् । प्रायेणायंबहुवचनान्त: ॥

समांशहारी । त्रि॰ समभागार्हे ॥ यथा । समांशहारिणीमातापुत्राणां-

आमृतेपताविति दायतत्त्वम् ॥ पताविति प्रयोगस्तुप्रामादिकएव ॥

समांशिक: । त्रि॰ समभागार्हे ॥ यथा । यदिकुर्यात्समानंशान्पत्न्य: कार्या: समांशिका: । नद् त्तंस्त्रीधनंयासांदत्तं स्वर्गे प्रकीर्तित मितिदायतत्त्वम् ॥

समांशी । त्रि॰ तुल्यभागिनि ॥ यथा । ज्येष्ठ वायेष्ठभागेनसर्वेवास्यु: समांशिनइतिदायतत्त्वम् ॥

समांसमीना । स्त्री॰ प्रतिवर्षप्रसूतायांगवि ॥ समायांसमायांविजायते । समांसमांविजायतेइतिख: । उत्तरपदेयमिभक्त्योर्लोप:॰ पूर्वदलेयलोपएव ॥

समाकर्ष: । पुं॰ सम्यगाकर्षणे ॥

समाकर्षी । पुं॰ दूरगामिगन्धे । निर्हारिणी ॥

समाकुल: । त्रि॰ संयविते ॥

समाकृष्ट: । त्रि॰ सम्यगाकृष्टे ॥

समाक्रान्त: । त्रि॰ सम्यक्कृताक्रमणे । व्याप्ते ॥ अधिष्ठिते ॥

समाख्या । स्त्री॰ नाम्नि । संज्ञायाम् ॥ कीर्त्तौ । यशसि ॥ योगलभ्यार्थे ॥ विनियोगविधे: सहकारिभूतेप्रमाणविशेषे ॥ समाख्यायौगिक: शब्द: । साचद्विविधा । वैदिकीलौकिकीच, तत्र॰ हौतृचमसभक्षणाद्वत्वं॰ हौतृचम

प्रभृति॰ वैदिक्यासमाख्यया । प
व्यर्यासात्तत्पदार्थाङ्गत्वं लौकिक्या ।
व्यवेमितिसमाख्ययेतिसङ्क्षेपः
। अपर्ण ॥
समागतः । त्रि॰ सम्प्राप्ते ॥ आग
मनाश्रये । सम्यगागमनविशिष्टे ॥
समागमः । पुं॰ संयोगे ॥ सम्यगा
गमने ॥ संप्राप्तौ ॥
समाघातः । पुं॰ वधे ॥ युद्धे ॥
समाहननम् । घञ् । हनस्तोऽचि
णलोः । हो हन्तेरिति घः ॥
समाचयनम् । न॰ राशीकरणे ॥
समाचरणम् । समाचारे । समाङ्
पूर्वाच्चरेर्ल्युट् ॥
समाचारः । सम्यगाचरणे । वर्णाश्र
मादिधर्माणामाचरणे ॥ समाच
रणम् । समाङ्चरेर्भावेघञ् ॥
व्रतपन्थे ॥
समाजः । पुं॰ पशुभिन्नानांसमूहे
। यथा॰ समाजोब्राह्मणानां॰ स
माजः क्षत्रियाणाम् ॥ अनेकेषां
प्रामाणिकजनानांवासस्थाने ॥ स
भायाम् । उत्सवेषु सङ्घाते ॥ सं
बीयतेऽत्र । अज॰ घञ् । अघञ
पोरित्युक्तेर्वीभावोन । शुजिव्रज्यो
श्चेतिकुत्वनिषेधः ॥ हस्तिनि ॥
इत्यनेकार्थकोषः ॥
समाज्ञा । स्त्री॰ ख्यातौ ॥ समाज्ञा
यते । समाङ्पूर्वात्ज्ञाअवबोधने॰
इत्यस्मादातश्चोपसर्गेइत्यङ् ॥
समादरः । पुं॰ सम्माने ॥
समादानम् । न॰ सङ्ग्रहे । समी
चीनग्रहणे । सौगताह्निके । नि
त्यानांनित्यकर्मणि ॥ सम्भाषा
याम् ॥
समाधानम् । न॰ ब्रह्मणिमनः स्थि
रीकरणे । अवधाने । प्रणिधाने
। चित्तैकाग्र्यानुमत्यं समाधान
मितिन्यूतद्विल्युग्राः ॥ निगृही
तस्यमनसः श्रवणादौ॰ तदनुगुणवि
षयेचसमाधिः समाधानमितिलक्ष
णमाहुः ॥ श्रवणादिवित्यत्रादिश
ब्देनमननादिमत्तु यथार्थः । तदनुगु
णेत्यत्र॰ गुरुशुश्रूषापुस्तकसम्पादन
तद्रक्षणादिः श्रवणाद्यनुगुणोविषयो
निर्दिश्यते॰ नपुनः सुखशासद्व्या
न्नादिसङ्ग्रहादेरपश्रवणाद्यनुकूल
त्वात्तदर्थमठारम्भप्रतिग्रहादावपि
चित्तसमाधिः कर्त्तव्यइत्युपदिश्य
ते । दण्डमाच्छादनंकौपीनंपरिग्र
हेच्छेषविसृजेदितिसंन्यासकालेत्या
जितस्यदण्डकौपीनाद्यतिरिक्तस्य॰
विनाप्रतिप्रसवशास्त्रंसङ्ग्रहानुप
पत्तेरित्यर्थः । योग्ययोगसामर्थ्ये
। तत्परतायाम् । सम्यक्आधानम् ॥
समाधिः । पुं॰ समर्थने । समर्थन
मशक्ये॰ अध्यवसायो दुर्घटस्यघ
टनंवा । नीशकि ॥ नोषाकौरचना

भावहूतिस्वामी । धान्यादिषु मूल्यो
त्कर्षं प्राप्तेष्वनादरहूतिसुभूतिः
॥ नियमे । अङ्गीकारे । मौनव्रता
दौ । सिद्धान्ते । इन्द्रियरोधे । ए
कान्तभक्तियोगे । ध्याने । काव्यगु
णविशेषे अलङ्कारप्रभेदे । यथा ।
समाधिः सुकरं कार्यं कारणान्तरयोग
तः साधनान्तरोपकृतेन कर्त्रा । यद
क्लेशेन कार्यमारभ्यमाणं समाधीयते । स समा
धिर्नाम । उदाहरणम् । मानम
स्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनग
र्जितमिति ॥ समाधीयतेऽस्मिन्
मनोजन्तुः । डुधाञ् । उपस
र्गयोः किरत्यधिकरणे किः ॥
कारणसामग्र्याम् ॥ ध्याने । चित्त
स्यैकात्मनानिश्चलावस्थाने ॥ स
च समाधिर्द्विविधः । सविकल्पको
निर्विकल्पकश्चेति । तद्विवरणं स
विकल्पकनिर्विकल्पकशब्दे द्रष्टव्य
म् । ध्यानमेवार्थमात्रनिर्भासं स्वरू
पशून्यमिव समाधिः । सर्वथा वि
जातीयप्रत्ययानन्तरितः सजातीय
प्रत्ययप्रवाहः । स तु चित्तभूमिभेदे
न द्विविधः । सम्प्रज्ञातोऽसम्प्रज्ञा
तश्चेति । चित्तस्य पञ्च भूमयो भ
वन्ति । क्षिप्तं मूढं विक्षिप्तमेकाग्रं
निरुद्धमिति । समाधीयतेऽस्मिन्
सर्वमितिव्युत्पत्त्या । समाधिरत्र



कारणम् परमात्मा वा । अत्र कृ
त्स्नावस्थानं समाधिरिति गीयते । द्वि
विधोऽपि समाधिर्भवति । तथा च
कोषाधिपर्वकश्चेति । तत्र तदन
न्यत्वमारम्भणशब्दादिभ्य इति न्याये
न कारणव्यतिरेकेण कार्यस्यासत्त्वा
त् । पञ्चीकृतपञ्चमहाभूतकार्यं
व्यष्टिरूपं समष्टिरूपविराट्कार्य
त्वात् । तद्व्यतिरेकेण नास्ति । त
चापि पृथिवी शब्दस्पर्शरूपरस
गन्धाख्यपञ्चगुणा तथा समष्टिरूप
मपि पञ्चीकृतपञ्चभूतात्मकं कार्य
म् । अपञ्चीकृतपञ्चमहाभूतकार्य
त्वात् । सा च पृथिवी गन्धेतरच
तुर्गुणाकार्यत्वात् । तद्व्यतिरे
केण नास्ति । ता अतुर्गुणा आपो
गन्धरसेतरत्रिगुणात्मकतेजः का
र्यत्वात् । तद्व्यतिरेकेण नसन्ति
तदपि त्रिगुणात्मकं तेजः । गन्धरस
रूपेतरद्विगुणवायुकार्यत्वात् तद्व्य
तिरेकेण नास्ति । सोऽपि द्विगुणात्म
को वायुः । शब्दमात्रगुणाकाश
कार्यत्वात् । तद्व्यतिरेकेण नास्ति
। स च शब्दगुण आकाशो बहु स्यामिति
परमेश्वरसङ्कल्पात्मकाहङ्कारकार्य
त्वात् । तद्व्यतिरेकेण नास्ति । त
दपीशरूपं महत्तत्त्वं मायापरिणा
मत्वात् । तद्व्यतिरेकेण नास्ति ।
तदपि मायाख्यकारणं ब्रह्मत्वेन एत

न्योऽध्यस्तत्वात्, तद्व्यतिरेकेणनास्तीत्यनुसन्धानेन, विद्यमानेति कार्यकारणात्मके प्रपञ्चे, एतस्माच्चेतोवरोध : समाधि :, स लयपूर्वक उच्यते । तत्र तत्त्वमस्यादिवेदान्तमहावाक्यार्थज्ञानाभावेनाऽविद्या तत्कार्यस्याक्षीणत्वात्, एवञ्चिन्तने निष्कारणसत्त्वेन, पुन : कृत्स्नप्रपञ्चोत्थानात्, अयं सुषुप्तिवत् सबीज : समाधिर्मुख्य : । मुख्यस्तु, तत्त्वमस्यादिमहावाक्यार्थसाक्षात्कारेण, अविद्यायां निवृत्तौ सत्यां क्रमेण तत्कार्यनिवृत्तिरनाद्यविद्यायाश्च पुनरुत्थानाभावेन तत्कार्यस्यापि पुनरुत्थानाभावान्निर्वीजो बाधपूर्वक : समाधि : । स एव, सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे । आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते इत्यनेन श्लोकेन प्रदर्शित : । तथाहि । सर्वाणि निखिलानि स्थूलरूपाणि संस्काररूपाणि च । इन्द्रियकर्माणि, इन्द्रियाणां श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानां पञ्चानां, वाक्पाणिपादपायूपस्थाऽऽख्यानां बाह्यानाम्, आन्तरयोर्मनोबुद्ध्यो: कर्माणि, शब्दश्रवणस्पर्शग्रहणरूपदर्शनरसग्रहणगन्धग्रहणानि, वचनादानगमनविहरणोत्सर्गानन्दाख्यानि च, सङ्कल्पाध्यवसायौ च ।



एवं प्राणकर्माणि च, प्राणानां प्राणापानव्यानोदानसमानाख्यानां पञ्चानां कर्माणि, वहिर्नयनमधोनयनमाकुञ्चनप्रसारणाद्यशितपीतसमानयनमूर्द्ध्वनयनमित्यादीनि । अनेन पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, पञ्चप्राणा :, मनोबुद्धिश्चेति सप्तदशात्मकं लिङ्गमुक्तम्, तच्च सूक्ष्मभूतसमष्टिरूपं, हिरण्यगर्भाख्यमिह विवक्षितमिति वेदितुं सर्वाणीति विशेषणम् । आत्मसंयमयोगाग्नौ, आत्मविषयक : संयमो धारणाध्यानसम्प्रज्ञातसमाधिरूपस्तत्परिपाके सति योगो, निरोधसमाधि : । यं, पतञ्जलि : सूत्रयामास । व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधलक्षणचित्तान्वयो निरोधपरिणाम इति । व्युत्थानं, क्षिप्तमूढविक्षिप्ताख्यं भूमित्रयम्, तत्संस्कारा : समाधिविरोधिन : तेयोगिप्रयत्नेन प्रतिदिनं प्रतिक्षणञ्चाभिभूयन्ते, तद्विरोधिनश्च निरोधसंस्कारा : प्रादुर्भवन्ति, ततश्च निरोधक्षणचित्तान्वयो निरोधपरिणाम इति । तस्य फलमाह । तत : प्रशान्तवाहिता संस्कारादिति । तमोरजसो : सर्वात्मविक्षेपशून्यत्वे सति शुद्धसत्त्वरूपं चित्तं प्रशान्तमित्युच्यते । पूर्व

पूर्वप्रशमसंस्कारपाटवेनतद्वाधिक्यंप्रशान्तवाहितेति । तत्कारणञ्च सूचयामास । विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्य इति । विरामो वृत्त्युपरम : तस्य प्रत्यय: कारणं वृत्त्युपरमार्थ : पुरुषप्रयत्नस्तस्याभ्यास : पौन : पुन्येनसम्पादनम्॰ तत्पूर्वकस्तज्जन्योऽन्य : सम्प्रज्ञातादिलक्षणोऽसम्प्रज्ञातइत्यर्थः । एतादृशोयआत्मसंयमयोगःस एवाग्निस्तस्मिन्॰ज्ञानदीपिते॰ज्ञानंवेदान्तवाक्यजन्योब्रह्मात्मैक्यसाक्षात्कार:॰तेनाविद्यातत्कार्यनाशद्वारादीपितेप्रज्वलितेसाधपूर्वकेसमाधौसमर्पितलिङ्गशरीरमपरिशुद्धिप्रविलापयन्तीत्यर्थः । तदेकतानतामेतिससमाधिर्विधीयते ॥ तत्॰ ध्यानम्॰ ऐकताननताम्॰ ध्येयैकनिर्भासत्वम्॰ यदाऽभ्येति॰ तदा॰समाधिरितिशास्त्रेषु प्रदिश्यते ॥ अपरञ्च । निर्विकारतयावृत्त्या ब्रह्माकारतयापुन : । वृत्तिविस्मरणंसम्यक्समाधिर्ज्ञानसंज्ञक : ॥ अपिच । ध्यातृध्यानेपरित्यज्यक्रमाद्ध्येयैकगोचरम् । निवातदीपवच्चित्तं समाधिरभिधीयतइति । पुनश्च । नित्यंशुद्धं बुद्धियुक्तं सत्यमानन्दमद्वयम् । तुरीयमक्षरंब्रह्मअहमस्मिपरंपदम् । अहम्ब्रह्मेत्यव स्थानंसमाधिरितिगीयते ॥ इ॰ गा॰ ४४ ॥ अपिच । तस्यैवकल्पनाहीनंस्वरूपग्रहणंहियत् । मनसाध्याननिष्पाद्यंसमाधि : सोऽभिधीयते ॥ इ॰ वि॰ पु॰ स अपरञ्च । इमंगुणसमाहारमनात्मत्वेनपश्यत : । अन्त : शीतलतायास्यसमाधिरितिकथ्यते । इतियोगवाशिष्ठेउपशमप्रकरणम् ॥ समाधीयतेसर्वमस्मिन्॰ समाधानमनेनवा । समाङ्पूर्वाद्धाञोऽधिकरणादौ॰ उपसर्गेघो: कि : ॥

समाधिविघ्न: । पुं॰ लयविक्षेपकषायरसास्वादलक्षणेषुचतुर्षु ॥

समाधिस्थ : । त्रि॰ व्युत्थितचित्तः ॥ समाधियुक्तः ॥ यथा । मन : सङ्कल्परहितमिन्द्रियार्थानचिन्तयन् । यश्चब्रह्मणिसंलीनंसमाधिस्थ : सकीर्त्तित : । ध्यायत : परमात्मानमात्मस्थं यश्चयोगिन: । मनस्तन्मयतांयातिसमाधिस्थ : सकीर्त्तित : । इतिगारुडेगीतासारे २४॰ अध्याय : ॥

समान: । पुं॰ इन्नाभिसर्वसन्धिवर्त्तीवायुविशेषः । शरीरमध्यगतेऽशितपीतान्नपानादिसमीकरणकारीवायौ । नाभिसंस्थिते ॥ यथा । पीतंभक्षितमाघ्रातंरक्तपित्तकफानिलम् । समंनयतिगात्रेषुसमानो

नाममात्रतइति । अत्रउक्तञ्चवर्णे
षु ।। समानशब्देनपूर्व्वाचार्य्यैर्नि
र्द्दिशाद्धेभिधीयन्तेदृशसमानाइ
तिवचनादितिकैयटः । वचना
दिति । यथा॰ इई उऊ ऋॠ
ऌॡ इयसमानाइतिपूर्व्वव्याकरण
वचनादित्यर्थइतिविवरणम् । त्रि॰
सती । साध्वी ॥ समे । तुल्ये ।
ऊनातिरिक्तवर्ज्जे ॥ एकस्मिन् ॥
समन्तादनित्यनेन । अन॰ । इल
श्चेतिघञ् ॥ समतिवा अम॰ ।
...क्लीत्यवयेविवचनशक्तिषुचानश्
। आगमशासनमनित्यमितिमुमन
॥ सहमानेनवर्त्ततइतिवा । वोप
सर्ज्जनस्येतिसभावः ॥ समानं
मानमस्येतिवा । समानश्छन्द
सीतिसः ।

समानकालीनः । त्रि॰ समकालो
त्पत्तिके ॥ यथा । गोषुदुह्यमाना
स्वागतः॰ दुग्धास्वागतइत्यादौ
समानकालीनत्वंभाषते । तेनगो
विषयकवर्त्तमानदोहनकालीनग
मनानुकूलकृतिमान् । एवंगोवि
षयकातीतदोहनसमानकालीनाती
तगमनानुकूलकृतिमानितिबोधः ॥

समानयानकर्म्मा । पुं॰ सन्धेः प्रभेदे
॥ यथा । तात्कालिकफललाभा
र्थंमुत्तरकालीनफललाभार्थंवाबल
वताअन्तरेणसहान्यंप्रतियानादिक
र्म्मक्रियते॰ ससमानयानकर्म्मासन्धि
र्ज्ञेयः ॥

समानाधिकरणः । पुं॰ समानविष
ये ॥

समानाभिहारः । पुं॰ समानगुणानां
मिश्रणे ॥ यथा॰ तोयदमुक्तजल
बिन्दूनां॰ जलाशयेसमाभिहारः
यथाग्रामाच्छिषादिदुग्धपतितानांग
व्यदुग्धानाम् ॥

समानालङ्कृतिः । स्त्री॰ अलङ्कारवि
शेषे ॥ यथा । समानालङ्कृतिर्यो
गेवस्तुनोरनुरूपयोरिति ॥

समानिका । स्त्री॰ वर्णवृत्ताक्षरे ॥
हारमेकवाथदासकृलाभवेत्तदा ।
सप्तवर्णनिर्मितासासमानिकामता
॥ यथा । पञ्चचारुचञ्चलानीलनीर
जश्रिया ॥ चालिमन्मनोहृतंवं
शवादमोदितम् ॥ अनुष्टुब्भेदेपि
। म्लौरजौसमानिकातु । यथा ।
वन्दकृष्णपादपद्ममस्तिहृत्तडागस
द्म । धीः समानिकापरेणमो
चिताचमत्सरेण ॥

समानोदकः । पुं॰ चतुर्द्दशपुरुषप
र्य्यन्तेजन्मनामस्मृतिपर्य्यन्ते च ॥
गोत्रजमात्रे ॥

समानोदर्य्यः । पुं॰ सहोदरे । सो
दर्य्ये ॥ समानेउदरेशयितः स्थि
तः । समानोदरेशयितश्चोचोदा
त्तइतियत् । विभाषोदरइतिपा

स्त्रिकत्वात्सादेशोन ॥

समाप : । पुं॰ देवयजने ॥ समाप्यापोयस्मिन् । ऋदोरप् । इत्यप् ॥

समापक : । त्रि॰ समापनकर्त्तरि ॥ समापयति । ण्वुल् ॥

समापत्ति : । स्त्री॰ यदृच्छयासङ्गतौ ॥

समापनम् । न॰ परिच्छेदे ॥ समाप्तौ ॥ वधे ॥ समाधाने ॥ लब्धे । प्राप्ते ॥

समापन्न : । त्रि॰ समाप्ते ॥ प्राप्ते । क्लिष्टे ॥ वधे ॥

समापय्य । अ॰ समाप्तिं प्रापय्येत्यर्थे ॥

समापिका । स्त्री॰ वाक्यसमापकक्रियायाम् ॥ तव्यतिबादयोभवन्ति । यथा । देवदत्तोगच्छति । क्वचित् क्तान्तादिपदेनापिवाक्यसमाप्ति : । यथा । नाम्नाहृष्ट : शिवोजने. । क्वचित्तव्याद्यन्तक्रिययाऽपिवाक्यसमापकत्वम् । यथा । मया कांदिशंगन्तव्यम् । याभ्यादन्तक्रियाऽसमापिका॰ तवयक्त्वादयोभवन्ति । यथा । गच्छन्भुङ्क्ते । भुक्त्वाव्रजति पीत्वास्वपिति ॥

समापित : । त्रि॰ कृतसमापने ॥ यथा । आरब्धं मलमासात्प्राक् यत्कर्म्मनसमापितम् । आगतेमलमासेपितत्समाप्यं नसंशयइतिमलमासतत्त्वम् ॥

समाप्त : । त्रि॰ समाप्तिंगते । समाप्तिविशिष्टे ॥ यथा । समाप्ते यद्विजानीयान्मयैतदन्यथाकृतम् । यतस्तदन्यथाभूतंततएवसमापयेदितितिथ्यादितत्त्वं ॥

समाप्ति : । स्त्री॰ अवसाने ॥ समर्थने ॥ समापनम् । आप्लृ॰ । स्त्रियांक्तिन् ॥ परिप्राप्तौ ॥

समाप्तिका । स्त्री॰ समाप्त्यर्थे ॥

समाप्त्यर्था । स्त्री॰ समस्यायाम् ॥

समाप्य : । त्रि॰ समापनीये ॥

समायोग : । पुं॰ संयोगे ॥ समवाये ॥ प्रयोजने ॥ समायोजनम् । युजिर्॰ । घञ् ॥ युद्धे॰ । रतौ॰ ; अन्वये॰ । वशीकरणसाधने ॥

समारत : । त्रि॰ उपरते ॥

समारम्भ : । पुं॰ उपक्रमे । आरम्भे । यथा । समारम्भाभग्ना : कतिकतिनवारांस्तवपशो : पिपासोस्तुच्छेस्मिन् द्रविणमृगतृष्णार्णवजले । तथापिप्रत्याशाविरमतिमतेऽद्यापिशतधानजीर्णेशस्तेषामिपतममूनियाविघटितमिति ॥ जीर्णम्॰ विदीर्णम् ॥ समारभ्यते । रभेर्घञ् । रभेरशब्लिटोरितिनुम् ॥

समारोपित : । त्रि॰ विपर्य्ययुक्ते ॥ सम्यक्कृतारोपके । सम्यक्

ल्पिते ॥ सम्यक् आरोपित : ॥

समारोह : । पुं॰ सम्यगारोहणे । नीचादूर्ध्वगमने ॥ सोपाने ॥ समारुह्यतेऽनेन॰ समारोहणम् । समारोहतिवा । रुहे : कर्मणि॰ भावे वाघञ् । पचाद्यच्वा ॥

समालम्बी । पुं॰ भूतृणे ॥

समालम्भ : । पुं॰ विलेपने । कुङ्कुमादिविलेपे ॥ समालम्भनम् । डुलभष् प्राप्तौ । घञ् । उपसर्गात्खल् घञोरितिमुम् । घातने ॥

समालम्भनम् । न॰ विलेपे ॥ घातने ॥ सम्यक् स्पर्शने ॥

समालिङ्ग : । पुं॰ समालिङ्गने ॥

समाली । पुं॰ कुसुमाकरे ॥

समावर्त्त : । पुं॰ विष्णौ । संसारचक्रस्य सम्यगावर्त्तकइतितथा । जननमरणादिरूपं संसारचक्रमच्छजीवान् प्रतिसम्यगावर्त्तयन् समावर्त्तइत्यर्थ : । समाङ् पूर्वाद्वृतेर्ण्यन्तात् पचाद्यच् ॥ समावर्त्तनम् । हृतु॰ । भावेघञ् ॥

समावर्त्तनम् । न॰ साङ्गाधीतवेदस्य गुरोरनुज्ञयागृहागमे । वेदाध्ययनानन्तरगार्हस्थ्याधिकारप्रयोजककर्मणि ॥ सम्पूर्वाद्वृत्तेर्ल्युट् ॥

समावाय : । पुं॰ समुदाये । समूहे ॥

समावास : । पुं॰ स्थाने ॥

समाविष्ट : । वि॰ आक्रान्ते ॥

समावृत्त : । पुं॰ लब्धानुज्ञे । साङ्गवेदाध्ययनानन्तरंत्वमिदानीं गृहस्थोभवेतिगार्हस्थ्यायगुरो : प्राप्तानुज्ञे ॥ समावर्त्तते स्म । हृतु॰ । मत्यर्थेतिक्त : ॥

समावेदनम् । न॰ निवेदने ॥

समावेश : । पुं॰ विन्यासे ॥ एकत्रसहावस्थाने ॥

समावेशित : । वि॰ सहावस्थिते ॥ प्रविष्टे ॥

समाश : । पुं॰ सहभोजने ॥

समाश्रय : । पुं॰ वासस्थाने ॥ सम्यक्० आश्रय : । सम्यगाधारे । सहाये ॥

समाश्रित : । वि॰ सम्यक् शरणागते ॥ सम्यक् प्रकारेणाश्रित : ॥

समाश्वस्त : । वि॰ सञ्जातविश्वासे ॥

समाश्वास : पुं॰ सम्यगाश्वासे ॥

समास : । पुं॰ सङ्क्षेपे । समर्थने ॥ ऐकपद्ये । पदयो : पदानांवाएकीकृतौ । समसने । समसनम्॰ पदयो : पदानांवा॰ एकपदीकरणम् समास : सङ्क्षेप : । भावे घञ् । सचानेकपदैक्यम् । सचतुर्द्धा॰ प्रधानार्थस्यचातुर्विध्यात् । तथाचोक्तं महाभाष्ये । इहकश्चित्समास : पूर्वपदार्थप्रधान : ॰ कश्चिदुत्तरपदार्थप्रधान : ॰ कश्चि

द्वन्द्वपदार्थप्रधान : • क्वचिदुभय पदार्थप्रधानइति ॥ पुनश्चद्विविधो नित्योऽनित्यभेदात् । अविग्रहोनित्यसमास : • अस्वपदविग्रहोवा• समस्यमानयावत्पदरहितविग्रहइतिवावत् । । तद्भिन्नोऽनित्य : ॥ अपिच । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपा : पञ्चवृत्तय : । परार्थाभिधानंवृत्तिः॰परशब्दस्यार्थस्तस्याभिधानमितियावत् । वृत्त्यर्थबोधकंवाक्यंविग्रह: । सद्विधा । लौकिकोऽलौकिकश्च । परिनिष्ठितत्वात्साधुर्लौकिक : । प्रयोगानर्होऽसाधुरलौकिक : । यथाराज्ञ : पुरुष : । राजन्ङस्॰ पुरुषसु॰ इति । अविग्रहोनित्यसमासोऽस्वपदविग्रहोवा । समासश्चतुर्द्धेतिप्रायोवाद:॰अव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वाधिकारस्थिभूतानामपिसहसुपेतिविधानात् । पूर्वपदार्थप्रधानोऽव्ययीभाव : • उत्तरपदार्थप्रधानस्तत्पुरुष:• अन्यपदार्थप्रधानोबहुव्रीहि : । उभयपदार्थप्रधानोद्वन्द्वः इत्यपिप्रायोवाद: प्रायोभिप्राय: । सूपप्रति• उन्मत्तगङ्गमित्याद्यव्ययीभावे• अतिमालादौतत्पुरुषे• द्वित्रा : सपुत्रइत्यादिबहुव्रीहौ• दन्तोष्ठमित्यादिद्वन्द्वेचाभावात् । तत्पुरुषविशेष : कर्मधारय:• तद्विशेषोद्विगु: । अनेकपदत्वंद्वन्द्वबहुव्रीह्योरेव•तत्पुरुषस्य क्वचिदेवेत्युक्तम् ॥ किञ्च । सुपां सुपातिङानाम्नाधातुनाऽथतिङांतिङा । सुवन्तेनेतिविज्ञेय: समास: षड्विधोबुधै : ॥ सुपा॰ राजपुरुष : । तिङा॰ पर्यभूषत । नाम्ना॰ कुम्भकार : । धातुना॰ कटप्रू: अजस्रम् । तिङां॰ तिङा॰ पिबतखादत । तिङांसुपा॰ कृन्तविचक्षणेतियस्यांक्रियायांसाकृन्तविचक्षणा । एहीडादयोन्यपदार्थेइति॰ मयूरव्यंसकादौपाठात् समास : ५ समुदाये । समूहे ॥

समासक्त : । त्रि॰ सम्यगासक्ते । संयुक्ते ॥

समासञ्जनम् । न॰ समासङ्गे । मेलने संयोगे ॥

समासत्ति : । स्त्री॰ संनिकर्षे ॥

समासन्न : । त्रि॰ प्रत्यासन्ने । निकटवर्त्तिनि ॥ समासीदतिस्म । षद्लृ॰ । गत्यर्थेतिक्त : । समासाद्यतेस्मवा ॥

समासार्थ : । पुं॰ तुन्ने । नन्दिवृक्षे ॥ त्रि॰ समासाश्रये । समासविशिष्टे ॥

समासादित: । त्रि॰ आहृते । प्राप्ते ॥

समासाद्य : । त्रि॰ प्राप्ये । गम्ये ।

व्याप्तुंशक्ये । समीसायते । षट्
ल० । उद्दतीश्यैत् ।
समासार्या । स्त्री० समस्यायाम् ।
पूरणकृतपदाकाङ्क्षायाम् । क
विशक्तिपरीक्षार्थमपूर्णतयैवपठ्य
मानायाम् । यथा । शतचन्द्रं न
भस्तलमिति । तत्र० दामोदरक
राघातविह्वलीकृतचेतसा । दृष्टं चा
णूरमल्लेनेत्यादिना० सा० पूर्यते
॥ समासीर्थोयस्या : ॥
समासोक्ति : । स्त्री० अर्थालङ्कारभेदे
॥ यथा । परोक्तिर्भेदकै : श्लिष्टै :
समासोक्ति : । प्रकृतार्थप्रतिपाद
कवाक्येन० श्लिष्टविशेषणमाहात्म्या
न्नतुविशेष्यस्यसामर्थ्यादपि० यदप्र
कृतस्यार्थस्याभिधानंसासमासोक्ति:
॥ उदाहरणम् । लहिऊणतुज्भबा
हुफंसंजीएसकोविउल्लासो । जय
लच्छीतुहविरहेणहोज्जलादुव्वलाणं
सा ॥ अत्रजयलच्मीशब्दस्यकेवलं
कान्तावाचकत्वं नास्ति । प्राकृत
स्यसंस्कृतन्तु । लब्ध्वातवबाहुस्पर्शं
यस्या : सकोप्युल्लास: । जयलच्मी
स्तवविरहेणखलूज्ज्वलादुर्बलाननु
सेति ॥ अत्रबाहुस्पर्शलाभप्रयुक्ती
ल्लासादिसाधारणविशेषणबलाज्जय
लक्ष्मीस्तत्कान्तोनायिकावृत्तान्तरूप
तयागम्यतइतिसमासोक्तिरलङ्का
र : ॥

समाहरणम् । न० समाहारे ॥
समाहार: । पुं० । समुच्चये । ससमुदा
यकरणे । एकत्रकरणे । बहूनांभि
न्नानांवाक्यव्यापारेणबुद्ध्यावापद्मम्
लीभिभुवननवद्राशीकरणे । सङ्क्षे
पे ॥ समूहे । संहतिप्रधानेवाथेवि
ग्रिये ॥ यथा छत्रोपानहम्वाकत्व
चम् । शमीदृषदमिति ॥ अत्र
संहतैरेकत्त्वादेकवचनं नित्यक्लीब
तावभवतो ॥ समाहरणम् । हृ
ञ० । घञ् । सम्यगाहारे ॥
समाहित : । त्रि० यतात्मनि । अ
नन्यमनसि । समाहितत्वमेका
ग्रयंमनस: श्रवणादिषु ॥ समाधि
स्थे ॥ उक्तसिद्धान्ते ॥ आहिते
॥ निर्विवादीकृते ॥ प्रतिज्ञाते ।
संश्रुते । अङ्गीकृते ॥ समाधीयते
स्म । क्त : । दधातेर्हि : ॥ सम्य
गाहित : स्थितोवा ॥ सावधाने ॥
अलङ्कारान्तरे ॥
समाहृत : । त्रि० सम्मेलिते ॥
समाहृति : । स्त्री० सङ्ग्रहे । समा
हरणम् । भावेक्तिन् ॥ एककर्तृ
काणामनेककर्तृकाणांवाएकाभि-
प्रायाणांवाक्यानांसमाहरणे ॥ स
ङ्क्षियते० सङ्क्षेपेणप्रतिपाद्यतेऽन
या । क्तिन् ॥
समाह्वय : । पुं० आहवे । सङ्गरे ॥
आह्वाने ॥ प्राणिद्यूते । पशुभि :

पत्तिभिर्यायुते ॥ तस्यनिषिद्धत्वं यथा । द्यूतं समाह्वयञ्चैव राजाराष्ट्रान्निवारयेत् । राज्यान्तकरणावेतौ द्वौदोषौपृथिवीक्षिताम् ॥ प्रकाशमेततत्तास्कर्य्यं यद्देवनसमाह्वयौ । तयोर्नित्यंप्रतीघातेन्नृपतिर्यत्नवान्भवेत् ॥ अप्राणिभिर्यत्क्रियतेतल्लोकेद्यूतमुच्यते । प्राणिभिः क्रियतेयस्तुसविज्ञेयः समाह्वयः ॥ द्यूतं समाह्वयञ्चैव यः कुर्यात्कारयेतवा । तान्सर्वान्घातयेद्राजाशूद्रांश्चद्विजलिङ्गिनइति ॥ स समाह्वयन्तेऽत्र । ह्वेञ्स्पर्द्धायाम् । पुंसीतिघः । बाहुलकान्नात्वम् ॥

समाह्वा । स्त्री० गोजिह्वायाम् । गोजियालता० इ० भा० प्रसिद्धा ॥

समित् । अ० निन्दायाम् ॥

समित् । स्त्री० युद्धे । आयोधने । रणे ॥ समयनम् । इणगतौ । सम्पदादित्वात्क्विप् । तुक् ॥

समितः । त्रि० सङ्गते ॥ सम्यक् कृतः ॥

समिता । स्त्री० गोधूमचूर्णविशेषे । मयदा० इ० भा० प्र० ॥ यथा । गोधूमाधवलाधौताः कुट्टिताः शोषितास्ततः । प्रोक्षितायन्त्रनिष्पिष्टाश्चालिताः समितास्मृतेतिराजनिघण्टः ॥

समितिः । स्त्री० आजौ । सम्पराये । अभ्यामर्द्दे । सङ्ग्रामे ॥ सभायाम् ॥ सङ्गमे ॥ साम्ये ॥ संहतौ ॥ सहविद्यमानामिलितैर्वासमितिः प्रमाऽस्याम् । समयनम् ॥ समीयतेवाऽस्याम् । इणगतौ । क्तिन् । समयन्त्यस्यांवा ॥

समितिञ्जयः । पुं० श्रीहरौ ॥ समितौयुद्धेजयति । जिजये । संज्ञायांभृतवृजीत्यादिनाखच्मुमागमः ॥ समितिंयुद्धंजयतीतिवा ॥

समितिनन्दनः । त्रि० युद्धोत्सुके ॥ नन्दतीतिनन्दनः । समितौयुद्धेनन्दनः ॥

समिथः । पुं० वह्नौ ॥ समेति । इण० समीणइतिथक् ॥ सङ्ग्रामे सम्यगेतिजयार्थमत्र ॥

समिद्धः । त्रि० प्रज्वलिते । सम्यग्दीप्ते । समिद्धेम्नावाहुतीर्जुहोतीतियथा ॥

समिद्वरः । पुं० किंशुकवृक्षे ॥

समित् । स्त्री० अग्निसन्दीपनार्थतृणकाष्ठादौ । इन्धने । एधसि । समिन्धने । ईन्धन० इ० भा० प्र० ॥ समिद्ध्यतेऽनया । ञिइन्धीदीप्तौ । सम्पदादित्वात्करणेक्विप् । नलोपः ॥ होमीयकाष्ठे ॥ तल्लक्षणं यथा । प्रादेशमात्राःसमिधः सवल्कास्त्वनाग्निराः । समिधः

कल्पयेत्प्राज्ञ : सर्वकर्मसु सर्वदे तिमत्स्यपुराणम् ॥ छन्दोगपरिशिष्टेपि । नाङ्गुष्ठादधिकाग्राह्या समित्स्थूलतयाक्वचित् । नविमुक्तत्वचाचैवनसकीटानपाटिता ॥ प्रादेशान्नाधिकानोनानतथास्याद्विशाखिका । नसपत्रानिर्वीर्याहोमेषुचविजानतेति ॥ निषिद्धलक्षणांयथा । विशीर्णाविदलाह्रस्वावक्रा : स्थूलाद्विधाकृता : । कृमिदष्टाश्च दीर्घाश्चसमिधोनैवकारयेत् ॥ अत्र दोषोयथा । विशीर्णायु : क्षयंकुर्याद्विदलापुत्रनाशिनी । ह्रस्वानाशयतेपत्नींवक्राबन्धुविनाशिनी ॥ कृमिदष्टारोगकरीविद्वेषणकरीद्विधा । पशून्मारयतेदीर्घास्थूलाचार्थविनाशिनीतितन्त्रम् ॥ नवग्रहाणांसमिधोयथा । अर्क : पलाश : खदिरस्त्वपामार्गोथपिप्पल : उदुम्बर : शमीदूर्वा: कुशाश्चसमिध : क्रमादिति ॥

समिध : । पुं॰ असितार्चिषि । अग्नौ ॥

समिन्धनम् । न॰ समिधि ॥

समिर : । पुं॰ वायौ ॥ इ॰ हे॰ च न्द्र : ॥

समी । स्त्री॰ शम्याम् । बीजगुप्त्याम् ॥ समति । षम॰ । अच् । गौरादि : ॥

समीकम् । न॰ साम्परायिके । युद्धे ॥ सममनम् । षम॰ । अनीकादयश्चेतिकन् ॥ सम्यगयनंवा । ईगत्यादौ । बाहुलकात्क : ॥

समीचम् । न॰ साङ्ख्यशास्त्रे ॥

समीक्षणम् । न॰ सम्यङ्निरूपणे ॥ प्रेक्षणे ॥ सम्यक्प्रकारेणईक्षणं दर्शनम् ॥

समीक्षा । स्त्री॰ तत्त्वे ॥ बुद्धौ ॥ निभालने । समीक्षणे । दर्शने ॥ मीमांसाशास्त्रे ॥ सम्यगीक्षणमनयावा ॥ ईक्ष॰ । गुरोश्चेत्य : । टाप् ॥ यत्ने ॥

समीक्ष्य : । त्रि॰ समीक्षणीये । दर्शनीये ॥

समीक्ष्यमाण : । त्रि॰ प्रेक्ष्यमाणे ॥

समीच : । पुं॰ समुद्रे । अकूपारे ॥ संयन्त्यस्मिन् । इण॰ । समीणइतिचट्दीर्घत्वञ्चधातो : ॥

समीची । स्त्री॰ मृग्याम् । एण्याम् ॥ बन्दनायाम् ॥ टित्वान्ङीप् ॥

समीचीनम् । न॰ सत्ये । ऋते । तथ्ये ॥ त्रि॰ तद्वति ॥ सम्यगेव । विभाषाञ्चेरदिक्स्त्रियामितिख : । सम : समि ॥ शोभने ॥

समीन : । त्रि॰ समाम् । अभीष्टे॰ भृते॰ भूते॰ भाविनि । समाया : ख : ॥ मीनसहिते ॥

समीप : । त्रि॰ अव्यवहिते । निकटे

॥ सङ्गताश्चापीयस्मिन् । क्तक् पूरित्य : समासान्त : । दृव्यन्तरु पसर्गेभ्योपईत् ॥

समीपकम् । न॰ निकटे ॥

समीपता । स्त्री॰ समीपत्वे । सामीप्ये । नैकाट्ये ॥

समीर : । पुं॰ मारुते । श्वसने । स्पर्शने । वायौ ॥ सम्यगीरयतिगच्छति । ईरयतिप्रेरयतिवा । ईरगतौ कम्पनेच । अच् । स्वातिनक्षत्रे ॥ समीरणे ॥

समीरण : । पुं॰ श्वसने । नभस्वति । वाते । पवने ॥ सम्यगीरयति॰ गच्छति॰ सम्यगीरयतिप्रेरयतिवा । ईर॰ । युच् ॰ ल्युर्वा ॥ पथिके । पान्थे ॥ फणिज्झके । मरुवके । मरुवा॰ इ॰ प्र॰ पुष्पवृक्षे ॥

समीरसार : । पुं॰ बिल्वे ॥

समीरित : । त्रि॰ उद्दीपिते ॥ क्षिप्ते ॥ समीर्यतेस्म । ईर् । क्त : ॥

समीहन : । पुं॰ विष्णौ ॥ सृष्ट्यर्थं समीहते । ईह॰ । नन्द्यादित्वाल्ल्यु : ॥

समीहा । स्त्री॰ वाञ्छायाम् ॥ सम्यगीहनमनया । ईह॰ । गुरोश्चेत्य: ॥

समीहित : । त्रि॰ वाञ्छिते ॥ सम्यगीहित : ॥

समुख: । त्रि॰ वाग्मिनि । वावदूके ॥

समुचित : । त्रि॰ यथायोग्ये । स



म्यगुचित : ॥

समुच्चय : । पुं॰ सहावस्थानलक्षणे॰ एकाधिकरणे ॥ समाहारे , राशीकरणे । यथा । राशीकृतेवंहू नाश्वसमाहार : समुच्चय : । चार्थविशेषे । परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वये ॥ यथागार्ग्योशास्त्वमपचतिपठतिचचैच : ॥ समुच्चयनम् । चिञ् ॰ । एरच् ॥ द्वन्द्वे ॥ अर्थालङ्कारभेदे । यथा । तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्करंभवेत्॰ समुच्चयोऽसौ ॥ तत्र प्रस्तुतस्यकार्यस्य॰ एकस्मिन्साधकेस्थिते॰ साधकान्तराणियत्रसम्भवन्तिससमुच्चय : उदाहरणम् । दुर्वारा : स्मरमार्गणा : प्रियतमोदूरेमनोप्युत्सुकंगाढंप्रेमनवंवयोऽतिकठिना : प्राणा : कुलंनिर्मलम् । स्त्रीत्वंधैर्यविरोधिमन्मथसुहृत्काल : कृतान्तोक्षमीनोसख्यश्चतुरा : कथंनुविरह : सोढव्यइत्थंशठ : ॥ अत्रविरहासहत्वंस्मरमार्गणाएवकुर्वते॰ तदुप्रियतमदूरस्थित्याद्युपात्तम् । एषएवसमुच्चय:॰ सद्योगे॰ऽसद्योगे॰ सदसद्योगेचपर्यवस्यतीतिनपृथग्लक्ष्यते । तथाहि । कुलममलिनंभद्रामूर्त्तिर्मति: श्रुतशालिनीभुजबलमलंस्फीतालक्ष्मी : प्रभुत्वमखण्डितम् । प्र

कृतिसुभगाद्यैतेभावाऽसौभिरयंज
मोव्रजतिसुतरांदर्पंरांजंसप्ठवतचा:
द्भुता : ॥ अवसतायोग:॰ उत्कोदा
हरणे स्वसतायोग : शश्वोदिवसधू
सरो॰ गलितयौवनाकामिनी॰
सरोविगतवारिजं॰ मुखमनचरं
स्वाकृते । प्रभुर्द्धनपरायण:॰ सत
तदुर्गत : सज्जनोनृपाङ्गणगत :
खलो॰ मनसिसप्तशल्यानिमे ॥
अवशशिनिधूसरेशल्ये शल्यात्मरा
णीतिशोभनशोभायोग : ॥ द्वितो
य : समुच्चयोयथा । सत्त्वन्यायुग
पद्यागुणक्रिया : । गुणौचक्रियेगुण
क्रिया : । क्रमेणोदाहरणम् । वि
दलितसकलारिकुलंतवबलमिदम
भवदाशुविमलञ्च । प्रखलमुखा
निनराधिपमलिनानिचतानिजाता
नि ॥ अथमेकपदेतयावियोग : प्रि
यया चोपगत : सुदु : सहोमे । न
वधारिधरोदयादहोभिर्भवितव्यञ्च
निरातपत्वरम्यै : कलुषञ्चतयाहि
तेष्वकस्मात्सितपङ्कजसोदरश्रि-
यञ्च : । पतितञ्चमहीपतेन्द्रतेषां
वपुषिप्रस्फुटमापदांकटाक्षै : ॥
बहूनांसमाहारे ॥ खलेकपोतन्या
येनबहूनांकार्यसाधने । कारणानां
समुद्योग : सहितोयः समुच्चय: ॥

समुच्छेद : । पुं॰ विनाशे ॥

समुच्छ्रय : । पुं॰ विरोधे । वैरे ॥ उ
न्नये । उन्नतौ ॥ सम्उत्+श्रय
अप् । श्रिञ् । एरच् ॥

समुच्छ्राय : । पुं॰ समुच्छ्रये ॥ सम्य
गुच्छ्राय : ॥

समुच्छ्रित : । त्रि॰ उच्चे ॥

समुज्झित: । त्रि॰ त्यक्ते ॥ समुज्झा
तेस्म । उज्झउत्सर्गे । क्त : ॥

समुत्कीर्ण : । त्रि॰ सम्यगुल्लिखिते ।
विद्धे ॥

समुत्क्रम : । पुं॰ ऊर्द्ध्वगमने ॥ स
म्यगुत्क्रमे ॥

समुत्क्रोश : । पुं॰ कुररपक्षिणि ॥
सम्यमुत्क्रोशति । क्रुश॰ । अच् ॥

समुत्त : । त्रि॰ क्लिन्ने ॥ समुनत्ति
। उन्दीक्लेदने । अकर्मकत्वात्
कर्त्तरिक्त : । नुदविदेतिपक्षेनत्वा
ऽभाव : ॥

समुत्थ : । त्रि॰ समुद्भवे ॥ समु
त्थिते ॥

समुत्थनम् । न॰ समुद्योगे । व्या
धीनांनिर्णये ॥ ऊर्द्ध्वगमने ॥
सम्यक्प्रकारेणोत्थाने । उठावना॰
उभाकर्ना॰ इ॰ भा॰ ॥ यथा ।
इन्द्रध्वजसमुत्थानंप्रमादान्नकृतंय
दि । तदाद्वादशमेवर्षेकर्त्तव्यंना
न्यथापुन : ॥

समुत्थित : । त्रि॰ सम्यगुत्थिते ॥

समुत्पतनम् । न॰ कूर्दने ॥

समुत्पन्न : । त्रि॰ समुद्भूते ॥

समुत्पिञ्जः । त्रि० अत्यन्तव्याकुले ॥ समुत्पिञ्जते । पिजि हिंसायाम् । अच् ॥ पुं० भृशमाकुलसैन्ये । पिञ्जले ॥

समुत्सुकः । त्रि० अनुरक्ते । सम्यगुत्कण्ठिते ॥ सम्यगिष्टार्थोद्युक्ते ॥

समुद् । त्रि० सानन्दे ॥ मुदा सह वर्त्तते द्व० ॥

समुदक्तः । त्रि० कूपादेरुद्धृतजलादौ । उद्धृते । समुदच्यते स्म । अञ्चु० । क्तः ॥

समुदयः । पुं० सङ्घे । गणे । समूहे ॥ संयुगे । रणे । युद्धे ॥ समुद्गमे ॥ समुदीयते० समुदयते वा । इण्० । अयगतौ वा । एरच्० । पचाद्यच् वा ॥ समेत्योदये ॥ राशिधान्यहिरण्याद्युत्पत्तिस्थाने ॥ समुदयन्ति० उत्पद्यन्ते० अस्मादर्थाः । एरच् ॥ दिने । न० लग्ने ॥

समुदागमः । पुं० समन्ताज्ज्ञाने ॥

समुदाचारः । पुं० अभिप्राये । आशये ॥

समुदायः । पुं० समूहे ॥ युद्धे ॥ समुदायते । अयगतौ । आङ्पूर्वः । घञ् । समुदयनम् । अवदानादौ घञ् वा ॥ पृष्ठस्थायिबले ॥ उद्गमे ॥

समुदितः । त्रि० समुत्पतिते समुन्नते ॥ सम्यक्प्रकारेण कथिते ॥

समुदीरणम् । न० पक्षिणां परस्परस्पर्द्धयागमने

समुद्गः । पुं० सम्पुटके ॥ समुद्गच्छति । गम्लृ० । अन्येष्वपीति डः ॥ यमकभेदे ॥ अर्द्धाभ्यासः समुद्गः स्यादस्य भेदास्त्रयो मताः ॥ त्रि० मुद्गसहिते ॥

समुद्गकः । पुं० सम्पुटके । भूषणाद्यावपने ॥ समुद्गच्छति । गम्लृ० । अन्येष्वपीति डः । स्वार्थे कन् ॥

समुद्गतः । त्रि० उत्पतिष्णौ ॥

समुद्गमः । पुं० ऊर्ध्वगतौ ॥ उत्पत्तौ ॥

समुद्गयमकम् । न० चित्रकाव्यप्रभेदे ॥ यथा । अयशोभिदुरालोके कोपधामरणाहते ॥ अयशोभिदुरा० लोके० कोपधा० मरणाहते ॥ अस्यार्थः । अयः शुभावहो विधिः० अयशोभी० भाग्यवान् । स चासौ दुरालोकः० तेजस्वित्वाद् दुर्दर्श इति विशेषणसमासः० तस्मिन् । कोपधामकोपाश्रयः कुपित इत्यर्थः । अतएव रणाहतः० रणार्थी इत्यर्थः । कोपधाम चासौ० रणाहतश्च तस्मिन्० एवंविधे वीरलोके । अयशोभिदुरा० स्वाम्यनादरनिमित्ता

पक्षोर्त्तिनिवर्त्तिका॰ उपधा॰ उपायः॰ मरणाहृते॰ प्राणत्यागंविनेत्यर्थः। का॰ नकापीत्यर्थः॥
समुद्गीतम्। त्रि॰ उच्चैर्गीते॥
समुद्गीर्णः। त्रि॰ वमिते॥ उत्तोलिते। कथिते॥
समुद्धतः। त्रि॰ अविनीते॥ समुद्गीर्णे॥ समुद्धन्तिस्म॰ समुद्धन्यतेस्मवा। हन्तेर्गत्यर्थत्वात्कर्त्तरि क्तः कर्मणिवा॥
समुद्धरणम्। न॰ उद्धरणे॥ सम्युद्ध्रियते। उद्धरतेर्ल्युट्॰ भावेवा॥ वान्तान्ने॥ उन्नये॥ भुक्तोज्झितोन्मूलितयोः स्यादुद्धरणमन्नयेइतिभरतः॥
समुद्धर्त्ता। त्रि॰ उद्धारकर्त्तरि॥ श्रीगुरौ॥ सम्यगनायासेन॰ उत्॰ ऊर्द्ध्वेसर्वबाधावधिभूतेशुद्धेब्रह्मणिधर्त्ता॰ धारयिता॥ उन्मूलयितरि॥ यथा॥ जनस्थानांसमुद्धर्त्तारिरिरघुः॥
समुद्धूतः। त्रि॰ समुत्क्षिप्ते॥ अपनीते॥ उत्थापिते॥ यथा। जलौघमग्नासचराचराधरा विषाणकोट्याखिलविश्वमूर्त्तिना। समुद्धृतायेनवराहरूपिणासमेस्वयम्भूर्भगवान्प्रसीदतु॥ सम्यक्प्रकारेणउद्धतः॥
समुद्भवः। पुं॰ उत्पत्तौ॥ कारणे॥ सम्यगुद्भवः। समुद्भवत्यस्मादिति। अपादानार्थे। भुवोऽप्॥
समुद्भूतः। त्रि॰ समुत्पन्ने॥
समुद्रः। पुं॰ अम्भोधौ। तत्पर्यायाः। समुद्रो॰ ऽब्धिरकूपारः॰ पारावारः॰ सरित्पतिः। उदन्वानुदधिः॰ सिन्धुः॰ सरस्वान्॰ सागरो॰ ऽर्णवः। रत्नाकरो॰ जलनिधि॰ र्यादःपति॰ रपाम्पतिरिति। समुनत्ति॰ उन्दी। क्लेदने। स्फायीतिरक्॥ चन्द्रोदयेसम्यक्उन्दन्ति क्लिद्यन्तिअपोयत्रवा। अपाम्चैवसमुन्दनात्समुद्रइतिस्मृतः। इति॰ वायुपुराणम्॥ समीचीनाः॰ उद्राः॰ जलचरविशेषायस्मिन्नितिवा॥ सहमुद्रयामर्यादयावर्त्तते॰ इतिवा। परमात्मनि॥ समुत्पद्यभूतानिद्रवन्तिलयंगच्छन्त्यस्मिन्नितिव्याख्यानात्। सङ्ख्याविशेषे॥ अन्त्यादिंशतिगुणः समुद्रइतिरामायणटीकायांमाहेश्वर्यांव्याख्यानात्। ठगणस्यद्वितीयपर्य्याये आदिगुरुत्रिकले॰ऽऽ।॰ त्रि॰ मुद्रयासहितेपत्रादौ॥
समुद्रकफः। पुं॰ समुद्रफेने॥ समुद्रस्यकफइव॥
समुद्रकान्ता। स्त्री॰ नद्याम्॥ समुद्रस्यकान्ता। समुद्रः कान्तोयस्यावा॥ पृक्कायाम्॥

समुद्रगा । स्त्री० नद्याम् ॥
समुद्रगृहम् । न० जलयन्त्रालये । फुहारिकाघर० इ० भा० वि० शेष: ॥
समुद्रचुलुक: । पुं० अगस्त्यमुनौ ॥ समुद्रश्चुलुकोगण्डूषोस्य ॥
समुद्रदयिता । स्त्री० नद्याम् ॥
समुद्रनवनीतम् । न० पीयूषे ॥ चन्द्रे ॥ समुद्रस्यनवनीतमिव ॥
समुद्रनेमि: । स्त्री० समुद्रमेखलायाम् । भूमौ ॥ समुद्रोनेमिरिवनेमिरस्या: ॥
समुद्रफलम् । न० अब्धिफले । औषधविशेषे ॥ तद्गुणायथा । फलंसमुद्रस्यकटूष्णकारि० वाताप्रह्मभूतनिरोधकारि । त्रिदोष दावानलदोषहारिकफामयभ्रान्तिनिरोधकारीतिरा० नि० घण्ट: ॥
समुद्रफेन: । पुं० फेने । अब्धिकफे । डिण्डीरे ॥ समुद्रफेनश्चक्षुष्योलेखन: शीतल: सर: । कषायोविषपित्तघ्न: कर्णरुक्कफहृल्लघु ॥
समुद्रमेखला । स्त्री० भुवि । अचलायाम् । विश्वम्भरायाम् ॥ स्थिरायाम् ॥ समुद्रोमेखलायस्या: ॥
समुद्रयात्रा । स्त्री० पोतेनसमुद्रगमने । समुद्रयात्रादय: कलौ निषिद्धायथा । समुद्रयात्रास्वीकार: कमण्डलुविधारणम् । द्विजानामसवर्णासुकन्यासूपयमस्तथा । देवरेणसुतोत्पत्तिर्मधुपर्केपशोर्वध: । मांसादनंतथाश्राद्धे वानप्रस्थाश्रमस्तथा ॥ दत्तायाश्चैवकन्यायापुनर्दानंवरस्यच । दीर्घकालंब्रह्मचर्यंनरमेधाश्वमेधकौ ॥ महाप्रस्थानगमनंगोमेधश्चतथामख: । इमान्धर्मान्कलियुगेवर्ज्यानाहुर्मनीषिण इतिवृहन्नारदीयम् ॥ अपिच । एतानिलोकगुप्तार्थंकलेरादौमहात्मभि: । निवर्तितानिकर्माणिव्यवस्था० पूर्वकंबुधैरिति ॥
समुद्रयानम् । न० पोते । वहित्रे ॥ यथा । समुद्रयानेरत्नानिमहामूल्यानिसाधुभि: । रत्नपरीक्षकै: सार्द्धमानयिष्येबहूनिचेतिवराहपुराणम् ॥
समुद्रयायी । त्रि० समुद्रेवहित्रादिनाद्वीपान्तरगामिनिजने ॥ समुद्रयायीवन्दीचतैलिक: कूटकारक: कृतिमनु: ॥ समुद्रयायिभि: सार्द्धंसंविदंसूच्यनिर्गतइतिवराहपुराणं ॥
समुद्ररसना । स्त्री० पृथ्व्याम् ॥ समुद्रोरसनाकाञ्चीयस्या: ॥
समुद्रलवणम् । न० कंकडे । त्रिकु

टे । सामुद्रे ॥ समुद्रस्यलवणम् । समुद्रजलजातं लवणं वा ॥
समुद्रवह्निः । पुं॰ वाडवे । वडवानले ॥
समुद्रविजयः । पुं॰ कृष्णार्हत्पितरि ॥
समुद्रसिन्धुसङ्गमः । पुं॰ । तीर्थविशेषे ॥
समुद्रसुभगा । स्त्री॰ गङ्गायाम् ॥
समुद्रा । स्त्री॰ शम्यां ॥ शम्यां ॥
समुद्रान्तम् । न॰ जातीफले ॥ अव्यावसाने ॥
समुद्रान्ता । स्त्री॰ तुण्डिकेर्यांम् कार्पास्याम् ॥ समुद्रोन्तोयस्याः ॥ यद्वा । मुद्रयासहवर्त्तमानोन्तः समीपेयस्याः । आच्छादकत्वात् ॥ दुरालभायाम् । यासे । यवासे ॥ समुद्रोन्तोऽस्यस्याः । धर्मशाद्यच् ॥ समुद्रान्तोऽस्यावा ॥ मरुन्मालायाम् ॥ पृक्कायाम् ॥ समुद्रोतोऽस्याः ॥
समुद्राम्बरा । स्त्री॰ पृथिव्याम् । अवलायाम् ॥ समुद्रोम्बरं वसनं यस्याः ॥
समुद्रायणा । स्त्री॰ नद्याम् । सरिति । समुद्रोऽयनं गतिर्यस्याः ॥
समुद्रारः । पुं॰ ग्राहविशेषे । सेतुवन्धे ॥ तिमिङ्गिले ॥
समुद्रेकः । पुं॰ प्रादुर्भावे ॥
समुन्दनम् । न॰ आर्द्रीभावे । क्लेमे । क्लेमे । उनदी॰ ल्युट् ॥
समुन्नः । त्रि॰ आर्द्रे । समुनत्ति । उन्दी॰ अकर्मकत्वात् कर्तरिक्तः । नुदविदेतिपक्षे नत्वम् । सम्यगुन्नं क्लिन्नं वा ॥
समुन्नतः । त्रि॰ समुन्नद्धे ॥ स्तम्भविशेषे । द्रू॰ धरणिः ॥
समुन्नतिः । स्त्री॰ समुत्कर्षे । उत्सेधे ॥ अतिवृद्धौ ॥
समुन्नद्धः । त्रि॰ समुद्धते ॥ पण्डितम्मन्ये ॥ गर्विते । दृप्ते ॥ ऊर्ध्ववद्धे ॥ प्रभौ ॥
समुन्नयः । पुं॰ समुत्कर्षे
समुन्नाहः । पुं॰ उत्कर्षे ॥
समुपक्रमः । पुं॰ आरम्भे ॥ समुपक्रमणम् । क्रमु॰ । घञ् ॥
समुपजोषम् । अ॰ आनन्दे । कल्याणार्थे ॥ समुपजोषणम् । जुषीप्रीतिसेवनयोः । अम् प्रत्ययः ॥
समुपस्थितः । त्रि॰ प्राप्ते ॥
समुपेतः । त्रि॰ सम्प्राप्ते ॥
समुपेयिवान् । त्रि॰ सम्यगुपगते ॥
समुल्लसत् । त्रि॰ सम्यगुल्लासयुक्ते ॥ यथा । दरस्मितसमुल्लसद्दनकान्तिपूरामृतैर्भवानलविभर्जितानानिशमूर्जयन्तीनरान् । चिदेकमयचन्द्रिकाचयचमत्कृतिं तन्वतीतमोऽतु ममशं तनोः सर्पदियन्तनोरङ्गना ॥
समुल्लिखन् । त्रि॰ पादादिनाभूमि

खननकर्त्तरि ॥

समुल्लेखः । पुं॰ सम्यक्कथने । सम्यगुच्चारणे ॥

समूढः । त्रि॰ पुञ्जिते । भुग्ने ॥ सद्योजाते ॥ अनुप्लुते ॥ शोधिते ॥ दमिते ॥ ऊढे ॥ विवाहिते ॥

समूरुः । पुं॰ अजिनयोनौ । हरिणप्रभेदे ॥ शोभनावूरू यस्य ॥

समूलः । त्रि॰ सप्रमाणके । मूलसहिते ॥ मूलेनसहवर्त्तमानइति तथा ॥

समूहः । पुं॰ व्यूहे । सन्दोहे । व्रजे । समुदाये । समूह्रारे ॥ ऊह॰ घञ् ॥

समूहद्वारः । पुं॰ द्वारनिकुरम्बे ॥

समूहगन्धम् । न॰ जवादिनि । गन्धाढ्य ।

समूहनी । स्त्री॰ ऊहन्याम् । सम्मार्ज्जन्याम् ॥

समूहितः । त्रि॰ एकत्रीकृते ॥

समूह्यः । पुं॰ यज्ञाग्नौ । परिचाय्ये । उपचाय्ये ॥ समुह्यते॰ समूह्यतेऽसौ । वहप्रापणे॰ ऊहवितर्के वा । अग्नौपरिचाय्योपचाय्यसमूह्याइतिसाधुः । अग्निधारणार्थे स्थलविशेषे ॥

समृद्धः । त्रि॰ अधिकर्द्धौ । समृद्धियुक्ते ॥ समृध्नोतिस्म । ऋधुवृद्धौ । अकर्मकत्वात्कर्त्तरिक्तः ॥

समृद्धिः । स्त्री॰ महर्द्धौ । एधायाम् । धनसम्पत्तौ । अपेक्षितार्थसम्पत्तौ ॥ समर्द्धनम् । ऋधु॰ । क्तिन् ॥

समेतः । त्रि॰ मिलिते । संयुक्ते ॥ यथा । श्रीनाथेनसमेतःस्वच्छन्दंकुरुकेलिमिति ॥ अपिच । नामसमेतंकृतसङ्केतंवादयतेमृदुवेणुमिति ॥

समेत्य । अ॰ मिलित्वेत्यर्थे ॥

समेधितः । त्रि॰ सम्यग्वर्धिते ॥

समोदकम् । न॰ मथिताम्बुदधिनि । उदश्विति ॥ सममुदकंयस्मिन् ॥

समोसा । पुं॰ स्वनाम्ने बलोकभाषायाम् सूदशास्त्रे अप्रसिद्धे खाद्यविशेषे ॥ निर्माणप्रकारोयथा । मण्डकस्यकृतापट्टीपूरणेनप्रपूरिता । वैश्यशृङ्गाटकाकारंसर्पिर्लिप्सोत्कनिष्ठया । घृतेपचेत्समोसेतिनाम्ना वष्टोतिसूपकः ॥ गुरुच्यंवातजिद्बल्यंश्रष्यंपित्तापहंगुरु । श्लेष्मीच गुणेर्येमाहिमांसभेदात्सजायते ॥

सम्पत्तिः । स्त्री॰ विभवोत्कर्षे । लक्ष्म्याम् । सम्पदि ॥ साचेशानपत्नी यथा । ईशानपत्नीसम्पत्तिः पूजिता असुरैर्नरैः । सर्वलोकाद्दरिद्राश्चजगत्सुचययाविनेतिभागवतम् ॥ इष्टप्राप्तौ ॥ सम्पदनमनयावा । पदगतौ । स्त्रियाङ्क्तिन् । मुक्तौ । ऋद्धिनामौषधौ ॥ गुणोत्कर्षे ॥

सम्पत्०द्‌० । स्त्री० भूतौ ॥ गुणोत्कर्षे ॥ हारभेदे ॥ सम्पद्गमनमनयात्रा । पद्० । सम्पदादित्वात्क्विप् ॥ अथसम्पद उच्यन्ते स्वल्पेकर्मविकर्मणः । महतश्चिन्तनंसम्पत्तया प्राप्यंमहाफलम् ॥ इतीयतारायाम् ॥ वासनाः सत्त्वतीशरीरारम्भकाले पुण्यादिकर्मभिरभिव्यक्तावाम् । साद्विधा । दैवी० आसुरीति भेदात् । अनयोर्विस्तारस्तुभगवद्गीतायांषोडशाध्यायेयथा । श्रीभगवानुवाच । अभयंसत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः । दानंदमश्चयज्ञश्च स्वाध्यायस्तपआर्जवम् । अहिंसासत्यमक्रोधस्त्यागश्शान्तिरपैशुनम् । दयाभूतेष्वलोलुप्त्वंमार्दवंह्रीरचापलम् ॥ तेजः क्षमाधृतिः शौचमद्रोहोनातिमानिता । भवन्तिसम्पदंदैवीमभिजातस्यभारत ॥ दम्भोदर्पोभिमानश्चक्रोधः पारुष्यमेवच । अज्ञानञ्चाभिजातस्य पार्थसम्पदमासुरीम् ॥ दैवीसम्पद्विमोक्षायनिबन्धायासुरीमता । माशुचः सम्पदंदैवीमभिजातोसि पाण्डव ॥ द्वौभूतसर्गौलोकेस्मिन् दैवआसुरएवच । दैवोविस्तरशः प्रोक्तआसुरंपार्थमेशृणु ॥ प्रवृत्तिञ्चनिवृत्तिञ्चजनानविदुरासुराः । नशौचंनापिचाचारोनसत्यंतेषुविद्यते ॥ असत्यमप्रतिष्ठन्तेजगदाहुरनीश्वरम् । अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ॥ एतांदृष्टिमवष्टभ्यनष्टात्मानोऽल्पबुद्धयः । प्रभवन्त्युग्रकर्माणः क्षयायजगतोऽहिताः ॥ काममाश्रित्यदुष्पूरंदम्भमानमदान्विताः । मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्त्तन्तेऽशुचिव्रताः ॥ १० ॥ चिन्तामपरिमेयाञ्चप्रलयान्तामुपाश्रिताः । कामोपभोगपरमाएतावदितिनिश्चिताः ॥ आशापाशशतैर्बद्धाः कामक्रोधपरायणाः । ईहन्ते काममोगार्थमन्यायेनार्थसञ्चयान् ॥ इदमद्यमयालब्धमिदंप्राप्स्येमनोरथम् । इदमस्तीदमपिमेभविष्यतिपुनर्धनम् ॥ असौमयाहतः शत्रुर्हनिष्येचापरानपि । ईश्वरोहमहंभोगीसिद्धोहंबलवान्सुखी ॥ आढ्योभिजनवानस्मिकोन्योस्तिसदृशोमया । यक्ष्येदास्यामिमोदिष्यइत्यज्ञानविमोहिताः ॥ अनेकचित्तविभ्रान्तामोहजालसमावृताः ॥ प्रसक्ताकामभोगेषुपतन्तिनरकेऽशुचौ ॥ आत्मसम्भाविताःस्तब्धाधनमानमदान्विताः । यजन्तेनामयज्ञैस्तेदम्भेनाविधिपूर्वकम् ॥ अहङ्कारंबलंदर्पंकामंक्रोधञ्चसंश्रिताः । ममात्मपरदेहेषुप्रद्विषन्तोऽभ्यसूयकाः ॥

तानहं द्विषत : क्रूरान् संसारेषु नराधमान् । चिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥ त्रिविधं नरकस्येदं द्वारं नाशनमात्मन : । काम : क्रोधस्तथा लोभस्तस्मादेतत्‌त्रयं त्यजेत् ॥ एतैर्विमुक्त : कौन्तेय तमोद्वारैस्त्रिभिर्नर: । आचरत्यात्मन : श्रेयस्ततो याति परां गतिम् ॥ य : शास्त्रविधिमुत्सृज्य वर्त्तते कामचारत: । न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ तस्माच्छास्त्रं प्रमाणन्ते कार्य्याऽकार्य्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्त्तुमिहार्हसि ॥ २४ ॥ इति ॥

सम्पदम् । न० समेपदयुगे ॥

सम्पद्यमान : । त्रि० मिलिते ॥

सम्पद्या । स्त्री० अलक्ते । लाक्षारसे ॥

सम्पन्न : । त्रि० सम्पत्तिसहिते । समृद्धे ॥ साधिते ॥ सङ्गते । एकीभूते ॥ विशिष्टे ॥ सम्पद्यतेस्म । पद० । क्त : । रदाभ्यामितिनत्वम् ॥

सम्पराय : । पुं० समीके । युद्धे ॥ आपदि ॥ उत्तरकाले ॥ सम्यक् परेकालेर्द्वं यत्रेइतिसम्पराय: ० परलोकस्तस्मिन् ० इतिव्याख्यातार: ॥ सम्परायणम् । इण् ० । एरच् अय० इगतौवा । घञ् ।

सम्परायकम् । ) न० युद्धे ॥
सम्परायिकम् । )

सम्परेत : । त्रि० मृते ॥

सम्पर्क : । पुं० मेलके ॥ रतौ । सुरते ॥ सम्बन्धे । संयोगे ॥

सम्पर्कौ । त्रि० सम्पर्कविशिष्टे ॥

सम्पाक : । पुं० आरग्वधे ॥ सम्यक्पाके ॥ त्रि० तर्कके । याचके ॥ धृष्टे ॥ सम्यक्पाकोस्य ॥ सम्यक्पचनम् ० सम्यक्पच्यतेऽनेनवा । डुपचष् ० । हलश्चेतिघञ् ॥

सम्पाट : । पुं० तर्कौ ॥ इ० श० माला ॥

सम्पात : । पुं० पक्षिगतविशेषे । पतने ॥ सम्भूयपतने ॥ सञ्चारे ॥ सम्यक्पतनम् । पत्लृ० । घञ् ॥ सम्यक्पतन्त्यनेनेतिव्युत्पत्त्या० कर्म्मण : क्षये ॥

सम्पाति : । पुं० पक्षिराजे । अरुणात्मजे० जटायुषोज्येष्ठभ्रातरि ॥ सम्यक्पाति । पातेरति : ॥

सम्पातिक : । पुं० सम्पातौ ॥

सम्पादक : । त्रि० निष्पादके । सम्पन्नकर्त्तरि ॥ धनादिसङ्ग्राहके ॥

सम्पादनम् । न० निष्पादने । अर्ज्जने ॥

सम्पादित : । त्रि० योजिते ॥ स

स्थिते ॥

सम्पीड : । पुं॰ नोदने ॥

सम्पीडनम् । न॰ सम्यक् प्रकारेणव्यथने ॥

सम्पुट : । पुं॰ कुरवके ॥ समुद्गके ॥ पेटके । एकजातीयोभयमध्यवर्त्तिनि ॥ रतिबन्धविशेषे ॥ यथा । सम्प्रसार्य्योभयोपादौ शय्यागतकपोलक : । भगलिङ्गस्य संयोगाद्रमते सम्पुटोऽहिस : ॥

सम्पुटक : । पुं॰ समुद्गके । भूषणाधावपने । व्व्वा॰ ह॰ भा॰ प्र॰ । सम्पुव्यते । पुटसंश्लेषणे । क्वुन् ॥

सम्पूर्ण : । पुं॰ रागजातिविशेषे ॥ यथा । औडव : पञ्चभि : प्रोक्त : स्वरै : षड्भिस्तुषाडवः । सम्पूर्ण : सप्तभि: प्रोक्तोरागजातिस्त्रिधामते ति ॥ त्रि॰ न्यूनत्वदोषरहिते । कृत्स्ने । परिपूर्णे ॥ साङ्गे ॥ सम्पूर्य्यतेस्म । पूरी॰ । यक्त : । कर्त्तरि॰ कर्म्मणिवाक्त : ॥

सम्पृक्त : । त्रि॰ खचिते । मिश्रिते । आरब्धे । कवरे । मिश्रे ॥ संयुक्ते ॥ संसृष्टे । सम्पृच्यतेस्म । पृची॰ । क्त : ॥

सम्प्रचाल : । पुं॰ तपोविशेषलब्धसंज्ञकोवानप्रस्थविशेषे ॥

सम्प्रज्ञात : । पुं॰ समाधिप्रभेदे ॥ त्रि॰ सम्यक् प्रकर्षेणज्ञाते ॥

सम्प्रज्ञातसमाधि : । पुं॰ सविकल्पकसमाधौ ॥ ब्रह्माहमस्मीतिचिन्तयतो॰ यावच्चेतोव्यापृतिस्तावत्सम्प्रज्ञातसमाधि : ॥

सम्प्रतापन : । पुं॰ कुम्भीपाके ॥

सम्प्रति । अ॰ अधुनार्थे ॥ सम्॰ प्रति॰ एतयो : समाहारद्वन्द्व : ॥ न्याय्ये ॥

सम्प्रति : । पुं॰ पूर्वकल्पस्थाऽर्हद्भेदे ॥

सम्प्रतिपत्ति : । स्त्री॰ उत्तरविशेषे । साध्यस्यसत्त्वकथने ॥ श्रुत्वाभियोगं प्रत्यर्थीयदितं प्रतिपद्यते । सातु सम्प्रतिपत्ति : स्याच्छास्त्रविद्भिस्तदाहृता ॥ निश्चये ॥ उत्पत्तौ ॥

सम्प्रतिपन्न : । त्रि॰ सम्यग्ज्ञाते ॥

सम्प्रतिष्ठा । स्त्री॰ स्थितौ ॥

सम्प्रतीति : । स्त्री॰ सम्यक्ख्यातौ ॥ सम्यक्ज्ञाने ॥

सम्प्रत्यय : । पुं॰ आदरे । भक्त्यतिशये ॥ ज्ञाने । निश्चये ॥ यथासंज्ञा सम्प्रत्ययायसंज्ञात्वनिश्चयायेतितदर्थ : ॥

सम्प्रदाता । त्रि॰ दातरि । सम्प्रदानकर्त्तरि ॥

सम्प्रदानम् । न॰ दानपात्रे । चतुर्थीकारके । त्यागोद्देश्ये ॥ सम्यक्प्रकर्षेणदीयतेऽस्मै तत् ॥ सम्यक्प्रकृष्टदानं वा ॥

सम्प्रदायः। पुं॰ गुरुपरम्परागतसदुपदेशः। आम्नाये॥ आगमोक्ता वैष्णवसम्प्रदाया यथा। श्रीशिव उवाच। वैखानः सामवेदादौ श्रीराधावल्लभी तथा। गोकुलेशो महेशानि तथा वृन्दावनी भवेत्॥ पाञ्चरात्रः पञ्चमः स्यात् षष्ठः श्रीवीरवैष्णवः। रामानन्दी हरिव्यासी निम्बार्कश्च महेश्वरि॥ ततो भागवतो देवि दश भेदाः प्रकीर्त्तिताः। शिखी मुण्डी जटी चैव बहिश्चिद्दण्डी क्रमेण च॥ एकदण्डी महेशानि वीरशैवस्तथैव च। सप्त पाशुपताः प्रोक्ता दशधा वैष्णवा मताः। एतेषां लक्षणं देवि शृणुष्वैकेन शाम्भवि। वेवेष्टि सर्व्वं संव्याप्य स्ततः स वैष्णवः॥ वैखानसादिदीक्षाद्यैर्भूषितः स्मार्त्तवैष्णवः। श्रीराधावल्लभं देवि शृणुष्वैकेन शाम्भवि॥ वैष्णवाचारनिरतो विष्णुतत्त्वैकपारगः। अनन्यचेताः शान्तात्मा विष्णुचिन्तापरायणः॥ श्रीराधावल्लभो देवि गोकुलेशं शृणु प्रिये। नानाभूषणसम्पन्नो नानासुगन्धिभूषितः। गोपीकुलं प्रीणयिता केलिकृष्णस्वरूपधृक्। शरीरमर्थं प्राणांश्च तन्निवेदनकारकः॥ अन्तःशक्तिपरो देवि बहिर्वैष्णवरूपधृक्। गन्धर्व्वाचारनिरतो लतावेष्टनतत्परः॥ सम्प्रदायी गोकुलेशः सर्व्वसिद्धिकरो भुवि। वृन्दावनाख्यं देवेशि शृणुष्वैकेन साम्प्रतम्॥ विगताशः प्रसन्नात्मा विष्णुभक्तिपरायणः। कामिनीसङ्गचपलो वनक्रीडाविनोदधृक्॥ सौगन्ध्यभूषिततनुः स्वीयध्यानैकपरायणः। विष्णुसारूप्यतत्त्वज्ञः प्रोक्तो वृन्दावनी शिवे॥ पाञ्चरात्रो महेशानि तथैव वीरवैष्णवः। पूर्व्वमेव महेशानि कीर्त्तितः परमेश्वरि॥ रामभक्तिरतिविख्यातनामा यः परिकीर्त्तितः। सदानन्दी शान्तचित्तः प्रसन्नात्मा विचारधृक्॥ सर्व्वसमरूपश्च रामानन्दी प्रकीर्त्तितः। हरिव्यासं महेशानि यथावदवधारय॥ पापसंहरणाशक्तो विष्णुभक्तो जितेन्द्रियः। यमादिनियमैर्युक्तो भक्त्याचारपरायणः। स्वोपयोगफलत्यागी परकार्य्यपरायणः। हरिव्यासो महेशानि शिवभक्तिस्वरूपधृक्॥ निम्बार्काख्यं सम्प्रदायं शृणुष्वैकेन साम्प्रतम्। नित्यार्च्चनक्रमासक्तः स्वतन्त्रैकपरायणः॥ बाह्यपूजादिनिरतो नान्यभक्तः प्रसन्नधीः। आर्य्यपथान्वितः स्वच्छः स्वच्छन्दाचारतत्परः॥ स्वतन्त्रस्मार्त्तविद्वेषी निम्बार्को भगवान् हरिः॥ अथ भागवतं देवि कथयामि शृणु प्रिये। विष्णुभक्त्यैकनिपुणो विजितात्मा

प्रसन्नधी : ॥ स्मातंगशान्वितोदेवि तदन्याचारतत्पर : । आर्यपद्मान्वितोदेवितथास्वरूपवेशधृक् ॥ शैवश्च गोतम्यसङ्गात्पुन : स्नानपरायण : । केवलं विष्णुतत्त्वज्ञ : प्रोक्तो भागवत : शिवे ॥ इति श्रीशक्तिसङ्गमतन्त्रे १ खण्डे ८ पटल : ॥ पद्मपुराणोक्ता वैष्णवसम्प्रदायभेदा यथा । श्रीमन्नारायणो ब्रह्मा नारदो व्यास एव च । श्रीलमध्वपद्मनाभो नृहरिर्माधवस्तथा ॥ अक्षोभ्योजयतीर्थश्च ज्ञानसिन्धुर्महानिधि: । विद्यानिधिश्च राजेन्द्रो जयधर्ममुनिस्तथा । पुरुषोत्तमो ब्रह्मण्यो व्यासतीर्थमुनिस्तथा । श्रीमांल्लक्ष्मीपति : श्रीमान्माधवेन्द्रपुरिस्तथा ॥ सम्प्रदायविहीना ये मन्त्रास्ते निष्फला मता : । अत : कलौ भविष्यन्ति चत्वार : सम्प्रदायिन : ॥ श्रीमाध्विरुद्रसनका वैष्णवा : क्षितिपावनाः इति ॥ सम्प्रदानम् । दुदाञ् • । घञ् • आतद्रूतियुक् ॥

सम्प्रधारणम् । न • विचारे ॥ सम्प्रश्ने ।

सम्प्रधारणा । स्त्री • उचितानुचितनिश्चये : समर्थने । इदमुचितमेवेति निश्चये ॥ सम्प्रधारणम् । धृञ् • । ण्यन्त : । ण्यासेतियुच् ॥

सम्प्रमोष : । पुं • विस्मरणे ॥

सम्प्रयोग : । पुं • रते ॥ निधुवने ॥ ॥ यान्विते । सम्बन्धे ॥ कार्मणे । वशीकरणादिकर्मणि ॥ त्रि • प्रार्थिते ॥

सम्प्रयोगी । पुं • कलाकेली । कामी । कामुके । सम्प्रयोजने ।

सम्प्रश्न : । पुं • संप्रधारणे ।

सम्प्रसाद : । पुं • सुषुप्त्यवस्थायां ॥ सम्यक् प्रसीदत्यस्मिन् । षद्लृ • । घञ् ॥ विदुषि ॥ प्राज्ञे ॥

सम्प्रसाधनम् । न • परिष्कारणे ॥ शोभाजनके ॥

सम्प्रहार : । पुं • गतौ ॥ युद्धे । रणे सम्प्रहरणम् । हृञ् • । घञ् ॥ हनने • इतिधरणि ॥

सम्प्रहृष्ट : । त्रि • पुलकिते । पुलकितगात्रे ॥

सम्प्राप्त : । त्रि • समागते ॥ सम्यक् प्रकारेणप्राप्त : ॥

सम्प्राप्ति : । स्त्री • सम्यक् प्रापणे ॥

सम्प्रेष : । पुं • नियोगे । विधौ ॥

सम्प्लव : । पुं • एकीभावेनेतरेतरघनीभावे ॥ व्यामिश्रणे ॥ महापूरे ॥ वारिपूरे ॥ प्रलये ॥ सङ्घोभे । उन्नतौ ॥ यथा । मेघ : सम्प्लवते ॥ सम्प्लवनम् । प्लुङ् • । ऋदोरप् ॥ सम्प्लवतेवा । पचाद्यच् ॥

सम्प्लवोपल: । पुं • चन्द्रकान्ते ॥

सम्फाल : । पुं • मेषे ॥

सम्फुल्ल : । त्रि • विकचे । विकसिते । प्रफुल्ले ॥ सम्फलति । अफ

त्वाविशरणे । ओतः क्तः, णादि तश्चेतोऽभावः । उतफुल्लसम्फुल्लयोरुपसङ्ख्यानमिति तत्वम् ॥

सम्बद्धः । त्रि० बंधनविशिष्टे । सम्यक् प्रकारेण बद्धः । सम्बन्धयुक्ते ॥ सं-बद्ध्यतेस्म । बध० । क्तः ॥

सम्बन्धः । पुं० सङ्गतौ । न्याये । दृत्त्यः । संयोगादौ ॥ आदिना० समवायतादात्म्य विषयविषयिभावश्चेति गृह्यते ॥ सम्पर्के । सच त्रिविधः । विद्यायोनिजः प्रीतिजश्चेति भेदात् ॥ संसर्गे ॥ यथा । एकपदार्थेऽपरपदार्थसम्बन्धः संसर्गमर्यादया भासते० सच० प्रतियोग्यनुयोग्याधाराधेयविषयविषयिभावादिरिति प्रथमव्युत्पत्तिवादीय गादाधरी ॥ सम्बन्धो बहुविधो जन्यजनकसेव्यसेवकबोध्यबोधकप्रतिपाद्यप्रतिपादकादिभेदात् ॥ प्रश्लेषे । संश्लेषे ॥ षष्ठार्थे ॥ तृतीयानुबन्धे ॥ यथा वेदान्तिनां प्रत्यग्ब्रह्मणोरैक्यप्रमेयस्य० तत्प्रतिपादकोपनिषत्प्रमाणस्य च० बोध्यबोधकभावलक्षणः सम्बन्धः ॥ सम्बन्धत्रये ॥ यथा । पदयोः सामानाधिकरण्यम पदार्थयोर्विशेषणविशेष्यभावः० प्रत्यगात्मपदार्थयोर्लक्ष्यलक्षणभावश्चेति । तदुक्तम् । सामानाधिकरण्यञ्च विशेषणविशेष्यता । लक्ष्यलक्षणसम्बन्धः पदार्थप्रत्यगात्मनामिति ॥ दायविभागोपयोगिनि ॥ स द्विविधः । यथा, सम्बन्धो द्विविधो ज्ञेयो विवाहाज्जन्मनस्तथा । तत्रौद्वाहिकसम्बन्धादपरो बलवत्तर० इति ॥ बन्धनम्० बन्धः । बन्धे र्भावे घञ् । सम्यक् बन्धः ॥ यावतः कुरुते जन्तुः सम्बन्धान् मनसः प्रियान् । तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ स्वदेहमपि जीवोऽयं मुक्त्वा याति कुलेश्वरि । स्त्रीमातृपितृपुत्रादिसम्बन्धः केन हेतुना ॥ त्रि० शक्ते ॥ हिते ॥ स-म्बध्यते । कर्मणि घञ् ॥

सम्बन्धी । त्रि० सम्बन्धविशिष्टे । गुणवति । संयुजि । मातृपक्षे । श्वशुरादौ । जामातृश्यालकादौ ॥ सम्बन्धोऽस्यास्ति । इनिः ।

सम्बरः । पुं० दैत्यविशेषे । हरिणविशेषे ॥ मत्स्यभेदे । शैलप्रभेदे ॥ जिनान्तरे । सेतौ ॥ न० सलि-ले । जले ॥ बौद्धव्रतविशेषे ॥ संयमे । संवयति । पञ्चसम्बन्धने । बाहुलकादरन् ॥

सम्बरारिः । पुं० मनसिजे । कामदे वे । सम्बरस्य दैत्यविशेषस्य अरिः ॥

सम्बरी । स्त्री० शतमूल्याम् ॥ सम्बर्य्याम् ॥

सम्बराम्बम् । न० गडलवणं ॥

सम्भावनम् । न॰ भक्त्युत्कर्षप्रकाशनायामुक्तौ ॥ यथा अपिस्तुयाद्विष्णुम् । अवाङ्मनसगोचरं विष्णुमपिस्तुयादित्यधिकोक्तिः ।
एतादृशस्यान्यदीयस्तवनेसामर्थ्यमस्तीत्यत्र किं वक्तव्यमिति भावः ॥
सम्भाव्यते । यन्त्रः । ण्यासश्रन्थो युच् । सम्भावनं॰ क्रियासु योग्यताध्यवसाय इति मुग्धबोधव्याकरणम् ॥ अलङ्कारविशेषे ॥ यथा । सम्भावनं यदीदं स्यादित्यूहोन्यस्य सिद्धये । यदिशेषोभवेद्वक्ता कथिताः स्युर्गुणास्तव ॥

सम्भावना । स्त्री॰ योग्यतायाम् ॥

सम्भावनीयः । त्रि॰ सम्भावनायोग्ये । संभाव्ये ॥

सम्भावितः । त्रि॰ मानिते । बहुमानं प्राप्ते । प्रतिष्ठां प्राप्ते । बहुमते ॥ यथा । भृत्याभावेभवतिमरणं किन्तु सम्भावितानामिति ॥ चिन्तिते ॥

सम्भाव्यः । त्रि॰ सम्भावितुं योग्ये । सम्भावनीये ॥

सम्भाषणम् । न॰ आभाषणे ॥ सम्पूर्वभाषधातोर्ल्युट् ॥ नन्वेष्वाशुच्यथामिषैः सहसम्भाषेत ॥

सम्भाषा । स्त्री॰ संभाषणे ॥

सम्भिन्नः । त्रि॰ संयुक्ते ॥ सकृच्छ्रिते ॥ सम्यग्भेदविशिष्टे ॥

सम्भुः । पुं॰ जनितरि ॥ यजमाने ॥ सम्भवति । भू॰ । विप्रसम्भ्वोः ड्वसंज्ञायामितिडुः ॥

सम्भूतः । त्रि॰ उत्पन्ने ॥ समभवति स्म । भू॰ । क्तः ॥

सम्भूतविजयः । पुं॰ श्रुतकेवलिसंज्ञकेबौद्धविशेषे ॥

सम्भूतिः । स्त्री॰ हिरण्यगर्भाख्यायां देवतायाम् ॥ सम्यग्भूतिरैश्वर्यं यस्याः । सम्भवनं वा॰ सम्भूतिः । सम्भवमात्रे ॥ यथा । कामान्मातापिताचैनं यदुत्पादयतोमिथः । सम्भूतिं तस्यतांविद्याद्यद्योनावभिजायत इति मनुः ॥ यद्योनौमातृकुक्षावभिजायतेऽङ्गप्रत्यङ्गानिलभते । तत्तस्यसम्भवमात्रं पश्वादिसाधारणं । यतः । आचार्यस्त्वस्ययांजातिंविधिवद्वेदपारगः । उत्पादयतिसाविव्यासासत्यासाऽजराऽमरेतिमनुः ॥

सम्भूयसमुत्थानम् । न॰ मिलित्वैकमत्यावणिगादीनांकर्मकरणे ॥ आदिनानटनर्त्तकप्रभृतयोगृह्यन्ते ॥ तत्तुविवादपदविशेषः ॥

सम्भृतः । त्रि॰ सम्यादिते । संहृते ॥ पूर्णे ॥ सम्यक्पुष्टे ॥ जनिते ॥ सम्यक्प्रभारि । भृञ्॰ । क्तः ॥

सम्भृतिः । स्त्री॰ सम्भारे । सम्यक् पोषणे ॥ सम्यग्भरणे । सम्यग्धा

रणे ॥

सम्भेदः । पुं॰ सिन्धुसङ्गमे । सरितो मिथः सङ्गमे । नद्योर्नद्योर्नद्योः समुद्रयोश्चमेलने ॥ संभिद्यन्ते मिलन्त्यत्र । भिदिर्॰ । इत्यर्थे तिष अ॰ ॥ स्फुटने ॥ सङ्गे । मेलने ॥

सम्भोगः । पुं॰ भोगे । रते । निधुवने । सुरते ॥ स्त्रीणांसम्भोगएवमण्डनम्॰ तद्भावेसर्वमण्डनस्याप्यमण्डनत्वम् । जिनशासने ॥ भुण्डायाम् ॥ हर्षे ॥ शृङ्गारविशेषे ॥ तल्लक्षणं यथा । दर्शनस्पर्शनादीनि निषेवेते विलासिनौ । यत्रानुरक्तावन्योन्यं सम्भोगः समुदाहृत इति साहित्यदर्पणम् ॥

सम्भोगी । पुं॰ केलिनागरे ॥ त्रि॰ सम्भोगवति ॥ सम्भोगोऽस्यास्ति । इनिः ॥

सम्भोजनी । स्त्री॰ बहुपुरुषभोजनार्थिकायांमिक्षायाम् ॥ यथाहमनुः । सम्भोजनीसाऽभिहितापैशाचीदक्षिणाद्विजैः । इहैवास्तेतुसालोके गौरन्धेवैकवेश्मनीति ॥ सहभुज्यतेयया । भुज॰ । ल्युट् । ङीप् । दक्षिणादानक्रियेत्यर्थः ॥

सम्भोज्यः । त्रि॰ संभोजयितव्ये ॥

सम्भ्रमः । पुं॰ भयादिजनितात्त्वरायाम् । संवेगे । साध्वसे । भये ॥ आदरे ॥ अप्रामप्रापौहिसम्भ्रमोभवत्यनाप्तकामस्य ॥ सम्भ्रमणम् । भ्रमुचलनेस्थाने । भावे॰घञ् । गोदानोपैत्यद्वद्धिः ॥ महाभ्रमे । सूचे ॥ इत्यजयपालः ॥

सम्भ्रान्तः । त्रि॰ संविग्ने ॥

सम्मतः । त्रि॰ निर्णीते ॥ अनुमते । सम्मानभाजि । महाजनाङ्गीकृते ॥

सम्मतिः । स्त्री॰ अभिलाषे ॥ अनुज्ञायाम् ॥ अभिप्रायस्यबोधने ॥ पूजने ॥ यथा॰देवदेवनन्दोसि । अवयवाक्यादेरामन्त्रितस्येतिसम्मतौहित्वम् ॥

सम्मदः । पुं॰ हर्षे । त्रि॰ तद्वति ॥ मदोहर्षः । प्रमदसम्मदौहर्षेइत्यप् ।

सम्मर्दः । पुं॰ रणभूमौ । परस्परपीडायाम् । भीड॰इ॰ भाषा॰ प्र॰ ॥

सम्मर्द्दनः । पुं॰ गन्धद्रव्यभेदे ॥ यथा । सगन्धकात्वोविल्वगन्धनीतिलकान्तथा । प्रभृतीनांरसोयोऽसौनिष्पीड्य परिगृह्यते । ससम्मर्दोद्भवोगन्धः सम्मर्द्दजइतीष्यत इति ॥

सम्मादः । पुं॰ मत्स्यविशेषे ।

सम्मानम् । न॰ समादरे । गौरवे । यथा । सम्मानाद्ब्राह्मणोनित्यमुद्विजेतविषादिव । अमृतस्येवचाकाङ्क्षेदवमानस्यसर्वतः ॥ इति ॥

सम्मानितः । त्रि॰ समादृते । गौरविते ॥

सम्मार्ज्जकः । त्रि॰ सम्यङ्मार्जन

कर्त्तरि ॥

सम्मार्ज्जनम् । न० संशुद्धौ । संशोधने । मलापनयने ॥ सम्यङ्-मार्ज्जनम् ॥

सम्मार्ज्जनी । स्त्री० शोधन्याम् । वर्द्धन्याम् । सोहनी•बढनी•इ•भा•॥ सम्मार्ज्यतेऽनया । मृज शुद्धौ । करणे ल्युट् । मृजेर्वृद्धिः ॥

सम्मार्ज्जितः । त्रि० विरजस्के । मांजा•इ•भा ॥ सम्यङ्मार्ज्जितः ॥

सम्मितः । त्रि० सदृशे । परिच्छिन्ने । मिते । मिणा•मिन•इ•भा• ॥ सम्यङ्मितः ॥

सम्मिश्रः । त्रि० संयुक्ते ॥

सम्मुखः । त्रि० अभिमुखे । अग्र-पृष्ठे ॥

सम्मुखीनः । पुं० दर्पणे । समं सर्वं मुखं• सम्मुखम् । समस्यत्रमलोपोनिपातसिद्धः । सर्वस्य मुखस्यदर्शनः । यथामुखसम्मुखस्यदर्शनः खङ्गितिखः ॥

सम्मूढः । त्रि० सम्यङ्मोहयुक्ते । मुग्धे ॥

सम्मूर्च्छनः । पुं० उच्छ्राये ॥

सम्मूर्च्छनम् । न० अभिव्याप्तौ । उच्छ्राये । मोहे ॥ मुर्च्छामोहसमुच्छ्राययोः । ल्युट् । उपधायाश्चेति दीर्घः ॥

सम्मूर्च्छनोद्भवः । पुं० मत्स्यादौ ॥

सम्मूर्च्छा । स्त्री० सकलेन्द्रियमनसां स्वविषयग्रहणाशक्तिहेतावस्थाविशेषे ॥

सम्मूर्च्छितः । त्रि० सम्पिण्डिते । संहतकरणे । विज्ञानशून्ये ॥ प्रतिफलिते ॥

सम्मृष्टः । त्रि० संशोधिते । शुद्धान्ने । संमृज्यतेस्म । मृज शुद्धौ । कर्म्मणिक्तः ॥ मक्षिकाद्यपनयनेनशोधितेव्यञ्जनादौ ॥

सम्मोदः । पुं० प्रीतौ ॥

सम्मोहः । पुं० विवेकायोग्यत्वे । कार्याकार्यविवेकाभावे ॥ विज्ञातसत्तत्वे ॥ सम्मोह्यतेऽनेन । सम्पूर्वान्मुहेर्घञ् ॥

सम्मोहनम् । न० अस्त्रविशेषे । सम्मोह्यतेऽनेन । मुहवैचित्त्ये । ल्युट् ॥

सम्मोहा । स्त्री० वर्णवृत्तान्तरे । यथा । दोक्रोंहारः सम्मोहासारः । वर्णाः पञ्चवंनागाधीशोक्तम् ॥ यथा । दूरंयातालीधीराधन्याली । कृष्णोमायावीनिर्व्वेदोभावी ॥

सम्मोहितः । त्रि० जातसम्मोहे । सम्यङ्मोहविषयीकृते ॥ स्वरूपावरणे नविक्षिप्ते ॥

सम्यग्ज्ञानम् । न० एकरूपेज्ञाने । औपनिषदेज्ञाने । यथानिरूपणाद्दृतिज्ञानंवस्तुतत्त्वत्वादेकरूपम् । एवंनिर्विशेषचैतन्यात्मकोऽहमिति

तिघित्करणादन्येभ्योपीतिघ : आगमशास्त्रस्यानित्यत्वान्ननुम् । सह रघेणगत्यावर्त्तते ॥

सरजम् । न० नवनीते ॥

सरजा : । स्त्री० मलिनायाम् । रजस्वलायाम् ॥ हृ० चि० शेष : ॥

सरट् । पुं० वायौ ॥ वारिदे ॥ सरघायाम् ॥ सरति । सृ० । सर्त्तेरटि : ॥

सरट : । पुं० कृकलासे । सरति । सृ० । शकादिभ्योऽटन् ॥

सराट : । पुं० वायौ ॥ मेघे ॥

सरटु : । पुं० सरटे ॥

सरणम् । न० गमने ॥ लोहमले ॥ सरत्यनेनेति : । सृ० । जुचङ्क्रम्येत्यादिना युच् ॥ धावने ॥ भावे ल्युट् वा ॥

सरणा । स्त्री० गन्धालिकायाम् । प्रसारण्याम् ॥ चिरतायाम् ॥ सरति । सृ० । बाहुलकात् युच् । टाप् ॥

सरणि : । स्त्री० पङ्क्तौ । मार्गे । पद्धतौ । अयने ॥ सरन्त्यनया । सृगतौ । अर्त्तिसृधृधमीत्यनि : ॥

सरणी । स्त्री० कटभारायाम् ॥ पथि । पङ्क्तौ ॥ ङीष् ॥ सरनाड़ि० इतिहिमगिरिप्रसिद्धेनिष्पद्यानविशेषे ॥

सरण्ड : । पुं० धूर्त्ते ॥ सरटे । भूषणविशेषे ॥ सरति । सृ० । अण्डन्कृसृभृवृञ इत्यण्डन् ॥ कामुके ॥ खगे ॥

सरण्यु : । पुं० वारिवाहे ॥ मातरिश्वनि ॥ सरति । ससर्त्ति वा । सृ० । सृयुवचिभ्योऽन्युजागूजक्नुच इत्यन्युच् ॥ सरण्यु : शीघ्रगामीतिवेदभाष्यम् ॥ जले ॥

सरत् । पुं० तन्तौ ॥ सूत्रे ॥

सरथ : । त्रि० रथेनसहवर्त्तमाने ॥

सरद्वान् । पुं० गौतममुनौ ॥

सरपत्रिका । स्त्री० पद्मपत्रे ॥

सरभसम् । त्रि० ससत्त्वरे ॥

सरमा । स्त्री० कुक्कुर्याम् ॥ देवशुन्याम् ॥ राक्षसीभेदे । बिभीषणस्यपत्न्याम् ॥ सरति सृ० । बाहुलकादम : ॥ कश्यपस्यस्त्रीविशेषे । भ्रमरादीनांमातरि ॥ त्रि० श्रीयुते ।

सरयु : । पुं० पवने । वाते ॥

सरयु : । स्त्री० नदीविशेषे ॥ सरति । सृ० । सर्त्तेरयु : ॥

सरयू : । स्त्री० नदीप्रभेदे । सरति । सृ० । सर्त्तेरयूरित्येके ॥ सरयूसलिलंस्वादुबलपुष्टिप्रदायकं ॥

सरल : । पुं० पीतद्रौ । पूतिकाष्ठे ॥ अस्यगुणा : । सरलोमधुरस्तिक्त : कटुपाकरसोलघु : । स्निग्धोष्ण : कर्णकण्ठाक्षिरोगरक्षोहर :

स्मृतः । कफानिलस्वेदयुकाक्षा सालक्ष्मीहरणापह : ॥ स्मृत ॥ देवदारुविशेषे ॥ बुद्धधे ॥ अग्नौ ॥ सरति । स० धाकुलकाद्दलच् । हयादित्वाद्दाकलः । वाकुलकाइथ : ॥ त्रि० उदारे ॥ ऋजौ । अवक्रे ॥ यथा । सरलाविरलायन्ते घनायन्ते कलिद्रुमाः । नश्यन्तीनचपुन्नागाचस्मिन् संसारकानने ॥

सरलद्रवः । पुं० हवधूपे । श्रीवेष्टे ॥ सरलस्यदेवदारोः द्रवः ॥

सरला । स्त्री० सर्वानुभूतौ । त्रिपुटायाम् । त्रिवृति । श्वेतनिशाधारेति ख्यातौषधौ ॥ सरति । स० । धाकुलकात् कलन् । टाप् ॥

सरलाङ्गः । पुं० श्रीवेष्टे ॥

सरलायिका । स्त्री० सोनेय्याम् ॥

सरः । न० नीरे ॥ तडागे । सरोवरे ॥ जलाशये । अस्मिन्जलगुणाः । सारसंलघुरुच्यामंबल्यं स्वादुकषायकमिति ॥ देवखातजलाशये ॥ सियते । सृगतौ । कर्मण्यसुन् ॥

सरसम् । न० सरसि ॥ रसवतिमांसे ॥ त्रि०रससंयुक्ते ॥

सरसम्प्रतम् । न० सुज्जम् । त्रिकयटे ॥

सरसा । स्त्री० द्राक्षायाम् ॥ रसविशिष्टायाम् ॥

सरसिजम् । न० पद्मे ॥ सरसिजातम् । जनजननी० जनीप्रादुर्भाविता । सप्तम्यांजनेर्डः । तत्पुरुषकृति० ङेरलुक् ॥

सरसी । स्त्री० कासारे । सरसि ॥ सियते । स० । कर्मण्यसुन् । गौरादित्वान्ङीप् ॥ प्रकृतिच्छन्दः २१ प्रभेदे ॥ तल्लक्षणोदाहरणं यथा । नजभजजाजरौयदितदागदितासरसीकवीश्वरैः ॥ चिकुरकलापशैवलकलापगदासुलसद्रसोर्मिपुञ्जक तटदन्तामृजासुविलसन्नताननेत्रनवशिषु । कुचयुगचक्रवाकमिथुनानुगतामुकलाकुलचपलो०व्यरचयदच्युतोव्रजमृगीनयनासरसीषुविभ्रमं ॥

सरसीकः । पुं० सारसपक्षिणि ॥

सरसीरुहम् । न० पद्मे । नलिने । सारसे ॥ सरसीरोहति । रुह० । इगुपधेतिकः । तत्पुरुषेकृतीत्यलुक् ॥

सरस्वान् । पुं० सागरे । अर्णवे ॥ नदे । सरोनीरं०गतिर्वाऽस्त्यस्मिन् । भूम्निमतुप् । तसौमत्वर्थेइतिभत्वान्नपदकार्यम् ॥ त्रि०रसिके ॥

सरस्वती । स्त्री० वाण्याम् । वाचि ॥ वाग्देव्याम् । पर्यायास्तु । ब्राह्मीतुभारतीभाषागीर्वाग्वाणीसरस्वतीति ॥ अस्याध्यानंयथा । वाणीम्

पूर्णनिशाकरोज्ज्वलमुखीकर्पूरकुंदप्रभांचन्द्रार्द्धाङ्कितमस्तकांनिजकरैः संबिभ्रतीमादरात् । वीणामक्षगुणं सुधाढ्यकलशं विद्याञ्च तुङ्गस्तनीं दिव्यैराभरणैर्विभूषिततनुं हंसाधिरूढाभजे ॥ नदीविशेषे । प्लक्षसमुद्भवायाम् ॥ वाक्प्रदायाम् । ब्रह्मसुतायाम् ॥ अस्याजलगुणायथा। सरस्वत्याजलं स्वादु पूतं सर्वरुजापहम् । रुच्यञ्च दीपनं पथ्यं देहकान्तिकरं लघु ॥ सातुदेशभेदेनसप्तनाम्नीयथा । पुष्करेपितामहयज्ञे समाहूता॰ सुप्रभा १ नैमिषेसत्रयाजिभिर्ऋषिभिराहूता॰ काञ्चनाक्षी २ गयदेशेगयराजयज्ञआहूता॰ विशाला ३। उत्तरकोशलायामौद्दालकमुनियज्ञे समाहूता॰ मनोरमा ४। ऋषभद्वीपेकुरुक्षेत्रेकुरुराजयज्ञे समाहूता॰ ओघवती ५। गङ्गाद्वारे दक्षप्रजापतियज्ञे समाहूता॰ सुरेणुः ६। हिमालयेब्रह्मणः पुनर्यज्ञे समाहूता॰ विमलोदा ७। तत्सप्तसरस्वत्यः समागताः । अतस्तत्तीर्थंसप्तसारस्वतनाम्नाप्रसिद्धमिति महाभारतेशल्यपर्व ॥ स्त्रीरत्ने ॥ गवि ॥ नदीषु ॥ मनुपत्न्याम् ॥ ज्योतिष्मत्याम् ॥ ब्राह्म्यामोषधौ ॥ सोमवल्ल्याम् ॥ दुर्गायाम् ॥

बुद्धिशक्तिविशेषे ॥ सरोऽस्त्यस्याः । सांसिसन्त्यस्यांवा । मतुप् । ङीप् ॥ तीर्थविशेषे ॥

सरस्वतीसङ्गमः । पुं॰ तीर्थविशेषे ॥

सरस्वतीसागरसङ्गमः । पुं॰ तीर्थविशेषे ॥

सरस्वत्यरुणासङ्गमः । पुं॰ तीर्थविशेषे ॥

सरहस्यः । त्रि॰ मन्त्रदेवताज्ञानसहिते सरा । स्त्री॰ विस्तृतायाम् ॥ गन्धालिकायाम् । प्रसारण्याम् ॥ झरे ॥

सरागः । त्रि॰ रागसहिते ॥

सरावः । पुं॰ शरावार्थे । सेर॰ इ॰ भा॰ प्र॰ कुडवद्वयपरिमाणे । मोनिकायाम् ॥ मृत्पात्रविशेषे । वर्द्धमानके ॥ यथा । वरं सरावहस्तस्यचण्डालागारवीथिषु । भिक्षार्थमटनंकार्यंराज्यंनान्यजनेरिपु ॥ सरणम् । स॰ । क्रादेरप् । सरतिवा । अच् । सरं सरादाऽवति । अव । अण्॰ अच्वां ।

सरिः । पुं॰ स्त्री॰ निर्झरे । उत्से ॥ सरणम् । स॰ । अचइः ।

सरिका । स्त्री॰ हिङ्गुपत्र्याम् ।

सरित् । स्त्री॰ नद्याम् । तरङ्गिण्याम् ॥ सरति । स॰ । हृसृरुहियुषिभ्यइतिसर्गेरिति: ॥ सूर्ये ॥

सरितामनाथः । ( पुं॰ समुद्रे ॥
सरिताम्पतिः । (

सरितांवरा । स्त्री॰ गङ्गायाम् ॥ यथा । त्वं देवसरितांनाथ : त्वं देवि सरितांवरे । उभयो : सङ्गमेस्नात्वाम् ञ्चामिदुरितानिवै ॥ इतिग ङ्गासागरसङ्गमस्नानमन्त्र : ॥

सरित्पति : । पुं॰ समुद्रे । पारावारे । सरितांपति : ॥

सरिद्वरा । स्त्री॰ गङ्गायाम् । विपाप्रद्याम् ॥ सरित्सु वरा ॥

सरिन्नाथ : । पुं॰ समुद्रे ॥

सरिमा । पुं॰ अनिले । वायौ ॥ सरति । सृ॰ । इमृधुसृस्तृ गृभ्यइमनिच् ॥

सरिलम् । न॰ सलिले । जले ॥ रलयोरैकत्वम् ॥

सरिषप : । पुं॰ सर्षपे । कटुस्नेहे ।

सरी । स्त्री॰ निर्झरे ॥

सरीसृप : । पुं॰ सर्पे । पृदाकौ । आशीविषे ॥ कुटिलंसर्पति । सृ सृ॰ । नित्यंकौटिल्येगताविति यङ् । पचाद्यच् यङोचिचेति यङोलुक् ॥ वृश्चिकराशौ ॥

सरीसृपम् । त्रि॰ अतिशयेनचलति ।

सरूपः । त्रि॰ सदृशे ॥ समानंरूपमस्य । ज्योतिर्जनपदेतिसमानस्यस : ॥

सरोजम् । न॰ अब्जे । पद्मे ॥ सरसिजातम् । अनो॰सप्तम्यांजनेर्ड : । तत्पुरुषेकृत्यबहुलोमितिर्लुक् ॥

सरोजखण्ड : । पुं॰ पद्मवने ॥ सरोजानांसमूह : । कमलादिभ्य : खण्ड : ॥

सरोजन्म । न॰ पद्मे ॥

सरोजी । पुं॰ ब्रह्मणि । बुद्धे ॥ लोकनाथे । बुद्धभेदे ॥

सरोजिनी । स्त्री॰ कमलाकरे । पद्मखण्डे ॥ पद्मे ॥ कासारे ॥ सरोजानिसन्त्यस्याम् । पुष्करादिभ्यो इनि : ॥

सरोत्सव : । पुं॰ सारसखगे ॥

सरोध : । त्रि॰ रुद्धे ॥ रोधेनसहवर्तमान : ॥

सरोरुट् । ) पुं॰
सरोरुहम् । ) न॰ अम्बुजे ॥

सरोरुहासन : । पुं॰ ब्रह्मणि । कमलासने ॥

सरोवर : । पुं॰ पद्माकरे । तडागे ॥

सर्ग : । पुं॰ स्वभावे । निर्मोचे ॥ निर्मोक्षस्त्यागे॰मोचाभावेवा । मोचाभावेयथा । इहैवतैर्जित : सर्गोयेषांसाम्येस्थितंमन : ॥ निश्चये ॥ यथा । एष्वाणमस्त्रं यदिसर्गएषते॰ इति ॥ अध्याये । मोहे । उत्साहे ॥ अनुमतौ ॥ सृज्यते । सृज विसर्गे । कर्मणिघञ् ॥ सृष्टौ ॥ यथा । सर्गश्चप्रतिसर्गश्चेति ॥ कौमारभार्य : प्राजापत्योमानवइत्यादिभेदै : पुराणेषुविस्तरेणोक्त॰ । द्वैतप्रपञ्चे । स्थूलदेहोत्पत्तौ । अचे

तनसृष्टौ ॥ सर्ज्यन्ते येषुसृष्टव्याः प्राणिनाइतिव्युत्पत्त्या॰ पृथिव्यादिलोकाः सर्ग पदवाच्याः ॥ अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहम् । भूतसूक्ष्मेन्द्रियार्थानांसम्भवःसर्ग उच्यते ॥ इतिश्रीविष्णुभागवतम् ॥

सर्गक्रमः । पुं॰ प्रकृतेर्महदाद्युत्पत्तिक्रमे ॥ यथा । प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणस्तुषोडशकः । तस्मादपिषोडशकात्पञ्चभ्यः पञ्चभूतानीति ॥ सर्गस्योत्पत्तेः क्रमः ॥

सर्गबन्धः । पुं॰ महाकाव्ये ॥ सर्गाणांबन्धोयत्र ॥

सर्ज्जः । पुं॰ सालवृक्षे । सर्ज्जः॰ इतिख्याते ॥ सृजति । सृजेरिगुपधलक्षणः ॥

सर्ज्जकः । पुं॰ पीतसाले । आसने । बन्धूकपुष्पे । विजयसारः॰ इ॰ भा॰ प्र॰ वृक्षे ॥ सृजति । सृजविसर्गे । ण्वुल् । यद्वा । सर्ज्यते । षर्जअर्जने । क्वुन् ॥ त्रि॰ सृष्टिकर्त्तरि ॥

सर्ज्जगन्धा । स्त्री॰ रास्नायाम् ॥

सर्ज्जतैलम् । न॰ सर्ज्जस्नेहे । रालतैल इ॰ भा॰ ॥ तैलंसर्ज्जरसोद्भूतंविस्फोटव्रणनाशनम् । कुष्ठपामाकृमिहरंवातश्लेष्मामयापहम् ॥

सर्ज्जनम् । न॰ विसर्ज्जने ॥ सृष्टौ ॥

सर्ज्जनिर्यासः । ) पुं॰ राले । धूनके
सर्ज्जमणिः । )

सर्ज्जरसः । पुं॰ धूनके । यक्षधूपे । सर्ज्जश्चासालश्चरसः ॥ बाबभाराड विशेषे ॥

सर्ज्जिः । ) स्त्री॰ ) सर्ज्जिकाक्षारे ।
सर्ज्जिका । ) सर्ज्जी॰ इ॰ भा॰ प्र॰ सर्ज्जिकाल्पगुणातस्माद्विशेषाद्गुल्मशूलहृत्॰ । तस्मात्॰ यवक्षारात् ॥

सर्ज्जिकाक्षारः । पुं॰ कापोते । सुखवर्चके । सौवर्चले । रुचके । सर्ज्जी॰ साजी॰ इ॰ भा॰ प्र॰ सर्ज्जिकारजसः क्षारः । शाकपार्थिवादिः । सर्ज्जिकांदग्ध्वाक्रियमाणः क्षारइत्यर्थः ॥

सर्ज्जिक्षारः । पुं॰ ) सर्ज्जिकाक्षारे॥
सर्ज्जी । स्त्री॰ )

सर्ज्जूः । स्त्री॰ वणिजि । विद्युति । सर्ज्जति । षर्जअर्जने । कृषिचमितनिधनिसर्ज्जिखर्ज्जिभ्यऊः ॥ अभिसारे ॥ हारे ॥

सर्ज्यः । पुं॰ सर्ज्जरसे ॥

सर्प्पः । पुं॰ अहौ । नागेभ्योपकृष्टे । अस्यपर्याया यथा । सर्प्पः पृदाकुर्भुजगोभुजङ्गोहिर्भुजङ्गमः । आशीविषोविषधरश्चक्रीव्यालः सरीसृपः ॥ कुण्डलीगूढपाच्चक्षुःश्रवाःकाकोदरःफणी । दर्वीकरोदी

र्धपृष्ठोदन्दशूकोबिलेशय : ॥ उरग: पन्नगोभोगीजिह्मग : पवनाशनइति ॥ सर्पति । सृप्लृगतौ । पचाद्यच् ॥ नागकेशरे । श्मश्रुधारिम्लेच्छजातिविशेषे ॥ पद्ममाच्छद्वितीयभेदे ऽ । ऽ० ॥ षणमाश्चषष्ठप्रभेदे० ॥ ऽऽ० ॥ सर्पणे । गमने ॥

सर्प्पकङ्कालिका । स्त्री० वृक्षभेदे ॥ सर्प्पकङ्कालिका० तीक्ष्णा० विषदंष्ट्रा० विषापहेतिपर्याया : ॥

सर्प्पकङ्काली । स्त्री० सहायाम् । सर्प्पकङ्कालिकायाम् ॥

सर्प्पगन्धा । स्त्री० अहिभुजि । रक्तपत्रिकायाम् ॥ वृक्षविशेषे । छत्राकी० सर्प्पगन्धाचरसनाचपलङ्कषेति पर्याया : ॥

सर्प्पग्रह : । पुं० सर्पग्रहणतुण्डे ॥

सर्प्पघातिनी । स्त्री० सर्पकङ्काली भेदे । सर्प्पसहायाम् । सर्पाङ्ग्यां ॥

सर्प्पम् । त्रि० गच्छति ॥

सर्प्पत्वच : । पुं० नकुले ॥ द्रु० हे० न्द्र : ॥

सर्प्पदंष्ट्र : । पुं० दन्तीवृक्षे ॥

सर्पदंष्ट्रा । स्त्री० वृश्चिकाल्याम् ॥

सर्प्पदंष्ट्रिका । स्त्री० अजशृङ्ग्याम् ॥

सर्प्पदण्डा । स्त्री० सैंहल्याम् ॥

सर्प्पदण्डी । स्त्री० गोरक्ष्यां ॥

सर्प्पदन्ती । स्त्री० नागदन्त्यां ॥

सर्प्पदमनी । स्त्री० वन्ध्याकर्कोटक्याम् ॥

सर्प्पनामा । स्त्री० सर्पघातिन्याम् ॥

सर्प्पनिर्मोचन : । पुं० धूपविशेषे ॥ यथा । कार्पासास्थिभुजङ्गस्यतथानिर्मोचनंभवेत् । सर्प्पनिर्मोचनोधूप : प्रशस्त : सततंगृहे ॥

सर्प्पपुष्पी । स्त्री० नागदन्त्याम् ॥

सर्पफणज : । पुं० सर्पफणजातमणौ ॥

सर्पभुक् । पुं० मयूरे ॥ सर्पान्भुङ्क्ते । भुज० । क्विप् ॥ द्विमुखाहौ ॥ त्रि० सर्पभक्षके ॥

सर्पराज : । पुं० अहिराजे । वासुकौ ॥ सर्पाणांराजा । राजाह : सखिभ्यष्टच् ॥

सर्पलता । स्त्री० नागवल्ल्याम् ॥

सर्पविद्या । स्त्री० गारुडे ॥ सर्पाणांविद्या ॥

सर्पसत्रम् । न० जनमेजयारब्धेसर्पनाशकेयज्ञविशेषे ॥

सर्पसत्री । पुं० जनमेजये ॥

सर्पसहा । स्त्री० सर्पघातिन्याम् ॥

सर्पसुगन्धा । स्त्री० रास्नायाम् ॥

सर्पहा । पुं० नकुले ॥ द्रु० हे० न्द्र : ॥

सर्पाक्षम् । न० रुद्राक्षे ॥

सर्पाक्षी । स्त्री० कन्दविशेषे । गन्ध

नाकुल्याम् ॥ वृक्षविशेषे । गण्डाल्याम् ॥ अस्या: गुणा: । सर्पाक्षी कटुकातिक्ता सोष्णा कृमिनिकृन्तनी । वृश्चिकोन्दुरुसर्पाणां विषघ्नी व्रणरोपणीति ॥ सर्पानक्षति । अक्षू व्याप्तौ । कर्म्मण्यण् । ङीप् ॥ सर्पाक्षीनागफणीतिभावमिश्र: ॥

सर्पाख्य: । पुं० महिषकन्दभेदे । नागकेसरे ॥ त्रि० सर्पनामके ॥

सर्प्पाङ्गी । स्त्री० सर्प्पघातिन्याम् ॥ सैंहल्याम् । रास्नायाम् ॥

सर्प्पादनी । स्त्री० व्यालगन्धायाम् ॥

सर्प्पाराति: । पुं० गरुडे ॥ सर्पाणामराति: ॥

सर्प्पारि: । पुं० नकुले ॥

सर्प्पावास: । पुं० श्वेतचन्दने ॥ पाताले ॥ सर्प्पाणामावास: ॥ बहुव्रीहिर्वा ॥

सर्प्पाशन: । पुं० मयूरे ॥

सर्प्पाह्वय: । पुं० नागकेशरे ॥

सर्प्पिणी । स्त्री० सर्पस्त्रियाम् ॥

सर्पिर्द्दर्वी । स्त्री० तीर्थविशेषे ॥

सर्प्पि: । न० आज्ये । घृते ॥ सर्पति । सृप्लृ० । अर्च्चिशुचिहुसृपिच्छादिच्छर्दिभ्यइसिरितीसि: ॥

सर्प्पी । स्त्री० सर्पिण्याम् ॥ जातित्वान्ङीष् ॥

सर्प्पेष्टम् । न० श्रीखण्डचन्दने ॥

सर्म्म: । पुं० गमने ॥ सरति । सृ० । अर्त्तिस्तुसुहुसृस्रितिमन् ॥

सर्व्व: । पुं० ईश्वरे । शिवे । हरे ॥ विष्णौ । हृषीकेशे । हरौ ॥ यथा । असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् । सर्वस्य सर्वदा ज्ञानात् सर्वमेतं प्रचक्षते ॥ असत: कारणात्मकस्य सत: कार्यात्मकस्य सर्वस्य प्रपञ्चस्य प्रभवाप्ययात् उत्पत्तिप्रलयस्थानत्वात् । तथा च सर्वोपादानतया सर्वात्मकत्वात् सर्व इत्युच्यते इत्यर्थ: ॥ सर्वति । सर्व्व हिंसायाम् । इत्यत: सर्वगतावित्यतो वा । वयोरभेदात् । पचाद्यच् । सरति । सृगतौ । सर्वनिघृष्वेति साधुर्वा सृतमनेन विश्वं वा । पूर्ववत् ॥ न० । नामरूपात्मके जगति ॥ त्रि० । विश्वस्मिन् । समस्मिन् । अशेषे । निरविशेषे । कृत्स्ने ॥ यथा । सर्वरत्नमयो मेरु: सर्वाश्चर्यमयं नभ: । सर्वतीर्थमयी गङ्गा सर्वदेवमयो हरिरिति वह्निपुराणं ॥

सर्व्वंसहा । स्त्री० वसुमत्याम् । भुवि । भूमौ ॥ सर्वं सहते । षह मर्षणे । पू: सर्व्वयोर्द्दारिसहोरिति खच् । अरुर्द्विषदिति मुम् ॥ सर्वंसहा वसुमती सहते न त्विदं द्वयम् । अकार्यपादघातञ्च दीपतापन्तथैव च ॥ अतो भूमौ निराधारो दीपो न संस्थाप्य: ॥ त्रि० सर्वसहिष्णौ ॥

सर्वकर्त्ता । पुं॰ स्रष्टरि । ब्रह्मणि ॥
सर्वकर्मसन्न्यास : । पुं॰ देहादिव्यापारायामविद्ययात्मन्यक्रियेसमारोपितानांविद्ययाबाधे ॥ सर्वकर्मणां सम्यङ्न्यास : ॥
सर्व्वकर्मीण : । त्रि॰ पुरुषे ॥ सर्वंकर्माणिव्याप्नोति । तत्सर्वादेरितिख : ॥
सर्वकेशी । पुं॰ नटे ॥ सर्वकेशोऽस्यास्ति । सर्वादिश्वेति॰ इनि : ॥
सर्वक्षार : । पुं॰ बहुक्षारे । महाक्षारे । सावन् इ॰ भा॰ प्र॰ । मलबस्त्रविशोधमे ॥
सर्व्वग : । पुं॰ शङ्करे ॥ ब्रह्मणि । विभौ ॥ आत्मनि ॥ सर्वंगच्छति । गमृल॰ । अन्यात्यन्तेतिड : ॥ न॰ सलिले ॥ त्रि॰ सर्वगामिनि ॥
सर्व्वगत : । त्रि॰ विभौ ॥ सर्वानुस्यूतिसम्भावे ॥ यच्चकिञ्चिज्जगत्यस्मिन्दृश्यतेश्रूयतेपिवा । अन्तर्व्बहिश्चतत्सर्वंव्याप्यनारायण : स्थित : ॥ सर्वगतत्वंसर्वाव्यवधानमात्रमितिव्याख्यातार: । व्यापित्वमितियावत् ॥
सर्वगन्धम् । न॰ कुङ्कुमादिगन्धद्रव्यवृन्दे ॥ यथा । कुङ्कुमागुरुकर्पूरकस्तूरीचन्दनेषु ॥ चतुर्जातकादौ ॥ यथा ॥ चतुर्जातककर्पूरकक्कोलागुरुकुङ्कुमम् । लवङ्गसहितञ्चैवसर्वगन्धंविनिर्द्दिशेदिति ॥
सर्व्वगा । स्त्री॰ प्रियङ्गौ ॥
सर्व्वग्रन्थि : । पुं॰ ) पिप्पलीमूले ॥
सर्व्वग्रन्थिकम् । न॰ )
सर्व्वङ्कष : । त्रि॰ खले ॥ सर्वङ्कषति । कषहिंसायाम् । सर्वकूलाभ्रेतिखच् । अरुर्द्विषदितिमुम् ॥
सर्वजनीन : । ) त्रि॰ सार्वजनिके ॥ सर्वस्यासौजनश्च । पूर्वकालैकेतितत्पुरुष: । सर्वजनायहित: । सर्वजनाट्ठञ्खञ्च । षष्ठीतत्पुरुषात्सु॰ छ : ॥
सर्व्वजनीय : । )
सर्व्वजित् । पुं॰ वत्सरविशेषे ॥ तत्फलंयथा । उद्यतोऽश्वर्ग्गमिवोजलं नैवोपजायते । महार्घंसर्वजिद्वर्षे सर्वमेववरानने ॥ त्रि॰ सर्वजयकर्त्तरि ॥
सर्व्वजीव : । पुं॰ ईश्वरे । सर्वान्जीवयति । जीव॰ । अच् ॥
सर्व्वज्ञ : । पुं॰ शिवे । ईश्वरे ॥ सर्वंजानाति । सर्वविषयावच्छिन्नचैतन्यलक्षणज्ञानवानिति । ज्ञा॰ । आतोनुपसर्गेक : ॥ यद्वा । सर्वेज्ञायस्यात्मन: सर्वस्यापरोक्षत्वात् ॥ यद्वा । सर्वेज्ञायस्मात् । सर्वेज्ञायेनवा ॥ सर्वश्चासौज्ञश्चेतिवा ॥ आनन्दमये ॥ यथा । अशेषप्राणिबुद्धीनांवासनास्तत्रसंस्थिता : । ता

भि : क्रोडीकृत सर्वं तेनसर्वज्ञ इति :॥ तत्र॰ सौषुप्ते ऽज्ञानेकार रएभूतेकाऽभूतानांसर्वप्राणिबुद्धीनां वासनानिवसन्ति॰ताभिर्वासनाभि : सर्वं जगत्॰ क्रोडीकृतम्॰ विषयीकृतम्॰ तेनसर्वबुद्धिवासनाभृदज्ञानोपाधिकत्वेनसर्वज्ञत्वमुच्यतेइत्यर्थ :॥ परमार्थपण्डिते ॥ जिनेन्द्रे ॥ बुद्धे । सुगते । त्रि॰सकलज्ञातरि ।

सर्व्वज्ञत्वम् । न॰ सर्वज्ञतायाम् ॥ परमार्थतोसङ्ग्यापिचैतन्यस्याध्यासिकस्ववृत्त्यज्ञानद्वारासर्वावभासकतायाम् ।

सर्व्वज्ञा । स्त्री॰ दुर्गायाम् ॥ सर्वज्ञासर्ववेत्तृत्वात्कान्तिस्वाच्छान्तिरुच्यते । इतिदेवीपुराणम् ॥

सर्व्वज्ञानमिमठ : । त्रि॰ सर्वकर्माणि॰ ब्रह्मणि॰ सगुणेनिर्गुणेच॰ यज्ज्ञानं त्रिविधम्॰प्रमाणतः प्रमेयतश्च॰प्रयोजनतश्चतत्रमठे॰ सर्वप्रकारेणायोग्ये ॥

सर्वत : पाणिपादम् । न॰ ब्रह्मणि ॥

सर्व्वत: शुभा । स्त्री॰ प्रियङ्गुवृक्षे ।

सर्वत : श्रुतिमत् । न॰ ब्रह्मणि ॥

सर्वतन्त्रम् । न॰ सकल शास्त्रे ॥

सर्वतन्त्रसिद्धान्त : । पुं॰ गोतमोक्तसिद्धान्तविशेषे ॥ तथाहि । सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृत:सर्वतन्त्रसिद्धान्त :॥ अस्यार्थ : । सर्वतन्त्राविरुद्ध:॰ सर्वशास्त्राभ्युपगतइतियावत् । वस्तुतोयथाश्रुतएवार्थ : । अन्यथा॰ तन्त्रेऽधिकृतइत्यस्यवैयर्थ्यापत्ति:॰ अतएवघ्राणाद्यादेरसदुत्तरत्वमपिसर्वतन्त्रसिद्धान्त : । नचतन्त्रेऽधिकृतइतिस्पष्टार्थंलक्षणेतुनदेयमेवेतिवाच्यम् । मनसइन्द्रियत्वस्यापिसर्वतन्त्रसिद्धान्ततापत्ते : । नव्यास्तुसूत्रस्योपलक्षणमात्रत्वात्॰ वादिप्रतिवाद्युभयाभ्युपगत : कथानुकूलोर्थ : सइतिवदन्तीति ॥ २८ ॥

सर्व्वत : । अ॰ समन्ततोर्थे ॥ सर्वस्मात् । पञ्चम्यास्तसिल् ॥

सर्व्वतापन : । पुं॰ कामदेवे ॥ त्रि॰ सर्वतापके ॥

सर्व्वतिक्ता । स्त्री॰ काकमाच्याम् ॥

सर्व्वतीर्थवरह्रद : । पुं॰ तीर्थविशेषे ॥

सर्वतोभद्र : । पुं॰ चित्रकाव्यविशेषे । तदुदाहरणम् यथा ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| स | का | र | ना | ना | र | का | स |
| का | य | सा | द | द | सा | य | का |
| र | सा | ह | वा | वा | ह | सा | र |
| ना | द | वा | द | द | वा | द | ना |

। अस्यार्थ : ।

पुन : कीदृशीसेना॰ सकारा : स

यस्याः सोऽस्त्यास्याः • नाना • नाना
विधाश्च • ये • घोराः घोरीणां स
मूहाः • तेषां कासाः • गतिभेदाः •
कायाः • विग्रहाश्च • तेषां साद
ददति • द्रुतिसादाः • नाशका
रकाः सायकायस्याः सा तथोक्ता ।
रसेन • रागेण • आछ्वेयस्याः •
सा • रसाछ्वा • रसरागिणीत्यर्थः ।
वाहसाराणां वाहश्रेष्ठाणां • येनादाः
ह्रेषादिघोषाः तेषां नादं कलहं द
दाति • द्रुतं नादं दामि • ते सप्तक
लहायमानानि वादनानि • वाद्यानि •
यस्याः सा • वाहसारनादकलहवाद
वा । अतएव तेषां तुल्यतोक्तिः रतिश
योक्तिः । सर्वतोभ्रमणात् सर्वतोभ
द्राख्यश्चित्रबन्धः । अतएव दण्डी ।
तदिष्टं सर्वतोभद्रम्भ्रमणं यदि सर्व
तश्चित ॥ निम्बे ॥ विष्णुरथे ॥ व्यू
हविशेषे । सर्वतोभद्रमत्र । सर्वतो
भद्रं यस्मादिदा । न • देवयानविशे
षे । हर्षोत्सर्गव्रतप्रतिष्ठादिषु पूजा
धारमण्डलविशेषे ॥ तच्च शारदादि
तन्त्रेषु द्रष्टव्यम् ॥ पुं • न • ईश्वर
सद्मविशेषे । चतुर्द्वारालिन्दशोभि
राजगृहान्तरे ॥ चतुःशालश्चतु
र्द्वारः सर्वतोभद्रसंज्ञितश्चेत्युक्तः ॥
सर्वतोभद्रा । स्त्री • गम्भार्याम् ॥ न
टयोषिति ॥ सर्वतोभद्रं यस्याः ।
सर्वतोमुखः । पुं • विधौ । ब्रह्मणि ।

उर्षे । रुद्रे । शिवे ॥ [illegible] ।
आत्मनि ॥ अग्नौ ॥ ब्राह्मणे ॥
स्वर्गे । न • अम्बुनि । जले ॥ आ
काशे । खे । सर्वतोमुखान्यस्य ।
सर्वदिग्गमनात् ॥

सर्वत्र । अ • सर्वस्मिन्काले ॥ सर्व
स्मिन्देशे । सर्वस्यान्दिशि ॥ सप्त
म्याम्त्रल् ॥ सर्वत्र खलु दृश्यन्ते साध
वो धर्मचारिणः । शूराः शरण्याः
सौमित्रे तिर्यग्योनिगतेष्वपि ॥

सर्वत्रगः । पुं • वायौ । त्रि • सर्व
व्यापिनि । सर्वकारणे ॥ सर्वत्र ग
च्छति । गम् ड • । डप्रकरणे सर्वत्र
पन्नयोरुपसङ्ख्यानाड्डः ॥

सर्वत्रगामी । पुं • अनिले ॥ त्रि •
सर्वदिग्देशकालेषु गमनकर्त्तरि

सर्वत्रसमदर्शनः । त्रि • सर्व-
स्मिन्नरिमित्रादौ समं दर्शनं यस्य त
स्मिन् ॥

सर्वथा । अ • हेतौ ॥ बाढे ॥ सर्व
प्रकारेणेत्यर्थे ॥ सर्वैः प्रकारैः ।
प्रकारवचने थाल् ॥ यथा । विद्यते
न खलु कश्चिदुपायः सर्वलोकपरि
तोषकरो यः । सर्वथा स्वहितमाच
रणीयं किङ्करिष्यति जनो बहुजल्पः
। प्रतिष्ठायाम् ॥ भृशे ॥

सर्वथावर्त्तमानः । त्रि • सर्वथाप्रा
रब्धकर्मवशाद्विधिमतिक्रम्यवर्त्त-
माने

सर्व्वदमन :। पुं॰ शकुन्तलात्मजे॰ भरते ॥ कार्त्तवीर्य्ये ॥

सर्व्वदर्शन:। पुं॰ विष्णौ॥ सर्व्वाणिदर्शनात्मकान्यस्योति यद्वा सर्व्वात्मकत्वात् ॥

सर्व्वदर्शी। पुं॰ विष्णौ ॥ सर्व्वेषां प्राणिनां कृताकृतं सर्व्वं पश्यति स्वाभाविकेनबोधेनेति तथा ॥ बुद्धे ॥ त्रि॰ सर्व्वज्ञे ॥ सर्व्वं द्रष्टुं शीलमस्य । सुप्यजातौणिनिस्ताच्छील्ये ॥

सर्व्वदा । अ॰ सर्व्वस्मिन्काले ॥ सर्व्वैकान्यकिंयत्तद: कालेदा ॥

सर्व्वदु:खक्षय:। पुं॰ मोक्षे ॥ सर्व्वदु:खानांक्षयोविनाशोऽस्मिन्॰ इतितथा ॥ सर्व्वपीडानाशे ।

सर्व्वदृक् । त्रि॰ सर्व्वज्ञे अखिलस्यपदार्थस्यावलोकयितरि । सर्व्वंपश्यति । दृशिर्॰ । क्विप् ॥ ईश्वरे ॥ सर्व्वमतीतानागतादि॰ पश्यतिस्वरूपबोधेनेतितथा । क्विन्प्रत्ययश्चेत्यत्रबहुव्रीह्याश्रयणात्-कुत्वम् ॥

सर्व्वदेवमुख:। पुं॰ अनले । अग्नौ।

सर्व्वधातम :। त्रि॰ सर्व्वस्यधारयितृतमे ।

सर्व्वधारी । पुं॰ वत्सरविशेषे ॥ तत्फलंयथा । कीदृशा : शालिमुद्गाश्चकङ्गुमाषास्तथैवच । सुलभंजायतेसस्यंजगत्सर्व्वधारिणि ॥ त्रि॰ सर्व्वधारणशीले ॥

सर्व्वधुरावह : । पुं॰ सर्व्वधुरीणे ॥ सर्व्वाचासौधूश्च॰ सर्व्वधुरा । पूर्व्वकालैकसर्व्वेतिसमास :। ऋक्पूरित्य: । वहतीति॰ वह :। अच् । सर्व्वधुरायां : वह : ॥

सर्व्वधुरीण :। पुं॰ रथशकटलादिसर्व्वभाराणांवाहकेगवादौ । सर्व्वधुरावहे ॥ सर्व्वधुरांवहति । ख : सर्व्वधुरादितिख : ॥

सर्व्वनाम । न॰ सर्व्वादिपञ्चत्रिंशत्सु ॥ तानियथा । सर्व्व॰ विश्व॰ उभ॰ उभय॰ डतर॰ डतम॰ अन्य॰ अन्यतर॰ इतर॰ त्वत्॰ त्व॰ नेम॰ सम॰ सिम॰ पूर्व्वपरावरदक्षिणोत्तरापराधराणिव्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरंबहिर्योगोपसंव्यानयो :। त्यद्॰ तद्॰ यद्॰ एतद्॰ इदम्॰ अदस्॰ एक॰ द्वि॰ युष्मद्॰ अस्मद्॰ भवतु॰ किम्॰ इति ॥

सर्व्वनियन्ता । त्रि॰ परमेश्वरे । चिदात्मनि ॥ परमार्थतोऽसङ्गस्याऽपिचैतन्यस्य॰ आध्यासिकसम्बन्धस्वद्वाराज्ञानद्वारासर्व्वजीवप्रवर्त्तकत्वेन॰ सर्व्वनियन्तृत्वमितिज्ञेयम् ॥

सर्व्वन्दम :। पुं॰ शाकुन्तलेये॰ भ

रथे ॥

सर्व्वपथीनः । पुं॰ सारथौ ॥ सर्वपथानृव्याप्नोति । तत्सर्वादे पथ्यङ्गकर्मपात्रपात्रं व्याप्नोतीतिख: ॥

सर्व्वपथीनः । पुं॰ रथे ॥ सर्वपथानृव्याप्नोति । तत्सर्वादेरितिख: ॥

सर्व्वपात्रीणः । पुं॰ ओदने ॥ सर्वपात्रं व्याप्नोति । तत्सर्वादेरितिख: ॥

सर्व्वपूर्णत्वम् । न॰ सम्भारे ।

सर्व्वभक्षः । त्रि॰ सर्व्वभक्षणकर्त्तरि ॥

सर्व्वभक्षा । ) स्त्री॰ गलस्तन्याम् ।
सर्व्वभक्ष्या । ) छाग्याम् । अजायाम् ॥ इ॰ हे॰ रुद्र: ॥

सर्व्वभूतगुहाशयः । पुं॰ चिदात्मनि॰ परमेश्वरे ॥ सर्वभूतानांस्थावरजङ्गमानां॰गुहासुबुद्धिषुशेते । शीङ्ो धिकरणेशेतेरित्यच् ॥

सर्व्वभूतप्रणेता । पुं॰ लोकात्मनिपरमेश्वरे ॥ यथाहु: । द्यांमूर्द्धानंयस्यविप्रावदन्ति॰ खंवैनाभिंचन्द्रसूर्य्यौचनेत्रे । दिश: श्रोत्रे विद्धिपादौक्षितिञ्चसोचिन्त्यात्मासर्वभूतप्रणेता । इति ॥

सर्वभूतात्मकः । त्रि॰ प्रत्यगभिन्नेपरमात्मनि ॥

सर्व्वभूतात्मभूतात्मा । पुं॰ आत्मज्ञानिनि ॥ यथा । जडाजडात्मकं सर्वमात्मभावंप्रपश्यति । सएवसर्वभूतात्मभूतात्माप्रोच्यतेबुधैरिति सर्वभूतात्मभूतस्य॰ आत्माखरूपमस्य ॥

सर्वभूताशयस्थितः । त्रि॰ आत्मनि॰ चैतन्यानन्दघनेचिन्मात्रे ॥ सर्वभूतानामाशयेहृदि शैलरथामिरूपेण॰ प्रत्यगात्मरूपेणचस्थितोय: सएवस: ॥

सर्वभृत् । त्रि॰ नामरूपात्मकस्थूलजगतोधारके॰ पोषकेच॰ चिदात्मनि॰ ॥ मायया॰ सदात्मना॰ सर्वङ्कल्पितं॰ धारयति॰ पोषयतिच॰ निरधिष्ठानभ्रमयोगात् । डुभृञ्धारणपोषणयो: । क्विप् । तुक् ॥

सर्वमङ्गला । स्त्री॰ दुर्गायाम् ॥ सर्वेभ्य: सर्वेषांवामङ्गला ॥ सर्वाणिमङ्गलानियस्माद्भवति॥ सर्वाणिहृदयस्थानिमङ्गलानिशुभानिच । ददातिचेप्सितांल्लोकेतेनसासर्वमङ्गलेतिदेवीपुराणम् ॥ अपिच । मङ्गलंमोक्षवचनमाश्वेदातवाचक: । सर्वान्मोक्षान्याददातितेनसासर्वमंगला ॥ हर्षेसम्पत्तिकल्याणेमङ्गलंपरिकीर्त्तितम् । तान्ददातिचयादेवीसाएवसर्वमङ्गला ॥ इ॰ ब्र॰ वै॰ पु॰ ॥ अन्यच्च । सर्वमङ्गलशब्दश्च सम्पूर्णार्थवाचक: । आकारोदातृवचनस्तस्मात्सासर्वमङ्गला ॥ ॥ इ॰ ब्र॰ वै॰ पु॰ श्रीकृष्णजन्मखण्डे २७ अध्याय: ॥

सर्व्वमयः । त्रि॰ सर्वात्मके ॥
सर्व्वमङ्गल्यम् । न॰ कपर्द्दके ॥
सर्व्वमूषकः । पुं॰ अनेहसि ॥ काले ।
सर्व्वमेधः । पुं॰ सर्व्वस्वदक्षिणे॰ विश्वजिदाख्ये । यज्ञे ॥
सर्व्वम्भरिः । पुं॰ प्राणे ॥ सर्व्वस्विभर्त्ति । सर्व्वस्मुमागमोभृञ्ञ्चनिर्नि पातनात् ॥
सर्व्वयोगविनिस्मृतः । त्रि॰ असङ्गे । सर्व्वसम्बन्धविनिर्गते ॥ योगशब्देनसम्बन्धउच्यते । सर्व्वेस्तैर्योगाः सम्बन्धास्तभ्यो विनिस्मृतः विनिर्गतः ॥
सर्व्वरत्नकम् न॰ कवचविशेषे ॥
सर्व्वरसः । पुं॰ सर्ज्जरसे । धूनके ॥ वीणाप्रभेदे ॥ लवणरसे ॥ सर्व्वे रस्यते । रसआस्वादने । अदन्तोयन्तः । घञ्॰ अज्वा ॥ सर्व्वेरसा यस्मिन्वा । परमानन्दे॰ आत्मनि ॥ सर्व्वे रसाः सुखानिविद्यन्ते यस्मिन्नसः ॥ पण्डिते ।
सर्व्वरसायः । पुं॰ मण्डे ॥ रसश्रासावयश्च । रसश्चायइतिवा ॥ अयोरसः॰ रसायः । राजदन्तादित्वा । सर्व्वस्वरसायः ॥
सर्व्वरसोत्तमः । पुं॰ लवणरसे ॥
सर्व्वर्त्तुपरिवर्त्तः । पुं॰ वत्सरे ॥
सर्व्वलिङ्गी । पुं॰ पाषण्डे । वेदवि रुद्धाचारे॰ सर्व्ववर्णाश्रमचिह्नधारिणि ॥ नानाव्रतधरानानावेषाः पाषण्डिनोमताः ॥ सर्व्वाणिचतानिलिङ्गानिच । सर्व्वाणिलिङ्गानिसन्त्यस्य । अतइनिः ॥
सर्व्वलोहः । पुं॰ लौहमयनाराचे । प्रक्ष्वेडने । समस्तधातौ ॥
सर्व्ववर्णिका स्त्री॰ गम्भार्याम् ॥
सर्व्ववल्लभः । त्रि॰ सर्व्वप्रिये ॥
सर्व्ववल्लभा । स्त्री॰ असत्याम्नार्याम् ॥
सर्व्ववाह्यः । त्रि॰ सर्व्वमिन्द्रियाणाम् विषये ॥
सर्व्वविक्रयी । पुं॰ प्रतिषिद्धद्रव्याणां विक्रेतरि ॥
सर्व्ववित् । पुं॰ परमेश्वरे ॥ त्रि॰ विदितात्मतत्त्वे ॥ सर्व्वसर्व्ववेत्ति॰ विन्दतिवा । विद॰ विद्लृवा । सत्सूद्विषेत्यादिना क्विप्
सर्व्वविषयातीतः । त्रि॰ सर्वाश्रयार्मिणि । सर्व्वमविद्यातत्कार्यात्मकंविषयमतीत्यावस्थितः ॥
सर्व्ववेदाः । पुं॰ विश्वजिदादौ । सर्व्वस्वदक्षिणोपेतयागकर्त्तरि ॥ यथाहामरः । सर्व्ववेदाः सयेनेष्टोयागः सर्व्वस्वदक्षिणइति ॥ सर्व्वेवेदयति॰ लम्भयति॰ ऋत्विग्भ्यइतिसर्व्ववेदाः । विद्लृलाभे । असुन्तः । असुन् ॥

सर्व्ववेशी । पुं॰ नर्त्तके । नटे । सर्व्वेषांवेशः सोऽस्यास्ति । इनिः । सकलवेशधारिणि । बहुरूपी॰ इ॰ भा॰ ॥

सर्व्वव्यापी । वि॰ आकाशवत्सकलपदार्थव्यापनशीले ॥ यथा । सर्व्वव्यापिनमात्मानंज्ञात्वाधीरोनशोचतीति ॥

सर्व्वशः । अ॰ सर्व्वप्रकारेणेत्यर्थे ॥

सर्व्वशाखामलम् । न॰ नक्षत्रविशेषेषु ॥ यथा । भरणीकृत्तिकापित्र्यविशाखाशक्रभानिच । सर्व्वशाखामलंप्रोक्तंव्रतंतत्रविवर्ज्जयेत् ॥

सर्व्वशास्त्रवित् । वि॰ महानिर्व्वाणागमज्ञे ॥

सर्व्वशान्तिकृत् । पुं॰ दीः ष्यको । शाकुनलेये ॥ वि॰ सर्व्वशांतिविधायिनि ॥

सर्व्वसंसर्गलवणम् । न॰ औषरके ॥

सर्व्वसङ्गतः । पुं॰ षष्टिकाशाम ॥ वि॰ सर्व्वप्रिये । सकलसङ्गतियुक्ते ॥

सर्व्वसत्त्वसमुद्भवा । स्त्री॰ प्रावृषि ॥ सर्व्वेषांप्राणिनांसमुद्भवउत्पत्तिर्यस्याम् ॥

सर्व्वसन्नहनार्थकः । पुं॰ सर्व्वसैन्यसन्नहने । सर्व्वाभिसारे ॥ सर्व्वेषांसन्नहनम्॰ सर्व्वसन्नहनम् । स र्व्वसन्नहनमर्थोयस्य सः ॥

सर्व्वसन्नाहः । पुं॰ सर्व्वात्मनि ॥

सर्व्वसहः । पुं॰ गुग्गुलौ ॥ वि॰ सकलसहिष्णौ ॥

सर्व्वसाक्षी । पुं॰ परमात्मनि ॥ सर्व्वेषांशुभाशुभकर्म्मणां॰साक्षी॰ साक्षाद्द्रष्टा ॥ वि॰ सर्व्वविषयद्रष्टरि ॥

सर्व्वसिद्धिः । पुं॰ श्रीफले॰बिल्वे ॥ वि॰ सिद्धियुक्ते ॥

सर्व्वसुखप्रदः । पुं॰ परमात्मनि ॥ भगवति ॥

सर्व्वस्वम् । न॰ समस्तधने ॥

सर्व्वस्वी । पुं॰ गोपकन्यायांनापितात्जातेसङ्करजातौ ॥ वि॰ सर्व्वस्वविशिष्टे ॥

सर्व्वहरः । वि॰ सर्व्वसंहारकारिणि ॥

सर्व्वहितम् । न॰ मरिचे ॥ वि॰ सर्व्वेषांहितकारिणि ॥

सर्व्वाकारः । वि॰ समस्तदेहाद्याकारविशिष्टे॰ भगवति ॥ यथाहुराचार्याः । सर्व्वाकारोभगवानुपास्यतेयेनयेनभावेन । तन्मयमेवभूत्वाचिन्तामणिवत्समभ्येतीति ॥ सर्व्वोपादानकारणत्वात् सर्व्वाकारत्वम् ॥

सर्व्वाङ्गम् । न॰ सकलावयवे ॥

सर्व्वाङ्गसुन्दरः । पुं॰ औषधविशेषे ॥ यथा । रसगन्धकतुल्यांशौद्वौभा

गोटङ्कणञ्च । मौक्तिकं विद्रुमं शङ्खमवनीयसमांशतः ॥ हेमभस्मार्द्धभागञ्च सर्व्वं खल्वे निधापयेत् । निम्बुद्रवस्य योगेन पिष्टिकां कारयेद्भिषक् ॥ पश्चाद्गजपुटं दत्त्वा स्वाङ्गशीतलमुद्धरेत् । हेमभस्मसमं तीक्ष्णं ताम्रार्द्धं दरदं मतः ॥ एतौ क्षिप्त्वा समस्तानि सूक्ष्मचूर्णानि कारयेत् । ततः पूजां प्रकुर्वीत भक्षयेद्दिवसे शुभे ॥ सर्व्वाङ्गसुन्दरो ह्येष रोगराजनिकृन्तनः । वातपित्तज्वरे घोरे सन्निपाते सुदारुणे ॥ अर्शःस्वग्रहणीरोगे मेहे गुल्मे भगन्दरे । निहन्ति वातजान् रोगान् श्लेष्मकांश्च विशेषतः ॥ पिप्पलीमधुसंयुक्तं घृतयुक्तमथापि वा । भक्षयेत् पर्णखण्डेन सितया चार्द्रकेण वा ॥ गुडूचीमत्स्यसहितं प्रमेहे च विशेषतः । रसरत्नाकरः प्रोक्तः सिद्धयोगो रसोत्तमः ॥ राजिकाहिङ्गुतैलाम्लं तक्रं शाकञ्च वर्ज्जयेत् । धूर्त्तभैषज्यरत्नावल्यां सर्व्वाङ्गसुन्दरो रसः ॥

सर्व्वाङ्गीणः । पुं॰ तापे ॥ सर्व्वाङ्गानि व्याप्नोति । तत् सर्व्वादेरिति खः ॥ त्रि॰ सर्व्वावयवसंबन्धयुक्ते ॥

सर्व्वातिथिः । पुं॰ विश्वरक्षितरि ॥ सर्व्वातिथिपूजके ॥ सर्व्वे॰ अतिथयो यस्य सः ॥

सर्व्वात्मा । पुं॰ सर्व्वस्वरूपे ॥ सर्व्वप्रयत्ने ॥

सर्व्वात्मता । स्त्री॰ सर्व्वस्य आत्माभेदे ॥ भावे तल् ॥

सर्व्वाध्यक्षः । त्रि॰ सर्व्वस्मिन्नधिकृते ॥ सर्व्वप्रत्यक्षे ॥ सर्व्वनियन्तरि ॥

सर्व्वानुकारिणी । स्त्री॰ शालपर्ण्याम् ॥

सर्व्वानुकारी । त्रि॰ सर्व्वसमे ॥

सर्व्वानुभूतिः । स्त्री॰ श्वेतत्रिवृतायाम् ॥ सर्व्वैरनुभूयतेऽसौ ॥ सर्व्वैरनुभूयते वा । कर्म्मणि क्तिन् ॥ सकलज्ञाने । पुं॰ भूतार्हद्विशेषे ॥ भाव्यर्हद्विशेषे ॥

सर्व्वान्नभक्षकः । त्रि॰ उदरपिशाचे । सर्व्वान्नभोजिनि ।

सर्व्वान्नभोजी । त्रि॰ सर्व्वान्नीने ॥ सर्व्वेषामन्नानि॰ सर्व्वान्नानि । सर्व्वान्नानि भोक्तुं शीलमस्य । सुप्यजातौ णिनिः ॥

सर्व्वान्नीनः । त्रि॰ सर्व्ववर्णान्नभक्षके । सर्व्वान्नभोजिनि ॥ सर्व्वान्नानि भक्षयति । अनुपदसर्व्वान्नेति खः ॥ भिक्षौ ॥

सर्व्वाभिसन्धकः । पुं॰ परगुणासहनतया सर्व्वाधिक्षेपके । वैडालव्रतिकादौ ॥ यथाह मनुः । धर्म्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः । वैडालव्रतिको ज्ञेयो हिंस्रः सर्व्वाभिसन्धकः इति ॥

सर्व्वाभिसन्धी । पुं॰ वैडालव्रतिके ।

छयातापसी । वि० सर्व्वाभिसंधान विशिष्टे ॥
सर्व्वाभिसारः । पुं० सर्व्वैषे । सर्व्वस न्नहनार्थके । चतुरङ्गसैन्यसन्नाहे ।
सर्व्वेषां अभिसरणम् । ष० । भावेघञ् ॥
सर्व्वार्थसाधिका । स्त्री० दुर्गायाम् । वि० सकलप्रयोजनसाधके ॥
सर्व्वार्थसिद्धः । पुं० बुद्धभेदे । शाक्यमुनौ । शौद्धोदनौ । वि० लब्धार्थे । समस्तप्रयोजनसिद्धियुक्ते ॥
सर्व्वार्थेषु सिद्धो निष्पन्नः । सिद्ध शुष्कपक्वबन्धैश्चेतिसमासः ॥
सर्व्वार्थः सिद्धोऽस्येतिवा ॥
सर्व्वार्थसिद्धिः । स्त्री० योगविशेषे । सर्व्वार्थसिद्धिसंज्ञके ॥ सर्व्वार्थानांसिद्धिः ॥
सर्व्वार्थसिद्धिसंज्ञकः । पुं० योगभेदे ॥ यथा । मूलोत्तराकरतुरङ्गम पुष्यभानिसूर्ये । इन्दौविधिर्म्मैत्र गुरुः शशाङ्के । सार्प्पैन्द्रताधनत पान्त्यभमेव भौमे । बज्रोन्दुमैत्रकर भानिविधिश्च सौम्ये ॥ मैत्रान्त्यपु ष्यतुरगादितिभानि शौवे । इर्य्यन्त्य मैत्रतुरगादितयश्च शुक्रे । ब्राह्मानि लश्रवणभानिशनैश्चराहे । सर्व्वार्थ सिद्धिसहितः कथितोहियोगः ॥
सर्व्वार्थानुसाधनी । स्त्री० सर्व्वार्थसाधिन्याम् । अम्बायाम् । दुर्गायाम् ॥
यथा । धर्म्मादीश्चिन्तितान्यस्मात् सर्व्वलोकेषुयच्छति । ततोदेवीसमा ख्यातासासर्व्वार्थानुसाधिनीतिदेवी पुराणे ४५ ऽध्यायः ॥
सर्व्वावसरः । पुं० निःसंपाते । अ र्द्धरात्रे ॥ सर्व्वेषामवसरोऽस्मिन् ॥ ब० वि० शेषः ॥
सर्व्वाशी । वि० निषिद्धभोजनादि शीले ॥
सर्व्वाश्चर्य्यमयः । वि० अनेकाद्भुतप्र चुरे ॥
सर्व्वाश्रमनमस्कृतः । पुं० अन्त्याश्रमे । पारमहंस्ये ॥
सर्व्वाषा । स्त्री० देवीविशेषे ॥
सर्व्वाह्णः । पुं० समस्तदिने ॥
सर्व्वीयः । वि० सार्व्वे । सर्व्वस्मैहित म् । सर्व्वाखोवेतिपक्षेछः ॥
सर्व्वेन्द्रियगुणाभासम् । वि० श्रोत्रेन्द्र याणि ॥ सर्व्वाणीन्द्रियाणि करणानांश्रो त्रादीनां अन्तःकरणेश्चबुद्धि मनसोर्गुणैः अध्यवसायसङ्कल्पश्रव णवचनादिभिस्तत्तद्विषयतयाऽवभा सतइव । सर्व्वेन्द्रियव्यापारैर्व्यापृ तमिवयत् ॥ तत्सर्व्वेन्द्रियाविषु णाश्चतद्विषयानाभासयतिवा ॥
सर्व्वेशानः । पुं० परमेश्वरे ॥ सर्व्वे षामीशानः ॥
सर्व्वेश्वरः । पुं० परशिवे ॥ परमार्थ तोऽसङ्गस्यापिचैतन्यस्य० आध्यासि

कामम्बाम्बकस्वरूपाच्चानन्दाकारः सर्वम
यादाधारकमपि तु रूपत्वेन परमेश्वर
त्वम्। सर्वेषाम्० ईश्वरः। आ
नन्दमये॥ यथा। अयं यत् सृजति वि
श्वं तदन्यथयितुं पुमान्। न कोऽपि
शक्तस्तेनायं सर्वेश्वर इति श्रुतः॥
यथा च। नारायणमात्मानं ज्ञात्वा
सर्गस्थितिप्रलयहेतुम्। सर्वज्ञः
सर्वभूतः सर्वः सर्वेश्वरो भव
तीति।

सर्वौघः। पुं० सर्वसन्नहनार्थके।
सर्वस्यौघः॥ गुरुविशेषे॥

सर्वौषधिः। स्त्री० ओषधिवर्गविशे
षे॥ यथा। कुष्ठं मांसी हरिद्रे द्वे मु
रा शैलेयचन्दनम्। वचा कर्पूरमु
स्ताख्याः सर्वौषध्यः प्रकीर्त्ति
ताः॥

सर्षपः। पुं० सरिषपे। तुभे। कटु
स्नेहे॥ सरति स्नेहोऽस्मात्। सृ०
। सर्त्तेरपः षुक् चेत्यपः षुगागम
श्च॥ सर्षपस्तु रसे पाके कटुः स्निग्धः
सतिक्तकः। तीक्ष्णोष्णः कफवा
तघ्नो रक्तपित्ताग्निवर्द्धनः॥ रक्षोह
रो जयेत् कण्डूकुष्ठकोष्ठक्रिमिग्रहा
न्। यथा रक्तस्तथा गौरः किन्तु गौ
रो वरो मतः॥ स्थावरविषप्रभेदे॥
लिक्षाषट्कपरिमाणे॥ यथा। जा
लान्तरगते भानौ यच्चाणु दृश्यते रजः
। तैश्चतुर्भिर्भवेल्लिक्षा लिक्षाषड्भि
स्वसर्षपः॥

सर्षपतैलम्। न० सर्षपाणां स्नेहे॥
स्नेहे तैले च॥ दीपनं सार्षपं तैलं
कटुपाकरसं लघु। लेखनं स्पर्शवी
र्योष्णं तीक्ष्णं पित्तासृग्दूषकम्॥ क
फमेदोऽनिलार्शोघ्नं शिरःकर्णामया
पहम्। कण्डूकोठक्रिमिश्वित्रकुष्ठदु
ष्टव्रणप्रणुत्॥ तद्वद्राजिकयोस्तैलं
विशेषान्मूत्रकृच्छ्रकृत्। राजिक
योः कृष्णराजिकारक्तराजिका०
तयोः॥

सर्षपनालम्। न० सार्षपेकाण्डे॥
तीक्ष्णोष्णं सार्षपं नालं वातश्लेष्म
व्रणापहम्। कण्डूक्रिमिहरं दद्रु
कुष्ठघ्नं रुचिकारकम्॥ पाकप्रका
रो यथा। सार्षपः कोमलो दण्डः
स्विन्नः स्नेहपीडितः। ततस्तैले
सहिङ्गुनाढ्ये भर्जितः सैन्धवा
न्विते॥ इति॥

सर्षपशाकम्। न० सार्षपेशाके॥
कटुकं सार्षपं शाकं बहुमूत्रमलं गुरु
। अम्लपाकं विदाहि स्यादुष्णं रूक्षं
त्रिदोषकृत्॥ सक्षारं लवणं तीक्ष्णं
स्वादुशाकेषु निन्दितम्॥

सर्षपी। स्त्री० खञ्जनिकायाम्॥

सलम्। न० जले॥ सलति। सल०
। अच्॥

सललितम्। त्रि० सविलासे॥

सलिरम्। न० जले॥ सलति। सल०।

सलिलमोति॰ इलच् । रलयोरैक्यम् ॥

सलिलम् । न॰ जले । उणादाना ख्यायांद्वितीयायांतुष्टौ । सलति॰ गच्छतिनिम्नदेशम् । सलगतौ । सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्यइलच् । सलिलव्यञ्जकदेशादगागंलेद्रष्टव्या: । कश्चिद्विशेषोवापिकालिदासेन यथा । अथान्मोटुम्बरसिन्दुवारा: पर्णप्रशोलातिविशालशाखा: । बलमीकयार्श्वा: शुरगाश्चवनतवास्तु निर्दिश्यमलंसमाशु ॥ येषामतिशीतलमत्स्यपुच्छिरसोसाखादु सान्द्रसलिलाकिलशीघ्रवार्दा । इत्थंविलोक्यसुधोमिरूकूपवापीकासारकुण्डखननंविदधीतशश्वत् ॥ नीचगतजलदेशमाह । सिंधुप्रतानमरुकामवगीडगंश्रेनिमंधरान्तरगमम्बुनिसर्गभावात् । धारासकुण्ठतरुवक्रविनिस्तृतोर्व्यांतदहनंविकृतिमहुषमाहुरार्या: ॥ शुभजलस्थानमाह । ग्रामादुदीरितइरिव्युपगोजमागेवे च भमण्डलविभागशतिप्रशस्तम् । वाच्यंवनंतद्विङ्गभंकवीन्द्रभागेनिम्नाद्रेभूमितटिमौनगदिकाग्गिराभिरिति ॥

सलिलकुन्तल: । पुं॰ शैवाले । सलिलस्यकुन्तलइव ॥

सलिलकोष्ठ: । पुं॰ जलगृहे । स मन्दिरइ॰ भा॰ प्र॰ ॥

सलिलज: । त्रि॰ जलोत्पन्ने ॥ न॰ पद्मे ॥

सलिलनिधि: । पुं॰ समुद्रे ॥ यथा । पीत्वागस्त्यन्वयपस्तेदिग्विदिग्व्याजलदास्त्वंशरणंगिरीणांसुतामावा सभाजाममरविटपिनांजन्मभूमि स्त्वमेवागाम्भीर्येकिस्विताद्दकस्त्वयिसलिलनिधेकिन्तुविज्ञापयाम: सर्वोपायेनमैनाकक्षिमुनिकृपादृष्टय: काकचक्षोया: ॥ जलानांनिधि: ॥

सलिलेन्धन: । पुं॰ वाडवाग्नौ ॥ सलिलमिन्धनंयस्य ॥

सलील: । त्रि॰ लीलयासहवर्त्तमाने ॥

सलोकता । स्त्री॰ समानलोकतायाम् ॥

सल्लकी । स्त्री॰ गजभक्ष्यायाम् । शल्लक्याम् । सत्कृत्यलक्यतेस्वाद्यतेगजै: । लक॰ । कृन् । गौरादि ॥

सल्लक्ष्यम् । न॰ प्रत्यगभिन्नब्रह्मणि ॥ सत्वतल्लक्ष्यञ्चेतितथा ॥

सव: । पुं॰ यज्ञे ॥ सोमोयत्राभिषूयतेरसार्थंखण्ड्यतेयत्राध्वरेससव: ॥ सन्ताने ॥ सूयतेसोमोऽत्र । षु अ॰ । ऋदोरप् ॥ यद्वा । सूयते ऽनेनवा । षूप्रेरणे । अप् ॰ घो वा ॥ न॰ जले ॥

सवनम् । न॰ यज्ञस्नाने । सूत्याया

मित्रीयतइति ॥ सवति ॥ सुवति॰ कर्मणिक्तिः।कं प्रेरयति । सूप्रेरणे । तच् । अकर्त्तरि ॥

सवितृदैवत: । पुं॰ हस्तनक्षत्रे ॥ सविता दैवतं यस्य ॥

सवित्रम् । न॰ प्रसवसाधने ॥ सूयतेऽनेन । पू॰ । अर्त्तिलूधूसूखनेतीत्र: ॥

सवित्रिय: । सूर्यसम्बन्धीये ॥

सवित्री । स्त्री॰ जनन्याम् । तज्जन्मात्. ङीप् ॥

सविध: । त्रि॰ अन्तिके । निकटे ॥ समानाविधाऽस्य॰ सहविधयेतिवा ॥ सप्रकारे ॥

सविस्मय: । त्रि॰ आश्चर्ययुक्ते । वीक्षापन्ने ॥ विस्मयेनसहवर्त्ततइति तथा ॥

सवेश: । त्रि॰ निकटे ॥ वेशान्विते समानोवेशोऽस्य॰सहवेशेनेतिवा ॥

सव्य: । पुं॰ विष्णौ ॥ त्रि॰वामे । प्रतीपे. प्रतिकूले । दक्षिणे ॥ सूयते । पू॰ । अचोयत् ॥ यथा । सुनोति । बाहुलकाद्य: ॥

सव्यभिचार: । पुं॰ हेत्वाभासान्तरे ॥ यथा । अनैकान्तिक: सव्यभिचार: । सविविध: । साधारणाऽसाधारणानुपसंहारिभेदात् ॥

सव्यलीक: । त्रि॰ सापराधे ॥

सव्यसाची । पुं॰ अर्जुने । पार्थे ॥

सव्येनवामेनहस्तेनापि॰शरान्॰ सचितुं सन्धातुं शीलं यस्य । णिनि: ॥

सव्येष्ठ: । पुं॰ सारथौ ॥ सव्येतिष्ठति । सुपिस्थइतिक: । स्थास्थिन्स्तृणामितिष: । हलदन्तादित्यलुक् ॥

सव्येष्ठा । पुं॰ सूते ॥ सारथौ ॥ सव्येवामेतिष्ठति । ष्ठा॰ । सव्येस्थश्छन्दसीति॰ क्त: ॰ डिच्च । अम्बाम्बेत्यत॰स्थास्थिन्स्तृणामुपसङ्ख्यानात्षत्वम्॰ सुषामादित्वाद्वा । हलदन्तादित्यलुक् । सव्येष्ठरौ॰ सव्येष्ठरइत्यादिरूपाणि ॥

सशस्य: । त्रि॰ शस्ययुक्ते भूम्यादौ ॥

सशल्या । स्त्री॰ नागदन्त्याम् ॥

सश्मश्रु: । स्त्री॰ श्मश्रुयुक्तस्त्रियाम् । नरमालिन्याम् ॥

ससत्त्व: । त्रि॰ प्राणियुक्ते ॥

ससत्त्वा । स्त्री॰ गर्भिण्याम् ॥

ससन्देह: । पुं॰ अर्थालङ्कारप्रभेदे ॥ यथा । ससन्देहस्तुभेदोक्तौ॰ तदनुक्तौचसंशय: । भेदोक्तौयथा । अयंमार्त्तण्ड: किं सखलुतुरगै: सप्तभिरित: कृशानु: किं सर्वा: प्रसरतिदिशो नैवनियतम् । कृतान्त: किं साक्षान्महिषवहनोसाविति चिरं समालोक्याजौत्वां विदधति विकल्पान् नृपतिभटा: ॥ भेदोक्तावित्यनेनभे

अलमयं निश्चयगर्भोयाबन्निश्चयान्तो पिसन्देहः स्वीकृतः । यथा। इन्दुः किंक्वकलङ्कः सरसिजमेतत्किमम्बुकु वगतम् । ललितसविलासवचनैर्मु खमितिहरिणाक्षिनिश्चितंपरतः ॥ किन्तुनिश्चयगर्भ इत्यत्रावनिश्चयः प्रतीयमानइत्युपेक्षितोभट्टोद्भटेन । तदनुक्तोयथा । अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रोनुकान्तिप्रदः शृङ्गारैकरसः स्वयंनुमदनोमासो नुपुष्पाकरः । वेदाभ्यासजडः कथंनुविषयव्यावृत्तकौतूहलोनिर्मा तुंप्रभवेन्मनोहरमिदंरूपंपुराणो मुनिः ॥ त्रि॰ सन्देहसहिते ॥

ससुरः । त्रि॰ सदेवे । सुरासहिते । सुरेण॰ सुरयावा॰सहवर्त्तते इति ॥

सस्मितः । त्रि॰ ईषद्धास्ययुक्ते ॥ यथा । सस्मिताननसरोजमङ्गनेरिङ्ग मायमतिलोलकुन्तलम् । रोचनो ल्लसितभालमस्तुमेऽग्रयंमनसित्र ग्रवंवपुरित्यनुमितोजगदीशः ॥

सस्यम् । न॰ शस्ये । वृक्षादिफले ॥ धान्ये ॥ शस्त्रे ॥ गुणे ॥ सस्ति । षसषसिस्वप्ने । मोव्यासस्सिभ्योयः ॥

सस्यकः । पुं॰ मणिभेदे । नालिकेरान्तः सस्याभमणौ । असौ । खड्गे ॥ वस्त्रे ॥ साधौ ॥ सस्येनगुणेन परिज्ञातः सस्यकः । सस्येनपरि ज्ञातइतिकन् ॥

सस्यमारी । पुं॰ महाम्रूषके ॥

सस्यसंवरः । पुं॰ सालवृक्षे ॥ सस्यैः संव्रियते । वृञ्॰ । ग्रहवृद्रित्यप् ॥

सस्यसंवरणः । पुं॰ सालवृक्षे । सखुवा॰ इ॰ भा॰ प्र॰ ॥

सस्वेदः । त्रि॰ स्वेदसहिते ॥

सस्वेदा । स्त्री॰ दूषितायाम्कन्यायाम् ॥

सह । अ॰ साकल्ये ॥ विद्यमाने ॥ सादृश्ये । यौगपद्ये । सार्द्धम्॰ साकम्॰ सत्रम्॰ सममित्यर्थे । सहिते ॥ समृद्धौ । सम्बन्धे ॥ सहते । षहमर्षणे । पचाद्यच् ।

सहः । पुं॰ न॰ बले । पुं॰ मार्गशीर्षे । न॰ पांशवे॰ लवणे ॥ त्रि॰ क्षमे ॥ क्षान्ते ॥ सहते॰ क्षमते । षह॰ । पचाद्यच् ॥

सहकारः । पुं॰ अतिसौरभाम्रे ॥ सहार॰ इ॰ भा॰ प्र॰ ॥ सहकारयति॰ मेलयतिहृन्नृदम् । अच् । तुषारादयश्चत्वारोवासाधुः ॥ साहाय्ये ।

सहकारी पुं॰ प्रत्यये ॥ त्रि॰ सहकार्य्यं कृतिः ॥

सहकारित्वम् । न॰ तद्भिन्नत्वेसति तज्जन्यजनकत्वं॰इतिनैयायिकाः ॥

सहगमनम् । न॰ । अनुगमने ॥ यथा ॥ अष्टौलोकपालाश्चादित्यचन्द्राग्नि सान्याकाशभूमिजलहृदयानिस्थिता

त्यर्थामितुरुषयमहितमराविसम्याध
मायूयंसाक्षिणीभवत•ज्वलच्चितारो
हणेनपतिदेहेनसहगमनमहंकरो
मीत्यनुगमनेसङ्कल्प : ॥

सहचर : । पुं॰ नीलझिण्टाम् ॥ पी
तझिण्टाम् । पीयावांसाडू॰ भा॰
प्र॰ ॥ वि॰ अनुचरे ॥ सहचरति
। चर॰ । पचाद्यच् ॥ वयस्ये ॥ प्र
तिबन्धकी ॥

सहचरित : । वि॰ सहानुष्ठिते ॥ स
हेचारिते ॥

सहचरी । स्त्री॰ नीलझिण्टाम् ॥ पी
तझिण्टाम् ॥ झिण्टीमात्रे ॥ भा
र्यायाम् । पत्न्याम् ॥ वयस्याया
म् ॥ सहचरति । चर॰ । पचादौ
चरडितिटित्वनिपातनात्॰ङीप् ।

सहज : । पुं॰ निसर्गे । स्वभावे ॥
तृतीयभवने ॥ वि॰ सहोत्थे । सह
सम्भवे । सहोदरे ॥ सहतुल्ये॰ उ
दरे॰ जात॰ । जनी॰ । अन्येष्व
पीतिड : ॥

सहजन्मा । पुं॰ सोदरे ॥ सहसमाने
उदरेजन्मयस्यस : ॥

सहजमित्रम् । न॰ स्वाभाविकेसुहृदि
। यथा । अरिर्मित्रमुदासीनोऽन
न्तरस्तत्पर : पर : । क्रमेणमण्डलं
चिन्त्यंसामादिभिरुपक्रमै : ॥ अ
रि : • शत्रु : । मित्रम्॰ सुहृद्॰
। उभयविलक्षण : • उदासीन : ।
तेचत्रयस्त्रिविधा : । सहजा : •
कृत्रिमा : • प्राकृताश्चेति ॥ सह
जंमित्रम्॰ भागिनेयपैतृष्वस्रीय-
मातृष्वस्रीयादिरितिमिताक्षरा ॥

सहजा । स्त्री॰ भगिन्याम् । सहोदरा
याम् ॥ प्रकृतिप्रभेदे । आत्मनास
हैवजातायाम् ॥ यथापश्वादीना
माकाशगमनादिलक्षणाप्रकृति : स
हजा ॥ टाप् ॥

सहजात : । वि॰ सहोदरे ॥ यमजे ॥

सहजारि : । पुं॰ स्वाभाविकेशत्रौ ॥
यथा । सहजारि : सापत्न्यपितृव्य
तत्पुत्रादिरितिमिताक्षरायामाचा
राध्याय : ॥

सहडुकम् । न॰ अस्थिसहितेपक्वमांसे
। सास्थिपक्वमांसे । हडमांसइति
प्रसिद्धे ॥ यथा । छागादेर्मांसम्
र्व्वादे : कुट्टितंखण्डितंपुन : ।
शुद्धमांसविधानेनपचेदेतत्सहडुक
म् ॥ सहडुकंगुणैरन्यैःशुद्धमांसगु
णं स्मृतमितिभावप्रकाश : ॥

सहदेव : । पुं॰ पञ्चमपाण्डवे । मा
द्रीतनये । नकुलानुजे ॥ जरासंध
सुते ॥ वि॰ देवैनसहिते ।

सहदेवा । स्त्री॰ बलायाम् ॥ दण्डो
त्पले । शारिवौषधौ ॥ मरुदेवा
याम् । अर्हन्मातरि ।

सहदेवी । स्त्री॰ महाबलायाम् । पी
तपुष्पायाम् ॥ यथा । ज्वरंहंति

शिरोवचासहदेव्याजटाभ्रुवम् ॥ ज्वरं विषमज्वरम् ॥ सर्पाक्ष्याम् ॥ पीतदण्डोत्पलायाम् ॥ सहदेवस्थभार्यायाम् ॥

सहदेवीगण: । पुं॰ प्रतिष्ठायाम् देवस्नानार्थमोषधीसमूहे ॥ यथा । पञ्चगव्यै: स्नापयेच्च सहदेव्यादिभिस्तत: । सहदेवी बला चैव शतमूली शतावरी ॥ कुमारी च गुडूची च सिंही व्याघ्री तथैव च । या ओषधीति मन्त्रेण स्नानमेषधिमङ्गलै: ॥

सहधर्मिणी । स्त्री॰ वेदविधानेनोढायाम् । पत्न्याम् । द्वितीयायाम् । भार्यायाम् ॥ सहधर्मी स्त्यस्या: ॰ पत्या सह कर्मस्वधिकारात् । धर्मशीलवर्णान्ताच्चेतीनि: । वोपसर्ज्जनस्य ॥

सहनम् । न॰ क्षमायाम् । प्रतीकारानिच्छायाम् ॥ यथा । सहनं सर्व्वदु:खानां तितिक्षा सा शुभा मतेति ॥ त्रि॰ क्षमयान्विते । सहिष्णौ । क्षमिणि ॥ सहतेतच्छील: । षह॰ अनुदात्तेतश्चेतियुच् । नन्द्यादित्वाल्ल्युर्वा ॥

सहनर्त्तनम् । न॰ एकत्रमण्डलाकारनृत्यकरणे ॥

सहनशील: । त्रि॰ सहिष्णौ ॥

सहपांशुक्रिड: । त्रि॰ वयस्ये ॥

सहपानम् । न॰ सपीतौ ॥

सहभावी । त्रि॰ सहायि ॥

सहभोजनम् । न॰ बहुभि: सम्मिल्यैकपात्रभोजने । सग्धौ ॥ सह॰ भोजनम् । सुप् सुपेतिसमास: ॥

सहमरणम् । न॰ मृतस्वामिनासहज्वलच्चितारोहणेनप्राणत्यागे ॥

सहमान: । त्रि॰ सहिष्णौ ॥

सहमाना । स्त्री॰ चैलोक्यात्मन: क्षीमस्यदक्षिणदिग्भागे ॥ सहन्ते स्वे पापकर्मफलानियमपुर्य्यां प्राणिनइतितथा ॥

सहयज्व: । त्रि॰ कर्माधिकृते ॥ यज्ञेनविहितकर्मकलापेन॰ सहवर्त्तत इति ॥

सहयायी । त्रि॰ मिलितगामिनि । स.यो॰ दू॰ भा॰ ॥

सहयुध्वा । त्रि॰ कारितयुद्धे ॥ सहयोधितवान् । युध॰सहेचेतिक्वनिप् ॥

सहरमा । स्त्री॰ मुद्गपर्ण्यां ॥

सहर्ष: । त्रि॰ हर्षयुक्ते ॥

सहवास: । पुं॰ सहावस्थाने ॥ यथा । नसंवसेच्चपतितैर्नचाण्डालैर्नपुक्कसै: । नमूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिरितिमनु: ॥

सहवासी । त्रि॰ एकस्थानेयौगपद्येनावस्थानकर्त्तरि ॥ यथा । सहवासीविजानातिचेष्टितंसहवासिनामिति ॥

सहा: । पुं॰ मार्गशीर्षे । मार्गे ॥

हिमस्पर्शी । सहति । सह॰ । ष
सुन् ॥
सह: । न॰ बले ॥ मानसपाटवे ॥
ज्योतिषि ॥ सहते॰ सह्यतेऽनेना
नया । सह॰ । असुन् ॥
सहस: । त्रि॰ सहासि ॥ इसेनसहय
र्त्तंतदूति ॥
सहसा । अ॰ हठादर्थे ॥ अविमर्षे ॥
यथा । सहसाविदधीतनक्रियामवि
वेक: परमापदांपदम् । वृणतेहि
विमृश्यकारिणंगुणलुब्धा: स्वय-
मेवसम्पद: ॥ अतर्किते । आक
स्मिके । अकस्मादर्थे ॥ सहसानि
पतितोभावोयोऽयंनित्यंहृदिस्थि-
त: । नाकारेणगूहितुंशक्योवृहस्प
तिसमैरपि ॥ सत्वरादर्थे ॥ दि
व: प्रसूनंसहसापपातेतितद्यथा ॥
सहति । षह॰ । असाप्रत्यय: ॥
सहसान: । ॰ पुं॰ मयूरे ॥ यज्ञे ॥
त्रि॰क्षमायुक्ते ॥ सहते । षह॰ ।
ऋञ्जिवृधिमन्दिसहिभ्य: कित्इत्य
सानच् ॥
सहस्य: । पुं॰ पौषमासे । सहसिब
लेसाधु: । तत्रसाधुरितियत् ।
सहस्रम् । न॰ दशशते॰ १००० ॥ अ
नन्ते ॥ विश्वंशतंसहस्रंसर्वम
क्षयंचाक्षममितिमहाभारतम् ॥
सहस्रकाण्डा । स्त्री॰ श्वेतदूर्वायाम् ॥
सहस्रकिरण: । पुं॰ सूर्ये ॥ सहस्रं

किरणायस्य ॥
सहस्रगु: । पुं॰ आदित्ये । भानौ ॥ स
सहस्रंगव:रश्मयोनोयस्य स: ॥ अत्र
यादव: । तासांशतानिचत्वारिरश्मी
नांवृष्टिसर्जने ॥ शतत्रयंहिमो-
त्सर्गेतावद्गर्मस्यसर्जने ॥ आनन्दा
श्चिमेध्याश्चनूतनापूतनाइति । च
तु: शतवृष्टिवाहास्ता: सर्वाअमृ
ता:स्त्रियइति ॥
सहस्रजित् । पुं॰ हरौ ॥ सहस्रा
ण्यसुराणांजयति । जि॰ । क्विप् ॥
सहस्रणी: । पुं॰ भीष्मे । गाङ्गेये ॥
सहस्रंरथिनोनयति॰ पालयति ।
णीञ्॰ । सत्सूद्विषेतिक्विप् ॥
सहस्रतम: । त्रि॰ सहस्रस्यपूरणे ॥
नित्यंशतादीतिडटस्तमडागम: ॥
सहस्रदंष्ट्र: । पुं॰ पाठीनमत्स्ये ॥ स
हस्रंदंष्ट्रायस्य स: ॥
सहस्रदंष्ट्री । स्त्री॰ पाठीने । बोदा
लमत्स्ये ॥
सहस्रद: । त्रि॰ बहुप्रदे ॥ सहस्रं
ददाति । डुदाञ्॰ । क: ॥
सहस्रदो: । पुं॰ कार्त्तवीर्यार्जुने ॥
॥ सहस्रंदोषोबाहवोयस्य स: । ष
त्वस्यासिद्धत्वाद्रुत्वविसर्गौ ॥
सहस्रधार: । पुं॰ विष्णुचक्रे ॥
सहस्रधारा । स्त्री॰ देवतास्नानार्थंस
हस्रच्छिद्रयुक्तपात्रगलितजलधारा
याम् ॥ यथा । सहस्रधारयादेवी॰

स्नापयामिसुरेश्वरीमिति ॥

सहस्रनयनः। पुं॰ इन्द्रे ॥ सहस्रं नयनान्यस्य ॥

सहस्रनेत्रः। पुं॰ इन्द्रे ॥ विष्णौ ॥ सहस्रंनेत्राण्यस्य ॥

सहस्रपत्रम्। न॰ कमले। पद्मे। नलिने ॥ सहस्रमस्बहूनिपात्राण्यस्य ॥

सहस्रपात्। पुं॰ विष्णौ ॥ सहस्रं पादायस्य। सङ्ख्यासुपूर्वस्येति पादस्यान्तलोपः ॥

सहस्रपादः। पुं॰ कारण्डे ॥ मार्त्तण्डे ॥ यज्ञपूरुषे। विष्णौ ॥

सहस्रभित्। न॰ कस्तूर्याम् ॥ अम्लवेतसे ॥

सहस्रभुजः। पुं॰ विष्णौ ॥ कार्त्तवीर्यार्जुने ॥

सहस्रभुजा। स्त्री॰ दुर्गायाम् ॥ महालक्ष्म्याम् ॥

सहस्रमरीचिः। पुं॰ सूर्ये ॥

सहस्रमूर्द्धा। पुं॰ श्रीहरौ ॥ विष्णौ ॥ सहस्राण्यपरिमितानि मूर्द्धानोऽस्य ॥

सहस्रमूली। स्त्री॰ द्रवन्त्यामोषधौ ॥

सहस्रमौलिः। पुं॰ विष्णौ ॥ अनन्ते ॥

सहस्ररश्मिः। पुं॰ सूर्ये ॥

सहस्रवदनः। पुं॰ शेषे ॥ विष्णौ ॥

सहस्रबाहुः। पुं॰ कार्त्तवीर्यार्जुने ॥ बाणासुरे ॥

सहस्रवीर्या। स्त्री॰ दूर्वायाम् ॥ सहस्रवीर्याण्यस्याः ॥ महाशतावर्याम् ॥

सहस्रवेधम्। न॰ काञ्जिकविशेषे। चुक्रे ॥

सहस्रवेधी। पुं॰ अम्लवेतसे। चुक्रे ॥ कस्तूर्याम् ॥ न॰ रामठे। हिङ्गुनि ॥ त्रि॰ सहस्रवेधकर्त्तरि ॥ सहस्रं वेधितुं शीलमस्य। विध विधाने। सुप्यजातौणिनिः ॥

सहस्रशिखरः। पुं विन्ध्याचले ॥

सहस्रा। स्त्री॰ अम्बष्ठायाम् ॥

सहस्रांशः। पुं॰ सहस्रतमभागे ॥

सहस्रांशुः। पुं॰ भानौ। हंसे। तपने ॥ सहस्रमंशवोऽस्य ॥

सहस्राक्षः। पुं॰ आखण्डले। इन्द्रे ॥ विष्णौ सर्व्वलोकसाक्षिणि ॥ सहस्रमक्षीण्यस्य। सहस्राण्यपरिमितान्यक्षीण्यस्य वा॰। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ॥

सहस्रारः। पुं॰ न॰ शिरोवस्थिताधोमुखसहस्रदलकमले ॥

सहस्रार्चिः। पुं॰ विष्णौ। सूर्य्ये। सहस्राण्यर्चींषि यस्य सः। सहस्राण्यनन्तान्यर्चींषि भासो यस्य विश्वरूपधरस्य विष्णोरिति ॥

सहस्री। पुं॰ सहस्रसङ्ख्यसैन्ययुक्ते।

साहसं ॥ सहसं बलमस्त्यस्य । तपःसहस्राभ्यां विनोनी॰ इतीनिः ॥ बलिनि । यि सहस्रं यसाहस्रास्ति सहस्रिणः ॥

सहा । स्त्री॰ नखभेषजे । दण्डोत्पलायाम् । सहदेवायाम् । मुद्गपर्ण्याम् । घृतकुमार्याम् । उर्व्याम् । भूमौ ॥ सहते । षह॰ । अच् । टाप् । सेवन्त्याम् । शुक्लझिण्ट्याम् । स्वर्णकङ्काल्याम् । राखायाम् । स्वर्णचोर्याम् । तरणीपुष्पे । पीतदण्डोत्पलायाम् ॥

सहाचरः । पुं॰ पीतझिण्ट्याम् । कटसारिका॰ कटसरैय्या॰ इ॰ भा॰ प्र॰ । सहचरे ॥ सहचाचरति । चर॰ । अच् ॥

सहायः । पुं॰ चक्रवाके । त्रि॰ सहचारिणि । अनुचरे । अभिसरे । सहचयती॰ अयतिवा । अय॰ । इ गतौवा । पचाद्यच् ॥ राज्ञः सहायायथा । सहसायतयापुष्टा : सततं प्रतिमानिताः । राज्ञासहायाः कर्त्तव्याः पृथिवीञ्जेतुमिच्छतेति मात्स्ये १८८ अध्यायः ॥ यथोक्तं देवीभागवतेव्यासेन । शक्रायेत्थं मतिर्दत्ताहरिणाहवघातिने । प्रविष्टोयपविं विष्णुः सहायः प्रत्यपद्यत । यथापदिसहायोभूद्वासुदेवः कच्चन । समयेखलजनः सर्वः सं सारेऽस्मिन्नराधिपः । देवेविसुखतांप्राप्तेनकोप्यस्तिसहायवान् । पितामातातथाभार्याभ्राताबाथसहोदरः ॥ सेवकोवापिमित्रं वापुत्रश्चौवतथौरसः । प्रतिकूलेगतेदैवेनकोप्यस्तिसहायतामिति ।

सहायता । स्त्री॰ सहायौघे । सहायानांसमूहः । गजसहायाभ्यामिति तल् । साहाय्ये । सहायस्यकर्म भावोवा । तल् ॥

सहायत्वम् । न॰ साहाय्ये ॥

सहारः । पुं॰ आम्रवृक्षे । रसाले ॥ महाप्रलये ॥ इतिहलायुधः ॥

सहारी । पुं॰ वर्णाहस्ताक्षरे । आद्यन्तवर्णाः पश्चात्वर्णाः । लघ्वेकधारोवाच्यः सहारी ॥ यथो । कंसादिर्केतुं धर्मेकहेतुम् । वंदेश्यामभम॰ इन्दीवराभम् ॥

सहारोग्यः । त्रि॰ नीरुजि ॥

सहितः । त्रि॰ सहिते । संयुक्ते ॥ सम्धीयतेस्म । डुधाञः क्तः । दधातेर्हिः । समोहितततयोर्वालोपः ॥ सम्यग्धिते । हितेनसहवर्त्तमाने ॥

सहिता । त्रि॰ सोढरि । सहनशीले ॥ सहते । षह॰ । टच् । तीषसहेतिवेट् ॥

सहिष्णुः । त्रि॰ सहने । क्षमरि ।

तितिक्षौ क्षमिणि । सहनशीलः । यथा । सहते शीतोष्णादीनि । षह॰ । अलङ्कृञिति॰ इष्णुच् ॥

सहिष्णुता । स्त्री॰ क्षमायाम् ॥

सहुरिः । पुं॰ आदित्ये । दिवाकरे ॥ स्त्री॰ क्षितौ ॥ सहते । षह॰ जसिसहोरुरिन् । सहुरिः सहनशील इति वेदभाष्यम् ॥

सहृदयः । त्रि॰ प्रशस्तचित्ते । हृदयालौ ॥ सह हृदयेन, तेन सहेति बहुव्रीहिः । प्राणिमात्रस्य तथात्वादत्र॰ प्रशस्तपरत्वं हृदयशब्दस्य ॥

सहृल्लेखम् । न॰ विचिकित्सितान्ने ॥ यथा । विचिकित्सा तु हृदये यस्मिन्नन्ने प्रजायते । सहृल्लेखन्तु विज्ञेयं॰ पुरीषन्तु स्वभावत इति प्रायश्चित्तविवेकः ॥

सहोक्तिः । स्त्री॰ अर्थालङ्कारविशेषे ॥ यथा । सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् । एकार्थाभिधायकमपि सहार्थबलाद्यदुभयस्यावगमकं सा सहोक्तिः ॥ यथा । सह॰ दिअस॰ णिसाहिं॰ दीहरा॰ सासदण्डा॰ सह मणिवलएहिं॰ बाहधारा॰ गलन्ति । सुहअ॰ तुह॰ विओए॰ उव्वेइणिए॰ सोहअ तणुलदाए॰ दुव्वला॰ जीविदासा ॥ अस्य संस्कृतन्तु । सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः॰ सह मणिवलयैर्बाष्पधारा गलन्ति । सुभग॰ तव वियोगे॰ तस्याः॰ उद्वेगशीलायाः॰ सह च॰ तनुलतायाः॰ दुर्बला॰ जीविताशेति ॥ दूत्या नायकं प्रतीयमुक्तिः । श्वासानां घनप्रचुरतया दण्डत्वेन निरूपणम्॰ काश्याग्निमणिकङ्कणगलनम्॰ आशाया दुर्बलत्वं कादाचित्कत्वम् । श्वासदण्डादिगतं दीर्घत्वादि शब्दं दिवसनिशादिगतन्तु॰ सहार्थसामर्थ्यं तत्प्रतिपद्यते । अत्र सहोक्तिरलङ्कारः । अपिच । सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः । दिगन्तमगमत्तस्य कीर्त्तिः प्रत्यर्थिभिः सहेति ॥ लक्षणान्तरमपि । सहार्थेनान्वयो यत्र भवेदतिशयोक्तितः । कल्पितौपम्यपर्यन्ता सा सहोक्तिरिहेष्यत इति ॥

सहोटजः । पुं॰ मुनीनां पर्णशालायाम् । पर्णोटजे । यथा । मुनीनां शुचिता कुत्र्यां पर्णोटजसहोटजाविति हारावली ॥

सहोढः । पुं॰ द्वादशपुत्रान्तर्गतपुत्रविशेषे ॥ यथा । या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती । वोढुः स गर्भो भवति सहोढ इति चोच्यत इति मनुः ॥ संस्क्रियते॰ प

रिणीयते । अट्टाद्यादीद्धयम् ॥ स हि ह्यतेस्म । बहु० । ता: सम्प्रसारणम् । गुण: ॥ त्रि० कठिनसहवर्त्मनि ॥

सहोत्य: । पुं० तृतीयभंगे ॥

सहोदर: । पुं० सहजे: सोदरेभ्रातरि ॥ सहउदरेणवर्त्तते । वोपसर्जनस्य ॥ सह० समानम्० उदरंयस्येतिवा ॥

सहोढ: । त्रि० साधुनि ॥ सह्यते । बहु० । क्षिपोरादयश्चेतिचौरन् ॥

सह्य: । पुं० मलयाद्रिसमीपवर्त्तिनिशैलविशेषे ॥ न० आरोग्ये ॥ साम्ये । त्रि० सहनीये । सोढव्ये ॥ सुमधुरे ॥ सह्यते० सोढुं शक्योवा । यह० । शकिसहोश्चेतियत् ॥ गोदावरीभीमरथीकृष्णावेण्यादिकास्तथा । सह्यपादोद्भवा नद्य: स्मृता: पापभयापहा: ॥

सा । स्त्री० लक्ष्म्याम् ॥ दुर्गायाम् ॥

सांयात्रिक: । पुं० पोतवणिजि । बहित्रगामिनिवणिग्जने ॥ संयात्राद्वीपान्तरगमनायसम्भूययात्रासाप्रयोजनमस्य । तदस्यप्रयोजनमिति ठञ् ॥

सांयुगीन: । त्रि० रणोत्सुके । युद्धकुशले ॥ संयुगेरणेसाधु: । प्रतिजनादिभ्य: खञ् ॥

सांराविणम् । अ० न० समन्तात्कृत्स्ने । शब्दग्रब्दध्वनौ ॥ संहूतौ ॥

सांवत्सर: । पुं० गणके ॥ अस्यलक्षणमाहवराहमिहर: । तत्रसांवत्सरोऽभिजात: प्रियदर्शनो० विनीतवेश:० सत्यवाक्अनसूयक:० सम० सुसंहितोपचितगात्रसन्धिरविकलश्चारु० करचरणनखनयनचिबुकदशनश्रवणललाटभ्रूत्तमाङ्गोवपुष्मान्गम्भीरोदात्तघोष:० प्रायःशरीराकारानुवर्त्तिनोहिगुणाश्चदोषाश्चभवन्ति ॥ १ । तत्रगुणा: शुचिर्दक्ष: प्रगल्भोवाग्मीप्रतिभानवान्देशकालवित्सात्त्विकोनपरिषद्भीरु: सहाध्यायिभिरनभिभवनीय: कुशलोऽव्यसनीशान्तिकपौष्टिकाभिचारस्नानविद्याभिज्ञोविबुधार्च्चनव्रतोपवासनिरत: स्वतन्त्राश्चर्योत्पादितप्रभाव:पृष्ठाऽभिधाय्यन्यत्रदैवात्ययाद्‌ग्रहगणितसंहिताहोराग्रन्थार्थवेत्ता ॥ २ विशेषोमाराक्षां सांवत्सरसूत्रेद्रष्टव्य: ॥ संवत्सरंवेत्ति । तदधीतेतद्वेदेत्यण् ॥ न० फले ॥ पर्वणि ॥ सन्धिवेलादिपु० संवत्सरात्फलपर्वणोरितिशैषिकोऽण् ॥

सांवत्सरिक: । त्रि० संवत्सरसम्बन्धिनि ॥ कालाट्ठञितिशैषिकेप्वर्थेष्वण् ॥ संवत्सरंव्याप्यभूते ॥ प्रतिवर्षकर्त्तव्ये श्राद्धादिकर्म्मणि ॥

सांवर्त्तकः । पुं॰ प्रलयाग्नौ ॥ प्रलयकर्त्तरि ॥

सांमाद्रिकः । पुं॰ नैयायिके ॥ वृ॰ ज॰ धरः ॥

सांशयिकः । त्रि॰ संशययुक्ते । संशयापन्नमानसे । सन्दिग्धमने ॥ संशयमापन्नः । संशयमापन्नइतिठक् ॥

सांसर्गिकः । त्रि॰ संसर्गनिमित्ते ॥

सांसारिकः । त्रि॰ संसारसम्बन्धिनि ॥ सांसारिकसुखासक्तं ब्रह्मज्ञोस्मीतिवादिनम् । कर्मब्रह्मोभयभ्रष्टं तं त्यजेदन्त्यजं यथा ॥

सांसिद्धिकः । पुं॰ अणूनांगुणविशेषे ॥ यथा । विशिष्टधर्मसंस्कारसमुद्दीपितचेतसाम् । गुणः सांसिद्धिको भातिदेहापायेपिपूर्ववत् ॥ विशिष्टैरिष्टापूर्त्तादिधर्मसंस्कारैरणसम्यगुद्दीपितंप्रदीपितंचेतोयेषांतेषांनपरंदेहसंयोगे॰ यावद्देहापायेपिप्रागुक्तो गुणः प्रकाशतेससांसिद्धिकोनामबोद्धव्यः ॥ सम्यक्सिद्धिः संसिद्धिः । तत्रभवः । ठक् ॥

सांसिद्धिकी । स्त्री॰ प्रकृतौ यथा योगिनांसिद्धानामणिमाद्यैश्वर्यप्राप्तिप्रकृतिः॰ सांसिद्धिकीस्वाभाविकीसहजाप्रकृतायथा । प्रकृतिः सैतिविज्ञेयास्वभावंनजहातिया ॥

सांस्थानिकः । त्रि॰ समीचीनस्थानेव्यवहर्त्तरि ॥ संस्थानेव्यवहरति । कठिनान्तेतिठक् ॥

सांहितिकः । त्रि॰ संहिताभिज्ञे ॥ संहितामधीतेवेदवा । क्रतूक्थादीतिठक् ॥

साकम् । अ॰ सहार्थे ॥ सहवचनम् । अमप्रत्ययः ॥ सहस्रोतिसः । आभीक्ष्ण्यं अम्लुवा ॥

साकम्प्रस्थाप्यः । पुं॰ यागविशेषे ॥ साकम्प्रस्थाप्येनयजेतपशुकामः ॥

साकल्यम् । न॰ अशेषतायाम् ॥ सकलस्यभावः । ष्यञ् ॥

साकारः । त्रि॰ आकारविशिष्टे ॥ यथा साकारमनन्तं विन्दति । साकारापिनिराकारामायथाबहुरूपिणीतिच ॥ अपिच । साकारञ्चनिराकारं सगुणंनिर्गुणंप्रभुम् । सर्वाधारञ्च सर्वञ्चस्वेच्छारूपंनमाम्यहमिति ॥

सकुरुण्डः । पुं॰ वृक्षविशेषे । यन्थिफले : कर्बुरफले ॥

साकेतम् । न॰ अयोध्यायाम् ॥

साक्तुकः । पुं॰ यवे ॥ सक्तुषुसाधुः । गुडादिषठक् ॥ न॰ सक्तूनां समूहे ॥ अचित्तहस्तिधेनोष्ठक् ॥

साक्षरः । त्रि॰ अक्षरयुक्ते ॥

साक्षात् । अ॰ प्रत्यक्षे ॥ यथासाक्षाद्दृष्टा । सहाक्षेण॰ साक्षः । समततिः । क्विप् ॥ तुल्ये ॥ यथासाक्षा

लक्ष्मीः तुल्यार्थसाक्षाच्छब्दयोगे।
तुल्यार्थैरतुलोपमाभ्यामिति। तृ
तीयाप्रयोगउचितः। साक्षाल्लक्ष्मी
रित्यादिप्रथमान्तप्रयोगेतु। प्रत्यक्षा
र्थकएवप्रतिभाति। लक्ष्म्यासा
क्षादिति। लक्ष्म्यातुल्येतिवत्।
लक्ष्मीसाक्षादितिभवतिच

साक्षात्कारः। पुं। इदानीमित्यमेवेत्य
परोक्षज्ञाने॥ प्रत्यक्षकरणे॥
साक्षात्करणम्। कृञोघञ्॥

साक्षी। त्रि। प्रत्यक्षदर्शने। द्रष्ट
रि। साक्षादिन्द्रियार्थसन्निकर्षं
विनैवेक्षतेपश्यतिप्रकाशयतीति।
निर्विकारे। आत्मनि॥ स्वप्रकाश
ज्ञानमात्रस्वरूपोप्यात्माऽविद्योपहि
तः सन्। साक्षीत्युच्यते। यथा
हुरार्त्तिककाराः। मर्त्त्यस्याहिक्रि
यांदुःखीसाक्षितयाविकारिणः
धीविक्रियासहस्राणांसाक्ष्यतोहमवि
क्रियइति॥ यथा। नेनस्वरूपबो
धेनपश्यतिसर्वमितिसाक्षी। इति
व्यवधानमन्तरेणस्वाध्यस्तंसर्वंस्वरू
पचैतन्येनपश्यतीत्यर्थः। साक्षाद्
द्रष्टरिसंज्ञायामिति। इनिः॥ शून्य
वादिभिरपिशून्यसिद्धयेसाक्ष्यभ्युपे
यः। किमुवक्तव्यमितरैरस्यात्। प्र
त्यक्षसाक्ष्यतिरेकेणनाभावोपिप्रसि
ध्यति। किमुभावोजगत्यस्मिन्सा
क्षीचानन्यसिद्धिकः। अभावोपि।
शून्यमपीत्यर्थः॥ पुरोपौराणपश्य
न्नरयुवतिनामाकृतिमयान्सुवेषा
न्स्वर्णालङ्करणकलितांश्चित्रसद्मा
न्। स्वयंसाक्षीद्रष्टेत्यपिचकलय
स्तैः सहरमनमुनिर्व्यामोहंभज
तिगुरुदीक्षाक्षततमः॥ साक्षाद्
द्रष्टरि। सर्वप्राणिनांसाक्षाच्छुभा
शुभद्रष्टरि॥ चेतनत्वेनाविषय
त्वेनचसाक्षित्वंद्रष्टृत्वञ्च। चेतनो
हिद्रष्टाभवति। यस्मैप्रदर्श्यतेवि
षयः ससाक्षी॥ तथालोके। अर्थि
प्रत्यर्थिनौ। विवादविषयंसाक्षि
णेदर्शयतः। एवंप्रकृतिरपिस्वच
रितंविषयंपुरुषायदर्शयतीतिपुरु
षः साक्षी। नचाचेतनोवा। वि
षयोवा। शक्योविषयंदर्शयितुमि
ति। चैतन्यादविषयत्वाच्चभवति
साक्षी। अतएवद्रष्टापिभवतीति
साङ्ख्यविदः॥

साक्ष्यम्। न। साक्षिकर्म्मणि॥ यथा
। समक्षदर्शनात्साक्ष्यंश्रवणाच्चैव
सिद्ध्यतीतिमनुः॥

साख्यम्। न। सख्ये।

सागरः। पुं। समुद्रे। अब्धौ। सग
रपुत्रैः खातेजलाशये॥ सगरस्य
राज्ञोयम्। सगरेणावतारितत्वा
त्। तस्येदमित्यण्॥ क्षीरोदादि
ष्वप्युपमयासागरव्यपदेशइतिवृद्
धाः॥ मृगविशेषे॥ इत्यमरस

ङ्ख्यायाम् ॥

सागरगा । स्त्री॰ नद्याम् ॥

सागरगामी । त्रि॰ सिन्धुगे । समुद्रयायिनि ॥

सागरगामिनी । स्त्री॰ नद्याम् ॥ सूक्ष्मैलायां ॥

सागरनेमिः ।) पुं॰
सागरमेखला ।) स्त्री॰ पृथिव्याम् ॥

सागरोनेमिर्मेखलावायस्याः ॥

सागरानूपः । पुं॰ समुद्रतीरप्रदेशे ॥ सागरस्यानूपः ॥

सागराम्बरा । स्त्री॰धरायाम् । धरित्र्याम् ॥ सागरोऽम्बरं वस्त्रम् यस्याः ॥

सागरालयः पुं॰ अप्पतौ । वरुणे ॥

सागरोत्थम् न॰ समुद्रलवणे । त्रि॰ सिंधुजे ॥

सागुरुः । पुं॰ शिंशपायां ॥

साग्रः । त्रि॰ अग्रेणसहिते ॥

साङ्कर्य्यम् । न॰ सङ्करतायाम् ॥ जातिसाङ्कर्यम्॰पङ्क्तिसाङ्कर्यमिति । तत्रपङ्क्तिसाङ्कर्यदोषोयथा । नसंवसेत्पतितैर्नचाण्डालैर्नपुक्कसैः । नमूर्खैर्नावलिप्तैश्चनान्त्यैर्नान्त्यावसायिभिः ॥ एकशय्यासनंपङ्क्तिभाण्डपक्वान्नमिश्रणम् । याजनाध्यापनेयोनिस्तथैवसहभोजनम् ॥ सहाध्यायस्तुदशमः सहयाजनमेवच । एकादशसमुद्दिष्टा-

दोषाः साङ्कर्यसंज्ञिताः ॥ समीपेचाप्यवस्थानात्पापंसंक्रमतेनृणाम् । तस्मात्सर्वप्रयत्नेनसाङ्कर्यंपरिवर्जयेत् ॥ वह्निसाङ्कर्यदोषवारणोपाययथा । एकपङ्क्त्युपविष्टायेनस्पृशन्तिपरस्परम् । भस्मनाकृतमर्यादानतेषांसङ्करोभवेत् । अग्निनाभस्मनाचैवस्तम्भेनसलिलेनवा । द्वारेणचैवमार्गेण पङ्क्तिर्विभिद्यतइति कूर्मे १५ अध्यायः ॥

साङ्काश्यम् । न॰ नगरविशेषे ॥ सङ्काशेननिर्वृत्तंनगरम् । सङ्काशादिभ्योण्यः ॥

साङ्कृतिः । पुं॰ मुनिविशेषे । वैयाघ्रपद्यगोत्रप्रवरे ।

साङ्ख्यः । पुं॰ कपिलमुनिकृतदर्शनविद्विकापिले ॥ सङ्ख्यांप्रकुर्वतेचैवप्रकृतिञ्चप्रचक्षते । तत्त्वानिचतुर्विंशत्तेनसाङ्ख्याः प्रकीर्त्तिताः ॥ औपनिषदेपुरुषे ॥ सम्यक्ख्यायते॰ सर्वोपाधिशून्यतयाप्रतिपाद्यते॰ परमात्मतत्त्वमनयेति॰ सङ्ख्या॰ उपनिषद्॰ तयैवतात्पर्यपरिसमाप्त्याप्रतिपाद्यतेयः साङ्ख्यः । सर्वोपनिषदः पुरुषएव । सन्न्यासे । सङ्ख्यासम्यगात्मबुद्धिः॰ तांवहतीति॰ ज्ञानात्मसाधनतयाससाङ्ख्यः॰ सच सन्न्यासः ॥ न॰ वेदान्तशास्त्रे ॥ निरतिशयपुरुषार्थप्राप्त्यर्थंसर्वा

मथ विवक्षयथ सङ्ख्यातव्या: जीवो॰ ब्रह्म॰ तयोरैक्यं॰ तदोषिपयोगि नयप्रपश्चाद्य : पदार्था : ॰ तेस ङ्ख्यायन्ते ॰व्युत्पाद्यन्तेऽस्मिन् ॥ चात्मज्ञाने ॥ शुद्धात्मतत्त्वविज्ञानं साङ्ख्यमित्यभिधीयतेइतिव्यासस्मृ ति : ॥ ज्ञानशास्त्रे षड्दर्शनांत र्गतदर्शनविशेषे । कापिले ॥ पञ्च म : कपिलोनामसिद्धेश :कालवि प्लुतम् । प्रोवाचासुरयेसाङ्ख्यंत त्त्वग्रामविनिर्णयम् ॥ इतिश्रीभा गवतम् ॥ साङ्ख्यं सङ्ख्यात्मक त्वाच्चकपिलादिभिरुच्यते॰ इ॰ म त्स्यपुराणम् ॥ सम्यक्ख्यायतेप्रका श्यतेवस्तुतत्त्वमनयेति॰ सङ्ख्यास म्यग्ज्ञानम्॰ तत्रप्रकाशमानमा त्मतत्त्वंसाङ्ख्यमितिश्रीधरस्वा मी ॥ अपिचाहु : । साङ्ख्यंहिक पिलमुनिनासंसारविमुक्तिकारणं प्रोक्तम् । एता : सप्ततिरार्याभाष्य ञ्चाप्यत्रगौडपादकृतम् ॥ एतत्प वित्रमग्र्यंमुनिरासुरयेऽनुकम्पया प्रददौ । आसुरिरपिपञ्चशिखायते नचबहुधाकृतंतन्त्रम् । शिष्यपरम्प रयागतमीश्वरकृष्णेनचैतदार्या- भि : । सङ्क्षिप्तमार्यमतिनासम्य ग्विज्ञायसिद्धान्तम् ॥ सप्तत्यांकि लयेऽर्थास्तेर्था : कृत्स्नस्यषष्टितन्त्रस्य । आख्यायिकाविरहिता : परवाद विवर्जितावापि ॥ इतिसाङ्ख्य प्रवचनभाष्यम् । अस्याध्ययनेप्रार म्भशुद्धिमाहकालिदासोयथा । चि दुग्मोश्वीयुग्मभे: सद्ग्रहाणांसमा रब्धितं साङ्ख्यशास्त्रादिशास्त्रम् । सृद्धिप्रगभ्य ड्गभ्य ड्युक्तौदिने व्येवतदोषसिद्धिंतनोतोति ॥

साङ्ख्यमतम् । न॰ षष्टितन्त्रादौ ॥ साङ्ख्यानांमतम् ॥ यथा । त्रिगु णं यत्प्रधानं तत्पुरुषार्थे नहेतुना । प्रवर्त्ततेवासनात्वक्तं प्रि॰ स्वचे तिकापिला : ॥ नान्त :करणमेवा त्मा॰ किन्त्वन्य : सर्वगत : स्वप्र काश॰ सुखभोगापवर्गानुगुण्येन हेतुनायत्प्रधानरचितदात्मनैव- स्थितमन्त : करण तत सधर्म्मकंप्र वर्त्तते॰ तदेवशुद्धाशासनात्वेनो च्यतइतिवदन्तीत्यर्थ : ॥

साङ्ख्ययोग : । पुं॰ चिन्तनविशेषे । निदिध्यासनपूर्वभाविनाश्रवणम ननरूपेण॰ नित्यानित्यविवेकादि पूर्वकेण॰ इमेगुणमयपरिणामात्र नात्मन : सर्वेमिथ्याभूता : ॰ त त्साक्षीभूतोनित्योविभुर्निर्विका र: सत्य: समस्तजगत्सम्बन्धशून्यश्चा त्मा त्वंहिएव वेदान्तवाक्यविचारज न्येचिन्तने ॥

साङ्ग : । त्रि॰ अङ्गसहिते ॥ अङ्गेन अङ्गैर्वासहित : ॥

साङ्गतिकः । त्रि॰ लोकेषु विचित्रप रिहासकथादिभिः सङ्गत्याहत्यर्थिनि । सङ्गतोभवे ॥

साङ्गमः । पुं॰ सङ्गमे ॥

साङ्गुष्ठा । स्त्री॰ गुञ्जायाम् ॥

साङ्गोपाङ्गः । त्रि॰ सम्पूर्णे ॥ अङ्गोपाङ्गैः सहितः ॥

साङ्कृत्यसूचिकः । त्रि॰ सङ्कृत्यसूत्राभिज्ञे ॥ सङ्कृत्यसूत्रमधीते॰ वेदवा । क्रतूक्थादिसूत्रान्ताट्ठक् ॥

साङ्ख्यिकः । त्रि॰ सङ्ख्याभिज्ञे ॥ उकथादित्वात् ठक् ॥

साङ्ग्रामिकः । त्रि॰ सङ्ग्रामोपयोगिरथादौ ॥ सङ्ग्रामेसाधुः ॥ गुडादिभ्यष्ठञ् ॥

साङ्कुटिकः । त्रि॰ सङ्कुटज्ञे ॥ सङ्कुटंवेद । उकथादित्वाट्ठक् ॥

साङ्घातिकः । त्रि॰ मारात्मके ॥ सम्भभात्येडशेनघते ॥ सङ्घाते साधुः । गुडादिभ्यष्ठञ् ॥

साचि । अ॰ वक्रे । तिरोर्थे । तिर्यगर्थे ॥ सचनम् । अचसमवाये । इञजादिभ्यः ॥

साचिशाटिका । स्त्री॰ स्त्रीतपुनर्नवायाम् ॥

साचिव्यम् । न॰ साहाय्ये ॥ सचिवस्यकर्मभावोवा । ष्यञ् ॥

साञ्जनः । पुं॰ कृकलासे ॥

साटोपः । त्रि॰ ससम्भ्रमे ॥

साट्टः । त्रि॰ । साट्टे ॥

सातत्यम् । न॰ अविच्छिन्नतयावर्त्तमाने । सततस्यभावः । ष्यञ् ।

सातवाहनः । पुं॰ शालिवाहननृपे ॥

सातिः । स्त्री॰ दाने ॥ अवसाने । समापनेसननम्॰सानस्त । पयाद्दाने॰ षोन्तकर्म्मणिवक्तिन् । ऊतियूतीत्यादिना॰ ऊतेरीत्वाभावो निपात्यते। सनोतेर्वा॰जनसनेत्यात्वम् । सनुताद्दा । क्तिच्क्तौचेतिक्तिच् ॥

सातिसारः । त्रि॰ अतिसाररोगयुक्ते । अतिसारकिणि ॥ सहअतिसारेणवर्त्तते ॥

सातीनकः । पुं॰ कलाये । सतीनकएव । प्रज्ञाद्यण् ॥

सात्मा । त्रि॰ हिते ॥

सात्यः । त्रि॰ सत्यशीले । सत्यंशीलमस्य । छत्रादिभ्योणः ॥ स्त्रियां॰ ताच्छीलिकेणेपीति॰ ङीपि॰ हलस्तद्धितस्येतियलोपे॰सात्ती॰ । सांचो॰ बृ॰ भा॰ ॥

सात्यकिः । पुं॰ पार्थशिष्ये । युयुधाने ॥

सात्त्वतः । ) पुं॰ माठरे । बाद
सात्त्वतीय । )

रायणे । वेदव्यासे ।

साह्वान् । त्रि॰ उपासके ॥ भगवद्भक्ते ॥ सच्छब्देन॰ सत्त्वमुक्तिर्भ्म

द्दश्यते । यद्दृष्टमेवेति मन : समा
धायससात्त्विक : ॥ श्रष्टाराभेदे ।
यथा । आयु : सत्त्वबलारोग्यसु
खप्रीतिविवर्द्धना : । रस्या : स्नि
ग्धा : स्थिरा हृद्या आहारा : सात्त्वि
कप्रिया : ॥ सत्त्वे गुणे प्राधान्येन
स्थित : ॥ नगणे । ।।। ॥ त्रि० स
त्त्वगुणाढ्ये ॥ सत्त्वेनमानेनवृत्या
निर्वृत : ॥ तेननिर्वृत्तमित्यठञ् ॥
सत्त्वभवोवा० अध्यात्मादित्वा-
ट्ठञ् वा ॥

सात्त्विकधनम् । न० शुद्धधने ॥ य
था । श्रुतशौर्य्यतप : कन्याशिष्य
याज्याऽन्वयागतम् । धनंसप्तविधं
शुद्धंमुनिभि : समुदाहृतम् ॥
श्रुतेनाध्ययनेन० शौर्य्येण जयादिना०
कन्यागतङ्कन्ययासहागतंश्वशु
रादेर्लब्धम्० शिष्यागतंगुरुदक्षि
णादिना० याज्यागतंआर्त्विज्यल
ब्धम्० अन्वयागतम्दायादेभ्योलब्ध
म्० शुद्धंसात्त्विकमित्यर्थ : ॥

सात्त्विकी स्त्री० दुर्गायाम् ॥ पूजा
विशेषे । यथा । शारदीचण्डिका
पूजात्रिविधापरिगीयते । सात्त्वि
कीराजसीचैवतामसीचेतितत्त्रिधा ।
सात्त्विकीजपयज्ञाद्यैर्नैवेद्यैश्च नि
रामिषै : । माहात्म्यंभगवत्याश्च
पुराणादिषुकीर्त्तितम् । पाठस्त
स्यजप : प्रोक्त : पठेद्देवीमनास्तथै

ति ॥ देवीप्रकृतौ ॥

साद : । पुं० सन्नतायाम् । अवसा
दे ॥ सदनम् । षद्लृ० । घञ् ॥
कार्श्ये । क्रमत्वे ॥ यथा । शरीर
सादादसमग्रभूषणेतिरघु : ॥

सादनम् । न० गृहे । सदने ॥ स्वर्थे
ण्यन्तात्सदेर्ल्युट् ॥ मज्जने ॥

सादनी । स्त्री० कटुक्याम् । स्वक्षा
ङ्गाम् ॥ ङीप् ॥

सादि : । पुं० सारथौ ॥ योधे । यो
द्धरि । सीदति । षद्लृ० । वसि
वपियजिराजिव्रजिसदिहनिवाशि
वादिवारिभ्यइञ् ॥ त्रि० सादि
युते ॥

सादित : । त्रि० स्तम्भिते । विध्वस्ती
कृते ॥

सादी । पुं० अश्वारोहे । असवार०
इ० भा० प्र० ॥ मातङ्गारोहे ॥ रथा
रोहे ॥ अवश्यंसीदति० सादयति
वा । षद्लृ० । आवश्यकेतिणि
नि : । ग्रह्यादिर्वा ॥

सादृश्यम् । न० उपमायाम् । तुल्य
त्वे सदृशत्वे । तद्भिन्नत्वेस
तितद्गतभूयोधर्म्मवत्त्वे ॥ यथा
चन्द्रभिन्नत्वेसतिचन्द्रगताह्लादक
त्वादिमत्त्वंमुखेचन्द्रसादृश्यम् । त
त्पर्य्यायाय । तमन्वेत्यनुबध्ना
तितच्छीलं तत्निषेधति । तद्यथा
नुकरोतीतिशब्दा : । सादृश्यवाच

का : दूतिद्गडौ ॥ सदृशस्यभाव : गुणवचनब्राह्मणादिभ्य : ष्यञ् ॥ स्त्रियांषित्त्वान् ङीषि• सादृशी ॥ ष्यञ : षित्करणादीकारोबहुलमिति भाषासूत्रात् कल्पिक : ॥

सादान्तः । पुं॰ रादृधान्ते ॥

सादास्कः । पुं॰ सोमयागविशेषे ॥

साधक : । त्रि॰ साधनकर्त्तरि । निष्पादके ॥ श्रवणाद्यनुष्ठातरि ॥ साघ्नोति । साधसंसिद्धौण्वुल् ॥ पुं•पुत्रजीवद्रुमे ॥ षष्ठतारायाम् ॥

साधकतमम् । न• करणे । क्रियासिद्धौप्रकृष्टोपकारके ॥ हेतौ ॥ त्रि• अतिशयसाधके । अतिशायनेतमप् ॥ प्रकृष्टंसाधकंसाधकतमम् ॥

साधनम् । न• करणकारके ॥ साध्यते• कर्मनिष्पाद्यतेऽनेन । साध• । ल्युट् ॥ मृतसंस्कारे । सैन्ये ॥ सिद्धौषधौ ॥ गतौ ॥ निवर्त्तने । निवृत्तौ । उपाये ॥ साध्यमुद्दिश्य साधनंनिरूप्यते । मेढ्रे ॥ दापने ॥ अनुगमे । धने ॥ मारणे । वधे । प्रमाणे ॥ मैत्रे ॥ मोहने ॥ जवे । वेगे ॥ मन्त्रसिद्धिकरणे ॥ सिद्धौ ॥ मोक्षसाधकेष्वविशेषे । साधनचतुष्टये ॥ यथा । नित्यानित्यवस्तुविवेक : • इहामुत्रार्थफलभोगविराग : • शमदमादिषट्का सम्पत्ति : • मुमुक्षुत्वञ्चेति ॥ साध• । भावकर्मकरणादौल्युट् ॥ साधयतिवा । नन्द्यादित्वाल्ल्यु : ॥ तपसि ॥ यथा । तपोभि: प्राप्यतेभीष्टंनासाध्यंहितपस्यत : । दुर्भगत्वंवृथा लोकोवहतेसतिसाधने ॥ अल्पसाधनैरधिकारम्भोनसुकर : ॥

साधननिर्मुक्त : । त्रि॰ साधनाभ्यासरहिते ।

साधना । स्त्री॰ आराधनायाम् ॥

साधनाव्यापकत्वम् । न॰ साधनवन्निष्ठात्यन्ताभावप्रतियोगितायाम् ॥

साधनीय : । त्रि॰ साध्ये ॥

साधन्त : । त्रि॰ भिक्षुके । साध्नोति साध॰ तृभृवहिरसोत्यादिना॰ झच्॰ षित् ॥

साधयन्ती । स्त्री॰ नासिकायाम् ॥

साधर्म्यम् । न• समानधर्मत्वे ॥

साधर्म्यवैधर्म्यसमौ । पुं॰ न्यायमते जातिविशेषलक्षणे ॥ यथाह गौतम : । साधर्म्यवैधर्म्याभ्यामुपसंहारेतद्धर्मविपर्ययोपपत्ते : साधर्म्यवैधर्म्यसमौ । २ ॥ उपसंहारे साध्यस्योपसंहरणे • वादिनाकृते • तद्धर्मस्यसाध्यरूपधर्मस्ययोविपर्ययोव्यतिरिक्तस्तस्यसाधर्म्यवैधर्म्याभ्यामाभ्यामुपपत्तेरपीत्याबदुपपादनं ततोहेतो : साधर्म्यवैधर्म्यसमावुच्येते । तदयमर्थ : ।

सर्व्वे । यथा । प्रजनार्थंस्त्रिय : सृष्टा : सन्तानार्थंचमानवा : । तस्मात्साधारणोधर्म्म: श्रुतौपत्न्या सहोदित : ॥ अपिच । अहिंसा सत्यमस्तेयंशौचमिन्द्रियसंयमः । दम : चमार्जवन्दानंसर्वेषांधर्मसाधनमिति ॥ आत्मज्ञानंतितिचा चधर्म्म : साधारणोनृपेतिच ॥

साधारणस्त्री० । स्त्री०वेश्यायाम् ॥

साधारणानैकान्तिक : । पुं० हेत्वाभासान्तरे । साध्याभाववद्वृत्तौ ॥ यथापर्वतोऽग्निमान्० प्रमेयत्वादिति । प्रमेयत्वस्यवह्न्यभाववतिह्रदेविद्यमानत्वात् । साध्यवदन्यवृत्तौ । यथा । शब्दोनित्य : ० मि : स्पर्शत्वात् मचविरुद्धसङ्कीर्णदोष : ० उपधेयसङ्करेऽप्युपाधेरसङ्करात् ॥

साधारणी । स्त्री० सदृशायाम् । समानायाम् ॥ कुञ्चिकायामितिहेमचन्द्र : ॥

साधारण्यम् । न० साम्ये ॥ कुञ्चिकायाम् । इतिहेमचन्द्र : ॥

साधारिका । स्त्री० घटिकायाम् । नाडिकायां ॥

साधिका । स्त्री० साधनकर्त्र्याम् ॥ सुषुप्तौ ॥ सुप्तसुसाधकेतिहैम : ॥

साधित : । त्रि० दापिते । धनादिना वशीकृते । धनादिप्रदापिते ॥ प्रदापितधने ॥ साध्यतिस्म । साध० । क्त : ॥ सिद्धे ॥

साधिमा । पुं० साधुत्वे ॥ साधोर्भाव : । इमनिच् ॥

साधिष्ठ : । त्रि० अतिशयेनबाढे । अतिदृढे । आर्य्ये ॥ न्याय्ये ॥ शोभनतमे । अयमेषामतिशयेनबाढ : । अतिशायिनेतमविष्ठनाविति ष्ठन् । अन्तिकबाढयोर्नेदसाधौ ॥

साधिष्ठान : । त्रि० जीवे । अधिष्ठानेन कूटस्थेनचैतन्येनसहिते ।

साधीयान् । त्रि० अतिबाढे ॥ अतिशोभने । अतिसाधौ ॥ अयमनयोरतिशयितोबाढ : साधुर्वा । द्विवचनेतीयसुन्० अन्तिकबाढयोरिति बाढशब्दस्यसाधादेश : । टेरिति साधोष्टिलोप : ॥

साधु : । त्रि० उत्तमकुलोत्पन्ने । अस्य पर्य्यायायथा । महाकुलकुलीनार्य्य सभ्यसज्जनसाधवइति । वार्द्धुषिके ॥ चारौ । शोभने । मनोज्ञे । स्वभावसुन्दरे ॥ प्रवीणे । योग्ये ॥ स्वधर्म्मवर्त्तिनि ॥ अपकारिष्वप्युपकारशीले ॥ अद्रोहिणि ॥ पुण्यकारिणि । वेदमार्गस्थे ॥ शास्त्रविहितकारिणि ॥ सर्वहिते ॥ नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयसम्पन्ने मुमुक्षौ ॥ कुलधर्माश्रिते ॥

सर्वपूज्ये ॥ यथा । शाक्तैर्वावैष्ण-
वैःशैवैःसौरैर्गाणपतैरपि।कौ
लधर्म्माश्रितःसाधुःपूजनीयो
तियत्नतः॥ साध्नोतिपरकार्यम्।
धर्म्मम्अर्थम्। कामम्। मोक्षं
वा। साध। कृवापेत्युण् ॥ पुं।
व्याकरणेनप्रतिपादितेशास्त्रीयश-
ब्दे ॥ यद्यपिसाधूनेवभाषितेतिन-
श्रूयतेतथापिफलनिर्देशवाक्येत-
न्निर्देशादेवेष्टशविधिःकल्प्यते।
साधूनेवभाषितनापशब्दानिति :
मन्त्रोहीनःस्वरतोवर्णतोवेतिद-
र्शनात् ॥ मुनौ ॥ जिने ॥

साधुजः। त्रि॰ उत्तमकुलोद्भवे।
साधौ ॥

साधुधी:। स्त्री॰ वरवत्सजायाम्।
श्वश्रूम् ॥ सुन्दरबुद्धौ ॥ त्रि॰
तद्वति ॥ साध्वीधीर्यस्याः ॥ कर्म
धारयेऽबहुव्रीहिर्वा ॥

साधुनिन्दितः। त्रि॰ प्रणाय्ये। सा
धुभिर्निन्दिते। साध्वसम्मतइतिया
वत् ॥

साधुपुष्पम्। न॰ प्रपौण्डरीके। स्थ
लपद्मे ॥ साधुवत्पुष्पम् ॥ उत्त
मप्रसूने ॥

साधुभावः। पुं॰ असाधुत्वशङ्कायां
साधुत्वे ॥

साधुवादः। पुं॰ सतामनुमोदने ॥
साधुवादोपदं'हितइतियथा ॥ सा

धीक्तरे ॥

साधुवाहः। पुं॰ विनीताश्वे ॥ सा
धुश्चासौवाहश्च ॥

साधुवाही। पुं॰ विनीताश्वे। सुशि
क्षितेतुरगे ॥ साधुवहनशील:।
वह॰। सुपोतिणिनि:॥ त्रि॰शो
भनाश्वयुक्ते ॥

साधुवृक्षः। पुं॰ कदम्बद्रुमे ॥ वरुण
वृक्षे ॥ साधुश्चासौवृक्षश्च ॥ मनो
ज्ञतरौ ॥

साधुवृत्तः। त्रि॰ सुचरित्रे। साधू
नांमित्रसमानसुखदुःखानांसुवृ
त्तांवृत्तम् ॥

साधुवृत्तिः। स्त्री॰ उत्तमजीविकाया
म् ॥ सद्व्यवहारे ॥ सुन्दरवर्त्तने ॥
साध्वीचासौवृत्तिश्च ॥ साधिर्वृत्ति
र्वा ॥ त्रि॰ तद्वति ॥ साध्वीवृत्ति
र्यस्य ॥

साधुसङ्गमः। पुं॰ मनोनिग्रहणो
पायविशेषे ॥ वस्तुबोधितमपितत्त्वं
नसम्यग्बुध्यते। येवाविस्मरति।त
योःसाधुसङ्गमएवोपायः। साध
वोहिपुनःपुनर्बोधयन्ति। स्मारय
न्तिच ॥

साधुसमागमः। पुं॰ साधुसङ्गमे।
यथा। त्यजदुर्जनसंसर्गंभजसाधु
समागमम्। कुरुपुण्यमहोरात्रंस्मर
नित्यमनित्यतामिति ॥

साधूतम्। न॰ वह्निसङ्घाते ॥ प

यशोध्याम् ॥ चातर्वे ॥ इत्यज यपाल : । पाठान्तरे० साधुतम पि ॥

साध्य : । पुं० गणदेवताविशेषे ॥ साध्यंसिद्धि : । साध० । कर्मणो र्यत्। इतिभावेन्यत्। साऽस्त्य स्य । अर्शआद्यच् । साध्याद्वादश विख्याता : पुराणेषुपुरातनै : । तेयथा । मनोमन्तप्राणनरयोया नोहवसथा । नारायणोनरखैव हं सञ्चित्तसथाविभु : ॥ प्रभुश्चद्वाद शैवैतेसाध्या : प्रोक्ता:पुरातनैरिति ॥ विष्कम्भाद्यन्तर्गतेयोगविशेषे ॥ तत्रोत्पन्नस्यफलंयथा । असाध्यसा ध्य : किलसाध्यजात : शूरोतिधी रोविजितारिपक्ष : । बुद्ध्याद्युपा यै : परिसाधितार्थ : परं कृतार्थः सुतरांविनीत : ॥ स्मरे । कामे ॥ देवे । सुरे ॥ त्रि० साधनीये ॥ कष्टोपाय : सुखोपायोद्विविध : साध्यउच्यते ॥ साधनाऽर्हाभिमते ॥ साध्यतेऽत्र । सतुपक्ष : । यथा । प्रतिज्ञादोषनिर्मुक्तंसाध्यंसत्कार णान्वितम् । निश्चितंलोकसिद्धञ्च पक्षंपक्षविदोविदु : ॥ साध्यंसाध नार्हाभिमतंपक्षंविदु : । यद्यप्यन्य त्साध्यंव्याप्यम्० तद्विशिष्टधर्मी पक्षइतिभेद : । तथाप्यत्रवाक्प्रस्था प्यर्त्वादिधर्मविशेषविशिष्टस्यपक्षत

याधर्मिणोऽधमर्णपदेनैवसाध्यत्वात् साध्यपक्षयोरभेदाभिधानमितिव्यव हारतत्त्वम् ॥ व्याप्ये ॥ साध्यते ऽनेनेतिव्युत्पत्त्यापक्षे ॥ यथा ०प र्वतोवह्निमानित्यत्रपर्वत : ॥ सा धयितुंयोग्ये ॥ यथापर्वतोवह्निमा नित्यत्रवह्नि : साध्य : ॥ साध्यस्य वस्तुनोऽभावेसाधनै:किंप्रयोजनम्॥

साध्यतावच्छेदकम् । न० अनुमिति विधेयांशेभासमानधर्मे ॥

साध्यव्यापकत्त्वम् । न० साध्यसमा नाधिकरणात्यन्ताभावाप्रतियोगि त्वे ॥

साध्यसम : । पुं० हेत्वाभासान्तरे ॥ यथाहगौतम : । साध्याविशिष्टश्च साध्यत्वात्साध्यसम : ॥ ४८ ॥ साध्येनवह्न्यादिना० अविशिष्ट० कृतद्रव्यत्वमध्याह० साध्यत्वादिति० साधनीयत्वादित्यर्थ : । यथाहि० साध्यं साधनीयं० तथाहेतुरपिचेत् ० साध्यसमइत्युच्यते । अतएवचा सिद्धइतिव्यवह्रियते । अयञ्चाश्र यासिद्धिस्वरूपासिद्धिव्याप्यत्वासिद्धि भेदात्० त्रिविध : । आश्रयासि द्धिश्च० पक्षेपक्षतावच्छेदकाभाव : । यथाकाञ्चनमय : पर्वतोवह्निमा नित्यादौ । स्वरूपासिद्धि : ० प क्षे हेतुताऽवच्छेदकावच्छिन्नस्याभा व : । यथाह्रदोद्रव्यंधूमादित्यादौ

। व्याप्यत्वासिद्धिश्च। अव्यभिचरितसामानाधिकरण्यस्याभाव : । न च स्वरूपासिद्धेरेवसूचात्तच्च्यत्वप्रतीतेर्नोभयोर्लच्च्यत्वमितिवाच्यम् । हेतुरितिपदं च्चवपूरणीयम्। हेतुपदस्वगमकहेतोर्व्याप्तिविशिष्टपच्चधर्मस्यबोधकम्। व्याप्तिविशिष्टपच्चधर्मत्वञ्चवापूर्यताम् । तथा च। तत्रकिञ्चिदंशसाध्यत्वेनैव साध्यसमत्वम् । अतएवसाध्यसाध्यतावच्छेदकाभाव : साधनेसाधनतावच्छेदकाभावश्चव्याप्यत्वासिद्धि : । यथा। पच्चतावच्छेदकाभावपच्चतावच्छेदकवह्न्यादेरन्यतमत्वेनाश्रयासिद्धित्त्वम्। यथाच। पच्चेहेत्वभावहेतुमद्व्यादेरन्यतमत्वेनस्वरूपासिद्धित्वम्। तथासाध्यतावच्छेदकाभावादेरन्यतमत्त्वेन व्याप्यत्वासिद्धित्त्वं। चिन्तयान्यतमत्वस्यासिद्धिसामान्यलच्चणंनीलधूमत्त्वादेरपिव्याप्यत्त्वासिद्धत्वमभ्भावंवदन्ति। तेषामयमाशय : । व्याप्तिर्हि साध्यसम्बन्धितावच्छेदकरूपा। गुरुधर्मश्चसाध्यसम्बन्धितानवच्छेदकोऽतोनीलधूमत्त्वादे : साध्यसम्बन्धितानवच्छेदकत्वान्नव्याप्तिस्वरूपत्वम् । तथाच्चसाध्यतावच्छेदकाभावादिरिव। साधनतावच्छेदकेव्याप्यतानवच्छेदकत्वमपि

भवतिव्याप्यत्वासिद्धिरिति ।४८।

सानन्द : । पुं। व्यवहारस्य चतुर्थपादे । सपणिपर्यपाद : । यथा । प्रत्यर्थिनोऽप्रतीतिव्यमिति। भाषापाद: प्रथम : । श्रुतार्थस्योत्तरं लेख्यमित्युत्तरपादोद्वितीय : । ततोऽर्थीलेखयेत्सद्यप्रतिज्ञायापाद स्तृतीय : । तत् सिद्धौसिद्धिमाप्नोतिसाध्यसिद्धिपादश्चतुर्थ: । यथा ।भाषोत्तरक्रियासाध्यसिद्धिभि : क्रमश्स्तिभि : । आक्षिप्तचतुरंशस्तुचतुष्पाद्भिधीयते । इतिमिताचरा ॥

साध्यसम् । न। भये ॥ साधून्यस्यति । असं० । अजितिमुकुट : तन्न । अण : प्रसङ्गात् । तस्मात्। साधूनाम्यस : ॥ सम्भ्रमे ॥

साध्वी । स्त्री। दुर्गायाम् ॥ मेदायाम् ॥ पतिव्रतायाम् ॥ तल्लचणमाहहारीत : । आर्त्तार्त्ते मुदिताहृष्टे प्रोषितेमलिनाकृशा । मृतेम्रियेतयापत्यौसाध्वीज्ञेयापतिव्रतेति ॥ मनुरपि । पतिंयानाभिचरति मनोवाग्देहसंयता । साभर्तृलोकमाप्नोतिसद्भि : साध्वीतिचोच्यते। इति ॥ वोतोगुणवचनादिति ङीष् ॥ शोभनायाम् ॥

सानन्द : । पुं। गुच्छकरञ्जे ॥ भुवकप्रभेदे ॥ यथा । अष्टादशाचरै

र्युक्तोयशीर्षप्रदोभुव: । कच्छस्कन्दसंज्ञकेतासिसानन्दोवीरकेसरी ॥ त्रि० आह्लादयुक्ते ॥

सानन्दूर: । पुं० तीर्थविशेषे ॥

सानसि: । पुं० काञ्चने । सनोति षणु दाने । सानसिवर्णसीत्यादि नासिप्रत्ययश्च धातोर्वृद्धिश्च ॥ त्रि० सम्भजनीये ॥

सानिका । स्त्री० वाद्यविशेषे । सनाई० इति लोकप्रसिद्धे ॥ वंशी- वाद्ये ॥

सानु: । पुं० न० स्त्री । प्रस्थे । पर्वतस्य समभूभागे ॥ वने ॥ वात्यायाम् ॥ मार्गे ॥ अग्रे ॥ कोविदे ॥ सनोति । षणु० । दृसनिजनी तिञुण् । अर्के ॥ पल्लवे ॥

सानुक्रोश: । त्रि० सदये ॥

सानुज: । पुं० तुम्बुरुवृक्षे । तीक्ष्णपत्रे ॥ न० प्रपौण्डरीके ॥ त्रि० अनुजेनसहवर्त्तमाने ॥ सानुजं राममौक्ते ॥

सानुबन्ध: । त्रि० सपरिवारे ॥ अविच्छिन्ने । सानुकूले ॥

सानुमान् । पुं० पर्वते ॥ सानवोविद्यन्तेऽस्य । मतुप् ॥

सानेयिका । स्त्री० सानेय्याम् ॥

सानेयी । स्त्री० वंश्याम् ॥ इ० अ० र० स्त्री० ॥

सान्तपनम् । न० कृच्छ्रसान्तपनाभिधव्रतविशेषे ॥ यथा । गोमूत्रं गोमयं क्षीरं दधिसर्पि: कुशोदकम् । एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम् ॥ गोमूत्रादिषड्द्रव्याण्येकीकृत्य कस्मिन्नहनि भक्षयेत् नान्यत् किञ्चिदद्यात् । अपरदिने चोपवास इत्येतत् सान्तपनं कृच्छ्रं स्मृतमित्यर्थ: ॥ सन्तपति । तप० । ल्यु: । तस्येदङ्कर्म । अण् ॥

सान्तर: । त्रि० विरले ॥ अन्तरेण सहित: ॥

सान्त्वम् । न० अत्यर्थं मधुरवाक्ये । अथ मन: प्रीतिजनके ॥ सामनि । प्रियशब्दार्थप्रज्ञानसम्बन्धादिभि: क्रोधोपशमने । द्रव्यं दास्यामि तुभ्यं माभैषीरित्यादिसमाधानोक्तौ ॥ सान्त्वयति । षान्त्वसामप्रयोगे । चुरादिरदन्त: । एरच् । घञ् वा ॥ दाक्षिण्ये ॥

सान्त्वनम् । न० प्रणये ॥ सामोपाये ॥ षान्त्व० । ल्युट् ॥

सान्त्वना । स्त्री० प्रणये ॥ प्रणय: सान्त्वनानेतिकोषान्तरम् ॥ सामनि

सान्त्वनावाद: । पुं० प्रियवचने ॥

सान्दीपनि: । पुं० मुनिविशेषे ॥ अस्त्रादिविद्याभिज्ञे अवन्तिपुरवासिनि बलरामकृष्णयोर्गुरौ । सन्दीपनस्यापत्यम् । अतइञ् ॥

सान्दृष्टिकम् । पुं० व्यापारानन्तरं

आयमाणि • सद्य : फलि । सन्दृष्टौप्र त्यक्षे भवम् । अध्यात्मादित्वाट्ठञ् ॥ समानदृष्टिविषये ॥

सान्द्रम् । न० वने ॥ त्रि० घने । निविडे ॥ मृदौ ॥ सद्र० अन्यति । अ दिवन्धने । बाहुलकाद्रक् ॥

सान्द्रपुष्पः । पुं० बिभीतकवृक्षे ।

सान्द्रस्निग्धः । त्रि० घनस्निग्धे । मेदुरे ॥

सान्धिकः । पुं० शौण्डिके ॥ त्रि० सन्धिकर्त्तरि ॥

सान्धिवेलम् । न० संधिवेलायाम् भवे ॥ सन्धिवेलाद्यृतुनक्षत्रेभ्योण् ॥

सान्ध्यः । पुं० स्वप्ने ॥ सन्धिभवे ॥ सन्ध्यायामयम् । सन्धिवेलादित्वादण् ॥

सान्ध्यकुसुमा । स्त्री० त्रिसन्धिपुष्पवृक्षे ॥

सान्नहनिकः । त्रि० योधानांरणसन्नाहप्रवर्त्तके ॥ सन्नहनंप्रयोजनमस्य । तदस्यप्रयोजनमितिठक् ॥

सान्नाय्यम् । न० होतव्यद्रव्ये । हविषिसम्यङ्नीयतेहोमार्थमग्निम्प्रति । णीञ् । पाय्यसान्नाय्येतिण्यदा यादेशः समोदीर्घश्चनिपात्यते ॥

सान्निध्यम् । न० नैकट्ये ॥ निकटे ॥ सन्निधिरेव । चतुर्वर्ण्यादित्वात् स्वार्थेष्यञ् ॥

सान्निपातिकः । त्रि० सन्निपातज्वरो गी ॥ सन्निपातआगमनकं कोपनंवा । सन्निपाताक्के तिठञ् ॥

साम्प्रासिकः । पुं० भिक्षौ । पाराशरिणि ॥

सान्वयः । त्रि० सम्बन्धिनि ॥ कुलसहिते ॥ पुत्रपौत्रादिसहिते ॥ यथा । योनधौतंहितवेदमन्त्यवकुलतीत्रमम् । सशीघ्रंवेशूद्रत्वमाशुगच्छतिसान्वयः ॥

सापत्नः । पुं० सपत्नीतनये । सपत्न्या अपत्यम् । शिवादिभ्योण् । तत्रसपत्नेतिपाठेपिलिङ्गविशिष्टपरिभाषया० सपत्नीशब्दादपिसामान्यचिन्तया० ठकंबाधित्वाऽणितिबोध्यम् ॥ वैरिणस्तनये ॥ तस्यापत्यमित्यण् ० शिवादित्वात्वा ॥

सापत्नेयः । त्रि० सपत्न्यास्तनये ॥ सपत्न्याअपत्यम् ॥ स्त्रीभ्योढक् ॥

सापत्नेयी । स्त्री० सपत्न्यादुहितरि ॥

सापत्रपा । स्त्री० लज्जायाम् ॥

सापराधः । त्रि० कृतापराधे ॥

सापिण्डः । पुं० सपिण्डे ॥ प्रज्ञादिभ्यश्चेतिस्वार्थेऽण् ।

सापिण्ड्यम् । न० सपिण्डतायाम् ॥

साप्तपदीनम् । सख्ये । मित्रत्वे ॥ सप्तभिः पदैरवाप्यते । साप्तपदीनंसख्यमितिसाधु ॥

साफल्यम् । न० सफलतायाम् ॥

साभाव्यापत्तिः । स्त्री० साम्यप्राप्तौ ॥

सामक : । पुं॰ तर्कुशाणे ॥ सामाभिज्ञे ॥ सामन्नधीते॰ वेदवा । क्रमादिभ्योवुन् । न॰ मूलऋणे ॥

सामग : । त्रि॰ ब्राह्मणविशेषे । छान्दोगे ॥ सामगायति । गैशब्दे । गापोष्टगितिटक् । टाक्कौवयं : । तेनस्त्रियांसामगी ॥

सामगर्भ : । पुं॰ विष्णौ ॥

सामग्री । स्त्री॰ कारणसमूहे ॥ यथा । सामग्रीचेत्फलविरहोव्याप्तिरेवेति तत्त्वमङ्॰ पदाङ्कदूत : ॥ द्रव्ये ॥

सामग्राम् । न॰ समुदायत्वे ॥

सामज : । पुं॰ गजे ॥ कुञ्जरे ॥ त्रि॰ सामोत्थे । सामार्थे ॥

सामञ्जस्यम् । न॰ औचित्ये । युक्तियुक्ते ॥

साम । न॰ सहस्रशाखेपितदेवताकेवेदविशेषे ॥ गीतिविशिष्टायामृचि ॥ ऋच्यध्यूढं सामोच्यते ॥ वाक्यविशेषस्यायांगीतौ ॥ सामपदन्तुगीतिमात्रस्यैवाभिधायकमित्यन्यत् । चतुर्णांवेदानांमध्येगानमाधुर्येणातिरमणीयत्वाद्विष्णोर्विभूति : सामेत्युच्यते । राज्ञांशत्रुवशीकरणायोपायविशेषे । सान्त्वे । प्रियवादर्थ प्रदानसम्बन्धादिभि : शत्रो : क्रोधोपशमने ॥ यथा । परस्परोपकाराणांदर्शनं गुणकीर्त्तनम् । सम्बन्धस्यसमाख्यानमायत्या : सम्प्रकाशनम् ॥ वाचापेशलयासाधुतवाहमितिचार्पणम् । इतिसामविधानज्ञै : सामपञ्चविधंस्मृतम् ॥ स्यतिपापं॰ रोषंवाऽनेनवा । षोऽन्तकर्म्मणि । सातिभ्यांमनिन्मनिणाविितिमनिन् ॥ सान्तनम् । सामसान्त्वप्रयोगे । बाहुलकात्-कनिन्वा ॥ त्रि॰ शोभने । अनवद्ये ॥

सामन : । पुं॰ सामवति ॥ सामास्यास्ति । पामादित्वान्न : ॥

सामनी । स्त्री॰ पशुबन्धनरज्जौ ॥

सामन्त : । पुं॰ प्रतिवासिनि । संलानोन्तएकदेशोऽस्य । प्रादिभ्योधातुजस्येतिसमास : । समन्तायाः स्वदेशाव्यवहितभूमेरयम् । तस्येदमित्यण् ॥ माण्डलिके ॥ चतुर्द्दिके ॥ त्रि॰ सहाये ॥

सामन्य : । पुं॰ सामविदि ॥ सामसुसाधु :॰ प्रवीणो॰ योग्योवा । तत्रसाधुरितियत् । येचाभावकर्म्मणोरितिप्रकृतिभाव : ॥

सामयिक : । त्रि॰ समयोचिते । समयेकार्यकर्त्तरि ॥ समय : प्राप्तोऽस्य । समयस्तदस्यप्राप्तमितिठञ् ॥ विनयादित्वात्स्वार्थेठग्वा । समयोत्थे ॥

सामयोनि : । पुं॰ ब्रह्मणि । द्रुहिणे । कुञ्जरे । गजे । त्रि॰ सा

ब्राह्मणः क्षत्रियो वैश्यः शूद्रः
सामान्य एव चेति ॥

सामान्यम्। न॰ जातौ ॥ तद्द्विविधम्। यथा। सामान्यं द्विविधम् प्रोक्तम् परञ्चापरमेव च। द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते। परभिन्ना च या जातिः सैवापरतयोच्यते। व्यापकत्वात् परापि स्याद्व्याप्यत्वादपरापि च। द्रव्यत्वादिकजातिस्तु परापरतयोच्यते। इति भाषापरिच्छेदः ॥ तल्लक्षणं यथा। नित्यत्वे सत्यनेकसमवेतत्वमिति। अनेकसमवेतत्वं संयोगादीनामप्यस्ति॰ अतः सत्यन्तम्। नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्ति॰ अतउक्तमनेकेति। नित्यत्वे सत्यनेकवृत्ति सामान्यमुपेत्य समवेतत्वमुक्तम्। एकव्यक्तिवृत्तिस्तु न जातिः। यतउक्तम्। व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः। रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः ॥ एकव्यक्तिकत्वादाकाशत्वं न जातिः। तुल्यवृत्तिकत्वाद्घटत्वं कलसत्वं न जातिद्वयम्। सङ्कीर्णत्वाद्भूतत्वं मूर्त्तत्वं न जातिः। अनवस्थाभयात् सामान्यत्वं न जातिः। विशेषव्यावृत्तस्वभावस्वरूपहानिः स्यादतो विशेषत्वं न जातिः। समवायसम्बन्धाभावात् समवायित्वं न जातिः। द्रव्यादित्रिकवृत्तिरिति। परत्वमधिकदेशवृत्तित्वम्॰ अपरत्वमल्पदेशवृत्तित्वम्। सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वात् सत्तायाः परत्वम्। एतद्बोधनाय द्रव्यादीति। तदपेक्षया चान्यासां जातीनामपरत्वम्। परभिन्ना सत्ताभिन्ना। व्यापकत्वात् परापि स्याद्व्याप्यत्वादपरापि च। पृथिवीत्वाद्यपेक्षया व्यापकत्वात्॰ अधिकदेशवृत्तित्वात्॰ द्रव्यत्वं परत्वम्। सत्ता...याऽल्पदेशवृत्तित्वात्॰ द्रव्यत्वम्॰ अपरत्वञ्च। तथाच धर्मद्वयसमावेशादुभयमविरुद्धम्। इति मुक्तावली ॥ नित्यमेकमनेकानुगतं सामान्यम्। तच्च द्रव्यगुणकर्म्मवृत्ति। इति तर्कसङ्ग्रहः ॥ सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता। इति लक्षणलक्षितकाव्यालङ्कारविशेषे ॥ यथा वा। प्रस्तुत...येन गुणसाम्यविवक्षया। ऐकात्म्यं बध्यते योगात् तत् सामान्यमिति स्मृतम्। अतादृशमपि तादृगनया विवक्षितुं यद्वस्तु तार्थेन सम्पृक्तमपरित्यक्तनिजगुणमेकतदेकात्मतया निबध्यते॰ तत् समानगुणनिबन्धनात्॰ सामान्यम्। उदाहरणम्। मलयजरसविलिप्ततनवो नवहारलताविभूषिताः सितत

समाससमूहे ॥

सामि । अ॰ अर्द्धे ॥ निन्दायाम् ॥

सामयति । सामसान्त्वप्रयोगे ! अदन्तः ॥

सामिधेनी । स्त्री॰ धाय्यायाम् । अग्निज्वालनार्थमृचि । ऋक्सामिधेनी धाय्या च यास्यादग्निसमिन्धने ॥ समिधामाधानी । समिधामाधानेषिण्ट्यण । षित्वान्ङीष् । यस्येत्यलङ्कृतिलोपः ॥ समिधे ॥

सामिधेन्यः । पुं॰ मन्त्रविशेषे ॥ समिधामाधानः । समिधामाधानेषिण्ट्यण् ॥

सामीची । स्त्री॰ वन्दनायाम् ।

सामीप्यम् । न॰ सान्निध्ये । देशकालाभ्यां कृतायाम् प्रत्यासत्तौ । अव्यवहितत्वे ॥ समीपमेव । चतुर्वर्णादित्वात् ष्यञ् ॥

सामुद्रम् । न॰ देहलक्षणे ॥ लवणविशेषे । करके । वशिरे ॥ अस्य गुणा यथा । सामुद्रं मधुरं पाके सतिक्तं मधुरं गुरु । नात्युष्णं दीपनं भेदि सक्षारमविदाहि च ॥ श्लेष्मलं वातनुत्तिक्तमरूक्षं नातिशीतलम् ॥ समुद्रोदके सामुद्रमुदकं क्षारं सर्वदोषप्रकोपनम् ॥ समुद्रफेने ॥ धाराजलप्रभेदे ॥ तत्र सक्षारलवणं शुक्रदृष्टिबलापहम् । विस्रन्दोषलं तीक्ष्णं सर्वकर्मसुगर्हितम् ॥ सामुद्रन्त्वाश्विने मासि गुणैर्गाङ्गवदादिशेत् । यतोऽगस्त्यस्य दिव्यर्षेरुदयात् सकलं जलम् । निर्मलं निर्विषं स्वादु शुक्रं स्याददोषजम् ॥ तत् सामुद्रं जलम् । अ॰ इव । फूत्कारविषवातेन नागानां श्लेष्मचारिणाम् । वर्षासु सविषं तोयं दिव्यमप्याश्विनं विनेति ॥ त्रि॰ समुद्रोत्पन्नवस्तुनि । समुद्रे भवम् । तत्र भवइत्यण् ॥

सामुद्रकम् । न॰ समुद्रलवणे ॥ समुद्रोक्तस्त्रीपुंलक्षणग्रन्थे ॥ तीर्थविशेषे ॥ त्रि॰ । स्त्रीपुंसयोश्चिह्नवेत्तरि ॥

सामुद्रिकः । त्रि॰ स्त्रीपुंसयोश्चिह्नज्ञे ॥ वेत्ता स्त्रीपुंसयोश्चिह्नं सामुद्रिक उदाहृत इति हारावली ॥ समुद्रसम्बन्धिनि ॥ समुद्रचारिणि ॥

सामूहिकः । त्रि॰ सामवायिके । समूहमनवैति । समवायान् समवैतीति ठक् ॥

साम्परायः । पुं॰ परलोके ॥ परलोकसाधने । सम्परायः परलोकः । तत्प्राप्तिप्रयोजनमेषा[illegible] नविशेषे ॥

साम्परायिकम् । न॰ युद्धे । समीके । समरे ॥ त्रि॰ पारलौकिके ॥ यथा । प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते । न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम् ॥ पारलौकि

कीसाधने ॥ सम्परायकम् । अयगतौद्धगतौवा । घञ् । ततोविनयादित्वात् स्वार्थे ठक् ॥ सम्परायाय प्रभवति । सन्तापादित्वाट्ठञ् ॥ सम्परायार्हे । सम्परायमर्हति । तदर्हतीतिठक् ॥

साम्प्रतम् अ॰ अधुनार्थे । इदानीम् ॥ उचितार्थे सम्प्रतनम् । तनु विस्तारे डम् । पृषोदरादित्वात् समो दीर्घः ॥ यद्वा । सम्॰प्रति॰ एतयोः समाहारद्वन्द्वः । तस्मात्॰ प्रज्ञादयण् । गणपाठात्मात्वम् ॥

साम्प्रतिकम् । न॰ समे ॥ न्याय्ये ॥ सम्प्रतिशब्दाद्विनयादित्वात्स्वार्थे ठक् ॥

साम्बम् । न॰ उपपुराणविशेषे ॥

साम्बरम् । न॰ गडलवणे ॥

साम्बरी । स्त्री॰ मायायाम् ॥ शाम्बरीसाम्बरीमाया॰ मायाकृद्धद्केन टि॰ बू॰ शब्दरत्नावली ॥

साम्भवी । स्त्री॰ रक्तलोध्रे ॥

साम्मातुरः । पुं॰ भद्रमातुरे ॥ सतीतनये ॥ सम्मातुरपत्यम् । मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः ॥

साम्मुख्यम् । न॰ सायाह्नव्यापिन्यां तिथौ । साम्मुख्यंनामसायाह्नव्यापिनीदृश्यतेयदीतिस्कान्दोक्तेः ॥ सम्मुखत्वे ॥

साम्यम् । न॰ तुल्यत्वे । समतायाम् ॥ चाण्डालाश्वसियोगस्वाम्मूत्राणप्रतिग्रहात् । पतत्यज्ञानतो विप्रो ज्ञानात्साम्यन्तु गच्छति ॥ निर्विशेषे । सर्वभूतेषु विषमस्थेष्वपि समानस्वभावः समभावे ॥ समाङ्गावेष्यञ् ॥

साम्राज्यम् । न॰ सार्वभौमपदे । इतरसकलाधिपत्ये ॥ यथा । इच्छाधिपत्यंराज्यंस्यात्॰ साम्राज्यंशासनश्चि । इतलघेमहेशानिमत्वासाम्राज्यमुच्यतइतिवरदातन्त्रे द्वितीयः पटलः ॥ सम्राजोभावः । ष्यञ् ॥

साम्राणिकर्दमम् । न॰ अवादिनामनिगन्धद्रव्ये । गन्धाख्ये ॥ इ॰ रा॰ नि॰ स्ट ॥

साम्राणिजम् । न॰ मत्स्यापारिवती ॥

सायंसन्ध्या । स्त्री॰ पितृप्रसूम् ॥ सायङ्कालोपास्यदेवतायाम् ॥

सायम् । अ॰ निशामुखे । दिनान्ते ॥ सानम् । षो॰ अम् । युगागमः ॥

सायः । पुं॰ बाणे । शरे । बाणे ॥ दिनान्ते । विकाले ॥ स्यति॰ समापयति दिनम् ; षो॰ श्यादुषोतिच ॥ घञ् वा । आतो युक् ॥

सायकः । पुं॰ शरे । खड्गे ॥ स्यति । षो॰ । ण्वुल् । युक् ॥

सायकपुङ्खा । स्त्री॰ शरपुङ्खायाम् ॥

सायङ्कालः । पुं॰ सायाह्ने ॥

सायम् । अ॰ निशामुखे । दिनान्ते ॥ सानम् । षो॰ । अम् । युगागमः ॥

सायम्प्रातिकः । त्रि॰ सायम्प्रातर्भवे ॥ कालाट्ठञ् ॥

सायन्तनः । त्रि॰ सायङ्कालसम्बन्धिनि ॥

सायाह्नः । पुं॰ विकालके । दिनान्ते । पञ्चधाविभक्तस्याह्नः पञ्चमे भागे ॥ यथा । सायाह्नस्त्रिमुहूर्त्तं स्यात्श्राद्धं तत्र न कारयेत् । राक्षसी नामसा वेला गर्हिता सर्व्वकर्म्मसु ॥ अह्नः सायम् । सङ्ख्याविसायेतिज्ञापकात् समासः । सायमोह्नमलोपश्चेतिभाष्यादूसाधुः ॥

सायिका । स्त्री॰ क्रमस्थितौ ॥

सायुज्यम् । न॰ सयुग्भावे । एकदेहदेहित्वेऐक्ये ॥ सयुजोभावः । ब्राह्मणादित्वात् ष्यञ् ॥

सायोत्सवः । पुं॰ विकाले ।

सारः । पुं॰ बले ॥ स्थिरांशे ॥ यथा । वेद्यान्यनेकशास्त्राणि चाल्पायुर्विघ्नकोटयः । तस्मात् सारं विजानीयात् क्षीरंहंसइवाम्भसः ॥ मज्जनि । मज्जायाम् ॥ वज्रक्षारे । रोगे । द्रुतिधरणी ॥ दाडिमे ॥ वायौ ॥ पाशके ॥ नवनीते ॥ द्रव्ये ॥ काव्यालङ्कारविशेषे ॥ यथा । उत्तरोत्तरमुत्कर्षोभवेत् सारः परावधिः ॥ परः पर्यन्तभागोऽवधिर्यस्य धाराधिरोहितया तच्चैवोत्कर्षस्य विश्रान्तः । उदाहरणम् । राज्ये सारं वसुधा॰ वसुधायाम् पुरम्॰ पुरे सौधम् । सौधे तल्पं तल्पे वराङ्गनाऽनङ्गसर्वस्वम् । न॰ जले । धने ॥ न्याय्ये । नवनीते ॥ विपिने । लोहसारे । यथा । चमाभृक्षिखरः कारः गृहान्यस्वे नले पित्ते । लोहेस्युर्यन्त्र सूक्ष्माणि तत् सारमभिधीयते ॥ लोहसारास्ववहन्याद्गृहणीमतिसारकम् । अर्शसर्वाङ्गजं वातं शूलञ्च परिणामजम् ॥ छर्द्दिञ्च पीनसं पित्तं श्वासमाशुव्यपोहति । त्रि॰ वरे । श्रेष्ठे ॥ यथा । असारे खलु संसारे सारमेतच्चतुष्टयम् । काश्यांवासः सतां सङ्गो गङ्गाम्भः शिवपूजनम् ॥ दृढे ॥ विरम्निष्ठन् सरति कालान्तरम् । सृ॰ । स्थिरे॰ इति घञ् ॥ सारः शवलपीतयोरितिविश्वः ॥

सारकः । पुं॰ तरलप्रवृत्तिहेतौ । जयपाले ॥ त्रि॰ विरेचके ॥ सरति । सृ॰ । ण्वुल् ॥

सारखदिरः । पुं॰ दुष्खदिरे । घनतरौ ॥

सारगन्धः । पुं॰ चन्दने ॥

रैणक्रमतोऽपि वामः ॥ सर्वेऽप्येतव्यः
कथितार्थकारी० क्रौञ्चद्वयस्याप्य
यमेव वर्गः ॥ इति वसन्तराजः ॥
इन्दौ ॥ हंसे ॥ न० सरसीरुहे ।
पद्मे । भौमपानीयविशेषे ॥ यथा
नद्याः शैलनदाम्भोधवसंस्थ्य-
तिष्ठति । तत्सरोजलमाच्छन्नं तट
स्थः सारसंस्मृतम् ॥ सारसं सलि
लं बल्यं तृष्णाघ्नं मधुरं लघु । रोच
नं तु ररूक्षं बद्धमूत्रमलं हितम् ॥
वि० सरोजाते ॥ सरसिभवः ।
अण् ॥

सारसनम् । न० तनुत्रनामोरस्त्रे ।
कञ्चुकादावर्थिमध्यकायनिबद्धप
ट्टिकादौ ॥ यथा । कञ्चुकोवारबा
णोऽस्त्री० यत्तु मध्ये सकञ्चुकाः ।
बध्नन्ति तत्सारसनमधिकाङ्गोऽथ शी
र्षकमित्यमरः ॥ काञ्च्याम् ।
मेखलायाम् । कटिभूषणे ॥ स्त्री
काञ्च्यां पञ्चयन्यने । सारमुत्कृष्टं स
नमस्य षष्ठसम्भक्तौ । घः । स
ारसनेनाल्पधङ्ग्नेनवा । सारंस
नोति वा । षणु दाने कर्मणः श्री
लच्चिनघाराच् । यद्वा । सारंबल
मश्नुते० दीर्घत्वेन । अश्नतरौ
पृषोदरादिषु । करणे लिल्युट् । य
धानुष्यादि ॥

सारसिका । स्त्री० सारस्याम् ॥ म्रा
र्थिक : ॥

सारसी । स्त्री० लक्ष्मणायाम् । सारस
स्त्रियाम् ॥

सारस्वत : । पुं० देशविशेषे ॥ बिल्व
दण्डे ॥ कल्पविशेषे ॥ यथा । सा
रस्वतस्य कल्पस्य मध्ये ये स्युर्नराम-
रा : । तद्वृत्तान्तोद्भवं लोकैस्तद्ब्राह्मणम
तमुच्यते ॥ इति मात्स्ये ५०ऽध्या
य : ॥ सरस्वतीनदीपुत्रे मुनिविशे
षे ॥ इति कश्चित् । सारस्वतदेशी
यविप्रश्रेणौ ॥ स च पञ्चविधगौडेषु
प्रसिद्ध: । यथा । सारस्वता : कान्य
कुब्जा इति ॥ न० ब्राह्मीघृते ॥ त्रि०
सरस्वतीतीरवासिनि ॥ सरस्वती-
तीरसम्बन्धिनि ॥ सारस्वतदेशसम्
बन्धिनि ॥

सारस्वता : । पुं० भूम्नि० देशविशेषे ।
विकर्णिकेषु ॥ यथा । काश्मीरास्तु
माधुमता : सारस्वतास्तु विकर्णि-
का इति हेमचन्द्र : ॥

सारस्वतकल्प : । पुं० स्वायम्भुवमाद्य
कातन्त्रोक्ते अङ्गहारे सरस्वत्युपास
नाप्रकरणे ॥

सारस्वतव्रत : । पुं० न० मत्स्यपुराणो
क्ते व्रतविशेषे ॥

सारस्वती । स्त्री० इष्टिविशेषे ॥ याज्ञि
का : । पठन्ति । आहिताग्निरपश
ब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमि
ष्टिं निर्वपेदिति प्रायश्चित्तीया माभूमे
त्यध्येयं व्याकरणमिति महाभाष्यम्

सारा । स्त्री॰ स्नुहीप्रभेदे ॥ दूर्वायाम् कृष्णत्रिवृतायाम् ॥
सारार्थ : । त्रि॰ निष्कृष्टार्थे ॥
साराल : । पुं॰ तिले ॥
सारि : । पुं॰ स्त्री॰ पाशके ॥
सारिका । स्त्री॰ शारिकाख्यखगे । पीतपादायाम् । गोराटिकायाम् ॥ सरति । सृ॰ । ण्वुल् । प्रत्ययस्थादितीत्वम् ॥ वद्यान्तरे ॥
सारिणी । स्त्री॰ कपिलशिंशपायाम् ॥ कार्पासिकायाम् ॥ दुरालभायाम् ॥ प्रसारण्याम् ॥ रक्तपुनर्नवायाम् ॥ सहदेव्याम् ॥ इति राजनिर्घण्ट : ॥
सारी । त्रि॰ बलयुक्ते । सबले ।
सारिष्ठ : । त्रि॰ अतिशयेनसारे ॥
सारी । स्त्री॰ सप्तलायाम् ॥
सारु । न॰ वर्णवृत्तप्रभेदे ॥ हारदण्डधारिसारु ॥ यथा । नन्दनन्दनम् भजामि ॥
सारुण : । त्रि॰ अरुणवर्णयुक्ते ॥
सारुणा । स्त्री॰ जपायाम् ॥
सारूप्यम् । न॰ सरूपतायां ॥
सारोष्ट्र : । पुं॰ देशभेदे ॥ सारउष्ट्रोयस्मिन् ॥
सारोष्ट्रिक : । पुं॰ विषविशेषे ॥ सारोष्ट्रे देशेभव : । अध्यात्मादित्वाट्ठञ् ॥
सार्गल : । त्रि॰ सप्रतिबन्धे ।

सार्थ : । पुं॰ जन्तुसङ्घे ॥ वणिक्समूहे ॥ समूहमात्रे ॥ यात्रिकजनानांसङ्घाते ॥ त्रि॰ सधने ॥ सफले । अभिधेयसहिते ॥ सरति । सृ॰ । सर्त्तेर्णित् इथन् ॥ अर्थेनसहवर्त्तमानोवा ॥ वापोष्वितसहस्त्रीपुंसनेष्वपथर्मे प्लिव । सार्थी : स्वैरंतदोयेषुचैत्वे भ्रमन्तिवादिषु ॥
सार्थक : । त्रि॰ सप्रयोजने ॥ अर्थेनसहवर्त्तमान : । सार्थक : ॥
सार्थवाह : । पुं॰ वणिजि ॥ सार्थं वहति । वह॰ । कर्म्मण्यण् ॥
सार्थिम : । त्रि॰ सार्थेस्थिते । सार्थीतिख्याते ॥
सार्द्र : । त्रि॰ आर्द्रे ॥ पर्यायास्तु । आर्द्रसार्द्रक्लिन्नतिमितस्तिमितसमुन्नमुत्तास्ते ति ॥ सहआर्द्रणगुणेनेतितथा ॥
सार्द्ध : । त्रि॰ अर्द्धसहिते ॥ अर्द्धेनसहवर्त्तमान : ॥
सार्द्धम् । अ॰ साकमर्थे । सत्रम् । समम् । सहार्थे ॥ ऋध्यति । ऋधु वृद्धौ । बाहुलकात्कम् । सहऋद्धं वर्त्तते ॥
सार्प्प : । पुं॰ अश्लेषानक्षत्रे ॥ सर्पोदेवतास्य । सास्यदेवतेत्यण् ॥
सार्प्पराज्ञी । स्त्री॰ सर्पराजस्यवासुकेः पत्न्याम् ॥

सार्प्पिष : । त्रि॰ सर्पि : सम्बंधिनि । सर्पिषासंस्कृते ॥ अण् ॥

सार्पिष्क : । त्रि॰ घृतसंस्कृते ॥ सर्पिषासंस्कृतं। तेनसंस्कृतमितिठक् ॥ सार्पिष्कन्दाधिकंसर्पिर्दधिभ्यांसंस्कृतंक्रमादितिहेमचन्द्र : ॥

सार्व्व : । पुं॰ अर्हति । जिने ॥ त्रि॰ सर्वहिते ॥ सर्वस्मै हित : । सर्वपुरुषाभ्यांणढञावितिण : ॥

सार्व्वजनिक : । त्रि॰ सर्व्वजनीने ॥ सर्वजन : । पूर्वकालैकेतिसमास: । सर्वजनायहित: । सर्वजनाट्ठञ् खश्चेतिठञ् ॥

सार्व्वभौम : । पुं॰ सर्वपृथ्वीपतौ । चक्रवर्त्तिनि । कान्यकुब्जदेशे ॥ उत्तरदिग्गजे ॥ सर्वस्याम्भूमौविदित : । तत्रविदितइत्यण् । अनुशतिकादित्वादुभयपदवृद्धि : ॥ सर्वभूमेरीश्वरोवा । तस्येश्वरइत्यण् ॥ सर्वभूमेर्निमित्तंसंयोगउत्पातोवा । सर्वभूमिपृथिवीभ्यामणञावित्यण् ॥

सार्व्वजनीन : । त्रि॰ सर्व्वजनेसाधौ ॥ खञ् ॥

सार्व्वलौकिक : । त्रि॰ सर्वलोकविदिते ॥ सर्व्वलोकेविदित: । लोकसर्वलोकाट्ठञ् । अनुशतिकादि:॥

सार्षपम् । न॰ सर्षपशाके ॥ गुणायथा । कटुकंसार्षपंशाकंबहुमूत्रमलङ्गुरु । अम्लपाकंविदाहिस्वादुरूक्षंत्रिदोषकृत् ॥ सक्षारंलवणंतीक्ष्णंस्वादुशाकेषुनिन्दितम् ॥ सर्षपतैले ॥ दीपनंसार्षपंतैलंकटुपाकरसंलघु । लेखनंस्पर्शवीर्योष्णंतीक्ष्णंपित्तास्रदूषकम् ॥ कफमेदोनिलार्शोघ्नंशिर:कर्णामयापहम् । कण्डूकोठक्रिमिश्वित्रकुष्ठदुष्ट्रणप्रणुत् ॥ तद्वद्राजिकयोस्तैलंविशेषान्मूत्रकृच्छ्रकृत् ॥ राजिकयो : • कृष्णराजिकारक्तराजिकयो : ॥

साष्टिता । स्त्री॰ समानर्द्धित्वे । समानैश्वर्ये ॥

साल : । पुं॰ वृक्षमात्रे ॥ प्राकारे ॥ सर्ज्जपादपे । सखुआ॰ इ॰भा॰ प्र॰ ॥ सल्यते । चलगतौ । कर्म्मणिघञ् ॥ न॰ धूनके ॥

सालग्राम : । पुं॰ शालग्रामे ॥

सालन : । ) पुं॰ धूनके सर्ज्जरसे ॥
सालनिर्यास: । )

सालपर्णी । स्त्री॰ सालपर्ण्याम् । विदारिगन्धायाम् ॥ इ॰ अ॰ र॰ लौ । साल : पर्णमस्या : । सालशब्दस्यशालपर्णसदृशैलक्षणा । पाककर्णेतिङीष् ॥

सालपुष्पम् । न॰ स्थलपद्मे ॥

सालरस : । पुं॰ रालि । धूनके ॥

 

सालवेष्टः । पुं॰ धूनके ॥
सालशृङ्गम् । न॰ प्राचीराग्रे ॥
सालसारः । पुं॰ तरौ । हिङ्गुनि ॥
सालिका स्त्री॰ शारिकायाम् ॥ सल॰ । ण्वुल् । ह्रस्वम् ॥
सालोक्यम् । न॰ एकलोकवासे । सलोकतायाम् ॥
सालुकः । पुं॰ पक्षिविशेषे । गृध्रके । खुद्रचूडे ॥
साल्वः । पुं॰ देशविशेषे । तद्देशस्थे॰ पुंभूम्नि॰ कारकुक्षीयेषु ॥ साल्वास्तु कारकुक्षीयामरवस्तु दशेरकाः इति हेमचन्द्रः ॥ पुं॰ नृपतिविशेषे ॥ न॰ मूलविशेषे ॥ साल्वसूनम् । पुष्पमूलिषु कुलमित्यशोलुक् ॥ वृत्तिग्रामाख्यात्साल्वशब्दस्य वृद्धत्वेऽपि विल्वादित्वं सम्यादित्वं च बोध्यम् ॥ त्रि॰ साल्वदेशजे ॥ साल्वेषु भवः । कच्छादिभ्यश्चरणत्र ॥ यथा॰ साल्वः पदातिर्व्रजति ॥
साल्वकः । त्रि॰ साल्वदेशजे ब्राह्मणादौ ॥ गवि ॥ यवाग्वाम् ॥ साल्वेषु जातः । अपदातौ साल्वादिति॰ गोयवाग्वोरेवेति च वुञ् ॥
साल्वनी । स्त्री॰ नाग्यन्तर्यां ॥
साल्वहा । पुं॰ श्रीकृष्णे ।
साल्वेयः । पुं॰ नृपान्तरे ॥ तस्यापत्ये ॥ साल्वेयस्यापत्यं॰ राजा वा । साल्वेयगान्धारिभ्यामिति वृञ् ॥
सावधानः । त्रि॰ समाहितात्मकः स्वर्णे ॥ अवधानेन सह वर्त्तमानः । सचेतने ॥
सावन । पुं॰ यज्ञकर्मान्ते । यजमाने । प्रचेतसि । वरुणे । दिवसविशेषे । यथा । खरमरीच्युदयद्वयमान्तरं यदिह सावनसंज्ञदिनस्फुटम् ॥ अपि च । अहोरात्रं पचैकेन सावनो दिवसः स्मृत । इति । त्रिंशद्दिनात्मके मासे ॥ त्रिंशता सौरदिवसैः सावनः परिकीर्त्तितः । न॰ सवनसम्बन्धिदिने । सोमयागे सवनत्रयस्याहोरात्रसाध्यत्वात् तत्सम्बन्धिदिनं सावनमिति माधवाचार्य्यः ॥
सावयवम् । न॰ व्यक्ते ॥ अवयवेन सह वयवो मिश्रः संश्लेषः मिश्रणं संयोगः इति यावत् अप्राप्तिपूर्विका प्राप्तिः संयोगः तेन सह वर्त्तते इति सावयवम् । तथाहि॰ पृथिव्यादयः परस्परं संयुज्यन्ते॰ एवमन्येऽपि । न तु प्रधानस्य बुद्ध्यादिभिः संयोगस्तादात्म्यात् । नापि सत्त्वरजस्तमसां परस्परं संयोगोऽप्राप्तिरभावात् ॥ त्रि॰ अवयवविशिष्टे ॥
सावरः । पुं॰ मृगविशेषे ॥ न॰ तन्मांसे ॥ यथा । मांसं सावरसम्भूतं पाचितं मधुराम्रते । वीसवारोषधा

क्षीरोविडङ्गसैन्धवसम्भृते ॥ बलपुष्टिकरंरुच्यंविष्टम्भिगुरुपाचनम् । सावरंपललंशीतंसुस्वादुकफकृन्मतम् ॥ रसेपाकेचमधुरंरक्तपित्तनिवारणम् तद्भुक्त्वाशर्कराभूयोभक्षणायप्रकल्पते ॥ भावप्रकाशेपि । सावरंपललंस्निग्धंशीतलंगुरुचस्मृतम् । रसेपाकेचमधुरंकफदंरक्तपित्तहृत् ॥ त्रि० सवरेणसहिते ॥

सावर्णः । पुं० अष्टममनौ ॥ यथोक्तं देवीभागवते । छायासंज्ञासुतोयोसौद्वितीयः कथितोमनुः । पूर्वजस्यसवर्णोसौसावर्णस्तेनकथ्यतइति ॥

सावर्णिः । पुं० सूर्यतनये । अष्टममनौ ॥ अष्टमेन्तरआयातेसावर्णिर्भवितामनुः ॥ सवर्णायाअपत्यम् । अतइञ् । इत्यधिकारे० बाह्वादिभ्यश्चेति० इञ् ॥ यद्वा । अग्रजस्यवैवस्वतमनोः समानोवर्णइतिसावर्णिः । यथोक्तंविष्णुपुराणे । छायासंज्ञासुतोयोसौद्वितीयः कथितोमनुः । पूर्वजस्यसवर्णोसौसावर्णिस्तेनकथ्यतइति ॥ गोत्रविशेषे ॥ यथा । वात्स्यसावर्णिगोत्रयोरौर्वच्यवनभार्गवजामदग्न्याप्नुवतः प्रवराइत्युद्वाहतत्त्वं ॥

सावर्णिकः । पुं० मन्वन्तरान्तरे ॥ सावर्णिः कः प्रकाशोयस्मिन् ॥ अष्टममनौ । सावर्णिकोनाममनुर्भवान्भुविभविष्यतीत्युक्ते ॥

सावित्रः । पुं० शङ्करे ॥ वसौ ॥ ब्राह्मणे ॥ सूर्ये ॥ गर्भे ॥ न० यज्ञोपवीते ॥ सवितुरयम् । तस्येदमित्यण् ॥

सावित्री । स्त्री० शाल्वदेशीयसत्यवद्राजपत्न्याम् । मद्रदेशीयाश्वपतिराजकन्यायाम् ॥ ब्रह्मपत्न्याम् । सवितुः पृश्न्यामपत्न्यां जातायाम् । उमायाम् ॥ तन्नामकारणंयथा । त्रिदशैरर्चितादेवीवेदयोगेषुपूजिता । भास्वत्स्वरूपातुसावित्रीतेनसास्मृतेतिदेवीपुराणे ४४ ऽध्यायः ॥ गायत्र्याम् ॥ सर्वलोकप्रसवनात्सवितासतुकीर्त्यते । यतस्तद्देवतादेवीसावित्रीत्युच्यतेततः ॥ वेदप्रसवनाच्चापिसावित्रीप्रोच्यतेबुधैरितिवह्निपुराणेब्राह्मणप्रशंसानामाध्यायः ॥ सन्ध्यायामन्यच्चसमयेषत्यक्तसावित्रीजपः सायंप्रातर्होमादिरूपयास्वकीयक्रियया स्वकालेत्यक्तोब्राह्मणः क्षत्रियोवैश्योपिसज्जनैर्निन्दांगच्छतितस्मात्स्वकालेसावित्रीजपस्वक्रियास्वनत्यजेत्सवितुरियम् । अण् । ङीप् । प्रसङ्गोपप्रसिद्धायांनद्याम् ॥

सावित्रीव्रतम् । न० ज्येष्ठकृष्णचतुर्द्दश्यामुक्तोक्तर्त्तव्ये नियमविशेषे । वटसावित्री० इ० भाषाप्रसिद्धे ॥

सावित्रीसूत्रम् । न० यज्ञोपवीते ॥

साशङ्क : । त्रि० सभये ॥

साशूक : । पु० कम्बले । इ० इजारबन्दी ॥

साश्रुधीः । स्त्री० श्वश्रूम् इ० त्रि० शेष : ॥

सास : । पु० चापविशेषे ॥ असिना धनुषा सह वर्त्तते । तेन सहेति बहुव्रीहि : ॥

सासि : । त्रि० सखड्गे ॥ सहासिना वर्त्तते । तेनसहेतितुल्ययोगइति बहुव्रीहि : ॥

सासुसू : । पु० सबाणे ॥ असुसूभिर्बाणैः सहिते ॥

सास्थितामर्त्तम् । न० कांस्ये ॥ इ० त्रि० ष : ॥

सास्ना । स्त्री० गलकम्बले । गवाङ्गलस्थितेकम्बलाकृतिमांसे ॥ सस्ति । घसखप्रे । रास्नासास्नेति साधु : ॥

साहङ्कार : । त्रि० गर्वयुक्ते ॥

साहचर्य्यम् । न० साहित्ये । एकस्मिन्यान्वयित्वे ॥ सामानाधिकरण्ये एकाधिकरणवृत्तित्वे ॥ सहचरस्य भाव : । ष्यञ् ॥

साहस : । पु० अग्निविशेषे ॥ यथा । प्रायश्चित्ते विधुर्ज्ञेयः पाकयज्ञे तु साहस : । लक्षहोमे तु वह्नि : स्यात्कोटिहोमे हुताशन : ॥ इतितिथ्यादितत्त्वम् ॥ दमे । दण्डविशेषे ॥ सचत्रिविधोयथा । प्रथम : साहस : स्मृत : । मध्यम : पञ्चविज्ञेय : सहस्रन्तूत्तमः स्मृतः ॥ लोभात्सहस्रं दण्ड्यस्तुमोहात्पूर्वन्तु साहसम् । भयाद्द्वौमध्यमौदण्डौमैत्र्यात्पूर्व्वं चतुर्गुणमितिमानवे साक्षिप्रकरणे ८ ऽध्याय: ॥ न० बलात्कारकृतकार्य्ये । बलात्सम्पाद्यमाने पारुष्यादौ ॥ तथाचनारद : । सहसाक्रियते कर्म यत्किञ्चिद्बलदर्पितै : । तत्साहसमिति प्रोक्तं सहोबलमिहोच्यते ॥ मनुष्यमारणं स्तेयंपरदाराभिमर्षणम् । पारुष्यमनृतञ्चेतिसाहसं पञ्चधास्मृतमिति ॥ दुष्कृतकर्म्मणि ॥ अविमृश्यकृतौ । पश्चाद्दोषमनालोच्यकरणे ॥ इति ॥ जीवानपेक्षितकर्म्मणि । सहसिबलेभवम् । तत्रभवइत्यण् ॥ शास्त्रत्यागे

साहसाङ्क : । पु० विक्रमादित्यभूपतौ ॥ साहसिके ॥

साहसिक : । पु० चौरे । अविचार्यकारिणि ॥ बलेनगृहदाहधनादिग्रहणकारिणि ॥ अवराजाक्रमानकार्य्यं । यथाहमनु : । ऐन्द्रं स्थान

मभिप्रेप्सुर्यशश्चाक्षयमव्ययम् । नोपेक्षेत तत्क्षणमपि राजा साहसिकं नरम् ॥ वाग्दुष्टात्तस्कराच्चैव दण्डेनैव च हिंसतः । साहसस्य नरः कर्त्ता विज्ञेयः पापकृत्तमः ॥ साहसे वर्त्तमानन्तु यो मर्षयति पार्थिवः । स विनाशं व्रजत्याशु विद्वेषं चाधिगच्छति ॥ न मित्रकारणाद्राजा विपुलाद्वा धनागमात् । समुत्सृजेत् साहसिकान् सर्वभूतभयावहानिति ॥ सहसा बलेन वर्त्तते । ओजःसहोम्भसा वर्त्तत इति ठक् ॥

साहसिक्यम् । न॰ सहसाप्रवर्त्तने ॥ साहसिकस्य कर्म्म । ब्राह्मणादित्वात् ष्यञ् ॥

साहसी । त्रि॰ साहसान्विते ॥

साहस्रः । पुं॰ सहस्रसङ्ख्याकगजादिसैन्यवति ॥ सहस्रं बलमस्य । अण् चेत्यण् ॥ न॰ सहस्रद्वन्द्वे सहस्राणां समूहः । भिक्षादिभ्योऽण् ॥ सहस्रमात्रे ॥ स्वार्थेऽण् । यथा । हरिस्ते साहस्रं कमलबलिमाधाय पदयोर्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलमिति ॥ त्रि॰ सहस्रगुणाधिके ॥ यथा । विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः । उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृत इति ॥ सहस्रेण क्रीते ॥ शतमानविंशतिकसहस्रवसनाद-ण् ॥ सहस्रसम्बन्धिनि ॥

साहस्रकम् । न॰ तीर्थविशेषे ॥

साहस्रवम् । न॰ तीर्थविशेषे ॥

साहायकम् । न॰ साहाय्ये ॥ सहायस्य कर्म्म भावो वा । सहायाद्वेति वुञ् । योपधाद्गुरूपोत्तमाद्वुञिति वा ॥

साहाय्यम् । न॰ सहायतायाम् ॥ सहायस्य कर्म्म भावो वा । ब्राह्मणादित्वात् ष्यञ् ॥ साहाय्यं वरयामासेति यथा ॥

साहित्यम् न॰ मेलने ॥ सहितस्य भावः । ष्यञ् ॥ तल्लक्षणं यथा । परस्परसापेक्षाणां तुल्यरूपाणां युगपदेकक्रियान्वयित्वं साहित्यमिति श्राद्धविवेकः ॥ एकक्रियान्वयित्वं वा ॥ मनुष्यकृतरघुभट्टिमाघादिग्रन्थे । काव्ये ॥

साह्वम् । न॰ साहाय्ये ॥ सहशब्दः सहायवाची । राक्षसानां वधे साह्वं लङ्कायाश्च प्रधर्षणे भूतिरामायणवचनात् ॥ सहितत्वे । मेलने ॥

साह्वयः । पुं॰ समाह्वये ॥

सिंहः । पुं॰ मृगेन्द्रे । पञ्चास्ये । कण्ठीरवे ॥ महासिंहे ॥ हिनस्ति । हिंसि हिंसायाम् । पचाद्यच् । पृषोदरादिः ॥ सिंहः प्रमुग्धानां पालने मुहूर्त्तमाह । स्यादमोघाभूमिमन्त्याक्षणानामह्निमे

सलघुभगकभेन्द्रैः। कमपालनमुखंदिसपूर्वैः पुण्डरीकमुखैरितिनखानाम्॥ इति॥ पञ्चमराशौ॥ तल्लग्नोत्पन्नस्य फलमाह: सिंहलग्ने समुत्पन्नो भोगी शत्रुविमर्द्दनः। स्वल्पोदरोऽल्पपुत्रश्च सोत्साही गजविक्रमः॥ उत्तरस्थः: स्मृतःश्रेष्ठे। रसंशिभाक्षने। पर्द्दतांम्बष्ठी। सिंहति। षिचत्रणे। सिंचिः संज्ञायांहनुमोकस॥

सिंहकेलिः। पुं॰ पूर्णजिने। मञ्जुघोषे॥

सिंहकेशरः। पुं॰ बकुले॥ सिंहसटायाम्॥

सिंहतलः। पुं॰ संहतले। सव्यदक्षिणयोः पाण्योर्मिलितयोर्विस्तताङ्गुल्योः। प्रतले॥ सिंहस्येव तलमस्य॥

सिंहतुण्डः। पुं॰ सोहुण्डे। मत्स्याम्॥

सिंहद्वारम्। न॰ प्रवेशद्वारे प्रवेशने। सिंहपौल॰ इ॰ भा॰ प्र॰॥ द्वाराग्रे स्तम्भोपरिस्थिते। तोरणे॥

सिंहध्वनिः। पुं॰ सिंहशब्दे॥

सिंहनादः। पुं॰ युद्धे सैन्यानांयोऽहङ्काररवः सःसिंहनादः। क्ष्वेडायाम्॥ सिंहस्यन्नदनम्। णद॰। घञ्॥ सिंहनादोभटानांहि सिंहस्यन्नदनं स्मृतम्॥ गजयूथदर्शनात्॰ तन्नाशाय॰ यथासिंहस्य नादस्तथा॰ परबलभङ्गाय॰ क्रोत्मा हवितस्ययेचयोरव: ससिंहनादः॥ कलहंसाख्येछन्दोभेदेगुणगुणी॥

सिंहनादिका। स्त्री॰ दुरालभायाम्॥

सिंहपर्णी। स्त्री॰ वासके॥

सिंहपुच्छः। पुं॰ वासके॥

सिंहपुच्छिका। स्त्री॰ चित्रपर्णिकायाम्। चाकुलिया॰ इ॰ गौ॰ भा॰॥

सिंहपुच्छी। स्त्री॰ पृश्निपर्ण्याम्॥ सिंहपुच्छाकारपुष्पत्वात्। उपमानात्पच्च चपुच्छाच्चेतिङीष्॥ माषपर्ण्याम्॥ वासके॥

सिंहपुष्पी। स्त्री॰ पृश्निपर्ण्याम्॥

सिंहमुखी। स्त्री॰ वासके॥

सिंहयाना। स्त्री॰ दुर्गायाम्॥

सिंहरथा। स्त्री॰ दुर्गायाम्॥

सिंहलः। पुं॰ जम्बुद्वीपस्योपद्वीपप्रभेदे। सिलोन॰ इ॰ गौ॰ दे॰ प्र॰। देशविशेषे॥ यथा। दक्षिणेऽवन्तिमाहेन्द्रमलयाख्यमुख्यकाः: चित्रकूटमहाराष्ट्रकाञ्चीसिंहलकौङ्कणा इति॥ देशान्तरेऽपिच। मरुदेशात्पूर्वभागेकामाद्रेर्दक्षिणेशिवे। सिंहलाख्योमहादेशः सर्वदेशोत्तमोत्तमः इति॥ न॰ पित्तले॥ रङ्गे

त्वचे ॥ दालचीनी॰ हि॰ भा॰ ॥

सिंहलस्था । स्त्री॰ सैंहल्याम् ॥ त्रि॰ सिंहलदेशवासिनि ॥

सिंहलस्थान : । पुं॰ तालसदृशवृक्षविशेषे । प्रोत्फले ॥

सिंहलील : । पुं॰ रतिबन्धविशेषे ॥ यथा । लिङ्गोपरि स्थितानारीभूमौदत्वापदद्वयम् । हृदयेदत्तहस्ता च सिंहलील : प्रकीर्त्तित : ॥ लिङ्गोपरिस्थितानारीकान्तोरस्थपदद्वया । हृदयेदत्तहस्ताचसिंहलीलोप्यसावपि ।

सिंहवाहिनी । स्त्री॰ दुर्गायाम् ॥ यथा । सिंहमारुह्यकन्याभ्तेनिहतोमहिषोयथा । महिषघ्नीततोदेवीकन्यावैसिंहवाहिनी ।

सिंहविक्रान्त । पुं॰ अश्वेहये ॥ त्रि॰ सिंहतुल्यविक्रमवति ॥

सिंहविन्ना । स्त्री॰ माषपर्ण्याम् ॥

सिंहविलोकितम् । न॰ मात्रावृत्तान्तरे ॥ शृणुसिंहविलोकितवृत्तवरंवरयमकमनोहरचरणधरम् । धरणीपतिमानसमधिकलितञ्छलवेदचतुष्कलगणललितम् ॥ यथा । दिवसाद्वसादिततिमिरचनंघनजावलिबोधनिसर्गधनम् । धनदेन्द्रकृतात्मपाशिनमितम्मितभुवनतलंनमदिवसकृतम् ॥ सिंहावलोकिते ॥

सिंहसंहनन : । त्रि॰ वराङ्गरूपोपेते ॥ सिंहसंहनन : सत्त्वाधोधिसिवर्णाड्ग सुन्दर : ॥ सिंहस्येवसंहननंदेहोऽस्य । रूढिशब्दोऽयम् ॥ न॰ सिंहस्यसम्यग्वधे ॥

सिंहसेन : । पुं॰ वृत्ताईत्पितरि ।

सिंहा । स्त्री॰ धमन्याम् ॥ नाड्याम् ॥

सिंहाणम् । न॰ मण्डूरे । लोहमले ॥ सिंहमानयति । अन॰ । कर्म्मण्यण् । पृषोदरादि : ।

सिंहाधिप : । पुं॰ सूर्य्ये ॥

सिंहानम् । न॰ मण्डूरे ॥ सिंहवदनमिति । अन॰ अच् ॥

सिंहासनम् । न॰ हेममयेराजासने ॥ सिंहवदासने ॥ सिंहाकारमासनम् । सिंहयुतासनम्वा ॥ पद्मासनस्थोयोराजायोराजचनिरासन : सपरैर्हन्यतेसिंहैरिवमत्तोगजाधिप : ॥ पुं॰ रतिबन्धभेदे । यथा । स्वजङ्घाद्वयवाहूचकृत्वैवापदद्वयम् । स्तनौधृत्वारमेत्कामीबन्ध : सिंहासनोमत : ॥

सिंहास्य : । पुं॰ वासके ॥ सिंहास्याभंमस्य । सिंहास्यसदृशपुष्पत्वात् ॥ त्रि॰ सिंहसमानमुखे ॥

सिंहिका । स्त्री॰ राहुमातरि ॥ कश्यपस्यपत्नीविशेषोतुसिंहिकाराहुवासुतमयावलोजनत् । पूर्वंसोहरिनिकृत्तकन्धरोदेवतैरवसोनिपातित :

सिंहिकात्मजः । ) पुं॰ राहौवि
सिंहिकासूनुः । )

धुन्तुदे ॥ वास्तुपुरुषे ॥

सिंहनी । स्त्री॰ मात्रावृत्ताक्षरे । यद्गाथातुर्य्यपदं विंशतिमात्रं चगाथिनी भवति । फणिपतिपिङ्गलभणितं तद्विपरीतन्तु संहिनीवृत्तम् । यथा । पर्य्याप्ता जलधारा विरमति मचहन्त लोचने जलधारा । जगमुः प्रसादमाशास्तदपि न मे भवति जीविताशा ॥

सिंही । स्त्री॰ कण्टकार्य्याम् । वार्त्ताक्यां ॥ वासके ॥ राहुमातरि ॥ हिनस्ति । हिंसि॰ पचाद्यच् । पृषोदरादिः । गौरादिः ॥ सुवर्णवर्णवराटके ॥ मुद्गपर्ण्याम् ॥

सिंहीलता । स्त्री॰ बृहत्याम् ॥

सिंहोन्नता । स्त्री॰ शक्वरीछन्दोभेदे १४ । वसन्ततिलके ॥

सिकता । स्त्री॰ सिकतिले॰ देशे ॥ सिकताऽस्त्यत्र । देशे लुबिलचौ चेति॰ सिकताशर्कराभ्यां चेति विहितस्याणो लुप् ॥ कृति ॥

सिकताः । स्त्री॰ भूम्नि ॥ वालुकायाम् ॥ सिच्यते । षिच क्षरणे । बाहुलकादतच् । पृषोदरादिः ॥

सिकतामयम् । न॰ वालुकामयदेशे । सैकते ॥ सिकतानां विकारः । मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोरिति मयट् ॥

सिकतावान् । त्रि॰ वालुकाबहुलेदेशे सैकते ॥ अश्मप्रायमृदधिके देशे ॥ सिकताऽस्त्यत्र । मतुप् ॥

सिकतिलः । त्रि॰ सिकतावति ॥ सिकताऽस्त्यत्र । देशे लुबिलचौ चेति॰ इलच् ॥

सिक्तः । त्रि॰ अभिषिक्ते ॥ कृतसेचने । सेकाश्रये ॥ सिचेः क्तः ॥ एके मुनिः कुम्भकुशाग्रहस्त आम्रस्य मूले सलिलं ददानः । आम्रश्च सिक्ताः पितरश्च तृप्ता एका क्रिया द्व्यर्थकरी प्रसिद्धा ॥

सिक्थः । पुं॰ भक्तपुलाके । ग्रासे ॥ न॰ मधूच्छिष्टे । मेण॰ सिथा॰ इ॰ भा॰ प्र॰ गोम॰ इति च । नील्याम् ॥ सिच्यति । सिच्यते वा । षिच॰ । पातृतुदिवचिरिचिसिचिभ्यस्थक् ॥

सिक्थकम् । न॰ सिक्थे ॥ स्वार्थेकः ॥

सिक्थवर्त्तिका । स्त्री॰ मधूच्छिष्टवर्त्तिकायाम् । सिक्थदीपे । सिक्थस्य वर्त्तिका ॥

सिङ्घाणम् । न॰ सिङ्घाणे ॥

सिच् । स्त्री॰ वस्त्रे ॥

सिचयः । पुं॰ वस्त्रे ॥ जीर्णवस्त्रे ॥

सिस्नन् । त्रि॰ स्नपयति ॥ षिचेः शतृप्रत्ययः ॥

सिञ्चिता । स्त्री० पिप्पल्याम् ॥

सितः । पुं० शुक्रग्रहे ॥ चन्द्राते । गौरवर्णे ॥ बाणे । शरे ॥ न० चन्दने । रूप्ये ॥ मूलके ॥ त्रि० समाप्ते । अवसिते ॥ शुक्लवर्णविशिष्टे । धवले ॥ बद्धे । बंधा० कृ० भा० ॥ ज्ञाते । सीयतेस्म । षिञ् बन्धने । क्तः । स्यतिस्म । षो० क्तः । द्यतिस्यतीतीत्त्वं वा ॥ सिनोतिवा । अञ्जिघृषिभ्यः क्तः ॥ समाप्ते ॥

सितकण्टा । ) सितकण्टारिका ) स्त्री० श्वेतकण्टकार्याम् ॥

सितकण्ठः । पुं० दात्यूहपक्षिणि ॥

सितकरः । पुं० चन्द्रे । कर्पूरे ॥

सितकर्णी । स्त्री० वासके ॥

सितकुञ्जरः । पुं० इन्द्रे ॥ इन्द्रगजे ॥

सितगङ्गा । स्त्री० कामरूपप्रसिद्धनदीविशेषे । स्वर्णद्याम् ॥ इ० कालिकापुराणम् ॥

सितगुञ्जा । स्त्री० श्वेतगुञ्जायाम् । काकपीली ॥

सितचिह्नः । पुं० वालुकागडे० मत्स्ये ॥

सितच्छत्रम् । न० नृपच्छत्रे ॥

सितच्छत्रा । स्त्री० शतपुष्पायाम् ॥ सितं बद्धं शुभ्रं वाछत्रमस्याः ॥



सितच्छत्रितः । त्रि० श्वेतच्छत्रयुक्ते ॥

सितच्छदः । पुं० हंसे ॥ श्वेतच्छदविशिष्टे ॥ त्रि० सिताः शुभ्राः छदायस्य ॥

सितच्छदा । स्त्री० श्वेतदूर्वायाम् ॥

सिततुरगः । पुं० अर्जुनाख्यपाण्डवे ॥

सितदर्भः । पुं० श्वेतकुशे ॥

सितदीप्यः । पुं० श्वेतजीरके ॥

सितधातुः । पुं० कठिन्याम् ॥

सितपक्षः । पुं० हंसे । शुक्लपक्षे ॥ त्रि० तद्वति ॥

सितपर्णी । स्त्री० अर्कपुष्पिकायाम् ॥

सितपाटलिका । स्त्री० काष्ठपाटलायाम् ॥

सितपुङ्खा । स्त्री० श्वेतशरपुङ्खायाम् ॥

सितपुष्पः । पुं० तगरवृक्षे ॥ श्वेतरोहिते ॥ काशे ॥ न० कैवर्त्तीमुस्तके ॥

सितपुष्पा । स्त्री० मल्लिकायाम् ॥

सितपुष्पी । स्त्री० श्वेतापराजितायाम् ॥ नागदन्त्याम् ॥

सितमरिचम् । न० शिग्रुबीजे ॥ शुभ्रमरिचे ॥

सितमाषः । पुं० राजमाषे ॥

सितरञ्जनः । पुं० पीतवर्णे ॥

सितरश्मिः । पुं० चन्द्रे ॥

सितवर्षाभूः । पुं० पुनर्नवायाम् ॥

सितशाखी । पुं॰ चर्जुने ॥

सितशिंशपा । स्त्री॰ श्वेतशिंशपायाम् ॥

सितशिम्बिक : पुं॰ गोधूमे ॥

सितशूरण : । पुं॰ वनजोमे ॥

सितसर्षप : । पुं॰ खर्षपे । सिद्धार्थे ॥

सितसायका । स्त्री॰ श्वेतशरपुङ्खायाम् ॥

सितसार : पुं॰ शालिञ्चशाके ॥

सितसारक : । पुं॰ तिन्दुके ॥ शालिञ्चे ॥

सितसिंही । स्त्री॰ श्वेतकण्टकार्याम् ॥

सितसिन्धु : । स्त्री॰ गङ्गायाम् ॥

सिता । स्त्री॰ शर्करायाम् ॥ सिनोति । षिञ् बन्धने । अञ्जिघृषिभ्य: क्त: । टाप् । शुभ्रवर्णत्वात् ॥ खण्डन्तु सिकतारूपं सुश्वेतं शर्करा सिता । सितासुमधुरारुच्यावात पित्तास्रदाहहृत् ॥ मूर्च्छाछर्दिज्वरान्हन्तिसुशीताशुक्रकारिणी ॥ मल्लाम् ॥ तैलन्यान् ॥ जरायाम् ॥ गिरिजातापराजितायाम् ॥ बाकुच्याम् ॥ आयमाणायाम् ॥ मद्ये ॥ पिङ्गायाम् ॥ विदार्याम् ॥ सितकण्टकार्याम् ॥ श्वेतदूर्वायाम् ॥ चन्द्रिकायाम् ॥ कुटुम्बिन्याम् ॥ गङ्गायाम् ॥

सितांशु : । पुं॰ चन्द्रे ॥ कर्पूरे ॥

सितांशुतैलम् । न॰ कर्पूरतैले ॥

सिताखण्ड : । पुं॰ मधुशर्करायां ॥

सिताङ्ग : । पुं॰ बालुकागडमत्स्ये ॥

सिताङ्ग : पुं॰ श्वेतरोहिते ॥

सिताजाजी । स्त्री॰ श्वेतजीरके ।

सिताद्रि : । पुं॰ गुडे ॥ सितायाचाद्रि : ॥

सितानन : । पुं॰ गरुडे ।

सितापाङ्ग : । पुं॰ मयूरे ॥

सिताब्जम् । न॰ श्वेतकमले ॥

सिताभ : । पुं॰ कर्पूरे ॥

सिताभ्र : पुं॰ हिमवालुकायाम् । कर्पूरे ॥ सितं श्वेत्य॰ बन्धनं वा॰ चन्द्रं वा॰ अभ्रं त । अभ्रगतौ । कर्मण्यण् ॥ शुक्लत्वात् । सिताभमिववा ॥

सिताभ्रकम् । न॰ कर्पूरे ॥

सिताम्बर : । पुं॰ श्वेतवस्त्रपरिहितव्रतिनि ॥ त्रि॰ शुक्लवस्त्रवति ॥

सिताम्भोजम् । न॰ शुक्लपद्मे । पुण्डरीके ॥ सितंशुक्लञ्चतदम्भोजञ्च ॥

सितार्जक : । पुं॰ श्वेततुलस्याम् कुठेरके ॥

सितालता । स्त्री॰ श्वेतदूर्वायाम् ॥

सितालर्क : । पुं॰ श्वेतमन्दारे ॥

सितालिकटभी । स्त्री॰ शुक्तिकायशी वृषे ॥

सिताम्बर : । पुं॰ सूचीपत्रके । श्वी धारके । सिरिवाराद्रितिख्यातेशाक्षि ॥ मुनिषर्षे ॥

सितावरी । स्त्री॰ वाकुच्याम् ॥

सितासित : । पुं॰ बलभद्रे । हलायुधे ॥

सिताह्वय: । पुं॰ श्वेतशिग्रौ ॥ श्वेतरोहिते ॥

सितेक्षु : । पुं॰ श्वेतेक्षौ ॥

सितेतर : । पुं॰ कृष्णशालौ ॥ कुलत्थे ॥ कृष्णे ॥ त्रि॰ कृष्णवर्णवति ॥

सितेतरगति : । पुं॰ वह्नौ ॥

सितोद : । पुं॰ सरोविशेषे ॥ विपुलाख्यस्याद्रेर्मूर्ध्नि वैभ्राजाख्यं वनं तत्र सितोदं नाम सर:॰ यदर्ककान्तिभिरञ्जैर्मण्डितं सुरैरासेव्यते । तदुक्तम् । वैभ्राजं वैपुलस्योर्ध्वे सितोदश्चकदोत्तम: । देवैर्निषेव्यते यश्च : कमलैरंशुमत्प्रभैरिति ॥ सितमुदकं यस्य । उत्तरपदस्य चेत्युदकस्योदादेश: ॥

सितोदक : । पुं॰ सितोदे ॥ स्वार्थे क: ॥

सितोदर : । पुं॰ कुबेरे ॥

सितोपल : । पुं॰ स्फटिके ॥ शिलाधातौ ॥ सिताश्मनि । मिश्री॰ चीनी॰ इ॰ भाषाप्रसिद्धा ॥

सितोपला । स्त्री॰ शर्करायाम् ॥ शर्कराविकारभेदे । मिश्रीतिलोके विश्रुते ॥ सितोपलासरा लघ्वी-वातपित्तहरी हिमा । यथायथास्य नैर्मल्यं मधुरत्वं तथातथा ॥ स्नेहलाघवशैत्यानि सरत्वञ्च तथातथा ॥

सिद्ध: । पुं॰ व्यासादौ ॥ देवयोनिविशेषे । अणिमादिगुणोपेते विश्वावसुप्रभृतौ ॥ विष्कम्भादियोगान्तरगतयोगविशेषे ॥ तज्जातस्य फलं यथा । जितेन्द्रिय : सर्वकलानिधानो गौरो तिशूरो मधुरो विनीत : । सत्त्वोपपन्न : कृतभूरिभोगो यस्य प्रसूतौ किल सिद्धयोग: । इति ॥ गुडे अर्सिधातुः इति सिद्ध: षिधु हिंसासंराद्ध्यो : । गत्यर्थाकर्मकेति कर्त्तरि क्त : । सिद्धिरस्यास्तीति वा । अर्शआद्यच् ॥ कृष्णधत्तूरे ॥ व्यवहारे ॥ क्ली॰ । शब्दं शृणोमीत्यादिव्यवहारेण प्रसिद्धे । न॰ सैन्धवलवणे ॥ त्रि॰ योगिनि ॥ जन्मनैव विनाप्रयत्नं धर्मज्ञानवैराग्यैश्वर्यातिशयं प्राप्ते ॥ पूर्णमनोरथे ॥ अधिगतपरमार्थे । पुत्रभृत्यादिभि : सहाये : सम्पन्ने ॥ प्रसिद्धे ॥ नित्ये । यथा सिद्धा द्यौ॰ सिद्धा पृथिवी॰ सिद्धमाकाशमिति

॥ कार्येष्वविपर्यस्तेति । तद्यथासिद्धश्चौदनः सिद्धः सूपः सिद्धा यवागूरिति ॥ मुक्ते ॥ निष्पन्ने । पक्के ॥ सिध्यतिस्म । षिधु संराद्धौ । क्तः । सिद्धे साधनाप्रयोगः ॥ सर्वभूतादौषि शाधिष्ठानेपरमेश्वरे ॥ उत्पत्त्या लब्धात्मकं हि घटादि सिद्धमित्युच्यते० परमात्मा तु० सर्वदालब्धसत्तात्मकः सर्वैरेवप्रमाणाभावादितिनित्यनिष्पन्नरूपत्वान्नित्यसिद्धइत्युच्यते ॥ सिद्धिर्मोक्षोज्ञानं वातद्भवमोश्वरस्यस्वतः सिद्धं ह्यनन्याधीनसिद्धत्वात्सिद्धोवा ॥ सिद्धिविशिष्टे ॥

सिद्धकः । पुं० शालवृक्षे ॥ सिन्धुवारे ॥

सिद्धकामेश्वरी । स्त्री० कामाख्यायाः पञ्चमूर्त्यन्तर्गतप्रथममूर्त्तौ ॥

सिद्धकेरलः । पुं० केरलदेशान्तर्गतदेशविशेषे

सिद्धगङ्गा । स्त्री० मन्दाकिन्याम् ॥

सिद्धजलम् । न० काञ्जिके । पक्कतोये ।

सिद्धदेवः । पुं० शिवे ।

सिद्धधातुः । पुं० पारदे ॥

सिद्धपीठः । पुं० सिद्धस्थाने ॥ यथा । जातोलक्षमलियंतत्रेमोक्षा कोटिसङ्ख्यकः । महाविद्याजपः कोटिः सिद्धपीठः प्रकीर्त्तितइति ॥

सिद्धपुरम् । न० भूगोलस्थाधोदेशविशेषे ॥ तच्चोत्तरेकुरुवर्षस्यनिरक्षदेशेस्ति ॥ यथा । लङ्काकुमध्येयमकोटिरस्याः प्राक्पश्चिमेरोमकपत्तनञ्च । अधस्ततः सिद्धपुरंसुमेरुः सौम्येऽथयाम्येवडवानलश्च ॥ कुवृत्तपादान्तरितानितानिस्थानानिषट्गोलविदोवदन्ति ॥

सिद्धपुरी । स्त्री० सिद्धपुरे ॥

सिद्धपुष्पः । पुं० करवीरवृक्षे ॥

सिद्धप्रयोजनः । पुं० गौरसर्षपे ॥ त्रि० लब्धकार्ये ॥ सिद्धंप्रयोजनंयेन० यस्यवा ॥

सिद्धमन्त्रः । पुं० सिद्धिप्राप्तमन्त्रे

सिद्धमोदकः । पुं० तवराक्षीरखण्डे ॥

सिद्धयोगिनी । स्त्री० योगिनीविशेषे ॥

सिद्धरसः । पुं० पारदे । रसे ॥ त्रि० व्याडिप्रभृतिषु ॥ सिद्धस्यामीरसस्य ॥ सिद्धोरसोयेषाम् ॥

सिद्धविद्या । स्त्री० दुर्गायाम् ॥ महाविद्यायां ॥

सिद्धसङ्घः । पुं० कपिलादिसिद्धानांसमूहे ॥

सिद्धसलिलम् । न० काञ्जिके ॥

सिद्धसाधनः । पुं० गौरसर्षपे ॥ न० सिद्धस्यवस्तुनः साधने । सा

ध्यवस्थानिश्चयेसत्यप्यनुमाने ॥
सिद्धसिन्धुः । स्त्री॰ धर्म्मद्रव्याम् । गङ्गायाम् । आकाशगङ्गायाम् ॥ सिद्धानांसिन्धुः ॥
सिद्धसेन : । पुं॰ कार्त्तिकेये ॥
सिद्धसेवित : । पुं॰ भैरवे ॥ त्रि॰ कपिलादिसिद्धैरुपासिते ॥
सिद्धा । स्त्री॰ ऋद्धयाख्यायौषधौ ॥ सिद्धिरस्त्यस्याम् । अर्श आद्यच्टाप् ॥ योगिनीविशेषे ॥
सिद्धान्त : । पुं॰ वक्तृतात्पर्यविषयावधारणे ॥ पूर्वपक्षं निरस्य सिद्धपक्षस्थापने । वादिप्रतिवादिभ्यां निर्णीतेर्थे ॥ सिद्धान्तं लक्षयति गौतमो यथा । तन्त्राधिकरणाभ्युपगमसंस्थिति : सिद्धान्त इति ॥ अस्यार्थ : । तन्त्रं शास्त्रं तदेवाधिकरणं ज्ञापकं तथायस्य॰ तादृशोयोभ्युपगमः॰ तस्य समीचीनतयाऽसंशयरूपतया स्थितिः॰ तथाच शास्त्रितार्थ निश्चय : सिद्धान्त : । अत्र चाभ्युपगम्यमानोर्थः सिद्धान्त इति भाष्यम् । अभ्युपगम : सिद्धान्त इति वार्त्तिकटीका । नचात्र विरोधः शङ्कनीय : । आचार्यैः परिहृतत्वात् । तथाच विसूत्रीनिबन्ध : । अर्थाभ्युपगमयोर्गुणप्रधानभावस्याविवक्षातन्त्रत्वात् ॰ अर्थाभ्युपगमोऽभ्युपगम्यमानोवार्थः सिद्धान्तः॰ ते नसूत्रभाष्यवार्त्तिकटीकासु न विरोध : । अत्रत्र भाष्यानुसारात् सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगम : सिद्धान्तान्यतम : सिद्धान्त इति सूत्रार्थ इति तु नयुक्तम् अग्रिमसूत्रानुत्थानापत्ते : । तंत्र सिद्धान्तत्वं नहयमनुगम्य तंत्राधिकरणाभ्युपगमान्यतमसिद्धान्त इति कश्चित् ॥ २६ ॥ सिद्धान्तं विभजते । सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगम संस्थितीनामर्थान्तरभावात् ॥ २७ ॥ स चतुर्विध इति शेष : । सर्वतन्त्रादिसंस्थितीनामर्थान्तरभावात्॰ भेदादित्यर्थ : ॥ २७ ॥ राद्धान्ते ॥ सिद्धोऽन्तोनिश्चयो यस्मिन् ॥ नव शिवज्योतिर्ग्रन्थेषु । ब्रह्मसूर्यसोमबृहस्पतिगर्गनारदपराशरपुलस्त्यवशिष्ठसिद्धान्तेषु ॥
सिद्धान्ताचार : । पुं॰ वामाचारादुत्तमआचारविशेषे ॥ यथा । वामात्मान्तं दिवतांमत्वा यजेद्देवीमुमाजसे : । सदा शुद्ध. सदाशांत : सिद्धांताचारउच्यते॰ इत्याचारभेदतन्त्रम् ॥
सिद्धान्ती । पुं॰ मीमांसके ॥ सिद्धान्तोविद्यतेऽस्य ॥ इनि : ॥
सिद्धापगा । स्त्री॰ स्वर्णद्याम् । गङ्गायाम् ॥
सिद्धायिका । स्त्री॰ जिनशासनदेव

ताविशेषे ॥

सिद्धार्थः । पुं॰ विष्णौ ॥ सिद्धो निर्वृत्तो निष्पन्नः काम्यमानोऽर्थोऽस्य । आप्तकामत्वादिति ॥ स्कन्दे । सितसर्षपे ॥ शाक्यसिंहे । शौद्धोदनौ ॥ वृत्तार्हत्पितरि ॥ जिनमतप्रसिद्धटौवर्चे ॥ सिद्धार्थोऽस्मादस्य वा । वत्सरविशेषे ॥ तत्फलं यथा । तोयपूर्णाः स्मृता मेघा बहुसस्या च मेदिनी । निष्ठुराः पार्थिवा देवि सिद्धार्थे वत्सरानने ॥ ५३ ॥ त्रि॰ प्रसिद्धार्थे ॥

सिद्धार्था । स्त्री॰ वृत्तार्हन्मातरि ॥

सिद्धासनम् । न॰ ब्रह्मणि ॥ सिद्धं यत्सर्वभूतादिविश्वाधिष्ठानमव्ययम् । यस्मिन्सिद्धाः समाविष्टास्तद्वै सिद्धासनं विदुः ॥ सिद्धञ्च तदासनञ्च । सिद्धानामासनं वा । कर्मधारयतत्पुरुषाभ्याम्॰ ब्रह्मैवेत्यर्थः ॥ योगिनामासनविशेषे ॥ यथा । योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसेन्मेढ्रे पादमथैकमेव हृदये कृत्वा समं विग्रहम् । स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्यन्भ्रुवोरन्तरे तिष्ठेदेतदतोऽथयोगिसुखदं सिद्धासनं प्रोच्यते॰ इति ॥ योनिस्थानकमिति । एकं पादमूलं लिङ्गमूले॰ द्वितीयं पादमूलं वृषणाधस्त्यर्थः ॥

सिद्धिः । स्त्री॰ निष्पत्तौ ॥ पादुकायाम् ॥ अन्तर्धाने ॥ वृद्धौ ॥ ऋद्धौ ॥ ऋद्धिनामौषधौ ॥ दुर्गायाम् ॥ सम्पत्तौ ॥ योगे ॥ साङ्ख्यानामष्टविधसिद्धौ । यथा । ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः । दानञ्च सिद्धयोऽष्टौ ॥ विहन्यमानश्च दुःखस्य त्रित्वात्तद्विघातास्त्रय इति । इमा मुख्यास्तिस्रः सिद्धयः । तदुपायतया चेतरा गौण्यः पञ्च सिद्धयः । ता अपि हेतुहेतुमत्तया व्यवस्थिताः । तत्राद्याध्ययनलक्षणा सिद्धिर्हेतुरेव । मुख्यास्तु हेतुमत्य एव । मध्यमास्तु हेतुहेतुमत्यः ॥ पुम्प्रकृत्यादिविषया बुद्धिर्या सिद्धिरत्र सा । पुंस्यात्मनि॰ प्रकृतावव्यक्ते॰ आदिग्रहणाद् व्यक्ते च या बुद्धिर्विज्ञानं सा सिद्धिरित्युच्यते ॥ याव योगान्तरे ॥ यथा वर्गोत्तमगते लग्ने शुभे वाथ बलान्विते । सिद्धिसंज्ञो महायोगो यायिनां सिद्धिदायकः । इति ॥ राज्ञां शक्तित्रयसाध्यासु पुरुषार्थलाभात्मिकासु॰ प्रभुसिद्धिमन्त्रसिद्ध्युत्साहसिद्धिषु ॥ सहायाः साधनोपाया विभागो देशकालयोः । विनिपातप्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते ॥ तथाच । कर्मणामारम्भोपायः । पुरुषद्रव्यसम्पत् । देशकालविभागः । विनिपातप्र

तीकार : । कार्य्यसिद्धिश्चेति नीतिशास्त्रविद : ॥ मोक्षे ॥ सत्वशुद्धिद्वाराज्ञानोत्पत्तौ ॥ ब्रह्मभावलक्षणायाम् । पुरुषार्थप्राप्तियोग्यतारूपायामन्त:करणशुद्धौ । ज्ञाननिष्ठालक्षणायाम् ॥ सिद्ध्यति । षिधु संराद्धौ । क्तिच् । यद्वा । कारणे क्तिन् ॥

सिद्धिद : । पुं० प्रत्यगभिन्नब्रह्मापरोक्षज्ञानद्वारा स्वस्वरूपावस्थानलक्षणमुक्तिप्रदे श्रीगुरौ ॥ परमेश्वरे ॥ सिद्धिम् फलं कर्तृभ्य: स्वाधिकारानुरूपतो ददाति । डुदाञ् । आतश्चोपसर्गे कः । इत्यादि: ॥ भैरवे ॥ त्रि० सिद्धिदातरि ॥

सिद्धियोग : । पुं० शुभयोगविशेषे ॥ यथा । शुक्रे नन्दा बुधे भद्रा शनौ रिक्ता कुजे जया । गुरौ पूर्णा च संयुक्ता सिद्धियोग: प्रकीर्त्तित : ॥

सिद्धियोगिनी । स्त्री० योगिनीविशेषे । वह्निपुराणोक्तामुद्रास्वरूपस्थापतत् कन्यासु

सिद्धिस्थानम् न० पुण्यस्थानविशेषे ॥

सिद्धेश : । पुं० कपिलमुनौ ॥ सदाशिवे ॥ सिद्धानामीश : ॥

सिद्धेश्वर : । पुं० शिवे ॥

सिद्धेश्वरी । स्त्री० देवीविशेषे

सिद्धौघ : । पुं० गुरुक्रमविशेषे ॥

सिध्मम् । न० किलासरोगे । सिद्धं वां० इ०प्र० ॥ सिध्यति । षिधु संराद्धौ । बाहुलकान्मक् ॥

सिध्मा । पुं० न० किलासरोगे ॥ सिध्मा किलासं त्वक्पुष्पं सिध्ममिति द्वे मयन्द्र: । किलासं सिध्मवत्यमर: ॥

सिध्मल : । त्रि० किलासिनि ॥ सिध्ममस्यास्ति । सिध्मादिभ्यश्चेति लच् ।

सिध्मला । स्त्री० मत्स्यविकृतौ । मत्स्यचूर्णे ॥

सिध्मवान् । त्रि० सिध्मले ॥ सिध्ममस्त्यस्य । मतुप् ।

सिध्य : । पुं० पुष्यनक्षत्रे ॥ सिध्यन्त्यस्मिन् कार्य्याणि । षिधु० । पुष्यसिद्ध्यौ नक्षत्रे इति क्यपि निपातित : ॥

सिध्र : पुं० वृक्षे ॥ साधौ ॥ सिध्यति । षिधु० । स्फायितञ्चीति रक् ।

सिध्रका । स्त्री० सीधरूति भाषाप्रसिद्धवृक्षे । सेधति० सिध्यति वा । षिधु० । बहुलमन्यत्रापीति० स्फायितञ्चीति वा रक् । तत: स्वार्थे कन् । क्षिपकादित्वादित्वाभाव : ॥

सिध्रकारण्यम् । न० देवोद्याने

सिध्रकावणम् । न० सिध्रकारण्ये ॥ सिध्रकाणां वनम् । वनम्पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः इत्युत्तरपदस्थस्य नस्य णत्वम् ॥

सिन : । पुं० ग्रासे ॥ पिण्डीक्रियमाणो ग्रासो यदा दध्यादिव्यञ्जनसाहचर्येनुकूलो भवति तदा कर्मणः कर्तृत्वम् । तथा च सिनो ग्रासक

मंकश्चेति निष्ठातत्त्वज्ञः ॥ काणे ॥ सिनाति । षिञ् ० । कृण्षिञ्जि तिनक् ॥ त्रि० शुक्लगुणविशिष्टे । सिनी । स्त्री० शुक्लगुणवत्याम् । श्वेतासितासिनीश्येनीत्यादि ॥

सिनीवाली । स्त्री० दृष्टेन्दुकलामावास्याम् ॥ चतुर्दशीयोगदृष्टचन्द्रासती० अमा० सिनी० वालीपदवाच्या भवति । एतन्निषाणुनासह वर्त्तते सा लक्ष्मीः । तद्योगात् सिनीचन्द्रकला । व्रीह्यादित्वादिनिः । सिनीवलति । वल० । कर्म्मण्यण् । ङीप् ॥ दुर्गायाम् । इ० मे० नी० ॥

सिन्दुकः पुं० । सिन्दुवारे ॥ स्यन्दते । स्यन्दूप्रस्रवणे । स्यन्देः सम्प्रसारणञ्चेत्युः । बाहुलकाद्वृधोन । स्वार्थसंज्ञायांवाकन् ॥ श्वेतनीलपुष्पभेदात्सिन्दुकोद्विविधोमतः ।

सिन्दुवारः । पुं० निर्गुण्ड्याम् । सिन्दुके । म्योंडी० सज्ञालू० बहणा० इ० भा० प्र० ॥ निसिन्दा० इनकर० इ० गौ० दे० भा० ॥ सिन्दुं वृणोति० वारयति वा । वृञ्वरणे वृञ् वादेरणे वा । कर्म्मण्यण् ।

सिन्दूरः । पुं० वृक्षविशेषे ॥ न० रक्तवर्णचूर्णविशेषे । नागसम्भवे । सीसके ॥ तद्धारणात्स्वाम्यायुषोऽभिवर्द्धते यथोक्तं काशीखण्डे । हरिद्राकुङ्कुमञ्चैव सिन्दूरं कज्जलं तथा । कूर्पासकञ्च ताम्बूलं माङ्गल्याभरणं शुभम् ॥ केशसंस्कारकबरीकरकर्णविभूषणम् । भर्त्तुरायुष्यमिच्छन्ती दूषयेन्न पतिव्रतेति ॥ अस्य पर्य्यायाद्वयो यथा । सिन्दूरं रक्तरेणुश्च नागगर्भश्च सीसजम् । सीसोपधातुः सिन्दूरं गुणैस्तत्सीसवन्मतम् ॥ संयोगजप्रभावेण तस्यान्ये गुणाः स्मृताः । सिन्दूरमुष्णं वीसर्पकुष्ठकण्डूविषापहम् ॥ भग्नसन्धानजननं व्रणशोधनरोपणम् ॥ अस्य शोधनं यथा । दुग्धाम्लयोगतस्तस्य विशुद्धिर्गदिता बुधैरिति ॥ स्यन्दते । स्यन्दू० । स्यन्देः सम्प्रसारणञ्चेत्यूरन् ॥

सिन्दूरकारणम् । न० सीसके ॥

सिन्दूरतिलकः । पुं० मतङ्गजे । हस्तिनि ॥

सिन्दूरतिलका । स्त्री० सधवायां नार्य्याम् ॥

सिन्दूरपुष्पी । स्त्री० सिन्दूरीतिख्याते पुष्पक्षुपविशेषे । तृणपुष्प्याम् । करच्छदायाम् ॥ अस्या गुणाः । कटुत्वम्० तिक्तत्वम्० कषायत्वम्० श्लेष्मवातशिरोर्त्तिभूतनाशित्वम्० चण्डीप्रियत्वञ्चेति ॥ सिन्दूरवद्रक्तपुष्पमस्याः । पाककर्णेति ङीष् ।

सिन्दूररस : । पुं॰ रससिन्दूराभिधौषधे ।

सिन्दूरित : । त्रि॰ सिन्दूरवत्कृते ॥ सिन्दूरवच्छब्दात् तत्करोतीतिण्यन्तात्कर्म्मणि क्त : । यावितवक्ताणाद्यात्॰ विप्सतीलुक् ।

सिन्दूरी । स्त्री॰ रोचन्याम् ॥ रक्तचेलिकायाम् ॥ धातक्याम् ॥ सिन्दूरी विषपित्तास्रतृष्णावान्तिहरी हिमा ॥

सिन्धु : । पुं॰ अब्धौ । समुद्रे ॥ स्यन्दन्ते॰आपोऽत्र । स्यन्द्॰ । स्यन्देः सम्प्रसारणं धश्चेत्यु : ॥ वमथौ ॥ रामेणभरतायार्पितेदेशविशेषे ॥ काश्मीरदेशप्रसिद्धनदविशेषे ॥ गजमदे ॥ सिन्धुवारवृक्षे ॥ रोगविशेषे ॥ श्वेतटङ्कने ॥

सिन्धु : । स्त्री॰ नद्यां । सरिति ॥ नदीविशेषे ॥ तज्जलगुणायथा । शतद्रोर्विपाशायुत : सिन्धुभवा : सुशीतं लघुस्वादुसर्व्वशमघ्नम् । जलं निर्मलं दीपनं पाचनञ्चप्रदत्ते बलं बुद्धिमेधायुतञ्च ॥

सिन्धुक : । पुं॰ सिन्दुके । निर्गुण्डाम् ॥ सिन्धुशब्दात्स्वार्थे संज्ञायांशाकन् । गुणायथा । सिन्धुक : स्मृतिदस्तिक्त : कषाय : कटुकोलघु : । केश्योनेत्रहितोहन्तिशूलशोथाममारुतान् ॥ क्रमिकुष्ठारु



चिश्लेष्मगुल्माग्निलापितद्विषा ॥ सिन्धुवारजलं जन्तुवातघ्नं श्रमहं लघु ॥ त्रि॰ सिन्धुभुजाते ॥ सिन्धुपकाराभ्यांकन् ॥

सिन्धुकफ : । पुं॰ समुद्रफेने ॥

सिन्धुप्रभव : । पुं॰ तीर्थविशेषे ॥

सिन्धुरम् । न॰ श्वेतटङ्कने ॥

सिन्धुखेल : । पुं॰ सिन्धुदेशे ॥

सिन्धुजम् । न॰ सैन्धवलवणे ॥ सिन्धुभुजातम् ॥ सप्तम्यांजनेर्ड : ॥ त्रि॰ समुद्रजाते ॥

सिन्धुजन्मा । पुं॰ चन्द्रे ॥ न॰सैन्धवलवणे ॥

सिंधुजा । स्त्री॰ लक्ष्म्याम् ॥

सिंधुडा । स्त्री॰ मालवरागभार्यायाम् ॥

सिंधुनन्दन : । चन्द्रे ॥

सिंधुपुत्र : । पुं॰ चन्द्रे ॥ मर्कटेन्दौ ।

सिंधुपुष्प : । पुं॰ शङ्खे ॥

सिंधुमन्थजम् । न॰ सैन्धवलवणे ॥

सिंधुर : । पुं॰ हस्तिनि ॥

सिंधुरद्वेषी । पुं॰ सिंहे ॥

सिंधुरवदन : । पुं॰ श्रीगणेशे ।

सिंधुराज : । पुं॰ समुद्रे ॥

सिंधुलवणम् । न॰ सैंधवे ॥

सिंधुवार : । पुं॰ उत्तमाश्वे ॥ सिंधुवारे । निर्गुण्डाम् ॥ सिंधुवारोविषघ्नश्चव्रणकुष्ठक्षयापह : ॥ सिंधुं वृणोति॰ वारयतिवा । वृञ्

भाच्छादनेषा । कर्मण्यण् ॥
सिंधुवारकः । पुं॰ सिंधुवारे ॥
सिन्धुवारितः । पुं॰ सिन्धुवारे ॥
त्रि॰ समुद्रेणवारिते ॥
सिन्धुवेषणः । पुं॰ गम्भार्याम् ॥
सिन्धुसङ्गमः । पुं॰ संभेदे । सिन्ध्वोः सङ्गमोमेलः ॥
सिन्धूत्तमम् । न॰ तीर्थभेदे ॥
सिन्धूद्भवम् । न॰ सैन्धवलवणे ॥ सिन्धुषुउद्भवोऽस्य ॥
सिन्धूपलम् । न॰ सैन्धवलवणे ॥
सिप्रः । पुं॰ चन्द्रे । हिमांशौ ॥ निदाघसलिले । खेदे ॥ न॰ सरोविशेषे ॥ यथोक्तंकालिकापुराणे । ततोहिमवतः प्रस्थे प्रतीच्यन्तः पुरस्यच । सिप्रंनामसरः पूर्णंदृष्टमुद्रैर्विधातृयदृति ॥
सिप्रा । स्त्री॰ नद्यन्तरे ॥ सिप्राख्यात्सरसोयस्मान्निर्गतासामहानदी । अतः सिप्रेतितन्नामपुरेवत्र, ब्रह्मणाकृतमितिकालिकापुराणम् ॥ साचोज्जयिनीदेशेवर्त्तते । तस्याश्चोत्पत्तिः कालिकापुराणे २३ अध्यायेद्रष्टव्या ॥
सिमः । त्रि॰ समस्मिन् । सर्वशब्दार्थे ॥ सिनोति । षिञ् । अवि सिञ्चिभ्यः किदितिमन् ॥
सिम्बा । स्त्री॰ शम्याम् । शिम्बायाम् । बीजगुप्तायाम् । शिम॰ द्रू॰ भा॰ प्र॰ ॥ फली॰ द्रू॰ प्र॰ च ॥ समति । षमवैक्लव्ये । उल्ल्वादय श्चेतिसाधुः ॥
सिम्बिः । स्त्री॰ शिम्बाम् । सिम्बायाम् । नखनामगन्धद्रव्ये ॥
सिम्बी । स्त्री॰ शिम्बयाम् ॥
सिरः । पुं॰ पिप्पलीमूले ॥
सिरा । स्त्री॰ नाड्याम् । धम्बुवाहिन्यांनाड्याम् । सौर॰ द्रू॰ भा॰ प्र॰ सिनोति । षिञ्॰ । बहुलमन्यत्रापीतिरक् ॥
सिरालः । पुं॰ सिरासन्तते ॥
सिरिल्टिका । स्त्री॰ चन्द्रकन्टश्चिन्या क्षुपचूपे । दुराधर्षायाम् ॥
सिलकः । पुं॰ शलावतीपस्थे॰ ऋषिविशेषे ॥
सिलकी । स्त्री॰ शल्लकीवृक्षे ॥
सिषाधयिषा । स्त्री॰ साधनेच्छायाम् ॥ यथा । सिषाधयिषयाशून्यासिद्धियंत्रनविद्यते । सपक्षस्तत्रहत्ति स्वज्ञानादनुमितिर्भवेत् ॥
सिषिचा । स्त्री॰ सेक्तुमिच्छायाम् ॥
सिस्टक्षन् । त्रि॰ स्रष्टुमिच्छति ॥
सिहुण्डः । पुं॰ स्नुहीवृक्षे ॥ सीतिहुण्डते । हुडिवरणे । पचाद्यच् ॥ सिंहतुण्डस्यायमपभ्रंशइतिस्वामी॰ पृषोदरादिः ॥ अस्यगुणायथा । सिहुण्डोरेचनस्तीक्ष्णोदीपनः कटुकोगुरुः । शूलामाष्ठी

सिक्थानकफगुल्मोदरानिलान् उन्मादमेहकुष्ठार्शःशोथमेदोऽश्मपाण्डुताः । व्रणशोथज्वरप्लीहविषदूषीविषं हरेत् ॥ उष्णवीर्यस्तु हीवेरं स्नग्धस्त्वकटुकं लघु । गुल्मनाङ्कुष्ठनाशाय पित्तयैवोदररोगिणाम् । हितमेतद्विरेकार्थे ये चान्ये दीर्घरोगिणः ॥

सिहुण्डदलम् । न० स्नुहीपत्रे ॥ तस्य गुणा यथा । सिहुण्डस्य दलं तीक्ष्णं दीपनं रोचनं हरेत् । आध्मानाष्ठीलिकागुल्मशूलशोथोदराणि च ॥

सिह्लः । पुं० तुरुष्के । पिण्डके । यावने । लोबान० इ० भा० प्र० ॥ सिह्यति । सिह्प्रीतौ । अन्तर्भावितण्यर्थः । बाहुलकात् । पृषोदरादि० ॥

सिह्लकः । पुं० सिह्ले । नागौरी गंद० इ० भा० लोबान० इ० यवनभाषाप्रसिद्धे ॥ सिह्लकः कटुकः स्वादुः स्निग्धोष्णः शुक्रकान्तिकृत् । वृष्यः कण्डूस्वेदकुष्ठज्वरदाहग्रहापहः ॥

सिह्लकी । स्त्री० सल्लक्याम् ॥ सिह्ले ।

सिह्लभूमिका । स्त्री० सल्लक्याम् ॥

सिह्लसारः । पुं० तुरुष्के । धूम्रवर्णे । पीतसारे ।

सीकरः । पुं० शीकरे ॥ धनपालादिमते दन्त्यादिः ॥

सीता । स्त्री० लाङ्गलपद्धतौ हलरेखायाम् ॥ जनकनन्दिन्याम् । मैथिल्याम् । वैदेह्याम् ॥ सीता लाङ्गलपद्धतिः । तदुत्पन्नत्वात् सीतेति निर्दिश्यते ॥ यथा । अथ मे कृषतः क्षेत्रं लाङ्गलादुत्थिता ततः । क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुतेति रामायणे ६६ सर्गः ॥ स्वर्गगङ्गायाम् ॥ यथा । पूर्वस्माच्छैलात् सीता तु शैलं यात्यन्तरिक्षगा । ततश्च पूर्ववर्षेण भद्राश्वेन निसार्णवम् ॥ सा तु भद्राश्ववर्षगङ्गा । यथा श्रीभागवते ; सीता तु ब्रह्मसदनात् केशवाचलादिगिरिशिखरेभ्योऽधोऽधः प्रसवन्ती गन्धमादनमूर्द्धसु पतित्वान्तरेण भद्राश्ववर्षं प्राच्यां दिशि क्षारसमुद्रमभिप्रविशतीति ॥ श्रियि ॥ दुर्गायाम् । सत्याधिदेवतायाम् ॥ मदिरायाम् । गङ्गास्रोतसि । काञ्चनमालायाम् ॥ सीयते । षिञ्० । क्तः । पृषोदरादिः ॥

सीताद्रव्यम् । न० काष्ठकुद्दालादौ ॥

सीतापतिः । ) सीतायाः पतिः । ) पुं० रामचन्द्रे । दाशरथौ ॥

सीत्कारः । पुं० मनुष्याणां सुखानुरागजशब्दे ॥ यथा । शब्दोगणानु

रागोत्थ : प्रसादः सीत्कृतं स्मृता मितिहेमचन्द्रः । दन्तनिष्पीडनायां । सौरिति शब्दे ॥

सीत्कृतम् । न० सीत्कारे सुरतध्वनौ ॥

सीत्यम् । न० धान्ये । त्रि० हल्ये । हलेनकृष्टक्षेत्रे ॥ सीतयासमितं सङ्गतं निम्नोन्नतादिरहितं कृतं समीकृतमितियावत् । नौवयोधर्मेतियत् ॥

सीदमान : । त्रि० अवसीदति ॥

सीद्यम् । न० आलस्ये ॥

सीधु : । पुं० शीधुशब्दार्थे ॥

सीधुगन्ध : । पुं० बकुले ॥

सीधुपुष्प : । पुं० कदम्बे । बकुले ॥

सीधुपुष्पी । स्त्री० धातक्याम् ॥

सीधुरस : । पुं० आम्रवृक्षे ॥

सीधुसञ्ज्ञ : । पुं० बकुलद्रुमे ॥

सीप : । पुं० तर्पणार्थं तास्रादिनिर्म्मितेजलपात्रे । अर्घा० कोषा० इ० भा० प्र० ॥

सीम् । अ० सर्वतोभवे ॥

सीमा । स्त्री० आघाटे । मर्यादायाम् । सीमायाम् । ग्रामादीनामवधारितान्तभागे । सीम० इ० भा० प्र० ॥ स्थितौ । क्षेत्रे । अण्डकोषे । सीयते । षिञ् । मामन्सीमन्नित्यादिनानिपातित : । मनइतिनङीप् । सीमानौ० सीमान : इत्यादि ॥

सीमन्त : । पुं० सीमन्तोन्नयनसंस्कारे ॥ पुं० न० केशवेशे । केशरचनाभेदे । केशेपुवर्त्मनि । मूर्द्धजमध्यपद्धतौ ॥ सीमन्तमस्त्रियांस्त्रीणांकेशमध्येतुपद्धतिरितिवैजयन्ती । सीम्नोऽन्त : । शकन्ध्वादि : ।

सीमन्तक : । पुं० नरकावासे । यथा । लक्षपञ्चैवनरकावासा : सीमन्तकादय इ० हेमचन्द्र : । न० सिन्दूरे ।

सीमन्तित : । त्रि० सीमन्तिनीकृते ॥ सीमन्तशब्दान्मत्वर्थात् । तत्करोतीतिणिजन्तात्कर्म्मणिक्त : । णाविष्ठवद्भावे० विन्मतोर्लुक् ॥

सीमन्तिनी । स्त्री० नार्य्याम् ॥ सीमन्तोऽस्त्यस्या : । अतइनि : । नान्तलक्षणोङीप् ।

सीमन्तोन्नयनम् । न० गर्भाधानात् षष्ठेऽष्टमेवामासिकर्त्तव्ये संस्कारविशेषे ॥ यथा । मासिषष्ठेऽष्टमेवापिक्ष्र्यपुंसवनोदितै । रिक्तावर्ज्जेतिथौकुर्यात्सीमन्तोन्नयनंस्त्रियो: ॥

सीमा । स्त्री० आघाटे । मर्यादायाम् । सीमनि । ग्रामादीनामवधारितान्तभागे । सीम० इ० भा० प्र० ॥ स्थितौ । क्षेत्रे । अण्डकोषे ॥ सिनोति० सीयतेवा । षिञ् । मामन्सीमन्नित्यादिनानिपातित :

मववृतिनङीप् । डाबुभाभ्यामिति पक्षे डाप् । सीमे० सीमाः ० इ त्यादिर्वोध्यम् ॥ वेलायाम् ॥

सीमाविवादः । पुं० ग्रामादीनांसी माविषयकेकलहे ॥ सीमाविषयको विवादः सीमाविवादः । सीमा चतुर्विधा । जनपदसीमा० ग्राम सीमा० चेत्रसीमा० गृहसीमेति भेदात् ॥

सीमिकः । पुं० वृक्षविशेषे ॥ वा ल्मीके ॥ सूक्ष्मकृमिजातौ । वृक्ष पत्रविभागकृतिकीटे ॥ स्यमति । स्यमुशब्दे । स्यमेः सम्प्रसारणञ्चे तिकिकन् ॥

सीरः । पुं० अर्के । सूर्ये ॥ हले । लाङ्गले ॥ सिनोति० सीयतेवा । षिञ्० । शुसिचिमीनांदीर्घश्चे ति० क्रन्० दीर्घत्वञ्च ॥

सीरकः । पुं० शिशुमारे ॥ अर्के ॥ हले ॥

सीरध्वजः । पुं० चन्द्रवंशीयनृपवि शेषे ॥

सीरपाणिः । पुं० बलभद्रे । कालि न्दीभेदने ॥ सीरोलाङ्गलंपाणा वस्य ॥

सीराङ्गम् । न० फालाधारे ॥

सीरी । पुं० बलदेवे ॥

सौलभ्यः । पुं० मत्स्यविशेषे । सि लिन्दा० इ० गौ० दे० भा० प्र०

॥ तद्गुणायथा । सौलभ्यः श्लेष्म लोवृष्योविपाकेमधुरोगुरुः । वा तपित्तहरोहृद्यश्चामवातकरश्चसः ॥

सौवनम् । न० सेवने । स्यूतौ । तु त्रवायकर्मणि । सौवना० इ० भा० ॥ षिवुतन्तुसन्ताने । ल्युट् पृषोदरादित्वाद्दीर्घः ॥ छिवुसि व्योल्र्यु टिचादीर्घइतिवामी ॥

सौवनी । स्त्री० लिङ्गमध्यस्थः सूत्रे । लिङ्गाधादृगुह्यपर्यन्तसौवनी ॥

सौसम् । न० सीसके । योगेष्टे । ना गे । सौसा० इ० भा० प्र० धा तौ ॥ सिनोति । षिञ्० । क्विप् । अनित्यत्वान्नतुक् । इं स्यति । षो० । आतीनुपेति कः । सिच० तत्० ईसश्च० सौसम् ॥ अस्यगुणा यथा । सौसंरङ्गगुणञ्चसंविशेषान्मे हनाशनम् ॥ नागस्तुनागशततुल्य बलंददातिव्याधिंविनाशयतिजीव नमातनोति । वह्निंप्रदीपयतिका मबलंकरोतिमृत्युञ्चनाशयतिसन्त तसेवितः सः ॥ पाकेनहीनौकि लवंगनागौकुष्ठानिगुल्मांश्चतथाति- कष्टान् । पाण्डुप्रमेहानिलमन्दशो थभगन्दरादीन्कुरुतःप्रभुक्तौ ॥ अस्यशोधनमारणविधिर्यथा । त स्यसाहजिकादोषावङ्गस्येवनिदर्शि ताः । शोधनंचापितस्येव० भि षगभिर्गदितंपुरा ॥ ताम्रवारस

म्पिष्टशिलालिप्तोत्पुनः पुनः । शाखिं शशि: पुटैर्नागोविनश्यन्भस्मतायते ॥ शिलामनः शिला । अन्यच्च । अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेननिः क्षिपेत् । मृत्पात्रे विद्रुतेनागेलोहदर्व्याप्रचालितः ॥ यामैकेनभवेद्भस्मतत्तुल्यास्यान्मनःशिला । काञ्जिकेनद्वयंपिष्ट्वा पचेद्दृढपुटैनच ॥ स्याङ्गशेषंपुनः पिष्ट्वाशिलयाकाञ्जिकेनच । पुनः पचेत्क्षराभ्यामेवंषष्टिपु-टैर्मृति: ॥ अपिच । तैलितक्रे गवांमूत्रे काञ्जिकेचकुलत्थके । किचाविधाविशुद्धिः स्यात्स्वर्णादीनां सनातनः । मारणम्पुनः । कुक्ष्वंनागपत्राणांकुनत्य्यः स्यात्पलार्द्धकम् । तण्डुलीयरसैर्याममेयामं वासारसैस्तथा । सम्मर्द्य चक्रियाङ्कृत्वाघर्मसंशोष्यतम्पुनः । सरावसम्पुटेकृत्वापचेद्वन्योपलैर्भिषक् ॥ एवंसप्तपुटैर्नागोभस्मीभवतिनिश्चितम् । हिगुणोयंभ्रुवंवन्यातप्रश्निष्ठानिलानयोतिवैद्यदर्पणः ॥

सीसकम् । न० सीसे ॥ स्वार्थे कः ॥

सौसपत्रकम् । न० सीसके ॥

सौहुण्ड: । पुं० स्रुह्याम् । सिहुण्डे ॥ सौतिहुण्डते । हुडिसङ्घाते । पचाद्यच् ॥ सिंहतुण्डस्यापभ्रंशो वमितिस्वामी । पृषोदरादि: ॥

सु । अ० पूजायाम् ॥ भृशार्थे ॥ निर्भरे । अतिमात्रे ॥ अनुमतौ ॥ कृच्छ्रे ॥ समृद्धौ । अनायासे ॥ सूयते० सवतिवा । सुगतौ । क्विपि० तुगभाव: । द्रुर्वा ॥

सुकण्टका । स्त्री घृतकुमार्याम् ॥

सुकण्डु: । पुं० कण्डूरोगे ॥

सुकथा । स्त्री० नैमिषारण्याधिष्ठातृदेवतायां ॥

सुकन्द: । कशेरुणि ॥ धरणीकन्दे ॥

सुकन्दक: । पुं० पलाण्डौ ॥ शोभनमतीवशा० कन्दयति० अन्नकस्य अतिभ्रंशकरत्वात् । कर्द्रिरोदने । अच् । स्वार्थे कन् । वनलता ॥ धरणीकन्दे । वाराहीकन्दे ॥

सुकन्दौ । पुं० सूरणे ॥

सुकम् । अ० अतिशये ॥

सुकर: । त्रि० सुखकरे । सुखेनकर्त्तुंशक्ये । सुसाध्ये ॥ ईषद्दु:सुष्विति० भावे० कर्मणिवा० अकच्छ्रार्थेखल् ॥ अल्पसाधनैराधिकारम्भोनसुकरः ॥

सुकरा । स्त्री० सुशीलायाङ्गवि । अचण्डायाम् ॥ सुसुखङ्करोति । अच् ॥ सुक्रियतेवा । ईषदुसुष्वितिखल् ॥

सुकर्ण: । पुं० हस्तिकर्णे ॥ त्रि० शोभनकर्णवति ॥

सुकर्णक: । पुं० हस्तिकन्दे ॥ त्रि०

सुन्दरकाण्डमिति ॥
सुकर्णिका । स्त्री॰ मूषीकपर्ण्याम् ॥
सुकर्णी । स्त्री॰ इन्द्रवारुण्याम् ॥
सुकर्मा । पुं॰ विष्कम्भाद्यन्तर्गतयो गविशेषे ॥ तज्जातफलं यथा । परो पकारीकुशलः कलासु धर्मव्ययुक्तो नितरां यशस्वी । प्रसूतिकाले यदि चेत् सुकर्मा नरः सुकर्मा भवति प्रसिद्धः ॥ देवानां शिल्पिनि । विश्वक र्मणि ॥ त्रि॰ सत्क्रिये । शोभन कर्मकरणशीले ॥
सुकलः । त्रि॰ दानभोक्तरि मानवे । यः कलं ददाति॰ भुङ्क्ते च तथ । दाताभोक्ता॰ इ॰ भा॰ प्र॰ ॥ सु कल्पते । कलभ्वन्तश्च स्वानयोः । ईषद्सुप्रतिष्ठल् । शोभनाक लाश्रयोऽतया ॥
सुकल्पः । त्रि॰ अतिनिपुणे ॥
सुकाण्डः । पुं॰ कारवेल्ले ॥ त्रि॰ शोभनकाण्डवति॰ वृक्षादौ ॥
सुकाण्डी । स्त्री॰ काण्डीरे । काण्ड वेलइति॰ गौ॰ भा॰ प्र॰ लता- याम् ॥
सुकाण्डी । पुं॰ भ्रमरे ॥
सुकामा । स्त्री॰ त्रायमाणायाम् । ब लिति॰ बहुलेतिच॰गौ॰भा॰प्र॰ ॥
सुकालो । पुं॰ वह्निष्वात्तजेषु॰ शूद्रा णांपितृषु ॥
सुकालुका । स्त्री॰ डोडीलपे ॥ इ॰

रा॰ राटी ॥
सुकाष्ठकम् । न॰ देवकाष्ठे ॥
सुकाष्ठा ।) स्त्री॰ कटल्याम् ॥ का
सुकाष्ठिका ।)
ष्ठकदल्याम् ॥ इ॰ रा॰ राट ॥
सुकुन्दनः । पुं॰ बर्बरे ॥
सुकुमारः । पुं॰ पुण्ड्रेक्षौ वनचम्प के ॥ यवे ॥ श्यामाके ॥ त्रि॰ को मले । मृदौ ॥ सुष्ठुकुमारयति । कु मारक्रीडायाम् । चुरादुन्तः । पुंभौतिघः । एरज्चा ॥ यद्वा । सु काम्यते । कामेः किदुच्चोपधायाः ॥ इत्यारन् ॥
सुकुमारकः । पुं॰ शालौ ॥ सुन्दरबा लके ॥ न॰ तमालपत्रे ॥
सुकुमारतरः । त्रि॰ अतिपेलवे ॥
सुकुमारतरा । स्त्री॰ अतिपेलवायाम् । प्रकृतौ ॥ यथोक्त । प्रकृतेः सुकु मारतरं न किञ्चिदस्तीति मे मतिर्भ वति । या दृष्टास्मीति पुनर्न दर्शन मुपैति पुरुषस्येति ॥
सुकुमारा । स्त्री॰ कदल्याम् ॥ माल त्याम् ॥ नवमालिकायाम् ॥ ला त्याम् ॥ पृक्कायाम् ॥ चिरबिल्व- पुष्पे ॥
सुकुमारी । स्त्री॰ नवमालिकायाम् ॥
सुकृत् । त्रि॰ पुण्याढ्ये ॥ धार्मिके ॥ सुष्ठुकृतवान् । डुकृञ् । सु कर्मपापेतिकृञः क्विप् । तुक् ।

सुकृतम् । न॰ शुभे ॥ स्वर्गादिप्रापके । पुण्ये ॥ वि॰ सुविहिते । सुविधाने ॥ सुष्ठु कृतम् । प्रादिसमासः ॥ सुष्ठु क्रियतइतिवा । क्तः ॥

सुकृतिः । स्त्री॰ सत्कर्मणि ॥ शोभनाकृतिः ॥

सुकृती । वि॰ पुण्यवति । धन्ये ॥ सुकृतमस्यास्ति । अतइनिः ॥

सुकेतुसुता । स्त्री॰ ताडकायाम् ॥

सुकेशरः । पुं॰ बीजपूरे ॥

सुकेशी । स्त्री॰ अप्सरोविशेषे ॥ वि॰ शोभनकेशयुक्ते ॥

सुकोमलः । वि॰ अतिमृदुले ॥ अतिमनोज्ञे ॥

सुकोमला । स्त्री॰ सिन्दूरीतिप्रसिद्धे पुष्पे ॥

सुकोली । स्त्री॰ क्षीरकाकोल्याम् ॥

सुकोशः ) पुं॰ कोशाम्रे । क्षुद्राम्रे ॥
सुकोशकः )

सुखंसुगः । पुं॰ खट्वाङ्गे ॥ इति॰-हे॰चन्द्रः ॥

सुखम् । न॰ आत्मवृत्तिगुणविशेषे ॥ मुदि । प्रीतौ ॥ हर्षे । सम्मदे । आनन्दे । शर्मणि । सर्वेषामनुकूलवेदनीये ॥ स्वर्गे । नाके । दिवि ॥ वृद्धिनामौषधे ॥ जले ॥ न्यायमते॰धर्मजन्येजगताङ्काम्ये ॥ यथ सुखन्तुजगतामेवकाम्यं धर्मेणजन्यते । अधर्मजन्यं दुःखं स्यात्प्रतिकूलंसचेतसाम् ॥ तच्चम नोगोचरस्त्वंयथा । मनोग्राह्यं सुखंदुःखमिच्छाद्वेषोमतिः कृतिरितिभा॰प॰द॰ ॥ सुखं चतुर्विंशतिगुणान्तर्गतगुणविशेषः । तत्तु नित्यंजन्यञ्च । नित्यंपरमात्मनो विशेषगुणान्तर्वर्त्ति । जन्यसुखं-जीवात्मनोविशेषगुणान्तर्वर्त्ति । तच्चशुभादृष्टजन्यम्॰धनमित्रलाभारोग्यमिष्टान्नपानपुरोषोत्सर्गपुत्रादिजन्मतत्पालिङ्गनचुम्बनकान्तासम्भोगादिजन्यञ्च । तस्यहितत्त्वस्यायित्त्वं स्वोत्तरोत्पन्नानुभवनाश्यत्वात् । सुखाद्युपरागेणचात्मनोमानसबोधः । सुखं तदुपायश्चेष्टः । बालस्यस्तन्यपानप्रवृत्तौसुखसाधनत्त्वज्ञानंहेतुः तच्चसुखञ्चेष्टत्त्वम् । दुःखजनकगमनादिप्रवृत्तौसुखोपायोधनंतदेवेष्टं॰तत्साधनत्त्वज्ञानमेवहेतुः । यागादिप्रवृत्तावपिपारलौकिकसुखसाधनत्वज्ञानङ्कारणम्॰सुखोपायस्वर्गादिरूपेष्टसाधनत्त्वज्ञानमपिकारणम् । सुखञ्च कालावच्छेदेनत्त्वंशरीरावच्छेदेनस्व स्वपतोऽव्याप्यवृत्तित्त्वम्॰शरीरैकदेशावच्छेदेनदुःखसम्भवेप्यन्यदेशावच्छेदेनसुखसम्भवात्॰एकचणावच्छेदेनजीवस्यदुःखसम्भवेपि॰

सुखकर: । त्रि॰ सुकरे ॥

सुखङ्करी स्त्री॰ लताविशेषे । जीव न्याम् ॥ सुखकर्म्मन् ॥

सुखङ्घुण: । पुं॰ शिवखट्वाङ्गे ॥ द्ध॰ त्रि॰ शेष: ॥

सुखचर: । त्रि॰ सुखगामिनि ॥

सुखचार: । पुं॰ उत्कृष्टाश्वे ॥

सुखजात: । त्रि॰ जातसुखे ॥

सुखद: । पुं॰ परमात्मनि । विष्णौ ॥ सद्वृत्तानां सुखमेवं खलख्यं ददाति । ड् द अ॰ । असद्वृत्तानां सुखं द्यति॰ खण्डयतीति वा । दो॰ । यात इतक: । त्रि॰ सुखप्रदे । न॰ विष्णोः स्थाने ॥

सुखदा । स्त्री॰ गङ्गायाम् ॥ सद्यःपातकसंहन्त्री सद्योदुःखविनाशिनी । सुखदा मोक्षदा गङ्गा गङ्गैव परमा गति: ॥ शमोऽहर्व ॥ सुखदत्वम् ॥ स्वर्वेश्यायाम् ॥

सुखदोह्या । स्त्री॰ सुखसन्दोह्यायो गवि ॥ सुखेन दुह्यते । दुह॰ । ऋटहले र्ण्यत् ॥

सुखमेदा । स्त्री॰ शल्लकीवृक्षे ॥

सुखरात्रि: । सुखरात्रिका । स्त्री॰ दीपान्वितामावास्यायां ॥ यथा । तुलाराशिगते भानावमावास्यां नराधिप: । स्नात्वा देवान् पितॄन् भक्त्या सम्पूज्याथ प्रणम्य च ॥ कृत्वा तु पार्वणश्राद्धं दधिक्षीरगुडादिभि: । ततोऽपराह्णसमये घोषयेन्नगरे नृप: ॥ लक्ष्मी: सम्पूज्यतां लोका उल्का भिश्चाभिचेष्टताम् ॥ * ॥ दर्शे देवप्रदीपश्चापि तथा प्रत्याख्यानिणय: । तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयो: । उल्का हस्ता नरा: कुर्यु: पितॄणां मार्गदर्शनम् ॥ उभयत: प्रदोषप्राप्तौ परदिनएव । दण्डैकरजनीयोगो दर्शस्य स्यात्तु परेऽहनि । तदा विहाय पूर्वेद्यु: परेह्नि सुखरात्रिका । उभयप्रदोषव्याप्तौ च॰ उल्कादानं परदिने॰ पूर्वोक्तपार्वणानुरोधात् । भूतचैत्रप्रकुर्वन्ति उल्काग्रहमचेतस: । निराशा: पितरो यान्ति गापं दत्त्वा सुदारुणम् ॥ अत्र च लक्ष्मी: पूर्व्वाह्णे लौपूज्या । अतो बाल्याय दारावौ दिवाभ गेन्तुदर्शो । पूजनीया तदा लक्ष्मीर्विज्ञेया सुखरात्रिका ॥ उल्का ग्रहणादि पितृकृत्यत्वात् प्राचीनावीतिना दक्षिणामुखेन कर्त्तव्यम् ॥ तथा च मनु: । प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा । पित्र्यमानिधनात्कार्य्यं विधिवद्दर्भपाणिनेति ॥ उल्काग्रहण मन्त्रो यथा । शस्त्राशस्त्रहतानाञ्च भूतानां भूतदर्शयो: । उज्ज्वलज्योतिषा देहं दहेयं व्योमवह्निनेति । दानमन्त्रो यथा । अग्निदग्धाश्च ये जीवा

शैप्यद्गधा : कुलिमम । उज्ज्वल ज्योतिषाद्गधासोयान्तुपरमाकृति मिति । विलक्षणमस्तोयथा । यम लोकंपरिलक्ष्यआगतायैमहालये । उज्ज्वलज्योतिषावर्त्मप्रपश्यन्तीव्रजन्तुते ॥ इति ॥

सुखलुब्ध: । पुं॰ देहिनि ॥ यथा । मांसलुब्धोयथामत्स्योलौहशङ्कुंनपश्यति । सुखलुब्धस्तथादेहीयमबाधांनपश्यतीतिकुलार्णवतन्त्रम् ॥

सुखवर्चक: । पुं॰ सर्ज्जिकाक्षारे । सुखं वर्चयति । वर्च दीप्तौ । ण्वुल् ॥

सुखवर्च्चा: । पुं॰ सर्ज्जिकाक्षारे ॥ सुखेनवर्च्चोयेन ॥

सुखवास: । पुं॰ तरमु॰ इ॰ प्र॰ फलविशेषे ॥

सुखवासन: । पुं॰ मुखवासनगन्धद्रव्ये । यथा । मुखवासकरोगन्धश्मोदोमुखवासन: । सुखवासनकूर्च्चेशुभवासनइत्यपीतिशब्दरत्नावली ॥

सुखसंविति: । स्त्री॰ सुखानुभावे ।

सुखसन्दोह्या । स्त्री॰ सद्गव्याम् । सुव्रतायाम् सुखेनसन्दुह्यते । दुह॰ । ऋहलोर्ण्यत् ॥

सुखा । स्त्री॰ प्रचेतस: पुर्याम् ॥ अभेदेनसुखरथ्याम् ॥ शोभनेन्द्रियायाम् ॥

सुखाधार: । पुं॰ स्वर्गे ॥ त्रि॰ सुखाधारे ॥

सुखायत: । पुं॰ उत्कृष्टाश्वे । सुशिक्षितेश्वे ॥ यथा । सुखायत: शुभमुख: सुखचार: सुखायनइतिशब्दमाला ॥

सुखायन: । पुं॰ उत्कृष्टघोटके ॥ सुखेनअयनंगमनयेन ॥

सुखालुका । स्त्री॰ बहुफल्याम् । जीवन्त्याम् ॥

सुखावती । स्त्री॰ बुद्धधर्म्मो ॥

सुखावतीश्वर । पुं॰ बुद्धभेदे ॥

सुखावह: । पुं॰ भर्त्तरि ॥ त्रि॰ सुखदातरि ॥

सुखाश: । पुं॰ वरुणे । प्रचेतसि ॥ सुखभोजने ॥ तरम्बुजे । अस्यपर्यायायथा । आकोलालस्त्रिवफल: सुखाशोराजतीमिष: । लतापनसनाटाम्रौसेटुरितिचिर्भटीभिष: ॥

सुखासनम् । न॰ नरवाह्ययानविशेषे । खासा॰ इ॰ भा॰ प्र॰ ॥ सुखेनआसनंयस्मिन् ॥

सुखित: । त्रि॰ सुखंकृतमस्ति ॥ सुखंसञ्जातमस्य । इतच् ॥

सुखी । त्रि॰ सर्वथानीरोगे ॥ निरामयस्थिते ॥ तृष्णयोज्झिते ॥ सुखमस्त्यस्य । सुखादिभ्यश्चेति॰ इनि: ॥ दु:खमूलंहिसंसार: सयस्यास्तिसदु:खित: । तस्यत्याग: कृतोयेनससुखीनापर: प्रिये ।

इति श्रीकुलार्णवतन्त्रम् ॥ ब्रह्मादितृणपर्य्यन्तं मायया कल्पितं जगत् । सत्यमेकं परं ब्रह्म विदित्वैवं सुखी भवेदिति महानिर्वाणतन्त्रम् । विदित्वा गुरोर्मुखादध्यात्मविद्याया: श्रवणादिभि: ॥

सुखोत्सव: । पुं॰ भर्त्तरि । पत्यौ ॥ सुखस्य उत्सवो यस्मिन् ॥

सुखोदकम् । न॰ सुखोष्णे । सुखजनके जले ॥

सुखोज्जिका: । पुं॰ सर्ज्जिकाक्षारे ॥

सुखोष्णम् । न॰ सुखोदके ॥

सुग: । पुं॰ गन्धर्व्वे ॥ सुष्ठु गायति । गै॰ क: ॥ न॰ विष्ठायाम् ॥ त्रि॰ सुगमे ॥ सुखेन गच्छत्यत्र । उपक रणे॰ सुदुरोरधिकरण इति गमेर्ड: ॥

सुगत: । पुं॰ सर्व्वज्ञे । जिनकर्म्मात्मवादिनि । बुद्धे । शोभनं गतं ज्ञानमस्येति सुगत: ॥ सुष्ठु अपुनरावृत्त्या गत इति वा ॥ सुखेन संसाराद्गतो वा ॥

सुगति: । पुं॰ अतीतकल्पार्हद्भेदे ॥ स्त्री॰ शोभनगतौ ॥ पुण्यात्मनां शरीरान्ते प्राप्यस्थाने ॥ यथा । सुवृत्त: शीलसम्पन्न: प्रसन्नात्मात्मविद्बुध: । प्राप्येह लोके सम्मानं सुगतिं प्रेत्य गच्छतीति ॥

सुगन्ध: । पुं॰ कर्पूरादिगणे ॥ यथा । कर्पूरो मृगनाभिश्च कक्कोलं जातिशातय । गन्धसामरिचैर्य्यञ्च श्रीखण्डं पीतचन्दनम् ॥ कालीयकं रक्तशाङ्गं पतङ्गमगुरुद्वयम् । देवदारुश्च सरलस्तगर: पद्मकं गुरु: ॥ सर्ज्जो निर्यासको राल: कुन्दुरुश्च शिलारस: । शिल्हकं स्थलपद्मश्च जातीपत्री फलं तथा ॥ एलाद्वयं दारुचीनी त्वक् पत्रं नागकेशरम् । बालुकं शैरयं मांसी कुङ्कुमं रोचनानखम् ॥ सुगन्धोशीरणं बालं जटामांसी मुराघन: । शटीकर्च्चूरकाङ्गी सुगन्धीयं गणो मत: ॥ रक्तशिग्रौ ॥ चणके ॥ गन्धके ॥ भूतृणे ॥ न॰ चन्द्रजीरके ॥ गन्धतृणे ॥ श्वेतचन्दने ॥ नीलोत्पले ॥ ग्रन्थिपर्णे ॥ कृष्णजीरके ॥ कातृणे ॥ पुं॰ तीक्ष्णगन्धे । रक्ततुलस्याम् ॥ त्रि॰ समवायातिरिक्तसम्बन्धेन सुगन्धविशिष्टे ॥

सुगन्धक: । पुं॰ गन्धके ॥ रक्ततुलस्याम् ॥ ककोडा॰ इ॰ भा॰ प॰ फलशाके ॥ तस्य पर्य्याया यथा । कर्कोटक: किलासघ्नस्तिक्तपत्र: सुगन्धक इति हेमचन्द्र: । कांकरोल इ॰ गौ॰ दे॰ भा॰ ॥ शालिविशेषे ॥

सुगन्धतैलनिर्यास: । न॰ गन्धद्रव्यविशेषे । जवादिनि । मृगघर्म्मजे । क्रिमे ॥

सुगन्धपत्रा । )
सुगन्धपत्रिका । ) स्त्री॰ रुद्रजटा-

याम् ॥

सुगन्धभूतृणम् । न॰ गन्धतृणे ॥

सुगन्धमूला । स्त्री॰ रास्नायाम् ॥ स्थलपद्मिन्याम् ॥ सुगन्धीमूलेय-स्याः ॥

सुगन्धा । स्त्री॰ रास्नायाम् ॥ शोभनो गन्धः । कुगतीतिसमासः । सुगन्धोस्त्यस्याः । अर्शआद्यच् ॥ शल्याम् ॥ गङ्गापत्र्याम् ॥ वन्ध्याकर्कोटक्याम् ॥ नवमालिकायाम् ॥ तुलस्याम् ॥ मधुकर्कटिकायाम् ॥ शतपुष्पायाम् ॥ स्वर्णयूथ्याम् ॥ रुद्रजटायाम् ॥ अनन्तमूले ॥ सल्लक्याम् ॥ माधव्याम् ॥ तीर्थविशेषे ॥

सुगन्धामलकम् । न॰ सर्वौषधिभिः शुष्कामलकत्वग्योगे ॥ यथा । सर्वौषधिसमायुक्ताः शुष्कास्त्वामलकत्वचः । यद्वातद्रार्ययोगः स्यात् सुगन्धामलकाभिधः ॥ इतिराजनिर्घण्टः ॥

सुगन्धिः । पुं॰ शोभनगन्धे । सुरभौ । घ्राणतर्पणे । इष्टगन्धे ॥ तुम्बुरुवृक्षे । तीक्ष्णकल्के ॥ परमात्मनि ॥ इतिमोक्षधर्मटीकायांनीलकण्ठः ॥ सत्कारे ॥ न॰ एलवालुके । तलेये ॥ कुस्तुम्बुरौ ॥ धान्याके ॥ मुस्तके ॥ कशेरुणि ॥ गन्धतृणे ॥ पिप्पलीमूले ॥ त्रि॰ सुगन्धयुक्ते । शोभनोगन्धोऽस्य । गन्धस्येदुत्पूतिसुसुरभिभ्यइतीत्त्वम् ॥ गन्धस्येत्त्वे तदेकान्तग्रहणं नाद्रियन्तेकवयः । यथा । काण्डूयतः कटभुवङ्करिणोमदेनस्कन्धं सुगन्धिमनुलीनवतानगर्श्चेति माघे॰ सुगन्धिंशोभनगन्धमित्यर्थात् ॥

सुगन्धिकः । पुं॰ सिह्लके । तुरुष्के । महाशाली ॥ गन्धके ॥ न॰ कह्लारे ॥ पुष्करमूले ॥ गौरसुवर्णे । वारिजे । पत्रशाकविशेषे ॥ सुपर्णे ॥ उशीरे ॥

सुगन्धिकुसुमम् । न॰ सुगन्धिपुष्पे पुं॰ पीतकरवीरे ॥ शोभनगन्धवन्तिपुष्पाण्यस्य ॥

सुगन्धिकुसुमा । स्त्री॰ पृक्कायाम् ॥

सुगन्धिता । स्त्री॰ सौरभ्ये ॥ शोभनोगन्धोयस्य॰ तस्यभावः । तल् । टाप् ॥

सुगन्धितोयम् । न॰ । सुगन्धिजले । केतकादिपानीये ॥

सुगन्धित्रिफला । स्त्री॰ जातीफले न॰ पूगफलेनत्रसंयुक्तेलवङ्गकलिकाफले ॥

सुगन्धिनी । स्त्री॰ आरामशीतलायाम् ॥

सुगन्धिमूलम् । न॰ उशीरे ॥

सुगन्धिमूषिका । स्त्री॰ छुछुन्दर्याम् ॥

सुगम : । त्रि० सुखेनगमनीयेस्थानादौ ॥ सुखेनगम्यतेप्राप्यते । गम्लृ० । ईषद्दुःसुष्विति खल् । यथासुगम : पन्था : ॥

सुगरम् । न० रङ्गे । हिङ्गुले ॥

सुगहन : । त्रि० निबिडे ॥

सुगहनावृत्ति : । स्त्री० कुम्बायाम् । यज्ञस्थाने० अस्पृश्यादिदृश्यनवारणायनिर्मितवेष्टने ॥ सुगहनानिरवकाशावृत्ति : ॥

सुगृह : । पुं० चञ्चुसूचीखगे । पीततुण्डे । यथा० दू० भो० प्र० ॥ न० शोभनालये ॥ त्रि० शोभनगृहवति ॥

सुगृहीत : । त्रि० सुन्दररूपेणकृतग्रहणे ॥

सुगृहीतनामा । पुं० शुभकाम्ययाप्रात : स्मर्त्तव्ये युधिष्ठिरादौ ॥

सुग्रन्थि : । पुं० ग्रन्थिपर्णप्रभेदे । चोरके ॥ शोभना : ग्रन्थयोयस्मिन् ॥

सुग्रीव : । पुं० कपिपुङ्गवे । सूर्यपुत्रे । किष्किन्धाधिपे । श्रीराममित्रे ॥ विष्णोरथहये ॥ देवीम्प्रतिशुम्भनिशुम्भाभ्यांप्रेषितेदूतविशेषे ॥ अर्हत्पितरि । शोभनाग्रीवायस्यस : ॥ शिवे । इन्द्रे ॥ राजहंसे ॥ असुरविशेषे ॥ पर्वतविशेषे ॥ अस्त्रविशेषे । नागप्रभेदे ॥ त्रि० शोभनग्रीवायुक्ते ॥

सुग्रीवी । स्त्री० कश्यपपत्नीविशेषे ॥

सुग्रीवेश : । पुं० श्रीरामचन्द्रे ॥

सुघोष : । पुं० विष्णौ । नारायणे ॥ शोभनोघोष : शब्दोवेदात्मकोयस्य ॥ नकुलाख्यपाण्डवस्यशङ्खे ॥

सुचक्षु : । पुं० उदुम्बरे ॥ न० शोभननेत्रे ॥ वेदान्तजन्यज्ञाने ॥ यथा । एवंविधंत्वांसकलात्मनामपिस्वात्मानमात्मात्मतयाविचक्षते । गुर्वर्कलब्धोपनिषत्सुचक्षुषायेतेतरन्तीवभवानृताम्बुधिम् ॥ त्रि० उत्कृष्टाक्षे ॥ आत्मविदि ॥ शोभनेचक्षुषीयस्यस : ॥ सुष्ठुशोभनस्वतत्त्वचक्षुरस्तिवा ॥

सुचञ्चु : । पुं० महाचञ्चुशाके ॥

सुचतुर : । त्रि० शोभनानिचत्वारियस्य० तस्मिन् ॥ अचतुरविचतुरेत्यादिनासाधु : ॥

सुचरित्र : । त्रि० सुशीले ॥ शोभनंचरित्रमस्य ॥

सुचरित्रा । स्त्री० साध्व्याम् ॥ शोभनंचरित्रमस्या : ॥

सुचर्म्मा । पुं० भूर्जवृक्षे त्रि० सुचर्म्मवति ॥ शोभनंचर्मास्य ॥

सुचारु : । त्रि० मनोहरे ॥

सुचित्रम् । न० शोभनचित्रे ॥

सुचित्रक : । पुं० मत्स्यरङ्गविहङ्गमे ॥ चित्रसर्पे । मातुलाहौ ॥ त्रि० सुन्दरचित्रयुक्ते ॥

सुचित्रबीजा । स्त्री० विडङ्गे ॥

सुचिका। स्त्री॰ चिचिंटायाम्॥
सुचिरायुः। पुं॰ सुरे। देवे॥ मार्कण्डेयादौ॥ शोभनं चिरायुर्यस्य॥
सुचुक्रिका। स्त्री॰ तिन्तिडायाम्॥
सुचुटी। स्त्री॰ सन्दंशिकायाम्॥ इति सन्दंशिकाशब्दार्थे मेदिनिकरः॥
सुचेलम्। न॰ शोभनवस्त्रे॥ शोभनं चेलम्॥ त्रि॰ शोभनवस्त्रवति॥
सुचेलकः। पुं॰ वस्त्रे। पटे॥ सुचेलमिव। स्वार्थे कन्॥ त्रि॰ तद्वति॥
सुच्छत्री। स्त्री॰ शतद्रुसरिति॥ इ॰ ध॰ र॰ मो॰॥
सुजनः। पुं॰ कुलीने॥ सदाचारे। साधौ। सज्जने॥ यथा। दुर्जनस्पर्शदोषेण सुजनोपि विनश्यति। प्रसन्नं जलमित्याहुः कर्दमैः कलुषीकृतम्॥
सुजनता। स्त्री॰ सौजन्ये॥
सुजलम्। न॰ कमले॥ शोभने सलिले॥ त्रि॰ शोभनजलयुक्ते॥
सुजल्पः। पुं॰ वाक्यविशेषे॥ यथा। यत्रार्जवात् सगाम्भीर्य्यं सदैन्यं सहचापलम्। सोत्कण्ठश्च हरिस्पृष्टः सजल्पो निगद्यते॥ इत्युज्ज्वलनीलमणिः॥
सुजातः। त्रि॰ सुन्दरे
सुजाता। स्त्री॰ गोराष्ट्रपतिकाया
मे। तुवर्यांम्॥
सुजिह्वः। पुं॰ हव्यवाहने॥
सुजीवन्ती। स्त्री॰ स्वर्णजीवन्त्याम्॥
सुज्ञः। त्रि॰ विज्ञे॥ सुशोभनं जानाति। ज्ञाधवबोधने। आतश्चोपसर्गे इति कः॥
सुज्ञेयः। त्रि॰ सुष्ठुविज्ञेये॥ सुखेन ज्ञातुं योग्यः। ज्ञा॰। अचोयत्। ईद्यति॥
सुडीनम्। न॰ पक्षिणः सुकुमारपाते॥
सुतः। पुं॰ आत्मजे। तनये। पुत्रे॥ मातृपितृस्वभाववत् स्वभावः सुतस्य भवति। यथोक्तं वह्निपुराणे। शीलं सत्यमतः पुत्रो मातुस्तातस्य वै सुतः। यथाशीलाभवेन्माता तथा शीलो भवेत् सुतः॥ यदर्थादिभवेद् भूमिस्तद्वर्णं सलिलं भवेत्। मातृणां शीलदोषेण पितृशीलगुणेन च॥ विभिन्नास्तुप्रजाः सर्वा॰ भवन्तिभवशीलनामिति॥ सूयतेस्म॰ सौति वा। पुञ् अभिषवे॰ पुप्रसवैश्वर्ययोर्वा। क्तः॥ नृपे। पार्थिवे॥
सुतजीवकः। पुं॰ पुत्रजीवे॥
सुतनुः। स्त्री॰ नार्य्याम्॥ त्रि॰ सुकृशे॥ स्वङ्गे॥
सुतपादिका। स्त्री॰ हंसपद्याम्। गोधापद्याम्॥
सुतपाः। पुं॰ सूर्य्ये॥ मुनिविशेषे

। सुनौ ॥ नरनारायणरूपेभगवति बदरिकाश्रमेसुशोभनंतनसश्चेन्द्रियाणाञ्चकायाद्रूपंतपोऽस्येतिसुतपानरनारायणः ॥

सुतराम् । अ॰ अत्यन्ते । अतिशये ॥ अवधारितार्थप्रतिपादके ॥ यथा । शृणुद्विजमहाबुद्धेतृप्तोनाभिस्तुतोहरिः । दृष्टातिमोचसुतरांकिम्पुनर्दर्शनंनादिति ॥ द्विवचनविभज्येत्यादिना॰सुशब्दात्तरप् । किमेत्तिङव्ययेत्यादिनाम्प्रत्ययः । तद्धितश्चासर्वविभक्तिरित्यव्ययसंज्ञा ॥

सुतश्रेणी । स्त्री॰ देवदालीलतायाम् ॥

सुतर्द्दनः । पुं॰ ताम्राचे । कोकिले ॥

सुतलः । पुं॰ अट्टालिकाबन्धे ॥ नागलोकप्रभेदे ॥

सुतस्करा । स्त्री॰ सप्तपुष्पाख्याम् ॥

सुतश्रेणी । स्त्री॰ मूषिकपर्ण्याम् ॥ सुतानांश्रेणिरस्याः ॥ पुत्रश्रेण्दे ॥

सुता । स्त्री॰ स्वपत्ये । कन्यायाम् ॥ दुरालभायां ॥

सुतात्मजः । पुं॰ पौत्रे । दौहित्रे ॥ सुतस्यसुतायावात्मजः ॥

सुतात्मजा । स्त्री॰ पौत्र्याम् ॥ दौहित्र्याम् ॥ सुतस्यसुतायावात्मजा ॥

सुतारम् । न॰ द्वितीयायामृगव्याख्या याम्सिद्धौ ॥

सुतारका । स्त्री॰ बुद्धशासनदेवीविशेषे ॥

सुतिक्तः । पुं॰ भूनिम्बे । किराततिक्ते ॥ पर्पटे । पित्तपापडा॰ इ॰ भा॰ प्र॰ ॥

सुतिक्तकः । पुं॰ पारिभद्रे । भूनिम्बे ॥

सुतिक्ता । स्त्री॰ कोशातक्याम् । भृङ्गफलिकायाम् ॥

सुतिक्तिका । स्त्री॰ कोशातक्याम् ॥

सुती । त्रि॰ पुत्रवति ॥

सुतीक्ष्णः । पुं॰ शिग्रौ ॥ श्वेतशोभाञ्जने ॥ रामायणप्रसिद्धेमुनिविशेषे ॥ नाम्नासुतीक्ष्णइरितिनदान्तः ॥ त्रि॰ अतिशयेनखरे ॥

सुतीर्थकम् । न॰ । तीर्थविशेषे ॥

सुतुङ्गः । पुं॰ नारिकेलागमे ॥ यहाणामुच्चांशविशेषे । अत्यन्ततुङ्गे ॥ त्रि॰ अतिशयोच्चे ॥

सुतृणः । पुं॰ कुन्दरे । उलपवल्ले । मृगवल्लभेतृणविशेषे ॥

सुतेजनः । पुं॰ धन्वङ्गे । धन्वनवृक्षे ॥

सुतेजाः । पुं॰ सुतेजस्त्वगुणविशिष्टेद्युलोके ॥ स्वर्गे ॥ प्राकल्पार्हद्विशेषे स्त्री॰ आदित्यभक्तायाम् ॥ त्रि॰ तेजसान्विते ॥

सुतेला । स्त्री॰ महाज्योतिष्मत्याम् ।

सुत्या । स्त्री० अभिषवे । सोमलताकण्डने ॥ अभिषवदिने ॥ सवनम्० सूयते सोऽस्मिन् । अर्थाबा । षुञ् अभिषवे । संज्ञायां समजेति क्यप् ॥

सुत्रामा । पुं० गोत्रभिदि । इन्द्रे ॥ सुष्ठु त्रायते० पालयति । श्वेद्रूपालने । आतोमनिन्० सर्वधातुभ्योमनिन् वा ॥

सुत्वा । पुं० अभिषवस्नाने । यज्ञाङ्गस्नानकर्त्तरि ॥ सुतवान् । षुञ्० । सुयजोर्ङ्वनिप् । तुक् ॥

सुत्वरी । स्त्री० मातरि ॥ ङ्वनिबन्तात्० वनोरचेति ङीब्रौ ॥

सुदग्धा । स्त्री० दग्धाख्यतृणे । सुदग्धिकायां ॥ मेरुजम्बुद्रुमे ॥

सुदग्धिका । स्त्री० क्षुरुह० श्रु० गौ० दे० भा० प० वच्चे । दग्धरुहायाम् । भस्मरोहायाम् ॥

सुदण्डः । पुं० वेत्रे ॥

सुदण्डिका । स्त्री० गोरक्ष्याम् ॥

सुदन् । त्रि० शोभनदन्तविशिष्टे ॥ शोभनादन्तायस्यसः । वयसिदन्तस्य दतृ । नुम् ॥

सुदर्भा । स्त्री० तृणविशेषे । इक्षुदर्भायाम् ॥

सुदर्शनः । पुं० । हरिचक्रे ॥ यस्य लक्षणं यथा । द्वादशारन्तुषट्कोणं वलयत्रयसंयुतम् ॥ चक्रं स्यात्सुदर्शनाख्यं वर्त्तुः शंखचक्रोधरेःसुतइति ॥ जिनानांबलदेवे ॥ इक्ष्वाकुनृपतौ ॥ शोभनंदर्शनमस्य । भक्तैः सुखेनदृश्यतेवा । भाषायांशासियुधिदृशिधृषिमृषिभ्यो युच् ॥ गन्धर्वे ॥ जम्बुद्वीपे ॥ सुदर्शनोकारत्वात् ॥ मेरौ ॥ वंशे ॥ रोगभेदे ॥ न० शक्रनगरे ॥ सब्यगमने ॥ त्रि० सुदृश्ये ॥

सुदर्शनचूर्णम् । न० भावप्रकाशोक्तज्वररोगस्यौषधविशेषे ॥

सुदर्शनद्वीपः । पुं० न० जम्बुद्वीपे ॥

सुदर्शना । स्त्री० आज्ञायाम् ॥ औषधिभेदे । सोमवल्ल्याम् । हृषपर्णाम् । सुदर्शनगुलञ्चइ० पञ्चगुलञ्च० इ० गौ० दे० भा० प्र० ॥ सुदर्शनास्वादुरुष्णाकफशोफास्रवातजित् ॥ मेरुजम्ब्वाम् ॥ सुरोविशेषे ॥

सुदर्शनी । स्त्री० अमरावत्याम् ॥

सुदलः । पुं० चीरमोरटे ॥

सुदला । स्त्री० तरुण्याम् । गम्भार्य्याम् । सेवन्त्याम् । शालपर्ण्याम् ॥

सुदाम्नः । पुं० शाक्यमुनिशिष्यविशेषे । त्रि० तपः सहे ॥

सुदामा । पुं० वारिधरे । मेघे ॥ पर्वतविशेषे ॥ गोपविशेषे समुद्रे ॥ श्वेतद्वीपे । ऐरावते ॥ श्रीकृष्ण

मित्रे।ब्राह्मणविशेषे । त्रि० सुदात रि ॥ सुष्ठुददाति । डुदाञ्० । णातोमनिन् ॥

सुदामा । स्त्री० नदीविशेषे । टाप् ॥

सुदाय: । पुं० हरणे । कन्यादान काले० व्रतभिक्षादौवदीयमानद्रव्ये । सुष्ठुदीयते । डुदाञ्० । घञ् । युगागम: ॥

सुदारु: । पुं० पारिपात्रकेपर्वते ॥ सुदारु:पारिपात्रकइतिहेमचन्द्र: ॥ न० शोभनदारुणि ॥

सुदि । अ० शुक्लपक्षे ॥

सुदिनम् । न० शुभदिवसे ॥ त्रि० प्रशस्ते ॥ यथा । सुदिनासुसमा सुकार्य्यमेतत्प्रविचिन्त्येतिविशेषत: स्वयमितिप्रयोग: ॥

सुदीर्घ: । त्रि० अतिविस्तारे ॥

सुदीर्घघर्मा । स्त्री० वसनपर्य्याम् ॥

सुदीर्घफलिका । स्त्री० वार्त्ताकुविशेषे । सिङ्गावेंगन० इतिगौ० दे० भा० प्र० ॥

सुदीर्घा । स्त्री० चीनाककर्क्याम् ।

सुदुर्दर्श: । त्रि० अत्यन्तंद्रष्टुमशक्ये ॥ सर्वथादर्शनायोग्ये परमात्मनि ॥ तस्यादृष्टरूपत्वात् ॥

सुदुर्लभ: । त्रि० अतिदुष्प्राप्ये । दु:खेनापिलब्धुमशक्ये ॥ यथा । बहूनांजन्मनामन्ते ज्ञानवान्मांप्रपद्यते । वासुदेव: सर्वमितिसम हात्मासुदुर्लभइति ॥ सुगतिमा र्गंदुर्लभ: ॥

सुदुश्चर: । त्रि० अतिशयदु:खेना चरणीये ॥

सुदुष्कर: । त्रि० सर्वथाकर्त्तुमशक्ये ॥ अत्यन्तक्लेशकरे ॥

सुदुस्तर: । त्रि० अतिदु:खेनतर णीये ॥

सुदूर: । त्रि० दवीयसि । दविष्ठे । अतिदूरे ॥ यथा । सुदूरमपिगन्तव्यंयत्रमाहेश्वरोजन: ॥

सुदूरपराहत: । त्रि० अतिदूरनिराकृते ॥

सुदृढम् । न० अतिदृढे । गाढे ॥ त्रि० तद्वति ॥

सुदृढत्वक् । स्त्री० काश्मर्य्याम् ॥

सुदृक् । त्रि० शोभनर्नेत्रयुक्ते ॥

सुदृश्य: । त्रि० सुन्दराकृतौ ॥

सुदेवी । स्त्री० नाभेर्भार्य्यायाम् । मेरुजंव्याम् ॥

सुदेश: । पुं० मत्स्यदेशे । उत्तमदेशे ॥

सुद्युम्न: । पुं० वैवस्वतमनो: पुत्रे ॥ त्रि० बहुधने ॥ अतिवलशालिनि ॥

सुधन्वा । पुं० विश्वकर्मणि । त्वष्टरि । नृपविशेषे ॥ त्रि० धन्विनि । प्रौढधानुष्के ॥ शोभनंधनुर्यस्य: । धनुषश्चेत्यनङ् ॥

सुधन्वाचार्य्य: । पुं० व्रात्याद्वैश्यात्सवर्णायांजाते० जातिविशेषे ।

कारुषि । यथाहमनुः । वैश्यात्तु जायते व्रात्यात्सुधन्वाचार्य एव च । कारुषश्च विजन्मा च मैत्रः सात्वत एव चेति ॥

सुधर्मः । पुं॰ जिनगणाधिपविशेषे ॥

सुधर्मा । त्रि॰ धर्मशालिनि ॥ कुटुम्बिनि ॥

सुधर्म्मा । स्त्री॰ देवसभायाम् । शोभनो धर्म्मोऽस्याम् । धर्म्मादनिच् केवलात् । डाबुभाभ्यामिति पक्षे टाप् । अनोबहुव्रीहेरिति ङीब् न । सुधर्मे॰ सुधर्म्मा इत्यादि । डाबभावे । सुधर्माणौ॰ सुधर्माण इत्यादि ॥

सुधा । स्त्री॰ पीयूषे । अमृते । मद्ये । सुरायाम् ॥ सुखिनधीयते । धेट् पाने । आतश्चोपसर्गे इति कर्मण्यङ् । लेपने । क्षुरायाम् । मूर्व्वाम् ॥ स्नुह्याम् ॥ गृहिष्टकायाम् ॥ गङ्गायाम् ॥ शालपर्ण्याम् ॥ विद्युति ॥ गुडूच्याम् ॥ जले ॥ तोये ॥ रसे ॥ धात्र्याम् ॥ आमलक्याम् ॥ पुष्परसे । मधुनि ॥ हरीतक्याम् ॥ सुष्ठु दधाति पुष्णाति । डुधाञ्॰ । क्विप् ॥

सुधांशुः । पुं॰ इन्दौ । चन्द्रे ॥ सुधायुक्तांशवोयस्य सः ॥

सुधांशुतैलम् । न॰ कर्पूरतैले ।

सुधांशुरत्नम् । न॰ मौक्तिके ॥ चन्द्रकान्ते ॥

सुधाकरः । पुं॰ चन्द्रे ।

सुधागारः । पुं॰ सौधभूषणे । चूना॰ इ॰ भा॰ प्र॰ ॥ सुधाचारोऽग्निसङ्काशः पाकोक्तौ दीविदारणः ॥

सुधाङ्गः । पुं॰ चन्द्रमसि ॥

सुधाजीवी । पुं॰ पलगण्डे । लेपके । राज॰ इ॰ भा॰ ॥ सुधया लेपनेन जीवति॰ तच्छीलः णिनिः ॥

सुधाधारः । पुं॰ चन्द्रे । इन्दौ । अमृतपात्रे ॥ सुधाया आधारः ॥

सुधानिधिः । पुं॰ चन्द्रे ।

सुधाभुक् । पुं॰ गीर्वाणे । देवे । सुधांभुङ्क्ते । भुज॰ । क्विप् ॥

सुधालय । पुं॰ सौधे । राजसदने वि॰ अमृतात्मके ॥

सुधामोदकः । पुं॰ यवासशर्करायाम् ॥

सुधामोदकजः । पुं॰ तवराजोद्भवखण्डे ॥

सुधावर्षी । पुं॰ विधातरि । विश्वसृजि । बुद्धभेदे ।

सुधावासः । पुं॰ चन्द्रे । न॰ त्रपुषि ॥

सुधास्रवा । स्त्री॰ अपुष्प्याम् ।

सुधासंज्ञयोगः । पुं॰ अमृतसिद्धियोगे । यथा । हस्ताश्वजर्द्दिज्य॰

अथ निमग्नं निजमहत्क्रमोद्दासमारे । स्वमेकम् । भवेदम्बुधिमध्यस्वधिष्ण्यं कथिष्यते मनीषितदेवं सुधासंस्थोगः ॥

सुधासिन्धुः । पुं॰ अमृतार्णवे ॥

सुधासूतिः । पुं॰ चन्द्रे ॥ यथा । प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः सुधासूतेश्चन्द्रोपलजलकवैरर्घ्यघटना । स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियमिति ॥ मखे । यज्ञे ॥ पद्मे ॥

सुधास्रवा । स्त्री॰ अधोजिह्विकायाम् । गलशुण्डिकायाम् । घण्टिकायाम् । [illegible] । रुदन्तीवृक्षे ॥

सुधाहरः ।)
सुधाहृत् ।) पुं॰ गरुडे ॥ देवे ॥

सुधितिः । पुं॰ स्त्री॰ स्वधितौ । परशौ ॥

सुधीः । पुं॰ विदुषि । सति । कोविदे । पण्डिते । न्यायगृहीतमोक्षार्थयाजके ॥ सुष्ठु ध्यायति । ध्यै॰ । ध्यायतेः क्विपि सम्प्रसारणम् ॥ स्त्री॰ सुन्दरबुद्धौ ॥ सुष्ठु धीः । त्रि॰ शोभनबुद्धियुक्ते ॥

सुधूपः । पुं॰ सरलद्रवे ॥

सुधूम्यः । पुं॰ स्वादुनामगन्धद्रव्ये ॥

सुधोद्भवः । पुं॰ धन्वन्तरौ । दिवोदासे ॥

सुधोद्भवा । स्त्री॰ हरीतक्याम् ॥

सुनन्दः । पुं॰ श्रीकृष्णस्य पार्षदविशेषे ॥ द्वादशविधराजगृहान्तर्गतगृहविशेषे ॥ सप्तदैर्घ्ये राज्ञः सप्तसमानैकपञ्चाशद्धस्तः परिणाहेऽष्टचत्वारिंशद्धस्तश्च ॥ यथा । यद्यवै सोच्यते मानं तस्यातिनैव कल्पना । राज्ञः सप्तसमैकान्तु दैर्घ्ये सर्ववर्णिनः विधेत् ॥ आयामेन सुनन्दः षट्त्रिंशद्धस्तैरुपलभिः । परिणाहैश्चतुर्भिर्वा राजहस्तैः प्रतिष्ठितः । पद्माधिदैवतो भीमो रचनीमावसुन्दराम् । द्वाराणि प्रतिष्ठाप्य रक्षाविवाहताभिव ॥ रक्षापट्टावृतो गेहः सकलार्थप्रसाधकः । अवस्थित्वा महीपालः सुचिरं पाति मेदिनीमिति युक्तिकल्पतरुः ॥ दैर्घ्ये ५१ प्रस्थे ४० ॥ न॰ हलभृन्मुसले ॥

सुनन्दा । स्त्री॰ रोचनायाम् ॥ उमायाम् ॥ अङ्गनायाम् ॥ जनन्याम् ॥ उमासखीभेदे ॥ अर्कपत्रौषधे । [illegible] ॥

सुनन्दिनी । स्त्री॰ मञ्जुभाषिणीछन्दसि ॥

सुनयनः । पुं॰ मृगे ॥ त्रि॰ शोभननेत्रयुक्ते ॥ शोभने नयने यस्य सः ॥

सुनयना । स्त्री॰ नार्याम् ॥

सुरेन्द्राधिपः । पुं॰ यगणे । ऽऽ ॥
सुनाकुलः । पुं॰ कर्पूरके ॥ कृ॰ प्र॰ चन्द्रिका ॥
सुनाभः । पुं॰ मैनाकाचले ॥
सुनामद्वादशी । स्त्री॰ द्वादशमासी यद्द्वादशीकर्त्तव्यव्रतविशेषे ॥
सुनारः । पुं॰ शुनीस्तन्ये ॥ सर्पाण्डे ॥ चटके । कलविङ्के ॥
सुनालः । पुं॰ उशीरे ॥ लामज्जके ॥
सुनालकः । पुं॰ बकद्रुमे ॥ त्रि॰ सुन्दरनालयुक्ते ॥
सुनासिका । स्त्री॰ काकनासायाम् ॥ शोभननासायाम् ॥ त्रि॰ तद्युक्ते ॥
सुनासीरः । पुं॰ इन्द्रे ॥ नासते । शास्त्रमब्दे । बाहुलकादीरन् । सुष्ठु नासीरं सेनामुखम्॰ नासीराश्च येसरावायस्यस : ॥
सुनिर्य्यासा । स्त्री॰ जिङ्गिन्याम् ॥
सुनिश्चितः । पुं॰ बुद्धविशेषे ॥
सुनिषण्णम् । न॰ सुनिषण्णकशाके । अम्ललोणिकासदृशे॰ चौपतिया॰ कृ॰ प्र॰ जलप्रभवशाके । चतुष्पत्र्याम् । अस्य गुणा यथा । चाङ्गेरीसदृशः पत्रैश्चतुर्दलइतीरितः । शाकोजलान्वितेदेशेचतुष्पत्रीतिचोच्यते ॥ सुनिषण्णोहिमोग्राही मोहदोषत्रयापहः । अविदाहीलघुः स्वादु कषायोरूक्षदीपनः ॥ वृष्योरुच्योज्वरश्वासमेहकुष्ठभ्रमप्रणुत् ॥ सितावरशाके । श्रीवारके ॥ त्रि॰ सूपविष्टे ॥
सुनिषण्णकम् । न॰ शाकविशेषे । वितुन्ने । सुनिषण्णे ॥
सुनीतिः । स्त्री॰ ध्रुवमातरि ॥ शोभननये ॥ त्रि॰ शोभननीतियुक्ते ॥
सुनीथः । त्रि॰ धर्मशीलके ॥ नीतिमति ॥ पुं॰ वटौ ॥ ब्राह्मणे ॥ सुष्ठु नयति । णीञ्॰ । हनिकुषिनीरम्यादिनाक्थन् ॥
सुनीथा । स्त्री॰ मृत्योः कन्यायाम् । वेणस्यमातरि ॥
सुनीलः । पुं॰ नीलरत्ने ॥ दाडिमे ॥ सुन्दरनीलवर्णे ॥ न॰ लामज्जके ॥
सुनीलकः । पुं॰ नीलरत्ने ॥ नीलासने ॥ दाडिमे । नीलभृङ्गराजे ॥ न॰ वीरणाङ्गे ॥
सुनीला । स्त्री॰ तृणविशेषे । चणिकायाम् । गोदुग्धायाम् ॥ अतस्याम् ॥ विष्णुक्रान्तायाम् । अरतीतृणे ॥
सुनीलिका । स्त्री॰ सुनीलायाम् ॥
सुनेपाली । स्त्री॰ पिण्डखर्ज्जूरिका प्रभेदे ॥ तद्गुणायथा । सुनेपाली सुमृदुलावलिष्ठीनफलाघसा । सुनेपालीश्रमभ्रान्तिदाहमूर्च्छास्रपित्तहृत् । सुलेमानीतिलोके ॥

सुन्दः । पुं॰ रामायणप्रसिद्धवानरविशेषे । राक्षसविशेषे ॥ करुणाकरे परमेश्वरे । सुन्द उनत्ति । आर्द्रीकरोति । उन्दी॰ । पचाद्यच् । शकन्ध्वादिः ॥

सुन्दरः । पुं॰ कामदेवे । सुन्दरी॰ वृक्ष॰ गौ॰ दे॰ भा॰ प्र॰ वृक्षे ॥ त्रि॰ रुचिरे । चारुणि । शोभने । मञ्जुले ॥ सुष्ठु द्रियते । दृङ् आदरे । अस्मद्द्रिच्यप् । पृषोदरादिः ॥ यद्वा । सुष्ठु नत्ति॰ चित्तं द्रवीकरोति । उन्दी क्लेदने । बाहुलकाद् रः । शकन्ध्वादिः ॥

सुन्दरिका । स्त्री॰ तीर्थविशेषे ॥

सुन्दरी । स्त्री॰ रूपलावण्यसम्पन्नायां नार्याम् ॥ द्रुमान्तरे । त्रिपुरसुन्दर्यां देव्याम् । योगिनीविशेषे ॥ हरिद्रायाम् ॥ काकमाच्याम् ॥ छन्दोविशेषे ॥ अयुजोर्यदि सौ जगौ युजोः सभरा ल्गौ यदि सुन्दरी तदा । यथा । यदवोचदवेक्ष्य मानिनी परितः स्नेहमयेन चक्षुषा । अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम् ॥ वर्णवृत्तान्तरेऽपि । कुसुमगन्धरसैरभिभूषिताचरणसङ्गतनूपुरमण्डिता । करमुक्षणलसद्वलयान्विताक्षुरति कस्य न चेतसि सुन्दरि ॥ यथा । न सुलभा शरदिन्दुमुखी प्रिया मनसि कामकिचेष्टि-

तमोहशम् । मलयमारुतचालितमालतीपरिमलप्रसरोद्धतवासरः ॥ सुन्दरशब्दस्य गौरादित्वान् ङीष् ॥ पार्वत्याम् ॥

सुन्वन् । त्रि॰ सोमयाजिनि । सोमाभिषवङ्कुर्वति ॥ सुनोतेर्लटः शत्रादेशः ॥

सुपक्षः । पुं॰ सुगन्ध्याम्रे ॥ त्रि॰ शोभनपरिणते । परिपक्वे ॥

सुपक्वकः । पुं॰ सहकाराम्रे ॥

सुपत्रः । पुं॰ पत्रिराहरणे । आदित्यपत्रे । न॰ तेजपत्रे । पत्रके ।

सुपत्रकः । पुं॰ शिग्रौ ॥

सुपत्रा । स्त्री॰ पालङ्क्याम् । शतावर्याम् ॥ शम्याम् ॥ रुद्रजटायाम् । शालपर्ण्याम् ॥

सुपत्रिका । स्त्री॰ जतुकायाम् ॥

सुपथः । पुं॰ । शोभनवर्त्मनि । सत्पथे ॥ यथा । सत्पथस्त्वतिपन्थाश्च सुपन्थाः सुपथोऽपि चेति शब्दरत्नावली ॥

सुपन्थाः । पुं॰ अर्चितेऽध्वनि । सत्पथे । अतिपथि ॥ सुः पूजायाम् । कुगतीति समासः । नपूजनादिति समासान्तनिषेधः । छान्दसमासान्तनिर्देशात्॰ पथः सङ्ख्याव्ययादेरिति नक्लीबत्वम् ॥

सुपथ्यः । त्रि॰ अपीडाकारिभोजनादौ ॥

सुपिङ्गला । स्त्री॰ जीवन्त्याम् ॥ ज्योतिष्मत्यां ॥

सुपीतम् । न॰ गर्ज्जरे ॥

सुपुटः । पुं॰ कोलकन्दे ॥ विष्णुकन्दे ॥

सुपुत्रिका । स्त्री॰ लताविशेषे । जतुकायाम् । जतुकायाम् । तिर्य्यक्फलायाम् ॥

सुपुष्करा । स्त्री॰ स्थलपद्मिन्याम् ।

सुपुष्पः । पुं॰ राजतरुण्याम् ॥ हरिद्रौ ॥ शिरीषे ॥ रक्तपुष्पके । पालितामन्दार॰ कृ॰ गौ॰ दे॰भा॰ प्र॰ ॥ न॰ लवङ्गे ॥ प्रपौण्डरीके ॥ तूले । तूदे । पोश्वेदिप्पलाभिधे ॥ स्त्रीणां रजसि ॥ आढ्ल्यां ॥

सुपुष्पिका । स्त्री॰ पाटलायाम् ॥ जीर्णदारुणि ॥

सुपुष्पी । स्त्री॰ श्वेतापराजितायाम् ॥ कदल्याम्॰ ॥ जीर्णफञ्ज्याम् । जीर्णदारुणि ॥ द्रोणपुष्प्याम् ॥ मिश्रेयायाम् ॥ शतपुष्प्याम् ॥

सुपूरः । पुं॰ बीजपूरे ॥

सुपूरकः । पुं॰ बकपुष्पवृक्षे ॥

सुपूर्व्वप्रवेशः । पुं॰ यात्रानिवृत्त्यनन्तरङ्गृहप्रवेशे ॥ यात्रावसानेतु सुपूर्वसंज्ञः ॥

सुपेशलः । त्रि॰ अतिरम्ये । सुन्दरे ॥

सुपेशा । त्रि॰ सुकुमारे । कोमले ॥ सुरूपे ॥

सुप्तम् । न॰ स्वापिकायाम् । सुषुप्तौ ॥ त्रि॰ निद्रिते । निद्राणे । शयितेसुप्ता॰ कृ॰ भा॰ ॥ अध्यवीधनेविधिनिषेधौयथा । चुधितस्तृषितः कामीविद्यार्थीकृषिकारकः । भाण्डारीचप्रवासीचसप्तसुप्तान् प्रबोधयेत् ॥ मक्षिकाभ्रमरौसर्पौ राजाबैबालकस्तथा । परश्वापिच मूर्खश्चसप्तसुप्तान्नबोधयेत्इति ॥ स्वापितेस्म । जिष्वप्शये । क्तः । सम्प्रसारणम् ॥

सुप्तघातकः । त्रि॰ क्रूरे । हिंस्रे ॥ कृ॰ त्रि॰ ष॰ ॥

सुप्तजनः । पुं॰ अर्द्धरात्रे ॥ निद्रितेजने ॥

सुप्तज्ञानम् । न॰ सुप्तविज्ञाने । स्वप्ने ॥

सुप्तिः । स्त्री॰ स्पर्शाज्ञतारुजि ॥ विस्रम्भे ॥ शयने ॥ निद्रायाम् । स्वापे विज्ञानविरतौ ॥ अस्याः स्वैविध्यमुक्तंयथा । आहारादिविभेदेन॰ सात्त्विकीराजसीतथा । तामसीतित्रिधासुप्तिः सापरास्मृश्यतेत्रिधा ॥ सुखमस्वाप्समयाद्दुःखमस्वाप्समश्नु । गाढमूढोक्त्म

खाप्सर्मिस्थुर्ति: सार्वलौकिकोति ॥ शिष्वप्रग्रये । क्तिच् । सुप्त:सुप्तिं नजानातिनासुप्तिस्वप्नजागरौ ॥

सुप्तोत्थित: । त्रि॰ सुप्तादुत्थिते । चादौसुप्त: पश्चादुत्थित: ॥

सुप्रजा: । पुं॰ सत्सन्तानवति ॥ नित्यमसिच्प्रजामेधयो: ॥

सुप्रतिभा । स्त्री॰ मदिरायाम् ॥ प्रगल्भतायाम् । ज्ञानोत्कर्षे ॥

सुप्रतिष्ठा । स्त्री॰ शोभनप्रतिष्ठायाम् ॥ पञ्चाक्षरायांवृत्तौ ॥ सास्त्रिधा । पङ्क्तिप्रियाच ॥

सुप्रतिष्ठित: । पुं॰ उदुम्बरे ॥ त्रि॰ शोभनप्रतिष्ठायुक्ते । सुस्थिरे ॥ यशस्विनि ॥

सुप्रतीक: । पुं॰ ईशानदिग्गजे ॥ शिवे ॥ कामदेवे ॥ शोभनाङ्गे ॥ त्रि॰ साधौ ॥ शोभनाङ्गविशिष्टे शोभना: प्रतीका: अवयवायस्य ॥ यद्वा । सुप्रपूर्वादिणोऽलीकादित्वात्कीकन् । नुमस्तुट्च ॥

सुप्रभ: । पुं॰ जिनविशेषे । शुक्लाश्ले । त्रि॰ सुन्दरप्रभायुक्ते ॥

सुप्रभा । स्त्री॰ वाकुच्याम् । अग्नेर्जिह्वाविशेषे । सुप्रभापद्मरागाभाअरुण्यांदिशिसंस्थितेतितन्त्रसार: ॥ शोभनदीप्तौ ॥

सुप्रभातम् । न॰ शुभसूचकप्रात: काले ॥

सुप्रभाता । स्त्री॰ शोभनप्रभातयुतायांरात्रौ ॥ प्रभवद्दीपसस्विति ॥

सुप्रयुक्त: । त्रि॰ शोभनप्रयोगविशिष्टे ॥

सुप्रयुक्तशर: । पुं॰ कृतहस्ते ॥

सुप्रयोगविशिख: । पुं॰ कृतहस्ते । सुशिक्षितवाणमोक्षणे । सम्यक्कृतशराभ्यासे ॥ शोभनप्रयोगोऽस्य सुप्रयोग: । सुप्रयोगोविशिखोऽस्य ।

सुप्रलम्भ: । त्रि॰ सुखलभ्ये ॥

सुप्रलाप: । पुं॰ सुवचने । सुष्ठूक्तौ ॥ सुष्ठुप्रकृष्टं॰ लपनम् । घञ् ॥

सुप्रसन्न: । पुं॰ कुबेरे ॥ कृष्णार्जके ॥ त्रि॰ सुप्रसादयुक्ते ॥

सुप्रसन्नक: । पुं॰ कृष्णार्जके ॥

सुप्रसरा । स्त्री॰ प्रसारण्याम् । गन्धालिकायामलतायाम् ॥

सुप्रसाद: । पुं॰ शिवे ॥ विष्णौ ॥ शोभनप्रसादोऽस्य ॥ अपकारवतां शिशुपालादीनामपिमोक्षप्रदातृत्वात्तद्वा ॥ सुप्रसन्नतायाम् ॥ त्रि॰ प्रसन्नमुखे ॥

सुप्रात: । पुं॰ सुप्रभाते ॥ शोभनंप्रातरस्य । सुप्रातसुश्वसुदिवेत्यादिना॰ बहुव्रीहावच्प्रत्ययान्तोनिपातित: ॥

सुप्रिया । स्त्री॰ सुभगायाम् । भर्तु: प्रियायाम् । सुन्दर्याम् ॥ मघात्वमपरित्यज्ययदा सिंहेगुरु

भवेत् । तथाऽद्‌वेऽकन्यकाचोढासुभगासुप्रियाभवेत् इतिमाण्डव्य : ॥
सुफल: । पुं॰दाडिमे । बदरे । मुद्गे । कर्णिकारे । राजतरौ । आरग्वधविशेषे । छोटासोनालु॰ इ॰ गौ॰ दे॰ भो॰ प्र॰ ॥ कपित्थे ॥ सत्फले । त्रि॰ शोभनफलवति । सुष्ठु शोभनानिफलान्यस्य ।
सुफला । स्त्री॰ कुष्माण्डामोषधौ ॥ इन्द्रवारुण्याम् ॥ काश्मर्याम् ॥ कदल्याम् ॥ कपिलद्राक्षायाम् ॥
सुफेनम् । न॰ समुद्रफने ॥
सुबन्ध : । पुं॰ तिले ॥
सुबलपुष्पी । स्त्री॰ गाम्भार्याम् ।
सुबल्लरी । स्त्री॰ पुवदाल्याम् ॥
सुबल्ली । स्त्री॰ वाकुच्याम् । सोमराज्याम् ॥ शोभनावल्लिरस्या : ॥ कट्व्याम् ॥
सुब्रह्मण्य : । पुं॰ ऋत्विग्विशेषे ॥ गुहे ॥ केरलादिदेशप्रसिद्धे सर्पाधिकृतिदेशे॰ तत्रत्ये सर्पराजे च ॥
सुब्रह्मण्या । स्त्री॰ निगदविशेषे ।
सुब्रह्मवासुदेव : । पुं॰ ब्रह्मरूपवसुदेवसुते ॥
सुभग : । पुं॰ चम्पके ॥ अशोके ॥ रक्ताम्लाने । टङ्कणे ॥ त्रि॰ हृष्टे ॥ सुन्दरोपचर्यें ॥ शोभनम्॰ भगंशौर्यंस्य ॥
सुभगा । स्त्री॰ दुर्गायाम् । पतिप्रियायाम् । सुप्रियायाम् ॥ शालिपर्ण्याम् ॥ वनमल्लयाम् ॥ हरिद्रायाम् ॥ सुवर्णकदल्याम् । चम्पककदल्याम् । चम्पाकेला॰ इ॰ भा॰ प्र॰ ॥ नीलदूर्वायाम् । प्रियङ्गौ ॥ कस्तूर्याम् ॥ तुलस्याम् ॥ कैवर्त्तिकायाम् ॥ शोभनम्॰ भगंशौर्यंस्या : ॥
सुभगासुत : । पुं॰ सौभागिनेये ॥ सुभगाया : सुत : ॥
सुभङ्ग : । पुं॰ नारिकेलवृक्षे ॥
सुभद्र : । पुं॰ विष्णौ । राजभेदे ॥ त्रि॰ सुमङ्गलयुक्ते ॥
सभद्रक : । पुं॰ विमाने । बिल्ववृक्षे ।
सुभद्रा । स्त्री॰ श्रीकृष्णभगिन्याम् ॥ घृतमण्डायाम् ॥ श्यामालतायाम् ॥ काश्मर्याम् । गम्भार्याम् ॥
सुभद्राणी । स्त्री॰ त्रायन्त्याम् । बटुला इ॰ गौ॰ दे॰ भो॰ प्र॰ ॥
सुभद्रिका । स्त्री॰ दुर्गायाम् ॥
सुभद्रेश : । पुं॰ अर्ज्जुने ॥
सुभानु । पुं॰ वत्सरविशेषे ॥ तत्फलंयथा । सुभिक्षंक्षेममारोग्यं विप्रक्षनिरुपद्रवम् । व्यवहारोभवेद्दृष्ट: सुभानौदेवपूजिते ॥ १०॥
सुभाषित : । पुं॰ वुधे ॥ न॰ सुवचने ॥ हितोपदेशवचने ॥ यथा स्वर्गापवर्गसिद्ध्यर्थंभाषितंयत्सु

शोभनम् । वाक्यं मुनिवरैः शान्ते-
स्तद्वित्तेयं सुभाषितमिति ॥

सुभिक्ष: । त्रि॰ सुलभभैक्षद्रव्ये ॥ सुलभभैक्षयुक्तकालादौ ॥

सुभिक्षा । स्त्री॰ धातुपुष्प्याम् ॥ शोभनायाम् ॥ भिक्षायाम् ॥ त्रि॰ लब्धान्ने ॥ सुष्ठु भिक्ष्यते॰ । भिक्ष याच्ञादौ । घञ् ॥

सुभीरव: । पुं॰ पलाशवृक्षे ॥

सुभू: । त्रि॰ सुजन्मनि ॥

सुभूता । स्त्री॰ त्रैलोक्यात्मन: कोशस्योदग्भागे ॥ भूतिमद्भिरीश्वरकुबेरादिभिरधिष्ठितत्वात् ॥

सुभूतिक: । पुं॰ बिल्ववृक्षे ॥

सुभूम: । पुं॰ कार्त्तवीर्ये ॥

सुभृशम् । अ॰ गाढमित्यर्थे ॥

सुभ्राता । त्रि॰ स्निग्धभ्रातरि । शोभन: स्निग्धो भ्राता यस्य स: । नद्यृतश्चेति कप् तु न भवति । वन्दिते भ्रातुरिति निषेधात् ॥

सुभ्रू: । स्त्री॰ योषिति ॥ त्रि॰ शोभनभ्रूविशिष्टे ॥

सुमम् । न॰ पुष्पे ॥

सुमङ्गलम् । न॰ पुष्पादिद्रव्ये ॥ त्रि॰ सदाचारे ॥ अतिशयमङ्गलवति ॥

सुमङ्गला । स्त्री॰ वायसोल्याम् । अर्हन्मातरि ॥

सुमत: । त्रि॰ अनुमते । सुन्दरज्ञानविषये ॥

सुमति: । पुं॰ भरतात्मजे ॥ वर्त्तार्हद्विशेषे । भूतार्हद्विशेषे ॥ स्त्री॰ शोभनमतौ । विष्णुयशस: पत्न्याम् । कल्किमातरि ॥ त्रि॰ सुबुद्धौ । निपुणे ॥

सुमदन: । पुं॰ आम्रवृक्षे ॥

सुमदात्मजा । स्त्री॰ स्वर्गनन्दायाम् । अप्सरसि ॥

सुमधुर: । पुं॰ जीवशाके ॥ न॰ अत्यर्थमधुरवाक्ये । सान्त्वे ॥ त्रि॰ अतिशयमधुररसयुक्ते ॥

सुमन: । पुं॰ गोधूमे ॥ सुष्ठु मन्यते । मन ज्ञाने । अच् ॥ धत्तूरे ॥ त्रि॰ मनोहरे ॥

सुमन:पत्रिका । स्त्री॰ जातीपत्र्याम् जावित्री॰ इ॰ भा॰ प्र॰ ॥

सुमन:फलम् । न॰ जातीफले ॥ पुं॰ कपित्थवृक्षे

सुमना: । पुं॰ देवे । सुरे । धीरे । पण्डिते ॥ शोभनं मनो यस्य स: ॥ पूतीकरञ्जे ॥ महाकरञ्जे ॥ निम्बे ॥ गोधूमे ॥ देवप्रायेणायं भूम्नि ॥ त्रि॰ प्रशस्तमनसि ॥

सुमना: । स्त्री॰ सुमनस: स्त्री॰ भूम्नि॰ पुष्पे ॥ सुमना: पुष्पमालत्यो: स्त्रियामिति मेदिन्यादेरेकत्वम् । विश्वाश्मशानसुमनाकृतावतंसीयेति श्लोकोऽस्य ॥ स्त्रिय: सुमनस:

पुष्पम्प्रसूनङ्कुसुमंसुमनमित्यमरो क्तेः । भूम्निस्त्रियः सुमनसइति रत्नकोशात्बहुत्वमपि ॥ सुष्ठु मन्यतेयाभिः । मन० । असुन् ॥ यद्वा । शोभनंमनोऽस्याम् ॥ मतप त्याम् ॥
सुमनः । न० पुष्पे ॥ पुष्पंसुमनः कुसुममितिनाममाला । अप्रसक्ताख्ये येहंधिसुमनसोतिप्रयोगधातुक्ती वत्त्वेऽनुकूलः । क्लीवत्वंछान्दस मित्यके ॥
सुमना । स्त्री० मालत्याम् । जातीपु ष्पवृक्षे । अस्त्रीलीतिभाषाप्रसिद्ध- सुमनायावपचाचीतिसुस्रुतेदर्श नाद्भावत्तापि ॥
सुमनोरजः । न० परागे ॥ सुमनसां रजः ॥
समन्तुः । पुं० मुनिविशेषे । अथर्वा ङ्गिरसानुधारकेव्यासशिष्ये ॥
सुमन्त्रः । पुं० कल्किदेवस्यज्येष्ठ भ्रातरि । यथा कल्केर्ज्येष्ठास्त्रयः शूराः कविप्राज्ञसुमन्त्रकाः । ता तमातृप्रियकरागुरुविप्रप्रतिष्ठिता इतिकल्किपु० २८० अ: ॥ दशरथ भूपतेः सारथौ ॥
सुमन्त्रा । स्त्री० दुर्गायाम् ॥
सुमर्षणः । त्रि० सुसहे ॥ सुखे नमृष्यते । मृष० । भाषायांशा सियुधीत्यादिनाखलर्थेयुच् ॥

सुमालतिका । स्त्री० वर्णवृत्तविशेषे ॥ यदाजगणौभवेदमलद्युः फ णीश्वितमोतिसुमालतिकेति ॥ य था । मनोज्ञमरेणविषमुतरेण । अ वादितनेनभवद्दयितेन ॥
सुमित्रः । पुं० ईश्वरे ॥ सुष्ठुमि त्रंजीवपक्षिणः सखा ॥ वृत्तार्ह त्पितरि । इक्ष्वाकुवंशीयवहुला न्वयेसुरथराजपुत्रे ॥ न० हिते ॥
सुमित्रभूः । पुं० जिनचक्रवर्त्तिवि शेषे । सगरे ॥
सुमित्रा । स्त्री० लक्ष्मणशत्रुघ्नयोर्ज नन्याम् । दशरथराजपत्न्याम् । लक्ष्मणप्रसाम् ॥
सुमित्रानन्दवर्द्धनः । पुं० लक्ष्मणे ॥ सुमित्राया आनन्दं वर्द्धयति । नंद्या दित्वाल्ल्युः ॥
सुमुखः । पुं० गरुडात्मजे ॥ नाग विशेषे ॥ शाकभेदे ॥ पण्डिते ॥ हेरम्बे ॥ वनबर्बरिकायाम् ॥ बर्बरे सितार्जके ॥ प्रागदक्षिणपश्चिमद्वा रगृहे ॥ भगवतिवासुदेवे ॥ शोभ नंमुखमस्य ॥ न० नखक्षतविशेषे ॥ उत्तमाख्ये ॥ त्रि० पण्डिते । म नोज्ञे सुन्दरे । सुन्दराननविशि ष्टे । सुन्दरवदने ॥
सुमुखा । स्त्री० तार्क्ष्यवध्वाम् ॥
सुमुखी । स्त्री० देव्यन्तरे ॥ तार्क्ष्यव ध्वाम् । त्रिष्टुप्छन्दो ११ भेदे ॥

नजजलगैर्गदितासुमुखी । यथा । तरणिसुतातटकुञ्जगृहे वदनविधुस्मितदीधितिभिः । तिमिरमुदस्य मुखं सुमुखीहरिमवलोक्य चुचुम्ब चिरम् ॥ सुन्दरवदनायाम् ॥ स्वाङ्गाच्चोपसर्जनादसंयोगोपधादिति ङीष् ॥

सुमुष्टि: । पुं॰ विषमुष्टिक्षुपे । डोडिकायाम् ॥

सुमूल: । पुं॰ श्वेतशोभाञ्जने ॥

सुमूलकम् । न॰ गर्जरे ॥

सुमूला । स्त्री॰ शालपर्ण्याम् ॥ पृश्निपर्ण्यां ॥

सुमेखल: । पुं॰ मुञ्जे ॥ त्रि॰ शोभनमेखलायुक्ते ॥

सुमेधा: । स्त्री॰ ज्योतिष्मत्याम् । त्रि॰ सुबुद्धौ । विदुषि । शोभना मेधाप्रज्ञायस्य स: । नित्यमसिच् प्रजामेधयोरित्यसिच्समासान्त: ॥

सुमेरु: । पुं॰ पर्वतविशेषे । मेरौ । हेमाद्रौ । रत्नसानौ । सुरालये । मिनोतिक्षिपति॰ उच्चत्वाज्ज्योतींषि । डुमिञ्प्रक्षेपणे । मिपीभ्यांरु: । सुमेरुरित्युपसर्गान्तरनिवृत्त्यर्थम् ॥

सुम्नम् । न॰ सुखे ।

सुम्यलुगठ: । पुं॰ कर्पूरके ॥

सुम्भ: । पुं॰ देशविशेषे । असुरभेदे ।

सुम्यम् । न॰ रज्जौ । सुपूजितंमौर्व्यौ । मौञ्ज्यम् । ऐरष् । बाहुलकाद्यण् ॥ सुमैपृथ्वैसाधुर्वा । ततसाधुरितियत् ॥

सुयन्त्रित: । त्रि॰ स्वाधीननियमिते विप्रादौ ॥

सुयामुन: । पुं॰ वत्सराजे । प्रासादे ॥ अद्रिविशेषे ॥ अच्युते । श्रीकृष्णे ॥ शोभनायमुनासम्बन्धिन: परिवेष्टारोऽस्य ॥ यामुना: परिवेष्टार: पद्मासनादय: शोभनायस्येतिवा ॥

सुयोजित: । त्रि॰ नियुक्ते ॥

सुयोधन: । पुं॰ दुर्योधने ॥ सुखेन युध्यतेसःसुयोधन: । भाषायांशासियुधिदृशिधृषिमृषिभ्योयुच् ॥

सुर: । पुं॰ अमरे । निर्जरे । देवे । सुरति । षुरऐश्वर्ययो: । तुदादि: । इगुपधेतिक: ॥ यद्वा । क्षीरसमुद्रोत्थासुरा॰ सास्त्यस्ये॰ अर्शआद्यच् ॥ सुरापरिग्रहादसुर: । तथाचार्षेरामायणे । वरुणस्यतत: कन्यावारुणी रघुनन्दन । उत्पपाततस्मात्तस्मान्मार्गमाणापरिग्रहम् ॥ १६ ॥ दिते: पुत्रानतांरामजगृहुर्वरुणात्मजाम् । अदितेस्तुसुताधीरतस्तां मगृह्णन्तवैसुरा: ॥ १७ ॥ सुरापरिग्रहाद्देवा: सुराइत्यभिविश्रुता: । अपरिग्रहणात्तस्यादैतेया

चासुरास्तथैव्यार्षे रामायणे चादि
काण्डेऽमृतोत्पत्तिनामनिषट्च-
त्वारिंशदध्याये प्रोक्ताः ॥ शोभनं
राजते । राज्+दीप्तौ । अन्येभ्योऽपी
ति डः ॥ यद्वा । सुनोति । षुञ्० ।
। सुसूधाञ्गृधिभ्यः क्रन् ॥

सुरकः । पुं० ऋषिविशेषे ॥ सुरावर्णो
ऽस्ति । सुरायाश्छायाविलिकेन ॥

सुरकरीन्द्रदर्पापहा । स्त्री० गङ्गाया
म् ॥ यथा । भगीरथपथानुगा सुरक
रीन्द्रदर्पापहा महेशमुकुटप्रभा गिरि
शिरःपताकासिता । सुरासुरनरो
रगैरजभवाच्युतैः संस्तुता विमु
क्तिफलदायिनी भगवती स्वयं राजते
॥ इति कल्किपुराणे ३४ अध्या-
यः ॥

सुरकारुः । पुं० विश्वकर्मणि ॥

सुरलता । स्त्री० गुडूच्याम् ॥

सुरक्तः । पुं० रक्तचन्दने ॥ त्रि० मधु
रकण्ठे ॥ अत्यन्तानुरक्ते ॥ शोभ
नरागयुक्ते ॥

सुरक्तकः । पुं० कोशाम्रे ॥ स्वर्णगै
रिके ॥

सुरगणः । पुं० इन्द्रादिदेवगणे ॥

सुरगण्डः । पुं० रोगविशेषे ॥ वर-
गण्डे ॥

सुरगुरुः । पुं० बृहस्पतौ ॥

सुरग्रामणीः । पुं० इन्द्रे ॥

सुरङ्गः । पुं० नागरङ्गे ॥ भूमौगुप्त
मार्गात्मकगर्तविशेषे ॥ न० पत्त
ङ्गे । बक्कम् इ० भाषा० प्र० ॥
हिङ्गुले ॥

सुरङ्गकृत् । पुं० खनक इति द्रतिहा
सप्रथितभूमौगुप्तमार्गकर्त्तरि ॥

सुरङ्गदम् । न० पतङ्गे ॥

सुरङ्गधातुः । पुं० गैरिके ॥

सुरङ्गयुक् । पुं० सुरङ्गयापहर्त्तरि ।
कुर्जभिले ॥

सुरङ्गा । स्त्री० लताविशेषे । कौवर्त्ति
कायाम् । दयाकृष्टायाम् ॥ तिर्य
ग्भूखाते । सन्धौ । सिंध० इ०
सुरङ्ग० इति च भाषाप्रसिद्धे ॥ सुयहुर
ज्यतेऽकामरजसा । रङ्गरागे । इत
रोतिवच् । इत्तिरिति कुर्वी ॥

सुरङ्गिका । स्त्री० मूर्वायाम् ॥

सुरङ्गी । स्त्री० काकनासायाम् ॥ र
क्तशोभाञ्जने० इति रत्नमाला ॥

सुरजः फलः । पुं० पनसवृक्षे ॥

सुरजनी । स्त्री० रात्रौ ॥

सुरज्येष्ठः । पुं० ब्रह्मणि ॥ सुरा
णां सुरेषु वा ज्येष्ठः ॥

सुरञ्जनः । पुं० गोपदले । गुवाक
वृक्षे ॥

सुरतम् । न० निधुवने । मैथुने ॥
सुरतं द्विविधम् । बाह्यमाभ्यन्तर
ञ्च । तत्र बाह्यं प्रेक्षणभाषणाश्लेष
णचुम्बनाद्यनेकविधम् । आभ्यन्त
रश्चासनादिभेदेनापि ॥ त्रि० दया

युक्तौ ॥ अभिरतौ ॥

सुरतकण्टकः । पुं॰ रतकीलि ॥

सुरतताली । स्त्री॰ दूत्याम् ॥ शिरःस्रजि ॥

सुरतरङ्गिणी । स्त्री॰ गङ्गायाम् ॥ यथा । आगतावतरबहिमानीसिव्यसासुरतरङ्गिणीसदा । क्षमावर्त्मनिगुणान्कलयन्तीजीवनेषु च यथन्त्यनुरागम् ॥

सुरतरु: । पुं॰ देवतरौ ॥ अश्वत्थद्रुमे ॥

सुरता । स्त्री॰ देवत्वे ॥ देवतायाम् ॥ पूर्वं अभावितल् । अपरदेवाजिति॰ देवशब्दीर्थपर: ॥ यद्वा । सुराणांसमूह: । गजसहायाभ्याञ्चेतिवार्त्तिके॰ चकारादन्यत्रापितल् ॥

सुरतोषक: । पुं॰ कौस्तुभमणौ ॥ त्रि॰ देवप्रीतिकारके ॥

सुरथ: । स्वारोचिषेऽन्तरेचैत्रवंशसमुद्भवेन्रपतिवरे । सचचन्द्रवंशीय: । यथोक्तंब्रह्मवैवर्त्ते । श्रीनारायण उवाच । अविर्ब्रह्मण: पुत्रस्तस्य पुत्रोनिशाकर: । सचकृत्वाराजसूयं हिजराजोवभूवह । गुरुपत्न्या सुतारायांतस्यभूद्बुधःसुत: । बुधपुत्रश्चैत्रश्च तत्पुत्र:सुरथस्मृत: ॥

सुरदारु । न॰ देवदारुणि ॥

सुरदीर्घिका । स्त्री॰ मन्दाकिन्याम् विग्रहस्तु सुराणांदीर्घिका वापीव ॥

सुरदुन्दुभि: । स्त्री॰ तुलस्याम् ॥ पु॰ रा॰ पट: ॥

सुरद्रुम: । पुं॰ मन्दारादिदेवतरौ ॥ सुराणांद्रुम: ॥ देवनले ॥

सुरद्विट् । पुं॰ असुरे । पूर्वदेवे ॥ सुरान्द्वेष्टि । द्विषअप्रीतौ । सत्सूद्विषद्रुहदुहेत्यादिनाक्विप् ॥

सुरधनु: । न॰ इन्द्रायुधे । शक्रधनुषि ।

सुरधूप: । पुं॰ धूनके ॥

सुरनदी । स्त्री॰ गङ्गायाम् ॥

सुरनन्दा । सुरनन्दिका । स्त्री॰ नदीविशेषे ॥

सुरनायक: । पुं॰ इन्द्रे ॥

सुरनाल: । पुं॰ देवनाले । नलोत्तमे ।

सुरनिम्नगा । स्त्री॰ गङ्गायाम् ॥ सुराणांनिम्नगा । अभ्रादि ॥

सुरनिर्म्मम् । न॰ पवके ॥

सुरपति: । पुं॰ इन्द्रे । बलारातौ सुराणांपति: ॥ आदिगुरुर्विकल्पि ॰ S । ॰ ॥ प्रथमतृतीयचतुर्थप्रभेदे॰ S । S ॰ ।

सुरपत्तनम् । न॰ स्वर्गे ॥

सुरपथम् । न॰ व्योम्नि ॥

सुरपर्णम् । न॰ देवपर्णे ॥

सुरपर्णिक: । पुं॰ सुरपुन्नागे ॥

सुरपर्णिका । स्त्री० पुन्नागे ॥
सुरपर्णी । स्त्री० पलाश्याम् ॥
सुरपादप : । पुं० कल्पवृक्षे ॥
सुरपुन्नाग : । पुं० पुन्नागभेदे । न० मेरौ ॥
सुरपुरी । स्त्री० अमरावत्याम् ॥
सुरप्रिय : । पुं० अगस्त्यवृक्षे ॥
सुरप्रिया । स्त्री० जात्याम् ॥ स्वर्णरम्भायाम् ॥
सुरभि: । पुं० चम्पके ॥ वसन्ते ॥ जातीफले ॥ सुगन्धौ ॥ चैत्रमासे ॥ कणगुग्गुलौ ॥ धूनके ॥ कदम्बवृक्षे ॥ वकुलद्रुमे ॥ गन्धतृणे ॥ शमीवृक्षे ॥ न० स्वर्णे ॥ गन्धोपले । गन्धपाषाणे ॥ साधुगन्धे ॥ सुन्दरे । स्त्री० शल्लक्यामोषधौ । गजभक्षायाम् ॥ मातृभिदि ॥ मुरायाम् ॥ गवि । रुद्रजटायाम् ॥ नवमालिकायाम् । नवाल्याम् ॥ जात्याम् । अपितराचक्याम् । तुलस्याम् ॥ ववरीतुलस्याम् ॥ चमायाम् । मेदिन्याम् ॥ सुरायाम् । गवांमातरि ॥ यथा । गवामधिष्ठातृदेवीगवामाद्यागवाम्प्रसू: । गवाम्प्रधान : सुरभि : गोलोकेसास मुद्भवा ॥ त्रि० सुगन्धौ ॥ कान्ते । शोभने ॥ विख्याते ॥ सचिवे ॥ धीरे ॥ सुष्ठुरभते० रम्यतेवा० सुष्ठु रभन्तेरभसयुक्ताभवन्त्यनया । रभराभश्च । सर्वधातुभ्यइन् । आगमानित्यत्वान्ननुम् ॥
सुरभिका । स्त्री० स्वर्णकदल्याम् ॥
सुरभिगन्धा । स्त्री० मालत्याम् । चंवेली० इ० भा० प्र० ॥
सुरभिगन्धि : । त्रि० शोभनगन्धविशिष्टे । सुरभिर्गन्धोयस्य । गन्धस्येदुत्पूतिसुसुरभिभ्य : ॥
सुरभित : । त्रि० वासिते ॥
सुरभित्रिफला । स्त्री० सुगन्धित्रिफलायाम् ॥
सुरभित्वक् । स्त्री० वृहदेलायाम् ॥
सुरभिदारु : । पुं० सरलवृक्षे ॥
सुरभिपत्रा । स्त्री० जम्ब्वाम् ॥ राजजम्बूवृक्षे ॥
सुरभिवल्कलम् । न० गुडत्वचि ॥
सुरभिस्रवा । स्त्री० शल्लक्याम् ॥
सुरभी । स्त्री० चामोदमाने ॥ सुरभौ । गवांप्रसवां ॥
सुरभीरसा । स्त्री० शल्लकीवृक्षे ॥
सुरभूरुह: । पुं० देवदारुणि ॥ कल्पवृक्षादौ ॥
सुरमृत्तिका । स्त्री० तुवर्याम् । काच्याम् । सौराष्ट्रमृत्तिकायाम् । फटकरी० इ० भा० ॥
सुरमेदा । स्त्री० महामेदायाम् ॥
सुरराज : । पुं० इन्द्रे ॥ सुराणांराजा । टच् ॥
सुरर्षि : । पुं० नारदादौ ॥ नारदा

या: सुरर्षयइत्यमर : । सुरायतेव ऋादिपुरत्वाद्दष्टयश्च ॥ षष्ठीसमासोवा ॥ ब्रह्मर्षिदेवर्षिराजर्षिमहर्षिपरमर्षिकाण्डर्षिश्रुतर्षिभेदात् सप्तप्रकाराऋषय : । तत्रनारदाद्या : सुरर्षय : ॥

सुरलता । स्त्री० महाज्योतिष्मत्याम् ·

सुरला । स्त्री० पुरन्दरायाम् । गङ्गायाम् ॥

सुरलोक : । पुं० द्यवि । दिवि । स्वर्गे ॥ सुराणांलोक : ॥ .

सुरवर्त्म । न० खे । आकाशे ॥ सुराणांवर्त्म । सुरानभूमिस्पृशोऽन्तरीक्षगामित्वेन ॥

सुरवल्लभा । स्त्री० श्वेतदूर्वायाम् ।

सुरवल्ली । स्त्री० तुलस्याम् ॥

सुरवैरी । ) पुं० असुरे । दानवे ॥
सुरशत्रु : । )

सुरशाखी । पुं० कल्पवृक्षे ॥

सुरश्रेष्ठ : । पुं० ब्रह्मणि ॥

सुरश्रेष्ठा । स्त्री० ब्राह्म्याम् ।

सुरस : । पुं० सेवरसे ॥ सिन्धुवारे ॥ न० पर्णासे ॥ बोले ॥ त्वचि ॥ दालचीनीतिभा० प्र० वल्कले ॥ गन्धतृणे ॥ वि० स्वादौ ॥ शोभनोरसोऽस्य ॥

सुरसख : । पुं० इन्द्रसचिवे ॥ गन्धर्वे ॥

सुरसद्म । न० स्वर्गे ॥

सुरसम्भवा । स्त्री० ऋादित्यभक्तायाम् ॥

सुरसरित् । स्त्री० गङ्गायां ॥

सुरसर्षप : । पुं० देवसर्षपे ॥

सुरसा । स्त्री० रास्नायाम् ॥ नागमातरि ॥ तुलसीभेदायाम् । वर्वरीतुलस्याम् । तुलस्याम् । पर्णासे ॥ सुरसास्त्रीतुपर्णासे । इति शब्दरत्नावली ॥ पर्णासितुनपुंसकमितिमुद्राङ्कितामेदिनी । पर्णासिपुंनपुंसकमितिहस्ताक्षरामेदिनी । सुरसस्तुविष्णुत्वाद्दौपर्णासिमनपुंसकमितिचकत्याख्यमेदिनीपाठ : पर्णासिसुरसास्त्रियामितितुबहव : ॥ ब्राह्म्याम् ॥ महाशतावर्याम् ॥ कापित्थपर्ण्याम् ॥ मिश्रेयायाम् ॥ काश्मीरप्रसिद्धशोगन्धपत्रायामितिभावप्रकाश : ॥ भारतवर्षस्थनदीप्रभेदे ॥ धृतिधृतिछन्द : १८ प्रभेदे ॥ सौभौरेभौगुरुर्वसुस्वरमुनिकरवैरीड्सुरसाम् । यथा । कामक्रीडासक्तोमधुसमयसमारम्भरभसात्कालिन्दीकूलकुञ्जे विहरणकुतुकाकृष्टहृदय : । शौरिन्दीवश्चीमामधररससुधाम्प्राप्य सुरसांमङ्क्षु पीयूषपानप्रचयकृतसुखं व्यस्मरदसौ ॥ प्रोभनोरसोयस्या : ॥

सुरसाष्ट : । पुं० वृषभयविशेषे ॥

यथा । निर्गुण्डी तुलसी ब्राह्मी वृहती कण्टकारिका । पुनर्नवेति मुनिभिः सुरसाष्टः प्रकीर्त्तितः ॥

सुरसिन्धुः । स्त्री० गङ्गायाम् ॥

सुरसुन्दरी । स्त्री० देवाङ्गनायाम् । दुर्गायाम् । योगिनीविशेषे ॥

सुरा । स्त्री० चषके । सुरापानपात्रे इत्यर्थः । अनुतर्षणे ॥ अत्रभोजः । यत्पात्रं पानभूपानां तज्ज्ञेयं चषकं बुधैः । काञ्चनं राजतञ्चैव स्फाटिकञ्चाश्ममेव च ॥ हैमं सूरादिकोर्णां चतुर्णां पृथ्वीभुजाम् । इत्यन्यसम्मतं तेषां निर्णयः पाठसम्मतः ॥ सुमुष्टिसम्मितं रत्नैश्चतुर्वर्णसमन्वितम् । माणिक्यं राथ फाल्गुनं वा सर्वेषामुपयुज्यते ॥ काष्ठजं धातुजं शैलजं काचादिमहीभुजाम् । यदन्यत्तीयपामादि पात्रं पृथ्वीभुजां भवेत् ॥ एवं तत्रापि नियम इति भोजस्य निश्चय इति ॥ मद्ये ॥ तत्पर्य्यायः । यथा । सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा । गन्धोत्तमा प्रसन्नेरा कादम्बर्य्यः परिस्रुता । मदिरा कश्यमद्ये इति ॥ सुष्ठु राति ददाति । रा दाने । सु + अतो वरायन्त्यनया वा । रै शब्दे । आतश्चोपसर्गे इति कः ॥ शोभनं राजन्तेऽनया वा । राजृ दीप्तौ । अन्येभ्योऽपीति डः ॥



गौडी पैष्टी तथा माध्वी त्रिविधा चोत्तमा सुरा । सैव नानाविधा प्रोक्ता तालखर्ज्जूरसम्भवा ॥ तथा देशविभेदेन नानाद्रव्यविभेदतः । बहुधेयं समाख्याता प्रशस्ता देवतार्च्चने ॥ येन केन समुत्पन्ना येन केनाहृतापि वा । नात्र जातिविभेदोऽस्ति शोधिता सर्व्वसिद्धिदेति हानिर्णयतन्त्रम् ॥ अन्यथापि परिपक्वान्नमन्थानसमुत्पन्ना सुरा मतेति । अपि च । गौडी पैष्टी तथा माध्वी फलोत्था च सुरा स्मृतेति ॥ शालिपिष्टकादिकृतं मद्यं सुरा स्मृता । सुरा गुर्वी बलस्तन्यपुष्टिमेदः कफप्रदा ॥ ग्राहिणी शोथगुल्मार्शोग्रहणीमूत्रकृच्छ्रनुत् ॥ सुराशब्दः पैष्टीमात्रे मुख्यो गौड्यादिमदिरासु गौण्यापि सुराशब्दप्रयोगोपपत्तेः । अत एव भविष्यपुराणे सुरा च पैष्टी मुख्योक्ता न तथा त्वितरे समे इति ॥ सा च दिव्या प्रसन्ना कृतसुरादिभेदाद्बहुविधा भवति । समुद्रमथनोत्पन्ना दिव्येति परिकीर्त्तिता । इत्याद्या सुरा माध्वी । शर्करासवमाध्वीकाः पुष्पासवफलासवाः । आसवश्चैव विविधैर्दृष्टास्तैस्तैः पृथक् पृथगिति ॥ तत्पाने प्रायश्चित्तं यथा । ब्राह्मणः सुरापस्तस्य गोभ्रुकृतषष्ठग्रगः । सेतं दृष्ट्वा विशुध्यन्ति तत्संयोगी च

पश्चमः ॥ ततो धेनुशतं दद्याद्ब्राह्मणानाञ्च भोजनम् । इति गारुडे २२६ अध्यायः ॥ तत्पाने शुक्रशापो यथा । सुरापानाद्वञ्चनां प्रापयित्वा संज्ञानाशञ्चैव तथातिघोरम् । दृष्ट्वा कचञ्चापि तथाभिरूपं पीतं तथा सुरया मोहितेन ॥ समन्युरुत्थाय महानुभावस्तदोशना विप्रहितं चिकीर्षुः । काव्यः स्वयं वाक्यमिदं जगाद सुरापानं प्रति वै जातशङ्कः ॥ यो ब्राह्मणोऽद्यप्रभृतीह कश्चिन्मोहात् सुरां पास्यति मन्दबुद्धिः । अपेतधर्म्मा ब्रह्महा चैव स स्यादस्मिन् लोके गर्हितः स्यात् परे च ॥ मया चेमां विप्रधर्म्मोक्तिसीमां मर्य्यादां वै स्थापितां सर्व्वलोके । सन्तो विप्राः शुश्रुवांसो गुरूणां देवा दैत्याश्चोपशृण्वन्तु सर्व्वे ॥ इति मात्स्ये २५ अध्यायः ॥ ब्राह्मणक्षत्रियविशां विविधसुरापानप्रायश्चित्तादि यथा । सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् । तया स काये निर्दग्धे मुच्यते किल्बिषात्ततः ॥ गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा । पयो घृतं वामरणाद्गोशकृद्रसमेव वा ॥ कणान् वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि । सुरापानापनुत्त्यर्थं वालवासा जटी ध्वजी ॥ सुरा वै मलमन्नानां पाप्मा च मलमुच्यते । तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥ गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा । यथैवैका तथा सर्व्वा न पातव्या द्विजोत्तमैः ॥ यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् । तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः ॥ अमेध्ये वा पतेन्मत्तो वैदिकं वाप्युदाहरेत् । अकार्य्यमन्यत् कुर्य्याद्वा ब्राह्मणो मदमोहितः ॥ यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत् । तस्य व्यपैति ब्राह्मण्यं शूद्रत्वञ्च स गच्छति ॥ एषा विचित्राभिहिता सुरापानस्य निष्कृतिः ॥ इति मानवे ११ अध्यायः ॥ अत्राह ईश्वरः कुलार्णवे । पीत्वा मद्यं पलं खाद्यं समालोक्य प्रियामुखम् । इत्येवाचरणं जप्यं परं प्राप्य परं पदम् ॥ गुरुकारुण्यसुलभमीदृशं कुलदर्शनम् । त्यक्त्वा एव जानन्ति नेतरे भुक्तिमुक्तिदम् ॥ गुरूपदेशरहिता महान्तश्च न केचन । मोहयन्ति जनान् कांश्चित् स्वयमप्येव मोहिताः ॥ दुराचारपराः केचित् स्वयं तिष्ठन्ति पामराः । यथाभूतो भवेत् स्वामी सेवकाः स्युस्तथाविधाः ॥ बहवः कौलिकं धर्म्मं मिथ्याज्ञानविडम्बकाः । स्वबुद्ध्या कल्पयन्तीत्थं पारम्पर्य्यविवर्जिताः ॥ मद्यपानेन मनुजा यदि सिद्धिं लभन्ति चेत् । मद्यपानरताः सर्व्वे सिद्धिं यान्तु समीहिताम् ।

द्विधयामद्विधया• क्षीरं सर्पिर्मधूदकम् ॥ हिरण्यपात्रंस्वाहेति•वम्भन्ते पुरुषं पशुम् । सद्योदीचयतीन्याया : प्रमाणं श्रुतय : प्रिये ॥ इतिश्रीकुलार्णवेद्वितीयोल्लास : ॥ श्रीमहानिर्वाणतन्त्रे पिप्पीसदाशिवाक्शया । सुराद्रवमयीताराजीवनिस्तारकारिणी । जननीभोगमोक्षाणांनाशिनीविपदांरुजाम् ॥ दाहिनीपापसङ्घानांपाविनीजगतां प्रिये । सर्वसिद्धिप्रदाज्ञानबुद्धिविद्याविवर्द्धिनी ॥ मुक्तैर्मुमुक्षुभि : सिद्धै : साधकै : क्षितिपालकै : । सेव्यतेसर्वदादेवैरात्मेस्वाभीष्टसिद्धये ॥ सम्यग्विधिविधानेनसुसमाहितचेतसा । पिवन्तिमदिरांमर्त्याअमर्त्याएवतेक्षितौ ॥ प्रत्येकतत्त्वस्वीकारादिविधिनाश्चार्च्यितेवोन र : । नजानेपञ्चतत्त्वानांसेवनात् किंफलम्भवेत् ॥ इयञ्चेद्वारुणीदेवी निपीताविधिवर्ज्जिता । नृणांविनाशयेत्सर्वंबुद्धिमायुर्यशोधनम् । अत्यन्तपानान्मद्यस्यचतुर्वर्गप्रसाधिनी । बुद्धिर्विनश्यतिप्रायो• लोकानांमत्तचेतसाम् ॥ विभ्रान्तबुद्धेर्मनुजान्कार्याकार्यमजानत : । स्वाऽनिष्टश्चपरानिष्टं जायतेऽस्मात्पदेपदे ॥ अतोनृपोवाचक्रेशोमद्यमादकवस्तुपु । अत्यासक्तजनानुकायधनदण्डैनशोधयेत् ॥ सुराभेदाद्वाक्तिभेदान्नृन्मनेनाप्यधिकेनवा । देशकालविभेदेनबुद्धिभंशोभवेन्नृणाम् ॥ अतएवसुरापाणादतिपानंमलच्यते । स्खलद्वाक्पाणिपदृङ्गभिरतिपानंविचारयेत् ॥ नेन्द्रियाणिवशेयस्यमदविह्वलचेतस : । देवतागुरुमर्यादोल्लङ्घिनोभयरूपिण : ॥ निखिलानर्थयोग्यस्यपापिन : शिवघातिन : । दण्डैनिस्वांदरेदर्थात्ताडयेत्सपार्थिव : ॥ विचलत्पादवाक्पाणिंभ्रान्तमुन्मत्तमुन्नतम् । तमुग्रंयातयेद्राजाद्रविणश्चाचरेत्तत : । अपवाग वादिनमुमत्तंलज्जाभयविवर्ज्जितम् । धनादानेनतंराजात्मनोप्रीतिकरोन्नप : ॥ शताभिषिक्त : कौलश्चेदतिपानात्कुलेश्वरि । पशुरेवसमन्तव्य : कुलधर्मवहिष्कृत : । पिवन्तिमद्यंमद्यंशोधितंवाप्यशोधितम् । त्याज्योभवतिकौलानां दण्डनीयोपिभूभृत : ॥ ब्राह्मीभार्यांसुरांमत्ता : पाययन्तोद्विजातय : । शूद्रांयुर्भार्ययासार्द्धमप्स्वाहंकारभोजनात् ॥ असंस्कृतसुरापानाच्छुद्ध्येदुपवसंस्त्र्यहम् । भुक्त्वाप्यशोधितंमांसमुपवासद्वयंचरेत् ॥ असंस्कृतेमीनमुद्रे खादयन्नुपवसेदह : । अवैधंपञ्चमंकुर्वन्राज्ञो

दगडेनशुद्ध्यति ॥ अपिच । वीरघातीब्रह्मघातीवीरार्गलीगमनस्तथा । सैवोमन्त्रपातकिनस्तत्संसर्गीचपञ्चमः ॥ कुलवत्म कुलद्रव्यं कुलसाधकमेवच । येनिन्दन्तिदुरात्मानस्तेगच्छन्त्यधमांगतिम् ॥ नृत्यन्तिरुद्रडाकिन्योनृत्यन्तिरुद्रभैरवाः । मांसास्थिचर्वणानन्दाः सुराकौलद्विषांनृणाम् ॥ दयालवः सत्यशीलाः सदापरहितैषिणः तान्नगर्ह्यन्तोनरकान्निष्कृतिंयान्तिनकचित्दृति ॥ सुरामांसादिभिर्देवीगङ्गापिसुप्रसीदति । अत्रप्रमाणंसीतायाः वाक्यंसुस्पष्टमुच्यते । तथाहि । मध्यन्तुसमनुप्राप्यभागीरथ्यास्त्वऽनिन्दिता । वैदेहीप्राञ्जलिर्भूत्वातांनदीमिदमब्रवीत् ॥ पुत्रोदशरथस्यायंमहाराजस्यधीमतः । निदेशंपालयत्वेषगङ्गेत्वदभिरक्षितः ॥ चतुर्दशहिवर्षाणिसमग्राणुष्यकानने । भ्रात्रासहमयाचैवपुनः प्रत्यागमिष्यति ॥ ततस्त्वांदेविसुभगेक्षेमेणपुनरागताय क्ष्येप्रमुदितागङ्गेसर्वकामप्रदायिनि ॥ त्वंहित्रिपथगेदेविब्रह्मलोकंसमीक्षसे । भार्याचोदधिराजस्यलोकेऽस्मिन्सम्प्रदृश्यते ॥ तांत्वांदेविनमस्यामिप्रशंसामिचशोभने । प्राप्तराज्येनरव्याघ्रे शिवेनपुनरागते ॥ गवांशतसहस्राणिवस्त्राण्यन्नञ्चशोभने । ब्राह्मणेभ्यः प्रदास्यामितवप्रियचिकीर्षया ॥ सुराघटसहस्रेणमांसभूतोदनेनच । यक्ष्येत्वांप्रयतादेविपुरींपुनरुपागता ॥ यानित्वत्तीरवासीनिदैवतानिचसन्तिहि । तानिसर्वाणियक्ष्यामितीर्थान्यायतनानिच ॥ पुनरेवमहाबाहुर्मयाभ्रात्राचसङ्गतः । अयोध्यांवनवासात्प्रविशत्वनघोऽनघे ॥ तथासम्भाष्यमाणासासीतागङ्गामनिन्दिता । दक्षिणादक्षिणन्तीरंक्षिप्रमेवाभ्युपागमत् ॥ इत्यार्षेरामायणे अयोध्याकाण्डे द्विपञ्चाशत्सर्गः ॥ पुनश्च । कालिन्दीमध्यमायातासीतात्वेनामवन्दत । स्वस्तिदेवितरामित्वांपारयेन्मेपतिव्रतम् ॥ यक्ष्येत्वांगोसहस्रेणसुराघटशतेनच । स्वस्तिप्रत्यागतेरामेपुरीमिक्ष्वाकुपालिताम् ॥ कालिन्दीमथसीतातुयाचमानाकृताञ्जलिः । तीरमेवाभिसम्प्राप्तादक्षिणांवरदक्षिनी ॥ इत्यार्षेरामायणेऽयोध्याकाण्डे पञ्चपञ्चाशत्सर्गः ॥

सुराकरः । पुं॰ नारिकेलद्रुमे ॥ मद्योत्पत्तिस्थाने ॥ यथा । आकराः शूद्रयः सर्वेवर्जयित्वासुराकरम् ॥

सुराग्र्यम् । न॰ अमृतेसुराणामग्र्यं

श्रेष्ठम् ॥

सुरा[illegible] । स्त्री॰ देवपत्न्याम् ॥ अप्स
र[illegible] ॥

सुरा[illegible]र्यः । पुं॰ बृहस्पतौ ॥ सुरा
णामाचार्यः ॥

सुराजक: । पुं॰ भृङ्गराजे ॥

सुराजा । पुं॰ शोभनेनृपे ॥

सुराजीवी । पुं॰ शौण्डिके ॥

सुरानन्दः । पुं॰ हरौ । सुराम् आन
न्दयत्यमृतप्रदानेनेतितया ॥ कौ
ले सुरया॰सुराणांवानन्दोऽस्य ॥

सुरापः । त्रि॰ मद्यपे । सुरापानक
र्त्तरि ॥ सुरांपिबति । पा॰ । गा
पोष्टगित्यत्र॰पिबतेः सुराशी॰ध्वो
रितिवार्त्तिकटक् । टिल्वात्स्त्रि
यांङीप् । सुरापी ॥ ब्रह्महागाय
तेयच्च सुरापः स्वावदन्तकः । सु
वर्णहारीकुनखीदुश्चर्मागुरुतल्प-
गः ॥

सुरापगा । स्त्री॰ गङ्गायाम् ॥

सुरापाणम् । न॰ मद्यपाने ॥ सुरा-
याः पानम् प्राच्यदेशे ॥ वाभाव
करणयोरितिपक्षे णत्वम् ॥

सुरापाणाः । पुं॰ भूम्नि॰प्राच्येषु ।
पूर्वदेशस्थेषु ॥ पीयतइतिपानम् ।
कर्मणिल्युट् । सुरापानंयेषाम् ।
पानन्देशे॰इ॰णत्वम् ॥

सुरापानम् । न॰ सुरापाणे । मद्य
पाने ॥ सुरायाः पानम् । वाभा
वकरणयोरितिपक्षे णत्वाभावः ॥
ब्रह्मोज्झतावेदनिन्दाकौटसाक्ष्यं
सुहृद्वधः । गर्हितानाद्ययोर्जग्धिः
सुरापानसमानिषट् ॥

सुराभागः । पुं॰ सुराग्रे । सुरायाअ
ग्रभागे ॥

सुरामण्डः । पुं॰ सुरायाअग्रभागे ।
कारोत्तरे ॥ सुराणामण्डः ॥

सुरारिः । पुं॰ दैत्ये । सुराणाम्
अरिः ॥

सुरारिहा । )
सुरारिहन्ता । ) पुं॰ विष्णौ । श्री
हरौ ॥ सुरारीन्हन्ति ॥ सुरारी
णांहन्ता ॥

सुरार्हम् । न॰ हरिचन्दने ॥

सुरालयः । पुं॰ सुमेरुशैले ॥ स्वर्गे ।
सुराणामालयः ॥ सुरायानिलये ॥

सुराश्रयः । पुं॰ इन्द्रे ॥

सुराष्ट्रः । पुं॰ देशविशेषे । सूरत॰
इ॰ भा॰ प्र॰ ॥ शोभनोपवर्त्तमे ॥

सुराष्ट्रजः । पुं॰ कृष्णमुद्गे ॥ वि
षविशेषे ॥ न॰ तुवरिकायाम् ।
सौराष्ट्रमृदि ॥ सुराष्ट्रेजातम् ।
जनी॰ । सप्तम्यांजनेर्डः । त्रि॰
तद्देशजाते ॥

सुराष्ट्रजा । स्त्री॰ तुवरिकायाम् ।
सौराष्ट्रयाम् ॥ टाप् ॥

सुराह्वः । पुं॰ देवदारुणि ॥ मरु
वके ॥ हरिद्रुवृक्षे ॥

सुरी । स्त्री॰ देवाङ्गनायाम् ॥ सुरः सुरीणांभवप्तिवमानवी ॥

सुरुङ्ग : । पुं॰ शोभाञ्जने ॥

सुरुङ्गा । स्त्री॰ सुरुङ्गायाम् । सन्धि लायाम् । सन्धौ । सौध॰ कृ॰ प्र॰ खातविशेषे ॥

सुरुङ्गाहि : । पुं॰ सन्धिचौरे । कुलम्भिले ॥

सुरुक् । त्रि॰ अतिकमनीये ॥

सुरूप: । त्रि॰ शोभनरूपयुक्ते । सुन्दरे । रुचिरे । मनोज्ञे । मनोरमे । शोभनंरूपंयस्य : ॥ विदुषि । विपश्चिति । न॰ तूले ॥

सुरूपा । स्त्री॰ भार्ग्याम् । शालपर्ण्याम् ॥ सुन्दर्याम् । रुचिरायाम् । मनोरमायाम् । शोभनंरूपंयस्याः ॥

सुरूहक : । पुं॰ गर्दभाश्वे । द्रु॰ हि॰चन्द्रः ॥

सुरेज्य : । पुं॰ वृहस्पतौ ॥

सुरेज्या । स्त्री॰ तुलस्याम् ॥

सुरेन्द्र : । पुं॰ इन्द्रे ॥

सुरेन्द्रजित् । पुं॰ गरुडे ॥ सुरेन्द्रं जयति । जि॰ । क्विप् । तुक् ॥ इन्द्रजिति ॥

सुरेभ : । पुं॰ देवहस्तिनि ॥ शोभनवृंहणं । न॰ रङ्गे । सूरङ्गे ॥

सुरेवट : । पुं॰ राजपूगे सुनिपूगे ।

सुरेश : । पुं॰ भगवति । विष्णौ ॥ शिवे ॥ सुराणामीश : स्वामी ।

सुरेशलोक : । पुं॰ ब्रह्मलोके ॥ यथा । नयत्रवैकुण्ठकथासुधापगानसाधवोभागवतास्तदाश्रया : । नयत्रयज्ञेशमखामहोत्सवा : सुरेशलोकोपिनवैससेव्यतामितिदेवीभागवतं ॥

सुरेश्वर : । पुं॰ इन्द्रे ॥ शिवे । शङ्कराचार्यशिष्यविशेषे । वार्त्तिककारे ॥

सुरेश्वरी । स्त्री॰ दुर्गायाम् । मन्दाकिन्याम् ॥ सुराणामीश्वरी ॥

सुरेष्ट : । पुं॰ वकवृक्षे । शिवमल्लाम् ॥ शाले ॥ सुरपुन्नागे ॥

सुरेष्टा । स्त्री॰ ब्राह्म्याम् ॥

सुरोत्तम : । पुं॰ सूर्य्ये ॥ त्रि॰ देवश्रेष्ठे ॥

सुरोत्तर : । पुं॰ चन्दने ।

सुरोद : । पुं॰ सुरासिन्धौ । सुरासमुद्रे ॥ सुरा॰ उदकंयस्य । उत्तरपदस्योत्युदकस्योदादेश : ॥

सुलक्षण : । त्रि॰ शोभनलक्षणविशिष्टे ॥

सुलक्षणा । स्त्री॰ उमाया : सखीविशेषे ॥

सुलभ : । पुं॰ विष्णौ ॥ यथा । पत्रेषुपुष्पेषुफलेषुतोयेष्वक्रीतलभ्येषुसदैवसत्सु । भक्त्यैकलभ्येपुरुषेपुराणे मुक्त्यैकथंनक्रियतेप्रयत्न : इति महाभारतम् ॥ त्रि॰ अनायासप्राप्ये । सुखेनलभ्यते॰ इति । ईष

ष्टुः सुप्रितिलभे : खल् ॥

सुलभा स्त्री॰ तुलस्याम् ॥ धूम्रपत्रायाम् ॥ माषपर्ण्याम् ॥

सुललाट : । त्रि॰ शोभनभालविशिष्ट । ललाटेयस्यहृश्यन्ते चतुरस्त्रिहृश्यं करेखिकाहृस्यसुखचतुर्लेखासौभाग्यविशिष्टे ॥

सुललितम् । न॰ मात्राहृत्तविशेषे ॥ द्विजवरयुगमिहरचयमिलघुकगयमयकलय । सुललितकलितरसपदिसरसिजमुखिभवतियदि । अगतिविदितसुललितमितिवरफणिपतिरिति वदति ॥ यथा । प्रविचलकुवलयनयनजलनिधिकृतवरशयन । दितितनयनिवहदमनशमनविविधभयशमन । मयिवरमुपनयसुचिरमभिनवजलधररुचिर ॥ त्रि॰ अतिसुभगे ॥ सुकोमले ॥

सुलेखा । स्त्री॰ दुर्गायाम् ॥

सुलोचन : । पुं॰ श्रीकृष्णे ॥ शोभनं लोचनं नयनं ज्ञानं वास्य ॥ मृगे । हरिणे ॥ त्रि॰ शोभननेत्रविशिष्टे ॥ शोभनेलोचनेयस्य स : ॥

सुलोचना । स्त्री॰ सुमेधायाम् ॥ माधवराजपत्न्याम् ॥

सुलोमशा । स्त्री॰ का...जङ्घायाम् ॥ त्रि॰ शोभनलोम...ो ॥

सुलोमा । स्त्री॰ मांसच्छदायाम् ॥ ताम्रवल्याम् ॥

सुलोहकम् । न॰ पित्तले ॥

सुलोहित : । पुं॰ सुन्दररक्तवर्णे ॥ त्रि॰ तद्वति ॥

सुलोहिता । स्त्री॰ अग्निजिह्वाविशेषे ॥

सुवक्त्र : । पुं॰ वनबर्ब्वर्याम् ॥ न॰ सुन्दरानने । त्रि॰ तद्वति ॥

सुवचनम् । न॰ सुप्रलापे । शोभनोक्तौ ॥ शोभनं वचनम् ॥

सुवचा : । त्रि॰ वाग्मिनि ॥ सुष्ठु वक्ति । वच॰ । सर्व्वधातुभ्योऽसुन् ॥ यद्वा । मिथुनेऽसि : । उपसर्गविशिष्टोधातुमिथुनम् । तत्रासुनोपवादोऽसि : । स्वरेभेद : ॥

सुवदन : । पुं॰ श्रीगणेशे । शोभनं वदनमस्य । त्रि॰ सुन्दराननवति ॥ न॰ शोभनानने ॥

सुवदना । स्त्री॰ सुन्दराननविशिष्टायांनार्याम् ॥ कृतिच्छन्द : २॰ प्रभेदे ॥ ज्ञेयासप्ताश्वषड्भिर्म्मरभनययुताभ्लौग : सुवदना ॥ यथा । प्रत्याहृत्येन्द्रियाणिस्त्वदितरविषयात्रासाग्रनयना॰ त्वांध्यायन्तीनिकुञ्जे परतरपुरुषं हर्षोत्थपुलका । आनन्दाश्रुप्लुताक्षीवसतिसुवदना योगैकरसिका॰ कामारिस्यन्तकामानमुनरकरिपोराधामसखी ॥ सुष्ठु शोभनं दननंयस्या : सा ॥

सुवन : । पुं॰ दिवानाथे । सूर्य्ये ॥ वह्नौ ॥ सूते॰ सूयतेवा । षूङ्प्राणिगर्भविमोचने । भूसूधूभ्रस्जिभ्यश्छन्दसीतिक्युन् ॥

सुवसा : । स्त्री॰ प्रौढायाम् ॥

सुवर्च्चक : । पुं॰ सर्ज्जिकाक्षारे ॥

सुवर्च्चला । स्त्री॰ सूर्य्यपत्नीविशेषे । मरुवायाम् । पतङ्गाम् ॥ ब्राह्म्याम् । आदित्यभक्तायाम् । हुलहुल॰ इ॰ प्र॰ शाके ॥ अस्यागुणा यथा । सुवर्च्चलाहिमारूक्षास्वादुपाकरसागुरु : । अपित्तलाकटु : क्षाराविष्टम्भकफवातजित् ॥ अन्यातिक्ताकषायोष्णासराक्षालघु: कटु : । निहन्तिकफपित्तास्रश्वासकासारुचिज्वरान् ॥ विस्फोटकुष्ठमेहास्रयोनिरुक्कृमिपाण्डुता:॥

सुवर्च्चा : । त्रि॰ दीप्तमति ॥ अतितेजस्विनि । शोभनंवर्च्चोयस्यस: ॥

सुवर्च्चिक : । पुं॰ सर्ज्जिकाक्षारे ॥

सुवर्च्चिका । स्त्री॰ अतुकायाम् । तरुवल्ल्याम् । अतुकायाम् । नियाम्यायाम् ॥ सर्ज्जिकाप्रभेदे । सोरा॰ इ॰ भा॰ प्र॰ ॥ सुवर्च्चिकासर्ज्जिकावद्बोद्धव्यागुणतोजनै:॥

सुवर्च्ची । स्त्री॰ सर्ज्जिकाक्षारे ॥

सुवर्ण : । पुं॰ स्वर्णकर्षे । विस्तौ । हेम्नोऽक्षे । हेम : षोडशसुमाषेषु ॥ षोडशभिर्माषै : परिमितेपरिमाणविशेषे ॥ सुवर्णाली ॥ सुवर्णनामनिर्यासे ॥ धत्तूरे ॥ लङ्कादिद्वीपवत्॰ समुद्रान्तर्वर्त्तिमिद्वीपविशेषे ॥ कणगुग्गुलौ ॥ न॰ सोना॰ इ॰ भा॰ प्र॰ धातुश्रेष्ठे । तत्पर्य्यायायथा । स्वर्णंसुवर्णंकनकंहिरण्यंहेमहाटकम् । तपनीयंशातकुम्भंगाङ्गेयंभर्मकर्बुरम् ॥ चामीकरंजातरूपंमहारजतकाञ्चने । रुक्मंकार्त्तस्वरंजाम्बूनदमष्टापदोऽस्त्रियामिति ॥ तस्यभायेत्वंसर्वदेवतात्मकत्वस्तोका रामायणे॰ महाभारतेचपरशुरामंप्रतिवशिष्ठवाक्यम् । सर्वरत्नानिनिर्मथ्यतेजोराशिसमुत्थितम् । सुवर्णमेभ्योविप्रेन्द्ररत्नंपरमनुत्तमम् ॥ एतस्मात्कारणाद्देवगन्धर्वोरगराक्षसा : । मनुष्याश्चपिशाचाश्चप्रयताधारयन्तितत् ॥ तथा । तस्मात्सर्वपवित्रेभ्य : पवित्रंपरमंस्मृतम् ॥ तथा । अग्निर्वैसकलादेवा : सुवर्णञ्चतदात्मकम् । तस्मात्सुवर्णंददतादत्ता : स्यु : सर्वदेवता: ॥ तस्मात्पादेनधार्यम् ॥ चस्योत्पत्तिर्हेम्नि॰ गुणाश्चस्वर्णेद्रष्टव्या : ॥ कृष्णागुरुणि ॥ हरिचन्दने ॥ स्वर्णगैरिके । विस्ते । धने ॥ नागकेशरे ॥ पुं॰ न॰ हेम्नोऽक्षे । अशीतिरक्तिकापरिमितेस्वर्णे ॥ त्रि॰

उत्कृष्टवर्णे ॥ शोभनो वर्णः स्तुतिर्वा सुष्ठु वर्ण्यते वा । वर्ण वर्णने । ण्यन्तः । एरच् ॥

सुवर्णकः । पुं॰ आरग्वधवृक्षे ॥ पुष्पैः शोभनो वर्णोऽस्य ॥ न॰ पित्तले ॥

सुवर्णकदली । स्त्री॰ कनकमोचायाम् । चम्पकरम्भायाम् । चम्पाकेला॰ इ॰ भा॰ प्र॰ ॥

सुवर्णकारः । पुं॰ स्वर्णकारे ॥

सुवर्णकेतकी । स्त्री॰ हेमकेतक्याम् ॥

सुवर्णगैरिकम् । न॰ गैरिकप्रभेदे । स्वर्णधातौ । सुरक्तके । सन्ध्याभ्रे । बानीमाटी॰ पीलागेरु॰ इ॰ भा॰ प्र॰ ॥ सुवर्णगैरिकन्त्वन्यत्ततोरक्ततरं हितत् । ततो गैरिकात् ॥ अस्यगुणाः । गैरिकं मधुरं शीतं कषायं व्रणरोपणम् । विस्फोटाशोऽग्निदाहघ्नं वरं स्वर्णादिकं शुभम् ॥

सुवर्णनकुली । स्त्री॰ महाज्योतिष्मत्याम् ॥

सुवर्णपुष्पः । पुं॰ राजतरुण्याम् ॥

सुवर्णप्रसरम् । न॰ एलबालुके ॥

सुवर्णमाक्षिकम् । न॰ स्वर्णमाक्षिके ॥

सुवर्णयूथी । स्त्री॰ सुगन्धायाम् । हेमपुष्पिकायाम् । सोनजुही॰ इ॰ भा॰ प्र॰ ॥

सुवर्णवणिक् । पुं॰ अम्बष्ठाद्वैश्यकन्यायां जाते वर्णसङ्करजातिविशेषे । कस्यद्वणिग्विशेषस्य संसर्गात्स्वर्णकारिणः । स्वर्णचौर्यादिदोषपतितो ब्रह्मशापतः ॥

सुवर्णवर्णः । पुं॰ विष्णौ । त्रि॰ रुक्मवर्णे ॥ सुवर्णस्येव वर्णोऽस्य ॥

सुवर्णवर्णा । स्त्री॰ काञ्चन्याम् । हरिद्रायाम् ॥

सुवर्णबिन्दुः । पुं॰ विष्णौ । हरौ ॥ बिन्दवोऽवयवाः सुवर्णसदृशा अस्य ॥ शोभनं वर्णमक्षरम् बिन्दुश्च यस्मिन्मन्त्रे तदात्मकोवा ॥

सुवर्णा । स्त्री॰ स्वर्णक्षीर्याम् ॥ हरिद्रायाम् ॥ वाल्यालके ॥

सुवर्णाख्यः । पुं॰ नागकेशरे । धत्तूरे ॥

सुवर्णी । स्त्री॰ आखुपर्ण्याम् ॥

सुवर्त्तुलम् । न॰ कालिङ्गे ॥

सुवल्लिः । स्त्री॰ सोमराज्याम् ॥ शोभना वल्लिरस्याः ॥

सुवल्ली । स्त्री॰ सोमराज्याम् ॥ कट्व्याम् ॥

सुवसन्तः । पुं॰ मधूत्सवे । चैत्राक्षाम् ॥

सुवसन्तकः । पुं॰ वासन्त्याम् । मदनोत्सवे ॥

सुवहः । त्रि॰ सुखवाह्ये ॥ सुखेन वहति । वह॰ । पचाद्यच् ॥ पुं॰

वायो : प्रमेहे ॥
सुवहा । स्त्री॰ गोधापद्याम् ॥ सु ष्ठु वहत्यामोदम् । वह॰ । अच् । टाप् ॥ अश्वक्षोद्रुमे ॥ एलापर्ण्याम् ॥ तुरुष्याम् ॥ वीणायाम् ॥ रास्नायाम् ॥ शेफालिकायाम् ॥ विद्दतायाम् ॥ नीलसिन्धुवारके ॥ रुद्रजटायाम् ॥ हंसपद्याम् ॥ मुसल्याम् ॥
सुवास : । पुं॰ शोभनगन्धे ॥ उत्तमनिवासे ॥
सुवासा: । त्रि॰ । निर्व्विकवाससि ॥
सुवासिनी । स्त्री॰ ऊढाल्पवय : स्त्रियाम् । चिरण्टयाम् ॥ सुष्ठुतीव वसति पितृगेहे॰ तच्छीला । सुप्य जातौ विति णिनि : । यदोक्तं स्मार्णवे । विवाहितापदेवेशिवाला एवकुमारिका : । सुवासिन्योम-हाप्रौढा : संशयेनाच्चिसुवृते । इति ।
सुविक्रम : । पुं॰ सुष्ठु पादविन्यासे ॥ विक्रमस्यसौष्ठवंनामगजसिंहादिगतिसदृशत्वम् । त्रि॰ तद्वति ।
सुविज्ञ : । त्रि॰ अतिनिपुणे ॥
सुविज्ञेय : । त्रि॰ सम्यग्ज्ञातुंशक्ये ॥
सुविदत्रम् । न॰ कुटुम्बे ॥ सुष्ठुवेत्ति । विदज्ञाने । सुविदेः कत्र : ॥
सुविदित : । त्रि॰ प्रख्याते ॥
सुविधि : । पुं॰ उत्तमविधाने ॥ अर्हद्विशेषे ॥
सुविनीत: । त्रि॰ अतिविनयविशिष्टे
सुविनीता । स्त्री॰ सुकरायाम् ॥
सुवीजम् । न॰ खसखसे । त्रि॰ साधुवीजे ॥
सुवीर : । पुं॰ देशविशेषे । त्रि॰ सुष्ठुवीरे । शोभनाविविधाङ्कुरागलयोऽस्य ॥ शोभनवीर्यपिते ॥
सुवीरकम् । न॰ सौवीराञ्जने । पुं॰ एकवीरवृक्षे ॥
सुवीरजम् । न॰ सौवीराञ्जने । सुवीरेजातम् । जनी॰ । ड: ॥
सुवीराम्लम् । न॰ काञ्जिके । सुवीरेषु॰ अभिषुतमम्लम् । शाकपार्थिवादि: ॥
सुवीर्य्यम् । न॰ वदरे ॥ उत्तमवीर्ये । त्रि॰ तद्वति ॥
सुवीर्य्या स्त्री॰ नाडीहिङ्गुनि ॥ वनकार्पास्याम् ॥ महाशतावर्य्याम् ॥
सुवृत्त: । पुं॰ शूरणे ॥ त्रि॰ सदाचारनिष्ठे ॥ सुष्ठु वर्त्तुले । परिवर्त्तुले ॥
सुवृत्ता । स्त्री॰ काकलीद्राक्षायाम् ॥ शतपत्र्याम् ॥
सुवृष्टि : । स्त्री॰ सम्यक्छोभनवर्षणे ॥
सुवेगा । स्त्री॰ महाज्योतिष्मत्याम् ॥
सुवेल : । पुं॰ त्रिकूटाचले ॥ त्रि॰

प्रशान्ते ॥ शान्ते ॥

सुवेश : । पुं॰ श्वेतेक्षौ ॥ त्रि॰ उचितशृङ्गारसम्पन्ने ॥

सुव्रत : । पुं॰ श्रीहरौ ॥ शोभनंव्रतमस्य । यथा । सकृदेवप्रपन्नायतवास्मीतिचयाचते । अभयंसर्वथातस्मै ददाम्येतद्व्रतंममेति ॥ यद्वा । शोभनंव्रतयतिभुङ्क्ते सुदामादत्तपृथुकादीनीति॰ सुष्ठुव्रतमतिभोजनान्निवर्त्ततेनरनारायणरूपेणतपश्चरन्निति वा । व्रताच्चीजन्नेनिवृत्ताविति णिजन्तात्पचाद्यच् ॥ शिवमहल्याप ॥ भाविकल्पीयार्हद्विशेषे ॥ वर्त्तमानकल्पीयार्हद्विशेषे त्रि॰ शोभनव्रतयुक्ते । सद्व्रते ॥

सुव्रता । स्त्री॰ सुखसंदोह्यायाङ्गवि ॥ शोभनंव्रतमस्या : ॥ सद्व्रतायाम् ॥ शच्याम् ॥ वर्त्तमानकल्पीयार्हन्मातरि ॥

सुशर्म्मा । पुं॰ भारतादिप्रसिद्धेक्षत्रियविशेषे ॥ शोभनंशृणाति । शॄ॰ । अन्येभ्योपिदृश्यन्तइतिमनिन् ॥ मिथुनेमनिरितिमनिर्वा ॥

सुशल्प : । पुं॰ खदिरे ॥

सुशाक : । पुं॰ तण्डुलीये ॥ पिण्डायाम् ॥ चञ्चौ । पत्रशाकविशेषे । विजलायाम् । चञ्चुपर्णे ॥ न॰ आर्द्रके ॥

सुशान्ता । स्त्री॰ कल्किपुराणप्रसिद्धायाम् शशिध्वजराजपत्न्यां ॥

सुशिख : । पुं॰ अग्नौ ॥ त्रि॰ उत्तमशिखावति ॥

सुशिखा । स्त्री॰ मयूरशिखायाम् ॥

सुशीत : । पुं॰ प्लक्षवृक्षे ॥ न॰ पीतचन्दने ॥

सुशीतलम् । न॰ गन्धतृणे ॥ त्वपुषे । खीरा॰ काकडी॰ इ॰ प्र॰ ॥ कत्तृणे ॥ त्रि॰ । अतिशीतगुणविशिष्टे ॥

सुशीता । स्त्री॰ शतपत्र्याम् ॥

सुशील : पुं॰ विष्णोर्दूतविशेषे ॥ त्रि॰ सद्वृत्ते । शोभनशीलयुक्ते ॥ शोभनंशीलंयस्यस : ॥

सुशीला । स्त्री॰ श्रीकृष्णस्याष्टमहिष्यन्तर्गतमहिषीविशेषे ॥ इतिपद्मपुराणम् ॥

सुश्राव्यम् । न॰ नलरामयुधिष्ठिरादीनांयशसि ॥ शोभनवाक्ये ॥

सुश्री : । त्रि॰ सुंदरे ॥ शोभनाश्रीर्यस्य ॥

सुश्रीक : । त्रि॰ शोभनश्रीविशिष्टे ॥

सुश्रीका । स्त्री॰ शल्लक्यां ॥

सुश्रुत : । पुं॰ विश्वामित्रमुनिपुत्रे॰ चिकित्साशास्त्रकर्त्तरि ॥ चिकित्साग्रन्थविशेषे । सुश्रुतेनकृतंतन्त्रं सुश्रुतंबहुभिर्यत : । तस्मात्तत् सुश्रुतंनामविख्यातंक्षितिमण्डले ॥

सुशुश्रुवान् । त्रि॰ सुश्रुतवति ॥ शृणो

ति: क्रमु:॥

सुषमः। त्रि० चारौ। रुचिरे। शोभने। सुन्दरे॥ समे॥ सुशोभनं समं सर्वमस्य। सुविनिर्दुर्भ्य इति षः॥

सुषमा। स्त्री० परमायशोभायाम्। अनन्तशोभायाम्॥ जिनानाङ्कालभेदे॥ वर्णवृत्तविशेषे। कर्णौद्विलघुः कर्णौभगणः शेषे गुरुत्वापूर्णं चरणः। यस्मां भवितावालेपरमासैषा सुषमादोव्यत सुषमा॥ यथा। राणौनयनेकोलौकलहेप्रेयान् बद्किञ्चिन्नोकुरुते। धन्या रमणौ सर्वसहते दुःखं सुखवत्सा जन्मनि॥ शोभनं समं सर्वमनया। सुविनिर्दुर्भ्यः सुपिसूतिसमाइति षत्वम्॥

सुषवी। स्त्री० कारव्याम्। कृष्णजीरके॥ जीरके॥ कारवेल्ले॥ सुखं सुवति। षू प्रेरणे। अच्। गौरादि:। उपसर्गात्सुनोतीति षत्वम्॥ सुषवणा वा। स्वरादेरप्। सीस्य था:। पिप्पल्यादि:॥ चतुष्कारवेल्ले। इति राजनिर्घण्ट:॥

सुषि:। स्त्री० छिद्रे॥ सुष्ठु स्यति। षो०। उपसर्गे घो: किरिति वाहुलकात् कि:॥

सुषिरम्। न० विवरे। बिले। छिद्रे सुषिरे॥ सुषिरस्त्यस्य। अथ सुषि

सुष्ठुमधीरः।

सुषीम:। पुं० सर्पविशेषे॥ चन्द्रकान्तमणौ॥ त्रि० शिशिरे। शीतगुणयुक्ते॥ चारौ। रम्ये। मनोज्ञे सुष्ठु सीमामर्यादायस्य। सुषामादिषु चेति षत्वम्॥

सुषुप्त:। पुं० न० स्वप्नान्ते॥ सुषुप्तावस्थं तमोऽज्ञानं बीजं स्वप्नप्रबोधयो:॥ सुषुप्त्यवस्थायाम्॥ यथा। योजागरेर्बहिरनुक्षणधर्मिणोर्थान् भुङ्क्ते समस्तकरणै: हृदि तत्सदृशान्। स्वप्ने० सुषुप्तउपसंहरते। सएष: स्मृत्यन्वयात्त्रिगुणवृत्तिदृगिन्द्रियेश:। इति भा० ११ स्कं० ११ऽध्याय:॥ त्रि० सुषुप्तियुक्ते॥

सुषुप्तस्थान:। पुं० प्राज्ञे॥ सुषुप्तं स्थानमस्य॥

सुषुप्ति:। स्त्री० सर्वोपरमावस्थायाम्। अहं किमपिनज्ञासिषमिति निद्राऽनुभूतेश्च प्रकारेसत्प्रधानेऽज्ञाने॥ तज्ञानामान्तरङ्कारणशरीरम्० आनन्दमयकोष इति॥ सर्वस्थूलसूक्ष्मोपाधे: कारणोपाधौ नौलत्वं सुषुप्तिरिति तल्लक्षणम्॥ शोभना सुप्ति: सुषुप्ति:॥

सुषुप्सु:। त्रि० स्वप्तमिच्छौ॥ स्वपे: सन्नन्तादुप्रत्यय:। रुदविदेत्या

दिनासन : क्विस्वाहविस्वपीत्यादिनासम्प्रसारणम् ॥

सुषुम्णा । स्त्री॰ नाडीविशेषे ॥ सा च । चूडापिलङ्ग्योर्मध्येवर्त्तमाना॰ पृष्ठवंशान्तर्गतानाडी॰ सुषुम्णेत्युच्यते ॥ शोभनं सुम्नं सुखं यस्याम् ॥ पुं॰ ॥

सुषेण: । पुं॰ करमर्द्दे ॥ विष्णौ ॥ सुग्रीववैद्ये ॥ तारायाशालिभार्याया: पितरि ॥ वेतसे ॥ शोभनासेनायस्य । एतिसंज्ञायामगादितिषत्वम् । रषाभ्यामितिणत्वम् ॥

सुषेणिका । स्त्री॰ कृष्णत्रिवृतायाम् ॥ सुष्ठुसेनयति । सेनाशब्दात्॰ सत्यापपाशेतिणिच् । पचाद्यच् । एतिसंज्ञायामगादितिषत्वम् । णत्वम् । स्वार्थेकन् ॥

सुषेणी । स्त्री॰ त्रिवृति ॥

सुषोमा । स्त्री॰ नदीभेदे ॥

सुष्ठु । अ॰ प्रशंसने ॥ अत्यर्थे ॥ सुतिष्ठति॰ सुस्थानं वा॥ ष्ठा॰ । अपदुस्सुषुस्थइतिकु: । सुषामादित्वात्षत्वम् ॥

सुसंयत । त्रि॰ कृतसंयमे । यथाविधिसंयमविशिष्टे ॥

सुसंवृत: । त्रि॰ सिद्धे ॥ अतिनिगूढे । आचारनिर्द्धारविहारयोगा: सुसंवृताधर्मविदातुकार्य्या: ॥

सुसंस्कृत: । त्रि॰ घृतादिनानाद्रव्येणप्रयत्नत: सुपक्वव्यञ्जनादौ । प्रयत्ते ॥ सुष्ठुसंस्क्रियतेस्म । कर्मणिक्त: । सम्परिभ्यामितिसुट् ॥

सुसंस्थान: । त्रि॰ शोभनाकृतौ ॥

सुसत्या । स्त्री॰ जनकभार्यायाम् ॥

सुसम्पत्॰द् । स्त्री॰ परभागे ॥

सुसम्मृष्ट: । त्रि॰ अलङ्कृते ॥

सुसह: । त्रि॰ दु:सहभिन्ने ॥

सुसाध्य: । त्रि॰ सुकरे ॥

सुसार: । पुं॰ रक्तखदिरे ॥ मणिविशेषे ॥ त्रि॰ अतिशयसारवति ॥ शोभन: सारोऽस्य ॥

सुसारवत् । न॰ स्फाटिके ॥

सुसिकता । स्त्री॰ शर्करायाम् ॥ शोभनवालुकायाम् ।

सुसीमा । स्त्री॰ साधुसीम्नि ॥ वृत्रहन्मातरि ॥

सुसेव: । त्रि॰ सुष्ठुसेवितुंयोग्ये ॥

सुस्थ: । त्रि॰ नीरोगे । स्वस्थे ॥

सुस्थता । स्त्री॰ आरोग्ये ॥

सुस्थिर: । त्रि॰ चाञ्चल्यरहिते । स्थिरतरे ।

सुस्ना । स्त्री॰ खल्लकारी । खिसारी॰ इ॰ प्र॰ शमीधान्ये ॥ सुस्नादुर्वालताकृत्ताकषायाविषदागुरुरिति- राजनिर्घण्ट: ॥

सुस्नात: । पुं॰ यज्ञान्तस्नानकृति । त्रि॰ सुन्दररूपेणकृतस्नाने ॥

सुस्नातक: । पुं॰ शोभनस्नातके ।

सुस्मितः । त्रि॰ सुन्दरेषद्धास्ययुक्ते ॥
सुस्वादुः । त्रि॰ सुमधुरे ॥
सुहस्तिः । पुं॰ बौद्धभेदे ॥
सुहितः । त्रि॰ विहिते । तृप्ते ।
सुहिता । स्त्री॰ अग्निजिह्वाविशेषे ॥
सुहृत्तमः । त्रि॰ उपकारानपेक्ष्योपकारके ॥
सुहृत्प्राप्तिः । स्त्री॰ अभ्यङ्गाख्यायां सिद्धौ । सुहृदां गुरुशिष्यसब्रह्मचारिणां संवादकानां प्राप्तिः । न्याये स्वयं परीक्षितमप्यर्थं तावन्न श्रद्दधाति । यावद्गुरुशिष्यसब्रह्मचारिभिः सहन संवाद्यते ।
सुहृत् । पुं॰ मित्रे । सदैवानुगतेऽपकारः स्वपरभूरिकार्याणां प्रायशोऽहि सुहृदः सहवासः ॥ शस्तचित्ते । प्रत्युपकारनिरपेक्षतयोपकारिणि । प्रत्युपकारमनपेक्ष्य॰ पूर्वं स्नेहसम्बन्धस्थविमैवोपकर्त्तरि । कृतोपकारे ॥ सम्बन्धिनि । शोभनं हृदयमस्य । सुहृद्दुर्हृदाविति साधुः ॥ सहाये ॥ यथाहश्रुतिविचारः । चन्द्रश्चन्दनमिन्दुधामधवलारत्यो द्विरेफावलीझङ्कारोन्मुखराविलासविपिनोपान्तावसन्तोदयाः । मन्दध्वानधनोदयाश्चदिवसामन्दाः कदम्बानिलाः शृङ्गारप्रमुखाश्चकामसुहृदो नार्यो जितायाजिताः ॥ कामस्य सुहृदः सखायो नार्यो जिताया जिताः ॥ सर्वेषां तदुपरञ्जकत्वात् ॥ सर्वान्तर्यामिणि ॥
सुहृदयः । त्रि॰ सुचेतसि । सहृदये । हृदयालौ ॥ शोभनं हृदयमस्य । मित्रस्य विपक्षस्य हृदयस्य हृद्भावः ॥
सुहृद्वधः । पुं॰ शुचितादौ॰ मित्रस्य गुणे ॥ यथा । शुचितात्यागिताशौर्यं समानसुखदुःखिता । अनुरागश्च दाक्षिण्यं सत्यता च सुहृद्गुणाः ॥
सुह्मः । पुं॰ जातिविशेषे ॥ पुं॰ भूम्नि॰ नीवृद्विशेषे ॥ सुह्मानां निवासो जनपदः॰ सुह्माः । अणो लुप् । लुपियुक्तवद्भावः ॥
सूः । पुं॰ प्रसवे सवनम् षूङ् प्राणिप्रसवे । क्विप् ॥
सूकः । पुं॰ बाणे ॥ वाते ॥ उत्पन्ने ॥
सूकरः । पुं॰ वराहे । शूकरे । कुम्भकारे ॥ मृगविशेषे ॥ सवनम् । षूङ् प्राणिगर्भविमोचने । सम्पदादिः । सुवं प्रसवं करोति । कृञो हेत्विति टः ॥
सूकरी । स्त्री॰ क्षुपविशेषे ॥ वराहक्रान्तायाम् ॥ शूकरस्त्रियाम् ॥
सूक्ष्मम् । न॰ प्रवचने ॥ त्रि॰ गम्भी

रार्थे ॥ शोभनोक्तिविशिष्टे ॥ वेदोक्तस्तोत्रमन्त्रादौ ॥

सूक्तवाकः । पुं॰ इदं द्यावापृथिवीभद्रमभूदित्यादिकेमन्त्रे ॥ मन्त्रमात्रे । सुभाषिते ॥ सूक्तंवक्ति । वच॰ । घञ् ॥

सूक्ता । स्त्री॰ चित्राख्याम् । शारिकायाम् ॥

सूक्तिः । स्त्री॰ शोभनोक्तौ ॥

सूक्ष्मः । पुं॰ अणौ ॥ कतके । सूक्ष्मात्मनि ॥ जातिक्रियादिप्रवृत्तिनिमित्तशून्यत्वात्मनो रागादीन्द्रियाणामगोचरे परमात्मनि ॥ आत्मा सूक्ष्मोऽणुपरिमाणइतिकश्चित् । तन्न । युगपदशेषशरीरव्यापिवेदनानुसन्धानासिद्धेः ॥ न॰ कैतवे ॥ शाठ्ये अध्यात्मे । सूक्ष्मशरीरे ॥ अलङ्कारविशेषे ॥ यथा । कुतोपिलक्षितः सूक्ष्मोप्यर्थोन्यस्मै प्रकाश्यते । धर्मेणकेनचिद्यत्र तत्सूक्ष्मं परिचक्षते ॥ कुतोप्याकारादिङ्गिताद्वासूक्ष्म॰ स्तीक्ष्णमतिसंवेद्यः । उदाहरणम् । वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वाभिन्नं कुङ्कुमं कापि कण्ठे । पुंस्त्वं तन्व्याव्यञ्जयन्तीवयस्यास्मित्वापाणौखड्गलेखांलिलेख ॥ अत्राकृतिसालोक्यकयापिविततर्कितं पुरुषायितमसिलतालेखनेन वैदग्ध्योदभिव्यक्तिमुपनीतं पुंसा



मेवक्तृपाणिपाशितायोग्यत्वात् । यथावा । सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया । ईषन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥ अत्र जिज्ञासितः सङ्केतकालः कयाचिदिङ्गितमात्रेण विदितो निशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादितः ॥ त्रि॰ अल्पे । स्तोके ॥ इन्द्रियागोचरे ॥ सूच्यते । सूचपैशुन्ये । सूचेः स्मन् ॥

सूक्ष्मकृष्णफला । स्त्री॰ मध्यमजम्बूवृक्षे ॥

सूक्ष्मतण्डुलः । पुं॰ खसखसे ॥

सूक्ष्मतण्डुला । स्त्री॰ पिप्पल्याम् ॥

सूक्ष्मदर्शी । त्रि॰ प्रण्डिते ॥ कुशाग्रीयमतौ । प्रत्युत्पन्नमतौ ॥ विशेषज्ञे । इन्द्रियेभ्यः पराह्यर्था इत्यादिप्रकारेण सर्वविशेषसूक्ष्मतापारम्पर्यदर्शनेन॰ परं सूक्ष्मं द्रष्टुं शीलं यस्य तस्मिन् ॥

सूक्ष्मदलः । पुं॰ देवसर्षपे ॥

सूक्ष्मदला । स्त्री॰ दुरालभायाम् ॥

सूक्ष्मदारु । न॰ फलिञ्जे(?) ॥ तनुकाष्ठे ॥

सूक्ष्मपत्रः । पुं॰ धान्यके ॥ वनजीरके ॥ देवसर्षपे ॥ लघुबदरे ॥ सुरपर्णे ॥ वनबर्बर्याम् ॥ लोहितेचौ(?) ताम्रचूडे । कुक्कुरद्रौ । कुकुरौ धा॰ इ॰ भा॰ प्र॰ ॥ बालक(?)

। स्वर्णपुष्पे ॥ न॰ वितुन्नके ॥ सूक्ष्मैपत्रे ॥

सूक्ष्मपत्रक: । पुं॰ सूक्ष्मपत्रे ॥ स्वार्थेक: ।

सूक्ष्मपत्रा । स्त्री॰ क्षुद्रशम्यूम् ॥ शीवन्याम् । दीर्घपत्रायाम् । डिङ्गाम् ॥

सूक्ष्मपत्रिका । स्त्री॰ शतपुष्पायाम् ॥ शतावर्याम् । क्षुद्रोपोदिकायाम् दुरालभायाम् । आकाशमांस्याम् ॥ लघुब्राह्म्याम् ॥

सूक्ष्मपत्री॰ स्त्री॰ आकाशमांस्याम् ॥

सूक्ष्मपर्णा । स्त्री॰ जीर्णदारुणि । जीर्णफलम्याम् ॥ डिङ्गाम् ॥

सूक्ष्मपर्णी । स्त्री॰ रामदूत्याम् । नागदन्तिकायां ॥

सूक्ष्मपिप्पली । स्त्री॰ वनपिप्पल्याम् ॥

सूक्ष्मपुष्पी । स्त्री॰ यवतिक्तायाम् ॥ गर्भे ।

सूक्ष्मप्रपञ्च । : पुं॰ हिरण्यगर्भे ।

सूक्ष्मफल : । पुं॰ भूकर्बुदारे ॥

सूक्ष्मफला । स्त्री॰ तामलक्यां ॥

सूक्ष्मबदरी । स्त्री॰ भूबदर्यां ॥

सूक्ष्मभुवनाष्टकम् । न॰ अमरपुरविशेषेषु ॥ यथा । सूक्ष्मामरपुराण्यष्टौ बुद्धौ पैशाचमादित : । राक्षसं याक्षगान्धर्वं माहेन्द्रसमदर्शिमत् ॥ सौम्यं प्राजेश्वरं ब्राह्मं दीप्तपरमयाश्रियेति । बुद्धितत्त्व॰ सूक्ष्मभुवनाष्टकम् । तेषु पैशाचमादितस्त्वादौ पैशाचम् । ततो राक्षसादि । ब्राह्मं॰ दीप्तपरमयाश्रियेति । महर्द्धिमतो माहेन्द्राद्य्यतिशयाय । अधिककान्ति ॥ इ॰ मृ॰ सं॰ ता ॥

सूक्ष्मभूतम् । न॰ अपञ्चीकृताकाशादिभूते ॥

सूक्ष्ममरिचक : । पुं॰ मशके ॥

सूक्ष्ममूला । स्त्री॰ जयायाम् । वैजयन्तिकायाम् । जाहि॰ इ॰ प्र॰ पुष्पवृक्षे सूक्ष्ममूलमश्या : ॥

सूक्ष्मबदरी । स्त्री॰ भूबदर्याम् ॥

सूक्ष्मवल्ली । स्त्री॰ जतुकायाम् ॥ ताम्रवल्ल्याम् ॥

सूक्ष्मवस्त्रम् । न॰ सूक्ष्माम्बरे ॥

सूक्ष्मवीज : । पुं॰ खसखसे ॥

सूक्ष्मव्रण : । पुं॰ किणे ॥

सूक्ष्मशरीरम् । न॰ सप्तदशावयवे लिङ्गशरीरे ॥ विज्ञानमयमनोमयप्राणमयकोशा : ॰ ज्ञानेच्छाक्रियाशक्तिप्रधाना : एतत्कोशत्रयमिलितमत्॰ सूक्ष्मशरीरमित्युच्यते । यथाह भगवतीहिमाद्रिं प्रतिदेवीगीतायाम् । ज्ञानेन्द्रियाणि पञ्चैवपञ्चकर्मेन्द्रियाणि च । प्राणादिपञ्चकञ्चैव धिया च सहितं मन : ॥ एतत्सूक्ष्मशरीरं स्यान्ममलिङ्गं यदुच्यते । इति । सूक्ष्मस्थतत्॰ शरीरञ्च ॥

सूक्ष्मशर्करा । स्त्री० वालुकायाम् ॥
सूक्ष्मशाखः । पुं० आलवबुरे ।
सूक्ष्मशालिः । पुं० धान्यविशेषे । सूचिशालौ ॥
सूक्ष्मषट्चरणः । पुं० पद्मयूके ॥
सूक्ष्मा । स्त्री० यूथिकायाम् ॥ वालुकायाम् ॥ क्षुद्रैलायाम् ॥ करुण्याम् । सूचे: स्मनिकृतेटाप् ॥ आम्नातकीश्वराधिवासिन्यामम्बायाम् ॥
सूक्ष्मैधयम् । न० शिल्पविद्याप्रसिद्धयन्त्रविशेषे ॥
सूक्ष्मैला । स्त्री० उपकुञ्चिकायाम् । त्रिपुट्याम् । त्रुटी । छोटीइलायची० इ० भा० ॥ अस्या गुणा यथा । एलासूक्ष्मा कफश्वासकासार्शीमूत्रकृच्छ्रहृत् । रसे तु कटुका शीता लघ्वी वातहरीमता ॥
सूचः । पुं० दर्भाङ्कुरे ॥ सीव्यति । सिवुतन्तुसन्ताने । सिवेष्टेरूचेति चट् ॥
सूचकः । पुं० सीवनद्रव्ये । वेधकी ॥ शुनि । वोतौ । बिडाले ॥ काकी । वायसी । बुद्धे । सिद्धे ॥ पिशाचे ॥ कथके ॥ सूक्ष्मशालौ ॥ सूत्रधारे ॥ त्रि० पिशुने । दुर्जने । कर्णेजपे । परदोषोद्भासके । परश्वसतामसतान्दोषाणांख्यापके ॥ सूचयति । सूचपैशुन्ये० ट

स्यादिरट्कः । ण्वुल् ॥
सूचनम् । न० गन्धने ॥ ज्ञापने ॥ सूच० । ल्युट् ।
सूचना । स्त्री० व्यधने । वेधनेहष्टौ । हष्टौ ॥ गन्धने । अभिनये । टाप्
सूचिः । स्त्री० व्यधिन्याम् । सूच्याम् । सुई० इ० भा० प्र० ॥ नृत्यप्रभेदे ॥ शिखायाम् । सूच्यतेऽनया । सूच० । अचइ: ॥ अल्पर्गले ॥
सूचिकः । पुं० सौचिके । तुन्नवाये ॥
सूचिका । स्त्री० सूच्याम् । सीवनद्रव्ये ॥
सूचिकाधरः । पुं० गजे । हस्तिनि ।
सूचिकापुष्पः । पुं० केतक्याम् ।
सूचिकाभरणम् । न० औषधविशेषे ॥
सूचिकामुखम् । न० जलकरङ्के । जलजीशङ्खे । त्रि० सूच्यास्ये ।
सूचितः । त्रि० ज्ञापिते ॥ सङ्क्षेपतोदर्शिते । सूच० । क्तः ।
सूचिपत्रः । पुं० शितावरशाके ॥
सूचिपुष्पः । पुं० केतकवृक्षे ॥
सूचिरोमा । पुं० शूकरे ॥
सूचिवान् । पुं० गरुडे ॥ इ० भा० र० लौ ॥
सूचिवदनः । पुं० नकुले । मशके ॥ सूचितुल्यंवदनंयस्य ॥
सूचिशालिः । पुं० सूक्ष्मशालौ ॥

सूची । स्त्री॰ सीवनसाधने ॥ आङ्गिकाऽभिनयान्तरे । अङ्गहारचेष्टायाम् ॥ स्त्रियाः करणं ॥ सीव्यतेऽनया । षिवु तन्तुसन्ताने । सिवेष्टेरूच्चेतिचट् । टित्त्वान्ङीप् ॥ त्रि॰ पिशुनइति॰ श्रीधरस्वामिनः ॥

सूचीदलः । पुं॰ सितावरे ॥

सूचीपत्रा । स्त्री॰ गण्डदूर्वायाम् ॥ जलस्थायाम् ॥

सूचीपाशः । पुं॰ सूचीबन्धनहेतुभूते छिद्रे ॥

सूचीपुष्पः । पुं॰ केतक्यां ॥

सूचीमुखः । पुं॰ शुक्लदर्भे ॥ व्यूहविशेषे ॥ न॰ हीरके ॥ नरकान्तरे ॥ त्रि॰ सूच्यास्ये ॥

सूचीरोमा । पुं॰ सूकरे । त्रि॰ सूचीतुल्यरोमविशिष्टे ॥ सूचीसदृशानि रोमाणि यस्य सः ॥

सूचीव्यूहः । पुं॰ सूच्याकारेव्यूहविशेषे ॥ पिपीलिकापङ्क्तिरिवाग्रपश्चाद्भावेन॰ संहतरूपतया॰ यत्र यत्र॰ सैनिकावस्थानं॰ सर्वाग्रप्रवीरपुरुषमुखः सूचीव्यूहः । सैन्याग्रतोभयेसतियायात् ॥

सूच्यग्रः । पुं॰ खरच्छदे । उलूखड॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ तृणविशेषे ॥ न॰ दर्भे ॥ सूच्यग्रभागे ॥

सूच्यग्रस्थूलकः । पुं॰ तृणविशेषे ॥ यथा । सूच्यग्रस्थूलकोदर्भोन्पुर्णाल्यश्च खरच्छद इतिरत्नमाला ॥

सूच्यास्यः । पुं॰ मूषिके ॥ मशानरकेशप्रभेदे ॥ त्रि॰ सूचीतुल्यमुखे ॥

सूच्याह्वः । पुं॰ सितावरे ॥

सूतः । पुं॰ सारथौ ॥ सुवतिगमयतिस्माश्वान् । षू॰ । गत्यर्थत्त्वात्क्तः ॥ त्वष्टरि । तक्ष्णि ॥ ब्राह्मण्यांक्षत्रियाज्जाते ॥ यथा । क्षत्रियाद्विप्रकन्यायां सूतोभवतिजातितइति । असवर्णविवाहासम्भवात् कन्याग्रहणं स्त्रीमात्रप्रदर्शनार्थम् । ब्राह्मण्यांक्षत्रियाज्जातः सूतनामा सञ्जायते ॥ पितामहदैवत्ये पृथोर्वैण्यस्ययज्ञे सूत्यांसोमाभिषवभूमौ सौत्येऽहनिसमुत्पन्नोनारायणांश॰ पुराणानांवक्तरि । पौराणिके ॥ यथोक्तंविष्णुपुराणे । तस्यैतदक्षिणेचक्रं दृष्ट्वातस्यपितामहः । विष्णोरंशंपृथुंमत्वापरितोषंपरंययौ ॥ तस्यैवजातमात्रस्ययज्ञेपैतामहेशुभे । सूतः सूत्यांसमुत्पन्नः सौत्येऽहनिमहामते ॥ तस्मिन्नेवमहायज्ञेजज्ञेप्राज्ञोथमागधः । प्रोक्तौतदामुनिवरैस्तावुभौसूतमागधौ ॥ स्तूयतामेषनृपतिः पृथुर्वैण्यः प्रतापवान् । इति १ अंशे १३ऽध्यायः ॥ बन्दिनि ॥ सूर्ये ॥

पुं॰ न॰ पारदे ॥ त्रि॰ प्रसूते ॥ प्रेरिते ॥ सुवति॰ सूयतेस्मवाभिवि न । षू प्रेरणे । क्तः ॥

सूतकः । पुं॰ न॰ पारदे । रसे ॥ न॰ जन्मनि । जन्मनि ॥ जननाशौचे ॥ यथा । यावन्नच्छिद्यतेनालंतावन्नाप्नोतिसूतकम् । छिन्नेनालेततः पश्चात्सूतकन्तुविधीयते ॥ अपिच । मृतेनसूतकंगच्छेन्नेतरत्सूतकेनतु ॥ ब्रह्मनुरपि । शावस्योपरिशावेतुसूतकेोपरिसूतके । शेषाहोभिर्विशुद्धिः स्याद्दुरक्यां सूतकंविनेति ॥ मरणाशौचे ॥ यथा । सर्वेगोत्रमसंस्पृश्यंतत्रस्यात्सूतकेसति । मध्येपिसूतकेदद्यात्पिण्डान्प्रेतस्यहव्यइति ॥ प्रतिबन्धके ॥ यथा । व्रतयज्ञविवाहेषुश्राद्धेहोमेऽर्चनेजपे । आरब्धे सूतकंनस्यादनारब्धेतुसूतकमिति ॥

सूतका । स्त्री॰ सूतिकायाम् । सूता शब्दात्स्वार्थेकन् । भूतकापुत्रिका वृन्दारकाणांवेतिसाधुः ॥

सूतकागृहम् । न॰ सूतिकागृहे ॥ सूतकायागृहम् ॥

| | |
|---|---|
| सूततनयः । सूतनन्दनः । सूतपुत्रः । सूतपुत्रकः । | पुं॰ कर्णे । कुन्त्या ज्येष्ठाऽपत्ये ॥ |

सूतराट् । पुं॰ पारदे । रसे ॥

सूतिः । स्त्री॰ प्रसवे ॥ सीमाभिषवभूमौ ॥

सूतिका । स्त्री॰ सूतकायाम् । नवप्रसूतायाम् ॥ तदन्नभोजनप्रायश्चित्तं यथा । चाण्डालान्नं भूमिपान्नंमज्जोविप्रवनीविनाम् । शौण्डिकान्नं सूतिकान्नं भुक्त्वामासंव्रतीभवेदितिस्मृतिः ॥

| | | |
|---|---|---|
| सूतिकागारम् । सूतिकागृहम् । सूतिकागेहम् । सूतिकाभवनम् । सूतिकावासः । | न॰ पुं॰ | प्रसवालये । अरिष्टे ॥ तस्याकृतिर्यथा । |

अष्टहस्तायतंचारुचतुर्हस्तविशालकम् । प्राचीद्वारमुदग्द्वारं विदध्यात्सूतिकागृहम् ॥ तत्रापिशाखानांवासीयथा । सर्वरोगानप्रतिघान्सूतिकागृहसेविनः । पृष्ठतः पाणिपादांश्चपृष्ठयोवान्सुरहसः । एवंविधानपिशाचांश्चदृष्ट्वाब्रह्मानुकम्पया । अन्तर्द्धानंवरंप्रादात्कामशायित्वमेवचेतिवह्निपुराणम् ॥ अपिच । सूतिकावासनिलयाजन्मदानामदेवताः । तासांयागनिमित्तन्तुशुद्धिर्जन्मनिकीर्त्तिता । षष्ठेह्निरात्रियागन्तुजन्मदानान्तुकारयेत् । इति सूतेर्वस्वार्थेकन् । सूतिकापुत्रिकेतिपक्षेऽसदृत्त्वम् । सूतिकायाः •

आगारं • गृहम् • गेहम् • भवनम् • आवासो वा ॥

सूतिकारोगः । पुं • नवप्रसूताया व्याधिभेदे ॥

सूतिकाषष्ठी । स्त्री • सूतिकागारे जातबालकस्य षष्ठदिने पूज्यदेवीविशेषे ॥

सूतिगृहम् । न • सूतिकागारे ॥

सूतिमासः । पुं • जन्ममासे । वैजनने ॥ सूतेः प्रसवस्य मासः ॥ सूतिमासो वैजननो नवमो दशमोऽपि चेति जटाधरः ॥

सूत्कटम् । न • गुडत्वचि । त्वक्पत्रे । चोचे

सूत्थामः । त्रि • दक्षे । चतुरे ॥ सु • उत्थानमुद्योगोऽस्य ॥ न • शोभनोत्थाने ॥

सूत्या । स्त्री • यज्ञस्नाने । अभिषवे । सवने ॥ युवत्याम् ॥ सूतयुवत्यामिति व्याडिदेशः ॥ सोमलतारसपाने • इति कश्चित् भरतः ॥

सूत्रम् । न • सूत्र • भा • प्र • वस्त्रारम्भके । तन्तौ ॥ व्यवस्थायाम् ॥ शास्त्रादिसूचनाग्रन्थे ॥ पदसाधकग्रन्थे ॥ सूत्रलक्षणन्तु । यथा । संज्ञा च परिभाषा च विधिर्नियम एव च । प्रतिषेधोऽधिकारश्च षड्विधं सूत्रलक्षणम् ॥ अपि च । अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुरिति ॥ सूचनात् सूत्रमुच्यते इति च ॥ सूत्र्यते । सूत्रवेष्टने • अदन्तः । एरच् ॥ सीव्यतेऽनेन वा । षिवु • । सिविमुच्योष्टेरूच्चेति षकारात् • कितृष्ट्रन्चप्रत्ययः ॥ भूतकारणे ॥ यथा । अण्डारम्भकभूतानामपञ्चीकृतभूतत्वम् । एतच्च कारणमित्थं तदागमेनावगम्यते ॥ अण्डारम्भकपञ्चभूतकारणस्यापञ्चीकृतपञ्चभूतत्कार्यात्मकसूत्रस्यागमैकगम्यत्वात् तर्कागम्यत्वम् । तत्स्मृतिम्प्रमाणयति । अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् । सूत्रान्तर्याम्यवराणि ताकिकानानुमन्वते ॥ तर्काभासो भवेत्तत्र हेतुदृष्टान्तवर्जनादिति ॥ पवनाच्च पवित्रसूत्रच्छदाः पुंसि चेति पुंस्त्वमपि ॥

सूत्रकण्ठः । पुं • विप्रे । द्विजन्मनि ॥ खञ्जरीटखगे ॥ कपोते ॥

सूत्रकोणः । पुं • डमरौ ॥

सूत्रगण्डिका । स्त्री • एषण्याम् ॥

सूत्रतन्तुः । पुं • सूत्रे ॥

सूत्रतर्कुटी । स्त्री • तर्क्वाम् । तर्कु वा • इ • भा • ॥

सूत्रधारः । पुं • इन्द्रे ॥ शचीपतौ ॥ नान्द्यन्तरसञ्चारिणि • नटविशेषे ॥ स तु रङ्गभूमिं परिक्रम्य नाटकीयकथासूत्रसूचकः । तल्लक्षणं यथा । चतुरातोद्यनिष्णा

तोऽनेकभूषासमावृतः । नानाभाषणतत्त्वज्ञो नानानाट्यार्थतत्त्ववित् ॥ नानागतिप्रचारज्ञो रसभावविशारदः । वेषोपचारचतुरो नानाशिल्पकलान्वितः । छन्दोऽभिधानतत्त्वज्ञः सर्व्वशास्त्रविचक्षणः । तत्तद्गीतानुगणकः कलातालावधारणः ॥ अवधार्य्यप्रयोक्ता च योक्तृणामुपदेशकः । एवं गुणगणोपेतः सूत्रधारः स उच्यते ॥ शिल्पकारिप्रभेदे । त्वष्टरि । रथकारे । वर्द्धकौ । इति हेमचन्द्रः ॥ इति भरतः । कुतारः । इति गौडे भाषा प्रसिद्धः ॥ सूत्रं धरति । धृ + अण् । कर्म्मण्यण् ॥

सूत्रपुष्पः । पुं॰ कार्पासे ॥

सूत्रभित् । पुं॰ सौचिकः । सौचिके । तुन्नवाये ॥

सूत्रमध्यभूः । पुं॰ धूनके । यक्षधूपे ॥

सूत्रयन्त्रम् । न॰ वापसूत्राद्यकाष्ठे । सूत्रवेष्टनकाष्ठे । तांत इति गौडभाषा प्रसिद्धः ॥ यथा । आवापनं सूत्रयन्त्रं यत् सूत्रैरभिवेष्ट्यते ॥ इति शब्दमाला ॥

सूत्रला । स्त्री॰ तर्कुश्याम् ॥ इति हारावली ॥

सूत्रवीणा । स्त्री॰ वीणाप्रभेदे । लाबुक्याम् ॥ इति हारावली ॥

सूत्रवेष्टनम् । न॰ तन्तुवायोपकरणे । वसरी । तासनी इति गौडभाषा प्रसिद्धः ॥ सूत्रस्य वेष्टनम् ॥ सूत्रं वेष्ट्यते वाऽनेनेति युवेति तुस्वामी ॥

सूत्रात्मा । पुं॰ समष्टिलिङ्गशरीराभिमानिनि चैतन्ये । हिरण्यगर्भे । सर्व्वत्रानुस्यूतत्वात् सूत्रात्मा ॥ वायौ ॥ यथा । योगाङ्गादिहेतुः स्थितो वायुः सूत्रात्मेति श्रुतीरितः ॥

सूत्रामा । पुं॰ शैलभिदि । इन्द्रे सुष्ठु उत् + अवत्य मन् पुनःपुनस्त्रायते । वेङ्पालने । आतोमनिन्क्वनिबादिनामनिन् ॥

सूत्राली स्त्री॰ गलसूत्रे । गलमेखलायाम् ॥ इति हारावली ॥

सूत्री । पुं॰ काके । अस्य पर्य्याया यथा । काकेतु करटारिष्ट बलिपुष्टसकृत्प्रजाः । ध्वांक्षात्मघोषपरभृद्बलिभुग्वायसा अपीत्यमरः । काकोऽरतज्वरः सूत्री श्राद्धको मूढमैथुनः । कारवः परभृल्लुण्टाकी मौद्गलिङ्गिकः । मक्रलः सत्यवाक् काणोऽपक्रष्टो नगरीवकः । ऐन्द्रिवनाडीजङ्घश्चित्रकाण्डेकाकवाचकाः ॥ त्रि॰ सूत्रविशिष्टे ॥

सूत्रोद्देशः । पुं॰ भूमिकायां ॥

सूदः । पुं॰ सूपकारे बल्लवे । आरालिके ॥ व्यञ्जने ॥ सारथ्ये ॥ लोध्रे ॥ अपराधे ॥ पापे ।

सूयते॰ सूद्यतिवा। षूदक्षरणे
एरच्। पचाद्यज्वा॥
सूदनम्। न॰ हनने॥
सूदशाला। स्त्री॰ रसवत्याम्। पा
कस्थाने। महानसे॥ रसोइ॰ इ॰
भा॰॥ सूदानांसूपकाराणांशाला॥
सूदाध्यक्षः। पुं॰ पाकशालाध्यक्षे
। पौरोगवे॥ तल्लक्षणंयथा। कुला
ह्यः शुचिर्दक्षविक्लितसिता
रदः। स्टूदशास्त्रविशेषज्ञः सूदा
ध्यक्षः प्रशस्यते॥ इतिमात्स्ये
१८९ऽध्यायः॥
सूनम्। न॰ प्रसवे॥ पुष्पे॥ पुं॰
किरणे। सूर्ये॥ वि॰ पुष्पिते॥
जाते॥ सवनम्॰ सूयतेवा। षूङ्
प्राणिप्रसवे। भावेकर्मणिवाक्तः।
स्वादयओदितइतिनिष्टानत्वम्॰
सूना। स्त्री॰ पुत्र्याम्॥ अधोजिह्वा
याम्॥ गजशुण्डिकायाम्। घण्टि
कायाम्॥ जन्तुवधस्थाने॥ यथा
। पञ्चसूनागृहस्थस्य चुल्लीपेषण्युप
स्करः। कण्डनीचोदकुम्भश्च बध्यते
यास्तुवाहयन्॥ सूनेः॰ सूना॰
हिंसास्थानगुणयोगात्॥ शुण्डा
याम्। वेश्यायाम्। सुनोत्यस्या
म्। षुञ्अभिषवे। सुञोदीर्घ
श्चेतिनः॥ यद्वा। सवनम्॰ सू
यतेवा। षूङ्प्राणिगर्भविमोचने
भावेकर्मणिक्तः। स्वादयओदित
इतिनिष्ठानत्वम्॥
सूनुः। पुं॰ पुत्रे॥ अनुजे॥ अर्के।
रवौ॥ सूयते। षूङ्प्राणिप्रसवे।
सुवः किदितिनुः॥ स्त्री॰ कन्या
याम्॥
सूनूः। स्त्री॰ कन्यायाम्॥
सूनृतम्। न॰ प्रियसत्योक्तौ। सत्य
प्रियवाक्ये॥ इन्द्रोभवानितिप्रिय
म्॰ नसत्यम्। काणोभवानिति
सत्यम्॰ नप्रियम्॥ मङ्गले॥ सु
ष्ठुनृत्यत्यनेन। नृतौ॰। घञर्थे
कः। अन्येषामपीतिदीर्घः॥
वि॰ तद्वति॥
सूनृता। स्त्री॰ प्रियसत्येवचसि। धृ
तौ॥ ऋतस्यसूनृतावाणीत्युक्तो॥
सून्मदः। वि॰ उन्मत्ते॥
सून्मादः। वि॰ उन्मन्दिष्णौ॥ उन्म
त्ते। उन्मादरोगविशिष्टे॥ सु॰
षु तिशयितउन्मादोऽस्य। सोपसर्ग
त्वान्मदेर्घञ्॥
सूपः। पुं॰ सूदे॥ भाण्डे॥ व्यञ्ज
ने। दाल्याम्॥ यथा। दलितन्तु
शमोधान्यं दालिर्दालीस्त्रियामुभे।
दालीतुसलिलेसिद्धालवणार्द्रकहि
ङ्गुभिः। संयुक्तासूपनाम्नीस्यात्
कथ्यन्ते तद्गुणाअथ॥ सूपोविष्टम्भ
कोरूक्षः शीतस्तुसविशेषतः। नि
स्तुषोभृष्टसिद्धः सलाघवंसुतरांभ
वेत्॥ शोभनाआपोऽस्मिन्। ऋक

षूरित्य: ॥ कुसुयुभ्यश्चेत्यपचतउत् ॥ अदनोरित्यचदीर्घनिर्देशादन्यचाप्यूदितिवा ॥ यद्वा । सवतिरसम् । सुप्रसवादौ । सुगृभ्यांनिच्चेतिपोदीर्घश्च ॥

सूपकार: । पुं॰ पाककर्त्तरि । बल्लवे । आरालिके ॥ औदनिके ॥ तल्लक्षणंयथा । कुह्नितोकारतत्त्वज्ञोवलवानूमिष्टपाचक: । शूरश्च कठिनश्चैवसूपकार: सउच्यते । अपिच । पितृपैतामहोदक्ष: शास्त्रज्ञोमिष्टवाचक: । शौचयुक्तो भमक्तश्चसूपकार: सउच्यते ॥ भवेयुर्धार्मिका: स्निग्धा: सूपकारा: प्रमागता: । धृतोष्णीषाश्चशुचयस्तथावैद्यवशेस्थिता: ॥ अन्येपितचयेकेचित्तवर्क्षिपरिचारका: । तेपि चेवंविधा एवतदध्यक्षोपितादृशद्रुति ॥ सूपंकरोति । कृ॰ । कर्मण्यण् ॥ शूद्रपाकोपजीविनि ॥

सूपकारपति: । पुं॰ पाचकाध्यक्षे तल्लक्षणंयथा । सूपकारपतिस्तत्र प्रायोवैद्यगुणान्वित: । तत्तद्व्यञ्जनतत्त्वज्ञस्तत्प्राशनतत्पर: । जीवनंजीवनामन्नंतद्युक्तंविधिपाचितम् । तदेवाविधिनाभुक्तंपरिणामेविषोपमम् ॥ सूपकाराणांपति: ॥

सूपधूपनम् । न॰ हिङ्गुनि ॥

सूपपर्णी । स्त्री॰ मुद्गपर्ण्याम् ॥

सूपश्रेष्ठ: । पुं॰ मुद्गे ॥

सूपाङ्गम् । न॰ हिङ्गुनि ॥

सूप्य: । पुं॰ वैदले । शमीधान्ये ॥

सूमम् । न॰ पुं॰ क्षीरे ॥ नभसि ॥ सूते । षूङ्प्राणिगर्भविमोचने । सूयतेवा । षूङ्प्राणिप्रसवे । इषियुधीन्धिदसिश्याधूसूभ्योमक् ॥ पुं॰ चन्द्रे ॥

सूर । पुं॰ सूर्ये । रवौ ॥ सुवति प्रेरयतिकर्मणिलोकम् । रप्रे । सुर्णे । सुसूधांगृधिभ्य: क्रन् ॥ यादवे । वसुदेवजनके । कुन्त्याईतृपितृविशेषे ॥

सूरण: । पुं॰ अर्शोघ्ने । शूरणे । कन्दे ॥ सूयते । सूरीहिंसायाम् । बहुलमन्यत्रापीतियुच् । कर्त्तरिल्युड्वा ॥ बाहुलेसूरणंनायात् ॥

सूरत: । त्रि॰ कृपालौ ॥ सुष्ठुरमते । रम॰ । क्त: । बाहुलकात् पूर्वपदस्यदीर्घ: ॥ सूरीकर्त्तुरत पतिवा । ड: ॥ उपशान्ते ॥ सौरमे: सोरमे: पूर्वपदस्यचदीर्घ: । क्त्वादनुनासिकलोप: ॥

सूरसूत: । पुं॰ अरुणे । गरुडाग्रजे ॥ सूरस्यरवे: सूत: सारथि: ॥

सूरि: । पुं॰ धीरे ॥ पण्डिते । सङ्ख्यावति ॥ सूते॰ सूयतेवा । षू

ङ् प्राणिगर्भविमोचने । प्राणिप्रसवे वा । सूङ् क्तिः ॥ यादवे ॥ सूर्ये ॥

सूरी । पुं॰ पण्डिते । विदुषि ॥ सूरः सूर्य्योऽस्त्युपास्यतयाऽस्य । अ तद्धनिठनाविति इनिः ॥ न॰ धूमे ॥

सूरी । स्त्री॰ कुन्त्याम् । पृथायाम् ॥ सूर्य्यपत्न्यौ । पुंयोगादिति ङीष् । सूर्य्यतिष्यागस्त्येति यलोपः ॥ राजसर्षपे । राजिकायाम् ।

सूर्च्छनम् । न॰ आदरे ॥ सूर्च्छादरे । ल्युट् ॥

सूर्त्त्यः । पुं॰ माषे ॥

सूर्पः । पुं॰ प्रस्फोटने ॥ शोणित भाजने ॥ कुम्भपरिमाणे । द्रोणद्वयपरिमाणे । इति वैद्यकपरिभाषा । सर्पति । सृगतौ । सृशृभ्यामूङ् चेति दशपादीस्थपाठात् पः ॥

सूर्पणखी । स्त्री॰ रावणस्य भगिन्याम् ॥ सूर्पं शोणितभाजनम् । नखविदूषणे । सूर्प्ये णशोणितभाजने नयस्मादिसत् क्रियानखयतिदूषयतीति सूर्पणखी ॥

सूर्पपर्णी । स्त्री॰ मुद्गपर्ण्याम् ॥ पूर्वपदादिति णत्वम् ।

सूर्पारकम् । न॰ तीर्थविशेषे । रामतीर्थे ॥

सूर्म्मी । स्त्री॰ अयःप्रतिमायाम् ॥ शोभनाऊर्म्मिः । बहुव्रीहिर्वा । सर्वतोऽक्तिन्नर्थादिति॰ गौरादित्वाद्वा ङीष् ॥ सूर्म्मीं ज्वलन्तीमालिङ्ग्य मृत्युवेगुरुतल्पगः ॥

सूर्य्यः । पुं॰ अर्कपर्णे ॥ सूरे । अर्य्यमणि । आदित्ये । तपने । सवितरि । रवौ ॥ अस्य दध्यादिभिः पूजोक्ता वराहपुराणे । यथा । उदयाद्रिः मृतं यस्तु भक्त्या नरोत्तमः । दध्यक्षताञ्जलिभिस्तु तस्य भिः पूजयेच्छुचिः । तस्य भावप्रपन्नस्याशुभं यत् समुपार्ज्जितम् । तत्क्षणादेवनिर्दग्धं भस्मीभवतितस्यतदिति ॥ रश्मीनांप्राणानांरसानाञ्चस्वीकरणात् सूर्य्यः ॥ यद्वा । सरत्याकाशे । सृ॰ । कर्त्तरि क्यप् । निपातनादुत्त्वम् । तस्य रपरत्वाद्धलिचेतिदीर्घः ॥ यद्वा । सुवति॰ कर्म्मणिलोकं प्रेरयति । षूप्रेरणे । कर्त्तरि क्यप् । निपातनात् क्यपोरुडागमः । उभयत्र राजसूयसूर्य्येत्यादिना निपातनम् ॥ यद्वा जनयति सर्वं जगदिति वा । षूङ् प्राणिगर्भविमोचने । पूर्ववन्निपातनम् सर्वावभासके ॥ पौर्णमासीचन्द्रे ॥ यथा । परीतन्तु दिवा प्रोक्तं विपरीतन्तु शर्वरी । पौर्णमासीगतश्चन्द्रः सूर्य्य इत्यभिधीयतइति ॥

सूर्य्यकान्तः । पुं॰ अग्निमणौ । अग्निगर्भे । सूर्य्यमणौ । सूर्य्याश्मनि । पुष्पकविशेषे । सूर्य्यमणौ

। पुष्परक्ते । पद्मतपुटे ॥ स्फटिके ॥ सूर्य्यः कान्तोऽस्य ॥

सूर्य्यकान्तिः । स्त्री॰ पुष्पविशेषे ॥ यथा । सूर्य्यकान्तिस्ताम्रवर्णा भोड्र पर्य्यायश्चेति शब्दचन्द्रिका ॥ सूर्य्यद्युतौ ॥

सूर्य्यकालः । पुं॰ दिने ॥

सूर्य्यकालानलचक्रम् । न॰ स्वरोदयप्रसिद्धे मानवानां शुभाशुभज्ञानार्थं सूर्य्यनक्षत्रघटितचक्रविशेषे ॥ विवादे युद्धसमये रोगार्त्ते गमने तथा ॥ सूर्य्यकालानलं चक्रं ज्ञातव्यन्तु प्रयत्नतः ॥

सूर्य्यगृहम् । न॰ सिंहराशौ ॥ अत्राह कालिदासः । मघाननाख्यो हृदयेऽभचक्रे पञ्चाननाख्योऽस्ति तथाभचक्रे । एनं हरिः पालयितुं क्षमोऽभूत्तं तद्दिव्यं तद्गारमाहुरिति ॥ सूर्य्यस्य गृहम् ॥

सूर्य्यग्रहः । पुं॰ सूर्य्योपरागे । सूर्य्यग्रहणे ॥ यथा । सूर्य्यग्रहः सूर्य्यवारे सोमे सोमग्रहो भवेत् । चूडामणिरयं योगस्तत्रानन्तफलं स्मृतम् ॥

सूर्य्यग्रहणम् । न॰ सूर्य्योपरागे ॥ तत्कारणमुक्तं वह्निपुराणे । सूर्य्येन्द्वोरुपरागस्तु गोलकच्छायया भवेत् । अन्योन्ययोस्तयोरेव व्यामयोरावरणात् ॥ ग्रासमोक्षौ तु जायेते

तपातः पूर्व्वपश्चिमौ । तच्च पुण्यफलाद्वर्गः कतारश्च स्तुहिष्णुनेति ॥

सूर्य्यजः । पुं॰ यमे पितृपतौ ॥ शनैश्चरे ॥ सुग्रीववानरे ॥ कर्णे । कुन्त्यात्मजे ॥ सूर्य्याज्जात । अनी॰ । डः ॥

सूर्य्यजा । स्त्री॰ कालिन्द्याम् । यमुनायाम् ॥

सूर्य्यतनयः । पुं॰ यमे ॥ शनिग्रहे ॥ कर्णे ॥ सुग्रीववानरे ॥

सूर्य्यतनया । स्त्री॰ कालिन्द्याम् । यमुनायाम् ॥ सूर्य्यस्य तनया ॥

सूर्य्यतीर्थम् । न॰ तीर्थविशेषे ॥

सूर्य्यपत्रः । पुं॰ अर्कपर्णे । आदित्यपत्रे ॥ सूर्य्याभानितीक्ष्णानि दर्णानि पत्राणि यस्य ॥

सूर्य्यपुत्रः । पुं॰ सूर्य्यजे सूर्य्यतनये ॥

सूर्य्यपुत्री । स्त्री॰ यमुनायाम् । यथा । यमस्वसर्नमस्तेस्तु यमुने लोकपूजिते । वरदा भव मे नित्यं सूर्य्यपुत्रि नमोस्तुते ।

सूर्य्यफणिचक्रम् न॰ स्वरोदयोक्तेमनुजानां सर्व्वकार्य्यशुभज्ञापके चक्रविशेषे ।

सूर्य्यवल्ली । स्त्री॰ अर्कपुष्पिकायाम् ॥

सूर्य्यभक्तः । पुं॰ बन्धूके ॥ त्रि॰ अर्कपूजके ॥

मध्यायाम् ॥ सूर्य्येन्दुसङ्गच्छतेऽस्मिन् । घः ॥

सूर्य्योढ :। पुं॰ सूर्यास्तकालप्राप्तेऽतिथौ ॥ यथा। सूर्य्योढस्तु सम्प्राप्तो यः सूर्येऽस्तङ्गतेऽतिथिरितिहेमचन्द्रः। अप्रणोद्योऽतिथिः सायंसूर्योढो गृहमेधिनेतिमनुः ॥ सूर्येण ऊढः प्रापितः ॥ अस्तंगतसूर्ये ॥ यथा। दिवातिथौतुविमुखेगतेयत्पातकं भवेत्। तदेवाष्टगुणं पुंसा सूर्य्योढेविमुखे गतइतिविष्णुपुराणम् ॥

सूर्य्योदय :। पुं॰ भानोः प्रकाशे। सयथादेवीभागवते। पञ्चपंच ५५ उषःकालः सप्तपंचा ५७ रुणोदयः। अष्टपंच ५८भवेत्प्रातः शेषः सूर्योदयः स्मृतइति ॥ तत्रशयनंनिषिद्धं यथा। सूर्योदयेचास्तमितेच शायिनंविमुंचतिश्रीरपिचक्रपाणिनमिति ॥

सृक :। पुं॰ वाणे ॥ कुमुदे। कैरवे ॥ उत्पले। पद्मे वाते। वायौ ॥ सरति॰ संसर्ति वा। सृगतौ। सृवृभूशुषिमुषिभ्यःकक् ॥ सृकं सरणशीलमितिवेदभाष्यम् ॥

सृकण्डु :। पुं॰ कण्डुरोगे ॥

सृका। स्त्री॰ शब्दवत्यांरक्तमय्यांमालायाम् ॥ अकुत्सितायांकर्मम ध्यांगतौ ॥ टाप् ॥

सृकाल :। पुं॰ शृगाले ॥

सृक्कम्। न॰ सृक्कणि ॥

सृक्कणी। न॰ २ ओष्ठयोः प्रान्तभागे। सृजतिलालादि। सृजविसर्गे। बाहुलकात्कनिन्। अस्य म् ॥ प्रान्तावोष्ठस्य सृक्कणीइत्यमरः। ओष्ठस्येतिजातावेकवचनं ॥

सृक्क। )
सृक्का। ) न॰ सृक्कणि ॥

सृक्कि। न॰ सृक्कणि ॥ इत्यरुणोभरतश्च ॥

सृग :। पुं॰ भिन्दिपाले ॥ सरति। सृ॰ बाहुलकात्॰ गक् ॥

सृगाल :। पुं॰ गोमायौ। जम्बुके। सियाल॰ इ॰ भा॰ प्र॰ मृगधूर्त्तके ॥ सृजतिमायाम्। सृज॰ बाहुलकात्कालन्। न्यङ्क्वादिः। असृगालातिवा। कः। पृषोदरादिः ॥ सृगंनलातिवा। पूर्व्ववत् ॥ दैत्यविशेषे ॥

सृङ्का। स्त्री॰ सृक्कायाम् ॥ सृतौ ॥

सृङ्। पुं॰ सृष्टिकर्त्तरि ॥ सृजेः क्विप् ॥ सृजौसृज॰ इत्यादिरूपाणि ॥

सृजकाचार :। पुं॰ सर्जिकाक्षारे ॥

सृज्यमान :। त्रि॰ सम्भलभूतसङ्गे ॥

सञ्जय :। पुं॰ पाण्डवानांसेनापतौ ॥

सृणि :। पुं॰ अङ्कुशे ॥ सूर्ये ॥ वायौ ॥ सरति। सृ॰ अनिदेश्या

दिमासर्तः क्विन् ॥ अग्नौ । पुं० स्त्री० वक्षुणि ॥ सृणिः स्त्रियामित्यमरः । सृणिः स्यादङ्कुशेपुमानितिशब्दार्णवम् । तेनेभयलिङ्गोयमङ्कुशे ॥ सरतिगन्तारंगच्छति वा अनयावा । सृ० । सृघृषिभ्यां किदितिनिः ॥

सृणिका । स्त्री० लालायाम् ॥ संज्ञायांकन् ॥

सृणीका । स्त्री० लालायाम् । सरति । सृ० । सर्तेर्नुम्चेति०ईकन् ॥

सृत । त्रि० गते । सृधातोः क्तप्रत्ययेननिष्पन्नः ॥

सृतिः । स्त्री० गमने ॥ मार्गे ॥ सरन्त्यनया । सृगतौ । क्तिन् ॥ सृकायाम् । कुत्सितायांमृढजनप्रवृत्तायांगतौ ॥

सृत्वा । पुं० विसर्पे ॥ पण्डिते ॥ हरौ ॥ प्रजापतौ । सरति । सृ० । शीङ्क्रोशादिनाक्वनिप् । तुक् ॥

सृत्वरः । त्रि० गमनशीले ॥ सरतितच्छीलः । सृ० इण्नशजिसर्त्तिभ्यः क्वरप् ॥

सृत्वरी । स्त्री० गमनकर्त्र्याम् ॥ टिड्ढेतिङीप् ॥

सृदरः । पुं० । सर्पे ॥

सृदाकुः । पुं० वायौ ॥ वज्रे ॥ ज्वलने ॥ अग्नौ ॥ प्रतिसूर्यके ॥ दावाग्नाविति हैमः ॥ सरत्यस्यर्थम् । सृ० । सर्तेर्दुकुचेति काकुप्रत्ययः ॥

सृदाकुः । स्त्री० नद्याम् ॥

सृपाटः । पुं० सृपाख्याम् ॥

सृपाटिका । स्त्री० चञ्च्वाम् ॥

सृपाटी । स्त्री० माने । गौरादित्वान्ङीष् ॥ रक्षाधारायाम् ।

सृप्त । त्रि० गते । प्रविष्टे ॥

सृप्यमाणः । त्रि० पच्यमाने ॥ सृप्यमाणपर्यायाश्चन्द्रमन्त्युपरिगाः खगाः ॥

सृप्रः । पुं० चन्द्रे । निशाकरे ॥ सर्पति । सृप्लगतौ । स्फायितञ्चिवञ्चिशकिक्षिपीत्यादिना रक् ।

सृमरः । पुं० मृगविशेषे ॥ यस्य गौरवाल्यः चामरकत्वमाख्यं क्रियते । सचमहिषाकृतिर्भवति । सरणशीलः । सृगतौ । सृघस्यदः क्मरच् ।

सृष्टः । त्रि० निर्म्मिते । रचिते । युक्ते ॥ निश्चिते ॥ प्रचुरे । प्राज्ये । भूषिते ॥ मुक्ते । त्यक्ते । सर्जनम् । सृज० । भावेक्तः ॥

सृष्टिः । स्त्री० सर्गे । निर्माणे । निर्मितौ ॥ स्वभावे । त्यागे ॥ सर्जनम् । सृज० क्तिन् । सृज्यतेइतिकर्म्मणिवाक्तिन् ।

सृष्टिप्रदा । स्त्री० गर्भदात्र्योषधौ ।

सेतुसंमूर्द्धसंस्थाः ॥ लग्नशुद्धिमाह । लेयेतिमीनाबुरिभेमिथेऽस्त्रिणि द्विपुंसिलग्ने समदस्वरायमे । चतुष्टयेविक्रमके रिलाभगैरसाधुभिः सेतुनिबन्धनंश्रियै ॥ इति १८ अध्यायः ॥

सेतुभेदी । पुं॰ दन्तीवृक्षे ॥

सेतुवृक्ष : । पुं॰ वरुणद्रुमे ॥

सेत्रम् । न॰ बन्धनद्रव्ये । निगडे । बेडीइ॰ भा॰ प्र॰ ॥ सीयतेऽनेन । षिञ् बन्धने । दाम्नीशसेतिकरणे ष्ट्रन् ॥

सेदिवान् । त्रि॰ निषण्णे । षद्लृ॰ । भाषायांसदवसश्रुवइति॰ लिटः क्वस्वादेशः लिटिधातोरितिद्वित्वे॰ अतएकहल्मध्यइति॰ एत्वाभ्यासलोपौ । इट् ॥ स्त्रियामुगितश्चेतिङीपि॰ वसोरितिसम्प्रसारणे वलादित्वाऽभावान्नेट् । सेदुषी ॥

सेदु : । पुं॰ नाटाम्रे । राजतेमित्रे । तरम्बुजे ॥

सेना । स्त्री॰ ध्वजिन्याम् । वाहिन्याम् । पृतनायाम् । सैन्ये । हस्ताहंस्मातरि ॥ सिनोति । षिञ्॰ । कृहजुसिद्रुपन्यनिस्वपिभ्योनिदिति नन् । टाप् ॥ सहइनेनस्वामिना वा ॥

सेनाग्रग: । पुं॰ सेनापतौ ॥ सेनाया अग्रे गच्छतिगम्लृ॰ । ड: ॥

सेनाग्रणी : । पुं॰ सेनाग्रेसरे ॥

सेनाङ्गम् । न॰ हस्त्यादिचतुष्के ॥ तद्यथा । हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयमिति ॥ अत्र॰ नाविकाटविकादीनांपदातावन्तर्भाव: । नौकानांरथेष्वन्तर्भाव: । महिषादीनां गजाश्वेष्वन्तर्भाव: । सेनाया अङ्गम् ॥

सेनानायक : । पुं॰ बलाध्यक्षे । सेनापतिदशकस्यैकस्मिन् पत्यौ ॥

सेनानिवेश : । पुं॰ शिबिरे ॥

सेनानी : । पुं॰ अग्निभुवि । गुहे । कार्त्तिकेये ; सेनापतौ ॥ पृतनाधिपे ॥ सेनांनयति । णीञ्॰ । सत्सूद्विषेतिक्विप् ॥

सेनानुचारी । पुं॰ सेनाग्रगे ॥ सेनामनुपश्चाद्गमनंकरोति । णिनि : ॥

सेनापति : । पुं॰ सैन्यपे । वाहिनीपतौ ॥ नायकदशकस्यैक : पति : सेनापतिरुच्यते । तल्लक्षणं यथा । कुलीन : शीलसम्पन्नोधनुर्वेदविशारद : । हस्तिशिक्षाश्वशिक्षासु कुशल : श्लक्ष्णभाषण : ॥ निमित्ते शकुनज्ञानेवेत्ताचैवचिकित्सिते । कृतज्ञ : कर्मणांशूरस्तथाक्लेशसहोदृजु : । व्यूहतत्त्वविधानज्ञ : फल्गुसारविशेषवित् । राज्ञा सेनापति: कार्योब्राह्मण : क्षत्रियोऽथवेति मात्स्ये राजधर्म : । कार्त्तिकेये ।

नावस्थादिसेवने । भृतौ । षिवु तन्तुसन्ताने ल्युट् । सेवसेवनेत्या ॥

सेवना । स्त्री० परिचर्य्यायाम् । सेवायाम् ॥

सेवनी । स्त्री० सूच्याम् । शरीरावयवसंयोगविशेषे । यथा । सेवन्यः सप्त तासान्तु भवेयुः पञ्च मस्तके । एका शेफसि जिह्वायामेका विच्छिन्नताः क्वचिदिति भावप्रकाशः ॥

सेवन्ती । स्त्री० शतपत्र्याम् ॥

सेवा । स्त्री० । सेवने । भक्तौ । सेव्यचित्तानुवृत्तौ । सर्वभावेन सेव्यानुकूलकारितायाम् । श्ववृत्तौ । वेतनग्रहणेनाज्ञाकरणं सेवेति व्याख्यातारः । सेवातु दीनदृष्टिसन्दर्शनस्वामितर्ज्जनोपक्रियादिधर्म्मयोगात् शुनवृत्तिर्भवति । ब्राह्मणेन सा न कार्य्या । सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्ज्जयेदिति मनुवचनात् ॥ सेवनम् । सेव० । गुरोश्च हलः । टाप् ॥ सेवनमाराधनमुपभोग आश्रयणञ्चेति । यथा दिक्षु सेवते । सुखं सेवते । तीर्थं सेवते साधुरिति । परस्मैपदञ्च तु । नीचं समृद्धमपि सेवति नीच एव । स्वाधीने विभवेऽप्यहो नरपतिं सेवन्ति किं मानिनः । इत्याद्युदाहरन्ति ॥

सेविः । न० सेवे । सेविते । मुष्टिप्रमाणबदरे ॥

सेविका । स्त्री० दुग्धपक्वाल्पपिष्टके । सिमञो० सेवीं० इ० भाषा० प्र० ॥ यथा । समितावर्त्तिताः क्वाथसूक्ष्मा यवसन्निभाः । शुष्काः क्षीरेण संसाध्याः भोज्या घृतसितान्विताः ॥ सेविकास्तर्पणी बल्या गुर्व्वी पित्तानिलापहा । ग्राहिणी सन्धिकृद्रुच्या तांस्वादेन्नातिमात्रया ॥

सेविकामोदकः । पुं० लड्डुकविशेषे । सेवीकालड्डू० इ० भा० प्र० ॥ तत्प्रक्रिया यथा । घृताढ्यया समितया कृत्वा सूत्राणि तानि तु । निपुणो भर्ज्जयेदाज्ये खण्डपाकेन योजयेत् । युक्तो मोदकान् कुर्य्यात्तेगुणैः सट्टकायथा ॥

सेवितम् । न० सेविबदरे । सेवफले ॥ त्रि० समुपासिते गुर्व्वादौ । परिचसिते । अनुष्ठिते । उपभुक्ते । आश्रिते ॥

सेव्यः । पुं० अश्वत्थवृक्षे ॥ हिज्जलद्रुमे । न० उशीरे । वीरणमूले । त्रि० सेवार्हे । सेवितुमर्हः । षेवृसेवने । ण्यत् ॥

सेव्या । स्त्री० वन्दाकायाम् ॥

सैंह । त्रि० सिंहसम्बन्धिनि । सिंहस्यायम् । अण् ॥

सैंहली । स्त्री० सिंहलीपिप्पल्याम् ।

सर्पदण्डायाम् ॥ कुकुट्याम् ॥ त्रि॰ सिंहलद्वीपजे ॥

सैंहिकः । पुं॰ राहौ ॥ इ॰ श॰ र॰ वली ॥

सैंहिकेयः । पुं॰ विधुंतुदे । राहौ । स्वर्भानौ ॥ सिंहिकाया अपत्यम् । ढक् ॥

सैकतम् । न॰ वालुकामयतटे । सिकतामये । त्रि॰ सिकतामये । सिकतावति । सिकतिले । सिकताः सन्त्यस्मिन् । सिकताशर्कराभ्याञ्चेति मत्वर्थेऽण् ॥ सिकतेव वा । शर्करायाण् ॥

सैकतिकः । पुं॰ सन्न्यस्ते ॥ क्षपणके । न॰ मङ्गलाचारायाम् ॥ मङ्गलसूत्रे ॥ त्रि॰ भ्रान्तिजीविनि । सन्देहजीविनि ॥

सैकतेष्टम् । न॰ आर्द्रके ॥ त्रि॰ सैकतिलप्रिये ॥

सैतवाहिनी । स्त्री॰ नदीविशेषे । बाहुदायाम् ॥ सितानि वाहनानि यस्य अर्जुनस्य॰ तस्येयम् । तस्येदमित्यणि टिड्ढेति ङीप् ॥ यद्वा सितस्य अर्जुनस्येयं सैती । सैती चासौ वाहिनी नदी च ॥

सैद्धान्तिकः । त्रि॰ सिद्धान्तज्ञे ॥

सैनापत्यम् । न॰ सेनापतेः कर्मणि ॥ पत्यन्तपुरोहितादिभ्यो यक् ॥ यद्वा । दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ॥ सेनापतिस्स्वामिनि ॥ सेनापतेः कर्म॰ सेनापतेरिदं वा ॥

सैनिकः । पुं॰ सेनारक्षे । प्रहरकादौ ॥ सेनां रक्षति । रक्षतीति ठक् ॥ सैन्ये । सेनायां समवेते ॥ सेनां समवैति । सेनाया वेति षष्ठ्योऽभावे॰ ठक् ॥

सैन्धवः । पुं॰ जयद्रथनृपे । सिन्धुदेशाश्वे ॥ सिन्धुरभिजनोऽस्य । सिन्ध्वादित्वादण् ॥ पुं॰ न॰ लवणोत्तमे । माणिमन्थे । सिन्धुजे ॥ अस्य गुणा यथा । सैन्धवं लवणं स्वादु दीपनं पाचनं लघु । स्निग्धं रुच्यं हिमं वृष्यं सूक्ष्मं नेत्र्यं त्रिदोषहृत् ॥ सैन्धवं द्विविधं ज्ञेयं सितं रक्तमिति क्रमात् । रसवीर्यविपाकेषु गुणाढ्यं कथितं सितम् ॥ अपिच । पूर्वाह्णकाले चाश्वानां प्रायशो लवणं हितम् । शूलानाहविबन्धघ्नं लवणं सैन्धवं वरम् ॥ त्रि॰ सिन्धुदेशभवे । सिन्धुजे ॥ सिन्धुषु जातो भवो वा ॥ कच्छादिभ्यश्चेत्यण् । अणञौ चेति वा ॥ पुं॰ सिंधुदेशे ॥ स्वार्थेऽण् । लङ्काप्रदेशमारभ्य मक्कां परमेश्वरि, सैन्धवाख्यो महादेशः पर्वते तिष्ठति प्रिये ॥

सैन्धवी । स्त्री॰ तालादिमद्ये । हालायाम् ॥ सैन्धवी शीताकषायाम्लापि

तदा च विनाशिनी । चतुरङ्गबलानि
घंघटे नरसिंहेन वर्णिता ।

सैन्यम् । न० बलं । सेनायाम् । सेनैव । चतुर्वर्णादित्वात् ष्यञ् । त्रि० सेनासमवेते । सैनिके । सेनां समवैति । सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते इत्यमरः । द्विजितस्यस्वरथूपा दातसेना० तत्र ये समवेता एकदेशीभूतास्ते सैन्याः सैनिकाश्च ।

सैन्यनियामिका । स्त्री० चक्रयष्ट्याम् । गेरचा इति यस्या यवनभाषा ।

सैन्यपृष्ठम् । न० प्रतिग्रहे । यत्र स्थितो राजा स्वसैन्यं प्रतिगृह्णाति ।

सैरन्ध्री । स्त्री० सैरिन्ध्र्याम् । सीरं धरति । धृञ्० । मूलविभुजादित्वात् कः । बाहुलकादलुक् । सीरन्ध्रस्येयम् । तस्येदमित्यण् । शिल्पकारणात् कर्षकस्येव ॥ यद्वा । स्वैरं स्वाच्छन्द्यं धरति । प्राग्वत् कः । पृषोदरादिः । गौरादिः । चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी । प्रसाधनोपचारज्ञा सैरन्ध्री परिकीर्तिता इति कात्यः ॥ द्रौपद्याम् ॥

सैरिकः । पुं० हालिके० वृषे । लाङ्गलिके । त्रि० सीरसम्बन्धिनि । सीरं वहति खनति । तेन दीव्यति खनतीति ठक् सीरस्येदं वा । हलसीराट्ठक् ।

सैरिन्ध्रः । पुं० वागुरावृत्तौ० सङ्कीर्णजातिभेदे ॥ यथाह मनुः । प्रसाधनोपचारज्ञमदासं दासजीवनम् । सैरिन्ध्रं वागुरावृत्तिं सूते दस्युरयोगवे० इति ।

सैरिन्ध्री । स्त्री० सैरन्ध्र्याम् । परवेश्मस्थशिल्पकृत्स्ववशस्त्रियाम् ॥ सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिके इत्यमरः । चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी । प्रसाधनोपचारज्ञा सैरन्ध्री परिकीर्तितेति कात्यः ॥ वर्णसङ्करसम्भूतस्त्रियाम् ॥ महिषीकायाम् ॥ द्रौपद्याम् । नित्ययौवनायाम् । याज्ञसेन्याम् ॥ सीरं धरति । धृञ्० । मूलविभुजादित्वात् कः । बाहुलकादलुक् । सीरन्ध्रस्येयम् । तस्येदमित्यण् । शिल्पकरणात् कर्षकस्येव । पृषोदरादिः ॥ यद्वा । स्वैरं स्वाच्छन्द्यं धरति । प्राग्वत् कः । पृषोदरादिः । गौरादिश्च ॥

सैरिभः । पुं० लुलाये । महिषे । कासरे । सीरोऽस्त्येषाम् । अत इनिः । सीरिणां कर्षकाणामिभ इव । शकन्ध्वादिः । प्रज्ञाद्यण् ॥ यद्वा । सौरस्य सूर्यपुत्रस्य इभ इव० पुत्र वाहनत्वात् । पूर्ववत् । ब्रह्मभवने । स्वर्गे ॥

सैरीयः । पुं० झिण्ट्याम् । सैरेभ

व : । तत्रभवइत्यण् । कर्षः । सैरेभ : । बुवाच्छ : ॥ सैरीय : कफवातहृत् ॥

सैरीयक : । पुं॰ झिण्टाम् ॥ संज्ञायांकन् ॥

सैरेय : । पुं॰ झिण्टाम् ॥ सैरेभव : । नद्यादिभ्योढक् ॥

सैरेयक : । पुं॰ झिण्टाम् ॥ सैरेयशब्दात्संज्ञायांकन् ॥ अस्यगुणायथा । सैरेय : कुष्ठवातास्रकफकण्डुविषापह : । तिक्तोष्णोमधुरोदन्त्य : सुस्निग्ध : केशरञ्जन : ॥ इति ॥

सैवालम् । न॰ शैवाले ॥

सोढ : । त्रि॰ क्षान्ते । सहिष्णौ । सह्यतेस्म । षहमर्षणे । क्त : । सहिवहोरोदवर्णस्य ॥

सोढा । त्रि॰ तितिक्षासंयुक्ते । सहितरि । भक्ते ॥ सहते । षहमर्षणे । णवुल्तृचाविति तृच् ॥

सोत्कण्ठ : । त्रि॰ उत्कण्ठायुक्ते । उत्के । उन्मनसि ॥

सोत्प्रास : । पुं॰ सशब्दहासे । आच्छुरितके । स्यादाच्छुरितकंहास : सोत्प्रासइत्यमर : । उत्प्रासनम् । असुर्लेपणे । असुगतिदीप्त्यादानेषु वा । घञ् । उत्सहित : सोत्प्रास : । उत्प्रासेनाधिक्येनक्षेपणेनवासहित : सोत्प्रास : ॥ न॰ सोल्लुण्ठे । प्रियवाक्ये ॥

सोदक : । पुं॰ पिण्डप्रदातारंपुरुषमारभ्यदशमपुरुषान्तेषु ॥ यथा । पिण्डदात्सप्तपुरुषा : सपिण्डा:कथिता : प्रिये । सोदकादशमान्ता : स्युस्तत : श्रीवलगोत्रजाइति ॥

सोदय: । त्रि॰ उदयेनसहवर्त्तमाने । वृद्धियुक्ते । लाभसमेत॰ इ॰ भाषा ॥

सोदर : । पुं॰ सहोदरे ॥ सहउदरेणवर्त्तते । वोपसर्जनस्येतिस: । सहसमानमुदरंयस्येतिवा ॥ लग्नात्तृतीयस्थाने ॥

सोदरा । स्त्री॰ सहोदरायांभगिन्याम् । टाप् ॥

सोदर्य्य : । पुं॰ समानोदर्ये । सगर्भ्ये । सहजे । समानेउदरेशयित : स्थित : । सोदराद्य : । विभाषोदरे॰ इतिसमानस्यस : ॥

सोनह : । पुं॰ लशुने ॥ इ॰ श॰ र॰ लौ ॥

सोन्माद: । त्रि॰ उन्मादिष्णौ । सोन्मादे । सहोन्मादेनवर्त्तते । वोपसर्ज्जनस्य ॥

सोपकरण : । त्रि॰ उपकरणेनसहवर्त्तमाने । उपकरणविशिष्टे ॥

सोपकार: । त्रि॰ उपकारविशिष्टे ॥

सोपधम् । त्रि॰ सच्छद्मदानादौ ॥

सोपपदा । स्त्री॰ अनध्यायविशेषे ॥ यथा । सिताज्यैष्ठेद्वितीयाचआश्विनेदशमीतथा । चतुर्थीद्वादशी

माविष्टाः सोपप्लवाः स्मृताः ॥
इति ॥

सोपप्लवः । पुं॰ राहुग्रस्ते॰ चन्द्रे । राहुग्रस्ते सूर्य्ये । राहुग्रस्ते स्त्रियां॰ सूर्य्यायाञ्च । सोपप्लवोपरक्तौ द्वावित्यमरः । राहुकर्त्तृकग्रहणकर्म्मीभूतचन्द्रसूर्य्ययोश्च । उपरक्ते ॥ सह उपप्लवेन राहुणा॰ इति सोपप्लवः । तेन सहेति तुल्ययोगे समासः । वोपसर्ज्जनस्येति सहस्य सः ॥ त्रि॰ आपद्गते ॥

सोपमर्द्दः । त्रि॰ तिरस्कारसहिते ॥

सोपवासः । त्रि॰ उपवासविशिष्टे ॥

सोपाकः । पुं॰ चण्डालेन पुक्कस्यां जनितेऽन्त्यजविशेषे । भक्षौतिप्रसिद्धे ॥ मारको पितापराधे॰ राजादेशेन मारणम्॰ तेनास्य वृत्तिः । यथा॰ । चण्डालेन तु सोपाको मूलव्यसनवृत्तिमान् । पुक्कस्यां जायते पापः सदा सज्जनगर्हितः ॥ इति मनुः ॥

सोपाधिः । त्रि॰ उपाधियुक्ते ॥ प्रतिज्ञाभिक्षादिनादानादौ ॥

सोपानम् । न॰ पाषाणादिरचिते॰ सौधाद्यारोहणे । आरोहणे । पैँडी॰ इ॰ भा॰ प्र॰ । सहविद्यमानउपरिगमनमनेन । आरोहणस्य सोपानं पैंडीइति समाह्वये । सोपानं काष्ठघटितं निः श्रेणि

स्वर्धिरोहिणीति ग्रन्थरत्नावली ॥

सोभाञ्जनः । पुं॰ शोभाञ्जने ॥

सोमः । पुं॰ शिवे ॥ उमया सहितः । हिमदीधितौ । चन्द्रे ॥ सोमेऽमावास्यायामरुणोदयमारभ्य स्नानकालपर्य्यन्तं भौमे भूत्वा स्नानात् गोसहस्रदानफलं भवतीत्याह व्यासः । सिनीवालीकुहूर्वापि यदि सोमदिने भवेत् । गोसहस्रफलं दद्यात् स्नानं यन्मौनिना कृतमिति । अमृतं सौति॰ सोमः । षु प्रसवैश्वर्य्ययोः । अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्निति मन् ॥ वानरे ॥ कुवेरे ॥ पितृदेवे । यमे ॥ समीरणे ॥ वसुप्रभेदे । नीलपर्णौ ॥ कर्पूरे ॥ सोमलतौषधौ ॥ सोमलतारसे ॥ सोमलतासाधनकयागे ॥ दिव्यौषध्याम् ॥ अमृते ॥ पर्व्वतविशेषे ॥ न॰ नीरे । जले ॥ काञ्जिके ॥ स्वर्गे ॥

सोमगर्भः । पुं॰ विष्णौ ॥ सोमो गर्भोऽस्य ॥

सोमजः । पुं॰ बुधे ॥ न॰ दुग्धे ॥ त्रि॰ चन्द्रजे । सोमाज्जातः । अनौ॰ । डः ॥

सोमतीर्थम् । न॰ प्रभासतीर्थे ॥

सोमधारा । स्त्री॰ देवपथे । नभःसरिति ।

सोमा । पुं॰ चन्द्रे । इन्दौ । अमृतं सोति । षु प्रसवने । नामन्सीमन्सोमन्नित्यनेनहद्यपाद्यांनिपातितः सोमाभाः ।

सोमप: । पुं॰ सोमपीतिनियागेपीतसोमलतारसे । सोमंपिबति । पापाने । आतोनुपेतिकः ।

सोमपत्र: । पुं॰ उलपे । सोमवल्कणे ।

सोमपा: । पुं॰ सोमपे । यज्ञेसोमलतारसपानकर्त्तरि । सोमंपिबति पा॰ क्विप् । भृगो: पुत्रेषु॰ प्राज्ञ्याणांपितृषु ।

सोमपीती । पुं॰ यागेपीतसोमरसे । सोमपि॥ सोमश्चपीतम् । सोमपीतमस्यास्ति । इनि: ।

सोमपीथ: । पुं॰ सोमपाने ।

सोमबन्धु: । पुं॰ कुमुदे ॥ सोमोबन्धुरस्य । सूर्यबुधयो: । यथा । मित्राणिसूर्याच्छशिभौमजीवा:॰ सूर्येन्दुजौ॰ सूर्यमहाष्कौबा: । आदित्यशुक्रौ॰रविचन्द्रभौमा॰ गुरुार्कजौचन्द्रजभार्गवौचेति॰ज्योतिस्तत्त्वम् ॥

सोमभू: । पुं॰ बुधग्रहे ॥ जिनराजभेदे ॥ वि॰ सोमवंश्योद्भवे ॥ सोमाद्भवति । भू॰ क्विप् ॥

सोमयाग: । पुं॰ सोमलतारसपानाङ्गकेवार्षिकयज्ञविशेषे ॥

सोमयाजी । पुं॰ सोमयागकर्त्तरि ।

सोमयोनि । न॰ चन्दनविशेषे । यथा । सुगौरतलंचन्दनंयत्तूतैलपर्णिकमुच्यते । तभौतुपत्रपर्यायौसोमयोनि॰ शिलोद्भवमितिशब्दचन्द्रिका ।

सोमराज: । पुं॰ चन्द्रे । हिजराजौ । सोमश्चासौराजाच । टच् ॥

सोमराजिका । स्त्री॰ सोमराजिनि । बाकुच्याम् ॥

सोमराजी । पुं॰ औषधिविशेषे । तत्पर्याया यथा । अवल्गुज: सोमराजीसुवल्लीसोमवल्लिका । कालमेषीकृष्णफलावागुजीपूतिफल्यपीति । सोमराज॰ इ॰ कुच॰ इ॰ च॰ गौ॰ दे॰ भा॰ ॥ सोमइव । सोमेनवा॰ राजति । राज॰ । उपमानद्रुतिवासुप्यजातावितिणिनि: ॥

सोमराजी । स्त्री॰ सोमलतायाम् । बागुज्याम् । सोमराजिनि । मात्रावृत्तछन्दोभेदे ॥ यकारद्वयेनप्रस्तारितस्ति: । भवेत्सोमराजीतयाशङ्खनारीद्वियासोमराजीस्वपिलच्छलक्षणम् । यथा । हरेसोमराजीसमातेवमूर्त्ती: । जगन्मण्डलच्छिन्नध्वान्तभारम् । डीप् ।

सोमलता । स्त्री॰ स्वनामाप्रसिद्धायांलतायाम् । तस्या: पर्य्यायाशुबायथा सोमवल्लीसोमलतासोमाक्षीरीद्विजप्रिया । सोमवल्लीवि-

देशप्रोक्ता स्त्रीशारसायनीति ॥ अपिच । सोमवल्ली महागुल्मा यज्ञश्रेष्ठा धनुर्लता । सोमार्हा गुल्मवल्ली च यज्ञवल्ली द्विजप्रिया । सोमक्षीरा च सोमा च यज्ञाङ्गा रुद्रगन्धिका । सोमवल्लीकटुः शीता मधुरा पित्तदाहहृत् । तृष्णाविशोषशमनी पावनी यज्ञसाधनी । इति रा० नि० घटः ॥ ब्राह्मोषधी ॥

सोमलतिका । स्त्री० गुडूच्यां । सोमवल्लयाम् ॥

सोमवंशः । पुं० युधिष्ठिरे अजातशत्रौ चन्द्रवंशे ॥ सोमान्वयः ॥

सोमवल्कः । पुं० धवलकट्फले । खदिरे । रीठाकरञ्जे ॥ करञ्जे ॥ सोमवृक्षवल्कोऽप्यत्रामरः ॥

सोमवल्कलः । पुं० कदरे । श्वेतखदिरे ॥ सोमवृक्षवल्कलमप्यत्र ॥

सोमवल्लरी । स्त्री० ब्राह्म्यामोषधौ ॥ सोमलवल्लरी ॥ सोमलतायाम् ॥

सोमवल्लिका । स्त्री० सोमराजिनि ॥ सोमराजवल्ली । स्वार्थे कन् ॥

सोमवल्ली । स्त्री० वत्सादन्याम् । छिन्नरुहायाम् । गुडूच्याम् ॥ सोमराजवल्ली ॥ वाकुच्याम् । सोमलतायाम् ॥ सोमवल्ली विदेशप्रोक्ता स्त्रीशारसायनी ॥ पातालगरुड्याम् । ब्राह्म्याम् ॥ सुदर्शनायाम् ॥

सोमवारः । पुं० सोमस्याभीष्टदिने ॥

सोमविक्रयी । पुं० सोमलतारसविक्रयकारिणि ॥

सोमवृक्षः । पुं० कट्फलवृक्षे ॥ श्वेतखदिरे ॥

सोमशकला । स्त्री० शशाङ्कखण्डस्याम् ॥ चन्द्रखण्डविशिष्टायाम् ॥

सोमसञ्ज्ञम् । न० कर्पूरे ॥

सोमसदः । भ्मि० पितृगणान्तरे ॥ विराट्सुताः सोमसदः साध्यानां पितरः स्मृताः ॥

सोमसवनः । पुं० प्रश्नीकवृक्षाभ्यत्वचे ॥ सोमोऽमृतं सवतीति । युच् ॥

सोमसारः । पुं० खदिरे ॥

सोमसिद्धान्तः । पुं० बौद्धविशेषे ॥

सोमसिद्धान्ती । पुं० सोमसिद्धान्तवेत्तरि । कापालिके ॥ तत्स्वरूपादिकं यथा । नरास्थिमालाकृतचारुभूषणः श्मशानवासी नृकपालभोजनः । पश्यामि योगाञ्जनशुद्धदर्शनो जगन्मिथोभिन्नमभिन्नमीश्वरात् ॥ अपिच । मस्तिष्कान्त्रवसाभिघारितमहामांसाहुतीर्जुह्वतां वह्नौ ब्रह्मकपालकल्पितसुरापानेन नः पारणा । सद्यः कृत्तकठोरकण्ठविगलत्कीलालधारोज्ज्वलैरर्च्यो नः पुरुषोपहारबलिभिर्देवो महाभैरव इति ॥

सोमसिन्धुः । पुं॰ राहुमूर्द्धभिदि । विष्णौ ॥

सोमसुता । स्त्री॰ नर्म्मदायाम् ॥

सोमसूत्रम् । न॰ देवालयाज्जलनिर्गमस्थाने ॥ यथा । शिवप्रदक्षिणे मर्त्यैरर्द्धचन्द्रक्रमेण तु । सव्यासव्यक्रमेणैव सोमसूत्रं न लङ्घयेत् ॥

सोमाख्यम् । न॰ रक्तोत्पले ॥

सोमालः । त्रि॰ कोमले ॥

सोमाश्रमः । पुं॰ तीर्थविशेषे ॥

सोमेश्वरः । पुं॰ काश्यां सोमकर्तृकप्रतिष्ठिते शिवे ॥

सोमोद्भवा । स्त्री॰ रेवायाम् । नर्म्मदायाम् ॥ सोमात् सोमवंशजात् पुरूरवस उद्भवतीति सा तन्नामिकत्वात् ॥ यद्वा । सोमोऽमृतमुद्भवत्यस्याः स्वर्गप्रदत्वात् । अप् ॥ सोमात् रुद्रात् उद्भवतीति वा । पचाद्यच् ॥ सोमोऽद्रिविशेषः उद्भवो यस्या वा ॥

सौम्यः । पुं॰ उपद्वीपभेदे ॥ त्रि॰ प्रियदर्शने ॥ सोमदेव । शाखादिभ्यो यः ॥

सोरट्टा । स्त्री॰ मात्रावृत्तान्तरे ॥ तत् सोरट्टाछन्दमसुरगपतिरिति वदति । यद्दोहाविपरीतमिह जगदादि सुदमुपनयति ॥ यथा । अभिनवजलनिधिनीलसमलकमलदृक्वाचमनम् ! सखिपश्याभिमन्दापिमद मथनं भवमोचनम् ॥

सोल्लुण्ठः । पुं॰ सोल्लुण्ठने ॥

सोल्लुण्ठनम् । न॰ सोपपूर्वदुक्तौ । स्तुतिपूर्वकदुर्वादे । सगुणवस्त्वादिदोषकथावाक्ये ॥ लुण्ठति । लुठि आलस्ये प्रतिघाते च । ल्युट् । लुण्ठनेन सहितम् ॥

सोल्लुण्ठोक्तिः । स्त्री॰ सव्यङ्ग्योक्तौ ॥

सौकर्य्यम् । न॰ अनायासे ॥ सुकरस्य क्रियायाम् ॥

सौकुमार्य्यम् । न॰ मार्द्दवे ॥

सौक्ष्म्यम् । न॰ सूक्ष्मतायाम् ॥ सूक्ष्मस्य भावः । ष्यञ् । अवयवस्वभावे । गुणविशेषे ॥ यतः सत्त्वल्परूपत्वं शब्दानां सौक्ष्म्यमुच्यते ॥

सौखरात्रिकः । त्रि॰ सुखरात्रिप्रश्नकर्त्तरि ॥ सुखरात्रिं पृच्छति । पृच्छतौ सुस्नातादिभ्य इति ठञ् ॥

सौखशायनिकः । त्रि॰ सुखशयनप्रश्नकर्त्तरि ॥ सुखशयनं पृच्छति । पृच्छतौ सुस्नातादिभ्य इति ठञ् । अनुशतिकादिः ॥

सौखसुप्तिकः । त्रि॰ वैतालिके ॥ वैतालिका बोधकरार्थिकाः सौखसुप्तिकाः इ॰ हे॰ चन्द्रः ॥

सौखिकः । त्रि॰ सुखार्थिनि । सौख्योनर्तिभाषाप्रसिद्धे ॥ कु॰ म॰ भा॰ राजधर्मः ॥

सौख्यम् । न॰ सुखे । सुखमेव । स्वार्थे ष्यञ् । अकिञ्चिदपि कुर्वाणः

सौख्येदुं : खान्यपीहति ॥

सौगविवनम्। न॰ तीर्थविशेषे ॥

सौगतः। पुं॰ बौद्धविशेषे। शून्यवादिनि। माध्यमिके॥ सुगतोबुद्धोभक्तिरनयोर्वास्य। भक्तिरित्यण्॥

सौगन्ध्यम्। न॰ कत्तृणे। सौगन्धिके॥

सौगन्धिकः। पुं॰ गन्धपाषाणे। गन्धके। सुगन्धव्यवहारिणि। गन्धवणिजि। गन्धीतिभाषाप्रसिद्धे। नपुंसकविशेषे। नासायोनौ॥ यः पूतियोनौ जायेत स हि सौगन्धिको भवेत्॥ न॰ कह्लारे। श्वेतोत्पले। सौगन्धि॰ भा॰ प्र॰॥ पद्मरागमणौ। कत्तृणे। नीलोत्पले। इति राजनिर्घण्टः॥ सुगन्ध्येव। स्वार्थे॰ विनयादिभ्यष्ठक्॥ शोभनोगन्धोऽस्य॰ शोभनोगन्धो वा। सुगन्धः प्रयोजनमस्य। प्रयोजनमिति ठञ्॥

सौगन्धिका। स्त्री॰ पद्मभेदे॥ इ॰ म॰ भा॰ वनपर्व॥

सौचक्यम्। न॰ सूचकस्य कर्म भावो वा : पुरोहितादित्वाद्यक्॥

सौचिः। पुं॰ सौचिकः॥

सौचिकः। पुं॰ सूचिजीविनि तुन्नवाये॥ वर्णसङ्करप्रभेदोऽयम्। कैवर्त्तस्य च कन्यायां शौण्डिकाद्देवसौचिक इति पराशरपद्धतिवचनात्॥ सूचीशिल्पमस्य। शिल्पमिति-ठक्॥

सौचिक्यम्। न॰ सौचिकस्य कर्म भावो वा॥ पत्यन्तपुरोहितादिभ्यो यक्॥

सौजन्यम्। न॰ सौहार्द्दे। सुजनतायाम्॥ यथा। सौजन्यं॰ वरवंशजन्म॰ विभवो॰ दीर्घायु॰ रारोग्यता विज्ञत्वं विनयित्व॰ मिन्द्रियवशः॰ सत्पात्रदानेरुचिः। सन्मन्त्री॰ सुसुतः॰ प्रियाप्रियतमा॰ भक्तिश्च नारायणे॰ सत्पुण्येन विना त्रयोदशगुणाः संसारिणाम् दुर्लभाः॥

सौत्यम्। न॰ सारथ्ये॥ सूतस्य कर्मभावो वा। ष्यञ्॥

सौत्रः। पुं॰ ब्राह्मणे॥ नियतप्रयोगाभावे धातुविशेषे॥ त्रि॰ सूत्रसम्बन्धिनि॥

सौत्रामणी। स्त्री॰ सुरायज्ञप्रधाने वैदिकयागविशेषे। सौत्रामण्यां सुराग्रहान् गृह्णीयादिति श्रुतिविहिते॥ सौत्रामण्यां कुलाचारे ब्राह्मणः प्रपिबेत् सुराम्। अन्यत्र कामतः पीत्वा पतितस्तु द्विजो भवेत्॥

सौदामनी। स्त्री॰ तडिति। विद्युति। सुदामा ऐरावतगजः। सुदाम्न एकदिक्। तेनैकदिगित्यण्। य

क् । टिट्ढाणञिति ङीप् ॥

सौप्तिकम् । न॰ रात्रिमारणे । रात्रियुद्धे ॥ महाभारतस्यपर्वविशेषे ॥ वि॰ सुप्तिसम्बन्धिनि ॥

सौभम् । न॰ खसञ्चारिपुरे ॥ हरिश्चन्द्रपुरे ॥

सौभगम् । न॰ सुभगत्वे ॥

सौभद्रः । पुं॰ सुभद्रातनयेऽभिमन्यौ ॥ सुभद्रायाअपत्यम् । ऋष्यन्धकवृष्णि (?) नदोमानुषोभ्यइत्यण् ॥ सङ्ग्रामविशेषे ॥ सुभद्राप्रयोजनमस्य । सङ्ग्रामेप्रयोजनयोद्धृभ्यइत्यण् ॥ ग्रन्थविशेषे ॥ सुभद्रामधिकृत्यकृतोग्रन्थः । अधिकृत्यकृतेग्रन्थे॰ इत्यण् ॥ त्रि॰ सुभद्रासम्बन्धिनि ॥

सौभद्रेयः । पुं॰ अभिमन्यौ ॥ सुभद्रायाअपत्यम् । स्त्रीभ्योढक् ॥ विभीतकवृक्षे ॥

सौभरम् । न॰ सामविशेषे ॥

सौभरिः । पुं॰ पुराणप्रसिद्धेपरमहंसे । मुनिविशेषे । *

सौभागिनेयः । पुं॰ सुभगासुते ॥ सुभगायाअपत्यम् । कल्याण्यादीनामिनङ् इतिढक्॰ इनङादेशश्च । हृद्भगेत्युभयपदवृद्धिः ॥

सौभागिनेयी । स्त्री॰ सुभगात्मजायाम् ॥

सौभाग्यम् । न॰ विष्कंभाद्यन्तर्गतयोगविशेषे ॥ तज्जातफलंयथा । सौभाग्यजन्मासुभगोमनुष्यः श्लाघ्योजनानांधनवान्गुणज्ञः । उदारचित्तोबलवान्विवेकीमहाभिमानीप्रियभाषणश्चेति ॥ सिन्दूरे ॥ टङ्कणे ॥ सुभगत्वे ॥ तल्लक्षणंयथा । अल्पनिद्रोऽल्पभुग्वाग्मीमितभाष्यनसूयकइति ॥ सुभगस्यकर्मभावोवा । ष्यञ् । हृद्भगसिन्ध्वन्तेपूर्वपदस्यचेत्युभयपदवृद्धिः ॥ व्रतविशेषे ॥

सौभाग्यकरणम् । न॰ वाक्यदृतौ ॥ यः सार्वजन्यंसुभगत्वमिच्छेद्गुणान्समस्तान्वदेत्परोक्षम् । प्राप्नोतिदोषानसतोऽप्यनेकान्परस्ययोदोषकथांकरोति ॥

सौभाग्यचिन्तामणिः । पुं॰ सारकौमुद्युक्तौषधविशेषे ॥

सौभाग्यशुण्ठी । स्त्री॰ पाकविशेषे ॥ यथा । नागरस्यपलान्यष्टौघृतंदेयञ्चतत्समम् । चीरंप्रस्थसंयुक्तंखण्डस्यार्द्धशतंपलम् ॥ पचेन्मृद्वग्निनासम्यक्यथापाकोभवेत्तदा । चूर्णंदद्यात्त्रिजातस्यत्रीणिचपलोन्मितम् ॥ भक्षयेन्नागयत्नाच्छुचिरज्ञातृस्वमारुतम् । सूर्यावर्त्तंहनुस्तम्भंमन्यास्तम्भंगलग्रहम् ॥ अलवणंकरंहृद्यंबलोपालितनाशनम् । अमवातप्रशमनंसौभाग्यकारमुत्तममितिपाकावली ॥

सौभ्रात्रम् । न॰ सुभ्रातृणांभावे ॥ यु

वलीकश्चितेषित्वे ॥ प्रतिपिद्धधा चिन्तने ॥

सौम्यधातु : । पुं॰ कफे । श्लेष्मणि ॥

सौम्यवपु : । न॰ अनुग्रहशरीरे ॥

सौम्या । स्त्री॰ अनुग्रायाम् । मनोज्ञायाम् । दुर्गायाम् । गौर्याम् ॥ शालपर्ण्याम् ॥ महाज्योतिष्मत्याम् ॥ गुञ्जायाम् ॥ उत्तरदिशि ॥ ब्राह्म्याम् ॥ मल्लिकायाम् ॥ रुद्रजटायाम् ॥ शट्याम् ॥ महेन्द्रवारुण्याम् ॥ महिषवल्ल्याम् ॥

सौम्या : । स्त्री॰ बहुत्वे॰ मृगशिर : शिर : स्थासु पञ्चतारकासु । इल्वलासु ॥

सौम्यायनम् । न॰ उत्तरायणे ॥

सौर : । पुं॰ शनैश्चरे । मासविशेषे । सूर्यैकराशिभोगावच्छिन्नेमासि ॥ यथा । आदित्यराशिभोगेनसौरोमास : प्रकीर्त्तितइति । एतच्चात्सङ्क्रान्तासङ्क्रान्ति : सौराभिधौयतइतिच ॥ दिनविशेषे ॥ वर्षविशेषे ॥ तुम्बुरुवृक्षे ॥ त्रि॰ सूर्यसम्बन्धिनि ॥ न॰ उपपुराणविशेषे ॥ त्रि॰ सूर्योपासके ॥ सूर्यस्यार्कस्यायम् । तस्येदमित्यण् ॥

सौरज : । पुं॰ तुम्बुरुवृक्षे ॥ फलविशेषे ॥ त्रि॰सौरजाते ॥

सौरदिनम् । न॰ सौरदिवसे ॥

सौरनक्तम् । न॰ व्रतविशेषे ॥ यथा । हस्तयुक्तेचार्कदिनेसौरनक्तंसमाचरेत् । स्नात्वात्वर्कंसमभ्यर्च्यनीरोगोबहुजीवति ॥ आत्मनोद्विगुणच्छायंयदातिष्ठतेरवि : । सौरनक्तंविजानीयान्नक्तंस्वनिशिभोजनमितिनारसिंहे ६४ अध्याय : ॥

सौरभम् । न॰ कुङ्कुमे ॥ बोले ॥ सुगन्धितायाम् ॥ विषमवृत्तान्तरे ॥ अयमुद्गतासहशमेवपदमिदन्तृतीयमन्यथा । जायतेरनभनैर्ग्रथितंकथयन्तिसौरभमिदंतदीदृशम् ॥ यथा । परिभूतफुल्लशतपत्रवनविततगन्धविभ्रमा । काव्यशन्नहरतोह हरेर्मुखपद्मसौरभकलातशङ्कता ॥

सौरभेय : । पुं॰ वृषे ॥ सुरभ्याअपत्यम् । स्त्रीभ्योढक् ॥

सौरभेयी । स्त्री॰ सौरभ्याम् । गवि । उस्रायाम् ॥ सुरभ्या : स्त्र्यपत्यम् । ढक् । ङीप् ॥

सौरभ्यम् । न॰ मनोज्ञत्वे ॥ सौगन्ध्ये । सुगन्धितायाम् ॥ गुणगौरवे ॥ पुं॰कुबेरे ॥

सौरमास : । पुं॰ सूर्यकराशिभोगावच्छिन्नकाले ॥ यथा । एकराशौरविर्यावत्कालंमास : सभास्कर : । अयमपि : सौरमासेयन्मौरकीर्त्तितम् ॥

सौरसम्वत्सरः । पुं० सूर्यस्य द्वादशराशिभोगावच्छिन्नकाले । यथा । सौरसंवत्सरस्यान्ते मानेनशशिजेन तु एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ॥

सौरसेनः । पुं० देशविशेषे । यथा । मागधाद्दक्षभागेतु विन्ध्यात्पश्चिमतः शिवे । सौरसेनाभिधोदेशः सूर्यवंशप्रकाशकः ॥

सौरसेयः । पुं० कार्त्तिकेये । स्कन्दे । सुरसायाअपत्यं ॥

सौरमेयः । त्रि० गङ्गासम्बन्धिनि ॥ सुरसिन्धोरयम् । अण् । हृद्भगसिन्ध्वन्ते पूर्वपदस्येत्युभयपदवृद्धिः ॥

सौराष्ट्रः । पुं० देशविशेषे ॥ कोङ्कणात्पश्चिमतीर्थं समुद्रप्रान्तगोचरम् । हिङ्गलाजान्तकोदेविदशयोजनदेशकः । सौराष्ट्रदेशोदेवेशिनाम्नासुराष्ट्राभिधः ॥ कुन्दुरुकौ ॥ न० कांस्ये ॥

सौराष्ट्रकम् । न० पञ्चलौहे ॥

सौराष्ट्रमृत्तिका । स्त्री० काक्ष्याम् । तुवर्याम् । फटकिरी० इ० भा० प्र० ॥

सौराष्ट्रा । स्त्री० तुवर्याम् ॥

सौराष्ट्रिकः । पुं० विषप्रभेदे । सौसलखार० संखिया० इ० भा० प्र० ॥ सुराष्ट्रविषयेयः स्यात्ससौराष्ट्रिकउच्यते ॥ त्रि० सुराष्ट्रो सुराष्ट्रदेशविशेषभवः । अध्यात्मादित्वाट्ठञ् ॥

सौराष्ट्री । स्त्री० सौराष्ट्रमृत्तिकायाम् ॥ स्फटिकायागुणाः सर्वेसौराष्ट्र्याअपिकीर्त्तिताः । सुराष्ट्रेभवा । अण् । ङीप् ॥ सौराष्ट्रीकफपित्तघ्नीविसर्पव्रणनाशिनी ॥

सौरिः । पुं० शनैश्चरे । शनिग्रहे ॥ सूरस्यार्कस्यापत्यम् । अतइञ् । श्रीकृष्णे ॥ सूरोयादवेन्द्रस्तानपौत्रिमधुमाधवौ । तत्रवसुदेवस्यपिता । तद्वंशस्वात्सौरिः कृष्णः । तस्मिंस्तेपित्राद्यादेराकृतिगणत्वादिञ् असनवृक्षे ॥ चादित्यभक्तायाम् ॥

सौरकः । पुं० खर्गे ॥ न० सुरानिर्मितधने ॥

सौरिरत्नम् । न० नीलमणौ ॥

सौरी । स्त्री० रश्मौ । सूर्यकिरणे ॥ सूर्यस्येयम् । अण् । ङीप् । सूर्यतिष्यागस्त्येतियलोपः ॥

सौव । त्रि० स्वकीये ॥ स्वस्येदम् । अण् ॥

सौवर्चलम् । न० सर्जिकाक्षारे ॥ सुवर्चलायाइदम् । तस्येदमित्यण् ॥ सञ्चर० इ० प्र० लवणे । कृष्णलवणे । अक्षे । रुचिके । सुष्ठुवर्च्यते । वर्चदीप्तौ । इषादित्वात्कलच् ।

प्रज्ञाद्यण् ॥

सौवर्ण: । त्रि॰ सुवर्णस्य विकारे॰ कटकादौ ॥ तस्य विकार इत्यर्थे॰ जातरूपेभ्य: परिमाण इत्यण् ॥

सौवर्णभेदिनी । स्त्री॰ प्रियंगौ ।

सौवली । स्त्री॰ गान्धार्य्याम् । सुवलस्यापत्याम् ॥

सौवस्तिक: । पुं॰ पुरोहिते ॥ त्रि॰ स्वस्तिकृति ॥

सौविद: । पुं॰ राजस्त्र्यागारे वर्षवरचाधिकृते । सौविदल्ले । कञ्चुकिनि । स्थापत्ये ॥ यदिह : सञ्चरन्तो नाम : पुरस्त्रीणां प्रेक्षकपुरुषान्तरवारणाय राजस्त्र्यागारेष्वेव भरामियुक्तास्ते वर्षवरल्लका: सौविदल्लादिशब्दवाच्या: । सुष्ठु वेत्ति । विदज्ञाने । इगुपधेति क: । सुविद एव : प्रज्ञादित्वात् स्वार्थेऽण् । यद्वा । सुविदस्य तुरा: स्त्रियस्तासामयं रक्षक: । तस्येदमित्यण् ॥

सौविदल्ल: । पुं॰ सौविदे ॥ सुष्ठु दन्तं विद्वांसमपि॰ लान्तिवशवर्त्तिनं कुर्व्वन्ति सुविदल्ला: । तासामयं रक्षक: । तस्येदमित्यण् ॥

सौवीर: । पुं॰ वीदरान्तरे । कुमालके ॥ शूरसेनात् पूर्वभागे गंडक्या: पश्चिमे स्थिते । सौवीरदेशो देवेशि सर्वदेशाधमाधम: ॥ न॰ काञ्जिके ॥ यथा । सौवीरन्तु यवैरामै : पक्वैर्वा निस्तुषै: कृतम् । गोधूमैरपि सौवीरमाचार्या: केचिदूचिरे । सौवीरन्तु यवग्राही कफघ्नं भेदि दीपनम् । उदावर्त्ताङ्गमर्द्दास्थिशूलानाहेषु शस्यते ॥ स्रोतोञ्जने । सौवीराञ्जने ॥ बदरीफले । महद्बदरे ॥ यथाहु: । पच्यमानं सुमधुरं सौवीरं वदरं महत् । सौवीरं वदरं शीतं भेदनं गुरुशुक्रलम् । बृंहणं पित्तदाहास्रक्षयतृष्णानिवारणमिति ॥ सुवीरदेशे भवम् । तत्र भवमित्यण् ॥

सौवीरकम् । न॰ सुवीराम्ले । काञ्जिके ॥ पुं॰ बदरवृक्षे ॥

सौवीरसारम् । न॰ स्रोतोञ्जने ॥

सौवीराञ्जनम् । न॰ स्रोतोञ्जने । सुरमा इ॰ भा॰ प्र॰ । सौवीरस्य तदञ्जनञ्च ॥ यथा । सौवीराञ्जनमिदमम्बकयुग्मेषीर्ष्ये विन्यस्तं कनककशलाकयाचयत् । तन्नूनं मलिनमपि स्वदर्शितश्चाक्षोन्द्राभ्यभिलषणीयतामियायेति शाङ्करीमानसोपज्ञा ॥

सौशब्द: । पुं॰ गुणविशेषे ॥ तल्लक्षणं यथा । सुपांतिङांपरावृत्ति: सौशब्दमिति ॥

सौष्ठवम् । न॰ सुष्ठुतायाम् ॥ सुष्ठु भाव: । उद्गात्रादित्वादञ् ॥

सौस्नातिक: । त्रि॰ सुस्नातप्रश्नकर्त्तरि ॥ सुस्नातं पृच्छति । पृच्छतौ सुस्नातादिभ्य इति ठक् ॥

सौहार्द: । पुं॰ मित्रतनये ॥ सुह

दोपत्यं तस्यापत्यमित्यण् । हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्युभयपदयोरादिवृद्धिः ॥ न० सौजन्ये । शोभनहृदयत्वे ॥ सख्ये । मैत्र्याम् ॥ सुहृदयस्यभावः कर्म वा । मित्रे सुहृदादेशः ॥

सौहार्दम् । न० सौहार्दे । सख्ये ॥ सुहृदयस्यभावः । ष्यञ् । वाशोकष्यञ्रोगेष्विति हृदादेशः ॥

सौहित्यम् । न० तृप्तौ ॥ सुहितस्यभावः । कर्म वा । पुरोहितादित्वात् यक् ॥ पर्याप्ते ॥

सौहृदम् । न० सौहार्दे । सख्ये ॥ सुहृदः कर्म भावो वा । युवादित्वादण् ॥ प्रेमणि ॥

सौहृद्यम् । न० सौहार्दे ॥ सुहृदयस्यभावः । ष्यञ् । वाशोकष्यञ्रोगेष्विति पक्षे हृदादेशाभावः ॥

स्कन्दः । पुं० कार्त्तिकेये । महासेने । पार्वतीनन्दने ॥ सेनापतीनामहं स्कन्दः इत्युक्ते देवसेनापतिः कार्त्तिकेयो भगवद्विभूतिः ॥ स्कन्दतिगच्छति० शोषयतिवादैत्यान् । स्कन्दिर्गतिशोषणयोः । पचाद्यच् । तथाचवायुपुराणम् । स्कन्दितादानवगणास्तेनस्कन्दः प्रतापवानिति ॥ देव्याद्वारपालविशेषे ॥ नृपतौ ॥ पुराणविशेषे ॥ शरीरे ॥ पारदे ॥ बालग्रहविशेषे ॥

स्कन्दनम् । न० रेचने ॥ क्षरणे ॥ गमने । शोषणे ॥

स्कन्दपुराणम् । न० स्कान्दे महापुराणविशेषे ॥ तच्छ्लोकसङ्ख्या शीतिसहस्रा यथा । एकाशीतिसहस्राणि स्कन्दाख्यं परमाद्भुतमिति ॥

स्कन्दांशक : । पुं० पारदे ॥

स्कन्ध : । पुं० देहावयवविशेषे । भुजशिरसि । अंसे ॥ अस्य लक्षणं यथा । कदलीस्तम्भसङ्काशा ये च स्कन्धाश्च येनराः । राजानस्ते च विज्ञेया महाधीशा महाबलाः ॥ निर्मांसरोमबहुला निर्धनस्य प्रकीर्त्तिताः इतिसमुद्रः ॥ स्कन्द्यते । स्कन्दिर० । कर्मणिघञ् । स्कन्देस्सलोपश्चेति० बाहुलकाद्नसुन्यपिधः पृषोदरादिर्वा ॥ नृपतौ ॥ सम्पराये ॥ व्यूहे । समूहे ॥ काये ॥ प्रकाण्डे ॥ यथा । यस्मीप्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोरिति । भाषादौ ॥ छन्दोभेदे ॥ विज्ञानादिपञ्चसु ॥ तेच० विज्ञानवेदनारूपसंज्ञासंस्कारसंज्ञकाः पञ्चैते नाशिकोनामयेप्रसिद्धाः ॥ ग्रन्थपरिच्छेदे ॥ पथि ॥ कंशिरोदधाति । डुधाञ्० । घार्तेनुपेतिकः । पारस्करादित्वात्सुट् ॥ वास्कन्द्यते० आरुह्यते । स्कन्दिर० । कर्मणिघञ् ॥ पृषो

इत्यादि: ॥

स्कन्धकम् । न० मात्रावृत्तान्तरे ॥ स्कन्धकमिति तत् कथितं यच्चतुष्कलगणाष्टकेनार्द्धं स्यात् । तत्तुल्यमपिमदलं भवति चतु:षष्टिमात्रिकशरीरमिदम् ॥ यथा । जयमितिशिमलविद्युत्करालकरवाललुलितजलधरकाल: । उद्भवघनगर्जिततर्जितपथिकाङ्गनाविच्छर्दयतल: ॥

स्कन्धचाप: । पुं० वंशादिनिर्मितशिक्याधारे । विहङ्गिकायाम् ॥

स्कन्धज: । पुं० वटे ॥ शल्लक्यादौ । पचयीनयदूत्वाद्या: स्कन्धजा: सल्लकीमुखा:० इति हेमचन्द्र: ॥

स्कन्धतरु: । पुं० स्कंधफले ॥

स्कंधदेश: । पुं० आसने । द्विरदस्कंधे ॥ स्कन्धप्रदेश: ॥ स्कंधमात्रे ॥

स्कंधफल: । पुं० नारिकेले ॥ स्कन्धे फलान्यस्य ॥ उदुम्बरवृक्षे ॥

स्कन्धफला । स्त्री० खर्ज्जूर्य्याम् ॥

स्कन्धबन्धना । स्त्री० मधुरिकायाम् ॥

स्कंधमल्लक: । पुं० काङ्कखगे ॥

स्कन्धरुह: । पुं० वटवृक्षे ॥

स्कन्धवाह: । पुं० शकटादिवाहकवृषे । शङ्के । अच्चधूर्त्तिसे ॥

स्कन्धवाहक: । पुं० वृषे ॥

स्कंधशाखा । स्त्री० वृक्षस्यमुख्यशाखायाम् । शाखायाम् ॥ स्कंधजा शाखा ॥

स्कंधशृङ्ग: । पुं० महिषे ॥ इतिकश्चित् ॥

स्कंध: । न० वृक्षमूलात्शाखावधिकभागे । प्रकाण्डे ॥ अंसे ॥ स्कन्द्यते । स्कन्दिर्० । स्कन्देश्चस्वाङ्गेघञ्व्युत्पत्तिसुनुधस्यान्तादेश: ॥

स्कन्धाग्नि: । पुं० वडवाग्नौ । समिन्धनै: कृतयज्ञाग्निभेदे ॥

स्कंधामल: । पुं० वृहत्काष्ठग्नौ ॥

स्कंधावार: । पुं० कटके ॥ सैन्यस्थितौ ॥ राजधान्याम् ॥

स्कंधिक: । पुं० स्कंधवाहकवृषे ॥

स्कंधी । पुं० द्रुमे ॥

स्कन्नम् । त्रि० हस्तादित: पतिते । अस्यपर्यायायथा । स्रस्तंध्वस्तंभ्रष्टं० स्कन्नं० पन्नंच्युतंगलितमिति ॥ स्कन्द्यतेस्म । स्कन्दिर्० । कर्मणिक्त: गत्यार्थाकर्मकेतिकर्त्तरिक्तौवा ॥ कठिनीभूते ॥

स्कोटिका । स्त्री० छापुत्रिकाखगे ॥

स्कोनगरम् । न० वाह्लीकग्रामविशेषे ॥

स्खदनम् । न० विद्रावणे ॥ स्खद स्खदने । ल्युट् ॥

स्खलत् । त्रि० चलति ॥

स्खलनम् । न० रिङ्गणे ॥ बालाभ्यां हस्तपादाभ्यांचलने ॥ निर्गमि

संश्लादित : पतने ॥ पिच्छिला
द्रौपतने ॥ धर्मादिस्खलने ॥ सखल
सस्खलने । भावेल्युट् ॥

स्खलितम् । न० कूटयुद्धादिनायुद्धम
र्यादाच्युतने । छले । छलिते ॥
भ्रेषे ॥ स्खलनम् । स्खल० । क्तः ॥

स्खालित्यम् । न० व्यभिचारे ॥

स्तनः । पुं० वक्षसउपाङ्गे । कुचे
। पयोधरे । वक्षोजे ॥ स्तनौपुंस
स्त्रयानार्या : विशेषउभयोरयम् ।
यौवनागमनेनार्या : पीवरीभवतः
स्तनौ ॥ गर्भवत्या : प्रसूताया :
स्तनौक्षीरपूरितौ ॥ नरोमशौस्त
नौपीनौघनावविषमौशुभौ ॥ स्त
नमर्दनादरत्वकारणौषधंयथा । कुष्ठ
नागबलाचूर्णनवनीतसमन्वितम्
तज्जंपीयुवतीनाम्बाहुयांन्मर्दनादरं-
स्तनम् ॥ स्तनयतिशब्दयतियोगमा
दयम्० स्तन्यतिशब्दयतेवाक्याम्-
कः । स्तनशब्दे । अच० पुंसी
तिघोवा ॥

स्तनन् । त्रि० शब्दायमाने ॥ स्तन०
। शतृ : अनादेश : ॥

स्तननम् । न० ध्वनिभावे ॥ मेघग
र्ज्जे ॥ कूजिते ॥

स्तनंधयः । न० अतिबालके । उत्ता
नशये ॥ स्तनंधयति । धेट्पाने ।
नासिकास्तनयोर्ध्माधेटोरितिखश्
। अरुर्द्विषदिति मुम् ॥

स्तनंधयी । स्त्री० स्तनपायाम् । अ
तिबालिकायाम् । उत्तानशयाया
म् ॥ धेटष्टित्वान्ङीप् ॥

स्तनपः । पुं० अतिशिशौ ॥ अर्भके
॥ स्तनौपिबति । पा० आतोनुपे
तिकः ॥

स्तनपा । स्त्री० छिन्नायाम् । स्तन
धय्याम् ॥ टाप् ॥

स्तनभरः । पुं० स्तनाभोगे ॥

स्तनभवः । पुं० रतिबन्धविशेषे ॥
यथा । स्वजङ्घाद्वयमध्ये तु कृत्वा यो
षित्पदद्वयम् । स्तनौधृत्वारमेत्
कामीबन्धः स्तनभवः स्मृतः ॥

स्तनमुखम् । न० चूचुके ॥

स्तनयित्नुः । पुं० वारिधरे । मेघे ।
मुस्तके ॥ स्तनिते । मृतौ । रोगे
॥ अशनौ ॥ विद्युति ॥ स्तनय
ति । स्तनगदीदेवशब्दे० चुरादा
वदन्तः । स्तनिहृषिपुषिगदिभ्यो
णेरित्नुच् । अयामन्तेतिणेरया
देशः ॥

स्तनवृन्तम् । ) न०
स्तनशिखा । ) स्त्री० स्तनमुखे ॥
स्तनाग्रम् । ) न०

स्तनान्तरम् । न० हृदये ॥

स्तनाभोगः । पुं० कुचभरे । स्तन
भरे ॥ कुचपरिपूर्णतायाम् ॥

स्तनालिङ्गनम् । न० कण्ठसूत्रे ॥
तल्लक्षणंयथा । उरसिदयितमुच्चै

रादिश्चितिश्रराक्षीस्तनयुगमुपश्चत्ये य त्स्तनाग्निद्धनंतदिति ॥

स्तनितम् । न॰ गर्जिते । मेघनिर्घोषे ॥ स्तनगदेशब्दे । भावेक्तः ॥ त्रि॰ शब्दिते ॥

स्तनितफलः । पुं॰ विकगटकवृक्षे ॥

स्तन्यम् । न॰ दुग्धे ॥ स्तनेभवम् । शरीरावयवत्वाद्यत् ।

स्तब्धः । त्रि॰ साभिमाने । अविनीते । अप्रगतस्वभावे । अनम्रे । गुरुदेवतादिष्वप्यनम्रे ॥ स्तम्भिते । जडीकृते ॥ स्तभ॰ । क्तः ॥

स्तब्धरोमा । पुं॰ वराहे । सूकरे । घोण्रिनि ॥ स्तब्धानि॰ अनम्राणि रोमाण्यस्य ॥

स्तम्बः । पुं॰ गुल्मे । स्कंधरहिते॰ आकाण्डद्रुमे ॥ तृणयवादिगुच्छे ॥ ब्रीह्यादीनाम्प्रकाण्डे ॥ आलाने ॥ तिष्ठति॰ अथवा । ष्ठा॰ । स्थस्तोम्बजबकाविस्तम्बच॰ तिष्ठते : स्तादिश्च ॥ तृणादौ ॥

स्तम्बकः । पुं॰ स्तम्बे ॥ स्वार्थे॰ यावादिभ्यः कन् ॥

स्तम्बकरिः । पुं॰ धान्ये ॥ स्तम्बङ्करोति । स्तम्बशकृतोरिन् । ब्रीहिवत्सयोरितिवक्तव्यम् ॥ त्रि॰ बहुत्स्तम्बे ॥

स्तम्बकारः । पुं॰ गुच्छकारके ॥

स्तम्बघ्ना । पुं॰ स्तम्बघ्ने ॥

स्तम्बघनः । पुं॰ स्तम्बघ्ने । तृणादिगुच्छोन्मूलनसाधने । स्तम्बघ्नस्तुस्तम्बघनः स्तम्बोयेनहिंन्यते॰ भूस्यमरः । स्तम्बस्य॰ घोषश्च । हन्यतेयेन । स्तम्बेकचेत्यप्॰ घञर्थेकविधानमितिकः । इत्यमरः । नौकारादिग्रहणार्थं ञ्चभावः अनार्थे ॥

स्तम्बघ्नः । पुं॰ तृणादुन्मूलकखनित्रादौ । स्तम्बघने ॥ स्तम्बोहन्यते॰ येन । स्तम्बेकचेतिकः ॥ नौकारादिग्रहणार्थं क्रतवं शपार्थ ॥

स्तम्बपूः । स्त्री॰ पुरीभेदे । तामलिप्ते । विष्णुगृहे । तमोलुक॰ कू॰ भा॰ प्र॰ देशे ॥

स्तम्बहननम् । } न॰
स्तम्बहननी । } स्त्री॰ स्तम्बघ्ने ॥

स्तम्बेरमः । पुं॰ हस्तिनि । हस्तावलि । हमे । स्तंबेरमते । रमु॰ । स्तम्बकर्णयोरमिजपोरिस्थच् । हस्तिसूचकयोरितिवक्तव्यम् । अन्यत्र स्तम्बेरमता । ततपुरुषेकृतीति॰ हलदन्तादितिवाल्लुक् ॥

स्तम्भः । पुं॰ स्थूणायाम् । यम्भ॰ भा॰ ॥ जडत्वे । प्रतिबन्धे ॥ स्तम्भाति । स्तनुभुरोधने । पचाद्यच् भावेघञ्वा ॥ गतिनिरोधे । निष्पत्ति[illegible]याम् ॥ गर्वे ।

स्तम्भकारः । पुं॰ वेष्टने । त्रि॰ स्थूणाकारके ॥ जाड्यकारके ॥

कौशितम् ॥ अपिच । अन्यायेनप रस्वस्य हरणं स्तेयमुच्यते॰ इति ॥ स्तेनस्य भावः कर्म वा । स्तेनाद्यन्न लोपश्च ॥ महापातकेषु ब्राह्मणसु वर्णहरणे ॥ निः चेपस्यापहर णं नराश्वरजतस्य च । भूमिवज्रमणी नाञ्च रुक्मस्तेयसमं स्मृतम् ॥

स्तेयफलः । पुं॰ कण्टकिवृक्षे । तेजः फले ॥

स्तेयी । पुं॰ चौरे । स्वर्णकारे ॥ स्ते यमस्त्यस्य । अतइनिः ॥

स्तैनम् । न॰ स्तेये ॥

स्तैन्यः । पुं॰ चौरे ॥ न॰ स्तेनस्यभा वे॰कर्मणिच, चौर्ये । स्तेनस्य भावःकर्मवा । स्तेनाद्यन्नलोपश्चेत्य च॰स्तेनादितियोगविभागात्ष्यञ् ॥

स्तैमित्यम् । न॰ जडतायाम् ॥ श रीरस्याद्रचर्मावगुण्ठितत्वमितिवै द्याः ॥

स्तोकः पुं॰ चातके ॥ त्रि॰ अल्पे ॥ स्तुच्यते । ष्टुचप्रसादे । घञ् । न्यङ्क्वादित्वात्कुत्वम् ॥ स्तूयतेवा । बाहुलकात्तुनः कः ॥

स्तोककः । पुं॰ चातके । स्तोकं कं जलमस्य ॥ स्तोकं कायतिवा । कै शब्दे । आतोनुपेतिकः ॥

स्तोतव्यः । त्रि॰ स्तवनीये । स्तुत्ये ॥

स्तोता । त्रि॰ स्तवकर्त्तरि ॥ स्तौति ष्टुञ् । तृच् ॥

स्तोत्रम् । न॰ स्तवे ॥ स्तूयतेऽनेन ष्टुञ्॰ । दाम्नीतिकरणे ष्ट्रन् । ति तुत्रेतिनेट् ॥ प्रगीतमन्त्रसाध्यायां स्तुतौ । उद्गात्रादिनागीयमानेऋ ग्जाते । प्रगीतमन्त्रसाध्यगुणिनि ष्ठगुणाभिधानंस्तोत्रमितियाज्ञिकानां व्यवहारः ॥

स्तोभः । पुं॰ न॰ अर्थशून्येवर्णे ॥ स्तोभः स्यात्सामविच्छेदेहेलनेस्त म्भनेऽपिचेतिहेमचन्द्रः । साङ्केत्यं पारिहास्यंवास्तोभंहेलनमेवच । वै कुण्ठनामग्रहणमशेषाघहरंविदुरि त्यत्र॰ स्तोभंगीतालापपूरणार्थंकृ तमितिश्रीधरः स्वामिनः ॥

स्तोभितः । त्रि॰ प्रोत्साहिते ॥

स्तोमः । पुं॰ समूहे ॥ यज्ञे । स्तो त्रे ॥ स्तूयतेऽनेन । ष्टुञ्॰ । अ र्त्तिस्तुस्वितिमन् । सोमयागेछन्दो गैः क्रियमाणायां पृष्ठादिसंज्ञका यांस्तुतौ । मन्त्रसमूहे ॥

स्तोमक्षारः । पुं॰ सर्वक्षारे ॥

स्तैमवल्ली । स्त्री॰ काण्डीरे । ना सासंवेदने । काण्डवेल॰ इ॰ गौ॰ भा॰ प्र॰ लताप्रभेदे ॥

स्तौपिकम् । न॰ बुद्धद्रव्ये । बौद्धा॰ इ॰ भा॰ प्र॰ ॥

स्त्यानम् । न॰ स्निग्धे ॥ प्रतिध्वानै ॥ घनत्वे ॥ आलस्ये ॥ स्त्यैष्ट्यै शब्दसङ्घातयोः । क्तः । अकर्म

नित्यदेवार्च्चनञ्चपुष्पजलादिकम् ॥ ज्ञानेनकिं किं तपसाजपहोमप्रयुञ्जमैः । विद्ययाचैवयशसास्त्रीभिर्य्यस्यमनोहृतमिति श्रीदेवीभागवतेतुलस्युपाख्यानम् ॥ तस्यास्वर्गोऽपिनिषिद्धः । यथा । स्त्रीजितस्यर्गमार्गं नासर्वं पुण्यं प्रणश्यति । नभूमौपातकीपापात् पापिनांस्त्रीजितात् परः ॥ इति । स्त्रियाजितः ॥

स्त्रीधनम् । न॰ स्त्रीस्वस्वाम्यहेभूतधने । यस्मिन् धनेपतिनिरपेक्षतया स्त्रियाअधिकारस्तस्मिन् ॥ तत्रविषाः । पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकं बन्धुदत्तं शुल्काभिधेयकमिति ॥ मनुश्च । अध्यग्न्यध्यावाहनिकं दत्तञ्च प्रीतिकर्म्मणि । भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥ नारदोऽपि । अध्यग्न्यध्यावाहनिकं भर्त्तुर्दायस्तथैव च । भ्रातृदत्तं पितृभ्याञ्च षड्विधं स्त्रीधनं स्मृतम् ॥ याज्ञवल्क्यः । पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकाद्यञ्च स्त्रीधनं परिकीर्त्तितम् ॥ तदेवमत्यवस्थितसङ्ख्यस्त्रीधनकीर्त्तनात् षट्त्वसङ्ख्याविवक्षिता । किन्तु॰ स्त्रीधनकीर्त्तनमात्रपराणि मुनिवचनानि । तदेवं स्त्रीधनं यद्वृत्तः स्वातन्त्र्ये दान॰ विक्रय भोगान् कर्त्तुमधिकरोति ॥ तदिदं किञ्चित् सङ्क्षिप्याह कात्यायनः । प्राप्तं शिल्पैस्तुयद्वित्तं प्रीत्या चैवयदन्यतः । भर्त्तुः स्वाम्यं भवेत्तत्रशेषं तुस्त्रीधनं स्मृतम् ॥ अन्यतइति । पितृमातृभर्तृकुलव्यतिरिक्तात् ॰ यल्लब्धम् ॰ शिल्पं नवायदर्जितम् ॰ तत्रभर्त्तुः स्वाम्यम् ॰ स्वातन्त्र्यम् । अनापद्यपिभर्त्ताग्रहीतुमर्हति । तेन॰ स्त्रियाअपिधनं नस्त्रीधनमस्वातन्त्र्यात् । एतद्व्यतिरिक्तधनन्तु॰ स्त्रियाएव॰ दानाद्यधिकारात् ॥ कुलार्णवसेतौश्रीमहानिर्वाणे श्रीसदाशिवः । पितृभिः श्वशुरैर्वापिदत्तंयद्धर्म्मसम्मतम् । स्वकृत्योपार्जितं यच्च स्त्रीधनं तत् प्रकीर्त्तितम् । मिति ॥ स्त्रियाः । धनम् ॥ नभर्त्तानैवच सुतोनपिताभ्रातरोनच । आदानेवाविसर्गेवास्त्रीधनेप्रभविष्णवइति दायभागः । प्रभविष्णवः ॰ प्रभवः ॥

स्त्रीधर्म्मः । पुं॰ ऋतौ । पुष्पे । आर्त्तवे । रजसि ॥ स्त्रीणामनुष्ठेये ॥ तत्रमनुः । बालयावायुवत्यावावृद्धयावापियोषिता । नस्वातन्त्र्येण कर्त्तव्यं किञ्चित्कार्य्यं गृहेष्वपि ॥ बाल्ये पितुर्वशेतिष्ठेत्पाणिग्राहस्ययौवने । पुत्राणांभर्त्तरिप्रेतेनभजेत्

स्त्रीस्वतन्त्रताम् ॥ पिता भाता सुतो वापि नेच्छेद्विरहमात्मनः । एषां हि विरहेण स्त्री गर्ह्ये कुर्य्यादुभे कुले ॥ सदा प्रहृष्टया भाव्यं गृहकार्य्येषु दक्षया । सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥ यस्मै दद्यात् पिता त्वेनां भ्राता वानुमते पितुः । तं शुश्रूषेत जीवन्तं संस्थितं च न लङ्घयेत् ॥ मङ्गलार्थं स्वस्त्ययनं यज्ञश्चासां प्रजापतेः । प्रयुज्यते विवाहेषु प्रदानं स्वाम्यकारणम् ॥ अनृतावृतुकाले च मन्त्रसंस्कारकृत् पतिः । सुखस्य नित्यं दातेह परलोके च योषितः ॥ विशीलः कामवृत्तो वा गुणैर्वा परिवर्ज्जितः । उपचर्य्यः स्त्रिया साध्व्या सततं देववत् पतिः ॥ नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम् । पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥ पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा । पतिलोकमभीप्सन्ती नाचरेत् किञ्चिदप्रियम् ॥ कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः । न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु ॥ आसीतामरणात् क्षान्ता नियता ब्रह्मचारिणी । यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥ अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् । दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम् ॥ मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता । स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥ अपत्यलोभाद्या तु स्त्री भर्त्तारमतिवर्त्तते । सेह निन्दामवाप्नोति पतिलोकाच्च हीयते ॥ नान्योत्पन्ना प्रजास्तीह न चाप्यन्यपरिग्रहे । न द्वितीयश्च साध्वीनां क्वचिद्भर्त्तोपदिश्यते ॥ पतिं हित्वापकृष्टं स्वमुत्कृष्टं या निषेवते । निन्द्यैव सा भवेल्लोके परपूर्व्वेति चोच्यते ॥ व्यभिचारात्तु भर्त्तुः स्त्री लोके प्राप्नोति निन्द्यताम् । शृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते ॥ पतिं या नाभिचरति मनोवाग्देहसंयता । सा भर्त्तृलोकमाप्नोति सद्भिः साध्वीति चोच्यते ॥ अनेन नारी वृत्तेन मनोवाग्देहसंयता । इहाग्र्यां कीर्त्तिमाप्नोति पतिलोकं परत्र च ॥ इति मानवे धर्म्मशास्त्रे पञ्चमोऽध्यायः ॥

स्त्रीधर्म्मिणी, स्त्री, ऋतुमती ॥ स्त्रीधर्म्मो रजोऽस्त्यस्याः । अत इनिठनाविति इनिः । ङीप् ॥

स्त्रीधवः, पुं, पुरुषः ॥

स्त्रीपरः, पुं, कामुके । षिङ्गे ॥

स्त्रीपण्योपजीवी, पुं, सम्भोगार्थमन्यस्मै स्त्रियं दत्त्वा तद्धनोपजीविनि ॥

स्त्रीपुंसौ, पुं, २ मिथुने । द्वन्द्वे ॥ स्त्री च पुमांश्च । अचतुरेत्यच् ॥

स्त्रीपुंसलक्षणा, स्त्री, पोटायाम् ॥

भाव्यसौ । स्थण्डिलेकुमाचाद्यतिस्थ
शेशेते । अती० इतिणिनिः ॥

स्थण्डिलसितकम् । न० वेद्याम् ॥
इ० हा० लौ ॥

स्थण्डिलेशयः । पुं० स्थाण्डिले ॥
व्रतेनस्थंडिलेशेते । शीङ्० अधि
करणेशेतेरित्यच् । अलुक् ॥

स्थपतिः । पुं० वृहस्पतौ । वृहस्पति
सवकर्त्तरि । जीवेष्टियाजके । स
गीष्पतौष्ट्यास्थपतिरित्यमरः । स
यज्वेतिसस्वस्य । कुवेरे । कञ्चु
किनि । सौविदे । यज्वनि । वा
स्तुभेदे । शिल्पिविशेषे । राज० था
सो० इ० भा० प्र० । तल्लक्षणंय
था । वास्तुविद्याविधानज्ञोलघुह
स्तोचितश्रमः । दीर्घदर्शीचशूरश्च
स्थपतिः परिकीर्त्तितः इति ।
स्थानंस्थः । सुपिस्थइत्यच० स्थ
इतियोगविभागात्कः । स्थस्यप
तिः । यद्वा । तिष्ठन्त्यस्मिन् ।
ष्ठा० । घञर्थेकः । स्थस्यासौपति
श्च । वि० प्रधाने ॥

स्थपुटः । त्रि० विषमोन्नते ॥ विष
मसञ्चारशीविनि ॥

स्थलम् । न० जलशून्याकृत्रिमभूभा
गे । स्थल्याम् । स्थलति । ष्ठल०
। पचाद्यच् । वस्त्रगृहे ।

स्थलकन्दः । पुं० वनाम्यकन्दे । वन
ओलइतिभाषाप्र० ॥

स्थलकमलम् । न० स्थलपद्मे ॥

स्थलकुमुदः । पुं० करवीरे ॥ इ०
रा० नट ः ॥

स्थलपद्मः । पुं० मानके । मान
कच्० इ० भा० । न० पुष्प
प्रभेदे । छत्रपत्रे । तमालके ॥ प्र
पौण्डरीके । स्थलपद्मंसाधुपुष्पं
हष्टिकृत्पुण्डरीयकमितिरभसः ॥

स्थलपद्मिनी । स्त्री० स्थलपद्मे ॥

स्थलपाकजम् । न० पक्वमांसविशेषे
। यथा स्थलेनपक्वंयन्मांसंतत्
त्तुवंस्थलपाकजम् ॥

स्थलमञ्जरी । स्त्री० अपामार्गे ॥

स्थलविहङ्गमः । पुं० मयूरादौ ॥
स्थलचरविहङ्गमः ॥

स्थलशृङ्गाटः । ) पुं० गोक्षुरे ।
स्थलशृङ्गाटकः । )

स्थलसीमा । पुं० स्थण्डिले ॥

स्थला । स्त्री० पुरुषेणसंस्कृतायां
भूमौ । स्थलति । ष्ठल० । प
चाद्यच् । टाप् ।

स्थली । स्त्री० अकृत्रिमायांभूमौ
। जानपदेतिङीष् ॥

स्थलीरुहा । स्त्री० घृतकुमार्याम् ।
दग्धायाञ्च ॥ त्रि० स्थलजाते ।
स्थलीरोहति । रुह० । इगुपधेति
कः । तत्पुरुषेकृतीत्यलुक् ॥

स्थलीशयः । पुं० मृगादौ ॥ स्थ
लीशेते । अधिकरणेशेतेरितिशीङो

। तिष्ठन्त्यस्मिन्नृशब्दादुतिव्युत्पत्त्या क्वचित्स्थानशब्दोऽयं वाच्यो । निकटे ॥ स्वधर्मानुष्ठायिनामसम्यग्वर्त्तिनाञ्च स्थानविशेषप्राप्तिर्यथा । वर्णानामाश्रमाणाञ्च सम्यग्धर्मानुपालिनाम् । असम्यग्वर्त्तिनां लोकान् ब्रह्मा चक्रे यथाचयत् ॥ प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् । क्षत्रियाणां तथा चैन्द्रं सङ्ग्रामेष्वनुवर्त्तिनाम् ॥ वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्त्तिनाम् । गान्धर्वं शूद्रजातीनां परिचर्यानुकारिणाम् ॥ अष्टाशीतिसहस्राणां यतीनामूर्द्ध्वरेतसाम् । स्मृतं तेषान्तु यत्स्थानं तदेव गुरुवासिनाम् ॥ सप्तर्षीणाञ्च यत्स्थानं स्मृतं तद्वनौकसाम् । प्राजापत्यं गृहस्थानं गृहधर्मानुवर्त्तिनाम् ॥ न्यासिनात्मपरस्वल्पयोगिनाममृतं स्मृतम् । एकान्तवासिनां ब्रह्मध्यायिनां परमं पदम् ॥ तामिस्रमन्धतामिस्रं महारौरवरौरवम् । असिपत्रवनं घोरं कालसूत्रमवीचिमत् ॥ वेदनिन्दकानां तु यज्ञव्याघातकारिणाम् । स्थानमेतत्समाख्यातं स्वधर्मं विनिवर्त्तिनाम् ॥ इति वह्निपुराणे सर्गकथननामाध्यायः ॥

स्थानकम् । न॰ आलवाले ॥ नगरे ॥

स्थानचञ्चला । स्त्री॰ वर्वरात्ते ॥

स्थानच्युतः । त्रि॰ स्थानभ्रष्टे । यथा । स्थानस्थितस्यापद्मस्य मित्रावरुण भास्करौ स्थानच्युतस्य तावेव क्लेदशोषणकारकौ ॥ इति ग॰ पु॰ ॥

स्थानपालः । पुं॰ स्थानरक्षके ॥

स्थानभ्रष्टः । त्रि॰ पदच्युते ॥ यथा । स्थानस्थितानि पूज्यन्ते पूज्यन्ते च पदे स्थिताः । स्थानभ्रष्टा न पूज्यन्ते केशा दन्ता नखा नराः ॥ इति गारुडेऽध्यायः ११५ ॥

स्थानाध्यक्षः । ) त्रि॰ स्थानरक्षके ॥
स्थानिकः । )

स्थानी । त्रि॰ स्थानविशिष्टे । स्थानीवति ॥

स्थानीयम् । न॰ पुर्यम् । पत्तने । निगमे । नगरे ॥ प्राकारादिनादुर्गयोजनविस्तीर्णं नगरं स्थानीयम् । स्थानायहितम् । तस्मै हितमिति॰ छः ॥ त्रि॰ स्थानभवे ॥ स्थानसम्बन्धिनि ॥

स्थाने । अ॰ आरणार्थे । हेतौ । युक्ते ॥ सादृश्ये । साम्ये स्थानस्थकरणम् । स्थानशब्दात् सत्करोतीति णिजन्तादेप्रत्ययः ॥

स्थापकः । त्रि॰ स्थापनकर्त्तरि ॥ स्थापयति । ष्ठा॰ । णिजन्तात् ण्वुल् ॥

स्थापत्यः । पुं॰ राज्ञां स्त्र्यागारे वशीरक्षाधिकृते । सौविदल्ले । कञ्चुकिनि । सिद्धान्ते पुरुषाः । घञर्थे

स्थितिः । स्त्री० अवस्थाने । ऊर्द्धाव स्थाने । मर्यादायाम् । न्यायपथ स्थितौ । संस्थायाम् । ईश्वरेच्छा निरुद्धस्यसर्वशोकस्यसर्गोत्तरेनि योगस्थापने । विद्यमानतायाम् । सृष्टिप्रलययोर्मध्ये । सीमनि । स्थानम् । ष्ठा० । स्थागापापचोभा वे० क्तिन् । तिष्ठत्यत्र वा । बाहुलकादधिकरणेक्तिन् ।

स्थितिस्थापकः । पुं० संस्कारविशेषे । अन्यथाकृतस्यपुनस्तदवस्थापादके घटादिपृथिवीवृत्तौ ।

स्थिरः । पुं० शनैश्चरे । मोक्षे । देवे । नगे । पर्वते । वृक्षे । कार्त्तिकेये । धववृक्षे । वृषे । वृषसिंहवृश्चिककुम्भराशिषु । न० नक्षत्रविशेषेषु । यथा । उत्तरात्रयरोहिण्योभास्करश्चध्रुवंस्थिरम् । तत्रस्थिरंबीजगेहशान्त्यारामादिसिद्ध्यतीति । त्रि० कठिने । अचले । दृढप्रयत्ने । रसाद्यंशेनचिरकालस्थायिनिशरीरे । तिष्ठति । ष्ठा० । अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः । इतिकिरच् । टिलोपः । षड्भावविकाररहितेसदेकरूपे ।

स्थिरकर्म्मा । त्रि० आफलोदयकारिणि ।

स्थिरगन्धः । पुं० चम्पके । त्रि० स्थिरस्थायिसौरभयुक्ते । स्थिरोगन्धो यस्मिन् ।

स्थिरगन्धा । स्त्री० पाटलायाम् । केतक्याम् ।

स्थिरचक्रः । पुं० मञ्जुघोषाभिधेजिनविशेषे । त्रि० सुस्थसैन्ये ।

स्थिरच्छदः । पुं० भूर्जपत्रे । स्थिराः छदायस्य ।

स्थिरच्छायः । पुं० देवद्रुमे । स्थिराचञ्चलाछायायस्य सः । वृक्षमात्रे । छायावृक्षे ।

स्थिरजिह्वः । पुं० मत्स्ये ।

स्थिरजीविका । स्त्री० स्थिरवृत्तौ । शाल्मलौ । त्रि० स्थिरवृत्तिमति ।

स्थिरजीविता । स्त्री० शाल्मलिवृक्षे ।

स्थिरतरः । त्रि० स्थाणौ । स्थेयसि । अतिस्थिरे । अतिशयेनस्थिरः । द्विवचनविभज्येतितरप् । एकरूपतयातिस्थिरे ।

स्थिरदंष्ट्रः पुं० भुजङ्गमे । वराहाकृतिविष्णौ । ध्वनाविस्थलय ः ।

स्थिरदारुः । पुं० शाकवृक्षे ।

स्थिरपत्रः । पुं० हिन्तालो ।

स्थिरपुष्पः । पुं० चम्पके । बकुले ।

स्थिरपुष्पी । स्त्री० तिलकद्रुमे ।

स्थिरफला । स्त्री० कुष्माण्डाम् ।

स्थिरबुद्धिः । त्रि० स्थिरप्रज्ञे । लब्धश्रवणमननफले । सुस्थिरानिश्चला सन्न्यासपूर्वकवेदान्तवाक्यविचार

परिपाकेणसर्वसंशयशून्यत्वेननिर्विचिकित्सानिश्चितात्मज्ञानिबुद्धिर्यस्य ॥

स्थिरमतिः । स्त्री॰ निश्चलायांबुद्धौ ॥ परमार्थवस्तुविषयायांमतौ ॥ त्रि॰ तद्वति ॥ स्थिरापरमार्थवस्तुविषयामतिर्यस्य ॥

स्थिरयोनिः । पुं॰ द्रुमे ॥

स्थिरयौवनः । पुं॰ विद्याधरे ॥ त्रि॰ चिरस्थायितरुणावस्थे ॥ स्थिरंयौवनमस्य ॥

स्थिररङ्गा । स्त्री॰ नील्याम् ॥

स्थिररागा । स्त्री॰ दारुहरिद्रायाम् ॥

स्थिरश्रीः । पुं॰ विष्णौ ॥ त्रि॰ निश्चलश्रीविशिष्टे ॥ स्थिराश्रीर्यस्मिन्॰ यद्वा ॥ स्थिरोपायोहिपुरुषः स्थिरश्रीरेवजायते । रक्षितुंनैवशक्नोतिचपलश्चपलांश्रियमिति मत्स्यपुराणम् ॥

स्थिरसाधनकः । पुं॰ सिन्धुवारवृक्षे ॥

स्थिरसारः । पुं॰ शाकवृक्षे ॥

स्थिरा । स्त्री॰ भुवि । धरित्र्याम् । विश्वम्भरायाम् ॥ शालपर्ण्याम् ॥ शाल्मलिवृक्षे ॥ तिष्ठति । इति॰ । अजिरशिशिरेत्यादिनाकिरच्॰ टिलोपः । टाप् । काकोल्याम् ॥

स्थिराङ्घ्रिपः । पुं॰ विल्वालवृक्षे ॥

स्थिरायुः । स्त्री॰ शाल्मलिद्रुमे ॥ त्रि॰ स्थिरमायुर्यस्याः ॥ षष्टिवर्षसहस्राणिवनेजीवतिशाल्मलिरितिवचनात् ॥

स्थूणा । स्त्री॰ गृहस्याधारभूतेस्तम्भे काष्ठमयीहिकर्णिकास्थूणाभवति । थूणी॰ इ॰ भा॰ प्र॰ गृहपूर्वः स्थूणाशब्दः क्लीवे । यथागृहस्थूणमिति ॥ सूर्म्याम् ॥ तिष्ठति । इति॰ । रास्नासास्नेतिसाधुः ॥ रुगन्तरे ॥ इतिहेमचन्द्रः ॥

स्थूरः । पुं॰ मनुष्ये ॥ तिष्ठति । इति॰ । स्थः किच्चेतिस्थूरम् ॥ स्थूरस्यायइतिमन्त्रेतुयोगपुरस्कारात् स्थिरस्येत्यर्थः ॥

स्थूरी । पुं॰ स्वरवत्सभवत्पृष्ठेनभारवाहकेऽश्वे ॥

स्थूलः । पुं॰ विराजि ॥ पनसे ॥ न॰ कूटे । समूहे ॥ त्रि॰ निष्प्रज्ञे ॥ जडे ॥ उपचितावयवे । पीने । पीवृ । पीवरे । मोटा॰ इ॰ भा॰ ॥ स्थूलशरीरे । आत्मनउपाधिविशेषे ॥ स्थूलोदेहोऽहम्प्रत्ययादात्मेतिलोकायतभेदः । तत्र । मृतसुषुप्तयोरपिसङ्गाताविशेषाच्चैतन्यप्रसङ्गात् । एककस्यचभूतस्यचैतन्यादर्शनात् । सङ्घातस्यचावस्तुत्वात् ॥ स्थूलयति । स्थूलपरिवृंहणे । चुराद्यदन्तः । पचाद्यच् ।

स्थूलक्षः । पुं॰ तृणविशेषे । सूच्य

ये । खरच्छदे । उलुखड० इ० गौ० दे० भा० प्र० । वि० स्थूले ।
स्थूलकङ्गुः । पुं० वरकधान्ये ॥
स्थूलकणा । स्त्री० स्थूलजीरके ॥
स्थूलकण्टकः । पुं० जालबर्बूरे ॥
स्थूलकण्टकिका । स्त्री० शाल्मलिवृक्षे ॥
स्थूलकण्टा । ) स्थूलकण्टिका । ) स्त्री० वृहत्याम् ॥
स्थूलकन्दः । पुं० हस्तिकन्दे ॥ शूरणे ॥ मानकन्दे ॥ रक्तलशुने । एक्षुने ॥
स्थूलकायः । पुं० स्थूलशरीरे ॥
स्थूलकाष्ठधृक् । पुं० वृहत्काष्ठाग्नौ । स्कन्धानले ।
स्थूलकाष्ठाग्निः । पुं० स्कन्धाग्नौ ।
स्थूलखण्डः । पुं० वाणे ॥
स्थूलकेश्वरः । पुं० सिद्धस्थानविशेषे ॥ स्थूलास्थात्स्थूलकेश्वरे० इति देवीगीता ॥
स्थूलग्रन्थिः । स्त्री० वचाप्रभेदे । महाभरा० इ० भा० ॥
स्थूलचञ्चुः । पुं० महाचञ्चुशाके ।
स्थूलचापः । पुं० तूलपरिष्कारार्थे धनुषि । तूलचापे । इ० भ० र० लौ ॥
स्थूलजीरकः । पुं० कृष्णजीरके । उपकुञ्चिकायाम् । कालौञ्जी० मगरैला० इ० भा० प्र० ॥
स्थूलतालः । पुं० हिंताले ॥
स्थूलत्वचा । स्त्री० काश्मर्याम् । गम्भार्याम् ।
स्थूलदण्डः । पुं० देवनले ॥
स्थूलदर्भः । पुं० मुञ्जे ॥
स्थूलदला । स्त्री० घृतकुमार्याम् ॥
स्थूलनालः । पुं० देवनले ॥
स्थूलनासः । ) स्थूलनासिकः । ) पुं० सूकरे ॥ वि० पीनमासायुक्ते ॥
स्थूलपटः । पुं० स्थूलशाटके । पटति । पटगतौ० पटविस्तारेवा । पचाद्यच् । स्थूलश्चासौपटश्च ॥ वि० स्थूलवस्त्रवति । यथा । कस्तूरिका । स्थूलपटायवगोधूमशालिनः । प्रलयेपिनसीदन्तियदिकन्यानजायते ॥
स्थूलपट्टः । पुं० कर्पासे ॥
स्थूलपट्टाकः । पुं० स्थूलवस्त्रे ॥
स्थूलपादः । पुं० हस्तिनि । व्याधिनास्थूलचरणे ॥
स्थूलपुष्पः । पुं० वकद्रुमे ॥
स्थूलपुष्पिका । स्त्री० गिरिजापराजितायाम् ॥
स्थूलप्रपञ्चः । पुं० विराजि ।
स्थूलफलः । पुं० शाल्मलिवृक्षे ॥
स्थूलफला । स्त्री० शणपुष्प्याम् ॥
स्थूलभद्रः । पुं० श्रुतकेवलिनामनि

जैनभेदे ॥

स्थूलभुक् । न० व्यष्ट्युपहितचैतन्ये० विश्वशब्दाभिधेये ॥ स्थूलान्विषयान् भुङ्क्ते । भुज० । क्विप् ॥

स्थूलभूतम् । न० पञ्चीकृताकाशादिभूते अपञ्चीकृतानामेव भूतानां परस्पर व्यवहर्तुं प्राणिनिकायव्यवहारनिर्वाहकतदीयधर्माधर्मापेक्षपरमेश्वरसंज्ञिदृष्ट्यादिनिमित्तापेक्षया विभागेन मिलितानां स्थूलतापत्तौ । पञ्चीकृतभूते ॥

स्थूलमरिचम् । न० कक्कोले ।

स्थूलमूलम् । न० चाणक्यमूलके ।

स्थूललक्ष : । त्रि० बहुदान्ये । स्थूलैर्महद्भिर्लक्ष्यते । लक्ष० । कर्म्मणि घञ् ॥

स्थूललक्ष्य : । त्रि० दानशौण्डे । बहुप्रदे । बदान्ये । स्थूलं कृटं लक्ष्यमस्य ॥ स्थूलैर्महद्भिर्लक्ष्यते वा । लक्ष० । कर्मणि यत् ॥

स्थूलवर्त्म्मकृत् । पुं० ब्रह्मयष्ट्याम् ॥

स्थूलवल्कल : । पुं० रक्तलोध्रे ॥

स्थूलवृत्तफल : । पुं० मदनवृक्षविशेषे । स्निग्धपिण्डीतके ।

स्थूलवैदेही । स्त्री० गजपिप्पल्याम् ।

स्थूलशर : । पुं० महाशरे । क्षुरपत्रे ॥

स्थूलशरीरम् । न० आत्मनउपाधिविशेषे । अन्नमयकोषे ॥ यथा । ख

सादिपञ्चीकृतभूतसम्भवं भोगालयं दुःखसुखादिकर्मणाम् । शरीरमाद्यन्तवदादिकर्म्मजं मायामयं स्थूलमुपाधिरात्मन : ॥

स्थूलशाटक : । पुं० स्थूलवस्त्रे । वराशौ ॥ शटति शटकआदौ स्थूल । सथूलश्चासौ शाटकश्च ॥

स्थूलशाटका ।
स्थूलशाटिका । स्त्री० स्थूलवस्त्रे । वराशौ ॥
स्थूलशाटि : ।

स्थूलशालि : । पुं० महाशाली । स्थूलतण्डुले ॥

स्थूलशिरा : । पुं० ऋषिविशेषे । न० बृहन्मस्तके । त्रि० तद्युक्ते । स्थूलं शिरो यस्य स : ॥

स्थूलशीर्षिका । स्त्री० क्षुद्रपिप्पलिकायाम् ॥

स्थूलषट्पद : । पुं० वरोले । बोलता० । कू० गो० भा० प्र० ॥

स्थूलस्कन्ध : । पुं० लकुचे ।

स्थूलहस्त : । पुं० करिशुण्डायाम् । हस्तिहस्ते ॥ त्रि० पीनभुजे ।

स्थूला । स्त्री० स्थूलैलायाम् । कृष्णपिपीलिकायाम् । गन्धपत्रायाम् । एर्वारौ । गजपिप्पल्याम् ॥ स्थूलमेश्वरत्वारोपाद्देव्याम् ॥

स्थूलांशा । स्त्री० गन्धपत्रायाम् ॥

स्थूलास्य : । पुं॰ महाराजाम्रे ॥

स्थूलास्य : । पुं॰ सर्पे ॥ वि॰ बृहन्मुखे ।

स्थूलैरण्ड : । पुं॰ महैरण्डे ॥ स्थूलैरण्डोगुणाढ्य : स्वादुरसवीर्यविपक्तिषु ॥

स्थूलैला । स्त्री॰ बृहदेलायाम् ॥ अस्यागुणायथा । स्थूलैलाकटुका पाकिरसेचानलकृल्लघु : । रूक्षोष्णा श्लेष्मपित्तास्रकण्डूश्वासतृषापहा ॥ हृल्लासविषवस्त्यास्यशिरोरुग्वमिकासनुत् ।

स्थूलोच्चय : । पुं॰ गण्डोपले । गण्डाश्मनि । स्थूलोपले ॥ असाकल्ये । अकात्स्न्र्ये ॥ वरण्डे ॥ गजानांमध्यमगतौ ॥ नीचैर्गतम्॰ स्थूलोच्चय : ॰ वीथिमार्ग इतितिर्यक्स्थितगतय : ॥ उच्चयनम् । चि अ॰ । एरच् । स्थूलस्योच्चय : । गजानांदन्तरन्ध्रे ॥

स्थेमा । पुं॰ स्थैर्ये । स्थिरस्वभाव: पृथ्वादित्वादिमनिच् । प्रियस्थिरे तिस्थादेश : ॥

स्थेय : । पुं॰ विवादपदस्वनिर्णेतरि । अचद्दर्गि । प्राड्विवाके ॥ तिष्ठत्यस्मिन्विवादपदनिर्णयार्थम् । ष्ठा॰ । आतुलकादधिकरणे॰ अचीयत् । ईद्यति ॥ पुरोधसि । वि॰ अतिस्थिरे ॥

स्थेयान् । वि॰ स्थास्नौ । स्थिरतरे ॥ अयमनयोरतिशयेनस्थिर : । द्विवचनविभज्योपपदेतरबीयसुनाविती यसुनि॰ प्रियस्थिरेतिस्थादेश : ॥ स्त्री॰ स्थेयसी ॥

स्थेष्ठ : वि॰ स्थिरतमे । अयमेषामतिशयेनस्थिर : । अतिशायनेतमबिष्ठनाविनीष्ठनि॰प्रियस्थिरेतिस्थादेश : ॥ सुस्थिरे ॥

स्थैर्य्यम् । न॰ स्थिरत्वे । अचञ्चलत्वे । मोक्षसाधनेप्रवृत्तस्याऽनेकविधविघ्नप्राप्तावपितदपरित्यागेनपुन : पुनर्यत्नाधिक्ये ॥ स्थिरस्वभाव : । ष्यञ् । स्तब्धत्वे ॥

स्थोरी । पुं॰ भारवाहितुरगे ॥

स्थौणेयम् । न॰ ग्रन्थिपर्णप्रभेदे । कुकुरौंधाख्यौषधौ । गांठयाला॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ अस्यप्रभेदागुणाश्चयथा । ईषत्सुगन्धिस्थौणेयंयुनेर॰ इतिलोके । स्थौणेयकंवर्हिवर्हंशुकवर्हंसुकुक्कुरम् । शौणेरम : शुकस्त्रापिशुकपुष्पंशुकच्छदम् ॥ स्थौणेयकंकटुस्वादुतिक्तंस्निग्धंत्रिदोषनुत् । मेधाशुक्रकरंत्वच्यंरक्षोऽग्नोज्वरजन्तुजित् ॥ हन्तिकुष्ठास्रतृट्दाहदौर्गन्ध्यतिलकालकान्॰ इतिभा॰ प्रकाश : ॥

स्थौणेयकम् । न॰ सुगन्धद्रव्यभेदे ।

वहिर्भुवि । स्थौर्ये ॥

स्थौरी । पुं॰ खरश्वभवत पृष्ठेनभारवाहकेऽश्वे । पृष्ठ्ये । स्थूलम्बेद म् । तद्वेदमिस्यच् । रलयोरैक्यम् । स्थौरंबलमस्यास्ति । इनिः ॥

स्थौललभ्यम् । न॰ बहुप्रदत्वे ॥ *

स्थौल्यम् । न॰ स्थूलत्वे ॥ स्थूलस्य भावः । ष्यञ् ॥

स्नपनम् । न॰ अभिषेचने ॥ स्नाने ॥ यथा । पञ्चामृत स्नपनं श्रेष्ठं स्नपनात्परं स्मृतम् । तपर्चाम्यां सदामन्नमक्षिपाजनिपातनमिति- दुर्गोत्सवप्रकरणे तिथ्यादितत्त्वम् ॥

स्नपितः । वि॰ क्षालिते ॥ सिक्ते ॥ स्नातेर्ण्यन्तात्क्तः । घटिञ्ज्ञोत्या दिनाणुक् । मितांह्रस्वः ॥ आ- प्लुते ॥

स्नवः । पुं॰ स्रवे । स्रवणे । क्षरणे ॥ स्नवनम् । आप्रस्रवणे । स्नुदेरप् ॥

स्नसा । स्त्री॰ स्नायौ ॥

स्नातः । वि॰ आप्लुते । कृतस्नाने ॥ यथा । स्नातोऽधिकारीभवतिदैवे पैत्रेचकर्म्मणि । असातस्यक्रियाः सर्वाः भवन्तिहियतोऽफलाः ॥ प्रातः समाचरेत्स्नानमतोनित्य मतन्द्रितः ॥ इतिप्रायश्चित्ततत्त्वम् स्नात्वाकर्माणिकुर्वीत । शिरः 'तथकुर्वीतदैवंपित्र्यमथापिवेति

स्मृतिः ॥ आप्लावे । भावेक्तः ॥

स्नातकः । पुं॰ आप्लुतव्रतिनि । समाप्तवेदपाठे॰ अगृहस्थे । आश्रमान्तरगतेसमाप्तवेदव्रते । कृत- स्नाने ॥ अत्राहहारीतः । त्रयः स्नातकाभवन्ति । विद्यास्नातको॰ व्रतस्नातकोविद्याव्रतस्नातकश्चेति । तत्रयः समाप्यवेदमसमाप्यव्रता निसमावर्त्तते॰ सविद्यास्नातकः । यः समाप्यव्रतानि॰ असमाप्य वेदंसमावर्त्ततेसव्रतस्नातकः । य उभयंसमाप्यसमावर्त्ततेसविद्याव्र तस्नातकोभवति ॥ अत्रभवन्तित्र यः पक्षाः । यथा । मन्त्रब्राह्मणा त्मकंवेदमधीत्यावबुद्ध्यचस्नाया दित्येकः पक्षः । साङ्गवेदमधी त्यावबुद्ध्यचस्नायादित्यपरः । अ न्यमावमप्यधीत्ययस्त्रविद्याभ्यस्य स्नायादितितृतीयः पक्षः । यस्तु विद्याविरहेपाठमात्रमधीतेनस्ना यादितिनिषेधः । यतोवेदाध्ययनं वेदविहिताग्निहोत्रादिकर्मोद्यनुष्ठा नप्रयोजनमिति ॥ स्नातिस्म । आः ॰ । गत्यर्थाकर्मकेतिक्तः । संज्ञा यांकन् ॥ यावादिषु॰ स्नातवेदस माप्ताविपिपाठाद्वाकन् ॥ गृहस्थ ब्राह्मणे ॥

स्नानम् । न॰ मज्जने । आप्लावे । आ प्लवे ॥ स्नानंषड्विधंभवति । यथा

-इत्यङ्गिराः । नित्यं नैमित्तिकं का
म्यं क्रियाङ्गमलकर्षणम् । क्रिया
स्नानं तथा षष्ठं षोढा स्नानं प्रकीर्त्ति
तमिति ॥ विशेषस्तु स्नानानां तत ए
वावगन्तव्यताम् । तथा भृङ्गस्मृतिः
॥ आग्नेयादिप्रभेदेन तच्च प्रोक्तं चतु
र्विधम् । यथा । आग्नेयं भस्मना
स्नानमवगाह्यन्तु वारुणम् । आपो
हिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृ
तमिति ॥ ष्णा शौचे । भावे ल्युट्
॥ स्नानं तर्पणपर्यन्तं स्नाहान्तं देव
पूजनम् । आह्निकस्थितसन्ध्यान्तं
विप्राणां स्मृतिसंमतम् । तत्र प्रातः
स्नानं प्रशंसन्ति दृष्टादृष्टकरं हितम्
। सर्वमर्हति पूतात्मा प्रातःस्ना
यी जपादिकमिति दक्षः । दृष्टं
कर्माधिकारः । अदृष्टं जपादिद्वारा
परलोकसिद्धिः ॥

स्नानतृणम् । न० कुशे ॥

स्नानीयम् । न० स्नानसाधने चूर्णादौ
॥ स्नायतेऽनेन । णा० । कृत्यल्यु
टो बहुलमित्यनीयर् ॥

स्नान्ती । स्त्री० जलमवगाहमाना-
याम् ॥

स्नायी । त्रि० स्नानकर्त्तरि ॥

स्नायुः । स्त्री० वायुवाहिन्यां नाड्या
म् ॥ वस्नसायाम् ॥ स्नाति । ष्णा
० । भाहुलकादुण् । आतो युक् चि
ण्कृतोः ॥

स्नाय्वर्म्म । न० नेत्ररोगप्रभेदे । तल्ल
क्षणं यथा । स्थिरं प्रस्तारिमांसाढ्यं
शुष्कं स्नाय्वर्म्म पञ्चममिति माधवक
रः ॥

स्नावा । पुं० रसिके ॥ स्नाति । ष्णा०
। स्नामदिपद्यर्त्तिपॄशकिभ्यो वनिप्
। धीवावत् ॥

स्नावरी । स्त्री० नद्याम् ॥ स्नान्त्य
स्याम् । ष्णा० । वनिप् । वनोर
चेति ङीब्रौ ॥

स्नावा । स्त्री० शिरायाम् ॥ स्नु प्रस्रव
णे । स्नावयति शरीरमिति ज्वाला ॥

स्निग्धः । पुं० वहुवारे । रक्तैरण्डे
॥ सरलवृक्षे । मयूरे ॥ न० समू
हगन्धे । जवादिके । सिक्थके ॥
त्रि० स्नेहयुक्ते । मसृणे । चिक्कणे
। मसृणे ॥ स्नेहेनगं तुकेनवास्ने
हेनयुक्ते । प्रिये । वत्सले । स्निह्य
ति स्म । ष्णिह प्रीतौ । अकर्मकत्वा
त् कर्त्तरि क्तः । वाद्रुहेति वः ॥ म
तिवुद्धिपूजार्थेभ्यश्चेति चात् कर्म्मा
ण्येवाक्तः ॥

स्निग्धकन्दा । स्त्री० द्रोणपर्ण्याम् ।
भूमिकदल्यां ॥

स्निग्धतण्डुलः । पुं० षष्टिशाली ॥

स्निग्धता । स्त्री० स्नेहे । प्रियत्वे ॥

स्निग्धदारु । न० देवदारुणि ॥ देवदा
रुप्रभेदे पूतिकाष्ठे ॥ सरलवृक्षे ॥

स्निग्धपत्रः । पुं० गजरद्दणे । घृत

कारञ्जे । गुच्छकरञ्जे ॥
स्निग्धप्रभा । स्त्री॰ मदर्याम् ॥ पाल ङ्क्याम् ॥ काश्मर्याम् ॥
स्निग्धपर्णी । स्त्री॰ गम्भार्याम् ॥
स्निग्धपिण्डीतक: । पुं॰ मदनवृक्षवि शेषे । स्थूलवृक्षफले ॥
स्निग्धफला । स्त्री॰ कर्कटीप्रभेदे । वालुङ्क्याम् । मूर्वालायाम् ॥
स्निग्धा । स्त्री॰ मेदायाम् ॥
स्नु: । पुं॰ प्रस्थे । सानौ । पर्वतस मभूभागे । स्रौतिजलम्॰ स्नाति वा । ष्णुप्रस्रवणे॰ ष्णाशौचेवा । मितद्वादित्वात्॰ डु: ॥ स्त्री॰ स्नायौ ॥
स्नुक्छद: । पुं॰ चौरकस्नुक्पौधे ।
स्नुत: । त्रि॰ स्रुते । स्नुतजलादौ । स्नुयतेस्म॰ । ष्णु॰ क्त: ॥
स्नुषा । स्त्री॰ सुतस्त्रियाम् । पुत्रव ध्वाम् ॥ स्नौति । ष्णु॰ । स्नुव्रश्चि कृत्यृषिभ्य: कित्दितिस: ॥ स्नु ह्याम् ॥
स्नुक् । स्त्री॰ स्नुह्याम् ॥ स्नुह्यति । ष्णुहउद्गिरणे । क्विप् । वादुहेति कुत्वम् । तदभावेहोढइतिढत्वे स्नुट्स्नुड् ॥
स्नुहा । स्त्री॰ स्नुहीवृक्षे ॥ भागुरिम ते॰ स्नुहटाप् ॥
स्नुहि: । स्त्री॰ स्नुह्याम् । स्नुह्य ति । ष्णुह॰ । सर्वधातुभ्यइन् ॥
स्नुही । स्त्री॰ सिहुण्डे ॥ कृदिकारा दक्तिनः॰ इतिपक्षे- ङीष् ॥
स्नेह: । पुं॰ सौहृदे । प्रेम्णि । प्रियतायाम् ॥ तामसीयंचित्तवृ त्तिविशेष: ॰ यस्मिन्सत्यन्यदीयै हानिवृद्धीस्वस्मिन्नारोप्येते । अ न्यविषय: प्रेमापरपर्याय: स्ने ह: ॥ यथा । स्मृत्वावियोगजंदु: खंत्यजस्नेहंप्रियेजने । अतिस् नेहवतिविद्ध्वस्तमिति रादीपिद्ध्वतीह ति । स्नेह्यतिप्रीणयतिपुरुषम् । ष्णिह॰ । पचाद्यच् । स्निह्यन्ति पुरुषायस्मिन् । अधिकरणार्थे॰ घञ् ॥ घृतादिरसविशेषे ॥ यथा स्नेहश्चतुर्विध: प्रोक्तोघृतंतैलं वसातथा । मज्जाच॰ तंपिबेन्म- र्त्य: किञ्चिदभ्युदितेरवौ ॥ स्थाव रोजङ्गमश्चैवद्वियोनि: स्नेहउच्य ते । तिलतैलंस्थावरेषुजङ्गमेषुघृ तंवरमिति ॥ द्वाभ्यांमिश्रस्तुभिं ब॰ यमकस्त्रिवृतोमहान् ॥ न्याय मते॰ चूर्णादिपिण्डीभावहेतौ॰ गुणविशेषे॰ जलमात्रवृत्तौ ॥ जलीयपरिमाणावयवनिष्ठोऽन्यवत्व निष्ठ: । तैलादावस्यप्रकर्षीस्यत स्तेषांदाहेभवति । यथोक्तंभाषा परिच्छेदे । स्नेहोजलेऽथोनिष्ठो यमनिष्ठोऽवयविन्यसौ । तैलान्त

रितत्प्रकर्षाद्दहनस्यानुकूलतेति ॥

स्नेहनम् । णिच् । भावे घञ् ॥ स्निह्यतेऽनेनवा ॥ स्नेहस्तु ; स्वमूलत्वमुक्तं गारुडे ११४ऽध्याये । यथा स्नेहाभयं तच्च स्नेहादुःखस्य भाजनम् । स्नेहमूलानि दुःखानि तस्मिं त्यक्ते महत्सुखमिति ॥ स्निग्धतायाम् ॥ यथा । स्नेहः प्रसूसलच्योद्वागन्विसारमेवनखसंस्थः । सुतधनसौभाग्ययुताः स्निग्धैस्तैनिर्धनारूत्तैरिति ॥

स्नेहा । पुं॰ व्याधिप्रभेदे ॥ सुहृदि ॥ चन्द्रे ॥ स्निह्यति । णिह॰ । श्वन्नुक्षन्पूषन्प्लिहक्लेदस्निहमूर्धन्मज्जन्नहन्निति उणा॰ कनिन॰ निपातनात् साधु ॥

स्नेहनम् । न॰ तैलमर्द्दने । म्रक्षणे । अभ्यङ्गे ॥ स्निह्यतेऽनेन । णिह॰ । ल्युट् ॥

स्नेहपात्रम् । न॰ कुत्वाम् । चर्ममयतैलादिभाण्डे ॥ स्नेहस्य तैलघृतादेः पात्रम् ॥

स्नेहप्रियः । पुं॰ प्रदीपे ॥ त्रि॰ तैलादिप्रिये ॥

स्नेहफलः । पुं॰ तिले । पापघ्ने

स्नेहभूः । पुं॰ श्लेष्मणि । त्रि॰ स्निग्धभूमौ ॥

स्नेहरङ्गः । पुं॰ तिले ॥

स्नेहवती । स्त्री॰ मेदायाम् ॥ स्नेहोऽस्त्यस्याम् । रसादिभ्यश्चेति मतुप् । ङीप् ॥

स्नेहाशयः । पुं॰ प्रिये । प्रदीपे ।

स्नेहवस्तिः । स्त्री॰ अनुवासनवस्तौ । तैलपिचकारी॰ इ॰ भा॰ ॥ यथा । वस्तिर्द्विधाऽनुवासाख्यो निरूहश्च ततः परः । यः स्नेहैर्दीयते स स्यादनुवासननामकः ॥

स्नेहबीजः । पुं॰ पियालवृक्षे ॥ त्रि॰ स्नेहकारणे ॥

स्नेहाशः । पुं॰ प्रदीपे । दीपे ॥

स्नेही । पुं॰ वयस्ये ॥ त्रि॰ स्नेहयुक्ते ॥

स्नेहुः । पुं॰ व्याधिभेदे ॥ चन्द्रे ॥ स्निह्यति । णिह॰ । भृमृशीङ्स्निहीत्यादिनाउः ॥

स्पन्दः । पुं॰ स्पन्दने । प्रस्फुरणे ॥ स्पन्दते । स्पदि किञ्चिच्चलने । पचाद्यच् ॥

स्पन्दनम् । न॰ स्पन्दे । किञ्चिच्चलने ॥

स्पर्द्धकः । त्रि॰ सपद्धाकारे ॥

स्पर्द्धा । स्त्री॰ सङ्घर्षे । पराभिभवेच्छायाम् ॥ स्पर्द्धतेऽस्मिन् स्त्रीत्वं ॥ साम्ये ॥ क्रमसमुन्नतौ ॥ स्पर्द्ध सङ्घर्षे । भिदाद्यङ् ॥

स्पर्द्धालुः । त्रि॰ स्पर्द्धायुक्ते ॥ स्पर्द्धालाति । ला॰ । मितद्वादित्वात् डुः ॥

स्पर्शः । पुं॰ रुजायाम् ॥ सन्तापे ॥

सन्तापे । स्पृशति । स्पृशता
धनस्पर्शनयोः । पदरुजेत्यच० स्पृ
शउपतापइतिकर्त्तरिघञ् ।। यथा।
स्पर्शनंस्पर्शः भावेघञ् ।। दाने
।।स्पर्शके । कादिमावसानवर्गा
चरे । उपतापे । रोगविशेषे ।
स्पर्शके ।। मणिविशेषे । पारस०
इ० भा० प्र० ।। त्वगिन्द्रियविषये ।
स्पर्शने । त्वगिन्द्रियमात्रग्राह्यगु
णविशेषे ।। सत्रविधः । शीतो
ष्णानुष्णाशीतभेदात् । पृथिव्यप्ते
जोमात्रवृत्तिः । तत्रशीतोजले ।
उष्णस्तेजसि । अनुष्णाशीतः पृथि
वीवाय्वोः । रूपरसगन्धस्पर्शाः
पृथिव्यांपाकजाः ० अनित्याश्च ।
जलादावपाकजाः ० नित्याः
अनित्याश्च । नित्यगतानित्याः ०
अनित्यगताअनित्याः अथाहुः ।
कठिनः पार्थिवः स्पर्शः शीतो
ष्णौजलवह्निजौ । मृदुर्वायोरिति
स्पर्शविशेषाइहकीर्त्तिताः ।। स्प
र्शसामान्यस्पर्शविशेषाणांजयइति
।। इन्द्रियैःस्पृश्यन्ते० इतिव्युत्प
त्त्या० शब्दादिविषयेषु ।। माचा
मा० । ० ।। स्पर्शनम् । स्पृश
स्पर्शने । अकर्त्तरिचकारकेसंज्ञा
यामितिघः ।। पुराणे० एका
दशविधः स्पर्शउक्तोयथा । उष्णः
शीतः सुखदुःखः स्निग्धोविश

दएवच । खरोमृदुश्लक्ष्णश्चलघु
गुरुरितिक्रमात् ।। कामिनस्तु ।
शब्दादीनाम्पञ्चानांमध्येस्पर्शसुखं
वरम् । । आनन्दरसमूलंवैनान्य
दस्तिसुखंकिलेत्याहुः ।।
स्पर्शकः । पुं० स्पर्शे ।। त्रि०
स्पर्शनकर्त्तरि ।।
स्पर्शज्ञानम् । न० त्वाचप्रत्यक्षे ।।
स्पर्शनः । पुं० श्वसने । वायौ ।।
स्पृशति । स्पृश० । बहुलमन्य
त्रापीतियुच् ।। न० दाने ।। स्प
र्शे ।। स्पृशेर्भावेल्युट् ।।
स्पर्शमणिः । पुं० स्पर्शे । पा
रस० इ० प्र० मणौ ।
स्पर्शमणिप्रभवम्० । न० काञ्चने
। स्वर्णे ।।
स्पर्शलज्जा । स्त्री० लज्जालुवृक्षे ।।
स्पर्शशुद्धा । स्त्री० शतमूल्याम् ।।
स्पर्शस्पन्दः । पुं० भेके ।।
स्पर्शा । स्त्री० कुटलायां ।।
स्पर्शानन्दा । स्त्री० रतिमदायाम्
।। अप्सरःसु । स्पर्शेन० स्प
र्शेनवाआनन्दोऽस्याः ।।
स्पर्शितः । त्रि० प्रतिपादिते ।।
स्पशः । पुं० सम्पराये । युद्धे ।।
प्रणिधौ । चरे । हैरिके । अस्यप
र्यायायथा । यथार्हवर्णः प्रणि
धिरपसर्पश्चरः स्पशः । चारश्च
गूढपुरुषइति ।। स्पशति । स्प

अमसंपर्शनबन्धनयोः । पचाद्य
च् ॥

स्पष्टः । त्रि॰ स्फुटे । प्रव्यक्ते ।
उल्वणे । प्रकटे ॥ स्पष्टयतिस्म
। स्पष्ट॰ । क्षुब्धस्वान्त : । शा
ट्टान्तेतिसाधुः ॥

स्पष्टीकृतः । त्रि॰ व्यक्तीकृते ।

स्पाशनः । पुं॰ स्पर्शे । स्प
र्शनेनगच्छति शीघ्रगत्वम् ॥

स्पाशितः । त्रि॰ स्पृष्टे ॥ स्पश॰ :
क्तः । वाटान्तेतिसाधुः ॥

स्पृक्का । स्त्री॰ सुगन्धिद्रव्यविशेषे ।
शाकभेदे । पृक्कायाम् ॥ गुणास्तु ।
स्पृक्कास्वादीर्हिमाकुष्ठादिनिहन्तिनिखि
लदोषनुत् । कुष्ठकाण्डूविषस्वेदरा
हाश्रीज्वररक्तहृत् ॥ स्पृशति । स्पृ
शस्पर्शने । बाहुलकात् कक् ॥

स्पृशा । स्त्री॰ भुजङ्गघातिनीलता ।
कङ्कालिका॰ इ॰ गौ॰ दे॰ भा॰
प्र॰ ॥

स्पृशी । स्त्री॰ कण्टकार्याम् । स्पृ
शति । स्पृश॰ । इगुपधेतिकः ।
गौरादिः ॥ *

स्पृश्यः । त्रि॰ स्पर्शनीये ।

स्पृष्टः । त्रि॰ कृतस्पर्शे ॥

स्पृष्टास्पृष्टम् । न॰ परस्परस्पर्शने ॥

स्पृष्टास्पृष्टि । अ॰ परस्परस्पर्शने । छु
आभेटी॰ छुयाछुत॰ इ॰ भा॰ ॥
यथा । तीर्थविवाहयात्रासङ्ग्रा
मेदेशविप्लवे । नगरग्रामदाहेषुस्पृ
ष्टास्पृष्टिनदुष्यति ॥ आपद्यपिचक
ष्टायांभयभीतेहितेतथा । माता
पित्रोर्गुरोर्वापिनिर्देशेवर्त्तनात्तथा
॥ स्पृष्टास्पृष्टि॰ इत्यव्ययं क्रियाव्य
तीहारे । तथेतिनदुष्यतीत्यर्थः ॥

स्पृष्टिः । स्त्री॰ स्पर्शे । पृक्तौ ॥ स्पर्श
नम् । स्पृशः क्तिन् ॥

स्पृहणीयः । त्रि॰ श्लाघ्ये ॥ कमनीये
। मनोहरे ॥

स्पृहयालुः । त्रि॰ सस्पृहे । स्पृहाशी
ले । लोभिनि ॥ स्पृहयति॰ त
च्छीलः । स्पृहइच्छायाम् । स्पृहि
गृहीत्यालुच् ॥

स्पृहा । स्त्री॰ दोहदे । इच्छायाम् ।
काङ्क्षायाम् ॥ भिदादेराकृतिग
णत्वात्स्पृहेरङ् ॥ धर्माविरोधेन
प्राप्तीच्छायाम् ॥ उक्तञ्चपुरध
र्मेषुदृष्टनाशेषु॰ येनकेनाप्युपाये
नोपादित्सायाम् ॥ दर्शांतिकायां
चित्तवृत्तौ । सुखानुभवकालि॰ त
ज्जातीयसुखस्यकारणधर्ममननुष्ठा
यतद्ग्रिवतदाकाङ्क्षारूपायांतामस-
स्यांचित्तवृत्तौ ॥ भाक्तिर्वसा ॥
तस्यानिन्दाप्रशंसयथा । नपीवनं
ब्राह्मणानांतपः कल्पतरुस्तथा ।
तपस्याकामधेनुस्तस्मात्तपसिस्पृ
हा ॥ ऐश्वर्यंचविद्याश्चशास्त्रं
चतथाविद्याम् । शूद्राणांविप्रसेवा

यांस्पृहावद्भिर्व्विनिन्दिता ॥ क्षत्त्रिया-
णां स्वतपस्विस्पृहाभिः प्रशंसिता । ब्राह्मणानां विक्रीडयुत्स्पृहाभिर्व्विनिन्दिता ॥ क्षत्त्रियाणां स्वधर्म्मेण रणे मृत्युर्न गर्हितः । रक्षःस्पृहा ब्राह्मणानां लिकिर्दिविडम्बना ॥ तपोधनानां विप्राणां ब्राह्मणानां युगे युगे । शान्तिस्वस्थ्यशनं कर्म विप्रधर्म्मेनिसङ्गरः ॥ इति ब्रह्मवैवर्त्ते गणपतिखण्डे ३५ अध्यायः ॥

स्पृह्यः पुं० फलपूरे । मातुलुङ्गके । त्रि० स्पृहार्हे । वाञ्छनीये ।

स्पृष्टः त्रि० उपतापके । उपतप्तरि । स्पृशति । स्पृश संस्पर्शने । तृच् । अनुदात्तत्वान्नागमः । स्पर्शनम् । क्त्यल्युटौ बहुलमिति भावेऽत्र क्तौ ॥ सप्तमे ॥ समापि ।

स्फटः पुं० स्फटायाम् । स्फुटति ॥ स्फुट विकसने चुरादिः । णिजभावे पच् अच् । पृषोदरादिः ।

स्फटा स्त्री० फणायाम् । स्फट + टाप् ।

स्फटिकः पुं० स्वनामख्यातप्रसिद्धे मणौ । सूर्य्यकान्ते । भास्वरे । शालिपिष्टे । सीतशिवे ॥ अस्य गुणादयो यथा । स्फटिकः समशीतोष्ण पित्तदाहार्त्तिदोषनुत् । तस्याक्षमालां जपतां दत्ते कोटिगुणं फलम् ॥ परीक्षाप्यथा । यद्गङ्गातोयबिन्दुप्रतिविमलतमं निस्तुषं नैवच्छद्म स्निग्धं शुद्धान्तरालं मधुरमतिहिमं पित्तदाहास्रहारि । पाषाणैर्यन्निघृष्टं स्फुटितमपि निजां स्वच्छतां नैव जह्यात् तज्जात्यं जातुलभ्यं शुभमुपदिनुते शैवरत्नरत्नम् ॥ इति राजनिघण्टः ॥ अपि च । मुक्ताविद्रुमवज्रेन्द्रवैदूर्य्यस्फटिकादिकम् । मणिरत्नं सरं शीतं कषायं स्वादु लेखनम् ॥ चक्षुष्यं धारणात् तच्च पापालक्ष्मीविनाशनमिति राजवल्लभः ॥ तस्योत्पत्तिपरीक्षे यथा । कावेरीविन्ध्ययवनचीननेपालभूमिषु । लाङ्गलीव्यकिरन् मेदो दानवस्य प्रयत्नतः ॥ आकाशशुद्धं नैलाद्यमुत्पन्नं स्फटिकं ततः । मृणालशङ्खधवलं किञ्चिद्वर्णान्तरान्वितम् । न तत्तुल्यं हि रत्नानामथवा पापनाशनम् । संस्कारशिल्पिना सद्योमूल्यं किञ्चिल्लभेत ततः ॥ इति गारुडे ७८ अध्यायः ॥ तथा । हिमालये सिंहले च विन्ध्याटविसटे तथा । स्फटिकं जायते चैव नानारूपं समप्रभम् ॥ हिमाद्रौ चन्द्रसङ्काशं स्फटिकं तद्द्विधा भवेत् । सूर्य्यकान्तं तत्रैकं चन्द्रकान्तं तथापरम् ॥ सूर्य्यांशुस्पर्शमात्रेण वह्निं वमति तत्क्षणात् । सूर्य्यकान्तं तदाख्यातं स्फटिकं रत्नवेदिभिः ॥

पूर्णेन्दुकरसंस्पर्शादमृतं स्रवति क्षणात्। चन्द्रकान्तं तदाख्यातं दुर्लभं तत्कलौ युगे॥ अशोकपल्लवच्छायं दाडिमीबीजसन्निभम्। विन्ध्याटवितटे देशे जायते मन्दकान्तिकम्॥ सिंहले जायते कृष्णमाकरे गन्धनीलके। पद्मरागभवे स्यानेद्विविधं स्फटिकं भवेत्॥ अत्यन्तनिर्मलं स्वच्छं सर्वतः शकलं शुचि। ज्योतिर्ज्वलनमाश्लिष्टं मुक्ताज्योतीरसं हिमम्॥ तदेव लोहिताकारं राजावर्त्तं मुदाहृतम्। आनीलं तत्तु पाषाणं प्रोक्तं राजमयं शुभम्। ब्रह्मसूत्रमयं यत्तु प्रोक्तं ब्रह्ममयं द्विजैः॥ इति स्फटिकपरीक्षा। इति भोजराजकृतयुक्तिकल्पतरुः॥

स्फटया। स्त्री॰ स्फट्याम्। रङ्गदायाम्। स्फटिकायाम्। फटकरी॰ इ॰ भा॰ प्र॰ पाषाणे॥

स्फटिकाचलः। पुं॰ स्फटिकीभृति। कैलासे॥

स्फटिकात्मा। पुं॰ स्फटिके॥

स्फटिकाभ्रः। पुं॰ कर्पूरे॥

स्फटिकारिः। स्त्री॰ स्फटिकायाम्॥

स्फटिकारिका। ) स्फटिकारी। ) स्त्री॰ स्फटिकायाम्॥

स्फटी। स्त्री॰ स्फटिकायाम्॥

स्फुरणम्। न॰ स्फुरणे। स्फारस्फुरण

इत्यकारोपधं केचित्पठन्ति। स्वार्थे गलन्तादस्मादण्॥

स्फटिकम्। न॰ स्फटिकोपले॥

स्फाटिका। स्त्री॰ स्फटिकोपले। फटकरी इति ख्याते पाषाणे॥ अस्या गुणा यथा। स्फाटिका तु कषायोष्णा वातपित्तकफव्रणान्। निहन्ति श्वित्रवीसर्पान् योनिसङ्कोचकारिणीति॥

स्फाटिकोपलः। पुं॰ स्फटिकायाम्। स्फटिके॥

स्फाटिकीभृत्। पुं॰ कैलासे॥

स्फातिः। स्त्री॰ वृद्धौ। स्फायनम्। स्फायी वृद्धौ। क्तिन्॥ *॥

स्फायितः। त्रि॰ वृद्धिङ्गते॥

स्फारः। पुं॰ विकटे॥ करकादेर्बुद्बुदे॥ त्रि॰ विपुले। विशाले॥ यथा। तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः। इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः॥ स्फायते। स्फायी॰। स्फायितञ्चीति रक्॥ यद्वा। स्फुरणम्। स्फुर संचलने। घञ्। स्फुरतिस्फुलत्योर्घञीत्यात्त्वम्॥

स्फिग्घातनकः। पुं॰ कट्फले॥

स्फिग्देशः। पुं॰ वालधिमूलप्रदेशे॥

स्फिक्। स्त्री॰ कटिप्रोथे। कटिदेशस्थमांसपिण्डे। स्फायते। स्फायी॰। बाहुलकात् क्विप् प्रत्ययः॥

स्फेटति । स्फिट हिंसायाम् । क्विप् । स्फिगपूतेति निपातनात् टस्य चइति मुकुटः ॥

स्फिरः । त्रि० प्रचुरे ॥ स्फायते । स्फायी० । अजिरशिशिरेति किरच् टलोपश्च ॥

स्फीतः । त्रि० समृद्धे ॥ विकसिते ॥ स्फायते स्म । स्फायी० । क्तः । स्फायः स्फी निष्ठायाम् ॥ कथं स्फीतिकाम इति स्फीतमाचष्टे० इति ण्यन्तादचः । अल्लोपणिलोपौ ॥

स्फुट् । स्त्री० ईश्वरी ॥ पादस्फोटे । स्फुटति । स्फुट० । क्विप् ॥

स्फुटः । त्रि० व्यक्ते । स्पष्टे । सच घटादीनां विषयेन्द्रियसन्निकर्षजन्यप्रतिदशायां प्रमाणभेदाद्भवतीति प्रसिद्धमेव । प्रफुल्ले ॥ व्याप्ते ॥ सिते । शुक्ले । स्फुटति । स्फुट विकसने । इगुपधेति कः ॥ स्फुटिते । भिन्ने ॥

स्फुटता । स्त्री० विशदार्थतायाम् ॥

स्फुटनम् । न० विदरे । विदरणे ॥ स्फुट० । कुटादि० । ल्युट् । विकसने ॥

स्फुटबन्धनी । स्त्री० ज्योतिष्मत्याम् । पारावताङ्घ्र्याम् ॥

स्फुटलः । पुं० तुम्बुरुवृक्षे । स्र० लघ्ने ॥

स्फुटा । स्त्री० फणायाम् ॥ स्फुट० । कः । टाप् ॥

स्फुटिः । स्त्री० पादस्फोटामये । विपादिकायाम् ॥ निर्भिन्नकर्कटीफले । इर्वारुशुक्तिकायाम् । फूट० इ० भा० प्र० ॥

स्फुटितः । त्रि० विकचे । विकसिते । दीर्णे । भिन्ने ॥ अस्फुटत् । स्फुट० । क्तः ॥

स्फुरः । पुं० फलके ॥ स्फुरणे ॥

स्फुरणम् । न० स्फुरणे । फरकना इति भाषा । यथा० अङ्गस्फुरणमेवस्फुरणम् ॥ किञ्चिच्चलने । भाने । कम्पने ॥ स्फुर स्फुरणे सञ्चलनेच । कुटादिः । ल्युट् ॥

स्फुरन् । त्रि० कम्पनयुक्ते । दीप्यमाने ॥

स्फुरितम् । न० स्फुरणे । त्रि० मनसः कल्पनायाम् । उल्लसिते ॥ उज्ज्वले । प्रतिफलिते ॥

स्फुर्जकः । पुं० कालस्कन्धे । तिन्दुके ॥

स्फूर्जथुः । पुं० वज्रपतनजनितध्वनौ ॥ स्फूर्जथौ ।

स्फुलम् । न० तम्बू० इ० प्र० वस्त्रवेश्मनि ॥

स्फुलिङ्गः । त्रि० अग्निकणे । चिनगारी० इ० भा० ॥ स्फु० इत्यनुकरणशब्दः । स्फुना० फूत्कारेण०

लिङ्गति० गच्छति । लिगिगतौ । पचाद्यच् ॥

स्फुलिङ्गा । स्त्री० अग्निकणजातौ ॥ आतावपिनञ्चेष । अजादिषुपाठात्० टाप् ॥

स्फुलिङ्गनी । स्त्री० अग्नेर्जिह्वाविशेषे ॥

स्फूत्कारः । पुं० फूत्कारे ॥

स्फूर्जकः । पुं० तिन्दुकवृक्षे । तेंटू० इ० भा० प्र० ॥ स्फूर्जति । टुओस्फूर्जावज्रनिर्घोषे ॥ ण्वुल् ॥

स्फूर्जथुः । पुं० वज्रनिर्घोषे । वज्रपातजध्वनौ ॥ स्फूर्जनम् । टुओस्फूर्जा० । ट्वितोथुच् । मेघनादे । तगडलीये ॥

स्फूर्जनः । पुं० तिन्दुके ॥

स्फूर्त्तिः । स्त्री० स्फुरणे ॥

स्फूर्त्तिमान् । त्रि० पाशुपते ॥ यथा । पाशार्थिकः पाशुपतश्चिद्रूपः स्फूर्त्तिमान्मतः । इतिच काण्डशेषः । स्फूर्त्तिविशिष्टे ॥

स्फेमा । पुं० स्फिरत्वे । प्रचुरतायाम् ॥ स्फिरस्यभावः । पृथ्वादित्वादिमनिच् । प्रियस्थिरेत्यादिनास्फादेशः ॥

स्फेयः । त्रि० प्रचुरतरे । स्फिरतरे ॥ द्वयोर्मध्येऽतिशयेनस्फिरम् । ईयसुन् । प्रियस्थिरेतिस्फादेशः ॥

स्फेरम् । त्रि० भूयिष्ठे ॥

स्फेष्ठः । त्रि० अतिशये । भूयिष्ठे ॥ अयमेषामतिशयेनस्फिरः । इष्ठन् । प्रियस्थिरेतिसाधुः ॥

स्फैयकृत : । पुं० स्फाकृतौपथ्ये ॥ अण् ॥

स्फोटः । पुं० स्फोटके । विस्फोटे । पिडके । शब्दव्यापारे । स्फुट्यते० व्यज्यतेऽर्थः० स्फुटत्यर्थोयस्मादितिवा । स्फुटविकसने । घञ्० अज्वा ॥

स्फोटकः । पुं० फोडाइतिख्याते० रोगे । पिडके ॥ स्फोटति स्फुटिर्विशरणे । ण्वुल् ॥

स्फोटनम् । न० विदारणे ॥

स्फोटनी । स्त्री० मणिशङ्खादिवेधोपकरणे । आस्फोटन्याम् ॥ स्फोट्यतेऽनया । स्फुटभेदनेचुरादिः । करणेल्युट् ॥

स्फोटबीजः । ) पुं० वातारीभल्लातके ॥
स्फोटबीजकः । )

स्फोटायनः । पुं० मुनिविशेषे । कक्षीवति । स्फोटप्रतिपादनपरे० वैयाकरणे । स्फोटोऽयनं परायणंयस्यसः ॥

स्फोटिका । स्त्री० खञ्जनिकायाम् । हापुचिकायां ॥

स्फ्यः । पुं० यज्ञाङ्गभूते० खड्ग

स्मरकाम्

स्मृ। ध० चलने ॥ पाहपूरणे ।
प्रसिद्धे । स्मयते ॥ ष्मिङ् ई
षद्धसने । चन्द्रेस्योपरीत्यिङ: ॥
स्मृति। पि० छ्वादस्थयोर्वा ॥
स्मयः। पुं० चद्भुते॥ गर्व ॥ स्म
यनम्। ष्मिङ्०। एरच्॥
स्मरः। पुं० कामे। पञ्चशरे॥
स्मरयति० उत्कण्ठयति। स्मृ
आध्याने। पचाद्यच्। स्मर्यते
ऽनेनवा। पुंसिसंज्ञायांघः॥ ध
न्त: करणधर्म्मेऽपरण्याख्ये॥ स्मर
णम्। भावेघोवा॥
स्मरकूपकः। पुं० भगे। स्मरागारे।
योनौ॥
स्मरगृहम्। न० भगे। स्त्रीचिह्ने॥
स्मरचक्रः। पुं० रतिबन्धविशेषे॥
यथा। धृत्वायामकरेणाङ्घ्रिंस्वपदं
स्थोपरिस्थितम्। हृढस्मरमतेस्का
मीस्मरचक्रःप्रकीर्त्तितः।
स्मरकूपम्। न० योनौ।
स्मरणम्। न० चिन्तायाम्। स्मृतौ
॥ आध्याने॥ स्मृ चिन्तायाम्।
ल्युट्॥ चलङ्कारविशेषे॥ यथा।
यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृ-
तिः। स्मरणम्॥ यः पदार्थः
केनचित्सहकेचनियतोयदाकदा-
चिदनुभूतोऽभूत्। सकालान्तरे
स्मृतिप्रबोधाधायिनि० तत्समानेव
स्तुनिदृष्टेसतियत्तदर्थंविषयंतेतद्व
वेत्स्मरणम्। उदाहरणम्। नि
मनाभिकुहरेषुयदम्भः प्राविवत्तंच
लदृशांलहरीभिः। तद्भवैः कुह
रतेःसुरनायः स्मारिताः सुरत
कण्ठकूजितानाम्॥ यथावा। करतु
चगहितजलोद्राः० यथामृतिविसि
चाधरपुटस्य। सन्धरिचपचभञ्जस्य
स्मरणमद्वकङ्कसारीमञ्जम्। चलसं
स्तातंयथा। करद्युगगृहीतयशो
दास्तनमुखविनिवेशिताधरपुटस्य।
स्मृतपालनन्दसुनमतकलमसरी-
माखमिति॥
स्मरणापत्यतर्पकः। पुं० कच्छपे॥
स्मरदशा। स्त्री० कामावस्थायाम्॥
साद्दशविधायथा। नयनप्रीतिः प्र
थमंचिन्तासङ्गस्ततोथसङ्कल्पः। नि
द्राच्छेदस्तनुताविषयनिवृत्तिस्त्रपा
नाशः॥ उन्मादोमूर्च्छामृतिरित्ये
ता। स्मरदशादशैवस्युरिति॥
स्मरदायी। चि० कामोद्दीपके॥
स्मरध्वजः। पुं० वाद्ये। शिश्ने॥
न० योनौ।
स्मरधूला। स्त्री० ज्योत्स्नायांरात्रौ॥
स्मरप्रिया। स्त्री० कामपत्न्याम्।
रतौ॥
स्मरमन्दिरम्। न० भगे। योनौ॥
स्मरलेखनी। स्त्री० शारिकापक्षिणि॥
स्मरवल्लभः। पुं० चनिरुद्धे॥

स्मरवीथिका । स्त्री० वेश्यायाम् ॥

स्मरवृद्धिः । स्त्री० कामवृद्ध्याख्यौषधौ । मदनायुधे ॥ स्मरस्य वृद्धिर्यया ॥

स्मरसखः । पुं० वसन्ते ॥ कामोद्दीपकत्वात् ॥ स्मरस्य सखा । टच ॥

स्मरसहः । त्रि० कामोद्दीपके ॥ सहते । षह० । पचाद्यच् । स्मरस्य सहः ॥

स्मरस्तम्भः । पुं० उपस्थे । मेढ्रे ॥ स्मरस्य स्तम्भ इव स्तम्भः ॥

स्मरस्मर्य्यः । पुं० गर्द्दभे ॥

स्मरहरः । पुं० शिवे । स्मरं हरति । हरतेरनुद्यमनेऽच् ॥

स्मरागारम् । न० भगे ॥

स्मराङ्कुशः । पुं० कामुके । नखे ॥

स्मराम्रः । पुं० राजाम्रे ॥

स्मरासवः । पुं० लालायाम् । मुखसुरे ॥ मद्यप्रभेदे ॥

स्मरेष्टः । पुं० आम्रे ।

स्मर्त्तव्यः । त्रि० स्मरणीये ॥ यथा । स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्यो न जातुचित् । सर्व्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ॥

स्मायः । पुं० गूढहसिते ॥

स्मारकः । त्रि० स्मरणकारके ॥

स्मार्त्तः । त्रि० स्मृतिशास्त्रविदि ॥ स्मृतिविहिते । स्मृतिसम्बन्धिनि । न० स्मृतिशास्त्रोक्तकर्म्मणि । यथा । श्रौतं कर्म्म स्वयं कुर्य्यादन्योऽपि स्मार्त्तमाचरेत् । अशक्तौ श्रौतमप्यन्यः कुर्य्यादाचारमन्ततः ॥

स्मार्त्तयज्ञः । पुं० यज्ञविशेषे ॥ स चतुर्विधो यथा । देवयज्ञः पितृयज्ञो भूतयज्ञस्तथैव च । मनुष्ययज्ञ इत्येवं स्मार्त्तयज्ञश्चतुर्विधः ॥

स्मितम् । न० ईषद्धास्ये ॥ तल्लक्षणं यथा । ईषद्विकसितैर्दन्तैः कटाक्षैः सौष्ठवान्वितम् । अलक्षितद्विजद्वारमुत्तमानां स्मितं भवेदिति ॥ ष्मिङ् ईषद्धसने । भावे क्तः ॥ त्रि० विकसिते ॥

स्मितदृक् । त्रि० स्मेराक्षे ॥

स्मृतः । त्रि० स्मृतिविषये । कृतस्मरणे ॥ यथा । आह्निके पितृकार्य्ये च मासश्चान्द्रमसः स्मृतः । विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः ॥

स्मृतिः । स्त्री० धर्म्मसंहितायाम् । मन्वादिप्रणीतधर्म्मशास्त्रे ॥ स्मर्य्यतेऽनुष्ठानप्रकारोऽनया । स्मृतिचिन्तायाम् । स्त्रियाम् क्तिन् । वेदार्थस्मरणपूर्व्वकं रचितत्वात् ॥ शास्त्रमात्रे । स्मर्य्यते वेदमनयेति स्मृतिः ॥ महर्षिभिर्वेदार्थस्मरणं स्मृतिः । तद्योगाद्ग्रन्थोऽपि स्मृतिः ॥ स्मरणे । कर्त्तव्यानुसन्धा

नि । रथद्रौ । चतिमुक्तके । चतो
तकाख्य:ऽर्श्वहदे । न० स्रुतौ । च
रणे । नीरे । सलिले ॥ पुं० न०
रथे । त्रि० जवने । स्यन्दते स्य
न्द० । बहुलमन्यत्रापीतियुच् ।
चलनशब्दार्थादकर्मकाद्युच्० इ
तिशायुच् । यद्वा । स्यन्दते०
प्रद्रवति । स्यन्द० । नन्द्यादि
त्वाल्ल्यु: ॥

स्यन्दनद्रुम: । पुं० तिनिशवृक्षे ॥

स्यन्दनारोह: । पुं० रथिनि । रथा
रूढेयोद्धरि । स्यन्दनमारोहय
ति । रुह० । कर्मण्यण् ॥

स्यन्दनाह्वय: । पुं० तिमिशे ॥ ति
न्दुके । स्यन्दनमाह्वयोयस्य स:

स्यन्दनि: । पुं० तिनिशद्रुमे ॥

स्यन्दनिका । स्त्री० क्षुद्रनद्याम् ।

स्यन्दनी । स्त्री० लालायाम् । मूत्र
नाड्याम् ।

स्यन्दी । त्रि० स्रवणशीले ॥

स्यन्दनी । स्त्री० लालायाम् ॥ अव
श्यंस्यन्दते । स्यन्द० । आवश्यके
तिणिनि: ॥

स्यन्न: । त्रि० स्रुतेजलादौ । स्यदते
स्म । स्यन्द० । क्त: । रदाभ्यामि
तिनत्वम् ॥

स्यन्नम् । त्रि० स्रुते । रीणे ॥

स्यमन्तक: । पुं० श्रीकृष्णहस्तमणौ
। मणि: स्यमन्तकोहस्ते भुजमध्ये
तुकौस्तुभइतिहेमचन्द्र: । सौरभा
द्रपदीयचतुर्थ्यां चन्द्रदर्शनेस्यमन्त-
कोपाख्यानंश्रुत्वावक्ष्यमाणमन्त्रेणा
भिमन्त्रितंजलंपिबेत् । मन्त्रस्तु ।
सिंह: प्रसेनमवधीत्सिंहोजाम्ब
वताहत: । सुकुमारकमारोदी
स्तवह्येषस्यमन्तकइति ॥

स्यमीक: । पुं० मुनिविशेषे ॥ पा
दपे । वृक्षे । नाके । वल्मीके
॥ स्यमति । स्यम शब्दे । स्यमे
रीटचेतिकन् ॥

स्यमीका । स्त्री० नीलिकायाम् ॥

स्याद्वादी । पुं० जिने ॥

स्याल: । पुं० पत्नीभ्रातरि । श्याले
॥ स्यामयति । स्यमवितर्के चुरा
दि: । अच् पृषोदरादि: ॥

स्यूत: । पुं० प्रसेवे । वस्त्रशणादि
निर्मितेथैलाइतिख्याते ॥ त्रि० क्र
ते । प्रोते । वुना० इ० भा० ॥
क्रतमीवने । सीव्यतिस्म । षिवु
तन्तुसन्ताने । क्त: च्छ्वो:शूठ् । य
णादेश: ॥

स्यूति: । स्त्री० सूच्यादिनावस्त्रा
दिसीवने । सेवने । सीवना० इ०
भा० प्र० ॥ षिवे: क्तिन् । ऊठ्
। सन्ततौ ॥

स्यून: । पुं० किरणे ॥ सूर्ये ॥
थैलकादे ॥ सीव्यतेऽनेनवा । षि
वु० । सिविष्ट्यूचेतिन: । दीर्घो

स्वारणसामर्थ्यात्गुणः ॥

स्यूमः । पुं॰ किरणे ॥ सूत्रतन्तौ ॥ सीव्यति षिवु॰ । अविसिविसिशुषिभ्यः किदितिमन् । ज्वरत्वरेत्यूठ् ॥

स्येगवा । स्त्री॰ मागमापत्येषु ॥ यथा । चतुर्नवद्रुमेशामेनेशाणाः खिरखण्डनः । सौदर्न्तमम गाचाणिमागमास्येगवाद्वेति ॥ मागमाकर्कटीप्रोक्तातद्पत्यानि- स्येगवाः ॥

स्योगविः । पुं॰ कर्कटपुत्रे ॥ चाक्षीराव्यंगविरितिषिकाण्डशे- षः ॥

स्योतः । त्रि॰ स्यूते ॥

स्योमः । पुं॰ किरणे ॥ सूर्ये ॥ धौतकटि । सीव्यति । षिवु॰ । आङ्गलक्षाङ्गः । यसुअठ् । अन्तरङ्गत्वाद्गुण॰ । गुणश्च ॥ न॰ घनन्दे । त्रि॰ समीचीने । सुखकारिणि ॥

स्योनाकः । पुं॰ श्योनाकी । पञ्चोर्णे ॥ स्योनमाकाति॰ अक्यति॰ वा॰ । अश्व॰ । पचाद्यच्॰ घञ्वा ॥

स्रंसनम् । न॰ अर्द्धगलदोषधाविनयने । अधः पतने ॥ स्रंसि ल्युट् ॥

स्रंसमानः । त्रि॰ गलति ॥

स्रंसी । पुं॰ पीलुवृक्षे ॥ स्रंसयति मलम् । स्रंसु अधः पतने । णिच् णिनिः

स्रंसनीफलः । पुं॰ भण्डीरे । शिरीषवृक्षे ॥

स्रक् । स्त्री॰ कोणे ॥

स्रक्सुगन्धः । पुं॰ भूमिजम्बाम् ॥

स्रग्धरा । स्त्री॰ प्रकृतिच्छन्दः २१ प्रभेदे ॥ तल्लक्षणं यथा । म्रभ्नैर्यानांत्रयेणत्रिमुनियतियुतास्रग्धरा कीर्त्तितेयम् ॥ यथावा । कर्णे ताटङ्कयुग्मं वलयमपिसुवर्णं स्वमञ्जीरयुग्मं पुष्पं गन्धं वस्त्रौ हिमकरचि रान् पुरन्न्र्युत्ताभङ्गहारं दधाना सुन्नलितरसनारूपवत्कुण्डलाभ्यां मुग्धाकीर्णानिचित्तं तरलयतिबलात् स्रग्धराकामिनीव ॥ यथा । च न्मपीताम्भ्रमालावलयितविलसत् बाहुदण्डप्रचण्डावेगव्यालोलमुण्डा वलिकलितरलत्कारकण्ठोपकण्ठः । कुर्वन्लोगमत्युद्गतगहनचल द्घर्घरध्यानमुच्चैरुत्कूर्दनमाङ्घ्रि द्धतिचभिरः कन्दुकक्रीडि तानि ॥

स्रग्विणी । स्त्री॰ जगतीच्छन्दः १२ प्रभेदे ॥ तल्लक्षणं यथा । कीर्त्तितैषाचतूरेफिकास्रग्विणी । यथा इन्द्रनीलोपलेनेवयानिर्मिताशात कुम्भद्रवालङ्कृताशोभते । नव्यमेघ

च्छवि : पीतवासाश्चरैसूर्त्तिराव स्तांजयायोरसिस्त्रग्विणी ॥ माला स्याम् ॥

स्रग्वी । पुं॰ भूततन्त्राख्रूपावेज यन्त्याद्यांसकविभावृभेऽरी ॥ वि॰ कुसुममालाधारिणि ॥ स्रगस्य स्तिऽस्य । अस्मायामेधास्रजोविनि रितिविनि : ॥

स्रक्, ग् । स्त्री॰ मूर्द्धन्यस्तपुष्प दामनि ॥ माल्ये ॥ सृज्यते॰ सृजासिवा । सृजविसर्गे । ऋत्वि गित्यादिना॰ कर्म्मणि॰ कर्त्तरि वाक्किन्॰ अमागमश्च । कुत्वम् ॥ अतिशक्वरीच्छन्द : १५ प्रभेदे : सञ्चरणयथा । सगियमपिचर सनवरावितयति : । यथा । अ यिसहचरि॰ रुचिरतरगुणमयीस्र ड्मवसतिरनपगतपरिमला । स गिवनितस्यविलरुनुभमरसासुमुखि मुदितरनुजदलनहृश्ये ॥

स्रुज्वा पुं॰ प्रजापतौ । पटसङ्घे ॥ रज्जौ ॥

स्रव : । पुं॰ स्रवे । स्रवणम् । सुगतौ । ऋदोरप् ॥ वारिप्रवाहे । यथा हेमचन्द्र : । निर्झरस्तुझर : स रि : । उत्स : सव : प्रस्रवण- मिति ॥

स्रवणम् । न॰ सच्छिद्रहृते : शनै : शनैर्जलनिर्गमे । चरणे ॥ स्रु॰ । ल्युट् ॥ मूत्रे ॥

स्रवन्तीया । स्त्री॰ रुद्रन्त्यां ॥

स्रवद्गर्भा । स्त्री॰ पतितगर्भायाङ्गवि । अवतीकायाम् ॥ पतितगर्भाया म् ॥ स्रवन्गर्भोयस्या : ॥

स्रवद्रङ्ग : । पुं॰ पण्यवन्यौ । हाट॰ व जार॰ इ॰ भा॰ प्र॰ ॥

स्रवन्ती । स्त्री॰ नद्याम् । सिरिति । नि म्नगायाम् ॥ स्रवति । स्रु॰ । ल ट : शट । उगितश्चेतिङीप् । श प्श्यनोरितिनुम् ॥ गुल्मस्थाने ॥ औषधिभेदे ॥ चरन्त्याम् ॥

स्रवा । स्त्री॰ मूर्वायाम् । मुरहरा॰ इ॰ भा॰ प्र ॥ स्रवति । स्रु॰ । अच् । गुणावादेशो । टाप् । जी वन्त्यामोपधौ ॥ जीवन्त्याम् ॥

स्रष्टा । पुं॰ प्रजापतौ । निर्म्मातरि । वेधसि । ब्रह्मो । शिवे ॥ विष्णौ ॥ सृजति । सृजविसर्गे । तृच् । सृजिदृशोरित्यम् ॥

स्रस्त : । त्रि॰ च्युते ॥ स्रस्यतेस्म । स्रंसुअवस्रंसने । गत्यर्थाकर्मकेति कर्त्तरिक्त : ।

स्रस्तकम् । न॰ च्युते ॥

स्रस्तर : पुं॰ न॰ शेरत्नक टे । पल्ल वादिशय्ये ॥ पुं॰ कुशमुष्टौ ॥

स्राक् । अ॰ द्रुते । झटित्यर्थे ॥ स्र पाकि । सम्पदादित्वात्क्विप् । स्रा मकति । अक्रकुटिलायामृगतौ ।

क्विप् ॥

स्रामः । त्रि० एकर्मणे ॥ यस्य सदा च
स्रुर्नासिकायामुर्वर्तितस्मिन् ॥

स्रावः । पुं० क्षरणे ॥ आगर्भाधाना
च्चतुर्थमासपर्यन्तं गर्भस्य क्षरणे ॥

स्रावकम् । न० मरीचे ॥

स्रावणी । स्त्री० ऋद्धिवृक्षे ॥

स्रावितः । त्रि० गालिते ॥

स्रुग्दारु । न० व्याघ्रपादवृक्षे । विक
ङ्कते ॥

स्रुघ्नः । पुं० नागराख्ये० नगरे ।
तदुपान्तदेशे ॥ मथुरायामिव० म
थुरावत्स्रुघ्ने प्राकारा इति कौमुदी ॥

स्रुघ्नी । स्त्री० सर्जिकाक्षारे ॥

स्रुक्-ग् । स्त्री० खादिरेष्ववनपात्र
विशेषे ॥ तद्भेदा यथा । ध्रुवोपभृज्जु
हूर्नातु स्रुवो भेदाः स्रुचः स्त्रियइ
त्यमरः । तत्र वटपत्राकृतिर्ध्रुवा ।
उपभृच्चक्राकारा । जुहूरर्द्धचन्द्रा
कृतिः । वैकङ्कती ध्रुवा प्रोक्ता-
श्वत्थी चोपभृन्मता । जुहूः प
लाशका च खादिरश्च स्रुवो मतः ॥
स्रुशब्दः कन्तु यज्ञादौ पात्रमित्यभि-
धीयते । स्रुवः पुमानेकहस्तो वा
हुमात्रा स्रुगीरिता । तद्विशेषाः
शरावाद्याः स्त्रीजुहूरुपभृद्ध्रुवे
ति शब्दरत्नावली ॥ स्रवति घृतादि
कम् । स्रु स्रवणे स्रुवः कश्चिक्
चेतिचिक् प्रत्ययः ऊकारउच्चारणा

र्थः । काकुत् । कुत्वम् ॥

स्रुतः । त्रि० क्षरितेजलादौ ।
स्रु । रीणे । च्युते ॥ स्रूयते स्म
। स्रु गतौ । क्तः ॥

स्रुता । स्त्री० हिङ्गुपत्र्याम् ॥

स्रुवः । पुं० यज्ञपात्रविशेषे । स्रु
चि ॥ स्रवति । स्रु० । अच्
। संज्ञापूर्वकत्वान्न गुणः । उव
ङ् ॥ यद्वा । स्रवति घृतादिकम्
। स्रु स्रवणे । स्रु कः ॥

स्रुवा । स्त्री० होमपात्रान्तरे । स्रुचि
॥ मूर्व्वायाम् ॥ शल्लक्याम् ॥
टाप् ॥

स्रुवावृक्षः । पुं० विकङ्कते । स्वा
दुकण्टके ॥ स्रुवायावृक्षः ॥

स्रूः । स्त्री० होमपात्रविशेषे ।
यज्ञोपकरणे ॥ स्रवे ॥ निर्झरे ॥
स्रवत्यतो घृतादिकम् । स्रु स्रवे ।
क्विप्चिप्रच्छिश्रिस्रुद्रुप्रज्वादौ
र्घोऽसम्प्रसारणञ्चेति क्विप् दीर्घौ ।

स्रोतम् । न० स्रोतसि ॥

स्रोतईशः । पुं० समुद्रे ॥ स्रोत
सामीशः ॥

स्रोतः । न० स्वतोऽम्बुसरणे ॥ प्र
वाहे । वेगेनचलज्जले ॥ इन्द्रि
ये ॥ शरीरस्थनवच्छिद्रेषु ॥ स्र
वति । स्रु गतौ । स्रुरीभ्यां तु
ट्चेत्यसुन्० तुडागमश्च ॥

स्रोतस्वती । स्त्री० नदीमात्रे सरि

ति । दीर्घवत्याम् । स्रोतांसि सन्त्यस्याः । तदस्यास्तीति मतुप् । मादुपधायाश्चेति वत्वम् । उगितश्चेति ङीप् ॥

स्रोतस्विनी । स्त्री॰ सरिति । स्रोतांसि सन्त्यस्याः । अस्मायामेधास्रजो विनिः । नान्तत्वान्ङीप् ॥

स्रोतोञ्जनम् । न॰ सौवीरे । कापोताञ्जने । यामुने । अञ्जनञ्च पादद्वयोयथा । तत्र स्रोतोञ्जनं कृष्णं सौवीरं श्वेतमीरितम् । वल्मीकशिखराकारं भिन्नमञ्जनसन्निभम् । घृष्टन्तु गैरिकाकारमेतत्स्रोतोञ्जनं स्मृतम् । स्रोतोञ्जनसमं ज्ञेयं सौवीरं तत्तु पाण्डुरम् । स्रोतोञ्जनं स्मृतं स्वादु चक्षुष्यं कफपित्तनुत् । कषायं लेखनं स्निग्धं ग्राहि च्छर्दिविषापहम् । हिध्मचयास्रहृच्छीतं सेव्यमीयं सदा बुधैः । स्रोतोञ्जनगुणाः सर्वे सौवीरेऽपि मता बुधैः । किन्तु श्रेष्ठमञ्जनयोरिदं स्रोतोञ्जनं स्मृतम् । द्युतिभावप्रकाशः स्रोतोञ्जनन्तु तद्विद्यादञ्जनाभं यदञ्जनमिति मदनपालः ॥ अपि च । स्रोतोञ्जनं मतं श्रेष्ठं विशुद्धं सिन्धुसम्भवम् । इष्टैः काण्डूमलघ्नं दाहघ्नं दृग्जोषहम् ॥ अम्भोरुहपाण्डुत्वं वसन्ततमारुतातपौ । नेत्ररोगा न जायन्ते तस्मादञ्जनमाचरेत्

स्रोतोञ्जनं कृष्णमसुरमेति प्रसिद्धम् । अञ्ज्यते नयनमनेन चक्षुष्यत्वात् । अञ्जूव्यक्तिम्रक्षणकान्तिगतिषु । करणे ल्युट् । स्रोतसोऽञ्जनं स्रोतोञ्जनम् ।

स्रोतोभेदक :। पुं॰ प्रवहज्जलानां सेतुभेदादिना देशान्तरनेतरि ।

स्रोतोवहा । स्त्री॰ नद्याम् ।

स्व : सिन्धु :। स्त्री॰ गङ्गायाम् ।

स्व :। पुं॰ आत्मनि ॥ ज्ञातौ । पुं॰ न॰ धने ॥ न॰ द्वितीयभवने । त्रि॰ आत्मीये । स्वनति । स्वनश्चेत्यन्ये शब्दे अचपोऽति त्वड :॥

स्वक :। वि॰ स्वीये । आत्मीये ।

स्वकम्पन :। पुं॰ वायौ ।

स्वकर्मकृत् । वि॰ निजकार्यकर्तरि ।

स्वकीय :। वि॰ आत्मसम्बन्धिनि । स्वीये । निजे । आत्मीये ॥ स्वस्येदम् । गहादिषु स्वस्येति छ : कुगागमश्च ।

स्वकुलक्षय :। पुं॰ मत्स्ये ॥ निजवंशनाशे ॥ वि॰ तत्कर्त्तरि॰ तद्विशिष्टे च ॥

स्वगतम् । न॰ मनोगते । त्रि॰ आत्मप्राप्ते ॥ आत्मनोगते ॥

स्वगुप्ता । स्त्री॰ आत्मगुप्तायाम् । शूकशिम्ब्याम् । लज्जालौ ।

स्वगृह :। पुं॰ कलिङ्गाख्यपक्षिणि ।

पुं॰ न॰ निजालये ॥

स्वङ्ग : । त्रि॰ सुरूपे । सुन्दराङ्गविशिष्टे । सिद्धसंहनने । शोभनानि आर्लोकलखघवर्ल्घितान्यङ्गान्यस्य ॥ न॰ शोभनावयवे ॥

स्वच्छ : । पुं॰ स्फटिके ॥ न॰ मौक्तिके ॥ त्रि॰ प्रकाशगुणादीपस्वस्वगुणेपरमात्मनि । निर्मले । यथा । आसनंवसनंपानं शय्या यानंनिश्चितनम् । गृह्यकांश्चसुजातश्च स्वच्छ तुस्वच्छंतअस्ति द्युतिन्याधिगृन्ते ॥

स्वच्छटी । स्त्री॰ अङ्गुलिमोटने । अङ्गुलिसन्दंशे ।

स्वच्छन्द : । त्रि॰ स्वतन्त्र । स्वतन्त्रो पावृत : स्वैरीस्वच्छन्दोनिरवग्रहइत्यमर : ॥ स्व : आत्मा छन्दोऽभिलाषोऽस्य ॥

स्वच्छन्दचारी । त्रि॰ स्वच्छन्दंविहरणशीले ।

स्वच्छा भ्र । न॰ अभ्रके ॥ स्वच्छत्वात्पत्वस्य ॥

स्वच्छमणि : पुं॰ स्फटिके ॥

स्वच्छवालुकम् । न॰ विमलोपरसे । निर्मले ।

स्वच्छा । स्त्री॰ श्वेतदूर्वायां

स्वज : । पुं॰ प्रस्वेदे । पुत्रे । न॰ रक्ते । त्रि॰ स्वजाते ॥

स्वजन : । पुं॰ ज्ञातौ । सगोत्रे । स्वआत्मीयधासौजनश्च ॥ आत्मीयेवन्धुवर्गे ॥ आश्रितशास्त्रवादौ ॥

स्वजा । स्त्री॰ कन्यायाम् ॥

स्वतन्त्र : । त्रि॰ स्वच्छंदे । निरवग्रहे ॥ यथा । समयादभयंप्राप्तस्तदर्थंयततेयय : । सपुन : समयंगन्तुंस्वतन्त्रत्वंनशोच्यतीति ॥ न॰ स्वस्वतन्त्रानपेक्षे । तन्त्रविशेषे । स्वकीयशास्त्रे ॥

स्वतन्त्रप्रज्ञ : । पुं॰ व्यासादिषु । स्वस्यपिद्यामंतरेणपौर्वापर्यालोचनया श्रुतिवशादिश्रुत्यर्थप्रतिपत्तिसमर्थेष्वित्यर्थ : ॥

स्वत : । अ॰ आत्मनइत्यर्थे ॥

स्वत्वम् । न॰ शास्त्रसम्मतयथेष्टविनियोगार्हत्वे । सप्तपदार्थातिरिक्तपदार्थे ॥

स्वदनम् । न॰ अदने । आस्वादे । लेहे ।

स्वदृष्टान्त : । पुं॰ स्वार्थे । स्व : स्वीय : दृष्टान्तोयत्र ॥

स्वधर्म : । पुं॰ स्ववर्णाश्रमाचारे । यंवर्णमाश्रमंवाऽऽश्रित्यविहित : सस्वधर्म : । स : स्वकीयोधर्म : ॥

स्वधा । अ॰ पितृभ्योदीयमानेऽन्ने पितृणामन्ने । पितृदाने । यथा । पितॄणांसुरपत्नीषम्निभिर्मनुभिर्मरै : । पूजितापितृदानंहिनि

यफलं यया विभीतिभागवतम् । पि
त्र्यदानमन्त्रे । देवहविर्दाने । यथा
स्वाहा देवहविर्दाने श्रौषट् वौषट् व
षट् स्वधेत्यमरः । अत्र पितरो देवता
इति सम्मतेस्ते पिदेवा: । स्वमात्मा
नं शरीरं पोषयतीति स्वधा । स्वधा
पितृणामन्नमिति श्रुति: । देवपि
तृहविर्दाने । स्वद्यतेऽनेन । ष्वद
आस्वादने । आप्रत्यय: । पृषोद
रादित्वात् हस्य ध: ॥

स्वधा । स्त्री॰ पितृदाने । स्वधाऽस्त्य
स्याम् । अच् । टाप् । पितृपत्न्या
म् । स्वाम्येपत्ते इति ब्युत्पत्ते: ।
नम: स्वधायै स्वाहायै॰ इति प्रयो
गश्च ।

स्वधाप्रिय: । पुं॰ कृष्णतिले ॥

स्वधाभुक् । पुं॰ पितृगणे । दिव्य
पितरि । देवे ॥

स्वधाम । न॰ स्वरूपविस्फुरणे ॥

स्वधायी पुं॰ पितृषु । स्वधागमन
शील: । सुप्यजातौ णिनिस्ताच्छी
ल्ये ॥

स्वधावाचनम् । न॰ श्राद्धयोग्ये काल
विशेषे । यथा । अर्द्धमुहूर्तात्
कुतपाद्यन्मुहूर्त्तचतुष्टयम् । मु
हूर्त्तपञ्चकञ्चैव स्वधावाचनमिष्य
ते । कुतपादूर्द्ध्वं मुहूर्त्तचतुष्ट
यं॰ मुहूर्त्तपञ्चकस्य कुतपात्पूर्व
म्॰ अर्धादिकं मुहूर्त्तकुतपएव ।

स्वधा वोच्यतेऽत्र । वच॰ । अधिक
रणे ल्युट् ॥

स्वधिति: । पुं॰ स्त्री॰ कुठारे । य
था । द्वयो: कुठार: स्वधिति:
परशुश्च परश्वध इत्यमर: । स्वं धि
यति । धिधारणे । क्तिच् । छेद
नीयमांसस्य शस्त्रविशेषे ॥

स्वन: । पुं॰ शब्दे । निनादे । निन
दे । ध्वनौ । स्वननम् । स्वनश
ब्दे । स्वनहसोर्वेति पक्षेऽप् ॥

स्वनचक्रं: । पुं॰ रतिबन्धविशेषे ।
यथा । धृत्वा बाहू तथा कण्ठं पाद-
तोऽपि शिर: स्थित: । गाढं स्वकाम
येत्कामी स्वनचक्र प्रकीर्त्तितम् इति
रतिमञ्जरी ।

स्वनितम् । त्रि॰ ध्वनिते । न॰ ग
र्ज्जिते । मेघशब्दे । स्वन्यते स्म ।
स्वन॰ । क्त: ।

स्वनिताह्वय: । पुं॰ तण्डुलीयशाके
। अल्पमारिषे ।

स्वनुष्ठित: । त्रि॰ सर्वाङ्गोपसंहारेण
सम्पादिते ॥

स्वमोत्सह: । पुं॰ गण्डके ॥

स्वन्त: । त्रि॰ अन्ततोऽन्तकाले । शुभो
दर्के ।

स्वपन् । त्रि॰ निद्रामनुभवति । स्वपि
ति । ञिष्वप्॰ । लट: शत्रा
देश: ॥

स्वपति: । पुं॰ आढ्ये । निजभर्त्तरि ॥

स्वपनम् । न॰ निद्रायाम् । ञिष्वप् शये । ल्युट् ॥
स्वपाण्डा । स्त्री॰ पिण्डखर्जूर्याम् ॥
स्वप्नः । पुं॰ निद्रायाम् । शयने । स्वापे ॥ प्रसुप्तस्यविज्ञाने । आग्रहासनामये । जागरितसंस्कारजः प्रत्ययः सविषयः स्वप्नइत्युच्यते । अन्यत्र कारणस्यार्द्रेविकाशेयथा-। जाग्रदवस्थायांयद्दृष्टंयच्छ्रुतंतज्जनितवासनयानिद्रासमयेयः प्रपञ्चो यत्प्रतीयतेसास्वप्नावस्थेतिवासुदेवसरस्वती ॥ तथाच । बाह्येषुकरणेषूपंसंहृतेषुजागरितवासनानुसारेणमनसस्तद्र्थाभासाकाराव भासनंस्वप्नशब्दितम् ॥ यथाहुः । इन्द्रियाणामुपरमेमनोनुपरतंयदि । सेवतेविषयानेवतद्विद्यात्स्वप्नदर्शनमिति । सचसप्तविधोयथा । दृष्टः श्रुतोऽनुभूतश्चप्रार्थितः कल्पितस्तथा । भाविकोदोषजश्चेतिस्वप्नः सप्तविधः स्मृतइति ॥ स्वप्नजाग्रदादिकल्पनयातच्चवैविध्यमाह । स्पष्टस्मृतिरथास्पष्टस्मृतिरस्मृतिरित्यसौ । स्वप्नभेदाः । स्वप्नमध्येजाग्रत्स्वप्नसुषुप्तयइति ॥ सन्ध्यंतृतीयंस्वप्नस्थानमितिश्रुतिः ॥ स्वपित्यनेन । ञिष्वप्शये । सृवृभूशुषिमुषिभ्यःकित्वृजृसिद्दुवन्यनिस्वपिभ्योनिदिति नन् ॥ स्वप्नोऽन्यथाग्रहणंसर्पइव रज्ज्वामितिभाष्यम् । यथा रज्ज्वां सर्पोगृह्यमाणोऽन्यथागृह्यते॰ तथा त्मनिदेहादिग्रहणमन्यथाग्रहणम्॰ आत्मनोदेहादिवैलक्षण्यश्रुतियुक्तिसिद्धत्वात् ॥ अन्यथाग्रहणतः स्वप्नोनिद्रातत्त्वमजानतः । विपर्यासेतयोः क्षीणेतुरीयंपदमश्नुते ॥
स्वप्नकृत् । पुं॰ सुनिषण्णके ॥ क्लीवे ।
स्वप्नज् । त्रि॰ शयालौ । निद्राशीले । स्वप्नशीलः । ञिष्वप्॰ । स्वपितृषोर्नजिङ् ॥
स्वप्नदृक् । पुं॰ जीवे ॥ स्वप्नान्पश्यति । दृशिर्॰ । क्विप् ॥
स्वप्नस्थानः । पुं॰ तैजसे । स्थूलप्रपञ्चलयस्थानस्वप्नइत्युपहितचैतन्ये ॥ स्वप्नः स्थानमस्य ॥
स्वप्नान्तः । पुं॰ स्वप्नमध्ये । स्वप्नविज्ञाने ॥ सुषुप्तिस्थाने । स्वप्नस्यान्तोऽवसानंयस्मिन् ॥
स्वप्रकाशः । पुं॰ अन्यानपेक्षप्रकाशे । चन्द्रसूर्यादिप्रकाशनिरपेक्षे॰ स्वयमेवभासमानेद्रष्टरि । दृश्यानां जडानांबुद्ध्यादीनांदर्शनंस्वप्रकाशंद्रष्टारंविनानघटते ॥ यथोक्तंलक्ष्मीधरिसूरिभिः । नप्रकाशेदमित्युक्तिर्यत्प्रकाशैकबंधना । स्वप्रकाशंतमात्मानमप्रकाशः कथंस्पृशेदिति ॥ स्वेनात्मनैवप्रकाशते । काशृदीप्तौ । पचाद्यच् ॥

स्वप्रमाणक : । त्रि॰ स्वतः सिद्धे ।

स्वभाव : । पुं॰ सत्त्वधर्मविशेषे । संसिद्धौ । प्रकृतौ । स्वरूपे । निसर्गे । स्वभाववाक्लर कश्चिद्येनसदाऽसदासदसदाकर्मनिष्पद्यते । जन्मान्तरकृतधर्माधर्मादिशुभाशुभसंस्कारे । पूर्वाभ्यस्तजन्मान्तरप्राक्तनसंस्कारे ॥ सचसात्त्विकादिभेदात्त्रिविधः अनाद्यविद्यायाम् ॥ स्वतएवाविर्भावे ॥ यथा । वह्निर्हिस्वनपेक्षोतुस्वभावोयत्प्रकीर्त्तितः । निसर्गस्वस्वरूपश्चेत्यपि भवतिद्विधा । निसर्गः सृष्ट्यभ्यासजन्यः संस्कारउच्यते । अनन्यस्तुस्वतः सिद्धः स्वरूपंभावधूप्यतरूच्युज्ज्वलनौग्रमणिः । स्वे भावः सत्तायस्यसः स्वभावः अनन्याधीनसत्ताकः ॥

स्वभावोक्तिः । स्त्री॰ अर्थालङ्कारविशेषे । यथा । स्वभावोक्तिस्तुडिम्भादेः स्वक्रियारूपवर्णनम् । अधीस्तदेकाश्रयिणः रूपंवर्णः संस्थानञ्च । उदाहरणम् । पश्चादङ्घ्रीप्रसार्य्य त्रिकनतिविततंद्राघयित्वाङ्गमुच्चैरासज्याभुग्नकण्ठोमुखमुरसिसटां धूलिधूम्रांविधूय । घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो मन्दंशब्दायमानोविलिखतिशयनादुत्थितः क्ष्मांखुरेणेति ॥ स्वभावोक्तिरलंकारोयथावद्वस्तुवर्णनमिति लक्षणान्तरम् ।

स्वभू : । पुं॰ विष्णौ । हरौ ॥ ब्रह्मणि । प्रजापतौ । परमेष्ठिनि ॥ स्वतोभवति । भुरद्रुतिक्विप् ॥

स्वमेक : । पुं॰ संवत्सरे ॥ यथा । स्वमेकमेकंवरदातृप्ताभवतिचण्डिका । रुधिरेणौरणस्य हतपिताविधिवत्पितिपुराणम् ॥ स्वमेकःसंवत्सरोयव्योमासइतिस्मृतः ॥

स्वयंहारिका । स्त्री॰ स्त्रीविशेषे ॥

स्वयङ्कृत : । त्रि॰ आत्मनाकृते ॥ स्वयङ्कृतमितितत्पुरुषः ॥

स्वयङ्गुप्ता । स्त्री॰ शूकशिम्ब्याम् ।

स्वयङ्ग्रह : । पुं॰ प्रार्थनाविनाग्रहणे ॥

स्वयन्दत्त : । पुं॰ द्वादशविधपुत्रान्तर्गतपुत्रविशेषे ॥ यथाहमनुः । मातापितृविहीनोयस्त्यक्तोवास्यादकारणात् । आत्मानंस्पर्शयेदस्मै स्वयन्दत्तस्तुसस्मृतइति ॥ आत्मानंस्वयंददाति॰ तवाहंपुत्रोभवामीति । स्वयन्दत्तः उपनतः स्वयंप्राप्तइतियावत् ॥

स्वयम् । अ॰ आत्मनेत्यर्थे । आप्॰ इ॰ भा॰ प्र॰ ॥ सुष्ठु अयते । अय गतौ । अम् ॥

स्वयमुपस्थित : । त्रि॰ स्वयमागते ॥

स्वयम्प्रकाश : । त्रि॰ स्वतः साधना

न्तरनिरपेक्षतयाऽवभासमाने ।

स्वयम्प्रभः । त्रि॰ स्वयम्प्रकाशे स्वयंप्रभाप्रकाशो यस्य ॥ पुं॰ चतुर्थभाविभाव्यर्हत्स्थानगते चतुर्थार्हति ॥

स्वयम्भुः । पुं॰ विरिञ्चौ ॥ इति द्विरूपकोषः ॥

स्वयम्भुवा । स्त्री॰ क्षुपविशेषे । धूम्रपत्रायाम् ॥

स्वयम्भूः । पुं॰ चतुरानने । ब्रह्मणि ॥ काले ॥ परमात्मनि । परमेश्वरे ॥ परमात्मा हि स्वयं भवति स्वेच्छया शरीरपरिग्रहं करोति न त्वितरजीववत् कर्म्मायत्तदेहः । यद्वा । स्वयमेव स्वतन्त्रो भवति भवदानपरतं जनकरहितत्वात् । स्वयमेव भवति । भुवः क्विप् ॥ अर्हद्विशेषे । जिने ॥ जिनचक्रवर्त्तिविशेषे । रुद्रतनये । माषपर्ण्याम् ॥

स्वयम्भूः । स्त्री॰ माषपर्ण्याम् । लिङ्गिन्याम् । इ॰ रा॰ नि॰ ण्ट: ॥

स्वयम्वरः । पुं॰ विवाहविशेषे । स्वयम्वरे । यत्र कन्या परीक्षाकाम्यपुत्रवणोति कामिनीवरं तत्र । सच त्रिविधः । स्वयम्वरस्त्रिविधो विद्वद्भिः परिकीर्त्तितः । राज्ञां विवाहयोग्यो वै नान्येषां कथितः किल ॥ इच्छास्वयम्वरश्चैको द्वितीयश्च पणाभिधः । यथा रामेण भग्नं वै त्र्यम्बकस्य शरासनम् ॥ तृतीयः शौर्य्यशुल्कश्च शूराणां परिकीर्त्तितः ॥ इति ॥ शौर्य्यशुल्कः शौर्य्यमेव शुल्कं यस्मिन् । यस्य शौर्य्यं वर्त्तते तेन सर्व्वान् राज्ञो जित्वा कन्या हरणीयेति देवीभागवते तृतीयस्कन्धे १८ऽध्यायः ॥

स्वयम्वरा । स्त्री॰ स्वयंवरायाम् । स्वेच्छया कृतपतिवरणायाम् । पतिम्वरायाम् । वर्यायाम् ॥ स्वयं वृणीते पतिम् । वृङ् सम्भक्तौ । संज्ञायां भृतृवृजिधारिसहितपिदम इति खच् ॥

स्वः । अ॰ प्रेत्य । परलोके ॥ स्वर्गे । नाके । त्रिदिवे । सुरलोके ॥ यथा । यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं यत्तत् सुखं स्वःपदास्पदम् ॥ आकाशे । नभसि । व्योम्नि ॥ शोभने ॥ स्वृ शब्दोपतापयोः । स्वर्य्यते स्तूयते॰ इति स्वः । अन्येभ्योऽपि दृश्यन्त इति बाहुलकात्॰ कर्म्मणि विच् ॥ अथवा । स्वरति॰ अप्राप्तम्॰ उपतापयति॰ इति कर्त्तृव्युत्पत्तिङ्गृहाण ॥

स्वरः । पुं॰ अच्प्रत्याहारे ॥ उदात्तानुदात्तस्वरितेषु ॥ स्वरति । स्वृ शब्दोपतापयोः । पचाद्यच् । स्वरा अचः तद्धर्म्मत्वात्॰ उदात्तादयोऽपि स्वरा उच्यन्ते । उक्तञ्च । उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः ।

चतुर्थः प्रचयो नाम्नोच्यते सोऽच्छान्दसः स्मृत इति ॥ उदात्तादिभिः स्वयं राजन्त इति निरुक्त्या ॥ स्वर इति कण्ठगतं माधुर्यमिति भगवत्पूज्यपादाः ॥ श्रुत्यारब्धोऽनुरणने ॥ तदुक्तम् । श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः । स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यत इति ॥ शब्दे ध्वनौ ॥ यथा । करिवृषरथौघभेरीमृदङ्गसिंहाब्दनिस्वनाभूपाः । गर्भं जलं ररुचुस्वरा स्वधनसौख्यसंत्यक्ता इति ॥ नासासमीरणे ॥ निषादादिसप्तसु ॥ ते यथा । निषादर्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥ आह नारदः । षड्जं रौति मयूरस्तु गावो नर्दन्ति चर्षभम् । अजाविकौ च गान्धारं क्रौञ्चो नदति मध्यमम् । पुष्पसाधारणे काले कोकिलो रौति पञ्चमम् । अश्वस्तु धैवतं रौति निषादं रौति कुञ्जर इति ॥ सस्वरो यः श्रुतिस्थाने स्वनन् हृदयरञ्जन इत्यन्यच ॥

स्वरतः । अ० स्वरेणेत्यर्थे ॥ आद्यादित्वात्तसिः ॥ यथा । दुष्टः शब्दः स्वरतो वर्णतो वेति ॥

स्वरपत्तनम् । न० सामवेदे ॥ इ० चि० शेषः ॥

स्वरभङ्गः । पुं० गलरोगविशेषे ॥

स्वरभङ्गी । पुं० पक्षिविशेषे ॥

स्वरभेदः । पुं० स्वरभङ्गरोगे ॥

स्वरमण्डलिका । स्त्री० वीणाविशेषे ॥

स्वरलासिका । स्त्री० वंश्याम् ॥

स्वरसः । पुं० वस्त्रनिष्पीडितरसे ॥ यथा । अहतात्तत्क्षणाकृष्टाद्द्रव्यात्क्षुण्णात्समुद्भवेत् । वस्त्रनिष्पीडितो यस्तु स्वरसो रस उच्यते ॥ अहतः कीटाग्निधर्मादिभिरनुपहतः ॥ शिलापिष्टकल्के ॥ यथा । स्वो रसः स्वरसः प्रोक्तः कल्कोदृषदि पेषित इति ॥ कषायविशेषे ॥ यथा । सद्यः समुद्धृताद्द्रव्यात्क्षुण्णात् वस्त्रादिपीडनात् । यो रसस्त्वभिनिर्याति स्वरसः सप्रकीर्त्तित इति ॥ अपिच । पिष्टः कल्को विनीयस्तु स्वरसः पीडितो रसः । क्वाथः कषायो निर्यूहो निर्यासो वै कषस्त्विति रत्नमाला ॥

स्वरा । स्त्री० ब्रह्मणो ज्येष्ठपत्न्याम् । गायत्रीसपत्न्याम् ॥

स्वरांशः । पुं० सङ्गीते स्वरस्यार्द्धपादे वा ॥

स्वराट् । पुं० स्वतो भासमाने सवितरि ॥ इन्द्रियानपेक्षत्वतः सिद्धज्ञाने परमेश्वरे ॥ स्वेन राजते । राजृ दीप्तौ ॥ सत्सूद्विषेत्यादिना क्विप् ॥

स्वरापगा । स्त्री॰ मन्दाकिन्याम् ॥

स्वरालुः । पुं॰ वचायाम् ॥

स्वरितः । पुं॰ मध्यस्वरे । उदात्तानुदात्तत्वे वर्णधर्मौ समाक्रियेते यस्मिं स्तस्मिन्नचि ॥ शब्दनिष्ठधर्मविशेषे । स्वरः सप्त तीव्र । द्रुतच् ॥

स्वरुः । पुं॰ शस्त्रे । कादिन्याम् । वज्रे ॥ यूपखण्डे । यूपतच्यमाणे प्रथमपतितशकले ॥ यूपैकदेशप्रादेशमात्रकाष्ठे ॥ अध्वरे ॥ शरे । बाणे ॥ स्वरति॰ स्वर्यते वा । स्वृ शब्दोपतापयोः । शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च- उः ॥

स्वरुचिः । त्रि॰ स्वच्छन्दे । स्वतन्त्रे ॥ स्त्री स्वेच्छायाम् ॥

स्वरुः । पुं॰ स्वरौ । वज्रे ॥ शोभनानिरुर्विधारायस्यासौ ॥

स्वरूपम् । न॰ स्वभावे । निसर्गे ॥ स्वस्यरूपम् । स्वमेवरूपं यस्यवा । परमानन्दप्रकाशोह्यात्मनः स्वरूपम् । येनधर्मेणदृष्टप्रतीतिनाम्नस्य स्वरूपम् ॥ त्रि॰ प्राज्ञे । विदुषि ॥ मनोज्ञे ॥ प्राज्ञरूपस्वरूपाभिरूपाबुधमनोज्ञयोरित्यमरः ॥

स्वरूपलक्षणम् । न॰ अध्यासाधिष्ठानत्वेनसत्ये॰सर्वज्ञे ॥

स्वरूपस्थितिः । स्त्री॰ समाधिविशेषे ॥ यथा । संशान्तसर्वसङ्कल्पायाशिलावदवस्थितिः । जाग्रन्निद्राविनिर्मुक्तासा स्वरूपस्थितिःपरेति ॥

स्वरूपासिद्धः । पुं॰ हेत्वाभासविशेषे ॥ यथा । शब्दोगुणश्चाक्षुषत्वादिति । अत्रचाक्षुषत्वंशब्देनास्ति । शब्दस्यश्रावणत्वात् ॥ स्वरूपेणासिद्धः ॥

स्वरूपासिद्धिः । स्त्री॰ साध्यसमाख्यहेत्वाभासभेदे । पक्षहेतुतावच्छेदकावच्छिन्नस्याभावे । यथा । ह्रदोद्रव्यंधूमादित्यादौ ॥ स्वरूपस्यासिद्धिः ॥

स्वरेणुः । स्त्री॰ सूर्यपत्नीविशेषे । संज्ञायाम् । यममातरि ।

स्वरोदयः । पुं॰ स्वरज्ञापकग्रन्थविशेषे ॥

स्वरोदयवित् । त्रि॰ दिक्परमार्थवादिनि ॥ सर्वदिशः परमार्थादृत्याह । भ्रान्तिमात्रमेवतत् । तद्विदामपिपराजयदर्शनात् ॥

स्वर्गः । पुं॰ नाके । त्रिदिवे । त्रिविष्टपे । देवलोके । सुखाधारे ॥ सुष्ठुअर्ज्यते । अर्जअर्जने । कर्मणिघञ् । न्यङ्क्वादित्वात्कुत्वम् । सामवेदे । दुःखविरोधिनि सुखविशेषे । उत्कृष्टसुखे ॥ सत्स्वर्गः स्वसत्तयासमूलघातमपहन्ति दुःखम् । नचैषक्षयी । तथाहिश्रूयते । अपामसोमममृताअभूमेति

अस्य च येकृतोऽमृतत्वसम्भवः । यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतञ्च सुखं स्वर्गपदास्पदम् ॥ उच्यतेऽस्मिन्निति वा । उक्तं जगति स्थानादौ ॥ फलसेतिवत्र ॥ मनःप्रीतिकरः स्वर्गो नरकस्तद्विपर्ययः । नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तमः ॥ पारिभाषिकस्वर्गो यथा । मनोनुकूलः प्रमदारूपवत्यः स्वलङ्कृताः । बाह्यः प्रासादपृष्ठे सुस्वर्गः स्याच्छुभकर्मं शद्गतिगारुडे १०८ अध्यायः ॥

स्वर्गगामी । त्रि॰ स्वर्गगमनकर्त्तरि ॥ यथा । सर्वहिंसानिवृत्ता ये सर्वदुःखसहाश्च ये । सर्वस्याश्रयभूता ये ते नराः स्वर्गगामिनः ॥

स्वर्गगङ्गा । स्त्री॰ मन्दाकिन्याम् ॥

स्वर्गद्वारम् । न॰ तीर्थविशेषे ॥

स्वर्गपतिः । पुं॰ इन्द्रे । पुरन्दरे

स्वर्गपरः । पुं॰ स्वर्गप्रधाने ॥ स्वर्ग एव श्रेष्ठत्वाद्युदितत्वेन परउत्कृष्टो यस्य सः ॥

स्वर्गलोकः । पुं॰ वैकुण्ठे ॥ स्वर्गीयते इति स्वर्गः । स्वर्ग एवासौ लोकश्च ॥ यजमाने । स्वर्गो लोको यस्य सः ॥

स्वर्गलोकेशः । पुं॰ इन्द्रे ॥ शरीरे ॥

स्वर्गवधूः । स्त्री॰ सूर्वश्यायाम् ॥

स्वर्गसरित् । स्त्री॰ मन्दाकिन्याम्

स्वर्गसरिद्वरा । ) स्त्री॰ भागीरथ्याम् ।
स्वर्गापगा । )

स्वर्गायः । पुं॰ हरौ ॥ स्वर्गीयतइति स्वर्गीयः ॥

स्वर्गिगिरिः । पुं॰ सुमेरौ ॥

स्वर्गी । पुं॰ देवे । सुरे । त्रि॰ स्वर्गगामिनि ॥ तल्लक्षणन्तु । दयाभूतेषु सम्वादः परलोकं प्रतिक्रिया । सत्यं परहितार्थोक्तिर्वेदप्रामाण्यदर्शनम् ॥ गुरुदेवर्षिपूजा च केवलं साधुसङ्गमः । सत्क्रियाभ्यसनं मैत्री स्वर्गिणां लक्षणं विदुरिति ॥

स्वर्गिवधूः । स्त्री॰ अप्सरसु ॥

स्वर्गिरिः । पुं॰ मेरौ । सुरालये ॥

स्वर्गौकाः । पुं॰ अमरे । सुरे ॥

स्वर्ग्यः । त्रि॰ स्वर्गलोकस्य प्राप्तिसाधनभूते ॥ स्वर्गस्य निमित्ते । स्वर्गाय हिते ॥ स्वर्गस्य निमित्तं संयोगउत्पातो वा । गोद्व्यचोऽसङ्ख्यापरिमाणाश्वादेर्यत् ॥

स्वर्णम् । न॰ लोहवरे । भृङ्गारे । अस्य पर्याया यथा । स्वर्णं सुवर्णं कनकं हिरण्यं हेमहाटकम् । तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्वुरम् । चामीकरं जातरूपं महारजतकाञ्चने । रुक्मं कार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियामिति ॥ अस्य परीक्षादि यथा । दाहेऽतिरक्तमथ यच्च स

## सुवर्णम्

संछिद्यायां काश्मीरकान्तिविभा
तिनिकषपट्टे । स्निग्धस्वगौरवमु
पैति यत्तुलायाम् जानीत देवक
नकं मृदुरक्तपीतम् ॥ तच्चैकं रस
वेधजं तदपरं जातं स्वयं भूमिजं
। किञ्चान्यद्बहुलोहसङ्करभवम् चे
ति त्रिधा काञ्चनम् । तत्राद्यं किल
पीतरक्तमपरं रक्तं ततोऽन्यत्तथा गौरा
भं तदिति क्रमेण गदितं स्यात् पूर्व
पूर्वोत्तमम् ॥ अस्योत्पत्तिप-
रीचे तु द्रष्टव्ये हेमनिस्फुटे । गुणा
नुभावप्रकाशोक्तान्पठामि मारणा
दिकम् । यथा । सुवर्णं शी
तलं वृष्यं बल्यं गुरु रसायनम् । स्
वादु तिक्तं च तुवरं पाके च स्वादु पिच्छि
लम् । पवित्रं बृंहणं नेत्र्यं मेधास्मृ
तिमतिप्रदम् । हृद्यमायुष्करं का
न्तिवाग्विशुद्धिस्थिरत्वकृत् ॥ वि
षद्वयक्षयोन्मादत्रिदोषज्वरशोष-
जित् ॥ बलं सवीर्यं हरते नराणां रो
गव्रजं पोषयतीह काये । असौख्य
कार्येव सदा सुवर्णमशुद्धमेतन्मर
णं च कुर्यात् ॥ असम्यङ्मारि
तं स्वर्णं बलं वीर्यं च नाशयेत् । क
रोति रोगान्मृत्युं च तद्धन्याद्यत्नतस्त
तः । मारणयोग्यं सुवर्णमाह ।
दाहे रक्तं सितं छेदे निकषे कुङ्कुमप्रभ
म् । तारशुल्बोज्झितं स्निग्धं कोम
लं गुरु हेम सत् ॥ उत्तमम् । तच्छु

## सुवर्णम्

तं कठिनं रूक्षं विवर्णं समलं दलम् ।
दाहे छेदेऽसितं श्वेतं कषे स्फुटलघु
त्यजेत् ॥ अथ शोधनम् । पत्रली
कृत्य पत्राणि हेम्नो वह्नौ प्रतापयेत् ।
निषिञ्चेत्तप्ततप्तानि तैले तक्रे च का
ञ्जिके ॥ गोमूत्रे च कुलत्थानां कषा
ये तु त्रिधा त्रिधा । एवं हेम्नः परेषा
ञ्च धातूनां शोधनं भवेत् ॥ अथ मार
णम् । सुवर्णस्य द्विगुणं सूतमम्लेन
सह मर्दयेत् । तद्गोलकसमं गन्धं नि
दध्यादधरोत्तरम् ॥ सुवर्णस्य पति
तनूकृतपत्रस्य : गन्धं • गन्धकचू
र्णं ॥ गोलकं च ततो रुद्ध्वा शराव
दृढसम्पुटे । त्रिंशद्वनोपलैर्द
द्यात्पुटान्येवं चतुर्दश ॥ निरुत्थं
जायते भस्म गन्धो देयः पुनः पुनः ।
रुद्ध्वा • सवस्त्रकुट्टितचिक्कणमृ
त्तिकया । वनोपल • गोइठा • इ
ति लोके । निरुत्थं यत्पुनर्न जीव
ति ॥ अथवान्यप्रकारेण हेम्नो मारण
मुच्यते ॥ काञ्चने गलिते नागं षोड
शांशेन निःक्षिपेत् । चूर्णयित्वा
तथाम्लेन घृष्ट्वा कृत्वा तु गोलकम् ॥
गोलकेन समं गन्धं दत्त्वा चैवाधरोत्त
रम् । शरावसम्पुटे धृत्वा पुटे त्रिं
शद्वनोपलैः ॥ एवं सप्तपुटैर्हेम
निरुत्थं भस्म जायते । अथापि पूर्वं
वद्गन्धः प्रदातव्यः पुनः पुनः ॥
काञ्चनाररसैर्घृष्ट्वा समसूतक-

दुग्धी स्वर्णक्षीरीचक्रास्वनी ॥ स्वर्णक्षीरीहिमावतिकाक्रमिपित्तकफापहा । मूत्रकृच्छ्राश्मरीशोफदाहज्वरहरापरैति ॥ स्वर्णमिवपीतत्वात्क्षीरमस्याः, गौरादिः ॥

स्वर्णगैरिकम् । न० सुवर्णगैरिके । सोनागेरू० इ० भा० प्र० ॥

स्वर्णयीथा । स्त्री० कामरूपदेशप्रसिद्धनद्याम् । यथा । यानिर्गतापूर्वभागात्तस्माद्गिरिवरान्नदी । स्वर्णयीथेतिविख्यातासागङ्गासदृशोफला ॥ तस्मात्नाऽकर्ष्यलात् ॥

स्वर्णचूड :। पुं० चाषे । किकीदिवी ॥

स्वर्णक्षम् । न० वपुषि । मुद्रके ॥ रज्ने ॥

स्वर्णजातिः । स्त्री० पीतमालत्याम् ।

स्वर्णजीवन्ती । स्त्री० जीवन्तीभेदे । हैमाह्वायाम् । हैमजीवन्त्याम् । हिमाख्यायाम् ॥

स्वर्णतुला । स्त्री० नाराच्याम् ॥

स्वर्णधातु :। पुं० स्वर्णगैरिके ॥

स्वर्णदी । स्त्री० मन्दाकिन्याम् ॥ स्वःस्वर्गस्यनदी । पूर्वपदादसंज्ञायामगइतिणत्वम् ॥ कामरूपप्रसिद्धायांसितगङ्गायाम् ॥ यथा । नद्याःस्वर्णश्रियाः पूर्वेनदीकामाख्ययातता । कामाख्यायाः पूर्वभागेनदी सोमासमाह्वया ॥ सोमासमायाः पूर्वस्यांनदीनाम्नाह्विषीदृका । ततःपूर्वेकामरूपपीठाम्लेजगतांप्रसूः ॥ जगन्मायामहामायादेवीदिक्करवासिनी । एतायाः कथितानद्यः सकलादक्षिणस्रवाः ॥ तासुस्नात्वाप्रपीत्वाप : स्वर्गलोकमवाप्नुयात् । प्रान्ते दिक्करवासिन्याः सदावहतिस्वर्णदी ॥ सितगङ्गाह्वयालोकेसाचाद्गङ्गाफलप्रदा । साभूमिपीठसंस्थातुदेवीदिक्करवासिनी ॥ यमजलैः प्लावयन्तीयातिप्रत्यक्षतांसुरैः । सितगङ्गाजलेस्नात्वासम्पूज्यशम्भुंहरिं विधिम् ॥ दृष्ट्वाललितकांताख्यांपुनर्योनौनजायत इतिकालिकापुराणे ८२ऽध्यायः ॥ वृषिकाख्याम् ॥

स्वर्णदीधिति :। पुं० वह्नौ ॥

सुवर्णदुग्धा । स्त्री० सुवर्णक्षीर्याम् ॥

सुवर्णद्रु :। पुं० आरग्वधे ॥

सुवर्णपक्ष :। पुं० गरुडे ॥

सुवर्णपद्मा । स्त्री० मन्दाकिन्याम् ॥

सुवर्णपाठक :। पुं० टङ्कणे । सोहागाइतिखिष ॥

सुवर्णपारेवतम् । न० रुद्रापारेवते ॥

सुवर्णपुङ्ख :। पुं० शरविशेषे ॥

सुवर्णपुष्प :। पुं० आरग्वधे । चम्पके ॥

स्वर्णपुष्पा । स्त्री० कलिकार्याम् ॥ सातलायाम् ॥

स्वर्णपुष्पी । स्त्री० रामवर्षे ॥ पीतिकायाम् ॥ स्वर्णाख्याम् ॥ सातलायाम् । कलिकार्याम् ॥ स्वर्णक्षीर्याम् ॥ स्वर्णकेतक्याम् ।

स्वर्णप्रस्थः । पुं० जम्बुद्वीपोपद्वीपभेदे ।

स्वर्णफला । स्त्री० पीतरम्भायाम् ॥ त्रि० पीतफलके ॥

स्वर्णवणिक् । पुं० वर्णसङ्करजातिभेदे । सुवर्णवणिजि ॥ यथा । स्वर्णकारः स्वर्णवणिक्कायस्थ व्रजेश्वर । नरेषु मध्ये ते धूर्त्ताः कृपाहीना महीतले ॥ हृदयं क्षुरधाराभं तेषां नास्ति सादरम् । अतिप्रसञ्जनः कोऽपि कायस्थो भेतरो यतो बिभितिव्रह्मवैवर्त्तपुराणम् ॥

स्वर्णभूषणः । पुं० आरग्वधे ॥ त्रि० हेमाभरणविशिष्टे ॥

स्वर्णभृङ्गारः । पुं० स्वर्णभृङ्गराजे ॥ हेमकलसे ॥

स्वर्णमद्रा । स्त्री० नदीविशेषे ॥

स्वर्णमाक्षिकम् । न० उपधातुविशेषे ॥ तन्नामानि गुणाश्च यथा । स्वर्णमाक्षिकमाख्यातं तापीजं मधुमाक्षिकम् । तीक्ष्णं माक्षिकधातुश्च मधुधातुश्च सम्मतः ॥ किञ्चित्सुवर्णसाहित्यात्स्वर्णमाक्षिकमीरितम् । उपधातुः सुवर्णस्य किञ्चित्स्वर्णगुणान्वितम् ॥ तथाच काञ्चनाभावे दीयते स्वर्णमाक्षिकम् । किन्तु तस्यानुकल्पत्वात्किञ्चिदूना गुणास्ततः ॥ न केवलं स्वर्णगुणा वर्त्तन्ते स्वर्णमाक्षिके । द्रव्यान्तरस्य संसर्गात् सन्त्यन्येऽपि गुणा यतः ॥ सुवर्णमाक्षिकं स्वादु तिक्तं वृष्यं रसायनम् । चक्षुष्यं वस्तिरुक्कण्डुपाण्डुमेहविषोदरम् ॥ अर्शः शोथं विषं कण्डुं त्रिदोषमपि नाशयेत् । अशुद्धस्याश्य दोषमाह । मन्दानलत्वं बलहानिं सुगाढविष्टम्भितां नेत्रगदान्सकुष्ठान् । तथैव मालां व्रणपूर्विकाञ्च करोति तापीजमशुद्धमेतत् ॥ शोधनन्तु । माक्षिकस्य त्रयो भागा भागैकं सैन्धवस्य च । मातुलुङ्गद्रवैर्वाथ जम्बीरस्य द्रवैः पचेत् ॥ चालयेल्लोहजे पात्रे यावत्पात्रं सुलोहितम् । भवेत्ततस्तु संशुद्धिं स्वर्णमाक्षिकमृच्छति ॥ अथास्य मारणम् । कुलत्थस्य कषायेण घृष्ट्वा तैलेन वा पुटेत् । तैलेन वाजमूत्रेण म्रियते स्वर्णमाक्षिकमिति भावप्रका० ॥

स्वर्णयूथी । स्त्री० पीतयूथिकायाम् । पीतिकायाम् । हेमपुष्पिकायां ॥

स्वर्णरेताः । पुं० वह्नौ ॥

स्वर्णलता । स्त्री० ज्योतिष्मत्याम् ॥

स्वर्णवर्णा । स्त्री० हरिद्रायाम् ॥

स्वधाम् । त्रि॰ धनिनि । स्वमस्यास्ति मतुप् ॥

स्ववश: । त्रि॰ अपराधीने । स्वतन्त्रे ॥ स्वस्मिन् वश: आयत्त: ॥

स्ववासिनी । स्त्री॰ सुवासिन्याम् । चिरण्ट्याम् । स्त्रीषु पित्रादिषु वस्तुं शीलमस्या: । सुप्यजातौ णिनि-स्ताच्छील्ये इति णिनि: ॥

स्ववीज: । पुं॰ आत्मनि । न॰ निज कारणे ॥ स्वीयवीर्य्ये ॥

स्वसंवित् । स्त्री॰ स्वरूपसम्यग्-ज्ञाने ॥

स्वसा । स्त्री॰ भगिन्याम् । सुष्ठु अस्यति॰ अस्यतिवा । असुक्षेपणे । सावसेर्ऋन् ॥

स्वसुखम् । न॰ स्वरूपभूतेपरमा नन्दे ॥

स्वस्तन: । त्रि॰ स्वर्गभावे ॥

स्वस्ति अ॰ मङ्गलेसमीहितसाधने । समीहितसम्पत्तौ । पुण्ये ॥ आशं सायाम् ॥ आशीर्वादे ॥ दानस्वी कारमन्त्रे । यथा । स्वस्तिदेवीवा युपत्नीयं तेभ्योऽपि पूजिता । आ दानस्यप्रदानस्य निष्फलस्ययया विना तदेवीभागवतम् ॥ अस्यति॰ अ सतिवा । असक्षेपे॰ असुक्षेपणे ॥ वा । सुपूर्वकात्॰ क्तिच् । बाहु लकात् तिर्वा । यद्वा । अस्ति । अ सभुवि । सावसेरितिति: । बहुल वचनात्तभभाव: ॥

स्वस्तिक: । पुं॰ मङ्गलद्रव्ये । तण्डु लचूर्णनिर्मितचित्रकोणाकाराधि वासद्रव्ये ॥ चतुष्के ॥ पिष्टकप्र कारे ॥ रक्तालिङ्गे । जिनानांच तुर्विंशतिचिह्नान्तर्गतचिह्नविशेषे ॥ रसोने ॥ राजादीश्वरसद्मवि शेषे ॥ चतुष्पथे ॥ सर्पाणांफणा स्थनीलरेखाविशेषे ॥ पुं॰ न॰रा जादीश्वराणांसद्मविशेषे । तत्रच यथा । प्रागुत्तरद्वारहित: स्वस्ति काख्योऽभ्रप्रदःस्मृत: ॥ अपिच । स्व स्तिकं प्राङ्मुखंयत्स्यादलिन्दानु गतं भवेत् । तत्पार्श्वानुगतौचा न्यौतत्पर्य्यन्तगतोऽपर: ॥ इति ॥ मितावरणावे ॥ अभिप्रेतार्थ स्याविनाशे । अष्टाङ्गयोगस्यतृतीया ङ्गविशेषे ॥ तद्यथा । जानूर्वोरन्त रेसम्यक्कृत्वापादतलेउभे । ऋजु कायोविशेत्स्वस्थोस्वस्तिकं तत्प्रच क्षतेइति । स्वस्तिंचेमंकायति । कै शब्दे । आतोऽनुपेतिक: । मूलवि भुजादित्वात् ॥

स्वस्तिमुख: । पुं॰ ब्राह्मणे ॥ लेखे । पत्रे ॥ त्रि॰ वन्दिनि ॥ स्वस्तिमु खेयस्य ॥

स्वस्तिवाचनम् । न॰ विहितमङ्गलक र्मारम्भे मन्त्रविशेषपाठे । मन्त्रो च्चारणपूर्वकतण्डुलविकिरणे ।

यथाह व्यासः । सम्प्रत्यगम्यपुष्या यैर्ब्राह्मणान् स्वस्तिवाचयेत् । धर्मकर्मणि माङ्गल्ये सङ्ग्रामाद्भुतदर्शने इति ॥ स्वस्त्ययं स्ववाचनम् ॥

स्वस्त्ययनम् । न॰ अभिप्रेतार्थस्यप्राप्तौ ॥ स्वस्तिप्रकाशनेमन्त्रविशेषे ॥ स्वस्तिरद्वाच्यस्वस्त्ययनम् ॥ स्वस्तिक्षेमम्॰ ईयतेप्राप्यतेऽनेन । इण्॰ । ल्युट् ॥

स्वस्थः । त्रि॰ सुस्थे । प्रकृतिस्थे ॥ यथा । समदोषः समाग्निश्चसमधातुमलक्रियः । प्रसन्नात्मेन्द्रियमनाः स्वस्थइत्यभिधीयते ॥ क्रियाऽवकर्म । तेनसमक्रियः । शरीरानुरूपकर्मा ॥ स्वात्मनिस्थिते । उपसंहृतदेहमनोव्यापारे । स्वरूपस्थे ॥ वरदे ॥

स्वस्रीयः । पुं॰ भगिनीपुत्रे । भागिनेये ॥ स्वसुरपत्यम् । स्वसुश्छः ॥

स्वस्रीया । स्त्री॰ भागिनेय्याम् ॥

स्वा । स्त्री॰ आत्मीयायाम् ॥

स्वाचरम् । न॰ स्वीयाचरे । सन्धेः॰ स्वाधा॰ इ॰ अभाष प्र॰ ॥

स्वागतम् । न॰ कुशलप्रश्ने ॥ शुभागमने ॥ ॥ सुखेनागतम् ॥ सुनागतं वा ॥ त्रि॰ सुष्ठ्वागते ॥

स्वागता । स्त्री॰ त्रिष्टुप् ११ प्रभेदे तद्लक्षणन्तु । स्वागतेतिरनभाद्गुरुयुग्ममिति ॥ अपिच । हारिणीकनककुण्डलयुक्ता पुष्पयुक्तरयुगावलयश्रोः । वर्णितात्रिपतिवक्रबसंस्थैः स्वागताहरतिकस्य नचेतः ॥ यथा । पङ्कजंतदपिपाथसिमग्नंचन्द्रमाः सचवनान्तरितोभूत् । तन्मुखेन्दुतुलयापिविनोदंकृतनेवसहतेवतवेधाः ॥ स्वयमागतायाम् ॥

स्वागतिकः । त्रि॰ स्वागतवादिनि ॥ स्वागतमित्याह । ठक् । स्वागतादीनाञ्च स्वैचागमाभावः ॥

स्वाङ्गः । पुं॰ विष्णौ ॥ स्वात्मैवाङ्गंसहकार्यंस्यजगत्सृष्ट्यादाविति स्वाङ्गः ॥

स्वाङ्गिः । पुं॰ श्वफल्कात्मजे ॥ श्वफल्कस्यापत्यम् । अतइञ् । स्वागतादित्वान्नैजागमः ।

स्वाङ्गिकः । पुं॰ मार्दङ्गिके ॥

स्वाच्छन्द्यम् । न॰ स्वच्छन्दतायाम् ॥

स्वातन्त्र्यम् । न॰ अपराधीनतायाम् । परस्परानुमतिनैरपेक्ष्ये ॥ यथा । प्रभुः स्वातन्त्र्यमापन्नोयदोच्छतिकरोतितत् । पाणिनेर्दीर्घकाशम्नास्सुलोनदी ॥ इति ॥ स्वतन्त्रस्यभावः ॥ ष्यञ् ॥ त्रि॰ स्वाधीनताविशिष्टे ॥

स्वातिः । स्त्री॰ सूर्यपत्न्यन्तरे ॥ खड्गे ॥ पुं॰ स्त्री॰ पञ्चदशनक्षत्रे ॥ तत्राजातस्यफलंयथा । का

न्दर्पकूपप्रभयासमेतः कान्त्याजन प्रीतिरतिप्रसन्नः। स्वातिः प्रसूतीर्यदिमानवस्य महामतिः प्राप्तविभूतियोगः॥ त्रि॰ स्वात्यांजाते॥ श्रविष्ठाफल्गुनीष्वणोलुक्॥

स्वाती। स्त्री॰ पञ्चदशर्क्षे॥

स्वातीपथः। पुं॰ छायापथे। स्वातीवीथ्याम्॥

स्वातीवीथी। स्त्री॰ सूर्यादीनां मध्यमार्गे मध्यमवीथ्याम्। यथा। सूर्यादीनां त्रयो मार्गा दक्षिणोत्तरमध्यमाः। मार्द्रादुपक्रम्य तथार्द्रापिफल्गुन्यो मघा चर्षिभिर्मता। हस्तचित्रा तथा स्वाती मध्यवीथ्यभिविश्रुता। ज्येष्ठा विशाखानुराधा विराजगवीमता। एतास्वथीयस्तिस्रो मध्येमार्ग उच्यत इति वायुपुराणात्॥

स्वात्मा। पुं॰ स्वकीयात्मनि॥

स्वात्मामृतरसास्वादः। पुं॰ स्वात्मैवामृतरसः अमृतद्रवस्तस्यास्वादने।

स्वादः। पुं॰। रसग्रहणे स्वादनम्। स्वाद॰। घञ्॥

स्वादनम्। न॰ चर्वणे। स्वादनमशनं भक्षणमभ्यवहारो भोजनं स्वदनमिति हलायुधः। प्रीतिकरणे॥

स्वादितः। त्रि॰ आस्वादिते॥

स्वादिमा। पुं॰ स्वादुतायाम्। स्वादोर्भावः। इमनिच्॥

स्वादुः। पुं॰ मधुररसे। यथा। मधुरस्तु रसश्रेष्ठो गौरल्पस्य। दुर्मधूलकादृतिद्विमषन्दः॥ गण्डोले। गुडे। जीवकौषधौ। सुगन्धिद्रव्यभेदे। अगुरुसारे। स्त्री॰ द्राक्षायाम्॥ त्रि॰ मिष्टे। रसनाकर्षिणि। मधुरे। मनोज्ञे। सुन्दरे। स्वदते। स्वद आस्वादने। कृवापि स्युण्॥

स्वादुकण्टकः। पुं॰ विकङ्कते। गोक्षुरके। कण्टकोऽस्यास्ति। अर्श आद्यच्। स्वादुश्चासौ कण्टकश्च। स्वादुः कण्टकोऽस्य वा॥

स्वादुकन्दा। स्त्री॰ विदार्याम्॥

स्वादुका। स्त्री॰ नागदन्त्याम्॥

स्वादुखण्ड। पुं॰ गुडे। मधुरभागे॥

स्वादुगन्धा। स्त्री॰ विदार्याम्॥

स्वादुङ्कारम्। अ॰ स्वादूकृत्येत्यर्थे॥ स्वादुमिणमुल्॥

स्वापर्णी। स्त्री॰ दुग्धिकायाम्॥

स्वादुपाका। स्त्री॰ काकमाच्याम्॥ स्वादुः पाकोऽस्याः॥

स्वादुपिण्डा। स्त्री॰ पिण्डखर्जूर्याम्॥

स्वादुपुष्पः। पुं॰ कट्भ्याम्।

स्वादुफलम्। न॰ बदरीफले॥

स्वादुफला। स्त्री॰ द्राक्षायाम्। कोली॥

वेदाभ्यासे ॥ स्वाध्यायस्याभ्यसनं ॥

स्वाध्यायी । पुं० पत्तनवणिजि ॥ स्वाध्याययुक्ते ॥ स्वाध्यायिस्त्यस्य । इनि: ॥

स्वाध्वरिक: । त्रि० स्वध्वरशादिनि ॥ शोभनोऽध्वर: स्वध्वर: । स्वध्वरमित्याह० तिमचरतिवा । ठक् । स्वागतादीनाञ्चेत्यैजागमोन ॥

स्वान: । पुं० निर्घोषे । निह्रादे । शब्दे ॥ स्वननम् । स्वनशब्दे । स्वनहसोर्वेतिपक्षे घञ् ॥

स्वानुभव: । पुं० आत्माकारान्त:करणसाक्षात्कारे ॥

स्वान्तम् । न० हृदि । मानसे । मनसि । चित्ते ॥ गह्वरे । स्वन्यते स्म । स्वन० क्षुब्धस्वान्तध्वान्तेतिमनस्यनिट्कमेतन्निपातितम् ॥ स्वस्यान्तोऽन्तच्छेदोभवतिवेनतदितिवा ॥

स्वाप: । पुं० निद्रायाम् । कारणभाविनावस्थाने । शयने । शय्यायाम् । अज्ञाने । तत्त्वाप्रतिबोधे । दर्शनस्पर्शनरहितदृशंनस्पर्शेति हिपक्षीरनिरूपिणीवावस्थाभेदे । रुग्भेदे । स्पर्शाज्ञतायाम् ॥ स्वपनम् । ञिष्वप् शये । घञ् ॥ धातोर्गुरुकुलाणसुराणांसंविशेदुपरिनाप्यनुवंशम् । मोतरापरशि-

·रामचनमोर्नवचादृंचरण: श्रियमिच्छन् ॥

स्वापतेयम् । ) स्वापतेयकम् । ) न० धने । वित्ते ॥ स्वस्यपति: स्वपति: । स्वपतौ धनस्वामिनीसाधु । पथ्यतिथिवसतिस्वपतेर्ढञ् । स्वागतादित्वान्नैजागम: ॥

स्वापन: । पुं० न० अस्त्रविशेषे । पुं० श्रीहरौ । विष्णौ ॥ स्वापयति स्वमायया आत्मज्ञाविधुरान्करोति । ञिष्वप् शये । अस्मात्स्वान्तात् ल्युट् । औणादिकोयुञ्वा ॥

स्वाप्यय: । पुं० सुषुप्तौ । स्वस्मिन्नप्यय: ॥

स्वाभाविक: । त्रि० स्वभावसिद्धे । स्वभावतउत्पन्ने ॥ स्वभावोऽनादिरविद्या० तत्कार्ये । सहजे । अकृतके ॥ स्वभावेभव: । स्वभावादागतोवा । ठक् ॥

स्वाभाविकी । स्त्री० प्रकृतौ । द्रव्यस्वभावतएवसिद्धायांप्रकृतौ ॥ यथाऽग्न्यादीनामुष्णप्रकाशादिलक्षणास्वाभाविकीप्रकृति: ॥

स्वाभास: । त्रि० रमणीये ॥ सुष्ठु आभासते । भास० । पचाद्यच् ॥ पुं० कुवेरे ॥ स्वेनधनेनआभासते ।

स्वाभाव्य: । पुं० हरौ । स्वभा

वैर्नैवयभाव्योऽसाध्यो निष्पन्नरूपत्वात् ॥

स्वामिजङ्घी । पुं॰ परशुरामे ॥

स्वामिता । स्त्री॰ स्वामित्वे ॥ स्वामिनो भावः । तस्य भावस्त्वतलौ ॥

स्वामी पुं॰ कार्त्तिकेये । विशाखे । शिखिवाहने । पत्यौ । भर्त्तरि । गुरौ । श्रीनाथे ॥ यथा । गुरुं मामानभाषितजपकालादृतेऽशिवे । श्रीनाथदेवस्वामीति विवादेवोधमेव देत् ॥ हरे ॥ हरौ ॥ परमहंसे ॥ वात्स्यायनमुनौ ॥ प्राक्स्पीयाहंह्रदे ॥ नृपे । भूपे ॥ त्रि॰ अधिपतौ । अस्य पर्यायास्तु । स्वामीत्वीश्वरः पतिरीशिता । अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपश्चेति ॥ स्वमैश्वर्यमस्यास्तीति स्वामि ऐश्वर्ये इत्यामिनच् । निपात्यते ॥

स्वाम्यम् । न॰ आधिपत्ये ॥

स्वायम्भुवः । पुं॰ प्रथममनौ । ब्रह्मणः पौत्रे ॥ स्वयम्भुवोऽपत्यम् । अण् । संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणः ॥

स्वायम्भुवी । स्त्री॰ ब्राह्मीमोषधौ ॥

स्वारः । पुं॰ उपतप्तरि ॥ स्वरति । स्वृशब्दोपतापयोः । अच् । स्वरएव । प्रज्ञाद्यण् ॥ भावे वा घञ् ॥

स्वारस्यम् । न॰ स्वभावे ॥ स्वरस्य भावः । ष्यञ् ॥

स्वाराट् । पुं॰ इन्द्रे । नमुचिसूदने ॥ स्वः स्वर्गे राजते । स्वेषु देवेषु॰ स्वेन धनेन वा॰ आराजते । सत्सूद्विषेति क्विप् । रीरीतिलोपे॰ ढ्लोपेऽणितिदीर्घः । जान्तः ॥

स्वाराज्यम् । न॰ स्वातन्त्र्ये । स्वराड्भावे ॥ ष्यञ् ॥

स्वारामगुच्छकम् । न॰ ग्रन्थिपर्णे ॥ ऐन्द्रे पदे ॥

स्वारोचिषः । पुं॰ द्वितीयमनौ ॥ स्वरोचिषोऽपत्यम् । अण् ॥

स्वार्थः । पुं॰ स्वप्रयोजने ॥ स्वीयाभिधेये ॥ स्वकीयधने । स्वीयवस्तुनि ॥

स्वार्थदर्शनः । त्रि॰ निजार्थावलोकने ॥ स्वस्यात्मनोऽर्थं पश्यतीति तथा ॥

स्वार्थानुमानम् । न॰ स्वानुमितिहेतौ ॥ तथाहि । स्वयमेव भूयोदर्शनेन यत्र धूमस्तत्राग्निरिति महानसादौ व्याप्तिं गृहीत्वा॰ पर्वतसमीपङ्गतः॰ तद्गते चाग्नौ सन्दिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति यत्र धूमस्तत्राग्निरिति । तदनन्तरं वह्निव्याप्यधूमवानयं पर्वत इति ज्ञानमुत्पद्यते । अयमेव लिङ्गपरामर्श इत्युच्यते । तस्मात्प

र्तीयवह्निमान् । इति स्वायममनुमि
तिरुत्पद्यते । तदेतत्स्वार्थानुमा
नम् ॥

स्वाश्रयः । त्रि० अनन्याश्रये ॥

स्वास्थ्यम् । न० आरोग्ये ॥ स्व
रूपेऽवस्थाने ॥ सन्तोषे ॥ स्व
स्थस्यभावः । ष्यञ् ॥

स्वाहा । अ० देवहविर्दानमन्त्रे ॥ स्वा
दते । स्वादआस्वादने । आप्रत्ययः
। पृषोदरादित्वात् ह्रस्वः ॥ सुष्ठु
आहूयतेऽनेनवा । डाप्रत्ययः ॥

स्वाहा । स्त्री० अग्नेः पत्न्याम् । अ
ग्नाय्याम् ॥ यथा । स्वाहादेवीवह्नि
पत्नीप्रतिविश्वेषु पूजिता । ययावि
ना हविर्दानं नग्रहीतुं सुराः क्षमाः इ
तिदेवीभागवतम् ॥ सुष्ठु आहूय
न्ते देवा अनया । अन्येभ्योपीति डः
। टाप् ॥ स्वाहाऽस्त्यस्यावा । अर्श
आद्यच् ॥ स्वान् आजिहीतेवा ॥
बुद्धिशक्तिविशेषे । तारिण्याम् ॥

स्वाहापतिः । पुं० अग्नौ ॥ इ० अ-
रुणौ ॥ *

स्वाहाप्रियः । पुं० वैश्वानरे । वह्नौ
॥ स्वाहाप्रियायस्य । अपूर्वप्रिया
दिष्वितिनिषेधात्पुंवद्भावः ॥

स्वाहाभुक् । पुं० त्रिदशे । देवता-
याम् ॥

स्वित् । अ० प्रश्ने ॥ वितर्के । नानाप
क्षावमर्शे ॥ पादपूरणे ॥ सुष्ठु एति
० अयति वा । इण् गतौ० इङ् गतौ
वा । क्विप् ० तुक् ॥

स्विदितः । त्रि० स्वेदिते ॥

स्विन्नः । त्रि० प्रस्विन्ने । स्वेदान्विते ।
घर्मयुक्ते ॥ स्विन्नोघर्मोपितेजनङ्
तिहलायुधः ॥ पक्वे ॥ यथा । अ
ग्नौ चेतगतं प्राहुः सतुषं धान्यमु
च्यते । आमं वितुषमित्युक्तं स्विन्न
मन्नमुदाहृतमितिश्रीधरः ॥

स्विष्टम् । न० सम्यग्यजने ॥ त्रि० स
म्यक्पूजिते ॥

स्विष्टकृत् । पुं० पूर्णाहुत्यन्तक्रियमा
णे होमविशेषे । सु० सुष्ठुशोभनं
इष्टं सर्वमपि करोति । डुकृञ्०
क्विप् तुक् ॥

स्विष्टिकृत् । पुं० होमविशेषे ॥ शोभ
नाइष्टिः स्विष्टिः । तां करोति ।
कृञ् । क्विपि तुक् ॥

स्वीकारः । पुं० अङ्गीकारे । स्वीकर
णम् । च्व्यन्तस्वशब्दपूर्वात् कृञो
भावेघञ् ॥ यावताप्यात्स्वनिर्वा
हः स्वीकुर्यात्तावदर्थवित् । आ
धिक्ये न्यूनतायाञ्च च्यवते परमार्थ
तः ॥

स्वीकृतः । त्रि० अङ्गीकृते ।

स्वीयः । त्रि० आत्मीये ॥ प्राक्क्री
ताच्छः ॥

स्वीया । स्त्री० स्वामिन्येवानुरक्ता
यांनायिकायां ॥

स्वेदनी । स्त्री० कन्दौ ॥ कन्दुशालायाम् ॥ स्विद्यतेऽस्यामधिकरणे ल्युट् । ङीप् ॥

स्वेदमलोज्झितदेहः । पुं० सर्व्वज्ञत्वीयजिनोत्तमे ॥ स्वेदमलरहितशरीरे । वि० तद्वति ॥

स्वेदावरोधः । पुं० प्रस्वेदानिर्गमे ॥ दोषेणाठराग्नेराच्छन्नतायाम् ॥ स्विद्यतेऽनेनेति स्वेदोऽग्निः । तस्यावरोधः ॥

स्वैरः । त्रि० स्वच्छन्दे । स्वतन्त्रे ॥ मन्दे ॥ स्वेनात्मना ईर्त्ते । ईरति वा । ईर गतौ कम्पने च । ईर प्रेरणे वा । पचाद्यच् । स्वादीरेरिणोरिति वृद्धिः ॥

स्वैरिणी । स्त्री० सवर्ण्णरतायाम् । व्यभिचारिण्याम् । अस्याः पर्य्यायास्तु । पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी । स्वैरिणी पांशुलेत्यमरः ॥ अथ विशेषस्तु । स्वैरिणी यः पतिं त्यक्त्वा सवर्ण्णं कामतः श्रयेत् । चतुर्व्विधाः समाख्याता नारदेन सुरर्षिणा ॥ यथा । स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति । कामात् समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा ॥ कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता । पुनः पत्युर्गृहं यायात् सा द्वितीया प्रकीर्त्तिता ॥ मृते भर्त्तरि तु प्राप्तान् देवरादीनपास्य या । उपगच्छेत्परं कामात् सा तृतीया प्रकीर्त्तिता ॥ प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा च या । तवाहमित्युपगता सा चतुर्थी प्रकीर्त्तितेति ॥ स्वयाश्च्छन्दा० स्वैरस्वातन्त्र्येण वा • स्वेनात्मना वा ईरितुं शीलमस्याः । ईर गतौ । सुप्यजातौ णिनिः । नान्तलक्षणो ङीप् । स्वादीरेरिणोरिति वृद्धिः ॥ महाभारते आदिपर्व्वणि । चतुः पुरुषगामिनी स्वैरिणीत्युक्ता ॥

स्वैरिता । स्त्री० अन्यानपेक्षणे । यदृच्छायाम् । स्वच्छन्दतायाम् । स्वैरिणो भावः । तल् ॥

स्वैरी । त्रि० स्वतन्त्रे । स्वेनेरितुं शीलमस्य । ईर गतौ । सुप्यजातौ णिनिः । स्वादीरेरिणोरिति वृद्धिः ॥ परदारगमनशीले ॥

स्वैरिन्ध्री । स्त्री० सैरिन्ध्र्याम् ॥ स्वैरं स्वाच्छन्द्यं धरतीति तथा ॥ इ० रभसः ॥

स्वोपार्ज्जितम् । न० स्वयमर्ज्जितधने ॥ तदुक्तं श्रीमहानिर्व्वाणतन्त्रे । पुत्रा विभक्तविद्याधनाद्यैर्दरोरिणम् । शरीरन्तु पितुर्यस्मात् किं न स्यात् पैतृकं वसु ॥ पृथगन्नैः पृथग्वित्तैर्मनुजैर्यदुपार्ज्जितम् सर्व्वं तत्पितृसम्बन्धात्तदा स्वोपार्ज्जितं कुतः ॥ अतो महैर्भिस्वायासैर्यम

यद्धनमर्ज्जितम् । स्वोपार्जितं तदेवस्यात्सततस्वामीनचापरः इति ॥ त्रि॰ स्वार्जितधनादौ ॥ च वर्बिष्णुसूत्रम् । पिताचेत्पुत्रान् विभजेत्तस्यस्वेच्छास्वयमुपात्तेर्थे॰ पैतामहेतुपितापुत्रयोस्तुल्यंस्वामित्वमिति ॥

( **—*‡*‡*—** )

हकारस्यप्रारम्भः

ह । अ॰ सम्बोधने ॥ पादपूरणे ॥ विनिग्रहे ॥ नियोगे ॥ क्षेपायाम् अपणे ॥ कुत्सायाम् ॥ एति ह्यार्थे ॥ प्रसिद्धौ ॥ हन्ति । हन हिंसागत्योः । अन्येभ्योपीतिड ॥ हन्तावद्योतकोयंनिपातइतिवैदिकाः ॥

हः । पुं॰ शिवे ॥ सलिले ॥ शून्ये ॥ धारणे ॥ मङ्गले ॥ गगने ॥ नकुलीशे ॥ रक्ते ॥ नाके ॥ स्वर्गे ॥ पापहरणे ॥ चन्द्रे ॥ हरौ ॥ हंसे ॥ रणे ॥ रोमाञ्चे ॥ वाजिनि ॥ हर्षे ॥ हकारे ॥ सकोपवारणे ॥ शुष्के ॥

हंसः । पुं॰ मानसौकसि । श्वेतगरुति । चक्राङ्गे ॥ अस्यमांसगुणा यथा । स्निग्धंहिमगुरूष्णंमांसंजर्पाचरणानुवातघ्नम् । शिष्वपिचहं समांसंहृष्यतमंतिमिरहरणंचेति रा॰ निघण्टः ॥ अस्यशकुनन्तु । काष्ठासुसर्वासुपदृश्यमेनहंसस्य शब्देनतुसर्वसिद्धिः । नामानिहंसस्यशृणोतियस्तुप्रयान्तिनाशंदुरितानितस्य ॥ चौरैः समंदर्शनमात्यशब्देनिषिद्धंतोयेऽथभयंतृतीये ॥ युद्धंचतुर्थे॰ नृपतिप्रसादः स्यात्पञ्चमेहंसरवेनराणामितिवसन्तराजः ॥ निर्लोभनृपे ॥ विष्णौ ॥ अर्के ॥ परमात्मनि ॥ मत्सरे ॥ योगिभेदे ॥ मन्त्रभेदे ॥ शरीरस्थमरुद्विशेषे । प्राणवायौ ॥ ब्राह्मणे ॥ अश्वमेधीयाश्वे ॥ यथा । किमयंदीयतेहंसः सतिसैन्येचतुर्विधे॰ इत्यादिपुराणम् । अयतः स्थितश्रेष्ठे । गुरौ ॥ शिवे ॥ विशुद्धे ॥ पर्वते ॥ गन्धर्वविशेषे ॥ जीवे ॥ चतुर्विधावधूतान्तर्गतावधूतविशेषे । यथा । श्रीदेव्युवाच । द्विविधाश्चाश्रमीप्रोक्तोगार्हस्थ्योभैक्षुकस्तथा । किमिदंश्रूयतेचित्रमवधूताश्चतुर्विधाः ॥ एतद्वेदितुमिच्छामितत्त्वतः कथयप्रभो । चतुर्विधाऽवधूतानांलक्षणंसविशेषतः ॥ श्रीसदाशिवउवाच । ब्रह्ममन्त्रोपासकायेब्राह्मणाः क्षत्रियादयः । गृहाश्रमेवसन्तोपिज्ञेयास्तेयतयः प्रिये ॥ पूर्णाभिषेकविधिनासंस्कृ

तास्त्वेवमानवाः । शैवावधूतास्ते च वीराः पूजनीयाः कुलार्चिते ॥ ब्राह्मावधूताः शैवाश्च स्वस्वाश्रमाचारवर्त्तिनः । विदध्युः सर्वकर्माणि मदुदीरितवर्त्मना ॥ विनाब्रह्मार्पितं चैतद्यच्चक्रार्पितं विना । निषिद्धमन्नं तोयञ्च न गृह्णीयुः कदाचन ॥ ब्राह्मावधूतकौलानां कौलानामभिषेकिणाम् । प्रागेव कथितं धर्मं शैवाचारं वरानने । स्नानं सन्ध्याशनं पानं दानं दारपरिग्रहम् । सर्वमागममार्गेण शैवब्राह्मावधूतयोः ॥ उक्तावधूतो द्विविधः पूर्णापूर्णविभेदतः । पूर्णः परमहंसाख्यः परिव्राडपरः प्रिये ॥ कृतावधूतसंस्कारो यदि स्याद्ज्ञानदुर्बलः । सदा लोकालये तिष्ठन्नात्मानं संशोधयेत् ॥ रक्षन् स्वजातिचिह्नञ्च कुर्वन् कर्माणि कौलवत् । सदा ब्रह्मपरो भूत्वा साधयेज्ज्ञानमुत्तमम् ॥ ओं तत्सन्मन्त्रमुच्चार्य सोऽहमस्मीति चिन्तयन् । कुर्यादात्मोचितं कर्म सदा वैराग्यमाश्रितः ॥ कुर्वन् कर्माण्यनासक्तो नलिनीदलनीरवत् । यतेतात्मानमुद्धर्त्तुं तत्त्वज्ञानविवेकतः ॥ तृप्यपक्वस्योत्तमम् । चतुर्णामवधूतानां तुरीयो हंस उच्यते । त्रयोऽन्ये योगभोगाढ्या मुक्ताः सर्वे शिवोपमाः ॥ हंसो न कुर्यात् स्त्रीसङ्गं न वा धातुपरिग्रहम् । प्रारब्धमश्नन् विहरेन्निषेधविधिवर्ज्जितः ॥ त्यजेत् स्वजातिचिह्नानि कर्माणि गृहमेधिनाम् । तुरीयो विचरेत् क्षोणीं निःसङ्कल्पो निरुद्यमः ॥ सदात्मभावसन्तुष्टः शोकमोहविवर्ज्जितः । निर्निकेतस्तितिक्षुः स्यान्निःशङ्को निरुपद्रवः ॥ नार्पणं भक्ष्यपेयानां न तस्य ध्यानधारणा । मुक्तो विरक्तो निर्द्वन्द्वो हंसाचारपरो यतिः ॥ इति ते कथितं देवि चतुर्णां कुलयोगिनाम् । लक्षणं सविशेषेण साधूनामस्मद्रूपिणाम् ॥ एतेषां दर्शनस्पर्शादालापात् परितोषणात् । सर्वतीर्थफलावाप्तिर्जायते मनुजन्मनाम् ॥ पृथिव्यां यानि तीर्थानि पुण्यक्षेत्राणि यानि च । कुलसन्न्यासिनां देहे सन्तितानि सदा प्रिये ॥ इति श्रीमहानिर्वाणतन्त्रे १४ उल्लासः ॥ हन्ति गच्छति । सू षांक्ति शंवा । हन० । पचाद्यच् । भवेद्वर्णागमाद्धंसः सद्धूनिसक् ॥ हन्ति । वृतृवदिहनीति सो वा । इत्युणादिसूत्रविशेषि ॥ विङ्कलदिष्टो भादिविशिष्टः कर्णयुतो सौभामिनि हंसः ॥ यथा, एतिवमन्नौ घातितिदिग्न्तौ । किं स खिन्नान्तः कोपिकृतान्तः ॥

हंसकः । पुं० पादकटके । पादशलये । हंसवत्कायति मधुरध्वनिस्वा

त् । कैमर्द्दे । यथ्योपवीतिङः ॥ हंसद्रववाहंसाकृतिस्वात् । दूषिप्रतिकृताविति काम् । स्वार्थे वा कन् ॥ राजहंसे ॥ तालप्रभेदे । यथा । लघुगुरुलघुयैश्च तालो हंसकः स्मृतइति ॥

हंसकपक्ष । पुं॰ रतिबन्धविशेषे ॥ यथा । नारीपादद्वयं कृत्वाकान्तस्योरुयुगोपरि । कटिमान्दोलयेद्यत्र बन्धोयं हंसकोक्तकः ॥

हंसकीरल: । पुं॰ रामेश्वरविकूटैश वंशे ॥

हंसग: । पुं॰ सुरज्येष्ठे । परमेष्ठिनि ॥

हंसगद्गदा । स्त्री॰ मधुरभाषिण्याम् । मधुरनिस्वनायाम् ॥

हंसगामिनी । स्त्री॰ ब्रह्माण्याम् । हंसगामिनि ॥ नारीविशेषे । हंसवद्गमनशील । गत्यु॰ । कर्त्तर्युपमानइति णिनि ॥

हंसडिम्ब । पुं॰ हंसबीजे ॥

हंसदहनम् । न॰ अगुरुणि ॥

हंसनादिनी । स्त्री॰ नारीविशेषे ॥ यथा । गजेन्द्रगमनातन्वीकोकिलालापसंयुता । नितम्बगुर्विणीयासा कथ्यन्ते हंसनादिनी ॥

हंसपदी । स्त्री॰ हंसपदीविशेषे । मधुस्रवायाम् । हंसपाद्याम् । त्रिपद्याम् ॥ गोधापद्याम् ॥ यथा । हंसपदीगुरुः शीताशृंग्मिरक्तविषप्रणाम् । विसर्पदाहातिसारलूताभूताग्निरोगिषणो ॥

हंसपाद: । पुं॰ हिङ्गुले ॥ यथा । जपाकुसुमसंकाशोहंसपादोमहोत्तमः ॥ पुं॰ हंसचरणे ॥

हंसपादिका । स्त्री॰ हंसपद्याम् । गोधापद्याम् ॥

हंसपादी । स्त्री॰ गोधापद्याम् ॥

हंसमाला । स्त्री॰ कलहंसे । हंससमूहे ॥

हंसमाषा । स्त्री॰ माषपर्ण्यां ॥

हंसरथ: । पुं॰ ब्रह्मणि । द्रुहिणे ॥ हंसोरथोऽस्य ॥

हंसलोमश: । पुं॰ न॰ कासीसे ॥

हंसलोहकम् । न॰ पित्तले ॥

हंसवती । स्त्री॰ हंसपादीलतायाम् ॥ त्रि॰ हंसयुक्ते ॥

हंसवाहन: । पुं॰ ब्रह्मणि । सुरज्येष्ठे ॥ हंसोवाहनमस्य ।

हंसबीजम् । न॰ हंसडिम्बे । यथा । हंसबीजं परं बल्यं हंसपादान्तमानसम् । पाकेलघुतरं प्रोक्तं सर्वामयविनाशनमितिराजनिघण्टः ॥

हंसाङ्घ्रि: । पुं॰ गोधापद्याम् ॥ हिङ्गुले ।

हंसाधिरूढा । स्त्री॰ सरस्वत्याम् ॥

हंसाभिख्यम् । न॰ रूप्ये ॥

हंसारूढ । पुं॰ कमलासने । ब्रह्मणि ।

हंसारूढा । स्त्री॰ ब्रह्माण्याम् ॥

हंसिका । स्त्री॰ हंस्याम् । हन्ति । हन॰ । हंसिमणिभ्यां सिकन् ॥

हंसिनी । स्त्री॰ शिखरिण्याः प्रभेदे । यथा । निर्म्मीरसुधोरसंयुक्तं गालितं दधि । शर्करैलामसाहाररसयुक्ता हंसिनी भवेत् ॥ हंसी शिखरिणी रुच्या शुभा वर्ज्जा विकाशिनी । सुशीतजननी धैर्य्यकफपित्तविनाशिनी ॥

हंसी । स्त्री॰ हंसयोषिति । वरटायाम् ॥ हंसिन्याम् । आकृति २२ प्रभेदे । तल्लक्षणन्तु । मौ गौ नाश्च त्वा री गौ गौ वसुभुवनयतिरिति भवति हंसी । यथा । सान्द्रकान्तेने काकोसौ विकचकमलमधुसुरभि पिबन्तीकामक्रीडाकृतस्फीतप्रमदसरसभरमलघुरसन्ती । कालिन्दीये पत्राराध्ये पवनपतनपरितरलपरागे कंसारातिः पश्यस्वेच्छं सरभसगतिरिह विलसति हंसी ॥ वृत्तान्तरेऽपि । यथा । ध्याख्य ह्रस्वौ भवनगणतः पश्चाद्दीर्घौ विपुलफणतः । हंसोख्याताश्रुतिरसयतिस्तत्र्यक्तेषां नजयतिमतः ॥

हंसोदकम् । न॰ अंशूदके । यथा । नादेयं नवमृद्घटेषु निहितं सम्यक् समकांशुभिर्यामिन्याञ्च निविष्टमिन्दुकिरणैर्मन्दानिलान्दोलितम् । एलाद्यैः परिवासितं श्रमहरं पित्तोष्णदाहविषमूर्च्छारक्तमदात्ययेषु विहितं शंसन्ति हंसोदकमिति राजनिघण्टः ॥

हंहो । अ॰ प्रश्ने ॥ दम्भे । दर्पे ॥ सम्बोधने ॥

हकः । पुं॰ गजसमाह्वाने ॥

हकारः । पुं॰ आह्वाने ॥

हञ्जा । अ॰ नाट्योक्तचेटीसम्बोधने ॥

हञ्जः । पुं॰ क्षुति । क्षवे ॥

हञ्जिका । स्त्री॰ भार्ग्याम् । भनक्ति रोगान् । भञ्जो आमर्द्दने । ण्वुल् । पृषोदरादिः ॥

हञ्जी । स्त्री॰ फञ्जिकायाम् । भार्ग्याम् ॥ हन्ति रोगान् । पचाद्यच् । पृषोदरादिः । गौरादिः ॥

हञ्जे । अ॰ नाट्योक्त्या चेटीसम्बुद्धौ ॥ हिगाउते । हि हिगन्त्यमाद्रयोः । बाहुलकादेप्रत्ययः । हतोऽकारो डञ्जोऽपि ॥

हटपर्णिका । स्त्री॰ शैवाले ॥

हट्टः । पुं॰ क्रयविक्रययोः प्रसिद्धस्थाने । आपणे । हाट इति भाषा प्रसिद्धे ॥

हट्टचौरः । पुं॰ प्रसह्यचौरे । वन्दीकारे । चिल्लाभे ॥

हट्टवणिक् । पुं॰ हट्टवाणिज्यावृत्त्याख्यातेन गर्भविशेषे ॥

हट्टविलासिनी । स्त्री॰ गन्धद्रव्यविशेषे । धमन्याम् । अञ्जनकेश्याम् । हरिद्रायाम् । हट्टे विलसति॰ तच्छीला । लसक्रीडायाम् । सुपीति णिनि : ॥

हट्टाध्यक्ष : । पुं॰ अधिकर्म्मिके ॥

हट्टी । स्त्री॰ क्षुद्रहट्टे । पुरतन्याम् ॥

हठ : । पुं॰ प्रसभे । बलात्कारे ॥ अम्बुपर्ण्याम् । प्रशन्याम् । हठनम् । हठप्लुतिशठत्वयो : । पुंसीति॰ खनोघचेतिवाघ : ॥

हठनिग्रह : । पुं॰ मूढानुगृहीतनिग्रहविशेषे ॥ तथाहि । चक्षु : श्रोत्रादीनि ज्ञानेन्द्रियाणि॰ वाक्पाण्यादीनि कर्म्मेन्द्रियाणि च॰ तत्तद्गोलकमात्रोपरोधेन हठान्निगृह्यन्ते । तद्दृष्टान्तेन मनोऽपि हठेन निग्रहीष्यामीति मूढस्य भ्रान्तिर्भवति । न च तत्तथा निग्रहीतुं शक्यते॰ तद्गोलकस्य हृत्कमलस्य निरोद्धुमशक्यत्वात् । अत : क्रमनिग्रह एव युक्त : ॥

हठपर्णी । स्त्री॰ अम्बुताली । शैवाले ॥

हठयोग : । पुं॰ पातञ्जलोक्तप्रसिद्धेऽष्टाङ्गयोगे । योगस्वरोदयोक्तयोगे । यथा ; इदानीं हठयोगस्तु कथ्यते हठसिद्धिद : । कृत्वासनं पावनाय शरीरे रोगहारकम् । पूरकं कुम्भकञ्चैव रेचकं वायुना भजेत् । इत्थं क्रमोत्क्रमं ज्ञात्वा पवनं साधयेत्सदा । धौत्यादिकर्म्म षट्कञ्च संस्कुर्य्याद्धठसाधक : । एतन्नाडान्तु देवेशि वायुपूर्णं प्रतिष्ठितम् ॥ ततो मनो निश्चलं स्यात्ततश्चानन्दमेव हि । हठयोगाभ्यकाले ; स्यान्मन : शून्ये भवेद्यदि ; इदानीं हठयोगस्य द्वितीयं भेदकं शृणु । आकाशे नासिकाग्रे तु सूर्य्यकोटिसमं स्मरेत् । श्वेतं रक्तं तथा पीतं कृष्णमित्यादिरूपत : । एवं ध्यात्वा चिरायु : स्याद् ज्ञानमनवर्ज्जित : ॥ शिवतुल्यो महात्मासौ हठयोगप्रसादत : । हठाज्ज्योतिर्मयो भूत्वा ह्यमरो वा शिवो भवेत् ॥ अतोऽयं हठयोग : स्यात् सिद्धिद : सिद्धसेवितइति ॥

हठालु : । )
हठालुका । ) स्त्री॰ कुम्भिकायाम् ॥

हठी । त्रि॰ हठविशिष्टे ॥

हठी । स्त्री॰ वारिपर्ण्याम् ॥

हडि : । पुं॰ बन्धनसाधनकाष्ठयन्त्रविशेषे ॥ यथा । निगडोलोहबन्धेऽस्त्रीहडि : काष्ठस्य यन्त्रणा॰ इति शब्दमाला ॥

हड्डिक : । पुं॰ मलाकर्षिणि॰ नीचजातिविशेषे । हाडि॰ इ॰ गौ॰ भा॰ ॥

हड्डम् । न॰ अस्थनि ॥

हड्डक : । पुं॰ हड्डिक ॥

हड्डजम् । न॰ मज्जनि ॥

हञ्जि : ।)
हञ्जिका : ।} पुं॰ हडिकोमयिराडौ ॥
हञ्जिप : ।)

हण्डा । अ॰ कुत्सिताह्वाने । नीचसम्बोधने ॥ यथा हण्डे तिचेटचाह्वानं मध्याह्वानं हलेतिच । हण्डे तिकुत्सिताह्वानमार्योमारिषउच्यतइति भागुरि : ॥ हण्डाहञ्जाहलाशब्दाः क्षय : सम्बोधनार्थका : ॥ पाश्विशेषे ॥

हण्डिका । स्त्री॰ हाण्डी॰इतिप्र॰मृत्पात्रे । उखायाम् ॥

हण्डिकासुत : । पुं॰ कृपणे । कोटीहांडी॰हू॰भा॰ ॥ इतिचिकाण्डशेष : ॥

हण्डी । स्त्री॰ हण्डिकायाम् ॥

हण्डे । अ॰ नाट्योक्त्यानीचाप्रत्याह्वाने ॥ हिण्डते । हिडिगत्यनादरयो : । बाहुलकादिप्रत्यय : इतोऽकारश ॥

हत : । त्रि॰ हननक्रियाकर्मभूते । नष्टे । प्रमापिते ॥ आशारहिते । भग्नमनसि । मनोहते । प्रतिहते । प्रतिबद्धे ॥ आहते । गुणिते । ताडिते ॥ हन्यतेस्म । हन॰ । क्त : ।

हतक : । पुं॰ नीचलोके ॥

हताश : । त्रि॰ निर्दये ॥ आशारहिते ॥ पिशुने ॥ हताआशायस्मात्॰

इत्यादिविग्रह : ॥ वन्ध्ये ॥

हति : । स्त्री॰ अपकर्षे ॥

हतौजा : । त्रि॰ निस्तेजस्के ॥

हनु : । पुं॰ व्याधौ ॥ शस्त्रे ॥ हस्ति॰ओहारमन्त्रांशे । हन॰ । कृहनिभ्यांक्तुः । अमुनासिकोपदेशेत्यादिनाऽनुनासिकलोप : ॥ हन्तरि ॥

हत्या । स्त्री॰ हनने । वधे ॥

हथ : । त्रि॰ विषमे ॥ हन्ति । हन॰ । हनिकुषिनीरमिकाशिभ्य : क्थन् । ॥

हन : । त्रि॰ हननकर्तरि ।

हननम् । न॰ प्राणवियोगफलकव्यापारे । वधे ॥ मरणे ॥

हनु : । स्त्री॰ हट्टविलासिन्याम् ॥ मृत्यौ ॥ अस्त्रे । गदे ॥ अनुगदे । रक्तरोगे ॥ हरिद्रायाम् ॥ नखौषधौ । नृत्यारम्भे ॥ आयुधे ॥ पुं॰स्त्री॰कपोलावयवे । कपोलाधोभागे ॥ हन्ति । हन॰ शृस्वृस्निहीत्यु : ।

हनुग्रह : । पुं॰ हनुस्तम्भाख्येवातव्याधौ ॥

हनुमान् । पुं॰ वायुजे । हनुमति । आञ्जनेये । योगचरे । रामदूते । महावीरे ॥ अतिशयितोहनुर्विद्यतेऽस्य । अतिशायनेमतुप् ॥

हनुस्तम्भ : । पुं॰ अनुग्रहे ।

हनू : । स्त्री॰ हनुशब्दार्थे ॥ इत्यम

रटीकायांभरत : ॥

हनूमान् । पुं॰ । वातात्मजे । महावीरे ॥ यथा । जयत्यतिबलोरामो लक्ष्मणश्चमहाबल : । राजाजयति सुग्रीवोराघवेणाभिपालित: ॥ दासोऽहंकोशलेन्द्रस्यरामस्याक्लिष्टकर्मण: । हनूमान्शत्रुसैन्यानांनिहन्तामारुतात्मज : ॥ नरावणसहस्रंमेयुद्धे प्रतिबलंभवेत् । शिलाभिस्तुप्रहरत : पादपैश्चसहस्रश : ॥ अर्दयित्वापुरींलङ्कामभिवाद्यचमैथिलीम् । समृद्धार्थोगमिष्यामिमिषतांसर्वरक्षसामिति ॥ अतिशयितोहनुरस्त्यस्य । अतिशायनेमतुप् । अन्येषामपिदृश्यतइतिपाक्षिकोदीर्घ : ॥ शरादीनाञ्चेतिदीर्घइति रघुव्याख्यानेमल्लिनाथ : ॥

हनूष : । पुं॰ राक्षसे । हन्ति॰ । हम॰ । कटहनिभ्यामूषन् ॥

हन्त । अ॰ वाक्यारम्भे । खेदे । शोके । यथा । कालेनच्छायतेनाना कार्यै : संसारसम्भवै : । सुखदु : खैर्जनोहन्तनवेत्तिहितमात्मनइति । विषादे । अवसादे ॥ हर्षे ॥ सम्भ्रमे ॥ यद्यर्थे ॥ दाने ॥ अनुकम्पायाम् ॥ निश्चये ॥ प्रसादे ॥ अनुमतौ । इदानीमर्थे ॥ हन्ति । हन॰ । बाहुलकात : ॥ आर्त्तौ । वादे । अल्पकल्पने ॥

हन्तकार : पुं॰ अतिथयेदानार्थंबीजग्रासेषु ॥ यथा । भिक्षाश्चग्रासमात्रस्यात्पुष्कलंस्याच्चतुर्गुणम् । ग्रासप्रमाणभिक्षाकादर्शग्रासचतुष्टयम् ॥ अग्रंचतुर्गुणंप्राहुर्हन्तकारंद्विजोत्तमा : भोजनंहन्तकारश्चाग्र्यंभिक्षामथापिवा : अदत्वातुनभोक्तव्यंयथाविभवमात्मन इति । हन्तशब्दे । इतिमार्कण्डेयमदालसोपाख्यानम् ॥

हन्ता । त्रि॰ हननक्रियाकर्त्तरि । जघ्नौ । घातके । हन्ति । हन्॰ । तृच् ॥

हन्न : त्रि॰ कृतपुरीषोत्सर्गे । गूने ॥ हदधातोस्त । हदपुरीषोत्सर्गे । क्त : ॥

हन्यमान : । त्रि॰ ताड्यमाने ॥

हपुषा । स्त्री॰ हबुषायाम् ॥

हबुषा । स्त्री॰ हपुषायाम् । हीहवेर॰ हू॰ हाउबेर॰ हू॰ अप्रसिद्धफलविशेषे । तच्चफलंद्विविधम् । मत्स्यसदृशंविस्रगन्धंप्रथमम् । अश्वत्थफलसदृशंमत्स्यगन्धमपरम् । गुणायथा । हबुषादीपनीतिक्ताकटूष्णातुवरागुरु : । पित्तोदरसमीराशोंग्रहणीगुल्मशूलहृत् । परापितद्गुणाप्रोक्ता रूपभेदेहयोरपि ॥

हम् । अ॰ रुषोक्तौ । रोषभाषणे ॥ अनुनये ॥ अनुशये । प्रश्ने । असूयायाम् ॥ स्मृतौ । अपाकृतौ ॥

हम्बा । स्त्री॰ हम्भायाम् ॥

हम्भा । स्त्री॰ गोध्वनौ । रम्भायाम् ॥

हय: । पुं॰ घोटके । तुरगे । अश्वे । वाजिनि ॥ तत्र सम्प्रशिक्षिता लक्ष्मीः सन्नियचोत्तमा हयाः । हयति । हयगतौ । अच् ॥ हिमेतिमा । अच् ॥ शरीररथसंकर्षणादिन्द्रियेषु ॥ धनूरामौ ॥

हयकातरा । )
हयकातरिका । ) स्त्री॰ अश्वकातरायाम् ॥ यथा । कातराहयपर्यायैः कातरान्ताः प्रकीर्त्तिताः । अश्वकातरिका तिक्ता वातघ्नी दीपनी परा ॥ इ॰ रा॰ नि॰ वर्ग: ॥

हयगन्धम् । न॰ काचलवणे ॥

हयगन्धा । स्त्री॰ अश्वगन्धायाम् ॥ अजमोदायाम् ॥

हयग्रीव: । पुं॰ वेदोद्धारार्थं विष्णोरवतारविशेषे । असुरभेदे ।

हयग्रीवहा । पुं॰ विष्णौ ॥

हयद्विष: । पुं॰ मातङ्गे ॥

हयद्वीप: । पुं॰ लङ्कादिद्वीपवत् समुद्रान्तर्वर्त्ति द्वीपविशेषे ॥

हयनम् । न॰ पुरुषस्कन्धवाह्ये दोलाख्ये यानविशेषे । कर्णीरथे ॥ हयगतौ । ल्युट् ॥

हयपुच्छी । स्त्री॰ माषपर्णी ओषधौ ॥ हयपुच्छमिव पर्णान्यस्याः । गौरादि: ॥

हयप्रिय: । पुं॰ यवे ॥ इति हेमचन्द्र: ॥

हयप्रिया । स्त्री॰ अश्वगन्धायाम् ॥ खर्ज्जूर्य्याम् ॥ इति राजनिर्घण्ट: ॥

हयमार: । पुं॰ करवीरे ॥

हयमारक: । पुं॰ करवीरे ॥ हयानां मारक: ॥

हयमारण: । पुं॰ अश्वत्थवृक्षे ॥

हयवाहन: । पुं॰ सूर्यपुत्रे । रेवन्ते ॥ त्रि॰ हयारोहे ॥ हयो वाहनमस्य ॥

हयवाहनशङ्कर: । पुं॰ रक्तकाञ्चने ॥

हयशाला । स्त्री॰ मन्दुरायाम् । अश्वालये ॥

हयशीर्ष: । पुं॰ विष्णौ ॥

हया । स्त्री॰ अश्वगन्धायां ।

हयाध्यक्ष: । पुं॰ अश्वाध्यक्षे ॥ सलक्षणज्ञस्तु । हयशिक्षाविधानज्ञस्तच्चिकित्सितपारग: । अश्वाध्यक्षो महीभर्त्तु: स्वासनश्च प्रशस्यते ॥

हयानन्द: । पुं॰ मुद्गे ॥

हयायुर्वेद: । पुं॰ अश्वचिकित्साशास्त्रे ॥

हयारि: । पुं॰ करवीरे ॥ महिषे ॥

हयाशना । स्त्री॰ शल्लकीवृक्षे ॥

हयाह्वया । स्त्री॰ अश्वगन्धायाम् ॥

हयी । स्त्री॰ वाम्याम् । अश्वायाम् । वडवायां । घोटी॰ इ॰ भा॰ प्र॰ ।

स्त्रीविषयादिस्थल० ये।पथप्रतिषि धेगवयहयमुक्तवमनुष्यमल्यानाम प्रतिषिधव्रुतिङीष्॥
हयेष्ट:। पुं० यवे॥
हयोत्तम:। पुं० कुलीनाश्वे। घा आनेये। वाताश्वे॥
हर:। पुं० स्मरहरे। शम्भौ। शङ्करे। हरतिसहेतुकंसंसारदु:खम्। हृञ्हरणे। पचाद्यच्॥ वैश्वानरे॥ वानरयूथपतिविशेषे॥ चि० नाशके॥
हरगौरी। स्त्री० अर्द्धनारीश्वरमूर्त्तौ॥
हरचूडामणि:। पुं० चन्द्रे॥ शिवशिरोरत्ने॥
हरणम्। न० सुदाये। यौतकादीनां द्रव्ये। यौतकादिधने॥ दोर्ष्णि। भुजे। हृतौ॥ भोज्याङ्काङ्गाजकाङ्क्षाराभागहरणे॥ क्रियते। हृञ्हरणे। कर्मणिल्युट्॥ हरणम्० प्रापणम्स्वीकार: स्तेयंनाशनञ्चेतिवैयाकरणा:। उदाहरणानिचैते। भारंहरति० प्रापयति। अंशंहरति० स्वीकरोति। स्वर्णंहरति० चोरयति। पापंहरति० नाशयतीति:
हरतेज:। न० पारदे॥
हरवल्लभा। स्त्री० पार्वत्याम्॥
हररूप:। पुं० महेश्वरे। शिवे॥

जातिद्र० अ० र० को०॥
हरबीजम्। न० पारदे॥
हरशेखरा। स्त्री० गङ्गायाम्॥
हराक्षम्। न० रुद्राक्षे॥
हराद्रि:। पुं० कैलासे॥
हरि:। पुं० ब्रह्मणि। भूम्नि। परे॥ ब्रह्मदातरिश्रीगुरौ॥ हरत्यविद्यामात्मज्ञानप्रदानेनेतिनिरुक्ते:। विष्णौ; नारायणे॥ यथा। हरास्यघंहिस्मृतोपांहविभीतंक्रतुप्वहम्। वर्णंश्चमीहरिर्त्रेष्ट स्तस्माद्धरिरहंस्मृत:। हरति। हृञ्०। अचद्र:। हृपिषीष्यादिनेत्वा॥ चन्द्रे॥ अर्के। भानौ। यमे॥ अनिले। वाते॥ इन्द्रे॥ सिंहे। अंशौ। अश्वे। वाजिनि। शुके। अहौ। सर्पे॥ कपौ। वानरे। भेके॥ हरे। शिवे। अजे। परमेष्ठिनि। लोकान्तरे। वर्षविशेषे। मयूरे॥ कोकिले। हंसे॥ अग्नौ। भर्तृहरौ। त्रि० कपिलवर्णे। पिङ्गे। हरिद्वर्णे॥ पीतवर्णे॥
श्रीकृष्णरूपगुणवर्णनयास्वर्गवेधाधिकारइहचेद्दलमन्यशास्त्रै:। तत्प्रेमभावबलभक्तिविलासनामहासेषुचेद्यदिरति: किमुकामिनीभि:। तंचेतसाविभजतांव्रजबालकेन्द्रंवृन्दावनक्षितितलंयमुना

अलङ्ग । तल्लोकनाथपदपङ्कजधूलि
भिर्विलिप्तं वपु: किलद्वयाऽगुरुच
न्दनाद्यै: ॥ इति पाद्मे पातालख
ण्डे १२ ऽध्याय: ॥
हरिक: । पुं॰ पीतहरितवर्णाश्वे ।
। हालके ॥
हरिकेलीया: । पुं॰ भू॰ वङ्गदेशेषु ॥
त्रि॰ तद्देशस्थे ॥
हरिकेश: । पुं॰ शिवे ॥ शिवभक्तेय
क्षविशेषे ॥
हरिकान्त: । पुं॰ अश्वे ॥ इ॰ का
ण्डविशेष: ॥
हरिक्रांता । स्त्री॰ विष्णुक्रान्तायाम् ॥
हरिक्षेत्रम् । न॰ हरिहरक्षेत्रे । पुल
हाश्रमे । इदहरिक्षेत्र॰इ॰भा॰प्र॰ ॥
हरिगन्धनम् । न॰ हरिचन्दने ॥
हरिगीतम् । न॰ मात्रावृत्तप्रभेदे ॥
तल्लक्षणन्तु । इन्द्रासनं प्रथमं विस
र्ज्जयतदनुसन्तनुषट्कलम्॰ इह त
दनुपञ्चकलद्वयंकिलकुरुविरामेकु
ण्डलम् । अष्टाधिकामिहविंशतिं
चकला: कलावतिसुन्दरं॰ हरि
गीतमितिहरिगीतकंवरवृत्तमतिर
समन्दिरम् ॥ यथा । सखिवन्यमौ
मियतोभृशंजगदेवशून्यमवेच्यते-
परिभिद्यतेममहृदयममनर्ममसम्प्र
तिवोच्यते । परिहीयतेवपुराभृ
शं नलिनीवहिमकरसङ्गता॰ कद
तोपरंवदतीतिसासुदतीरतोद्यवश

हृता ॥
हरिगृहं । न॰ एकचक्रे । शुंभपुर्य्याम्
। हरिमंदिरे
हरिचक्रम् । न॰ सुदर्शने ॥ सिद्धौषि ॥
हरिचन्दनम् । न॰ गोशीर्षे । तैलप
र्णिके ॥ अस्यगुणायथा । हरिचन्द
नन्तुदिव्यंहिमंतद्दिव्ययुक्तंमनुजै:
। पित्ताटोपविलोपिचमध्ञ्जममशो
थमान्द्यमेदोहृद्दति ॥ पारिभाषि
कहरिचन्दनन्तु । घृष्टस्तुलसीका
ष्ठंकर्पूरागुरुयोगत: । अथवाकेश
रैर्युक्तंहरिचन्दनमुच्यते ॥ ज्योत्
स्नायाम् ॥ कुङ्कुमे ॥ अतिशीतैपी
तचन्दने ॥ कान्तौ ॥ पद्मकेशरे
॥ पुं॰ न॰ सुरतरुविशेषे ॥ चन्द
यति॰ आह्लादयति । चदिआह्लाद
ने । ल्युः । हरेश्चन्दनोहरिचन्दन: ॥ हरेरि
न्द्रस्यचन्दनम् । हरि: कपिलवर्णं
चन्दनंवा ॥
हरिण: । पुं॰ सारङ्गे ॥ अस्यपर्याया:
। मृगेकुरङ्गवातायुहरिणाजिनयोन
यइति । ताम्रवर्णीयम् ॥ अस्यमां
सगुणायथा । हरिण: शीतलोबद्ध
विण्मूत्रोदीपनोलघु: । रसेपाकेच
मधुर: सुगन्धि: सान्निपातहृदिति ॥
त्रि॰ विशदे । पाण्डुवर्णवति । ध
वले ॥ हरतिमन: ॰ ह्रियतेगीतेनवा
। हृञ्॰ श्यास्त्याहृञविभ्यइनच् ।

हरिणलक्ष्मः । पुं० विधौ । मृगाङ्के शशाङ्के ॥

हरिणप्लुता । स्त्री० अर्द्धसमवृत्तप्रभेदे ॥ विषमे सगणत्रितयं लगौ यदि समेन गणौ भगणौ परः । यथा चन्द्रमसो ... दिता कलिकुलेरमला हरिणप्लुता ॥

हरिणहृदयः । त्रि० भीरौ ॥

हरिणाक्षी । स्त्री० रमण्याम् । मृगलोचनायाम् । हरिणशिशुसलीलामलस्वदृश्ये ॥

हरिणाङ्कः । पुं० चन्द्रे । शशिनि ॥

हरिणी । स्त्री० मृग्याम् । एण्याम् ॥ हरिणस्त्री । पुंयोगादिति ङीष् ॥ हरितायाम् ॥ वर्णादनुदात्तादिति ङीब्नौ ॥ नारीभेदे । चारुर्यात्रिति ॥ सुवर्णप्रतिमायाम् स्वर्णयूथ्याम् ॥ मञ्जिष्ठायाम् ॥ सुवर्णयायाम् ॥ अत्यष्टिच्छन्दः १७ प्रभेदे । तल्लक्षणं यथा । नसमरसलागः षड्भिर्वेदैर्हयैर्हरिणीमता । यथा । स्ववतिहरिणीनृसौमनीसलीगीरमात्युषिविटपैरिसि ॥ यथा । व्यथितमनसिधिर्नष्टं नीरस्नाग्नु- हरिणीगणात् । तजम्मृगशावकोमलकोलसमयगत्रियाम् । मदय मनिशं दूर्वाश्यामिमं रोचिकालवकेव्य किरद्धिकोचकाकाङ्क्षीविलोल- विलोचनम् ॥

हरित् । पुं० अश्वविशेषे । नीलपीतमिश्रितवर्णे । पालाशे । हरिते । हरावृतिभावाप्रसिद्धे ॥ मृद्गे ॥ स्त्री० दिशि । हरिद्रायाम् । पुं० न० तृणे ॥ त्रि० हरिद्वर्णविशिष्टे ॥ हरति० हरन्ति विनयश्च्यन याचा । हृञ्० । हस्तरुहियुषिभ्यद्भुतिरितीति : ॥

हरितः । पुं० हरिद्वर्णे । पालाशे । हरा० वृ० भा० प्र० ॥ मन्यामनीतृणे ॥ न० स्योनाकवृक्षे । त्रि० हरिद्वर्णयुक्ते ॥ हरति । हृञ्०ह श्याभ्यामितन्निततीतन् ॥

हरितकम् । न० शाके ॥ शिग्रौ ॥ हरितोवर्णोऽस्यास्ति । अर्शआद्यच् । स्वार्थे कन् ॥ हरति । क्रियतेवा । हृञ्० । हृश्याभ्यामितन् । कन् ।

हरितपत्रिका । स्त्री० पाठ्याम् ॥

हरितशाकः । पुं० शिग्रौ ॥

हरिता । स्त्री० दूर्वायाम् । अयमस्याम् । आप्तो० वृ० प्र० पुष्पवर्णे ॥ हरिद्रायाम् ॥ पाठ्याम् ॥ कपिलद्राक्षायाम् ॥ नीलदूर्वायाम् ॥ वर्णादनुदात्तात्तोपधात्तो न इति पक्षे ङीप् नकारादेशयोरभावः ॥

हरितालम् । न० धातुविशेषे । पिञ्जरे । पीतके । तालि । चालि । हरितालके । तत्तु हरेर्वीर्यम् ।

यथोक्तम् । हरितालं हरेर्वीर्य्यं लक्ष्मीवीर्य्यं मनःशिला । पारदं शिववीर्य्यञ्च गन्धकं पार्वतीरजः ॥ इति ॥ तन्निरूपणं यथा । हरितालं द्विधा प्रोक्तं पत्राख्यं पिण्डसंज्ञकम् । तयोराद्यं गुणैः श्रेष्ठं ततो हीनगुणं परम् । स्वर्णवर्णं गुरु स्निग्धं सपत्रञ्चाभ्रपत्रवत् । पत्राख्यं तालकं विद्याद्गुणाढ्यं तद्रसायनम् । निष्पत्रं पिण्डसदृशं स्वल्पसत्त्वं तथा गुरु । स्त्रीपुष्पहारकं स्वल्पगुणं तत्पिण्डतालकम् ॥ हरितालं कटु स्निग्धं कषायोष्णं हरेद्विषम् । कण्डूकुष्ठाऽऽस्यरोगास्रकफपित्तकचव्रणान् ॥ हरति च हरितालं चारुतां देहजातां सृजति च बहुतापानङ्गसङ्कोचपीडाम् । वितरति कफवातौ कुष्ठरोगं विदध्यादिदमशितमशुद्धं मारितञ्चाप्यसम्यक् ॥ अशुद्धस्य दोषमाह । अशुद्धं तालमायुर्घ्नं कफमारुतमेहकृत् । तापस्फोटाङ्गसङ्कोचान् कुरुते तेन शोधयेत् ॥ अथास्य शोधनविधिः ॥ तालकं कणशः कृत्वा तच्चूर्णं काञ्जिके क्षिपेत् । दोलायन्त्रेण यामैकं ततः कूष्माण्डजे रसे ॥ तिलतैले पचेद्यामं यामञ्च त्रिफलारसे । दोलायन्त्रे चतुर्यामं पक्वं शुद्ध्यति तालकम् । अथ मारणम् । सद

लं तालकं शुद्धं पौनर्नवरसे मृदु । खल्वे विमर्द्दयेदेकं दिनं पश्चाद्विशोषयेत् ॥ संशोष्य गोलकं तस्य कुर्य्यात्तच्च विशोषयेत् । ततः पुनर्नवाक्षारैः स्थाल्या अर्द्धं प्रपूरयेत् ॥ तत्र तद्गोलकं धृत्वा पुनस्तेनैव पूरयेत् । आकण्ठं पिठरं तस्याः पिधानं धारयेन्मुखे ॥ स्थालीं चुल्ल्यां समारोप्य क्रमाद्वह्निं विवर्द्धयेत् । दिनान्यन्तरशून्यानि पञ्च वह्निं प्रदीपयेत् ॥ एवं तत् म्रियते तालं मात्रा तस्यैव रक्तिका । अनुपानान्यनेकानि यथायोग्यं प्रयोजयेत् ॥ इति । तालकं हरते रोगान् कुष्ठमृत्युज्वरापहम् । शोधितं कुरुते कान्तिं वीर्य्यवृद्धिं तथायुषः ॥ हरितं वर्णं आलाति । ला आदाने । आतोऽनुपसर्गे कः ॥

हरितालः, पुं० पीतवर्णपक्षिविशेषः । हरियाल० इ० गौ० भा० प्र० ॥ तन्मांसगुणा यथा । हरितालोऽल्पविट्कः स्यात् कषायो मधुरो लघुः । रक्तपित्तप्रशमनस्तृषाग्नि वातशोपहः ॥

हरितालकम्, न० हरितालम् । स्वार्थे कः ॥

हरितालिका, स्त्री० हरिताल्याम् । भाद्रशुक्लचतुर्थ्याम् । दूर्वायाम् ॥

हरिताली, स्त्री० दूर्वायाम् ॥ आकाशरेखायाम् ॥ खड्गलतायाम् ।

स्वर्वेश्यायाम् ॥ भाद्रशुक्लचतुर्थ्याम् । यथा । भाद्रे मासि सिते पक्षे हस्तर्क्षसंयुता । हरितालीचतुर्थी स्याच्छर्वाणीप्रीतिदा सदा ॥ भाद्रे मासि सिते पक्षे चतुर्थ्यामभियोगतः । ददाति किल्विषघोरंहस्तनक्षत्रसंश्रयः ॥ कश्चित्तामलचर्षघ्नहरीस्त्वर्ये चतुर्थिका । हरितालीसमाख्याता रुद्राणीप्रीतिदा सदा ॥

हरिताश्मम् । न० तुत्थे । नीलाश्मनि ॥

हरिताश्म । न० तुत्थे ॥ पुष्परागे ॥

हरितोषणम् । न० भगवत्प्रीतिकरे सर्वभूतदयालक्षणे कर्म्मविशेषे ॥ हरेराराधने ॥ हरेस्तोषणं येन ॥

हरित्पर्णम् । न० मूलके ॥

हरिद्गर्भः । पुं० हरित्कुशे ॥ मरुवके ॥

हरिदश्वः । पुं० रवौ । सूर्ये ॥ हरिन्ति शीघ्रंगमत्व्यदेशं प्रापयन्तीति हरितो हरिद्वर्णा अश्वाः यस्य सः ॥ अर्कवृक्षे ॥

हरिदास : । त्रि० भगवद्भक्ते ॥

हरिदेव : । पुं० श्रवणर्क्षे ॥ हरिर्देवोऽस्य सः ॥

हरिद्रव : । पुं० नागकेसरचूर्णे ॥

हरिद्रा । स्त्री० निशाख्यायाम् । काञ्चन्याम् । पीतायाम् । वरवर्णिन्याम् । हलदी० इ० भा० प्र० ॥ अस्या गुणास्तु । हरिद्रा कटुका तिक्ता रूक्षोष्णा कफपित्तनुत् । वर्ण्या त्वग्दोषमेहास्रशोथपाण्डुव्रणापहा ॥ विम्नगन्धिहरद्राज्या सा शीता वातला मता । पित्तघ्नमधुरा तिक्ता सर्वकण्डूविनाशिनीति ॥ हरिद्रवर्णं विशेषं द्राति । द्राकुत्सायां गतौ । आतोनुपेतिकः । हरिद्रुघ्नेवा । हरितं द्रवति वा । द्रुगतौ । अन्येभ्योपीतिडः ॥ हरिं रतं राति वा ॥ टाप् ॥

हरिद्राङ्ग : । पुं० हरितालपक्षिणि ॥ हरिद्राङ्गमस्य ॥

हरिद्राभ : । पुं० पीतवर्णे । गौरे ॥ असनवृक्षे ॥ कर्पूरे ॥ त्रि० पीतवर्णवति ॥ हरिद्रेवाभादीप्तिरस्य ॥

हरिद्राराग : । त्रि० अस्थिरस्नेहे । चलसौहृदे ॥ हरिद्रारागइव रागोस्य । हरिद्रारागश्चाचिरस्थायिस्थात्तथेतितावत् । यथा । क्षणमोनुरागोऽत्र हरिद्रारागवच्च्युतः कृतिहस्तायुध : ॥

हरिद्रु : । पुं० द्रुमे । वृक्षे ॥ दारुहरिद्रायाम् ॥ वृक्षविशेषे । पीतदारुणि । पीतकाष्ठे । हलदुवा० इ० भा० प्र० ॥ हरित्पिंग० पीतोमाद्रुरस्य ॥ यद्वाहरिभिर्द्रूयते । द्रुगतौ । हरिमितयोर्द्रुव

हृतिकु : ॥

हरिद्वारम् । न० तीर्थविशेषे । गङ्गा द्वारे । मायापुर्याम् ॥

हरिनामा । पुं० मुद्गे ॥

हरिनाम । न० श्रीहरेराख्याने ॥

हरिनेत्रम् । न० श्रीहरेश्चक्षुसि ॥ श्वेतपद्मे ॥

हरिनेत्र : । पुं० पेचके । घूके ॥

हरिन्मणि : । पुं० गारुत्मते । मरकतमणौ ॥ हरिद्वर्णमणि : । आकपार्थिवादि : ॥

हरिन्मुद्ग : । पुं० आरण्यमुद्गे ॥

हरिपदम् । न० विष्णुचरणे ॥ रवे : सङ्क्रान्तिविशेषे ॥ यथा । दास्विसङ्क्रमतो ऽर्कस्य मे भवेद्धरिपदमिति । २ । ५ । ८ । ११ ॥

हरिपर्णम् । न० मूलके ॥

हरिप्रस्थ : । पुं० इन्द्रप्रस्थे ॥

हरिप्रिय : । पुं० कदम्बवृक्षे ॥ विष्णुकन्दे ॥ पीतभृङ्गराजे ॥ बन्धूके ॥ शङ्खे ॥ करवीरे ॥ न० उशीरे ॥ कृष्णचन्दने । कालीयके ॥

हरिप्रिया । स्त्री० लक्ष्म्याम् । पद्मालयायाम् ॥ हरे : प्रिया ॥ तुलस्याम् ॥ तत्पर्य्याये ॥ गङ्गादिष्वपि ॥ यथा । गङ्गासरस्वतीलक्ष्मीश्चैतास्तिस्र : प्रिया हरे : । तुलसीसहिता यस्तास्तत : कीर्त्तिता : शुभा भूतिदेवी भागवतम् ॥

हरिबालुकम् । न० एलवालुके । ऐलेये ॥ हरिवर्णबालुकम् ॥ पुं० हारीतपक्षिणि ॥

हरिभक्त : । पुं० हरिसेवके ॥ तल्लक्षणं यथा । सर्वजीवेषु यो विष्णुं भावयेत् समताधिया । हरौ करोति भक्तिं स हरिभक्त : स उच्यते : ॥

हरिभद्रम् । न० हरिबालुके ॥

हरिभुक् । पुं० मयूरे ॥ सर्पे ॥

हरिमा । पुं० काले ॥ हरति । हृञ् ० । हृभृधृसृस्तृशृभ्य इमनिच् ॥

हरिमन्थ : । पुं० अग्निमन्थे । गणिकारिकायाम् ॥ चणके ॥ हरिमिर्मथ्यते । मन्थ विलोडने ॥ कर्मणि घञ् ॥

हरिमन्थक : । पुं० चणके ॥ स्वार्थे क : ॥

हरिमन्थज : । पुं० ० चणके ॥ हरौ मन्थं जनयति । जनी० अन्येष्वपि डः ॥

हरिमन्दिरम् । न० विष्णोरायतने । तिलकविशेषे ॥ यथा । तिलकम् ऊर्द्ध्वपुण्ड्रस्य मध्ये छिद्रं दिनारद । यदि कुर्य्यात्ललाटे तद्‌विद्धि तं हरिमन्दिरम् ॥ हरे : सर्वावताराणां मत्स्यादीनां विशेषत : । उपासनां तिलकं कीर्त्तं हरिमन्दिरमिति पद्मपुराणम् ॥ अपि च । नासिकाया त्रिभागेको भागो मानमयो भवेत् । भ्रुवोर्मध्य

दृश : स्यामं मूलमन्दुमंनोषिपः : इति ॥

हरिय : । पुं॰ पीतवर्णहये ॥

हरिलोचन : । पुं॰ तिर्यग्यने । कुलीरे ॥

हरिवंश । पुं॰ महाभारतीयपर्वविशेषे ॥ श्रीकृष्णान्वये ॥

हरिवाण् । पुं॰ इन्द्रे । त्रि॰ हरिविशिष्टे ।

हरिवर्षम् । न॰ निषधहेमकूटयोर्मध्यवर्त्तमानेवर्षविशेषे ॥ यथा । निषधाद्धरिवर्षं यद्यास्त्वतोहेमकूटत इति ॥ अपिच । दक्षिणे नैलाव्रतं निषधोहेमकूटोहिमालयइतिप्रागायताः यथानीलादयोऽयुतयोजनोत्सेधा हरिवर्षकिम्पुरुषभारतानांयथा सङ्ख्यमितिश्रीभागवतम् ॥

हरिवल्लभा । स्त्री॰ लक्ष्म्याम् ॥ तुलस्याम् । जयायाम् ॥

हरिवासर : । पुं॰ न॰ द्वादश्याःप्रथमे पादे ॥ यथा। द्वादश्याः प्रथमः पादोहरिवासरसंज्ञकः । तमतिक्रम्यकुर्वीतपारणं विष्णुतत्परः॰ इति ॥ इतिविष्णुधर्मोत्तरसंहिता ॥

हरिवाहन : । पुं॰ गरुडे ॥

हरिविक्रम : । पुं॰ हरे: पराक्रमे ॥ योपिदेवपदंसमुच्छ्रितमायतेह हरिविक्रमःइत्यत्रतिचितिन्नि॰

शेषे ।

हरिबीजम् । न॰ हरिताले ॥

हरिवर्षम् । न॰ हरिवर्षे ॥

हरिशयनम् । न॰ हरेर्निद्रायाम् ॥ तच्चाषाढशुक्लैकादश्यांप्रसिद्धम् ॥

हरिश्चन्द्र : । पुं॰ नृपतिविशेषे । शताचोभक्तो । शिवलुङ्गो ॥ कषिविशेषे ॥ प्रस्कण्वश्चहरिश्चन्द्राश्चपोइति साधु : ॥ चन्द्रिका देवीस्थानेतीर्थविशेषे ॥ इतिदेवीगीता । शुभेश्चरीहरिश्चन्द्रहुस्त्यागम : ॥

हरिश्चन्द्रपुरम् । न॰ शोभे । खपुरे । जङ्गमेपुरे । इरचन्द्रावलो॰ इ॰ भा॰ प्र॰ ॥

हरिषेण : । पुं॰ जिनचक्रवर्तिविशेषे । हरिसुते ॥ यथा । हरिषेणोहरिसुतोजयोविजयनन्दन : । अष्टमसूनुर्ब्रह्मदत्त : सर्वेचेक्ष्वाकुवंशजा : ॥ हरि . सेनायस्य । पतसंज्ञोया सगादिरिष : ॥

हरिसुत : । पुं॰ स्मरे । कामे । मीनकेतने ॥ हरिषेणे ॥

हरिहय : । पुं॰ इन्द्रे । अधिपती ॥ हरिर्हयोयस्य ॥ अश्वविशेषे ॥ यथा । स्वक्षीणकस्रोमात्रिसुग्रवाभाजियसतु । हरि : सवर्णतोऽश्वस्तु पीतकौषेयसप्रभइतिशालिहोत्र : ॥ सूर्ये ॥

हरिहरः । पुं॰ संयुक्तहरिहरमूर्त्ती ॥

प्रान्तपतत्पतङ्गपवनव्याधेलतापादपा
द्रुमच्छायावत्सुखमाकलय्य सकलं-
सन्तोषमात्तं यताः ॥ हरतिमनः
हृञ्० । अन्नादित्वात् ० मुटच् ॥

हर्यक्ष : । पुं० सिंहे ॥ हरिणी पिङ्गले अक्षिणी यस्य सः । बहुव्रीहौ सिषच् ॥ कुबेरे ॥

हर्यन्त : । पुं० वायौ ॥ अश्वे ॥ हर्यति । हर्य गतिकान्त्योः । भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच् ॥ हर्यन्तः सर्वैः स्पृहणीय इति वेदभाष्यम् ॥

हर्यश्व : । पुं० इन्द्रे । हरिहये ॥ इ० कश्चित् ॥

हर्ष : । पुं० मुदि । प्रीतौ । धर्मिणि । सुखे ॥ स्वस्त्रीप्रियतमेरोमासञ्जपातादिहेतुरानन्दाभिव्यञ्जकस्थिरव्यभिचारिविशेषो हर्ष इत्यर्थः ॥ हृषतुष्टौ ॥ घञ् ॥

हर्षक : । पुं० पर्वतविशेषे ॥ त्रि० हर्षकारके ॥

हर्षक्षय : । पुं० धातुक्षये ॥

हर्षण : । पुं० अक्षिरोगभेदे ॥ श्राद्धदेवे ॥ योगविशेषे ॥ तत्र जातस्य फलम् । सुचारुगात्रः स्फुटपद्मनेत्रः शास्त्रप्रयत्नैर्विनयोपपन्नः । प्रसूतिकाले यदि हर्षणः स्यादमर्षयोगे सजनः कदाचित् ॥ न० हर्षे ॥ त्रि० हर्षके । हर्षकारके ॥

हर्षमाण : । त्रि० विकुर्वाणे । प्रमनसि । हृष्टमानसे । हर्षति । हृषु अलीके । ताच्छील्ये चानश् ॥

हर्षयित्नु : । पुं० पुत्रे । सुते ॥ न० काञ्चने । स्वर्णे ॥ हर्षयति । हृष तुष्टौ । तनिहृषीतोत्नुच् । त्रि० हर्षणशीले ॥

हर्षस्वन : । पुं० किलकिलायाम् ॥ इ० त्रि० घोषः ॥

हर्षणी । स्त्री० विजयायाम् ॥

हर्षित : । त्रि० हृष्टे । सञ्जातहर्षे ॥ हृषु० । क्तः । हर्षः सञ्जातोऽस्य वा । इतच् ॥

हर्षुल : । पुं० मृगे ॥ कामिनि । कामुके ॥ हृष्यति । हृषतुष्टौ । हृषेरुलच् ॥

हलम् । न० लाङ्गले । गोदारणे । सीरे ॥ हलति । हलविलेखने । अच् ॥ अथ गोयोजने दोषादिः यथा । अष्टागवं धर्म्यहलं षड्गवं जीवितार्थिनाम् । चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनामिति आरीतः ॥

हलदण्ड : । पुं० ईषायाम् । हलयुगयोर्मध्यकाष्ठे ॥

हलद्दी । स्त्री० हरिद्रायाम् । इ० र० गट ॥

हलधर : । }
हलभृत् । } पुं० बलदेवे ॥ हालिके ॥

हलपद्धति : । स्त्री॰ लाङ्गलपद्धतौ । सीतायाम् । हलरेखायाम् । हलस्य पद्धति : ॥

हलप्रवाह : । पुं॰ सीरकर्षणे ॥

हलभूति । स्त्री॰ कृषिकर्मणि ॥

हलभृति : । पुं॰ मुनिविशेषे । उपवर्षे । कृषिकर्मणि ॥

हलराख्यम् । न॰ बाहुल्ये । कालपुष्पके । तरपट॰ द्रु॰ काश्मीरभाषाप्र॰ ॥

हलरेखा । स्त्री॰ सीतायाम् ॥ हलस्य रेखा ॥

हल: । अ॰ नाट्योक्त्या सख्याह्वाने ॥ समानाभिस्तथा सख्यो हलाभाष्य: परस्परमिति भरत: ॥ हल॰ । आ बहुलकाट्टाप्रत्यय : ॥

हला । स्त्री॰ सख्याम् ॥ पचाद्यजन्ताद्धलाट्टाप् ॥ मद्ये । जले ॥ भूमौ ॥

हलायुध : । पुं॰ बलदेवे ॥ हलमायुधं यस्य ॥ हलस्य बलभद्रस्य गमनाद्रागतं ज्वलद्दितिकरासन्ध युद्धे योगेविष्णुपुराणम् ॥

हलाह : । पुं॰ चित्रिताश्वे ॥

हलाहल : । पुं॰ ब्रह्मसर्पे ॥ हयभाले ॥ हरौ । बुद्धभेदे ॥ पुं॰ न॰ विषप्रभेदे ॥ हलतिजठरम् । हल॰ । अच् । नञ्मति॰ या हलतिवा । अच् । अहलम्॰ या हलंवा ।

तत : कर्मधारय : ॥ स्त्री॰ अङ्गनायाम् ॥ वृष्ट्याम् ॥

हलि : । पुं॰ महहले । विस्थायाम् । कृष्टसमीकरणार्थस्य फलकाष्ठे ॥

हली । पुं॰ बलभद्रे ॥ हलोऽस्त्यस्य । सुखादिभ्यश्चेतीनि : ॥ कर्षके ॥

हलिनी । स्त्री॰ लाङ्गलिकायाम् ॥ हलसमूहे ॥

हलिप्रिय : । पुं॰ कदम्बवृक्षे । हलिनो बलदेवस्य प्रिय:॰ सुराया अधिवासनत्वात् ॥

हलिप्रिया । स्त्री॰ सुरायाम् । मदिरायाम् ॥ हलिन : सङ्कर्षणस्य प्रिया ॥

हली । स्त्री॰ कलिकायाम् ॥

हलीन : । पुं॰ केतक्याम् । शाकवृक्षे ॥

हलीमक : । पुं॰ पाण्डुरोगप्रभेदे ॥ यदातुपाण्डोर्वर्ण : स्याद्धरितश्यावपीतक : । बलोत्साहक्षयस्तन्द्रामन्दाग्नित्वं मृदुज्वर : ॥ स्त्रीष्वहर्षोऽङ्गमर्दश्च श्वासतृष्णारुचिभ्रमा : । हलीमकं तदा तस्य विद्याद्निलपित्ततस्तिमावमिश्र : ॥ पाण्डो : पाण्डुरोगिण : ॥

हलीषा । स्त्री॰ लाङ्गलदण्डे ॥

हल्यम् । त्रि॰ हलकृष्टक्षेत्रे । कृष्टे ॥ हलेनकृष्टम्॰ हलस्य कर्ष : । मतवनहलादितियत् ॥

हल्या । स्त्री॰ हलसमूहे ॥ हलानां समूहः । पाशादिभ्योयः ।
हल्लकम् । न॰ रक्तसंध्यके । रक्तसौ धीतिख्याते । हेला॰ इ॰ गौ॰ भा॰ प्र॰ पुष्पे ॥ रक्तवर्णविकाल विकाशिपुष्पविशेषे॰ इत्यन्ये । ह लति । हलविकसने । ग्वुल् । य द्वा । हलनम् । सम्पदादित्वात् क्विप् । हल्लाति । लादाने । आतोनुपेतिकः । संज्ञायांकन् ॥
हल्लनम् । त्रि॰ प्रचलायिते । इ॰ ज॰ धरः ।
हल्लीषम् । न॰ गोपितांमण्डलीनृत्ये ॥ स्त्रीणांहल्लीषंसदनत्तनमितित्रि काण्डशेषः ।
हल्लीषकम् । न॰ स्त्रीणांमण्डलिका नृत्ये । मण्डलेनतुयन्नृत्यंस्त्रीणां हल्लीषकन्तुतदितिहेमचन्द्रः ॥ ए कस्यपुंसोबह्वीभिः स्त्रीभिः स ह्क्रीडने । तत्तुरासक्रीडा । य था । गोपीनांमण्डलीनृत्यवंधेहल्ली षकंविदुरितिकोषात् । तल्लक्षणं रासगोष्ठ्यांद्रष्टव्यम् ॥
हवः । पुं॰ आह्वायाम् । निदेशे ॥ आह्वाने । हुतौ ॥ अध्वरे । सप्तत न्तौ ॥ ह्वानम् । ह्वेञ्स्पर्द्धायांश ब्दे च । भवेऽनुपसर्गस्येत्यप्सम्प्र सारणञ्च ॥ हूयतेऽत्रेतिवा ॥ आ हवे॰ इतिवेदविदः । आहूयन्ते परस्परंयुद्धार्थंयोद्धारोऽत्र ॥
हवङ्गः । पुं॰ कांस्यपात्रेदधिमिश्रि तान्नभक्षणे । इतिकश्चित् ॥
हवनम् । न॰ होमे ॥
हवनायुः । पुं॰ अग्नौ ॥
हवनी । स्त्री॰ हवनकुण्डे ॥
हवनीयम् । त्रि॰ हविषि । होमीय द्रव्ये ॥ हूयते । हु॰ । अनीयर् ॥
हविर्धा । स्त्री॰ होमकुण्डे ॥
हविरशनः । पुं॰ अग्नौ ।
हविर्गन्धा । स्त्री॰ शम्यां ॥
हविर्गृहम् ) हविर्गेहम् ) न॰ यज्ञगृहे । हो त्रीये ॥
हविर्भुक् । पुं॰ अङ्गिरसः पुत्रेअङ्गि रसांपितरि ॥ अग्नौ ॥ हवींषि । भुङ्क्ते । भुज॰ । क्विप् ।
हविर्भूः । स्त्री॰ पुलस्त्यस्यपत्न्याम् ॥
हविर्मन्थः । पुं॰ अग्निमन्थे । श्री पर्णे ॥
हविष्कृत् । स्त्री॰ देवानामर्थायहविः सम्पादयतितस्याम् ॥
हविष्मत् । पुं॰ हविर्भुजि । त्रि॰ आज्यादिमति ॥ ध्यानभावनाव-ति ॥
हविष्यम् । न॰ हवनीये ॥ मोद्ग्यभेदे ॥ मुन्यन्नादिषु ॥ घृते ॥ हविर्षेहि तम् । उगवादिभ्योयत् ॥
हविष्यान्नम् । न॰ हविष्ये । व्रतादा

बर्हणीयद्रव्यविशेषे ॥ हविष्यव्रत दन्नस्य ॥

हवि : । न० होतव्यद्रव्ये । सान्नाय्ये । देवतोद्देशेनाग्नौ त्यज्यमानद्रव्ये । यागप्रवृत्तिप्रक्रियाया : साक्षात् कर्मकारके ॥ तद्द्विविधम् । पुरोडाशरूपमाज्यरूपञ्च ॥ घृते । सर्पिषि ॥ हविषां परिणामोऽयं यदेतदखिलं जगत् ॥ हूयते । हुदानादनयो : अर्चिशुचिहुसृपीत्यादिना इसि : ॥ मुन्यन्नानिपथ : सोमोमांसं यश्चानुपस्कृतम् । अक्षारलवणञ्चैव प्रकृत्या हविरुच्यत इति मनु : ॥

हवुषा । स्त्री० हपुषायाम् ॥

हवै । अ० हस्ताथस्मरणार्थौ निपातौ ॥ प्रसिद्धार्थावद्योतकौ वैदेनिपातौ ।

हव्यम् । न० दैवेऽन्ने । हवनीये । हूयन्ते प्रीयन्ते देवा येन० हूयते० प्रक्षिप्यते वा । हु० । अचो यत् । गुणावादेशौ ॥

हव्यपाक : । पुं० चरौ ॥ पच्यते । पचे : कर्मणि घञ् । हव्यञ्चतत्० पाकश्च यद्वा । भावे घञ् । पचनम्० पाक : । हव्यस्य पाक : ० पाकोऽधिकरणम् ॥

हव्यवाह : । पुं० अग्नौ ॥

हव्यवाहन : । पुं० अग्नौ ॥ हव्यं वहति । ल्युः ॥

हव्याश : ।
हव्याशन : । पुं० अग्नौ ॥
हव्येश : ।

हस : । पुं० हास्ये ॥ हसनम् । हसे हसने । स्वनहसोर्वा अप् ॥

हसत् । त्रि० हास्यं कुर्वति ॥ हसेर्लट : शतृ ॥

हसनम् । न० हास्ये ॥ हसे० । ल्युट् ॥

हसनी । स्त्री० अङ्गारधान्याम् ॥ हसति । हसे० । कृत्यल्युटो बहुलमिति ल्युट् । टिड्ढेति ङीप् ॥

हसनीमणि : । पुं० पर्पटीके । अग्नौ ।

हसन्तिका । स्त्री० हसन्त्याम् । अङ्गारधान्याम् ॥

हसन्ती । स्त्री० अङ्गारधान्याम् ॥ मल्लिकाप्रभेदे ॥ शाकिनीविशेषे ॥ हसति । हसे० । लट : शतृ । उगितश्चेति ङीप् । शप्श्यनोर्नित्यमिति नुम् ॥

हसितम् । न० अट्टहास्ये ॥ हास्ये ॥ त्रि० विकसिते । फुल्ले ॥ हसि० । नपुंसके भावे क्त : ॥

हस्त : । पुं० करे । पञ्चशाखे । शये । पाणौ । हाथ० इ० भा० प्र० ॥ करिकरे शुण्डायाम् । सूंड० इ० भा० प्र० ॥ मानभेदे । चतुर्विंशत्यङ्गुलमिते सप्रकोष्ठकरे ॥ यथा । यवानां तण्डुलैरेकमङ्गुलं चाष्टभिर्भवेत् । चतुर्विंशतिभिर्हस्त

चतुर्विंशद्भिरङ्गुलैरिति कालिकापुराणम् । ऋक्षभेदे । त्रयोदशर्क्षे । हस्तायाम् ॥ यथा । पुष्योहस्तोऽभि चमध्याश्विनमवश्वार्याहः सर्वदिग्द्वारकाणीति ॥ केशात्परोराशौ ॥ यथा केशहस्तः । कचसमूह इत्यर्थः । हसति॰ हस्यते वा । हसे॰ । हसिमृग्रिण्... इतन् ॥ त्रि॰ हस्तायांजाते ॥ श्रविष्ठाःफल्गुनीष्वर्णेलुक् । न॰ चर्मप्रसेविकायां ॥

हस्तधारणम् । न॰ परित्राणे ॥ प्राहन्तुमुद्यतस्य हस्तस्य धारणं रोधः । रक्षकस्य पृष्ठहस्तस्थापनं वा ॥ मुग्धबोधः ॥

हस्तपुच्छम् । न॰ कन्धुषि । कल्मषे । इत्यौज्ज्व॰ श॰ भा॰ प्र॰ ॥

हस्तवारणम् । न॰ परित्राणे । मारणोद्यतस्य निवारणे ॥ हस्ते न॰- हस्तस्य वा॰ वारणम् ॥ करेण निषेधे ॥

हस्तबिम्बम् । न॰ चन्दनादिना देहविलेपनविशेषे । स्थासके ॥

हस्तसिद्धिः । स्त्री॰ भृतौ । वेतने । हस्ताभ्यांसाध्या सिद्धिः ॥

हस्तसूत्रम् । न॰ करसूत्रे । कङ्कणे । इति विवाहप्रसिद्धे ॥

हस्ता । स्त्री॰ अश्विन्यादीत्रयोदशर्क्षे ॥ तत्रजातस्य फलं यथा । दातायश स्वीसुतरांमनस्वीभूदेवदेवार्चनतत्परः । प्रसूतिकाले किलयस्य हस्ता हस्तस्थितां तस्य समस्तसम्पत् ॥

हस्ताङ्गुलिः । स्त्री॰ करशाखायां ॥

हस्तामलकम् । न॰ करस्थामलकी फले ॥ करस्थितस्वच्छजले । वेदान्तार्थविशेषे । पुं॰ शङ्कराचार्यस्य शिष्यविशेषे ॥

हस्तावसेचनम् । न॰ उत्तरापोशाने ॥

हस्तास्त्रम् । न॰ प्रहरणे । हथियार इ॰ भा॰ प्र॰ ॥

हस्तिकन्दः । पुं॰ बृहत्कन्दविशेषे । कुष्ठहन्तरि॰ गजकन्दे ॥

हस्तिकन्दकः । पुं॰ हस्तिकन्दे । स्वार्थे कः ।

हस्तिकरञ्जः । पुं॰ महाकरञ्जे ॥

हस्तिकर्णः । पुं॰ उरुबूके । एरण्डे । रक्तैरण्डे । स्वनामख्यातेपलाशप्रभेदे ॥ हस्तिकर्णः परं वृष्यो मेधायुर्बलवर्द्धनः ॥ हस्तिकन्दे ॥ गणदेवताप्रभेदे ॥

हस्तिकर्णकः । ) पुं॰ हस्तिकर्ण
हस्तिकर्णदलः । )

विशेषपलाशे । किंशुके ।

हस्तिकारवी । स्त्री॰ अजमोदायां ।

हस्तिकोलिः । गोगघोगटाधाम् ॥

हस्तिगिरिः । पुं॰ काञ्चीदेशे ॥

हस्तिघोषा । स्त्री॰ कोशातकीप्रभेदे । महाकोशातक्याम् । तुनिया॰ घोषातोरञ्जी॰ इ॰ भा॰ ॥

हस्तिचारिणी । स्त्री॰ महाकरञ्जे ॥

हस्तिचेष्टितम् । न॰ गजेङ्गिते ॥ तद्यथा । तत्रादौ दन्तकल्पनविधानम् । दन्तस्य मूलपरिधिं द्विरायतं प्रोज्झ्य कल्पयेच्छेषम् । अधिकमनूपचराणां न्यूनं गिरिचारिणां किञ्चित् ॥ कल्पितदन्तस्य लक्षणन्तु । श्रीवत्सवर्द्धमानच्छत्रध्वजचामरानुरूपेषु । छेदे दृष्टेष्वारोग्यविजयधनवृद्धिसौख्यानि ॥ प्रहरणसदृशेषु जयो नन्द्यावर्ते प्रनष्टदेशाप्तिः । लोष्टे तु लब्धपूर्वस्य भवति देशस्य सम्प्राप्तिः ॥ स्त्रीरूपेऽस्वविनाशो भृङ्गारेऽभ्युत्थिते सुतोत्पत्तिः । कुम्भेन निधिप्राप्तिर्यात्राविघ्नं च दण्डेन ॥ ४ ॥ कृकलासकपिभुजङ्गेष्वसुभिक्षव्याधयो रिपुवशित्वम् । गृध्रोलूकध्वाङ्क्षश्येनाकारेषु जनमरकः ॥ ५ ॥ पाशेऽथवा कबन्धे नृपमृत्युर्जनविपत् स्रुते रक्ते । कृष्णे श्यावे रूक्षे दुर्गन्धे चाशुभं भवति ॥ शुभच्छेदलक्षणन्तु । शुक्लः समः सुगन्धिः स्निग्धश्च शुभावहो भवेच्छेदः । गलनम्लानफलानि च दन्तस्य समानि भङ्गेन । अथ शुभाशुभमाह । मूलमध्यदशनाग्रसंस्थिता देवदैत्यमनुजाः क्रमात्ततः । स्फीतमध्यपरिपेलवं फलं शीघ्रमध्यचिरकालसम्भवम् ॥ अथ विशेषफलमाह । दन्तभङ्गफलमत्र दक्षिणे भूपदेशबलविद्रवप्रदम् । वामतः सुतपुरोहितेभयान् हन्ति साटविकदारनायकान् ॥ पुनरपि । आदिशेदुभयभङ्गदर्शनात् पार्थिवस्य सकलं कुलक्षयम् । सौम्यलग्नतिथिभादिभिः शुभं वर्द्धते शुभमथोऽन्यथा भवेत् ॥ दन्तभङ्गस्य विशेषफलमाह । क्षीरमिष्टफलपुष्पपादपेष्वापगातटविघट्टनेन वा । वाममध्यरदभङ्गखण्डने शत्रुनाशकृददतोऽन्यथा परम् ॥ ११ ॥ अथ गजेङ्गितमाह । स्खलितगतिरकस्मात् त्रस्तकर्णोऽतिदीनः श्वसिति मृदु सुदीर्घं न्यस्तहस्तः पृथिव्याम् । द्रुतमुकुलितदृष्टिः स्वप्नशीलो विलोमो भयकृदहितभक्षी नैकशोऽसृक्‌छकृत्कृत् ॥ १२ ॥ शुभचेष्टितमाह । वल्मीकस्थाणुगुल्मक्षुपतरुमथनः स्वेच्छया हृष्टदृष्टिर्यायाद्यात्रानुलोमं त्वरितपदगतिर्वक्त्रमुन्नम्य चोच्चैः । कक्ष्यासन्नाहकाले जनयति च मुहुः शीकरं बृंहितं वा तत्काले वा मदाप्तिर्जयकृदथ रदं वेष्टयेद्दक्षिणञ्च ॥ प्रवेशनं वारिणि वारणस्य ग्राहेण नाशाय भवेन्नृपस्य । ग्राहं गृहीत्वोत्तरणं द्विपस्य तोयात् स्थलं वृद्धिकरं नृभर्त्तुः ॥ १४ ॥ इति वाराह्यां ९२ऽध्यायः ॥

हस्तिच्छाया । स्त्री॰ गजच्छायायाम् ॥ कुञ्जरच्छायायाम् ॥

हस्तिजिह्वा । स्त्री० नाडीविशेषे । यथा । हस्तिजिह्वोत्पलप्रख्या नाडी तथा: पुर: स्थिता । तथाइडाया: । सव्यभागस्थम् दृष्टादिपादाङ्गुष्ठान्तमाश्रिता । हस्तिजिह्वाख्यानाडीदक्षिणे चक्षुषि स्थितेति ॥

हस्तिदन्त: । पुं० मूलके । म. स्त्री० दू० प्र० मूषि ॥ नागदन्ती । खूंटी इ० भा० प्र० ॥ हस्तीरदे ॥

हस्तिदन्तकम् न० मूलके ॥

हस्तिदन्तफला स्त्री० एर्वारौ । ककडी० इ० भा० प्र० ॥ हस्तिदन्तवत्फलानि यस्या: ॥

हस्ती । पुं० मत्तमृगे । पीलौ । अस्य पर्यायास्तु दन्तीदन्तावलो हस्ती द्विरदोऽनेकपो द्विप: । मतङ्गजोगजो नाग: कुञ्जरो वारण: करी । इभ: स्तम्बेरम: पद्मीति । हस्त: शुण्डोऽस्यास्ति । हस्ताख्याता धिपतौ नृपे: । हस्तिनापुरस्य निर्माणकर्त्तरि सुहोत्रराजपुत्रे । यथा । सुहोत्रस्य सुहोत्र: पुत्र: सुहोत्राद्धस्तीति विष्णुपुराणम् । नारीवित्कामुजोत्पन्न गजं राजा गदात्मजा कल्याणामुख तत्पुरवे हस्तिपीदतीति कालिकापुराणम् ॥

हस्तिनख: । पुं० अक्षरीपाणौ पुर्द्वारि मृत्कूटे । पुरद्वारोऽऽरक्षार्थं सेतुकर्म निर्माणे मृत्कूटे । दुर्गपुरद्वार समीपे युद्धार्थं यद्रत्नटमस्त: सोपानयुक्तमृत्कूटं यत्र स्थित्वा० विपक्षे पुकाण्डादिकं क्षिप्यतेतवहस्तिनखइत्यन्ये पुर्द्वारि यद्धस्तिनखस्तम्भेन्नयमर: । हस्तिनो नख इव । हस्तिनानखनस्ततिवा । खनुश्चद्वारणे । अन्येष्वपीतिड: ॥

हस्तिनपुरम् ।)
हस्तिनापुरम् ।) न० गजाह्वये हास्तिनपुरे ॥ हस्तीनामराजा० तेननिर्मितत्वात् ॥

हस्तिनी । स्त्री० गजयोषायाम् । करिण्याम् ॥ धेनुकायाम् । वशायाम् ॥ भाद्रपदादौ हस्तिनीप्रसूतेतद्गमम् हस्ता लिदास: । भावीतदापिकरमेकलभ: करिण्याः त्यं प्रसूयतद्गतिथु किमौनभर्भ । चकव्ययेनरपतेरथ द्विमुखिदेवेतद्गानमस्ति तदुप्रप्रश्नान्तयेत० इति ॥ नारी जातिविशेषे ॥ अलङ्करण यथा । स्थूलाधर स्थूलनितम्बभागा स्थूलाङ्गुली स्थूलकुचा सुशीला । कामोत्सुका गाढरतिप्रियाच नितम्बखरवा खलु-हस्तिनीसेति ॥ हट्टविलासिन्याम् । हस्तशुण्डयाम् ।

हस्तिनीदुग्धम् । न० दुग्धाक्षीरे ॥ तद्गुणायथा । वृष्यं हस्तिनीदुग्धं मधुरं तुवरं गुरु । हृद्यं वश्यं हिमं स्निग्धं चक्षुष्यं स्थिरताकरमिति ॥

हस्तिनीपुरम् । न० हस्तिनापुरे ॥

हस्तिपः । पुं० हस्तिपके ॥ हस्तिनं पाति । पा० । आतोनुपेतिकः ॥

हस्तिपकः । पुं० हस्त्यारोहे । आधोरणे । निषादिनि ॥ स्वार्थे कन् ॥

हस्तिपत्रः । पुं० हस्तिकन्दे ॥

हस्तिपर्णिका । स्त्री० राजकोषातक्याम् ॥

हस्तिपर्णी । स्त्री० राजकोषातक्याम् । मेनुषा० इ० भा० प्र० ॥ एर्वारौ । कर्कव्याम् ॥ मोरटायाम् ॥

हस्तिमदः । पुं० गजमदे । दाने ॥

हस्तिमल्लः । पुं० सुरद्विपे । ऐरावते । अभ्रमातङ्गे ॥ विनायके । विघ्नराजे ॥ शङ्खनागे ॥

हस्तिमुखः । पुं० गणेशे ॥ हस्तिवन्मुखं यस्य ॥

हस्तिरोषणकः । पुं० महाकरञ्जे ॥

हस्तिलक्षणम् । न० गजस्वरूपे ॥ तन्निरूपणं यथा । भद्रोमन्दोमृगोमिश्र एतस्तोगजजातयः ॥ तत्रादौभद्रलक्षणम् । मध्वाभदन्ताः सुविभक्तदेहानचोपदिग्धानकृशाः क्षमाश्च । गात्रैः समैश्चापसमानवंशा वराहतुल्यैर्जघनैश्चभद्राः ॥ मन्दलक्षणं यथा । वक्षोऽथकक्ष्यावलयः श्लथाश्चलम्बोदरस्त्वग्बृहतीगलश्च । स्थूलाचकुक्षिः सहमेचकेनसैंहीदृक्मन्दमतङ्गजस्य ॥ २ ॥ मृगसङ्कीर्णलक्षणन्तु । मृगास्तुकृशाधरबालमेढ्रास्तन्वङ्घ्रिकण्ठद्विजहस्तकर्णाः । स्थूलेक्षणास्तेतिययोश्चचिह्नैः सङ्कीर्णनागाव्यतिमिश्रचिह्नाः ॥ ३ ॥ अथ तेषामुन्नतिदैर्घ्यपरिणाहानांप्रमाणमाह । पञ्चोन्नतिः० सप्तमृगस्यदैर्घ्यमष्टौचहस्ताः परिणाहमानम् । एकद्विवृद्धावथमन्दभद्रौसङ्कीर्णनागोऽनियतप्रमाणः ॥ अथ तेषांवर्णमदलक्षणमाह । भद्रस्यवर्णोहरितोमदश्चमन्दस्यहारिद्रकसन्निकाशः । कृष्णोमदश्चाभिहितोमृगस्यसङ्कीर्णनागस्यमदोविमिश्रः ॥ ५ ॥ गजानांशुभलक्षणान्याह । ताम्रोष्ठतालुवदनाः कलविङ्कनेत्राः स्निग्धोन्नताग्रदशनाः पृथुलायतास्याः । चापोन्नतायतनिगूढनिमग्नवंशास्तन्वेकरोमचितकूर्मसमानकुम्भाः ॥ ६ ॥ विस्तीर्णकर्णहनुनाभिललाटगुह्याः कूर्मोन्नतैर्द्विनवविंशतिभिर्नखैश्च । रेखात्रयोपचितवृत्तकराः सुवालाधन्याः सुगन्धिमदपुष्करमारुताश्च ॥ दीर्घाङ्गुलिरक्तपुष्कराः सजलाम्भोदनिनादबृंहणाः । बृहदायतवृत्तकन्धराधन्याभूमिपतेर्मतङ्गजाः ॥ ८ ॥ अथाशुभलक्षणान् गजानाह । निर्मदाभ्यधि

कष्टीमसदाङ्गान् कुब्जवामनकमेव विषाणान्। हस्यकोषफलपुष्कर हीनान् श्यावनीलशबलासिततालून्॥ स्वल्पवक्त्ररुहमत्कुणषण्ढान् हस्तिनीषु गजलक्षणयुक्ताम्। गर्भिणोश्च नृपतिः परदेशं प्रापयेदतिविरूपफलास्ते॥१०॥ अत्र कुब्जादीनां लक्षणमितु। सङ्क्षिप्तवक्षो जघनः पृष्ठमध्यसमुन्नतः। प्रमाणहीनस्तन्नाभिः सकुब्जो वारणाधमः॥ आनाहायामसंयुक्तो यो तिह्रस्वो भवेद्गजः। वामनः स समाख्यातो भर्त्तुर्नार्थयशः प्रदः॥ सर्व्वलक्षणसम्पूर्णो दन्तैस्तु परिवर्ज्जितः। मत्कुणः स समाख्यातः सङ्ग्रामे प्राणघातकः॥ पादयोः सन्निकर्षः स्यात् यस्य नागस्य गच्छतः। सषण्ढोऽध्वनियुक्तश्च लक्षणज्ञैर्न पूजितः॥ अनन्ताभ्यधिकं यस्य विस्तारोगस्तनान्तरम्। विकटः स विनिर्द्दिष्टो दुर्गतिर्निन्दितो गजः॥ इति वाराह्यां ६३ अध्यायः॥

हस्तिलोध्रः।) हस्तिलोध्रकः।) पुं॰ लोध्रे॥ इति राजनिर्घण्टः॥

हस्तिवाहः। पुं॰ अङ्कुशे॥

हस्तिविषाणी। स्त्री॰ कदल्याम्॥

हस्तिशाला। स्त्री॰ चतुरे। गजगृहे पीलुस्थाने॥

हस्तिशुण्डा।) हस्तिशुण्डी।) स्त्री॰ क्षुपविशेषे। हस्तिन्याम्। भूरुण्ड्याम्। हातीशुँडा॰ इ॰ गौ॰ भा॰ प्र॰। अस्थिसंहारे॥ यथा। वज्रवल्ल्यऽस्थिसंहारो हस्तिशुण्डी समालिकेति हारावली॥

हस्तिश्यामाकः। पुं॰ हातियाशामा इति गौडप्रसिद्धे शस्ये॥

हस्तो। अ॰ पाणौ॥

हस्तेकरणम्। न॰ पाणिग्रहणे। विवाहे॥

हस्त्यध्यक्षः। पुं॰ गजाध्यक्षे॥ तल्लक्षणं यथा। हस्तिशिक्षाविधानज्ञो वन्यजातिविशारदः। क्लेशक्षमस्तथा राज्ञो हस्त्यध्यक्षः प्रशस्यते॥ इति मात्स्ये १८९ अध्यायः॥

हस्त्यायुर्वेदः। पुं॰ हस्तिचिकित्साशास्त्रे। गजायुर्वेदे॥

हस्त्यारोहः। पुं॰ हस्तिपके। निषादिनि॥ तल्लक्षणन्तु। एतैरेव गुणैर्युक्तः स्थासनश्च विशेषतः। हस्त्यारोही नरेन्द्रस्य सर्व्वकर्म्मसु शस्यते इति मात्स्ये १८९ अध्यायः। एतैर्हस्त्यध्यक्षगुणैः॥ हस्तिनमारोहति। रुहेः कर्म्मण्यण्॥

हस्त्यालुकम्। न॰ कुञ्जरालुके। दीर्घतायुक्ते महाशरीरे कन्दविशेषे॥

हस:। त्रि॰ मूर्खे॥ हसति। हसे॰

। स्नायितश्रीलिरक् ॥

हहलम् । न० हालाहले ॥ इ० श० चं० का ।

हहः । पुं० हाहानामगन्धर्वे ।

हा । अ० विषादे ॥ शुचि । शोके ॥ अर्त्तौ । पीडायाम् । दुःखे । कुत्सायाम् ॥ विस्मये ॥ धार्त्तिकौ ॥ जहाति । ओहाक् त्यागे ॥ क्विप् ॥ यथा । प्रारब्धेनिरयोगे आगतेऽप्रसुभक्षः । विधुक्तव्यो भवस्याभिहानरः क्षीमहनने ॥

हाकलिः । स्त्री० मात्रावृत्तप्रभेदे ॥ लक्षणन्तु । द्विजगणसगणभगणका लितामत्तैश्चतुर्दशकलकलितः । अन्तेगुरुमुपधायदहाकलिरेषाभवितितदा ॥ यथा । कौमुदकुसुदबन्धुवदनासितपीयूषजनितमदना । चपलविलोचनजितहरिणीहरति मनामयानमनहरी ॥

हाडरः । पुं० ग्रहकल्योयादसि ॥

हाटकः । पुं० न० स्वर्णे । हेमनि । कानके । हटति । हटदीप्तौ । ण्वुल् ॥ हाटकनिधानान् । धत्तूरे । त्रि० स्वर्णनिर्मिते ॥

हाटकीशः । पुं० पातालाधिपतीश्वरे ॥ हाटकाख्यपारसविशेषप्रभुः ॥

हाटकेश्वरः । पुं० गोदावरीतीरस्थे शिवविशेषे ॥

हातव्यः । त्रि० त्यक्तव्ये ॥ यथा । वीभत्सादिपरजुगुप्सिततमः का येऽवयोगस्वरपापोवन्धुभिरध्वनीव पथिकैर्योगिविपोगादयः शोतव्ये । यमसारपोविरसः संसारदुःखादिकं सर्वं खैवविषयाविचेतसिपुनः का स्यापिपुष्यात्मनः ॥

हावम् । न० भृतौ । वेतने ॥ प्रमथने ॥ पुं० राक्षसे ।

हानम् । न० त्यागे । उत्सर्गे ॥ धात्वर्थिकोपरमे ॥

हानिः । स्त्री० अल्पत्वे ॥ अपचये । क्षतौ ॥ आयुषः क्षणशोऽपि न लभ्यः स्वर्णकोटिभिः । सचेन्निष्फलतां याति का नो हानिस्ततोऽधिका । विनाशे । हानम् । ओहाक् त्यागे । स्त्रियां क्तिन् ॥ यद्वा । हीयते । ओहाक् । बहिर्भिन्नयुद्ध स्वाद्यस्वरेभ्योनिर्दिष्टितिभिः ॥

हानुः । पुं० दन्ते ॥ इति त्रिकाण्डशेषः ॥

हान्तम् । न० मृतौ । मरणे ॥ हन्ति । हन० । भसिजगमिनमिह मिभ्यश्चाइत्युक्तिर्हृन् ।

हापनीयः । ० वर्त्तनुयोग्ये ।

हापितः । त्रि० त्याजिते । हानिङ् गमिते ॥

हापुत्रिका । ) स्त्री० पक्षिविशेषे ॥
हापुत्री । )

तत्पर्य्यायाः यथा । प्रथमसर्पौ० खञ्जनिकाःतुलिका० स्फोटिकेतिचिकाण्डशेषः ॥ गोभण्डीरः बकः कोरोकापुष्पोराजभद्रिकेतिहारावली ॥

हारिका । स्त्री० कूष्माण्डे । कुष्माण्याम् । उपपुष्पिकायाम् । जम्भाई० ई० भा० ॥

हायनः । पुं० वर्षे । ज्वाले । वर्म्मः शिखायाम् ॥ ब्रीहिभेदे । नीवारादिविमुक्तः । षष्टिकद्रुतिस्वामी । शालिजातिविशेषे० वृत्तिमिधवः ॥ पुं० न० संवत्सरे । शरदि । वर्षे ॥ जहातिव्यत्युदकम् । जोहाकत्यागे । माबाम्जिहीतेव्याप्नोतिवा । ओहाङ्गतौ । हश्रीदिशायीरित्युभयतघ्युट् ।

हारः । पुं० मुक्तावली । मुक्तादामनि । युधि । सङ्ग्रामे । संयुगे । गुरुवर्णे०ऽ० ॥ सुधोवधानरस्य प्रगुरौ । न० हरैर्गरिते ॥ त्रि० मनोहरे ॥ मनोह्रियतेऽनेन । हृञ्० । घञ् ॥ यद्वा । हारयतिमनः । स्वार्थेण्यन्तात्घञ् ॥ हरणम् । भावेघञ् ॥

हारकः । पुं० कितवे । चौरे ॥ गद्यभेदे ॥ विज्ञानविशेषे ॥ शाखोटवृक्षे ॥ भालकाङ्के ॥ त्रि० हरणकर्त्तरि ॥ हरति । हृञ्० । ण्वुल् । ह्रियते । बाहुलकात्कर्म्मणि बाण्वुल् ॥

हारहारा । स्त्री० कपिलद्राक्षायाम् ॥

हारहूरम् । न० मद्ये ॥ पुं० हिमवन्तः ॥

हारहूरा । स्त्री० द्राक्षायाम् ॥

हारहूरका । स्त्री० गोस्तन्याम् ॥

हारावली । स्त्री० पुरुषोत्तमकृतकोषविशेषे ॥ हारपङ्क्तौ ॥

हारिः । स्त्री० पथिकसन्तातौ । पथिकपङ्क्तौ ॥ द्यूतादौपराजये ॥ त्रि० मनोज्ञे । रुचिरे ॥ शुभे ॥ हरति । हृञ्० । बाहुलकादिञ् ॥

हारिकण्ठः । पुं० कोकिले ॥ त्रि० हारान्वितगले ॥

हारिणिकः । पुं० मृगयौ ॥ हरिणान्हन्ति । पक्षिमत्स्यमृगान्हन्तीतिठक् ॥

हारिणी । स्त्री० अत्यष्टिछन्दः १७ प्रभेदे ॥ तल्लक्षणन्तु । वेदर्त्वश्वैर्म्मभनमयलागयेत्तदाहारिणी । यथा । यस्यानित्यंश्रुतिकुवलयेशोभाशालिनीलोचनेराग: स्त्रीयोऽधरकिसलयेलासारसारस्तनम् । गौरीकान्तिः प्रकृतिरुचिरारम्याङ्गरागच्छटासाकंसारिरञ्जाननकथंराधामनोहारिणी ॥ हारवत्याम् ॥

हारितः । पुं० पक्षिविशेषे । हारी

ते ॥ हारमितः ॥

हारितकम् । न० शाके ॥

हारिद्रः । पुं० कदम्बवृक्षे । नीपे ॥ विषविशेषे ॥ यथा । हरिद्रातुल्यमूलो यो हारिद्रः समुदाहृतः ॥ हरिद्रावर्णे ॥ त्रि० हरिद्रारञ्जिते ॥ हरिद्रयारक्तम् । हरिद्रामहारजनाभ्यमञ् ॥

हारिद्रवः । पुं० मैत्रायणीयानांशाखाप्रभेदे ।

हारिद्रुमतः पुं० गौतमगोत्रेमुनिविशेषे ॥ हरिद्रुमतोऽपत्यम् । अण् ॥

हारी । त्रि० हारविशिष्टे ॥ हारोस्यास्य । इनिः ॥ हर्तरि ॥ अवश्यंहरति । हृञ्० । णिनिः ॥

हारी । स्त्री० मौक्तिके । यथा । मुक्ता मुक्ताफलं शुक्तिबीजं हारी च मौक्तिकमिति शब्दरत्नावली ॥

हारीतः । पुं० धर्मशास्त्रप्रवर्त्तकेमुनिविशेषे ॥ कैतवे । छद्मनि ॥ पक्षिविशेषे । हरिलो हारीत इति लोकप्रसिद्धे ॥ अस्य मांसगुणा यथा । हारीतो रूक्ष उष्णः स्याद्रक्तपित्तकफापहः । स्वेदस्वरकरः प्रोक्तः ईषद्वातकरश्च सः ॥ हारीतो रक्तपीतः स्याद्धारितोऽपि स कथ्यते । हारीमीतः ॥ हारोस्यस्मिन् वा । इनिः । हारिमनोहरमितं गमनमस्य ॥ यद्वा । हारयति । क्विप् । एति । इण् गतौ । गत्यर्थेतिक्तः । हारश्चासावीतश्च ॥

हारीतकः । पुं० हारीतखगे ॥ स्वार्थे कः ॥

हार्द्दम् । न० प्रेमणि । स्नेहे ॥ अभिप्राये ॥ हृदयस्यकर्म । युवादित्वात्० हायनान्तयुवादिभ्योणित्यण् । हृदयस्यहृल्लेखेतिहृदादेशः ॥ हृद्दमर्थेणषा ॥

हार्द्दी । त्रि० स्नेहवति ॥

हार्य्यः । पुं० कलिद्रुमे । विभीतके हरणीयाङ्के । भाव्ये ॥ जरणे ॥ त्रि० हर्त्तव्ये ॥ हर्त्तुंयोग्यः । हृञ्० । ऋहलोर्ण्यत् ॥

हालः । पुं० बलदेवे ॥ शालिवाहनभूपतौ ॥ हली ॥ हलति । हलविलेखने । ज्वलितिकसन्तेभ्यो णः ॥

हालकः । पुं० पीतहरितवर्णाश्वे ।

हालहलम् । न० पुं० हालाहलविषे ॥ हालेवहन्ति० जठरम् । हल० । पचाद्यच् । हलमिवहलतिवा । अच् । प्रज्ञाद्यण् ॥ मधुतिष्टतिवाचियेपितांहृदयेहालहलमहविषम् । अतएवनिपीयतेऽधरोहृदयंमुष्टिभिरेवताड्यते ॥

हालहालः । पुं० म० हालाहले ॥

हाला । स्त्री० सुरायाम् । बलदेवप्रियायाम् । वरुणात्मजायाम् ॥ ह

स्वरूपम् । हल० । ज्वलतीतिण : ॥ हल्यतेऽनयाया । हलयेतिघ ञ् ॥ हालाहलंहन्तिचेक'हालातु साम्प्रतैवम् ॥ तालमध्ये ॥

हालाभ्यामम् । न० चिद्म्बराभि धेदेव्या : स्थाने ॥

हालाहल : । पु'० न० विषप्रभेदे ॥ तत्स्वरूपन्तु । गोस्तनाभफलोगुच्छ स्तालपत्रच्छदस्तथा । तेजसायस्य द्ग्धन्ते समीपस्थाद्रुमादय : किष्किन्धायांहिमालये । दक्षिणाब्धितटे देशेकोङ्कणेपिचजायते ॥ हालेश आहलति । हल० पचाद्यच् ॥ हालाहलोनेवविषं विषंरमादरं ज नाव्यत्ययमेवमन्यते । येनेनजाग र्त्ति निपीयतंशिवः स्वशन्‌रस्मामुच्य तिनिद्रयाहरि : ॥

हालाहल : । पु'० कीटविशेषे । अ ञ्जनिकायाम् । कुटिलकीटके ॥

हालाहलधर : । पु'० सर्पे ॥ हाला हलस्यधरोधारक : ॥

हालाहला । स्त्री० अञ्जनिकायाम् । गिरिकायाम् । बालमूषिका याम् ॥

हालाहली । स्त्री० मदिरायाम् ॥

हालिक : । पु'० कर्षककर्षे । सैरि के । हलेनखनति । तेनदीव्यतिख नतीतिठक् ॥ हलंवहति० हल स्यायंवा । हलसीराट्ठक् ॥

हालिनी । स्त्री० स्थूलपललयाम् ॥

हाली । स्त्री० कनिष्ठशालिकायाम् ॥ यथा : कनिष्ठाश्यालिकाहालीयस्मि काकेलिकुञ्चिकेतिहेमचन्द्र : ॥ म दिरायाम् ॥

हालु : । पु'० दन्ते ॥

हाव : । पु'० आह्वाने ॥ स्त्रीणांविला सादौ । नारीणांशृङ्गारभावसुक्रि यासु ॥ यथा । स्त्रीणांविलासोवि ब्बोकोविभ्रमोललितंतथा । हेला लीलेत्यमीहावा : क्रियाशृङ्गारभा वजा : ॥ शृङ्गारात्० रत्यादे:० भावाम्मनोविकाराच्चजाता : क्रि याश्चेष्टाचसङ्काराच्याविलासादि काहावशब्दवाच्याइत्यर्थ : ॥ हवन म् । हुदानादनयो : । क्वचिदपवा दविषयेप्युत्सर्गोऽभिनिविशते० इत्य वविषयेघञ् । इतिशब्द : प्रकारे । तेनान्येपिबोध्या : । लीलाविला सोविच्छित्तिर्विभ्रम : किलकिञ्चि तम् । मोट्टायितंकुट्टमितंविब्बोको ललितंतथा । विहृतञ्चेतिमन्तव्या दशस्त्रीणांस्वभावजाइति ॥ हूय- न्तेरागिणोऽनेनेतिहाव : । अत्राहूय न्तेरागिण : कामान्नानेनेतिहा व : । अधिकरणेकरणेवाघञ् ॥ यथोक्तम् । युवानोऽनेनहूयन्तेना रीभिर्मदनानले । अतोनिरुच्यतेहा वस्तंविलासादयोमताइति ॥ हाक

हंसायतिशोभयति वैशिष्ट्ये ।
ह्र : ॥

हास : । पुं० हास्ये ॥ हसनम् । हसि हसने । स्वनहसोर्वेतिपक्षे घञ् ॥ प्रकाशे ॥

हासिका । स्त्री० हासे । हासी० द्व० भा० ॥ हसे० । धात्वर्थनिर्देशेण्वुल् । प्रकाशे ॥

हास्तिकम् । न० गजतायाम् । करिसमूहे ॥ हस्तिनांसमूह : । अचित्तहस्तिधेनोष्ठक् ॥ हस्तिनांसमूहो वा ॥ भस्याटढूतिपुंवद्भाव : ॥ त्रि० हस्त्यारोहे ॥ हस्तिनाचरति० गच्छति । चरतीतिठक् ॥

हास्तिनम् । न० हस्तिनापुरे ॥ हस्तिदघ्न । गजपरिमाणे ॥ हस्तिप्रमाणमस्य । पुरुषहस्तिभ्यामण्चेत्यण् । द्वनयानपत्ये द्वसप्रकृतिभाव : ॥

हास्तिनपुरम् । न० हस्तिनापुरे ॥

हास्तिनायन : । पुं० हस्तिनोगोत्रापत्ये ॥ नडादित्वात्फक् । हास्तिनायनेतिटिलोपाभाव : ॥

हास्यम् । न० रसविशेषे । हसे हासे । यथा । विकृताकारवाग्वेशचेष्टादेकुतुकाद्भवेत् । हास्योहास: स्थायिभाव : श्वेत प्रथमदैवत : ॥ विकृताकारवाक्चेष्टंयदालोक्यहसेज्जन : । तदत्रालम्बनंप्राहुस्तच्चेष्टोद्दीपनंमतम् ॥ अनुभावो

ऽक्षिसंकोचवदनस्मेरतादिक : निद्रालस्यावहित्याद्या अत्रस्युर्व्यभिचारिण : ज्येष्ठानांस्मितहसितेमध्यानां विहसितावहसितेच । नीचानाम पहसितं तथातिहसितन्तदेषषड्भेदा: ॥ ईषद्विकासिनयनं स्मितं स्यात्स्पन्दिताधरम् । किञ्चिल्लक्ष्यद्विजंतत्रहसितं कथितं बुधै : । मधुरस्वरंविहसितंसांसशिर : कम्पमवहसितम् । अपहसितंसास्राक्षं विक्षिप्ताङ्गं चभवत्यतिहसितम् । हसे० । ऋहलोर्ण्यत् ॥ त्रि० परिहसनीये ॥

हाहलम् । न० हालाहले ॥

हाहा । अ० विस्मये । शोके ॥

हाहा : । पुं० गन्धर्वविशेषे ॥ हाहाहूहूश्चैवमाद्यागन्धर्वास्त्रिदिवौकस मित्यमर : ॥ हाहूरितिशाकव्यसूक्ष्मशब्दं कहाति । धे: हाक्त्यागे । विच् । प्रसिद्ध : । अव्युत्पन्नप्राति० प्रसि० हाहाम् । आतोधातोरित्यस्याप्रवृत्ते : ॥

हाहाकार : । पुं० शोकध्वनौ ॥ हाहाशब्दे । हाहाकरणम् । भावेघञ् ॥

हाहालम् । न० हालाहले ॥

हाहा : । पुं० देवगन्धर्वे ॥ साक्षोयम् । गन्धर्वोहाहसिप्रोक्तोगन्धर्वोगायनेपिचेतिसाहसाङ्क : । गन्धर्वप्रीतिहासीरितिभावकृति : ॥

हाहाहूहू : । पुं॰ गन्धर्वे ॥

हि । अ॰ पादपूरणे ॥ हेतौ । विशेषे । अवधारणे । प्रश्ने । हेत्वपदेशे । सम्भ्रमे ॥ असूयायाम् ॥ अप्यर्थे ॥ विद्वदनुभवप्रसिद्धौ । हिनोति । हि गतौ । क्विप् । संज्ञापूर्वकत्वाद्गुणाभावः । क्विपि तुगभावो वा । भावे वा प्रत्ययौ ॥

हिंसकः पुं॰ व्याघ्रे । हिंस्रपशौ । अथर्ववेदज्ञब्राह्मणे ॥ शत्रौ ॥ त्रि॰ हिंसाकर्त्तरि । नृशंसे । घातुके ॥ हिनस्तिति शीलः । हिसि हिंसायाम् । निन्दहिंसक्लिशेति वुञ् ॥ शरणागतबालस्त्रीहिंसकान्संवसेन्नतु चीर्णव्रतानपि सदा कृतघ्नसहितानिमान् ॥

हिंसा । स्त्री॰ चौर्यादिकर्मणि ॥ आदिना वधनाशस्तम्भादयो ग्राह्याः । घाते । वधे । [illegible] प्राणिवधे ॥ सा च कृतकारितानुमोदितभेदेन त्रिविधा । कायवाङ्मनोभिः प्राणिनां पीडने । प्राणविच्छेदे ॥ स्वाभिप्रायप्रकटने अपरवित्तच्छेदने ॥ कायक्लेशं मनोदुःखं वधं वा प्राणिनां पुनः । यः प्रवर्त्तयति हि पातकं सा हिंसेति समासतः॰ इति देवलः ॥ हिंसनम् । हिसि॰ । गुरोश्च हलः॰ टाप् ॥ गृहे गुरावरण्ये वा निवसन्नात्मवान्द्विजः । नावेदविहितां हिंसामापद्यपि समाचरेत् ॥ कथं तर्हि तुल्ये हिंसात्वे वैदिकी दीक्षादिपशुहिंसा नाधर्माधिक्यतयाह । या वेदविहिता हिंसा नियतास्मिंश्चराचरे । अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ । इति मनुः ॥ या श्रुतिविहिता कर्मविशेषदेशकालादिनियता । अस्मिन् जगति स्थावरजङ्गमात्मनि॰ अहिंसामेव तां जानीयात्॰ हिंसाजन्याधर्माभावात् । दैवपशुहननम्॰ अधर्म॰ प्राणिहननत्वात्॰ ब्राह्मणहननवदित्याद्यनुमानम्॰ उपजीव्यशास्त्रबाधादेवमप्रवर्त्तते । दृष्टान्तीकृतब्राह्मणहननस्याप्यधर्मत्वे । शास्त्रमेवोपजीव्यम् । वेदाद्धर्मो हि निर्बभौ । यस्मादनन्यप्रमाणको धर्मो वेदादेव निःशेषेण प्रकाशतां गत इति कुल्लूकभट्टः ॥ यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः । भृत्यानां चैव वृत्त्यर्थमगस्त्यो ह्याचरत्पुरा ॥ बभूवुर्हि पुरोडाशा भक्ष्याणां मृगपक्षिणाम् । पुराणेष्वपि यज्ञेषु ब्रह्मक्षत्रसवेषु च ॥ मनुः ॥ पुरातनेष्वपि ऋषिकर्त्तृकयज्ञेषु भक्ष्याणां मृगपक्षिणां मांसैः पुरोडाशा अभवन् । तस्मात्॰ यज्ञार्थमधुनातनैरपि मृगपक्षिणो वध्या इति कुल्लूकभट्टः ॥

हिंसाकर्म्म । न० अथर्ववेदोक्तमन्त्रयन्त्रादिनिष्पादितमारणोच्चाटनादिक्रियायाम् । अभिचारे ॥ हिंसाफलकर्म्म । शाकपार्थिवादिः ॥

हिंसात्मकः । त्रि० हिंस्रस्वभावे ॥

हिंसारुः । पुं० व्याघ्रे ॥

हिंसालुकः । पुं० खादुकशुनि । कटखना० खाणगा० कुत्ताइ० भा० ॥

हिंसितः । त्रि० प्राप्तहिंसे । हिंसांप्राप्ते ॥ यथा । यस्तु कन्यांपितादत्त्वा न प्रयच्छति तां पुनः । अष्टौपि तेन ते गणास्तेन हिंसिता नात्र संशयः ॥ ब्र० वाराहपु० ॥

हिंसीरः । पुं० व्याघ्रे ॥ त्रि० खले । दुष्टे ॥ हिनस्ति । हिंसि० । हिंसीरज्जीरचौ । खरेभेदः ॥

हिंस्रः । पुं० घोरे ॥ भीमसेने ॥ हरे ॥ त्रि० हिंसाशीले । शरारौ । घातुके ॥ हिंसायांहिंसनेदोषाभावोयथा । कृपाकार्य्यासताशश्वद्धिंस्रेषु जन्तुषु । हिंसायांनहिदोषश्च हिंस्राणाञ्चमहेश्वर । ब्र० वै० कृ० जन्मखण्डे ८५ अध्यायः ॥ हिनस्ति । हिंसि० । नमिकम्पिसम्यजसकमहिंसदीपो रः ॥

हिंस्रकः । पुं० हिंस्रपशौ । व्याडे ॥ स्वार्थे कः ॥

हिंस्रपशुः । पुं० हिंसकजन्तौ । व्या डे । हिंसके ॥

हिंस्रा । स्त्री० हींस० इ० भा० प्र० सिद्धे । काकादन्याम् ॥ जटामांस्याम् ॥ वसायाम् ॥ हिनस्ति । हिंसि० । रः । टाप् । नगवेड्काया म् ॥ नाड्याम् ॥

हिक्का । स्त्री० ऊर्द्ध्ववातप्रवृत्तौ शब्दविशेषे ॥ रोगोपसर्गविशेषे ॥ रोगविशेषे ॥ अस्याविप्रकृष्टनिदानमाह । विदाहिगुरुविष्टम्भिरूक्षाभिष्यन्दिभोजनैः । शीतपानाशनस्नानरजोधूमैस्तथानिलैः ॥ व्यायामकर्म्मभाराध्ववेगाघातापतर्पणैः । हिक्काश्वासश्च कासश्च नृणांसमुपजायते ॥ अपतर्पणम् अनशनादि ॥ सम्प्राप्तिमाह । वायुः कफमानुगतः पञ्चहिक्कां करोतिहि । अन्नजांयमलांक्षुद्रांगम्भीरांमहतींतथा ॥ सामान्यलक्षणन्तु । मुहुर्मुहुर्वायुरुदेतिसस्वनोयकृत्प्लिहान्त्राणिमुखादिवक्षिपन् । सदोषवानाशुहिनस्त्यसून् यतस्ततस्तु हिक्केत्यभिधीयतेबुधैरिति ॥ हिनस्तीतिहिक्का । पृषोदरादित्वात्रूपसिद्धिः । हिगिति कायति० शब्दंकरोतीतिवा ॥ हिक्कनम् । हिक्कअव्यक्ते शब्दे । गुरोश्चहलः । टाप् ॥ यद्वा । हिक्कयते । हिक्कहिंसाम् । पचाद्यच् ॥

हिङ्कारः । पुं० सामभक्तव्यन्तरे । पाश्च

भक्तिकस्य साम्नः प्रथमायां भक्तौ ॥

हिङ्गु । न० मूलविशेषस्य निर्यासे धूपनि ॥ अस्य पर्यायगुणाश्च यथा । सहस्रवेधि जतुकं बाल्हीकं हिङ्गु रामठम् ॥ हिङ्गूष्णं पाचनं रुच्यं तीक्ष्णं वातबलासहृत् । रसे पाके च कटुकं स्निग्धं वह्निदीपनम् ॥ शूलगुल्मोदरानाहकृमिघ्नं पित्तवर्द्धनमिति ॥ हिनोति । हिगतौ वृद्धौ च । हिं गच्छतीति वा । मृगय्वादिः ॥ वंशपत्र्याम् ।

हिङ्गुनाडिका । स्त्री० नाडीहिङ्गुनि । रामठ्याम् ॥

हिंगुनिर्य्यासः । पुं० निम्बवृक्षे ॥ हिङ्ग्वाकारो हिङ्गुगन्धो वा निर्य्यासोऽस्य ॥ हिङ्गुरसे ॥

हिङ्गुपत्रः । पुं० इङ्गुदीवृक्षे । हिङ्गोटः इ० भा० प्र० ॥ हिङ्गुनः पत्रमिव पत्रं यस्य ॥

हिङ्गुपत्री । स्त्री० कारव्याम् । पृथ्वीकायाम् । त्वक्पत्र्याम् ॥ अस्या गुणा यथा । हिङ्गुपत्री भवेद्रुच्या तीक्ष्णोष्णा पाचनी कटुः । हृद्वस्तिरुग्विबन्धार्शः श्लेष्मगुल्मानिलापहा ॥ हिङ्गुपत्रमिव पत्रमस्याः ॥ हिङ्गुनः पत्रे ॥

हिङ्गुपर्णी । स्त्री । वंशपत्र्याम् ॥

हिङ्गुलः । पुं० न० कुरुविन्दे । हंसपादे ॥ अस्य नामानि लक्षणानि० गुणाश्च यथा । हिङ्गुलं दरदं म्लेच्छं चित्रासं चूर्णपारदम् ॥ दरदस्त्रिविधः प्रोक्तश्चर्मारः शुकतुण्डकः । हंसपादस्तृतीयः स्याद्गुणवानुत्तरोत्तरः ॥ चर्मारः शुक्लवर्णः स्यात् सपीतः शुकतुण्डकः । जपाकुसुमसङ्काशो हंसपादो महोत्तमः ॥ तिक्तं कषायं कटु हिङ्गुलं स्यान्नेत्रामयघ्नं कफपित्तहारि । हृल्लासकुष्ठज्वरकामलांश्च प्लीहामवातौ च गरं निहन्ति ॥ ऊर्द्ध्वपातनयुक्त्या तु डमरुयन्त्रपाचितम् । हिङ्गुलं तस्य सूतन्तु शुद्धमेव न शोधयेत् ॥ शोधनविधिस्तु । मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम् । सप्तवारान् प्रयत्नेन शुद्धिमायाति निश्चितम् ॥ शोधितस्य गुणास्तु तिक्तं कषायमित्यादिना ॥ हिङ्गुलाद्रसाकर्षणविधिर्यथा । निम्बूरसैर्निम्बपत्ररसैर्वा याममात्रकम् । घृष्ट्वा दरदमूर्द्ध्वन्तु पातयेत् सूतयुक्तिवत् । ततो दूर्द्ध्वपिठरीलग्नं गृह्णीयाद्रसमुत्तमम् । शुद्धमेव हि तत् सूतं सर्वकर्मसु योजयेत् ॥ इ० भा० प्र० ॥ : । सिन्दूरे ॥

हिंगुला । स्त्री० देशविशेषे । यथा । ब्रह्मरन्ध्रं हिंगुलायां भैरवो भीमलोचनः । कोट्टवी सा महामाया त्रिगुणा या दिगम्बरी ॥ इति तन्त्रचूडा

मत्यौपीठमाला ॥ वामनपुराण मपियथा । कन्याचैत्वंखेदसञ्जातासास्वैविलिखिहिरसा । ततस्तामाहशालांकप्रभांभैरवमूर्त्तिमान् शङ्करोवरदोलोकश्रेयोर्थायचोत्र हृत् त्वांपूजयिष्यन्तिसुराश्चयः पितरस्तथा ॥ यक्षविद्याधराश्चैव मानवांशुभङ्करि । त्वांस्तोष्यन्तिसद्रादेविबलिपुष्पोत्करैः करैः चर्चैर्कतिशुभंनामयस्माद्रुधिरचर्चिता । त्वंवसुना वरदेनचर्च्चिका भूतानुयाताहरितमञ्चाधिमौ-महीं समस्ताद्विचचारसुन्दरीस्थलंगता हिङ्गुलमाद्यमुत्तममिति ॥

हिंगुलि : । पुं० हिंगुले ॥

हिंगुनिका । स्त्री० कण्टकार्याम् । भण्टाक्याम् ॥

हिंगुली । स्त्री० वार्त्ताक्याम् । सिंह्याम् । भण्टाक्याम् ॥ हिंगुला ति । ला० । घातोनुपेतिक : । गौरादित्वान्ङीष् ॥ वृहत्याम् । कण्टकार्याम् ॥

हिंगुलु : पुं० म० रक्तगद्रव्यविशेषे ॥ यथा । दारदन्तुहिंगुलु : स्याद्धिङ्गुलं रक्तपारदमितिविकाण्डशेष : ।

हिंगुशिशाटिका । स्त्री० वंशपत्र्याम् ॥

हिंगूलम् । न० घालुविशेषे । मधुमूले । मोचालू० द्र० गौ० दे० भा० प्र० ॥

हिज्ज : । पुं० हिज्जले ॥

हिज्जल : । पुं० वृज्जले । निचुले । जलवेतसविशेषे ॥ यथा । वृज्जलोहिज्जलश्चापिनिचुलश्चाम्बुजस्तथा । जलवेतसवद्वेद्योहिज्जलोयंविषापह : । इतिभावप्रकाश : ॥ हिनोति । हिगतौवृद्धौच । क्विप् । हित्जलमस्य ॥ स्थलवेतसइत्यन्ये ॥ समुद्रफलेतिख्यातइत्यपरे ॥

हिञ्जीर : । पुं० हस्तिपादबन्धे । निगडे । चन्द्रके ॥ इतिहेमचन्द्र : ॥

हिडम्ब : । )
हिडिम्ब : । ) पुं० असुरविशेषे ॥

हिडम्बजित् । )
हिडिम्बनिसूदन : । ) पुं० भीमसेने ।
हिडिम्बभित् । )

हिडिम्बा । स्त्री० हिडिम्बासुरभगिन्याम् ॥

हिडिम्बापति : । )
हिडिम्बारमण : । ) पुं० हनूमति । रामदूते । अर्जुनध्वजे ॥

हिण्डनम् । न० भ्रमणे । रते ॥ यानै ॥ क्रीडायाम् ॥ हिडिगत्यनादरयो : । ल्युट् ॥

हिण्डक : । पुं० लग्नाचार्ये ॥

हिण्डिर : । पुं० हिण्डीरे ॥

हिण्डी । स्त्री० शिखरवासिन्याम् । । दुर्गायाम् ॥ इ० चि० शेष : ॥

हिन्दोलः । पुं० श्रावणशुक्लपक्षविहितभगवद्यात्राविशेषे । दोलयात्रेति प्रसिद्धे । षड्रागान्तर्गतरागविशेषे । यथा । भैरवः कौशिकश्चैव हिन्दोलो दीपकस्तथा । श्रीरागो मेघरागश्च षडेते पुरुषाह्वया इति ॥

हिन्दोलकः । पुं० यानविशेषे । दोलायाम् । प्रेङ्खायाम् ॥

हिन्दोलनम् । न० दोलने ॥

हिन्दोला । स्त्री० दोलिकायाम् ॥

हिबुकम् । न० लग्नाच्चतुर्थभवने ॥

हिम: । पुं० चन्दनतरौ ॥ कर्पूरे ॥ चन्द्रे । हेमन्तर्त्तौ ॥ हिमालयपर्वते ॥ न० स्वनाम्ये । रजनीजले ॥ तत्पर्यायो यथा । अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् । प्रालेयं महिकेति ॥ चन्दने ॥ नवनीते ॥ मौक्तिके ॥ पद्मकाष्ठे ॥ रङ्गे ॥ शीते ॥ त्रि० शीतले ॥ हन्ति । हन० । हन्तेर्हिचेतिमक् ॥

हिमकः । पुं० विकङ्कततरौ ॥

हिमकरः ।) हिमकिरणः ।) पुं० चन्द्रे । कर्पूरे ॥ हिमाः करा किरणा यस्य सः ॥

हिमकूटः । पुं० शिशिरर्त्तौ ॥ हिमकदम्बे ॥

हिमगिरिः । पुं० हिमालयपर्वते ॥

हिमजः । पुं० मैनाकाचले । मेनकापुत्रे ॥ हिमात् जातः । जनी० । पञ्चम्यामिति डः ॥ न० हिमोद्भवे ॥

हिमजा । स्त्री० गौर्य्याम् । पार्वत्याम् ॥ हिमात् हिमालयात् जाता । जनी० । डः । टाप् ॥ शच्याम् । इन्द्राण्याम् । क्षीरिण्याम् ॥

हिमझण्टिः । पुं० भूमिकायाम् । कुहेलिकायाम् ॥

हिमतैलम् । न० कर्पूरतैले ॥

हिमदुग्धा ।) हिमदुग्धिका ।) स्त्री० क्षीरिण्याम् ॥

हिमदुर्द्दिनम् । न० पतद्धिमे । हिमनिपातितैनदुःखदायकदिने ॥

हिमद्युतिः । पुं० इन्दौ । चन्द्रे ॥ हिमा द्युतिर्यस्य सः ॥

हिमद्रुमः । पुं० महानिम्बे ॥

हिमनामा । पुं० कर्पूरे ॥ हिमस्य नामान्येव नामान्यस्य ॥

हिमप्रस्थः । पुं० हिमगिरौ ॥

हिमवान् । पुं० उमागुरौ । नगाधिराजे । हिमालये । यतद्रुचन्द्रभागाद्याः हिमवत्पादनिःसृताः । सर्तानिषिद्धो हिमवान् भोगिनां मलयाऽचलः ॥ हिमम् अस्त्यस्मिन् । मतुप् । वत्वम् ॥

हिमवत्सुतः । पुं० हिरण्यनाभे । मैनाकाचले ॥

हिमवत्सुता । स्त्री० उमायाम् ।

गौर्य्याम् हिमवतः सुता ॥ ग ङ्गायाम् ॥ इ॰ ध॰ यः ॥
हिमवत्सुताबन्धः । पुं॰ । भौमि तीर्थविशेषे ॥
हिमवालुकः । पुं॰ कर्पूरे । इ॰ राजनिघण्टुः ॥
हिमवालुका । स्त्री॰ कर्पूरे ॥ हि माचासौवालुकाच ॥
हिमशर्करा । स्त्री॰ यावनाल्याम् ॥
हिमशैलः । पुं॰ हिमवति । मे नाधवे ॥ हिमप्रधानः शैलः ॥
हिमशैलजा । स्त्री॰ पार्वत्याम् ॥
हिमसंहतिः । स्त्री॰ महहिमे । हिमान्याम् ॥ हिमानांसंहतिः ॥
हिमहः । पुं॰ चाद्रिन्वे ॥ वह्नौ ॥ हिमंजाड्यंहन्तीतिहिमहः । डः ॥
हिमहासकः । पुं॰ हिन्तालवृक्षे ॥
हिमा । स्त्री॰ नागरमुस्तके । सू क्ष्मैलायाम् ॥ रेणुकायाम् ॥ पृ क्कायाम् ॥ भद्रमुस्तायाम् ॥ च णिकायां ॥
हिमांशुः । पुं॰ चन्द्रमसि ॥ हि माअंशवोयस्यसः ॥ कर्पूरे ॥
हिमांशुभिख्यः । पुं॰ कर्पूरे । न॰ रौप्ये ॥
हिमागः । पुं॰ हिमालये ॥ हि मप्रधानोगः ॥
हिमागमः । पुं॰ हेमन्ते ॥ हि मस्यागमोयस्मिन् ॥
हिमाचलः । पुं॰ हिमालये ॥
हिमात्ययः । पुं॰ वसन्तर्तौ ॥ हि मस्यात्ययोयस्मिन् ॥
हिमाद्रिः । पुं॰ हिमशैले ॥
हिमाद्रिजा । स्त्री॰ पार्वत्याम् ॥ हिमाद्रेर्जाता । जनी॰ । डः । टाप् ॥ क्षीरिण्याम् ॥
हिमाद्रितनया । स्त्री॰ पार्वत्याम् ॥
हिमाद्रितनयापतिः । पुं॰ शिवे ॥
हिमानी । स्त्री॰ हिमसंहतौ ॥ मह द्धिमम् । हिमारण्ययोर्महत्त्वइति ङीषानुकौ ॥ यथा । आगतावत- चरैवहिमानीसेव्यताम् सुरतरङ्गि- णीसदा । कृष्णवर्त्मनिगुणान्‌कल यन्तीजीवनेषुलघयन्त्यनुरागम् ॥ यावनालशर्करायाम् ॥
हिमारातिः । पुं॰ वीतिहोत्रे । ध- नञ्जये ॥ किरणमालिनि । सूर्ये ॥ हिमस्यारातिः ॥
हिमालः । पुं॰ हिमशैले ॥ हिमेन चलति । अनभूषणादौ ॥ घञ् ॥
हिमालयः । पुं॰ भारतवर्षस्यसी मावर्त्ते । उद्गाद्रौ । नगपतौ । मेनाधवे । उमागुरौ ॥ स्थावराणां मध्ये भगवतोविभूतिरयम् ॥ हि मस्यालयः ॥ शुक्लखदिरे ॥
हिमालयसुता । स्त्री॰ पार्वत्याम् ॥
हिमालया । स्त्री॰ भूम्यामलक्याम् ॥
हिमाजम् । न॰ उत्पले ॥

हिमावती । स्त्री० स्वर्णक्षीर्याम् ॥ हिममस्त्यस्याः । मतुप् । शरादीनाञ्चेति दीर्घः ॥

हिमाश्रया । स्त्री० स्वर्णक्षीरिण्याम् ॥

हिमाह्वयः । पुं० कर्पूरे ॥

हिमिका । स्त्री० तृणोपरिपतितहिमे । इति कश्चित् ॥

हिमेलुः । त्रि० हिमार्त्ते । हिमक्लिष्टे ॥ हिमं न सहते । हिमाच्चेलुः ॥

हिमोत्तरः । त्रि० शीतले ।

हिमोत्तरा । स्त्री० कपिलद्राक्षायाम् ॥

हिमोत्पन्ना । स्त्री० यावनाल्याम् ॥

हिमोद्भवा । स्त्री० शट्याम् ॥ क्षीरिण्याम् ॥

हिम्यः । पुं० भूमि हिमवतिपर्वते ॥ प्रशस्तं हिममस्यास्मिन्वास्ति । अन्येष्वपि दृश्यत इति यप् ॥

हिरण् । न० रेतसि । स्वर्णे । वराटे । हिरण्यमिव वराटे इ० हेमचन्द्रः ॥

हिरण्मयः । पुं० सुरज्येष्ठे । ब्रह्मणि । विश्वसृजि । न० भारतवर्षादिनववर्षान्तर्गतवर्षविशेषे । त्रि० तेजोमये ॥ सुवर्णमये ॥ हिरण्यस्य विकारः । मयट् । दाण्डिनायनेति टिलोपो निपात्यते । हिरण्यये० छन्दसि मलोपो निपात्यते । हिरण्यये न सर्वत्रेति दर्शनात् ॥

हिरण्यम् । न० रेतसि । द्रव्ये । धत्तूरके । स्वर्णे । वराटे । अक्षये ॥ मानभेदे । अकुप्ये ॥ कुप्ये । श्वेतपर्वतादुदीच्यां दिशि वर्त्तमानवर्षविशेषे । हर्यति । हर्य गतिकान्त्योः । हर्यतेः कन्यन्हिरच ।

हिरण्यकः । पुं० देवदत्तादिर्हिरण्याख्यायाम् । हिरण्ये कामः । धन हिरण्यात्कामइतिकन् ।

हिरण्यकशिपुः । पुं० कश्यपाद्दित्यां जाते दैत्यविशेषे । हिरण्यं कशिपुरस्य ।

हिरण्यकशिपुहा । पुं० विष्णौ ।

हिरण्यकामधेनुः । स्त्री० षोडशमहादानान्तर्गतमहादानविशेषे ॥

हिरण्यकोषः । पुं० घटिताघटितहेमरूप्ययोः ॥ यथा । हिरण्यकोषाः कुप्याभिन्ने भिरूप्ये कृताकृते० इति हेमचन्द्रः । अमरस्तु० स्यात्कोशश्च हिरण्यञ्च हेमरूप्ये कृताकृते । ताभ्यां विना यदन्यत्तत्कुप्यमित्याह ॥

हिरण्यगर्भः । पुं० ब्रह्मणि । लोकेशे । चतुरानने । हिरण्यं हिरण्मयमण्डम् । तद्गर्भ इव तद्गर्भवर्तित्वात् । यथाह मनुः । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामह इति । यद्वा हिरण्यं हिरण्मयमण्डं गर्भोऽस्य । अथवा० हिरण्यं हिरण्मयं सुवर्णप्रचुरम्० तद्वत्प्रकाशवत्कुलं ब्रह्मा

हिरण्यस्तूप : । पुं॰ ऋषिविशेषे । च क्किरस : पुत्रे ॥

हिरण्याक्ष : । पुं॰ कश्यपाद्दित्यांसमुत्पन्ने॰ आद्यदैत्यविशेषे ॥

हिरण्याश्व : । पुं॰ तुलापुरुषादिषोडशमहादानान्तर्गतमहादानविशेषे ॥

हिरण्याश्वरथ : । पुं॰ षोडशमहादानान्तर्गतमहादानविशेषे ॥

हिरुक् । अ॰ विनार्थे ॥ हिरुक्कर्माणिमेच : ॥ मध्यार्थे ॥ हिनोति । हिगतौ । रुक्प्रत्यय : । सामीप्ये ॥ अधमार्थे ।

हिलमोचि । स्त्री॰ हिलमोचिकायाम् ॥

हिलमोचिका । स्त्री॰ ब्राह्म्याम् । आचार्याम् । चक्राङ्ग्याम् । हिलमोचा । इ॰ गौ॰ भा॰ प्र॰ हिलसा ख्यशाके । यथा । शोथकुष्ठकफपित्तहरतेहिलमोचिका ॥ हिलति । हिलभावकरणे । इगुपधेतिक : । मोचयति । मुचेर्ण्वुल् । हिलाचासौमोचिका । ङ्यापोरितिह्रस्व : । चुरो ॥

हिलमोची । स्त्री॰ हिलमोचिकायां ॥

हिल्ल : । पुं॰ शरारिपक्षिणि ।

हिल्लोल : । पुं॰ तरङ्गे । नद्यादिजलस्य वायुनातिर्यगूर्ध्वगमने ॥ रतिबन्धविशेषे ॥ यथा । द्विदक्षस्याश्रिय : पादौकराभ्यांधरयेत्कुचौ । यथेष्टंताडयेद्योनिं बन्धोहिल्लोलसंज्ञक : ॥

हिल्लला । स्त्री॰ कुल्लकायाम् ॥

हिवुकम् । न॰ लग्नाच्चतुर्थभवने ॥

ही । अ॰ द्रु : खहेतौ ॥ विषादे ॥ विस्मये ॥ यथा । हाविधिललितानांहीविचित्रोविपाक : ॥ हिनोति । हि॰ विच् । संज्ञापूर्वकत्वान्नगुण : । क्विपितुगभावोवा । भावेवाप्रत्ययौ । पृषोदरादित्वादीर्घ : ॥ हननमुवाहुलकाड्डी ॥ शोके ॥

हीन : । त्रि॰ गर्ह्ये ॥ ऊने ॥ प्रतिवादिविशेषे ॥ यथाहनारद : । अन्यवादीक्रियाद्वेषीनोपस्थायीनिरुत्तर : । आहूतप्रपलायीचहीन : पञ्चविध : स्मृतइति ॥ ओहाक्॰ हीयतेस्मवा । ओहाक्त्यागे । आदिकर्मणिक्त :॰ कर्म्मणिवा । ओदितश्चेतिनत्वम् । घुमास्थेतीत्वम् ॥

हीनक्रिय : । त्रि॰ आलस्यमात्रिदिक्रियाशून्ये ॥

हीनवर्ण : । त्रि॰ नीचजातौ ॥ यथा । हीनवर्णोपभुक्तायात्याज्यावध्यापिवाभवेदिति ॥

हीनवादी । त्रि॰ विरुद्धार्थवादिनि ॥ यथाहनारद : । पूर्वंवादंपरित्यज्य योन्यमालम्बतेपुन : । वादसंक्रमणाज्ज्ञेयोहीनवादीसवैनरइति ॥ वाक्यशून्ये । अधरे ॥

हीनाङ्ग : । त्रि॰ स्वभावतोव्याधि

हुडम्ब : । पुं॰ हुडुम्बे ॥

हुडु : । पुं॰ मेषे ।

हुडुक : । पुं॰ दात्यूहे ॥

हुडुक्क : । पुं॰ वाद्यप्रभेदे मदमत्ते ॥ दात्यूहपक्षिणि ॥ दण्डकी । हुडका इ॰ गौ॰ दे॰ भा॰ प्र॰ लगुडविशेषे ।

हुडुत् । न॰ वृषशब्दे ॥

हुडुम्ब : । पुं॰ भृष्टचिपिटे । हुडुम॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

हुण्ड : । पुं॰ व्याघ्रे ग्रामशूकरे ॥ मूर्खे ॥ राक्षसे ॥

हुत : । पुं॰ देवयज्ञाख्ये होमे ॥ त्रि॰ वषट्कृते । मन्त्रेणाग्नौ प्रक्षिप्ते घृतादौ । हविः प्रक्षेपे ॥ हूयते । हुदानादनयोः । क्तः ॥ न॰ हवने होमे । अग्नौ हविः प्रक्षेपक्रियायाम् ॥ नपुंसके भावे क्तः ॥

हुतभुक्प्रिया । स्त्री॰ अग्निपत्न्याम् ॥ स्वाहायाम् ॥ हुतभुजः प्रिया ॥

हुतभुक् । पुं॰ चित्रकवृक्षे । अग्नौ ॥ हुतं भुङ्क्ते । भुज॰ । क्विप् ॥ चित्रके ॥ हुतं होमं भुनक्ति पालयति विगुणमपि सगुणं करोतीति स्वनामोच्चारणादिति हुतभुक् ॥

हुतवह : । पुं॰ अग्नौ ॥ हुतस्य वहः ॥

हुताश : । पुं॰ अग्नौ ॥ हुतमश्नाति । अश॰ । कर्म्मण्यण् ॥

हुताशन : । पुं॰ अग्नौ ॥ हुतमशनमस्य ॥ यथा । लक्ष्मीमिमे तुवहिः ख्यातकोटिहोमे हुताशनः । पूर्णाहुत्यां मृडो नामसाग्निकोऽवरदः सदा ॥ शिवे ॥

हुताशनी । स्त्री॰ होलिकायाम् ॥

हुति : । स्त्री॰ हवने हु॰ क्तिन् ॥

हुम् । अ॰ स्मृतौ ॥ अपाकृतौ ॥ अथ प्रश्ने ॥ अभ्यनुज्ञायाम् ॥ वितर्के ॥ भये । भर्त्सने । कोपे । हूयते । हु॰ । बाहुलकान्मः ॥

हुलहुली । स्त्री॰ मुखघण्टायाम् । स्त्रीणां मङ्गलजनकमुखध्वनिविशेषे । हुलहुलु इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

हुहु : । ) पुं॰ गन्धर्वविशेषे ॥ यथा । हूहूर्हुहुश्च द्विविधो हुहूर्हूहुश्च कुत्रचिदिति शब्दरत्नावली ॥
हूहू : । )

हू अ॰ आह्वाने । अवज्ञायाम् । अहङ्कारे ॥ शोके ॥

हूङ्कार : । पुं॰ हूमिति भयजनकध्वनिकरणे ॥

हूड : । पुं॰ मेषे ॥

हूण : । पुं॰ । म्लेच्छजातिविशेषे ॥ यथा । ख्यपाकश्च॰ पुरुष्का

कन्दर्पोयवनस्त्वपि । मौकवाद्यास्तु यैवा:किगवाद्याचारवर्जित : ॥ म्लेच्छ : किरातशबरपुलिन्दाद्यास्तु तन्निदेतिजटाधर : ॥ देशविशेषे ॥ यथा । कामगिरेर्दक्षभागेमरुदेशा त्पश्चिमे । हूणदेश : समाख्यात : शूरास्तत्रमन्तिच ॥

हूतम् । न० आह्वाने । नाम्नि । त्रि० आहूते ॥

हूति । स्त्री० आकारणायाम् । आ ह्वाने । ह्वानम् । ह्वेञ : क्तिन् । वचिस्वपीतिसम्प्रसारणम् ॥

हूम् । अ० प्रश्ने । वितर्के । रुषा क्तौ । अनुनये । स्मृतौ सम्भाव्ये ॥ अभ्युपगमे । कुत्सने । प्राकाश्ये । हूयते । हु० । बाहुलकान्म : । पृषोदरादि : ॥ यद्वा । ह्वनम् । ० डुम् प्रत्यय : ॥

हूरव : । पु० शृगाले ॥

हूर्च्छनम् । न० कौटिल्ये ।

हूहू । पु० गन्धर्वविशेषे ।

हूहू : । पु० देवगन्धर्वे ॥ हूहूरिति स्वाह्वयति । ह्वेञ स्पर्धायांशब्दे च । क्विप् । वचिस्वपीतिसम्प्रसारणम् । हलइतिदीर्घ : । अकारादौ० हूहु श्रौ० हूहुश्चत्वादिरूपाणि । अन्यत्व सिपचेत्यण् हूह्वौ० हूह्वश्चत्यादि ।

हृच्छय : । पु० मदने । मन्मथे । का मदेवे । हृदिशस्त्वविवेकिनांचेतसि शेते । शीङ् स्वप्ने । अधिकरणेशे तेरित्यच् ॥

हृच्छयालु : । पु० कामदेवे ।

हृच्छूलम् । न० हृदयशूले । यथा । कफपित्तावरुद्धस्तुमारुतोरसवर्जि- त : । हृदिस्थ : कुरुतेशूलमुच्छ्वा सप्रावरोधकम् । सहृच्छूलइति ख्यातोरसमारुतकोपज : ॥

हृणिया । स्त्री० जुगुप्सने ।

हृणीया । स्त्री० भर्त्सने । जुगुप्सने ॥ हृणीङ्कण्ड्वादि : । यक् । अप्रत्य यात् ।

हृत : त्रि० मुषिते । आकृष्टे ॥ अ हारि । हृञ० । क्त : । उपात्ते ।

हृति : । स्त्री० हरणे । देशाद्देशान्त रप्रापणायां ।

हृत्कम्प : । पु० हृदयकम्पने ।

हृत्पति : । पु० अन्तर्यामिणि ।

हृत्स्थ : । त्रि० बुद्धिस्थे ॥

हृद् । न० बुक्के । चित्ते । बुद्धौ । मा नसे । अन्त : करणे । हृदयकम ले ॥ नवमभवने । हृदयस्य० पद्दन्न सूतिहृदादेश: ० प्रभृतिग्रहणमप्र कारार्थं त्वात् क्वचित् स्वादावपि । यद्वा । हरति० ह्रियतेवा हृञ ० । क्विप् : पुक्दुकौ चेति० बाहुल कात् कौ धलादृपिदुक् । यथा । अ चलं पृथुतुङ्गस्तनपार्श्वहृदयंस्मृत म् । विपरीतंसिरालञ्चरोमशं दु :

स्वभागिनामिति ॥

हृदयम् । न० उरसि । वक्षसि ॥ बुक्कायाम् । हृदयान्तर्गतमांसविशेषे । चयमांसि । मानसे । स्वान्ते स्मृतिप्रत्ययास्पदेऽन्तःकरणे ॥ हरति० आहरतिविषयान् ० क्रियतेविषये र्वा । वृक्को : पुक्क दुक्कौचेतिवत्वम् दुगागमश्च ॥ परमात्मनि ॥ हृदिस्थम् ॥ हृदयकमले ॥ यथा । पद्मकोषप्रतीकाशं रुचिरं चाप्यधोमुखम् । हृदयं तद्विजानीयाद्विश्वस्यायतनं महत् ॥ अपिच । हृदयं पुण्डरीकेयसदृशं स्यादधोमुखम् । जाग्रतस्तद्विकसति स्वपतस्तु निमीलति । आशयस्तत्तु जीवस्य चेतनस्थानमुत्तमम् । अतस्तस्मिंस्तमोव्याप्ते प्राणिनः स्वपन्तिहि ।

हृदयग्रन्थिः । पुं० अहङ्कारे । चिज्जडयोर्यनस्त्वेऽहङ्कारे विदहङ्कारतादात्म्यरूपे ॥ चिज्जडात्मकत्वात् ० ग्रन्थिरिवग्रन्थिः ॥ हृदयमेवग्रन्थिर्वा ॥ हृद्रोगे ॥

हृदयङ्गमम् । वि० सुखजनकोक्तौ । युक्तियुक्तवाक्ये । सङ्गते ॥ हृदयं गच्छति । गमश्चेतिखच् ॥

हृदयजः । पुं० पुत्रे ॥ वि० हृदयउत्पन्ने ॥

हृदयज्ञः । वि० हृदयप्रिये ॥ हृदयाभिज्ञे ॥

हृदयदौर्बल्यम् । न० मनसोऽसत्त्वादिरूपेऽधैर्ये ॥ हृदयस्यदौर्बल्यम् ॥

हृदयवान् । वि० हृदयालौ ॥ मतुप् ॥

हृदयशङ्कुः । पुं० । सन्देहे ॥

हृदयशुद्धिः । स्त्री० चनवरोधे ॥ हृदयस्यशुद्धिः ।

हृदयस्थः । वि० सर्वान्तर्यामिणि ॥

हृदयस्थानम् । न० भुजान्तरे । क्रोडे । उरसि ॥

हृदयस्पृक् । वि० मनोज्ञे । हृद . . त । स्पृश० । स्पृशोऽनुदके क्विन् ॥

हृदयात्मकः ।) पुं० कङ्कखगे ॥
हृदयात्मा ।)

हृदयालुः । पुं० प्रसन्नचेतसि । सुहृदये ॥ प्रशस्तं हृदयमस्यास्ति । हृदयाच्चालुरन्यतरस्यामित्यालुः ॥

हृदयावित् । वि० पिशुने ॥ हृदयमाविध्यति । क्विप् ॥

हृदयिकः । वि० प्रसन्नचेतसि ॥ हृदयिनि ॥ हृदयंप्रशस्तमस्यास्ति । ठन् ।

हृदयी । वि० प्रशस्तचेतसि । हृदयालौ ॥ हृदयंप्रशस्तमस्य । इनिः ॥

हृदयेशः । पुं० धवे । भर्त्तरि पत्यौ ॥

हृदयेशा । स्त्री० प्रेयस्याम् । भार्यायाम् । कान्तायाम् ॥

हृद्रामय: । पुं॰ हृद्रोगे ॥

हृद्रावर्त्त: । पुं॰ अश्वहृदयावर्त्ते । भौरचक्रे ॥ इ॰ वि॰ शेष: ॥

हृदिस्पृक् । त्रि॰ मनोज्ञे । हृद्ये । हृदिस्पृशति । क्विप् ॥

हृदीकृत: । त्रि॰ हृदयेप्रवेशिते ॥

हृद्गत: । त्रि॰ । वागुरुस्यावहिरप्रकाशिते । अन्तर्गते ॥

हृद्गोल: । पुं॰ पर्वतविशेषे ।

हृद्गोलीय: । पुं॰ आयुधजीविविशेषे । हृद्गोलोऽभिजनोऽस्य । आयुधजीविभ्यश्छ: । पर्वते ॥

हृद्यग्रन्थि: । पुं॰ हृद्व्रणे ॥

हृद्य: । पुं॰ वशकृद्वेदमन्त्रे । हृदयस्यबन्धन: । बन्धनेचर्षाविति यत् । न॰ धवलजीरके । गुडत्वचि ॥

हृद्य: । त्रि॰ हृज्जे । हृद्धिते । हृत्प्रिये ॥ हृदयङ्गमे । मनोज्ञे ॥ मनोहरे । दुर्गन्धाशुचित्वादिदृष्टादृष्टदोषशून्ये । हृदयस्य प्रियम् । हृदयस्यप्रियमितियत् । हृदयस्य हृल्लेखेतिहृदादेश: ॥

हृद्यगन्ध: । पुं॰ बिल्वे । न॰ सौवर्चले । स्थूलजीरके ॥ त्री॰ सुगन्धे । सुरभौ । हृद्योमनोहरोगन्धोऽस्य । हृद्यश्चासौगन्धश्च ॥

हृद्यगन्धा । स्त्री॰ मालत्याम् । जात्याम् ।

हृद्यगन्धि । न॰ क्षुद्रजीरके । हृद्योगन्धोऽस्य ॥

हृद्या । स्त्री॰ वृद्धिनामौषधौ ।

हृद्रोग: । पुं॰ व्याधिप्रभेदे । हृदयपीडायाम् । हृदयरोगे । अस्य विप्रकृष्टनिदानन्तु । अत्युष्णगुर्व्वम्लकषायतिक्तश्रमाभिघाताध्ययनप्रसङ्गै: । संचिन्तनैर्वेगविधारणैश्च हृदामय: पञ्चविध: प्रदिष्ट: ॥ सम्प्राप्तिपूर्व्वकं लक्षणन्तु । दूषयित्वारसं दोषाविगुणाहृदयं गता: । हृदिबाधांप्रकुर्व्वन्तिहृद्रोगं तं प्रचक्षते । इति । शुण्ठीसौवर्चलं हिङ्गुपीतं हृदयरोगनुत् ॥ कामे । यथा । हृद्रोगमाशुपहिनोत्यचिरेणधीर इति ॥ हृदयस्यरोग: । वाशोकाष्यञ्रोगेष्विति हृदादेश: । कुम्भराशौ ।

हृद्रोगवैरी । ) हृद्रोगारि । ) पुं॰ अर्जुनवृक्षे ॥

हृल्लट्टक: । पुं॰ जठरे । इ॰ श॰ चं॰ का ॥

हृल्लट्टक: । पुं॰ कोष्ठरोगे ॥

हृल्लास: । पुं॰ हिक्कायाम् । हिक्का हेक्काचहृल्लासइतिहेमचन्द्र: । हिक्काभिधेरोगे । हृदत्यान्तःलनिर्गमे । हृदयाद्दोषदूष्यपासहितास्रवस्यपानीयोद्गिरणं हृल्लास इति ॥ हृदयस्यहृल्लेखयदण्लासेष्विति॰

हृदादेश : ॥

हृल्लेखः । पुं॰ तर्के ॥ ज्ञाने ॥ हृदयंलिखति । लिख॰ । कर्म्मण्यण् । हृदयस्य हल्लेखेत्यादिना हृदादेश : ॥

हृल्लेखा । स्त्री॰ मायाबीजे ॥ यौत्सुक्ये ॥ भुवनेश्वर्याम् ॥ ज्ञानिनां हृदयाम्भोजे हृल्लेखापरमेश्वरीतिदेवीगीता ॥ हृदिलेखिःजागर्त्ति प्राणशक्तिरियंपर। हृल्लेखाकथ्यतेतस्मादितिभुवनेश्वरीरहस्यम् ॥

हृषित : । त्रि॰ विस्मिते ॥ प्रीते ॥ प्रहृते ॥ हृष्टलोमनि ॥ प्रणते ॥ वर्मिते ॥ हर्षेतिस्म॰ हृष्यतिस्म वा । हष्धलीके॰ हृषतुष्टौवा । क्त:। हृषेर्लोमसुइतिविकल्पे नेट ॥

हृषी : पुं॰ अग्निविमयो : ॥

हृषीकम् । न॰ श्रोत्रादीन्द्रिये ॥ हृष्यत्यनेन । हृष॰ अनिहृषिभ्योकिच्चेतीकन् ॥

हृषीकेश : । पुं॰ विष्णौ ॥ सर्वेन्द्रियप्रेरकत्वेनसर्वान्तर्यामिणि । सर्वात्मि: कारणस्वरूपे । सर्वनिगूढाभिप्रायज्ञे ॥ हृषीकाणामिन्द्रियाणामीशः ऽधिष्ठाता ॥ हृषीकाणिनियम्यात्मा चंयत : प्रत्यक्षतांगत : । हृषीकेशइतिख्यातोनाम्नातत्रैव संस्थित : ।

हृषु : । पुं॰ हर्षे ॥ सूर्ये ॥ अग्नौ ॥ शशिनो । राहौ ॥ हृष्यति । हृष तुष्टौ हर्षतिवा हृषधलीके । पृभिदिव्यधिगृधिधृषहृषिभ्यश्चेतिपठित्वा॰ एष्वयं षुकप्रत्ययइतिकेचिदितिमनोरमा ॥

हृष्ट : । त्रि॰ जातहर्षे । अप्रपर्यायश्च । हृष्टमनस्तु प्र : प्रहृन्न : प्रमुदित प्रीतइति ॥ रोमाञ्चिते । अप्रतिहते । विस्मिते ॥ हर्षतिस्म॰ हृष्यतिस्मवा । हृषु॰ वा । क्त : । हृषेर्लोमसुइतिविकल्पितेट्कत्वात्॰ यस्यविभाषेतिनेट् ॥

हृष्टमानस : । त्रि॰ सहर्षमानसे । हर्षमाणे । विकुर्वाणे । प्रमनसि ॥ हृष्टं मानसं यस्यस : ॥

हृष्टरोमा । त्रि॰ रोमाञ्चिते ॥ हृष्टानिरोमाणियस्यस : ॥

हृष्टि : । स्त्री॰ आनन्दे । माने ॥

हृष्यत् । त्रि॰ रोमाञ्चिते ॥

हे । अ॰ सम्बोधने ॥ आह्वाने ॥ असूयादौ ॥ हिनोति । हिगतौ । विच् ॥ पादपूरणे ॥

हेक्का । स्त्री॰ हिक्कायाम् ॥ हृ॰ त्रि॰ शेष : ॥

हेठ : । पुं॰ बाधायाम् । विहेठे ॥

हेडावुक्क : । पुं॰ अश्वविक्रयिणि । वोटकविक्रयकारिणि ॥

हेति : । स्त्री॰ रवेरर्चिषि । अस्त्रे ॥ वह्निज्वालायाम् ॥ हिनोति

इतस्ततो गच्छति हि० । ऊतियूतिजूतिसातिहेतिकीर्त्तयश्चेति- क्तिन्नन्ता निपातिता । हन्ति० हन्यतेऽनया वा । क्तिन् । ऊतियूतीति साधुः ॥

हेतुः । पुं० कारणे । बीजे । निमित्ते । नियतपूर्व्वभाविनि । येन विनायं न भवति तस्मिन् ॥ हिनोति व्याप्नोति कार्य्यम् । हिगतौ कमिमनिजनिगाभायाहिभ्यश्चेति- तुः ॥ फलसाधनयोग्ये पदार्थे ॥ हेतुं लक्षयति गौतमः उदाहरणसाधर्म्यात् साध्यसाधनं हेतुस्तथा वैधर्म्यात् ॥ ३४ ॥ अत्र साध्यसाधनं हेतुरिति सामान्यलक्षणम् । साध्यसाधनं साध्यसिद्ध्यनुकूलज्ञापकत्वबोधकत्वमित्यर्थः तथाच साध्यतावच्छेदकावच्छिन्नसाध्यान्वितज्ञापकत्वबोधकः साध्यान्वितस्वार्थबोधकोऽवयव इति फलितार्थः । तद्द्वैविध्यमाह उदाहरणसाधर्म्यात् तथा वैधर्म्यादिति । साधर्म्यमन्वयः वैधर्म्यं व्यतिरेकः । तदृष्टव्याप्तिरिति फलितार्थः । उदाहरणसाधर्म्यम् उदाहरणबोध्यान्वयव्याप्तिस्तेनान्वयी हेतुर्ज्ञातव्यः उदाहरणेति दृष्टार्थम् । तथाच ज्ञातान्वयव्याप्तिकहेतुबोधको हेत्ववयवः । ज्ञातव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयव इति फलितार्थः । एवमप्रतीतान्वयव्याप्तिकहेतुबोधको हेत्ववयवो व्यतिरेकी हेतुः इत्थमेव प्रतीतान्वयव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयवोऽन्वयव्यतिरेक्यपि सूचितमिति वृत्तिः । साधने ॥

हेतुकः । पुं० कारणे ॥ स्वार्थे कः ॥ त्रि० तत्सम्बन्धिनि ॥

हेतुता । स्त्री० कारणतायाम् । हेतुत्वे ॥ सङ्गतिविशेषे । प्रत्यक्षप्रमायां हेतुतासङ्गतिः । हेतोर्भावः । तस्य भावस्त्वतलाविति तल् ॥

हेतुमान् । त्रि० व्यक्ते । कारणवति युक्तियुक्ते । हेतुरस्त्यस्मिन्नस्य वा मतुप् । फले ॥

हेतुशास्त्रम् । न० तर्कशास्त्रे ॥

हेतौ । अ० निमित्तार्थे ॥

हेत्वाभासः । पुं० हेतुदोषे ॥ स पञ्चविधः । सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधितभेदात् । यथोक्तं भाषापरिच्छेदे । अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः । कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा । आद्यः साधारणस्तु स्यादसाधारणकोऽपरः । तथैवानुपसंहारी त्रिधानैकान्तिको भवेत् । यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः । यस्तूभयस्माद्व्यावृत्तः स चा

जातवेदस: । पतितं यत्रापृष्ठे रेतस्तद्धेमतामगात् । क्षचिमस्यापि भवतितद्रसेन्द्रस्यवेधत : । स्वर्णं सुवर्णं कनकं हिरण्यं हेमहाटक : ॥ तपनीयंकलधौतंगाङ्गेयंगभ कास्वनम् । चामीकरं शातकुम्भं तथाकार्त्तस्वरस्ततन् ॥ जाम्बूनदं जातरूपेमहारजतमित्यपि । हारेरक्तासितं छेदेनिकषेकुङ्कुमप्रभम् ॥ तारशुल्वोज्झितस्निग्धंकोमलंगुरुहेमसत् । तच्छ्वेतकठिनंरूक्षंविवर्णंसमलंदलम् ॥ दाहेछेदेऽसितंश्वेतंकषेत्याज्यंलघुस्फुटम् । दलं० दोषतस्तितितिः से । स्फुटंयद्घनाहतं ॥ स्फुटतितिहिमोतिहत्येतिवा । हिनतोत्यौव । मनिन् ॥ धत्तूरे ॥ नागकेसरे ॥

मन्त :। पुं० क्रतुविशेषे । सहसक्रये : । चोयहायनपौषयो : ॥ हन्तिलोकान्मौक्ष्येन । हन्तेर्मुटचेतिमन्प्रत्यय : । हन्तिहिंचेतिहिरादेशिमुडागमोगुणश्च ॥

हेमन्तनाथ : । पुं० कपित्थे ॥

हेमपर्वत : पुं० सुमेरुगिरौ ॥

हेमपुष्पम् । न० अशोके ॥ जपापुष्पे ॥ पुं० चम्पकवृक्षे ॥ हेमवर्णंपुष्पंयस्य ॥ राजवृक्षे ॥

हेमपुष्पक : । पुं० चम्पकवृक्षे । हेमवर्णंपुष्पमस्य ॥ लोध्रे ॥ अशोके ॥

हेमपुष्पिका । स्त्री० स्वर्णयूथिकाया म् । पीतयूथिकायाम् ॥ गणिकायूथिकाम्बष्ठासाचीतापुष्पिका ॥ हेमवर्णपुष्पमस्या : । पाककर्णेति ङीष् । स्वार्थेकन् । ह्रस्व : ॥

हेमपुष्पी । स्त्री० स्वर्णयूथ्याम् । मुशल्याम् ॥ स्वर्णुल्याम् ॥ वृद्धकार्याम् ॥ इन्द्रवारुण्याम् ॥ स्वर्णजीवन्त्याम् ॥ मञ्जिष्ठायाम् ॥ हेमवर्णंपुष्पमस्या: । पाकर्णेतिङीष् ।

हेमफला । स्त्री० स्वर्णकदल्याम् ।

हेममाला । स्त्री० यमपत्न्याम् ॥ स्वर्णस्रजि ॥

हेममाली । पुं० सूर्ये ॥ कार्त्तवीर्ये ॥ त्रि० हेममालायुक्ते ॥

हेमयूथिका | हेमयूथी । स्त्री० स्वर्णयूथिकायाम् ॥

हेमरागिणी । स्त्री० घर्षण्याम् । हरिद्रायाम् ।

हेमल : । पुं० कलादे । स्वर्णकारे ॥ कृकलासे । सरटे ॥ शिलान्तरे । कषपाषाणे । कसौटी० इ० भा० प्र० ॥

हेमलता । स्त्री० स्वर्णजीवन्त्याम् ॥

हेमलम्ब : । पुं० वत्सरविशेषे ॥ तत्फलंयथा : पौडान्तेसर्वशस्यानिटेशेदेशेशुचिस्मृति । हेमलम्बेप्रजा: सर्वा : चौर्यंनैवचसंशय: । ३१ ।

हेमवलम । न० मौक्तिके ॥

हेमशङ्ख : । पुं० विष्णौ ॥

हेमशिखा । स्त्री० स्वर्णक्षीर्य्याम् ॥
हेमसारम् । न० तुत्थे । इ० रसच न्द्रिका ॥
हेमसूत्रकम् । न० हारविशेषे ॥
हेमहस्तिरथ । पुं० महादानविशेषे ॥
हेमा । स्त्री० अप्सरसांभेदे ॥ सुन्दर्यां नार्याम् ॥
हेमाङ्ग : । पुं० गरुडे ॥ परमेष्ठिनि ॥ सुमेरौ ॥ सिंहे ॥ चम्पके विष्णौ ॥ न० हेमवर्णशरीरे ॥ त्रि० तद्वति । हेमेवाङ्गंवपुर्यस्य : ॥
हेमाद्रि : । पुं० सुरपर्वते । मेरौ ॥ हेम्नोऽद्रि : ॥ चिन्तामणिकामधेनु कल्पद्रुमनामकस्मृतिसङ्ग्रहकारकेच चिपेराजविशेषे ॥
हेमाद्रिजरथ : । पुं० स्वर्णक्षीर्याम् ॥
हेमाह्व : । ) हेमाह्वय : । ) पुं० मनकम्पके ॥ चम्प के ॥ धत्तूरे ॥
हेमाह्वया । स्त्री० स्वर्णजीवन्त्याम् ॥ हेमआह्वयोयस्या : ॥
हेमाह्वा । स्त्री० हेमक्षीर्याम् । चोक्ते ॥ गुणायथा । हेमाह्वारेचनीतिक्ता मादिन्युत्क्लेदकारिणी । क्रिमिक ण्डूविषानाहकफपित्तास्रकुष्ठनुदि ति ॥ स्वर्णजीवन्त्याम् ॥
हेय : । त्रि० त्याज्ये । हातव्ये ॥ पुरु षश्रोद्दिश्यसिद्धयेयदुपयुक्तमविरो धितदुपादेयंविपरीतन्तुहेयम् ॥ हा तुंशीघ्य : । ओहाक ० । अचोयत् ईद्यति । गुण : ॥
हेर : । त्रि० मुकुटप्रभेदे ॥ हरिद्राया म् ॥ आसुरीमायायाम् ॥ इ० का ञ्चित ॥
हेरम्ब : । पुं० विनायके एकदन्ते । लम्बोदरे । विघ्नराजे । गणेशे ॥ हे मङ्करे० रम्बेशब्देनसमीपेरम्बते । रविशब्दे । घोष्ठीपथ : । पचा द्यच् । तत्पुरुषेकृतीत्यलुक् ॥ हेत षसिरम्बते० इतिस्वामी ॥ महिषे ॥ शौर्यगर्विते । बुद्धविशेषे । हेरुके । वक्त्रटीके ॥
हेरम्बजननी । स्त्री० दुर्गायाम् ॥
हेरम्बहट्ट : । पुं० देशविशेषे ॥
हेरिक : । पुं० चरे ॥
हेरुक : । पुं० कालाख्यायांप्रसिद्धेशि वलिङ्गविशेषे ॥ महाकालगणे ॥ बु द्धभेदे । वक्त्रटीके ।
हेलञ्ची । स्त्री० हिलमोचिकायाम् ॥
हेलनम् । न० अवज्ञायाम् । अवहेलने ॥ हेडृअनादरे । ल्युट् । लडयो रैक्यम् ।
हेला । स्त्री० अवज्ञायाम् ॥ वरयोषि तांविलासे । स्त्रीणांशृङ्गारभावजक्रि याविशेषे ॥ साहित्यदर्पणेतु । हेला ऽत्यन्तसमालक्ष्यविकारः स्यात्सएवतु इति ॥ सुरतेप्रौढेच्छायाम् ॥ यदा

च । प्रौढेच्छायातिरूढानां नारीणां सुरतोत्सवे । शृङ्गारशास्त्रतत्त्वज्ञैर्हेला सा परिकीर्त्तितेति ॥ हिलभावकरणे॰ हेङ्अनादरे वा । डलयोरभेदः । भावे अप् ॥

हेलाबुकः । पुं॰ अश्वविक्रयिणि ॥ इति हारावली ॥

हेलिः । पुं॰ रवौ । सूर्य्ये ॥ हिलति । हिल॰ इन् ॥

हेलिः । स्त्री॰ हेलायाम् ॥

हेषा । स्त्री॰ हयशब्दे । ह्रेषायाम् ॥ हेषणम् । हेष शब्दे । गुरोश्च हलः ॥

हेषी । पुं॰ अश्वे ॥ हेषा॰ अस्त्यस्य । ब्रीह्यादित्वादिनिः ॥

हैहै । अ॰ सम्बोधने । हूतौ । दूरात् सम्बोधने ॥ हैच हैच ।

है । अ॰ सम्बोधने । आह्वाने ॥ हिनोति । हिगतौ डैप्रत्ययः ॥

हैतुकः । त्रि॰ सद्युक्त्यव्यवहारिणि ॥ यथाह मनुः । त्रैविद्यो हैतुकस्तर्की निरुक्तो धर्म्मपाठकः । त्रयश्चाश्रमिणः पूर्व्वे परिषत् स्याद्दशावरेति ॥ हेतुद्वारा सत्कर्मसु सन्देहकर्त्तरि । शुष्कतार्किके । यथा । पाषण्डिनो विकर्मस्थान्वैडालव्रतिकाञ्छठान् । हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्च्चयेत् इति विष्णुपुराणे ३ अंशे १८ अध्यायः । पाषण्डादीनां लक्षणन्तु । भ्रष्टः स्वधर्मात्पाषण्डो॰ विकर्मस्थो निषिद्धकृत् । यश्च धर्मध्वजी नित्यं सुरध्वज इवोच्छ्रितः ॥ प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतम् । वैडालव्रतमस्यास्ति वैडालव्रतिकस्तु सः ॥ प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम् । व्यक्तापराधचेष्टश्च शठोऽयं कथितो बुधैः ॥ सन्देहकृद्धेतुभिर्यः सत्कर्मसु स हैतुकः । अर्व्वाग्दृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः ॥ शठो मिथ्याविनीतश्च बकव्रतचरो द्विजः इति तट्टीकाकृत् ॥ हेतुना चरति । ठक् ॥ फलाभिसन्धियुक्ते ॥ स्त्री॰ हैतुकी ॥

हैमः । पुं॰ भूनिम्बे ॥ न॰ प्रातर्हिमोद्भवजले ॥ द्रव्यपानीयप्रभेदे ॥ यथा । हिमवाश्च खरादृश्योद्गमीभूयाभिवर्षति । यत्तदेव हिमं हैमं जलमाहुर्मनीषिणः । हिमाम्बु शीतं पित्तघ्नं गुरु वातविवर्द्धनमिति भावप्रकाशः ॥ अन्ये तु । यो निश्चधूमैरितमम्बु समुद्रस्य यद्घनीभूतम् । पवनानीतं समुद्रोच्यां तद्धिममिति कथ्यते मुनिभिः ॥ हिमन्तु शीतलं रूक्षं दारुणं सूक्ष्ममप्यपि । न तु दूषयतीत्यातं न वित्तं न कफमित्याहुः ॥ त्रि॰ हिमभवे ॥ हेमजाते ॥ हेम्नो विकारे ॥

हैमनः । पुं॰ न॰ हेमन्तर्त्तौ ॥ पुं॰ मार्गशीर्षे ॥ हिमकाले जातषष्टिकधान्ये । यथा । हैमनास्तु हिमाद्

